[Price Rupee One

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA SRAUTASUTRA,

WITH A COMMENTARY BY SRI KARKACHARYA

EDITED BY

VYAKARANACHARYA PANDIT MADANMOHAN PATHAK,

Professor of Mimamsa and Dharmashâstra,

[illegible] Sanskrit Pathshala,

*Central Hindu College, Benares*

FASCICULAS I

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK DEPÔT

BENARES

AGENT -OTTO HARRASSOWITZ LEIPZIG

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS

BENARES

1903.

श्री.

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णोद्धृतभव्यामरातपसूपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोदितम् ॥ २ ॥

स्तबक —६८

श्रीगणेशाय नमः ।

# कात्यायनश्रौतसूत्रसहितं कर्कभाष्यम् ।

---

अर्थेषु सम्विद्विविवेकनिर्मला
समग्रानि श्रेयससिद्धिहेतव ।
समस्तशास्त्रार्थसतत्त्वबोधका
जयन्ति कात्यायनपादपांसव ॥ १ ॥

## अथातोऽधिकारः ॥ १ ॥

व्याख्यास्यत इति सूत्रशेष । शास्त्रावतारसम्बन्धप्रयोजना-भिधान दर्शपौर्णमासादौ कृतमिदानीं पदार्थमात्रव्याख्यान क्रियते ॥ तत्रायमथ शब्द पूर्ववृत्तवेदाध्ययनानन्तर्यप्रज्ञप्त्यर्थे । पूर्वप्रवृत्ते हि वेदाध्ययने उत्तरो विचार उपपद्यते ॥ वेदवाक्यार्थनिरूपणे श्रम भवति । अत शब्दस्तदेव वेदाध्ययन हेतुत्वेन प्रकरोति । यस्मा-दधीतो वेद तत उत्तर विचारस्यावसर इति । अधिकारशब्देन च कर्मविषय कर्त्तृव्यापारोऽभिधीयते । प्रतिज्ञासूत्रमेतत् । प्रतिज्ञातमिद-मधिकारो व्याख्यास्यत इति । प्रतिज्ञाकरणं शिष्यबुद्धिसमाधानार्थं । अपरे व्याचक्षते । नित्यनैमित्तिककाम्यकर्मोपनिबन्धनोत्तरका-माचार्येण परिमापोपनिबद्धा । तत्रायमथशब्द कर्मानन्तर्यप्रज्ञप्त्य-र्थे । हेत्वर्थश्चात शब्द । यस्मादभिहितानि कर्माणि अतस्तदधि-कारोऽभिधीयते । क एतैरग्निहोत्रादिभिरधिक्रियत इति ॥ १ ॥

एव प्रति ज्ञाते सति इदानीमिद विचार्यते । किं फलव-न्ति कर्माणि, उताफलवन्ति कर्माणि ? किं तावत्प्राप्तम । अफला-न्यतीति ब्रूम । न हि तत्समनन्तरं फलमुपलभ्यते । आगमादपि नैव विधोक्ति यत अग्निहोत्रादिभि प्राप्य फलमुच्यत इति । ननु च अ-ग्निहोत्र जुहुयात स्वर्गकाम इति, दर्शपूर्णमासाभ्या स्वर्गकामो य

जेतेत्येवमादिना फलवत्ता गम्यते। नैतदेवम्। अत्र हि यागहोमयोः श्रुत्या विधानं यजेतेति यागस्य कर्त्तव्यतोच्यते। जुहुयादिति होमस्य। न चान्यत्पदान्तरमस्ति यतः फलमवगम्यते। दर्शपूर्णमासशब्द' कर्मणि वर्त्तते अग्निहोत्रशब्दश्च। स्वर्गकामशब्देन च पुरुषो विशेष्यते। यजेतेत्यनेन च यागस्य कर्त्तव्याता उच्यतेश्रुत्या। एवं जुहुयादिति च होमस्य। तेन यात्र फलबुद्धिः सा भ्रमेति। एवं प्राप्त इदमुच्यते—

## फलयुक्तानि कर्माणि ॥ २ ॥

फलस्य साधकानीत्यर्थः। कुत एतत्। वाक्यात्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। अग्निहोत्रं जुहुयात् स्वर्गकाम इति च। ननूक्तम्। योत्र कर्त्तव्यता वाचकः स यागस्य कर्त्तव्यतामाह होमस्य च। नैतदेवम्। यागमात्र कर्तव्यतायां विधीयमानायां वाक्यमेवेदमनर्थकं स्यात्। न हि यागेनाफलस्य कर्त्तव्यता। तेन यागोप्यनर्थको वाक्यं च। अथ तु यागः साधनात्वेन विधीयते स्वर्गं प्रति तदा धात्वर्थविधानेन श्रुतिरप्यनुगृह्यते वाक्यमप्यर्थवद्भवति। न च वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते अतः स्वर्गः साध्यो यागश्च साधनम्। तत्कथमिति चेत्। इह स्वर्गकामो यजेतेति पदद्वयं न विधायकं, न चानुवादकम्। न हि द्वयोर्विधीयमानयोः परस्परं सम्बन्धो भवति, न चानूद्यमानयोः। तस्मात्त्वेकमुद्देशकं पदमन्यत् प्रतिनिर्देशकमिति। तत्र यदि यागोद्देशेन स्वर्गकामो विधीयते। स्वर्गं कामयमानेन यागः कर्त्तव्य इति। तदा वाक्यस्यानर्थक्यं भवति। अदृष्टपरिकल्पना यागस्य स्वर्गकामनायाश्च। अथ तु स्वर्गकामोद्देशेन यागो विधीयते तदा स तस्योपकारको भवति, पुरुषप्रयत्नरूपो ह्यसौ, स्वर्गकामस्य चानेक उपकारः पुत्रपश्वादिलाभरूपस्तत्र वैकवाक्योपात्तं स्वर्गमेव साधयतीति नातीवादृष्टपरिकल्पना। तस्मात् स्वर्गः साध्यो यागश्च साधनम्। अपि च यागस्य कर्त्तव्यतायामसामञ्जस्यं स्यात्। स्वर्गं कामयते यागं च करोतीति। तस्मात् स्वर्गकामोद्देशेन यागविधानमतश्च फलवन्ति कर्माणीत्युक्तम्। आह च—

## अधिकारिनिरूपणम् ।

स्वर्गकामो यजेतेति द्वेपदे चोद्दिधायके ।
परस्परेण सम्बन्धो नानुवादेऽपि युज्यते ॥ १ ॥
अतोऽनूद्य पदेनैकेनापरेण विधीयते ।
यदि तत्रैव सम्बन्धस्ततो युज्येत नान्यथा ॥ २ ॥
अनूद्य यदि यागं तु स्वर्गकामो विधीयते ।
कामनायास्तथा यागादृष्टं परिकल्प्यते ॥ ३ ॥
स्वर्गकाममनूद्याथ यदि यागो विधीयते ।
तस्योपकारकत्वेन ततः स्वर्गस्य साध्यता ॥ ४ ॥
प्रयत्नरूपो यागोऽयं निष्फलः स च नेष्यते ।
विधेयोऽपि हि साध्यस्य साधनत्वेन जायते ॥ ५ ॥
स्वर्गश्च साध्यो नान्यत्तु साध्यं किञ्चिदपीष्यते ।
प्रयत्नरूपो यागोऽपि तेन स्यात्तस्य साधनम् ॥ ६ ॥
उद्दिश्य स्वर्गकामं तु स्फुटे यागविधौ सति ।
एकवाक्य गतः स्वर्गो यागेनेह प्रसाध्यते ॥ ७ ॥
साध्यं नान्यद्धि यागस्य न चान्यत् स्वर्गसाधनम् ।
साध्यसाधनसम्बन्धस्तेनेष्टः स्वर्गयागयोः ॥ ८ ॥

### सर्वेषामविशेषात् ॥ ३ ॥

अधिकारः सर्वेषां भवति । देवमनुष्यरक्षः पिशाचतिर्यगादी-नाम् । सर्वे ह्येते फलार्थिन इति । दृष्टश्चायमर्थो यथा सर्वेषामधिकार इति । देवाः सत्रमित्युपासत । गावो वा एतत् सत्रमासतेति ॥ ३ ॥ अतः फलार्थित्वाविशेषात् सर्वेषामधिकार इत्येवं प्राप्त आह—

### मनुष्याणां वारम्भसामर्थ्यात् ॥ ४ ॥

वा शब्दः पक्षव्यावृत्तौ । न सर्वेषामधिकारो मनुष्या एव कर्मस्वधिक्रियन्ते । त एव हि यथा श्रुतं कर्मारब्धुं समर्था न देवाद-यः । देवास्तावद्द्रव्यासकामाः । न तेषामपरास्यमस्ति यथाग्न्यादिरि-त्याप्यते । न च देवानामन्ये देवाः सन्ति यान्यजेरन् । ऋषीणा-मार्षेयाभावादनधिकारः । रक्षः पिशाचानामशुचित्वात् । गवादी-नामसमर्थचेतनत्वात् । अवैदत्वाच्च । यच्च दर्शनमुक्तं गावो वा एतत् सत्रमासतेति । स सत्रप्रशंसार्थोऽर्थवादः । तस्मान्मनुष्याणा-

मेवाधिकारः ॥ ४ ॥

एवं सर्वमनुष्याधिकारप्राप्ताविदमाह—

## अङ्गहीनाश्रोत्रियपण्ढशूद्रवर्जम् ॥ ५ ॥

मनुष्याणामङ्गहीनादिवर्जितानामधिकारः । कुत एतत् । आरम्भसामर्थ्यादेव । न ह्यङ्गहीनादयो यथाश्रुतं कर्मारब्धुं समर्थाः । अतोनाधिकारः । अङ्गेनहीनः अङ्गहीनः । यथा विष्णुक्रमणे पङ्गुरसमर्थः । अन्ध आज्यावेक्षणे । मूको मन्त्रोच्चारणे । बधिरश्च संबोधने । विष्णुक्रमणादिभिश्च विना विगुणं कर्म भवति । अत एव नाधिकारः । अश्रोत्रियस्य सर्वे याजमानिकेष्वनधिकारः । अनधिकृतोह्यसावश्रोत्रियत्वादेव । पण्ढश्चाशुचित्वादद्रव्यत्वाच्च । अशुचित्वं हि तस्य स्मर्यते । अद्रव्यत्वं च । तस्मादेषामनधिकारः । ननु चारम्भसामर्थ्यादित्ययं हेतुर्यथा गवादिव्युदासे वर्त्तते एवमङ्गहीनादिव्युदासेपीति नारब्धव्यमेतत् सूत्रम् । सत्यमेतत् । अद्रव्यव्युदासार्थमङ्गहीनादीनामुपादानम् । आरम्भसामर्थ्यात्तस्याप्यनधिकारो मा भूदिति । शूद्रः कस्मान्नाधिक्रियते द्रव्यवानगङ्गहीनश्च । सन्ति ह्यन्यार्थानि दर्शनानि यैः शूद्रस्याप्यधिकारो गम्यते । हविष्कृदाह्वानविशेषं प्रकृत्योच्यते 'आधावेति शूद्रस्य' तथा व्रतविशेषे मस्तु शूद्रस्य । तथा पितृमेधे अष्टीवद्दघ्नं शूद्रस्येति । एवं प्राप्त इदमाह । शूद्रवर्जम् ॥ ५ ॥

कुत एतत्—

## ब्राह्मणराजन्यवैश्यानां श्रुतेः ॥ ६ ॥

ब्राह्मणादीनामेवाधानं श्रूयते । वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यो । वर्षासु वैश्य इति । तेनाधानाभावादनग्निः शूद्रः । सोऽग्निसाध्ये कर्मणि कथं प्रवर्त्तिष्यते । आत्मार्थं चाधीयन्ते अग्नयो न परार्थे । आत्मने पदं ह्यत्र भवति आदधीतेति । तेन ब्राह्मणादय एवाधानेनाग्निमुत्पादयितुं समर्थाः । न शूद्रः । आधानाभावात् । अतः शूद्रस्यानधिकारः । यानि पुनर्दर्शनान्युक्तानि तानि रथकारविषयाणि । रथकारस्य हि शूद्रासम्बन्धात् शूद्रत्वमुच्यते । करण्यां

हि स जात.। करणी च शूद्रा द्रुहितेति। अथवा ब्राह्मणराजन्यवैश्यानामेवाध्ययनं श्रूयते। वसन्ते ब्राह्मणमुपनयीत। ग्रीष्मे राजन्यं वर्षासु वैश्यमिति। उपनयनं चाध्ययनार्थम्। अतस्तदभावाद्वैद्यत्वादनधिकार. शूद्रस्य। अपि च। शूद्रस्य प्रतिषेधो भवत्यध्ययनं प्रति। श्रवणे त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्। उच्चारणे जिह्वाच्छेदः धारणे शरीरभेद इति। तस्मादवैद्यत्वाच्छूद्रो नाधिक्रियत इति ॥ ६ ॥

ब्राह्मणोऽग्नीनादधीत स्वर्गकामोयजेतेति च विशिष्टलिङ्गश्रवणात् स्त्रिया अनधिकारे प्राप्त इदमाह—

## स्त्री चाविशेषात् ॥ ७ ॥

स्त्री चाधिक्रियते। कुत एतत्। अविशेषात्। यस्माच्छ्रूयमाणमप्येतल्लिङ्गं न विशेषकं भवति अतो न पुंसामेवाधिकार इति। उद्दिश्यमानविशेषणं ह्येतत्। स्वर्गकामो यजेतेति। विधिसंस्पर्शाभावादविवक्षितं लिङ्गं संख्या च। यत्र पुनर्विधिसंस्पर्शोऽस्ति तत्र लिङ्गं संख्या च विवक्ष्यते। यथा पशुमालभेतेत्यत्र तद्विपर्यं पुंस्त्वमेकत्वं च विधीयते। विशिष्टपश्वालम्भोऽन्यथा न भवति। तस्मात् स्त्रिया अप्यधिकारः ॥ ७ ॥

## दर्शनाच्च ॥ ८ ॥

दृश्यते चायमर्थो यथा स्त्रिया अप्यधिकार इति। मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीमिति योक्त्रविधिपरे वाक्ये पत्न्या अधिकारं दर्शयति। सा च पुंसा सहाधिक्रियते न पृथक्। येनैकस्मिन्कर्मणि पत्नीसाध्याः पदार्थाः दृश्यन्ते यजमानसाध्याश्च। पत्न्याज्यमवेक्षते यजमानो वेदं दधातीति। अपि च। तयोः समभ्यर्कं द्रव्यं स्मर्यते। धर्मार्थकामेषु चानतिचारः। तस्मात् सहाधिक्रियते। तुल्यफलत्वाच्च। कुत एतत्। सूत्रकारप्रस्थानात्। पत्नीः प्रकृत्याहानुचरीर्वा फलाधिकारादितरासामिति। क्रियाफलं च सकलमेकैकस्य भवति। न विभागेन। स्वर्गकामो यजेतेत्यनेन यथा यजमानोऽभिधीयते। एवं पत्न्यपीति। यथा यागेन यजमानं फलं साधयति तथा पत्न्यपीति। वाक्यान्तरेण सह क्रिया तयोः। तथाच

स्मरणम् । नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् । शुश्रूषति भर्त्तारं तेन स्वर्गे महीयते ॥ ८ ॥

त्रयाणां वर्णानामङ्गहीनादिवर्जितानां स्त्रियासहाधिकार उक्तः। अन्यस्यापि कस्यचिदिष्यते तदर्थं सूत्रमारभ्यते—

## रथकारस्याधाने ॥ ९ ॥

श्रुतत्वाद्रथकारोऽधिक्रियते । श्रूयते हि वर्षासु रथकार आदधीतेति ॥ ९ ॥

तत्रैतद्विचार्यते । किं त्रैवर्णिको रथकारो रथक्रियायोगाद्रथकारः। उत जात्यन्तरमिति । ?। उभयत्र प्रयोगदर्शनात् सन्देहः । किं तावत्प्राप्तम् । त्रैवर्णिक इति । तस्य ह्याधानप्राप्तौ सत्यामृतुमात्रविधानात् वाक्यभेदो न भवति । जात्यन्तरत्वाच्चिति पुनस्तस्याधानसम्बन्धो वक्तव्यः ऋतुसम्बन्धश्चेति । तथा सति वाक्यं भिद्यते । तस्मात् त्रैवर्णिको रथकारः । एवं प्राप्त आह—

## नियतं च ॥ १० ॥

च शब्दो वाशब्दस्यार्थे । निपातानामनेकार्थतोक्ता । उच्चावचेष्वर्थेषु निपतन्तीति निपाता इति । अतश्च शब्दो वाशब्दार्थे वाशब्दश्च पक्षव्यावृत्तौ । न त्रैवर्णिको रथकारः । किं तर्हि जात्यन्तरमेव ? तस्मिन्हि रथकारशब्दो रूढः स्मर्यते । माहिष्येण करण्यां तु रथकारः प्रजायते इति । क्षत्रियाज्जातो वैश्यायां माहिष्य । वैश्येन शूद्रायां जाता करणी माहिष्येणकारण्यां जातो रथकार । आनुलोम्येन सङ्करजातः । रथकारशब्दश्चात्र रूढः । रूढिश्चयोगाद्बलीयसी । सा हि श्रुतिपक्षनिक्षिप्ता । वाक्यपक्षनिक्षिप्तो योगः । अपि च । त्रैवर्णिकस्य शिल्पोपजीवनं प्रतिषिद्धम् । तस्मादपि जात्यन्तरं इति । तथा च मन्त्रलिङ्गम् । ऋभूणां त्वेति रथकार आदधीतेति । सौधन्वना ऋभवःइति च । सौधन्वनशब्देन स्पष्टमेव जात्यन्तरमभिधीयते । अथ यदुक्तञ्जात्यन्तरत्वाच्चिति रथकारशब्दे वाक्यं भिद्यत इति । तद्विशिष्टविधानेन परिह्रियते । अथ कस्मात्त्रैवर्णिक एव नाङ्गीक्रियते । सोऽपि हि रथकरणाद्रथकारो भवति तस्येदमाधानम् । एवं च

सति ऋतुमात्रविधाने लाघवं भवति। जात्यन्तरे तु विशिष्टविधानाङ्गीकरणे गौरवं स्यात् ॥ १० ॥

एवमाशङ्किते उत्तरसूत्रम्—

## नाभावादिति वात्स्यः ॥ ११ ॥

न त्रैवर्णिको रथकारः शक्यते वक्तुम्। योगनिमित्तः शब्दो यावदेव युक्तः तावदेव प्रवर्तते। अतो न रथकाराख्याया रथकरणनिमित्तता। वात्स्यग्रहणं प्रत्ययदार्ढ्यार्थम्। रथकारस्याधान इत्येवमादीनामपरा व्याख्या। रथकारस्याधाने दृष्टत्वाद्रथकारोऽधिक्रियत इत्युक्तम्। रथकारशब्दश्च जात्यन्तर एव रूढः। तेन, यौगिकाशङ्कैव न भवति। अतोऽन्यथा व्याख्यायते। रथकारस्याधाने दृष्टत्वात् किमाधानमात्रमेव भवति उतोपरितनकर्मस्वप्यधिकार इति। तत्रैतदुच्यते। नियतं च। चशब्दान्नैमित्तिकं काम्यं च कर्म प्रवर्तते। कुत एतत्। आधानं हि तस्य श्रुतम्। आत्मसंस्कारार्थं अग्निद्वारेण। संस्काराश्चोपरितनकर्महेतवः। अतश्चोपरितनकर्मस्वप्यधिकार इति। एवं प्राप्त उच्यते। नाभावादिति वात्स्यः। नैतदेवमुपरितनकर्मस्वप्यधिकार इति। लिङ्गाभावात्। न ह्यधिकारलिङ्गान्यस्य दृश्यन्ते। यथा त्रैवर्णिकानाम्। एहीति ब्राह्मणस्य। आगह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्चेत्येवमादीनि। तेन लिङ्गाभावादनधिकारो गम्यते। एवमभिधाय पुनराधीतेन व्याख्यायते। अभावाल्लिङ्गानामुपरितनकर्मस्वधिकारो भावो न स्यात्। अस्ति तु भावः। न च लिङ्गाभावमात्रेणैवानधिकारो गम्यते। आधानं हि तस्य श्रुतम्। तद्धि संस्कार्योऽग्निद्वारेण परार्थमिति। वात्स्यग्रहणमुक्तार्थम्। अपि च लिङ्गमप्यस्ति। आधावेति शूद्रस्य। तथा मस्तुशूद्रस्य महीवघ्नं शूद्रस्येति शूद्रसम्बन्धाद्रथकारः शूद्र इत्यभिधीयते। तस्य हि मातामही शूद्रेति ॥ ११ ॥

## निषादस्थपतिर्गावेधुके ऽधिकृतः ॥ १२ ॥

एवं हि श्रूयते। यस्य रुद्रः पशून् शमयेत् स वास्तुमध्ये रौद्रं गावेधुकं चरुं निर्वपेदिति। तामिष्टिं प्रकृत्यामनन्ति। एतया निषा-

इस्थपतिं याजयेदिति । निषादस्थपतिर्यजेतेत्यर्थः । तत्रैतत्सन्दिह्यते । किं निषादानां स्थपतिर्निषादस्थपतिः उतनिषादश्चासौ स्थपतिश्च निषादस्थपतिरिति । स्थपतिशब्द आधिपत्यवचनः । किं चातो यदि षष्ठीसमासः तदा त्रैवर्णिको भवति । अथ समानाधिकरणस्तदा जात्यन्तरमिति । जात्यन्तरस्याविद्यत्वात्षष्ठीसमासपरिग्रहे प्राप्ते उच्यते । निषादश्चासौ स्थपतिश्चेति समानाधिकरण इति । कुत एतत् पञ्चमश्रवणात् । ननु च समासे सति लुप्यते षष्ठी । एतदेव ह्यनुपपन्नम् । यदश्रुता षष्ठी कल्प्या लोपश्चेति । इतरस्मिन्पुनः पक्षे द्वयोरपि पदयोः स्वार्थवृत्तिता भवति । तस्मात् समानाधिकरणोयं षष्ठीसमासः । अपि च । निषादद्रव्यं हि दक्षिणा श्रूयते । कूटं दक्षिणा काणो वा गर्दभ इति ।

वावकीर्णिनो गर्दभेज्या ॥ १३ ॥

अवकीर्णी ब्रह्मचारी यः स्त्रियमुपैति तस्य वा गर्दभेज्या नैमित्तिकी । वा आज्याहुती इति उभयं हि शाखान्तरे श्रूयते विकल्पेन ॥ १३ ॥

तत्रैतद्विचार्यते । स्थपतीष्ट्यां अवकीर्णिपशौ च किमाधान संस्कृतोग्निरुत लौकिक इति । किं तावत्प्राप्तमाधानसंस्कृत इति । दर्शपूर्णमासविध्यन्तग्राहके ह्येते कर्मणी । तत्र चाधानसंस्कृतोग्निर्दृष्टः । इहापि तद्वदेव भवतीत्येवं प्राप्त आह—

लौकिके ॥ १४ ॥

लौकिकेग्नावेतदुभयं स्यात् । स्थपतीष्ट्यां हि तत्प्रयुज्यते यत् दर्शपूर्णमासयोरङ्गं न चाधानं दर्शपौर्णमासाङ्गम् । प्रकरणाभावात् । स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितम् । अतो लौकिकोऽग्निरिति ॥ १४ ॥

भूमौ पशुपुरोडाशश्रपणम् ॥ १५ ॥

न कपालेषु ॥ १५ ॥

अप्स्ववदानहोमः ॥ १६ ॥

नाग्नाविति ॥ १६ ॥

## शिश्ना१त्प्राशित्रावदानम् ॥ १७ ॥

कर्त्तव्यमिति शेषः ॥ १७ ॥

कर्माधिकारो निरूपितः इदानीमग्न्यधिकारनिरूपणायाह—

## वैतानिकेषु सर्वः, सर्वार्थत्वात् ॥ १८ ॥

वैतानिका वितानार्हा आधानसंस्कृता अग्नय उच्यन्ते । तेषु सर्वं श्रौतं स्मार्त्तं च कर्म कर्त्तव्यम् । कुत एतत् । सर्वार्थत्वात् । सर्वार्था ह्येते अग्नयः । कथं ज्ञायते । यन्नाम द्रव्यमुत्पद्यमानमेव विशिष्टार्थसंयोगेनोत्पद्यते तस्य तादर्थ्यमेवावसीयते । न चैते विशिष्टार्थसंयोगिनस्तस्मात् सर्वार्था इति २ ॥ १८ ॥

## दर्शनाच्च ॥ १९ ॥

दृश्यते चायमर्थो यथा स्मार्त्तमन्यत्र क्रियते । दक्षिणाग्निप्रकृत्य श्रूयते । मांसं तु तत्र न पचेयुरिति । प्राप्तिपूर्वकश्च प्रतिषेधो भवति । न च श्रौतो मांसपाको दक्षिणाग्नावस्ति यस्यैष प्रतिषेधः स्यात् । शामित्रे ह्यसौ विहित इति । अस्तित्वविहिताप्रतिषिद्धः ३ स्मार्त्तो मांसपाकस्तस्यैष प्रतिषेधो युज्यते । तस्मात्स्मार्त्तमन्यत्र क्रियत इति ॥ १९ ॥

एवं प्राप्ते ब्रूमः—

## नौपासनश्रुतेः ॥ २० ॥

'नैतदेवं' स्मार्त्तमपि वैतानिकेषु कर्त्तव्यमित्येवं नास्ति । येन वैतानिकस्यापि स्मार्त्तकर्मसाधनभूत औपासनो दृश्यते । पितृमेधे अङ्गारेणौपासनं निरस्यतीति । यदि हि स्मार्त्तमपि वैता-

---

१ गर्दभस्य शिश्नात् प्राशित्रावदानं कार्यम्, वचनात्, न जौहवेभ्यो हृदयादिभ्य इति तत्त्वम् ।

२ आधानेनोत्पादितानामग्नीनां प्रयोजनापेक्षायां सामर्थ्येन सर्वाग्निकार्यार्थता विज्ञायत इति भावः ।

३ तथा च मार्कण्डेयः आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः, अनाहिताग्निस्त्वौपासनेऽन्यभाव तथाप्तु वा इति ।

निकेषु क्रियेत । औपासनदर्शनं न स्यात् । दृश्यते च । तस्मात्स्मार्त्तान्यौपासने क्रियन्त इति । पूर्वमौपासन. । स्मरन्ति ह्येवं संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्क्रियन्त इति[1] । पूर्वे च स्मार्त्ताः श्रौताश्चोत्तरे । न च वैतानिकोत्पत्त्युत्तरकालमौपासनस्य युक्तस्त्यागोऽग्न्युत्सादित्वप्रसङ्गात् ॥ २० ॥

अधिश्रयणीये मां[2]सप्रतिषेधः ॥ २१ ॥

यश्च दक्षिणाग्नौ मां[2]सपाकप्रतिषेधः । साधिश्रयणीयाद्विषय. । दक्षिणाग्निं प्रकृत्य श्रूयते । न चावसिते वैनमाहरेयुस्तस्मिन्पचेयुरिति । पाकद्रव्य चाविशेषान्मांसमपि भवति तस्यैव प्रतिषेध इति २ ॥ २१ ॥

स्वर्गकामो यजेत इत्येवमादीनां फलवत्ता प्रतिपादिता । अधिकारनिरूपणा च कृता । इदानीं तस्यैव साङ्गस्य फलवत कर्मणो निरूपणायाह—

यज्ञं व्या[3]ख्यास्यामः ॥ २२ ॥

यज्ञशब्दो व्याख्यास्यत इत्यर्थ. ॥ २२ ॥

प्रतिज्ञाकृता तामाह—

द्रव्यं देवता त्यागः[4] ॥ २३ ॥

व्रीहियवपश्वादिद्रव्यम् । देवताशब्दस्तु चोदना लक्षणः । या यत्र चोद्यते सा तत्र देवता । न हि आत्या काचिद्देवतास्ति

---

१ अत्र याज्ञवल्क्यः—कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही, दायकालाहृते वापि श्रौतं वैतानिकाग्निषु इति ।

२ अत श्रौतान्येव वैतानिकेषु गार्हपत्यादिषु कर्तव्यानि स्मार्तानित्यावसथ्येऽग्नावेवेति सिद्धम् ।

३ यज्ञो यागो यजनमिष्टिरिति पर्यायाः, यज्ञं याग व्याख्यास्याम इत्यर्थः, यागस्वरूपं कथयिष्य इति यावत् ।

४ अग्न्यादिदेवतोद्देशेन पुरोडाशादिद्रव्यत्यागो याग इति भावः ।

वैदिके व्यवहारे तद्धितेन द्रव्यं प्रति देवतात्वं गम्यते । चतुर्थ्यन्तेन वा । तस्य द्रव्यस्य देवतां प्रति या उत्सर्गक्रिया स यागः । यज्ञो याग इति चानर्थान्तरम् । अस्मिन्नेवार्थे लोके यज्ञशब्दः प्रसिद्धः । प्रसिद्धोऽपि सन्नुच्यते अङ्गप्रधानविवेकनिरूपणाय ॥ २३ ॥

निरूपितं प्रधानं फलसंयुक्तं इदानीमङ्गनिरूपणायाह—

## तदङ्गमितरत् समभिव्याहारप्रकरणाभ्याम् ॥ २४ ॥

यदन्यफलासंयुक्तं यागहोमरूपं तत्तस्यैव फलवतो यागस्याङ्गम् । धर्मः शेषोऽङ्गमिति चानर्थान्तरम् । कुत एतत्समभिव्याहारप्रकरणाभ्याम् । समभिव्याहारशब्देन वाक्यमभिधीयते । यथा पौर्णमासेनेष्ट्वैन्द्राय विमृधेऽनुनिर्वपतीति । प्रकरणाम्नानसामर्थ्याद्दर्शपूर्णमासाङ्गत्वे प्राप्ते वाक्यात्पौर्णमासाङ्गतोच्यते । उभयाकाङ्क्षालक्षणं प्रकरणमुच्यते । तद्यथा । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति यागस्य फले विधानं साधनत्वेन । साधनस्य चेतिकर्तव्यतापेक्षा । इतिकर्तव्यता च साध्यसव्यपेक्षा । तयोराकाङ्क्षावतोः सम्बन्धः प्रकरणम् । उभयोराकाङ्क्षावत्त्वे सति तत्सम्बन्धप्रतिपादकवाक्यपरिकल्पना । वाक्यादभिधानसामर्थ्यम् । अभिधानसामर्थ्याद्विनियोक्त्री श्रुतिरिति । एवं वाक्यप्रकरणाभ्यां शेषविनियोग इति । ननु च तन्त्रे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि शेषविनियोगप्रमाणानि । सूत्रकारेण तु प्रमाणद्वयमुपन्यस्तम् । शेषाणामनुपन्यास इति । नैष दोषः । कर्मविरचनाकाल एव तानि ह्यभिहितानि । तत्र तत्रोच्यते । काष्ठं हिरण्यं वाभिजुहुयात् श्रुतिरिति । काष्ठहिरण्ययोः श्रुतेर्विनियोजकत्वमुक्तम् । लिङ्गस्य च । तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वादिति । क्रमस्तु द्विप्रकारः । सन्निधानलक्षणो यथाम्नायलक्षणश्च । तत्र यः सन्निधानलक्षणः स विकृतिविषयः । अन्यतराकाङ्क्षोऽपि हि तत्र सम्बन्धो भवति । विकृतिसंनिधौ यदपूर्वमङ्गमाम्नायते तत्साध्याभावात्साध्याकाङ्क्षं तस्यानर्थक्यं मा भूदिति वैकृतस्य प्रधानस्य तत्सापेक्षा कल्प्यते । सोऽयमन्यतराकाङ्क्षालक्षणः क्रमः । तेनापि विनियोगो ज्ञापित एवाचार्येण । यथाभिदेवनादीनामभिषेचनीये । यथा-

संख्यलक्षणेनापि विनियोग उक्त एव । यथा कांस्यचानस्यसमार्ति-फैरभिचारब्रह्मवर्धसप्रतिष्ठाकामा यथासंख्यमिति । समाख्ययापि च विनियोगो ज्ञापित एव । शेषमितरे यथासंख्यमिति । अतो विनियोगप्रमाणद्वयमेवात्राभिहितम् । यच्च पितृभूत्याचार्येण यथासंख्यलक्षणकर्म प्रकृत्योपांशुयाजे दब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयमिति । अस्य विनियोग उक्तः । तत्रातीव शोभते । प्रकरणेन हि तस्य सम्बन्धः । उभयाकाङ्क्षालक्षणत्वात्तेनानुमन्त्रणेन प्रकरणिनोऽपेक्ष्यन्ते । प्रकरणिभिरप्याग्नेयोपांशुयाजाग्नीषोमीयैस्तदपेक्ष्यते । तेन प्रकरणेनानुमन्त्रणसम्बन्धः । तद्यदि विशेषे व्यवस्थाप्यते । क्रमेण प्रकरणं बाधितं स्यात् । यथासंख्यलक्षणेन विनियोगः प्रदर्शित एव । कश्चिचिनिर्याङ्कलापिदण्डिनो यथासंख्यमित्येवमादि ॥ २४ ॥

अथागहोमरूपस्याङ्गमाय उक्त । इदानीं यागहोमरूपयोरङ्गत्वप्रतिपादनायाह—

## यजतयश्चाफलयुक्तास्तदङ्गम् ॥ २५ ॥

चशब्दाज्जुहोतयश्च । ननु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन यागस्य फलसम्बन्धउक्तः । कुतोऽफलयुक्ता यजतय इति । अत्रोच्यते । नात्र सर्वस्य यागस्य फलवत्ता । किं तर्हि य एव दर्शपूर्णमासशब्दवाच्यः स फलवान् । कश्चासौ । यो दर्शपूर्णमाससंयोगेनोत्पन्नो यथाग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यायां चाच्युतो भवतीति आग्नेयस्य दर्शपौर्णमाससंयोगः । दर्शशब्देन च चन्द्रमसो दर्शनाद्वैपरीत्यलक्षणयामावास्योक्ता । तथा तावब्रूतामग्नीषोमावाज्यस्यैनाउपांशुपौर्णमास्यां यजन्निति उपांशुयाजस्य पौर्णमासीसंयोगः । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमास्यामप्रायच्छदित्यस्य च । तथा चेन्द्र दध्यमावास्यायामैन्द्रं पयोमावास्यायामित्यमावास्यासंयोगः । एवमेते यागा लक्षणया दर्शपूर्णमासशब्देनाभिधीयन्ते । तेषामेव फलविधानम् । इतरे प्रयाजादयो निष्फलास्तेषामपि फलवदुपकारः परिकल्प्यते । तेन तादर्थ्याचदङ्गता । तस्मात्साधूक्तम् । यजतयश्चाफलयुक्तास्तदङ्गमिति । अङ्गाधिकारे पुनस्तदङ्गग्रहणमपूर्वसमूचनार्थम् ॥ २५ ॥

यजतिजुहोत्योर्विवेकायाह—

यजति जुहोतीनां को विशेषः१ ॥ २६ ॥

इति ॥ २६ ॥

तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः२ ॥ २७ ॥

उच्यन्ते ॥ २७ ॥

उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः३ ॥ २८ ॥

उच्यन्ते । अनेन प्रकारेण तद्धर्मानुकथनं कृतमाचार्येण । यजतीनां तिष्ठद्धोमादयो धर्माः । जुहोतीनां चोपविष्टहोमादयः । लक्ष्यलक्षणसम्बन्धे त्वदृष्टपरिकल्पनम् । तस्मात्तद्धर्मानुकथनार्थं तदुक्तम् ॥ २८ ॥

अङ्गत्वे लक्षणमुक्तम् । तेषां च ऋत्विक्कर्तृकत्वमुक्तं प्रदेशान्तरे शेषमितरे यथासंख्यमिति । ये इतरे ते किं ब्राह्मणा उत क्षत्रियवैश्या अपीति । क्षत्रियवैश्या अपीति ब्रूमः । समर्था ह्यधिक्रियन्ते । सामर्थ्यं च वैश्यस्याप्यस्तीत्येवं प्राप्त आह—

ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ॥ २९ ॥

ब्राह्मणानामेवार्त्विज्ये ऽधिकारो न क्षत्रियवैश्ययोः । तयोर्हि सोमभक्षप्रतिषेधः । अग्निहोत्रोच्छिष्टं प्रकृत्योच्यते । नह्येतं नाब्राह्मणः पिबेद्यमौ ह्यभिधयन्ति तस्मान्नाब्राह्मणः पिबेदिति । एवं च कृत्वा

१ यजतीनां यागानां, जुहोतीनां होमानां च परस्परं को विशेषः, को भेद ? इति प्रश्नः ।

२ तिष्ठता होमो येषु ते तिष्ठद्धोमाः, वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः, तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते इति ज्ञेयः ।

३ उपविष्टेन कर्त्रा होमो येषु ते उपविष्टहोमाः, स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः, ये उपविष्टहोमाः स्वाहाकारप्रदानाश्च ते जुहोतय उच्यन्ते ।

क्षत्रियवैश्ययोर्भागस्य होमविधानं कृतं न भक्षणमिति१ ॥ २९ ॥

दर्शनाच्च ॥ ३० ॥

दृश्यते चायमर्थो यथा ब्राह्मणानामेवार्त्विज्यमिति । द्वया वै देवा देवा आहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणामनुष्यदेवानां, ब्राह्मणानां शुश्रुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणानिति । दक्षिणा शब्दश्च परिक्रयार्थे द्रव्ये वर्त्तते । तेन ब्राह्मणानामेवार्त्विज्यमिति । अपि च स्मरन्ति । ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा इति ॥ ३० ॥

इदानीमिदं विचार्यते । कर्मणामारम्भे किं याथाकाम्य कर्तुरुत नियोगतोऽनुष्ठेयानीति । किं तावत्प्राप्तम् । सूत्रेणैव पक्ष —

फलयुक्तानामारम्भे याथाकामी फलार्थित्वात्२ ॥ ३१ ॥

फलार्थिनो हि कर्मचोद्यते । तस्माद्याथाकाम्यं प्राप्तम् ॥ ३१ ॥

न नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः ॥ ३२ ॥

नियमेषु न याथाकाम्यम् । यस्मान्नियोगतस्तत्र शास्त्र प्र-

---

१ तथा च शाखान्तरम् ' न राजन्यो न वैश्यो वा साम्राज्य पिबेत्सोमपीथी होव ' इति ।

२ फल सम्बद्धानां काम्यानां कर्मणां द्वादशाहादीनामारम्भे कर्तुर्याथाकाम्यमिच्छया प्रवृत्तिः, कुत ? तस्य कर्तुः फलार्थित्वादित्यर्थः । काममनतिक्रम्य यथाकामम्, तस्य भावो याथाकामी, याथा काम्यमिति यावत्, ब्राह्मणादित्वाद्गुणवचनब्राह्मणादिभ्य इति ष्यञि विषयान्तीपि यम्येति चेत्यकारलोपे हलस्तद्धितस्येति यकारलोपे औचित्यमौचिती इति वत् रूपद्वयम् ।

वर्त्तयति । सत्यवादीस्यादधः शायी स्यादिति च । पक्षे नैतन्नियमशास्त्रं प्रवृत्तम् । प्रागेव यस्माद्याथा कामयं प्राप्तम् । यदि तु नियोगतोनानुष्ठेयम् । सत्यवदनशासनमनर्थकमेव स्यात् । तस्मात्सत्यवदनादि नियोगतोनुष्ठेयं सत्यवदनशासनानर्थक्यं मा भूत् । तस्मान्नियमेषु न याथाकाम्यम् । निमित्तेऽपि यद्विधीयते तत्रापि न याथाकाम्यम् । निमित्तोद्देशेन विधानात् । गहदाहे अग्नये क्षामवत इति । यदि गेहदाहे क्षामवत्यादिषु याथाकाम्यं स्यात् । गेहदाहग्रहणमनर्थकमेव स्यात् । प्रागपि गेहदाहग्रहणाद्याथाकाम्यं सिद्धमेव । तस्मान्नैमित्तिकेषु न याथाकाम्यम् । अग्निहोत्रेऽपि न याथाकाम्यम् । यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते । ननु च अग्निहोत्रं जुहुयात्स्वर्गकाम इति च । तत्र प्रकरणात् काम्यस्यैव कर्मणो धर्मस्तच्च याथाकाम्यमित्येव प्राप्त उच्यते । प्रकरणादेव कर्मधर्मः स्यात् यावज्जीविकता । तत्रापि लक्षणया कर्माभ्यास उपदिश्यते । विहिता हि तस्य सायं प्रातः परिसमाप्तिः । तेन यावज्जीवं जुहुयादित्यनेनाभ्यासो लक्ष्यते । कर्तृधर्मे पुनर्जुहुयादिति स्वार्थ एव वर्त्तते । नाभ्यासं लक्षयति । जीवने च निमित्ते ज्ञातो होमो विधीयते । तस्मात्कर्तृधर्मो यावज्जीविकता । ततश्च न याथाकाम्यम् । यत्पुनरुक्तम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति । स पृथक्काम्यः प्रयोगः । अयमपरो जीवननिमित्त इति । तत्रैतद्भवति । काम्येपि प्रयोगे क्रियमाणे नैयमिकः कृत एव भवति । सोप्यग्निहोत्रप्रयोग एवेति । दर्शपूर्णमासादिष्वप्येवमेव द्रष्टव्यम् । तत्रापि हि काम्यचोदना यवाज्जीवचोदना च । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति च । दाक्षायणग्रहणं काम्यसम्बन्धा ऽऽशङ्कया । आग्रयणेष्यामपि शाखान्तरादयाथाकाम्यं स्वशाखायामपि च । नवं प्रकृत्यामनन्ति यनयोर्वा अयं द्यावापृथिव्योरसोस्य रसस्य हुत्वा देवेभ्योपेममद्नामेति । अशनस्य च नित्यकर्त्तव्यता । न च देवताभ्यो हुत्वासौनित्यकर्त्तव्यता क्रियते । अतो नियतागम्यते । अपि च प्रायश्चित्तविधानमत्र भवति । अनिष्ट्वाग्रयणेन नवस्याश्नीयादिति । तस्मादाग्रयणेपि न याथाकाम्यम् । पशावप्येवम् । निरूढं प्रकृत्यामनन्ति । न वै संवत्सरो नानीजानमर्तीयादिति ॥ ३२ ॥

सोमे चैके ॥ ३३ ॥

सोमे च न याथाकाम्यम्। एवं हि श्रूयते। वसन्ते वसन्ते ज्योतिषा यजेतेति। साध्यासवसन्तग्रहणं ज्योतिष्टोमस्य निमित्तम्। यथा जीवनमग्निहोत्रस्य। एके पुनरन्यथा वदन्ति। ज्योतिष्टोमेन स्वर्गकामो यजेतेति फलयुक्ता चोदना तस्मादिह यथाकाम्यम्। अन्नोच्यते। पृथक्प्रयोग एवायम्। एकः स्वर्गकामप्रयोगोऽपरो नैयमिकः कर्तृधर्म इति। एवं च कृत्वा गवामयने श्रूयते। कथमेषां सोमोनन्तरितो भवतीति वचनैरिति ब्रूयादिति। यद्यवश्यकर्तव्यं तस्य कारणान्तरेणानन्तराय उच्यते। तस्मादत्रापि न याथाकाम्यम्। तथा च स्मरणम्। कृतानां पशुसोमानां निष्कृत्यर्थमसम्भवे। इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ॥ ३३ ॥

चातुर्मास्येषु चर्तुमु[१]खश्रुतेः ॥ ३४ ॥

चातुर्मास्येषु च न याथाकाम्यम्। कुत एतत्। ऋतुमुखश्रुतेः। ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेतेति श्रूयते ॥ ३४ ॥

किञ्च—

नियतसहपाठात् ॥ ३५ ॥

अपि च नित्यैः सह चातुर्मास्यानां पाठो भवति। त एतान्यशकृत्स्नानिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्ध सौम्यमध्वरमिति। सह पाठाच्च तुल्यता गम्यते ॥ ३५ ॥

दर्शनाच्च ॥ ३६ ॥

दृश्यते चायमर्थो यथा नित्यानि चातुर्मास्यानि। गवामयनयाजिनं प्रकृत्योच्यते। कथमेतेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयादिति। दीक्षितत्वाच्चैषां प्रतिषेधे सति कारणान्तरेण चातुर्मास्यानामनुग्रहं दर्शयति पयस्ययेति ब्रूयादिति। यच्च ना-

---

१ ऋतौ मुखं प्रथमदिनं प्रतिपत् तत्रेत्यर्थः, अत एव चातुर्मास्यपर्वाणि प्रतिपद्येवानुष्ठीयन्ते। अत्रार्थे एषा ह सम्वत्सरस्य प्रथमारात्रीर्यत्फाल्गुनी पौर्णमासी योत्तरेति श्रुतिः शरणम्।

मावश्यं कर्त्तव्यं तस्य कारणान्तरेणानुग्रहो भवति । अपरे स-पक्षमेविषयं दर्शनं मन्यन्ते कथमेवामग्निहोत्रमनन्तरितं भवति कथ-मेषां पौर्णमास ६ हविरनन्तरितं भवत्येवमादिसर्वत्र कारणान्तरेणा-नुग्रहो दृश्यते ॥ ३६ ॥

नो १त्सर्गयोगात् ॥ ३७ ॥

न च नित्यानि चातुर्मास्यानि । उत्सर्गेण हि तानि युज्यन्ते । इति तूत्सृजमानस्यति । यन्नाम नित्यं कथं तस्योत्सर्ग इति ॥ ३७ ॥

स्या२त् त्रि ( शद्वत् ॥ ३८ ॥

भवेद्वा नित्यत्वेऽप्युत्सर्गो यथा दर्शपौर्णमासयोस्तस्मात्त्रिं शतमेव वर्षाणि यजेतेति । अपि च । तन्नित्यमुच्यते यदवश्यं कर्त्त-व्यम् । द्विप्रकारं कर्म नित्यं काम्यं च । तत्र नित्यं प्रकृत्य चिन्त्यते । किं सगुणमेव कर्त्तव्यं उत निर्गुणमपीति ॥ ३८ ॥

गुणाम्नानात्सगुणमेवेत्येवं प्राप्त आह—

विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥ ३९ ॥

विगुणेऽपि नित्ये कर्मणि फलाभिनिर्वृत्तिर्भवति । कुत एतत् । यतोऽङ्गानि प्रधानानि च भिन्नानि । इह यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति दर्शपूर्णमासयोरेव कर्त्तव्यतोच्यते नाङ्गानाम् । अतश्च प्रधा-ने कृते यत्फलं तत्सिद्धं भवत्येव । अतश्च धात्वर्थमात्रमेव कर्त्त-व्यम् । न तेनान्यस्य कर्त्तव्यता । यत्र च साधनत्वेन यागस्य श्रव-णं तत्र साध्यापेक्षामवतीतिकर्त्तव्यतापेक्षा च । न चात्र साधनत्वं तस्माद्विगुणादपि फलं भवति । अङ्गाम्नानं तर्हि किमर्थम् । काम्य-प्रयोगविषयमित्यदोषः ॥ ३९ ॥

प्रायश्चित्तविधानाच्च ॥ ४० ॥

विगुणेऽपि नित्ये प्रायश्चित्तं विधीयते । भिन्ने जुहोति स्कन्ने जुहोतीत्येवमादि । यदि हि विगुणं फलं न साधयेत् । प्रायश्चित्त-विधानर्वैयर्थ्यप्रसङ्गः स्यात् ॥ ४० ॥

१ एवं सिद्धान्तिते ऽनतरापूर्वपक्षोपमिति द्वेचः ।
२ उक्तमेव सिद्धान्त दृढयति ।

तथा च दृष्टम् ॥ ४१ ॥

विगुणमपि नित्यं कर्म यथाकथञ्चित्परिसमाप्यमानम् १। यत्पयो न स्यात् केन जुहुया इति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्यातां केन जुहुया इति या अन्या ओषधय इत्येवमाद्यभिधाय पुनरुपसंहरति न वा इह तर्हि किं चनासीदथैतदहूयतैव सत्यं श्रद्धायामिति यथाकथञ्चित्परिसमाप्तिं दर्शयति। न चैते विधयो? विधिविभक्तेरभावात् तस्माद्विगुणमपि नित्यं फलं साधयत्येव। अपरेऽन्यथा व्याचक्षते। गुणास्नानसामर्थ्यान्नित्यं सगुणमेव कर्त्तव्य। सूत्रव्याख्या च। विगुणेऽपि नित्ये फलाभिनिर्वृत्तिर्भवत्येव। यदि नाम दैवान्मानुषाद्वा प्रतिबलात्सर्वाङ्गोपसंहारो न शक्यते कर्तुं कतिपयाङ्गोपसंहारणापि कर्त्तव्यमेव। यथा शक्नुयादित्युपपदार्थो ऽत्र परिकल्पते। सर्वदा कर्त्तव्यं सगुणं चेत्यशक्यमेव। अवश्यम्भावि हि दैवान्मानुषाद्वा प्रतिबलाद्वैगुण्यमिति। एवं च कृत्वा विकृतौ नित्ये कर्मणि प्राकृताङ्गानुवृत्तिर्दृश्यते। यथा वरुणप्रघासेषु। अथाहाग्निमग्नीत्सम्मृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितमथ प्रतिप्रस्थाताप्रतिपरैति स सपत्नीमुदानेष्यन्निति पत्न्यानयनविधिपरं वाक्यं अग्निसम्मार्गप्रैषं दर्शयति। तथा महापितृयज्ञे स यज्ञोपवीती भूत्वाज्यानि गृह्णातीत्येव विधिपरे वाक्ये लेखाकरणहरणोत्तरपरिग्रहादीन्पदार्थाननुवदति। यदि हि नित्यस्याङ्गसम्बन्धो न स्यात् लेखाकरणाद्यनुवादो न स्यात्, भवति च, तस्मान्नित्यानामप्यङ्गसम्बन्धः। पशौ च दर्शयति। स उत्तरमाघारमाघार्यांसस्पर्शयन् स्रुचौ पर्येत्य जुह्वा पशुं समनक्तीति पशुसमञ्जनविधिपरे वाक्ये उत्तराघारं दर्शयति। यच्चोच्यते। न यागेनान्यत् साध्यत इति। अस्नानसामर्थ्याद्दुपात्तदुरितक्षयो वा उत्पित्सुदुरितप्रतिबन्धो वा भवत्येव। तस्मान्नित्येष्वप्यङ्गसम्बन्धः ॥ ४१ ॥

अथ काम्ये कर्मणि कथम्?। काम्ये विगुणे ऽपि फलाभिनिर्वृत्तिर्भवत्येव। तत्रापि चाङ्गानि प्रधानानि मिश्राणि च।

---

१ नित्यं कर्म यथा कथञ्चित् श्रुताङ्गपरित्यागेनापि यथा शक्त्याङ्गोपेतमनुष्ठातव्यत्वेन श्रुतौ दृष्टम्। तथा हि यदि पयो न स्यात् इत्यादि।

प्रायश्चित्तविधानं भवत्यश्वमेधे अश्वं प्रकृत्य अथ यदि स्रामो विन्देदथ यद्यश्यामयो विन्देदित्येवमादि १। यदि विगुणं काम्यं फलं न साधयेत्प्रायश्चित्तविधानमनर्थकं स्यात् । तथा च दृष्टम् । दृश्यते च विगुणेपि काम्ये फलम् । वृष्टिकामेष्टिः कारीरी द्व्यहकालतया समाम्नाता शाखान्तरे । तां प्रकृत्य श्रूयते । यदि वर्षेत्तावत्येव जुहुयादिति । यद्यपरिसमाप्तायामेवेष्टयां वृष्टिर्भवति तस्मिन्नेव काले परिसमापयेत् । न द्व्यहकालतामाद्रियेत । यदि हि विगुणमपि काम्यं फलं न साधयेत् । कथं वृष्टिर्दृश्यते । तस्माद्विगुणेपि काम्येऽस्ति फलमित्येवं प्राप्त आह—

## न श्रुतिलक्षणत्वात् ॥ ४२ ॥

नैतदेवं विगुणेपि काम्ये फलमिति । सगुणं हि श्रुत्या लक्षितम् । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति ब्रह्मवर्चसं साध्यं यागश्च साधनम् । सेतिकर्त्तव्यताकं च साधनं साध्ये व्याप्रियते । नैमित्तिकर्त्तव्यतासम्बन्धस्तस्मात्सगुणमेव काम्यं फलं साधयतीति नित्ये पुनः सर्वदा कर्त्तव्यत्वादवश्यम्भाविनि वैगुण्ये उपपदार्थः परिकल्प्यते । यथा शक्नुयादिति । काम्येषु पुनरवश्यं कर्त्तव्यत्वाश्रितत्परिकल्प्यते ॥ ४२ ॥

प्रायश्चित्तविधानं तर्हि किमर्थम्—

## प्रायश्चित्तं तत्कालम् २ ॥ ४३ ॥

काम्यमपि कर्म प्रक्रान्तं परिसमापनीयमेव । फलाभावेपि प्रायश्चित्तानुष्ठानमर्थवत् । तत्रापि अन्यत्फलं दोषपरिहारः । तेनार्थवत्प्रायश्चित्तम् ॥ ४३ ॥

## दृष्टे तत्परिमाणम् ३ ॥ ४४ ॥

---

१ तथा पञ्चशारदीये उत्सृष्टान् पशून् प्रकृत्य ताण्ड्ये प्रायश्चित्तं विधानं श्रूयते-' अपोनप्त्रियो ऽप्सु सृत ' इत्यादिकमिति देवः ।

२ तस्य काम्यस्य कर्मणो विनाशकाले यत् प्रायश्चित्तं तत्तस्य नष्टस्य कर्मणः प्रत्यवायपरिहारजननेन सार्थकमिति भावः ।

३ कृतार्थायामिष्टौ वर्षणेदृष्टे सति तत्परिमाणमेव कर्म कर्त्तव्यं यत्परिमाणमदृष्टे वर्षणे क्रियते इत्यर्थः । न तु वृष्टौ जातायां किमप्यूनं कृतार्थं वा त्याज्यमिति यावत् ।

अथ यदुदृष्टिदर्शनमुक्तं न तद्दिष्टिफलम् । ऋतुस्वभावजनिताया वृष्टेस्तद्दर्शनम् । तत्र तावत्प्रमाणता कर्मण उच्यते ॥ ४४ ॥

. वाक्यप्रकरणाभ्यां शेषविनियोग उक्तः, इदानीं मन्त्राणां लिङ्गेन विनियोग उच्यते । तेचाध्येतृप्रसिद्धा एव मन्त्रास्ताननुवदति–

ऋचो यजूंषि सामानि निगदा मन्त्राः ॥ ४५ ॥

नियताक्षरपादावसाना ऋगित्युच्यते । अनियताक्षरपादावसानं यजुः । प्रगीतं मन्त्रवाक्यं सामेत्युच्यते । तत्र विशेषणं गीतिः विशेष्याण्यक्षराणि । न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । अतः पूर्वप्रतीतस्वाङ्गीतिरेव सामशब्देनाभिलक्ष्यते । ननु चैवं रथन्तरादयः शब्दा गीतौ वर्त्तन्ते । तत्र रथन्तरेण स्तुवीत बृहता स्तुवीतेति च गुणगुण्यभिधानं स्तुतिः । सा साम्नो नोपपद्यते । तत्रोच्यते । स्वयमेव गीतेः स्तुत्यनभिधायकत्वात् ऋगक्षराभिव्यक्तिद्वारेण स्तुत्यभिनिर्वृत्त्यर्थमेति । एवं च कृत्वा ऋच्यध्यूढं सामगीयते प्रजापतिहृदयमनृचं गीयते इत्येवमादीन्युपपन्नार्थानि भवन्ति । एव च ऋचो मन्त्रत्वे उक्ते साम्नो वक्तव्यम् । निगदाः प्रैषा इत्यनर्थान्तरम् । एतच्चतुष्टयं १ मन्त्रशब्देनाभिधीयते ॥ ४५ ॥

तेषां वाक्यं निराकाङ्क्षम् ॥ ४६ ॥

तेषामिति सर्वनामशब्देन यजुषां परामर्शः । ऋचः सामानि च वाक्यव्यवस्थारूपाण्येव प्रायशः पठ्यन्तेति न यजुःषु कियन्मात्रं वाक्यमित्यपरिज्ञान आह । तेषां वाक्यं निराकाङ्क्षम् । यावति पदसमूहे उच्चरिते पदान्तराकाङ्क्षा न भवति तावदेकं वाक्यं नैरुक्त्यात् । य-

---

१ ननु निगदानां यजुष्ट्वमेव, तत्कथं चातुर्विध्यं मन्त्राणामिति चेत्, न उपांशुयजुषा उच्चैर्निगदेति भेदबोधनाय पृथगुपादानात् । वस्तुतस्तु तेषां यजुष्ट्वमेव, ऋगादावप्युच्चैस्त्वादिधर्माणां न्यासदर्शनात्, एवञ्चत्रिविधा एव मन्त्रा, अतएव मन्त्राधिकरणे "अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयी विदा विदुः ऋचः सामानि यजूंषि" इत्येव सुक्तम्, सूत्रकारोक्तिस्तु वाह्य धर्मद्वयविषयेति भावः ।

या देवस्यत्वेत्येवमादि अग्नये जुष्टं गृह्णामीत्येवमन्तम् ॥ ४६ ॥

यत्र पुनः श्रूयमाणैः पदैर्नैराकाङ्क्ष्यम् । यथा कर्मणे वां वेषाय वामिति । तत्राध्याहृत्यापि क्रियापदं नैराकाङ्क्ष्यं कर्त्तव्यमित्यत आह—

मिथः सम्बद्धम् १ ॥ ४७ ॥

यत्तैः पदैः सह सम्बध्यते तदध्याहर्त्तव्यम् । न हि क्रियापदशून्यं पदजातमर्थाभिधायकं भवति । अथवानुपङ्गार्थमिदमुच्यते । यथा दर्शपौर्णमासयोः । अस्मादन्नादस्यै प्रतिष्ठाया इति । अधस्तनमन्त्रवाक्यात्ततो निर्भक इत्यत्रानुषज्यते ॥ ४७ ॥

तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥४८॥

तेषां मन्त्राणां प्रकरणसमधीतानामारम्भे अर्थतो व्यवस्था भवति । यो यत्पदार्थाभिधानसमर्थो मन्त्रः स तत्र विनियुज्यते । कुत एतत् । तद्वचनत्वात् । तमेवार्थं वक्तुं शक्नोति नार्थान्तरम् । यथा उरुप्रथाउरुप्रथस्वेति प्रथनम् । ननु च प्रतिपदार्थं मन्त्रविनियोग उक्तः । सत्यमेतत् । अनुक्तसङ्ग्रहार्थत्वाददोषः । यथा प्रवत्स्यत् सर्वाग्नयेति प्रतिमन्त्रम् ॥ ४८ ॥

मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात् २ ॥४९॥

कर्मणि प्रयुज्यमानानां मन्त्राणां मन्त्रान्तस्य कर्मादेश्च सन्निपातः संलग्नता कर्त्तव्या । कुत एतत् । अभिधानात् । अभिहितो मन्त्रः कर्माभिधातुं शक्नोति । ततश्च तदनुष्ठीयते ॥ ४९ ॥

अनियमं वात्स्यः ॥ ५० ॥

वात्स्य आचार्योऽनियमं मेने । आदौ वा मन्त्रमुक्त्वा कर्मा-

---

१ यावदेव मिथः सम्बद्धं परस्परान्वयि तावदेकं यजुः; अतोन्यत् यजुरन्तरमित्यर्थः ।

२ सकलस्य मन्त्रस्य कर्मणि विनियोगात् सकलेन सम्पादितं स्मरणं कर्माङ्गं, तच्च स्मरणं यथा नष्टं न भवेत् तथा कर्तव्यं अतो मन्त्रान्तस्य तदादेश्च सम्बन्धं कृत्वा कर्मानुष्ठेयमिति तात्पर्यम् ।

नुष्ठानं क्रियते। कृते वा कर्मणि मन्त्रवचनमिति। एवमपि हि क-
र्माभिधायकत्वं मन्त्रस्य भवति ॥ ५० ॥

१ आदिं त्वाचार्याः ॥ ५१ ॥

तु शब्दः पक्षव्यावृत्तौ। नानियमः। मन्त्रान्ते एव कर्मादि-
माचार्या इच्छन्ति। यत्कारणं मन्त्रेण स्मृतं कर्म कर्त्तव्यम् २। म-
न्त्राम्नानसामर्थ्यादेवावगम्यते। एवं दृष्टार्थता भवति। इतरथा अ-
दृष्टं परिकल्प्यते। तच्च नेष्यते दृष्टे सति ॥ ५१ ॥

त आद्युक्ताः ॥ ५२ ॥

त एते मन्त्रा आदिमात्रे उक्ते सति समस्ताः प्रयो-
क्तव्याः ४ ॥ ५२ ॥

परादिना पूर्वान्तः ॥ ५३ ॥

परस्य मन्त्रस्यादिना पूर्वस्यान्तः प्रतिपत्तव्यः। ननु च वा-
क्यलक्षणेनैव तत्सिद्धं किमर्थं पुनरुच्यते? । वाक्यसमुच्चयविधाना-
र्थतयेत्यदोषः। यथा विश्वेषां देवानां भागधेयीस्थेत्यत्रासूर्या उपसूर्ये
इत्येवमादि५प्रयुज्यते ॥ ५३ ॥

उपांशु प्रयोगः श्रुतेः ६ ॥ ५४ ॥

---

१ सिद्धान्तमाह 'आदिं' इति।

२ तदुक्तम्, अनुष्ठाने पदार्थानामवश्यम्भाविनी स्मृतिः, अनन्य-साधनानन्त्रकार्यैर्मन्त्रैः प्रसाध्यत इति।

३ मन्त्रैरेव स्मृतं कर्म कृत्वाभ्युदयकारि भवतीत्येवं रूपा दृष्टा-र्थता ऽत्र।

४ न तु सूत्रे यावदवयवोपादानं तावदेव पठनीयं, शास्त्र बाधात्।

५ आदि पदेन 'अदृगृहीतं जुहोति सन्तत मनुगृह्णन् युञ्जान इति' त्यस्य ग्रहणम्। अतएव तत्राद्यानामेक मन्त्रत्वम्, एव मेव देवस्य त्वे त्यग्निमादाय' इत्यत्र त्रयाणां ग्रहणं भवति।

६ 'उच्चैः ऋचा क्रियते उच्चैः साम्नोपांशु यजुषा' इति शाखा-न्तरे श्रवणात्। 'स उपांशु यजुर्भिश्चरन्तीति शतपथ श्रुतौ।

शाखान्तरे उच्चैर्ऋचा क्रियते । उच्चैः साम्नोपांशु यजुषेति । यजुषामेवोपांशुत्वम् । वेदोपक्रमाणि चैतानि वचनानि वेदोपसंहाराणि च । तेन ऋगादीनां वेदोपलक्षणार्थता । ऋग्वेदविहितसामवेदविहितं चोच्चैःकर्तव्यं । उपांशु याजुर्वैदिकमिति १ ॥ ५४ ॥

## न सम्प्रैषाः ॥ ५५ ॥

याजुर्वैदिकत्वेऽपि सति सम्प्रैषा नोपांशु भवन्ति । सम्बोधनार्थत्वात्तेषाम् २ ॥ ५५ ॥

इद विचार्यते । बर्हिः शब्दः किं संस्कारनिमित्त उत जातिनिमित्त इति । संस्कारनिमित्त इति ब्रूमः । संस्कृतेषु तृणेषु प्रयोक्तारो बर्हिः शब्दं प्रयुञ्जते । नन्वसंस्कृतेष्वपि प्रयोगा दृश्यते । बर्हिरादाय गावो गता इति प्रदेशान्तरे वक्तारो वदन्ति । तत्सादृश्यात्तत्प्रयोग इत्येवं प्राप्त आह—

## कौशं बर्हिः ॥ ५६ ॥

कुशा एव बर्हिः शब्देनोच्यन्ते । न संस्कारात् । कुत एतत् । असंस्कृतेष्वपि प्रयोगदर्शनात् । उपक्षीणानि तृणानि बर्हिर्विभ्रन्ति । सादृश्यात्प्रयोग इति चेत् । नेतरेतराश्रयदोषप्रसङ्गात् । बर्हिः शब्देनोद्दिश्य संस्कारविधानम् । संस्कारनिमित्तश्च बर्हिः शब्द इति । यदि संस्कारनिमित्तो बर्हिशब्दस्तदा सादृश्याज्जातौ प्रयोगः । यदि जातिनिमित्तस्तदा बर्हिःशब्देनोद्दिश्य संस्कारविधानं, जातिनिमित्तत्वे पुनरेष दोषो न भवति । तस्माज्जातिनिमित्तो बर्हिः शब्द इति । चिन्तायाः प्रयोजनम् । बर्हिषा यूपावटमवस्तृणातीत्यत्र संस्कारा न कर्तव्याः ॥ ५६ ॥

---

१ अस्य सूत्रस्यापि पशुसोमव्यतिरिक्तं कर्माग्निहोत्रादिकं विषयः, एतेषु तत्र तत्र विशेषस्य वक्ष्यमाणत्वात् ।

२ स च नोपांशूच्चारितैरेभिः सम्भवतीति भावः ।

३ कुशा दर्भाः तस्येदं कौशम्, शैषिकाधिकारस्थेन तस्येदम्, इ॰ त्यणा साधुत्वम् ।

अर्थात्परिमाणम् १ ॥ ५७ ॥

यत्र परिमाणविशेषो न श्रूयते तत्र सामर्थ्यात्परिमाणं भवति । यथा वसोर्द्धारायां अर्थात्परिमाणबाधः । अर्थबाधो माभूदिति । न ह्यङ्गुष्ठपर्ववृत्तपुष्करस्रुवेण वसोर्द्धारा होमः सम्भवति ॥ ५७ ॥

अयुग्धातूनि २ यूनानि ॥ ५८ ॥

यूनानां बन्धनार्थानामयुग्मा धातवो भवन्ति । धातवस्तृणमुष्टिप्रक्षेपाः ॥ ५८ ॥

प्रागग्रे यून उदगग्रं बर्हिराचिनोति ३ ॥ ५९ ॥

उदगग्रं प्रागग्रमिध्मम् ॥ ६० ॥

आचिनोतीति वर्त्तते ४ ॥ ५९ ॥

प्रत्यग्ग्रन्थीनवगूहति ५ ॥ ६१ ॥

प्रत्यक् शब्दः पश्चाद्भागवचनः न दिग्वाचको बर्हिष्यसंम्भवात् ॥ ६१ ॥

---

२ यावता परिमाणेन प्रयोजनं भवति तावत्परिमाणं ( स्रुगादि ) भवतीत्यर्थः ।

१ अयुजो विषमा एकत्रिपञ्चसप्तनवादिसंख्या धातवस्तृणमुष्टिप्रक्षेपा. येषां तानीत्यर्थः । तदुक्तमापस्तम्बेन ' त्रिधातु पञ्चधातु वा शुल्बं करोति ' इति । तित्तिरिसूत्रे ऽपि ' त्रिरन्वाहितं शुल्बं कृत्वा ' इत्युक्तम् ।

३ प्रागग्रे यूने प्रागग्रे सन्नहने बन्धनार्थायां रज्जौ उदगग्रं बर्हिराचिनोति बन्धनार्थं स्थापयतीत्यर्थः ।

४ उदगग्रे यूने सन्नहने प्रागग्रमिध्मं आचिनोति बन्धनार्थं स्थापयतीत्यर्थः ।

५ इध्मबर्हिर्बन्धनार्थानां यूनानां ग्रन्थीन् प्रत्यगवगूहति यूनेन गाढं बद्ध्वा यूनस्याग्रमूले सङ्कलय्य प्रदक्षिणमावेष्ट्य इध्मबर्हिषोरग्रभागं प्रोतयित्वा तयामूलमाग अवगूहति प्रेरयतीत्यर्थः ।

अष्टादशेध्मं परिधिवृक्षाणाम् ॥ ६२ ॥

अष्टादशकाष्ठमिध्मं कुर्यात् । परिधिवृक्षसम्बन्धिनः । परिधिवृक्षाः पलाशादय ॥ ६२ ॥

एकविंशतिं वा ॥ ६३ ॥

एकविंशतिकाष्ठं चेध्मं कुर्यात् । शाखान्तरात्२ । वा शब्दो विकल्पार्थः ॥ ६३ ॥

ततः परिधीनेके ३ ॥ ६४ ॥

तद्धैक इध्मस्यैवैतान्परिधीन्परिदधतीति वचनात् ॥ ६४ ॥

अपरिमितं ४ प्रणयनीयं त्रियूनम् ॥ ६५ ॥

अपरिमितं प्रणयनीयमिध्मं बहुतरं कुर्यात् । शाखान्तरात् त्रियूनं च कुर्यात् । अत्र केचिद्वृद्धौ काष्ठविवृद्धिमिच्छन्ति । तदयुक्तम् । न हीध्मकाष्ठप्रक्षेपस्य सामिधेनीनां च शेषशेषिभावः । काष्ठानि ह्यग्नीन्धनार्थानि । सामिधेन्यश्चेध्यमानाग्न्यनुवादिन्य । इध्यमानानुवादनाद्यदृष्टम् । न ह्यासां काष्ठप्रक्षेप प्रति करणत्वेन

१ अत्राष्टादशसंख्या उपलक्षणं तेन सामिधेनीविवृद्धौ काष्ठवृद्धिर्भवति, ह्रासस्तु न प्रकृतिवदित्युक्तं । अतएवापस्तम्बः 'सामिधेनी विवृद्धौ काष्ठानिविवर्धन्ते प्रकृतितो ह्रसमानासु प्रकृतिवत्' इति ।

२ तथा चापस्तम्ब "खादिरं पालाशं वैकविंशति दार्विध्मं करोति" इति ।

३ एके आचार्याः तत एकविंशतिसंख्याकाष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्येवोपादाय परिधीन् परिदधति, 'तद्धैक इध्मस्यैवैतान् परिधीन् परिदधाति' इति श्रुते. ।

४ अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयातिशयेनाधिकसंख्यकाष्ठकत्वम् । अतश्चतुर्विंशतिसामिधेनीको य इष्टकापशुस्तत्रसप्तविंशतिकाष्ठानि भवन्ति, भवन्ति च प्रणयनीयेऽष्टाविंशति संख्यानि ।

विधानम् । तस्मादग्न्यद्धया न काम्यविशिष्टिरिति । अभ्युपगम्यापि ब्रूम. । यद्यपि शेषशिषिभाव. स्यात् । तथापि शेषवृद्धौ शोषिणो वृद्धिरन्याय्यैव ॥ ६५ ॥

निरुप्याज्यं वेदो१सीति यजमानो वेदं करोति ॥ ६६ ॥

सूत्रे क्त्वाप्रत्ययादेशो ल्यप् कालार्थः । न ह्याज्यनिर्वापस्यात्र विधानम् । विहितो ह्यसावन्यत्र । वेदबन्धस्य कालज्ञापनायानूद्यते । यथा निरूप्याज्यं प्रातर्दोहनमन्यस्मिन्निति ॥ ६६ ॥

कुशमुष्टिं सव्यावृत्तं वत्सजानुं त्रिवृतं मूतकार्यं वा ॥ ६७ ॥

सव्यावृत्तं सप्रदक्षिणावृत्त वत्सजानुसदृश वेद करोति । अथवा त्रिवृतं वेणयाकार मूतकार्यं वा । वा शब्दो विकल्पार्थं ॥ ६७ ॥

पशुब्रह्मवर्चसान्नाद्यकामा यथासंख्यम् ॥ ६८ ॥

यथासंख्येन वेदाकारान् कुर्यु २ ॥ ६८ ॥

आ३मुष्मादिति कर्मसु तच्च ॥ ६९ ॥

---

१ अस्य मन्त्रस्य बहुयजमानके ऊहो भवति, तेन 'आवाभ्यां वेदो मया अस्मभ्य वेदा भूया, इति भवति प्रयोग, पित्र्यायां 'देवपितृभ्य' इति च ।

२ देवयाज्ञिकैरेतत्सूत्रद्वयमेकसूत्रत्वेन व्याख्यात, तथा च सूत्रस्वरूपमेव सम्पद्यते—कुशमुष्टिं सव्यावृत्त वत्सजानु त्रिवृत मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासख्यम्' पशुब्रह्मवर्चसान्नाद्यकामा यजमाना यथासख्य यथापदेशक्रमेण एवमाकार वेद कुर्यु । तत्र पशुकाम कुशमुष्टिं सव्यावृत्त प्रदक्षिणावृत्त वत्सजानु वेद करोति । ब्रह्मवर्चसकाम कुशमुष्टिं त्रिवृत करोति । अन्नाद्यकामो मूतकार्यमिति यथा सख्यशब्दार्थ ।

३ आ अमुष्मादिति च्छेद , यदाङा सयुक्त तदपि कर्तव्यमध्ये ज्ञेयम्, न त्वयधित्वेनेत्यर्थ ।

यत्राङ्प्रयोगः कर्मविषयः । यथा आप्रयाजेभ्य आ इडाया इति च तत्र तच्च कर्मप्रतिपत्तव्यम् । यदाङाभिसम्बध्यते । अभिविधौ कर्मविषय आङः प्रयोग इत्यर्थः ॥ ६९ ॥

## अन्तवचने च ॥ ७० ॥

तच्च कर्मप्रतिपत्तव्यम् । यथा शंय्वन्तं भवतीति ॥ ७० ॥

## प्रतिकर्मोद्धरणमप्रसङ्गे ॥ ७१ ॥

कर्मकर्मप्रत्युद्धरणमाहवनीयस्य कर्त्तव्यम् । न चेदन्यार्थमुद्धृतः सन्ननुवृत्तः ॥ ७१ ॥

## अपवृत्तकर्मा लौकिकोर्थसंयोगात् ॥ ७२ ॥

अपवृत्तं यस्मिन्कर्म स लौकिकः प्रतिपत्तव्यः । कुत एतत् । अर्थसंयोगात् । यदर्थमुद्धृतस्तेनार्थेन संयोगात् । लौकिकवद् द्रष्टव्यः । आहवनीयसंस्काररूपं कर्माभिनिर्वृत्युत्तरकालं गार्हपत्यं समवैति । कर्माभिनिर्वृत्तिमात्रार्थेव तस्य पृथक्क्रियेति ॥ ७२ ॥

## अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥ ७३ ॥

यो न कस्यचित्प्रकरणे उत्पद्यः न चारभ्य किञ्चिच्छ्रूयते वाक्यप्रकरणाभ्यामङ्गभावं नोपयातीत्यर्थः । स सर्वगुणो भवति । प्रकृत्यर्थो विकृत्यर्थश्च । यथा यस्य खादिरः स्रुवो भवतीति । अनारभ्यविहिता स्रुवे खादिरता प्रकृत्यर्था विकृत्यर्था च कुत एतत् । आश्रयित्वात् । स्रुवाश्रया हि खादिरता । स्रुवश्च प्रकृतौ विकृतौ च विद्यते ॥ ७३ ॥

तस्मादुभयार्थतेत्येवं प्राप्त आह—

## प्रकरणे चाविशेषात् ॥ ७४ ॥

च शब्दो वा शब्दार्थे । वाशब्दश्चावधारणे । प्रकरणे एव नियेशः । प्रकरणशब्देन प्रक्रियते यस्मिन् धर्मा इति प्रकृतिरुच्यते । अनारभ्यविधेर्निवेशो न विकृताविति । कुत एतत् । अविशेषात् । अविशेषेण हि प्रकृतितो विकृतौ चोदको धर्मान्प्रापयति । तस्मादनार-

भ्यविधेरपि प्रापितत्वात् । यद्यनारभ्यविधि' पुनः प्रापयेद्विरुक्तता दोषः स्यात् । न हि प्राप्तस्य सतः प्राप्तिसम्भवः । स्यादेतदेवम् । अनारभ्यविधिनैव पूर्वं प्रापिते खादिरत्वे पश्चाच्चोदकस्तद्वर्जमङ्गानि प्रापयिष्यत्येवं द्विरुक्तता दोषो न भवतीति । नैतदेवम् । वैकृतं हि प्रधानं चोदनासारूप्यात्प्रकृतिमपेक्षते नारभ्यविधिम् । चोदनासारूप्याभावात् ॥ ७४ ॥

दर्शनाच्च ॥ ७५ ॥

एवं च कृत्वा विकृतौ प्रयाजादीनां दर्शनमुपपद्यते । तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रां उदाघ्नं स्तिस्रः स्वयम्भृता गाथा गायतीति गाथागानविधिपरं वाक्यं प्रयाजान्दर्शयति । ते च प्रकृतिसव्यपेक्षत्वे भवन्ति । विकृतौ नानारभ्यविधिसव्यपेक्षायाम् । तस्मादनारभ्यवादस्य प्रकृतिगामित्वम् । रूपोदाहरणं खादिरत्वम् । अन्यप्येवमादय' । कार्यं तु विचारस्य ताण्डके काम्याः प्रतिपत्कल्पा अनारभ्याधीतास्ते यदि प्रकृतिविकृत्यर्थास्ततो विकृतावपि प्रयोगः । अनारभ्यवादानां तु प्रकृत्यर्थत्वे विकृतावप्रयोगो । न हि विकृतिरनारभ्यवादमपेक्षते, प्रकृतिसव्यपेक्षत्वात् ॥ ७५ ॥

वैकङ्कतानि पात्राणि१ ॥ ७६ ॥

भवन्तीति सूत्रशेषः ॥ ७६ ॥

खादिरः स्रुवः ॥ ७७ ॥

स्यात् ॥ ७७ ॥

स्फ्यश्च२ ॥ ७८ ॥

चशब्दात्खादिर एव ॥ ७८ ॥

पालाशी३ जुहूर्भवति ॥ ७९ ॥

---

१ "ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्ष" इति श्रुतेः ।

२ "खादिरः स्फ्य" इति श्रवणात् ।

३ हूयते अनया इति जुहूः, सा पालाशी कर्त्तव्या । " यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति श्रुते. ।

आश्वत्थ्युपभृद्ध्रुवस्येव ॥ ७९ ॥

वारणान्यहोमसंयुक्तानि[1] ॥ ८० ॥

यान्यहोमसंयुक्तानि तानि वारणानि भवन्ति। वैकङ्कतानि पारिशेष्याद्धोमसंयुक्तानि ॥ ८० ॥

बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिलाः

---

१ होमेन संयुक्तानि यानि न भवन्ति पात्राणि तानि वारणानि भवन्ति, यथा उलूखलमुसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याश्वतावदानाभ्युपवेषान्तर्धानकटप्राशित्रहरणषडवत्तग्रहयजमानासनहोतृषदनानि। तत्रोलूखलमुसले स्वायत्तप्रमाणे, कूर्चो बाहुमात्रः पीठाकारः, इडापात्री अरत्निमात्री मध्यसङ्गृहीता, पिष्टपात्री अति विपुला, पुरोडाश पात्री प्रादेश मात्री समचतुरस्राष्टाङ्गुलपरिमण्डलखातवती, शम्या प्रादेशमात्री, प्रादेशमात्र तीक्ष्णाङ्गुष्ठपर्वमुख श्वतावदानम, अग्निररत्निमात्रस्तीक्ष्णमुखः, उपवेषोऽरत्निमात्रः प्रादेशमात्रो वा हस्ताकृतिः, अन्तर्धानकटस्त्वर्धचन्द्राकारो द्वादशाङ्गुलः, षडवत्तं च उभयत्र खातवत्, आसनानि चारत्निमात्राणि वा प्रादेश मात्राणि वा प्रादेशपृथूनि, एतानि वारणानि। प्रसङ्गाद्वैकङ्कतानि प्रतिपादनीयानि, यथा प्रकृतौ वैकङ्कती ध्रुवा, अग्निहोत्रहवणी, अग्निहोत्र होमार्थः स्रुक्, सोमे ग्रहचमसद्रोणकलशादीनि, तत्रापि हविर्धानाधिषवणफलकपरिप्लवासम्भरणादीनि वारणान्येव, षोडशिपात्र खादिरम्, अश्वदाभ्यग्रहणपात्रमौदुम्बरम्, वाजपेये सप्तदश-सोमग्रहाः सुराग्रहाश्च भवन्ति, तेषां पात्राणि वारणान्येव, सुराग्रहपात्राणि तु मृण्मयान्यपि शाखान्तरे तथैवोक्तेः। एवमन्यदप्यूह्यम्। " खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृद्वैकङ्कती ध्रुवैतेषां वृक्षाणामेकस्य स्रुचः कारयेद्बाहुमात्र्योऽरत्निमात्र्यो वा प्राग्दण्डाः-बिला हंसमुख्यः स्फ्यशम्याप्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्ति " इत्यापस्तम्बोक्तेरिति दिक्।

समुखप्रसेका मूलदण्डा१ भवन्ति ॥ ८१ ॥

बाहुप्रमाणाः स्रुचः कर्त्तव्याः । प्रसृताङ्गुलिः पाणिरामणिबन्धनात्स उच्यते तन्मात्रं पुष्करं भवति ॥ ८१ ॥

अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः२ ॥ ८२ ॥

अङ्गुष्ठपर्वणो यावद्वृत्तं तावत्प्रमाणं पुष्करं भवति ॥ ८२ ॥

स्फ्योऽस्याकृतिरादर्शाकृतिः प्राशित्रहरणं चमसाकृति३र्वा ॥ ८३ ॥

भवति ॥ ८३ ॥

चात्वालोत्करावन्तरेण संचरः४ ॥ ८४ ॥

अर्थलक्षणं यत्सञ्चरणं तच्चात्वालोत्करावन्तरेण भवति ॥८४॥

प्रणीतोत्करावितिष्टिपु ॥ ८५ ॥

अर्थलक्षणमेव यत्सञ्चरण तदिष्टिषु प्रणीतोत्करावन्तरेण भ-

---

१ बाहुः प्रमाणमासां ता· बाहुमात्राः । पाणिः प्रमाणमस्य तत्पाणिमात्रम, पाणिमात्रं पुष्करं ( मुख ) यासां ताः पाणिमात्र पुष्कराः । स्वफ्प्रदेशो बिलं मुखं यासां तास्त्वग्बिलाः । प्रसिच्यते क्षार्यते अनेनेति प्रसेक' हंसमुखसदृशः प्रसेकः प्रणालिका यासा ताः हंसमुखप्रसेका· । मूले दण्डो यासां ताः मूलदण्डाः स्रुचो भवन्ति ।

२ अरत्नि प्रमाणामस्या सारत्निमात्रः । अङ्गुष्ठपर्वणोवृत्त, अङ्गुष्ठपर्ववृत्तम, अङ्गुष्ठपर्ववृत्तप्रमाणं वृत्तं पुष्कर मुख यस्य असावङ्गुष्ठपर्ववृत्तमुखः स्रुवो भवति ।

३ याज्ञिकदेवैरेकमेव सूत्रं त्रेधाविभक्तम्, तन्मते "स्फ्योऽस्याकृति." "आदर्शाकृति· प्राशित्र हरणम " "चमसाकृति वा " इति सूत्ररूपं भवति ।

४ अयं च सोत्तरवेदिकेषु वरुणप्रघासमहाहविपशुसोमेषु ज्ञेयः चात्वालस्यैष्वेव सत्त्वाद् ।

यति। अन्तरेण सत्त्वर इत्यनुवर्त्तते ॥ ८५ ॥

इदानीमिदं विचार्यते। श्रुतद्रव्याभावे किं द्रव्यान्तरेण कर्त्तव्यम्। उतनेति? । किं तावत्प्राप्तम्। सूत्रेणैव पक्षः—

चोदिताभावेनारम्भस्तत्सिद्धित्वात्तस्य ॥ ८६ ॥

चोदितस्य द्रव्यस्याभावे नारब्धव्यं तत्कर्म। कुत एतत्। तदेव हि साधनं तस्य कर्मणः श्रुतम्। अतो द्रव्यान्यत्वे कर्मणोन्यत्वं भवति। द्रव्यदेवतं हि कर्मणो रूपमिति। ॥ ८६ ॥

सत्यमेतदेव काम्ये। अथ नित्ये कथमिति[1]नित्येपि श्रुतद्रव्याभावे कर्मान्तरबुध्या अनारम्भे प्राप्त आह—

नियते सामान्यतः प्रतिनिधिः स्यात् ॥ ८७ ॥

नित्ये कर्मणि श्रुतद्रव्याभावे प्रतिनिधिनारब्धव्यं तत्कर्म श्रुतद्रव्यसदृशेन। कुत एतत्। उच्यते। व्रीहिभिर्यजेतत्यत्र नियममात्र व्रीहिश्रुति। न च नियमानुरोधेन यावज्जीवश्रुत्युपरोधः शक्यः कर्त्तुम्। अवश्यकर्त्तव्ये कर्मणि नियममात्रस्यैवानुपादानं युक्तरूपम्। तस्मात्प्रतिनिधिना तत्कर्म परिसमापनीयम्। यद्येवं कुत. श्रुतद्रव्यसामान्यत इत्युच्यते। व्रीहिभिर्यजेतेत्यनेन व्रीहिजात्युपलक्षितानां व्यक्तिविशेषाणामङ्गभावो विहितो भवति। न हि व्रीहिजात्या अमूर्त्तया दशाकपालाभिनिर्वृत्तिः शक्यते कर्त्तुम्। न च व्यक्तिविशेषाणां जातिशब्दादृते ऽन्यद्वाचकमस्ति। तस्माद्व्यक्तिविशेषा यथाप्राधान्यभूताः। तेन सदृशेषूपादीयमानेषु कियतामपि व्यक्तिविशेषाणामुपादानं कृतं भवति। तस्मात्साधूक्तं नियते सामान्यतः प्रतिनिधिः स्यादिति ॥ ८७ ॥

नित्ये प्रतिनिधिर्भवति काम्येपि प्रक्रान्ते प्रतिनिधिर्भवत्येव तद्दर्शयन्नाह—

आरम्भान्नियमः ॥ ८८ ॥

आरब्धं हि तत्कर्म आरम्भश्च समाप्तेर्निमित्त न च प्रतिनिधिद्रव्यमन्तरेण समाप्तिस्तस्य भवति। तस्मात्तत्रापि प्रतिनिधिर्भ-

---

[1] भाष्यमेण सूत्रेण नित्यकर्मविषयकविशेषस्य पश्यमाणत्वात् काम्यकर्मविषयकमेतत्सूत्रमिति भाव।

यत्येव१ ॥ ८८ ॥

दोषश्चासमाप्तौ स्यात्सामान्यात् ॥ ८९ ॥

अपिच । प्रक्रान्तस्य काम्यस्यासमाप्तौ दोषो२ भवति। तदपि हि नित्यैः समानं भवति । यथैव नित्यस्याकरणे शिष्टविगर्हणम् । एवं काम्यस्यापि प्रक्रान्तस्य असमाप्तौ शिष्टविगर्हणम् । ननु च शिष्टविगर्हणं नाम को दोषोऽस्ति । अस्ति दोषो येन शिष्टा विगर्हन्ते । अथापि नाम नास्ति दोषः । शिष्टविगर्हणमेव दुष्टमिति ॥ ८९ ॥

दर्शनाच्च ॥ ९० ॥

दर्शयति च द्रव्यान्तरेण समाप्तिम् । यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति । अभिषवेण च समाप्त्यभिधानम् ॥ ९० ॥

एवं दर्शने कृते तदाक्षिपति—

अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥ ९१ ॥

तत् दर्शनमन्यार्थं भवति यदन्यविधिपरे वाक्ये ऽन्यमर्थं ज्ञापयति । यथा कृष्णलहोमविधिपरे वाक्ये प्रयाजान्दर्शयति । न चेदमन्यार्थम् । कुत एतत् । पुनर्ग्रहणात् । सोमाभावे सति पुनर्द्रव्यान्तरमन्यदत्र विधीयते ॥ ९१ ॥

एवंस्थिते सत्युच्यते—

१ इदमत्रतत्त्वम्, द्रव्यान्यत्वेऽपि न कर्मान्यत्वम्, कर्मान्यत्वकारणभूतानां शब्दभेदादीनामभावात् । यथा वैश्रीप्रयोगवैशाखीप्रयोगयोरभेदः, उभयत्रापि दर्शपूर्णमासपदानुवृत्तेः । यथा वा शावलेयबाहुलेययोर्भेदेपि न गोत्वं भिन्नमेवमत्रापि व्रीहिनीवारभेदेऽपि न कर्मभेदः । एवञ्च श्रुतद्रव्यापचारे द्रव्यान्तराऽनुपादाने कर्मस्वरूपभङ्गभिया आरब्धं प्रतिनिधिनापि समापनीयमिति ।

२ "देवताभ्यो वा एष आवृश्चते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत न तेन देवताभ्य आवृश्चत" इति तैत्तिरीये निन्दाप्रायश्चित्तयोः स्पष्टं दर्शनात् आरब्धस्यावश्यं समाप्तिरिति प्रतिभाति। अतएव जैमिनिरपि षष्ठे "प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात्" इति सूत्रयाञ्चकार ।

## अन्यार्थं पुनर्ग्रहणम् ॥ १२ ॥

पुनर्ग्रहणमेवेदमन्यार्थम् । कोऽन्योऽर्थ इति चेत्, सोमाभावे यागस्यावश्यकर्त्तव्यत्वात्सुसदृशद्रव्यप्राप्तौ विसदृशेषु अपि पूतीकेषु व्यापारो वाक्यस्य । द्रव्यमात्रं तु प्राप्तमेव येन विशेषो नियम्यते । तस्मात्समाप्तिदर्शनमेवेदमिति ॥ १२ ॥

इदं श्रूयते । पयो व्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति तदभावे चिन्त्यते, किं प्रतिनिधिरत्र प्रसज्यते । उत न प्रसज्यते? ।

न प्रसज्यत इत्याह—

## व्रते प्रसङ्गो न नियमशब्दात् ॥ १३ ॥

व्रते प्रतिनिधिर्न भवति । येन नियमशब्दोऽत्र भवति । व्रतं हि येषामातोऽशनं भवतीति । एवकारश्रवणात् प्रतिनिधिव्युदासो न ह्यत्रान्यद्विहितं यद्व्युदस्यते । एवं स्थिते उच्यते । व्रते प्रतिनिधिः प्रसज्येत । न, न प्रसज्यत इति । कुत एतत् । यतो नाय नियमशब्दः अन्यार्थो ह्ययं इष्टायनस्तावकः । पुरा केवलमथोऽयं पनायत्कामयेत तदद्नीयादिति हि प्रकृत्य व्रतं ह्यं यास्यातोऽयनं भवतीति संस्तवोऽयम् ॥ १३ ॥

इदानीमिदं विचार्यते । श्रुतद्रव्याभावे प्रतिनिहिते द्रव्यान्तरे छागाभावे मेषे किं श्रुतद्रव्यशब्देनोपलक्षणम् । उत प्रतिनिहितद्रव्यशब्देनेति । किं तावत्प्राप्तम् । प्रतिनिहितशब्देनेति । शब्देन हि द्रव्यमभिधेयम् । न चाविपरिणतरूपः शक्नोति तदभिधातुम् । तस्माद्विपरिणाम इत्येवं प्राप्त उच्यते—

## शब्देऽविप्रतिपत्तिः ॥ १४ ॥

प्रतिनिहिते द्रव्ये श्रुतद्रव्याभिधायिनि शब्दे अविप्रतिपत्तिरविपरिणामः । अनूह इत्यर्थः । कुत एतत् । प्रतिनिध्युपादानं हि श्रुतद्रव्यबुद्ध्या क्रियते । न तु द्रव्यान्तरबुद्ध्या । यत्र वचनेन द्रव्यान्तरं विधीयते । यथा नैवारं चरुं[1] निर्वपेदिति तत्र द्रव्यान्तरबुद्धि-

---

१ उपलक्षणमिदम् " सारस्वती मेषी, ' ऐन्द्रं मेषम् ' ' ऐन्द्र मत्स्यम ' इत्यादीनां, अत्रहनत्र भवत्यूह इति ।

भवति । न चेह वचनमस्ति । तस्माद्भूयोवयवसामान्येन श्रुतद्रव्यमेवेदमिति कृत्वा प्रतिनिध्युपादानम् । अतः श्रुतद्रव्यशब्देनैवाभिधानम् ॥ ९४ ॥

यदि वचने सति द्रव्यान्तरबुद्धिर्भवति ततः सोमाभावे पूतीकानभिषुणुयादिति पूतीकानां वाचनिकत्वाद्वस्तु विपरिणाम इत्येवं प्राप्त आह—

## सोमेन जात्यभावात् ॥ ९५ ॥

सोमाभावे सत्यपि वचने सोमशब्देनैवोपलक्षणं कर्त्तव्यम् । न ह्यत्र द्रव्यान्तरबुद्ध्या पूतीकोपादानम् । द्रव्याभावे यागस्यावश्यकर्त्तव्यत्वाद्द्रव्यान्तरे प्राप्ते तद्गतविशेषनियमः क्रियते । तस्मात्सोमशब्देनोपलक्षणं कर्त्तव्यम् ॥ ९५ ॥

१पृषदाज्ये तर्हि वाचनिकत्वाद्विपरिणामोऽस्त्वित्येवं प्राप्त आह—

## आज्ये चादर्शनात् ॥ ९६ ॥

आज्ये चाविपरिणामः । कुत एतत् । अदर्शनाद्द्रव्यान्तरस्य । न ह्यत्र द्रव्यान्तरबुद्ध्या दध्युपादीयते । किं तर्हि आज्यसंस्कारार्थ । तस्मिन्सति पृषद्गुणकमाज्यं भवति । यदप्युच्यते । इयं वा इदं सर्पिश्चैव दधिचेति तद्गुणभूतस्यैव दध्नः प्रशंसार्थम्२ ॥ ९६ ॥

किञ्च—

---

१ अयमभावः, प्रकृतौ आज्यपदयुक्ता "देवान् आज्यपानावह" "देवानामाज्यपानां प्रियाधामानि" "देवा आज्यपा आज्यमजुषन्त" इत्यादयो मन्त्राः सन्ति, इदानीं तेषु देवा आज्यपानामित्यादिपदानां स्थाने "देवा पृषदाज्यपा" इत्यादयः शब्दाः प्रयोक्तव्याः; न वा? तत्र पूतिकतृणाभिषवणवदत्रापि भविष्यत्यूह; वचनेन विहितत्वादिति पूर्वपक्ष्याशयः ।

२ वस्तुतस्तु लोके पृषच्छब्दस्य चित्रगुणाबोधकत्वादत्रापि पृषदाज्येनेत्यस्य चित्रेणाज्येनेति भविष्यति बोधः तथा च सति चित्रतारूपगुणमात्रविधानेन वाक्यस्य चारितार्थ्ये जाते न प्राकृताद्न्यस्य कस्यचिद्द्रव्यस्य ग्रहणमिति कस्य स्थाने ऊहो भविता ।

पशौ मन्त्रवर्णात् ॥ ९७ ॥

पशौ हि मन्त्रवर्णो भवति स्वाहा देवान् आज्यपान् इति पृषदाज्यसाधनकत्वेऽपि सत्युच्यते ॥ ९७ ॥

किञ्च—

श्रुतेश्च ॥ ९८ ॥

एकवचनश्रुतिर्भवति । अथ पृषदाज्यं गृह्णातीति । यदि च दध्नः प्राधान्यं स्यात्तर्हि द्विवचनेन भवितव्यम् । न च तदस्तीति ॥ ९८ ॥

अथ यत्र वैकल्पिकं द्रव्यमुपात्तं नष्टं । यथा व्रीहिषु नष्टेषु किं व्रीहिसामान्येन प्रतिनिध्युपादानं । उत श्रुतद्रव्य यवा उपादेयाः? श्रुतद्रव्याभावे सति प्रतिनिधिरिष्यते न श्रुतद्रव्ये सतीति यवा उपादेया इति प्राप्त आह—

विकल्पे प्रवृत्तं कर्मान्तरत्वात्[1] ॥ ९९ ॥

यस्मिन्विकल्पे यत्प्रवृत्तं द्रव्यं तत्सामान्येन प्रतिनिध्युपादानं कर्तव्यम् । न श्रुतद्रव्यमपि यवा उपदेयाः । किं कारणम् । सर्वेषु वैकल्पिकेषु द्रव्येषु यजमानः स्वयमेवैकं साधनत्वेनाङ्गीकरोति । तत्र तदेव साधनं नान्यत् । अश्रुतसममेव हि तदिति । यदि तदप्युपादीयते । कर्मान्तरबुद्धिः स्यात् । न च सेष्यते । तस्मात्प्रक्रान्तद्रव्यसादृश्येन प्रतिनिध्युपादानमिति ॥ ९९ ॥

उक्तेन न्यायेन प्रतिनिहितद्रव्यनाशे तत्सामान्येन प्रतिनिध्युपादाने प्राप्त आह—

प्रतिनिधौ तत्कालात् ॥ १०० ॥

---

१ "सोमे न जात्यभावात्" इत्यत्र नकारस्य पृथक् च्छेदं कृत्वा तस्यात्रानुवृत्तिः कर्तव्या, यथश्च विकल्पे प्रवृत्तं यवादिकं न प्रतिनिधेयम्, कुत. ? उपादीयमानप्रतिनिहित द्रव्यसाहित्येन कर्मान्तरापत्तस्येति वा व्याख्येयम् ।

प्रतिनिधिद्रव्ये नष्टे न प्रतिनिधिसामान्येन प्रतिनिधिरुपादेयः किं तर्हि श्रुतमेव द्रव्यम्। न तदभावे तत्सामान्येन प्रतिनिधिरुपादेयः। कुत एतत्। तत्कालात्। स एव हि कालः प्रतिनिधेः यः श्रुतद्रव्याभाव इति। अतस्तस्मिन्नष्टे न तत्सामान्येन प्रतिनिधिरुपादातव्यः श्रुतद्रव्यमेवोपादेयमिति ॥ १०० ॥

अथ यत्र श्रुतं द्रव्यं अर्थाभिनिर्वृत्त्यसमर्थं विद्यते यद्विरादि। अर्थाभिनिर्वृत्तिसमर्थं च प्रतिनिधिद्रव्यम्। श्रुतद्रव्ये अर्थाभावः। प्रतिनिधिद्रव्ये चार्थाभिनिर्वृत्ति समर्थे श्रुतद्रव्याभावः तत्र किं श्रुतद्रव्याभाव उतार्थाभावस्तत्रैतदुच्यते—

अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात् ॥ १०१ ॥

तस्मिन्नर्थद्रव्यविरोधे यदर्थाभिनिर्वृत्तिसमर्थं तदश्रुतमपि प्रतिनिधिद्रव्यं उपादेयम्। कुत एतत्। अर्थाभिनिर्वृत्त्यर्थत्वाद्द्रव्यस्य येनार्थो न निवर्त्यते तत् श्रुतमपि सदश्रुतसममेव१ ॥ १०१ ॥

अथ यत्र गुणद्रव्यविरोधस्तत्रकथम्। यथा कृष्णानां व्रीहिणां दर्विहोम इति। अकृष्णा व्रीहयः सन्ति कृष्णाश्च नीवारास्तत्रैतदुच्यते—

गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् ॥ १०२ ॥

गुणद्रव्यविरोधे द्रव्यमुपादेयम्। न गुणस्तद्धि प्रधानेन युज्यते। कथं येन युज्यमानं यागमभिनिर्वर्त्तयति। अतः सन्निकृष्टं यागस्य द्रव्यं विप्रकृष्टो गुणः। अतः सन्निकृष्टविप्रकृष्टयोश्च सन्निकृष्टे सम्प्रत्ययः ॥ १०२ ॥

इत्येवं प्राप्ते आह—

२न समत्वात् ॥ १०३ ॥

नैतदेवम्। द्रव्यमेव प्रधानेन युज्यते न गुण इति। समम-

---

१ तदुक्तं षष्ठाध्याये तृतीये पादे जैमिनिना "अर्थ द्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात्" इति सूत्रेण।

२ मध्ये पूर्वपक्षोऽयम्।

तदुभयम् । द्रव्यमपि प्रधानयोग्यम्नानसामर्थ्याद्गुणोपीत्येवं प्राप्त उच्यते ॥ १०३ ॥

## गुणानुग्रहात् ॥ १०४ ॥

गुणेनानुगृहीतं द्रव्यमेव प्रधानयोगि गुणस्तु विशेषणं विशेष्यं द्रव्यम् । विशेषणविशेष्ययोश्च विशेष्ये सम्प्रत्यय इति न समर्थमेतत्[२] ॥ १०४ ॥

अधुनेदं विचार्यते । यान्येक प्रधानसम्बन्धीन्यङ्गकर्माणि किं तेषां क्रमविशेषेणानुष्ठानं उतानियमः क्रम प्रतीति ? । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

## कर्मणामानुपूर्व्यं न युगपद्भावात् ॥ १०५ ॥

अग्न्यन्वाधानादीनां कर्मणामानुपूर्व्यं नास्ति । यौगपद्येन हि तानि प्रधानापेक्षाया गृह्यन्ते । न चैषां क्रमनियामकं किञ्चित्कारणमस्ति । येन क्रमोवसीयते । तेनैकत्वात्कर्तुरवश्यं भाविनि क्रमे यः कश्चित् क्रम आस्थेयः ॥ १०५ ॥

## अर्थनिर्वृत्तेश्च ॥ १०६ ॥

अपिचैवं सति सुखेनैवार्थाभिनिर्वृत्तिर्भवति । इतरथा क्रमविशेषे आश्रीयमाणे विस्तरेण स्यात्तत्र प्रधानकालातिक्रमः स्यादिति ॥ १०६ ॥

## [३]स्याद्वानुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥ १०७ ॥

भवेद्वा क्रमनियमो नानियमः । श्रुतिरेव क्वचि तत्क्रमस्य नियामिका भवति । यथा द्वादशाहे । तेषां गृहपतिः प्रथमो दीक्षते ।

---

१ उक्तमेवसिद्धान्तं स्थापयति ।

२ अत एवाग्निहोत्रे पुत्रस्याया अग्निहोत्र्याः पायसोऽभावे पुनस्तस्वलक्षणं गुण हित्वा स्त्रीवत्साया अप्यग्निहोत्र्याः पयसा होमो भवति; भवति चार्द्राणां परिधीनामभावे शुष्कैरेव कार्यसिद्धिः ।

३ एवमङ्गानामनुष्ठाने क्रमनियमो नेति पूर्वपक्षे सिद्धान्तमाह ।

अथ प्रजानां दीक्षयस्यपोदूगातारमिति । पत्रमादिब्रह्मादीनां यजमानत्वात् प्राप्तास्तु दीक्षासु क्रमपरेयं श्रुति । तथा च । आश्विनो दशमो गृह्यते । त तृतीयं जुहतीति । अर्थाच्च क्रमनियमो गम्यते । यथा यथातवेयणयो । अन्यथा पुरोडाश एव न सिध्यति । पाठक्रमादपिच क्रमोवसातु शक्यते । द्विप्रकारात् श्रुतिपाठात् । मन्त्रपाठाच्च । विशिष्टेन क्रमेण पदार्थानां विधिपाठ । मन्त्राणामपिच तदभिधानक्रमो विशिष्टएव । ततैतच्छक्यते वक्तु येन क्रमेण पदार्थानामवगमस्तेनैवानुष्ठानमिति । इतरथा प्रतीतक्रमहानिरप्रतीतोपादानं चायुक्तमापद्यते । तस्मात्पाठक्रमादपि क्रमोवगम्यते ॥ १०७ ॥

## प्राकृतं च विकृतौ ॥ १०८ ॥

इतश्च पाठक्रमादपि क्रमोवसीयते । येन प्राकृत पदार्थजातं विकृतौ चोदकप्राप्तमन्यपरे वाक्ये तेनैव क्रमेणानुवदति । पितृयज्ञे उत्तरेण परिग्रहेण परिगृह्य परिस्मृज्याह प्रोक्षणीरासादायेत्यासादयन्ति । प्रोक्षणीरिध्म बर्हिरुपसादयन्त्येवमादि । स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति यज्ञोपवीतित्वविधिपरे प्राकृत क्रम दर्शयति । अपरेऽन्यथैतत्सूत्र वर्णयन्ति । प्राकृत च वैकृतञ्च यत्र कर्मणि इयवादेशसयुक्त भवति तत्र पूर्वं प्राकृतं कर्त्तव्य पश्चाद्वैकृतम् । न्यायेन ह्यचरितार्थत्वात्पूर्वं वैकृतमेव भवति । सूत्रप्रस्थानात्पूर्वं प्राकृतमिति । सूत्रस्य च यद्वाक्यमूलतानुमीयते । एव च कृत्वा पशावुत्तराघारमाघार्य पशु पूर्वं समनक्ति । प्रकृत च इयवादेशसयुक्त ध्रुवासमञ्जनम् । पशुसमञ्जन तु वैकृतम् । तदचरितार्थत्वात्पूर्वमेव प्राप्नोति । तेन पूर्वग्रहणा कुर्वन्नाचार्योमुमर्थं ज्ञापयति । ध्रुवासमञ्जनमेवात्र पूर्वं मा भूदिति । तथा ज्योतिष्टोमे आसाद्य हवी ऽ वि सम्मृज्यापउपस्पृश्य राजानमादाय प्रपद्यत इति श्रुति । तत्र सूत्रकारेणोक्तम् । आसाद्याज्यानि दक्षिणेन कृष्णाजिनमास्तीर्य तस्मिन्सोम निदधातीति । हवि सम्मर्शनारमालम्भनोदकोपस्पर्शनानि प्राकृत च विकृताविर्त्यनेनैव सिद्धानि ॥ १०८ ॥

## विरोधेर्थस्तत्परत्वात् ॥ १०९ ॥

अथ यत्र विरोध पाठक्रमार्थक्रमयोस्तत्र कथमिति । यथा सर्वे पर्णशाखया वत्सानपाकरोति तामाच्छिनत्त्युपिर्त्वेति पाठ । अ-

यस्तु नैवं निर्वेत्स्यते। वत्सापाकरणायैव हि शाखाच्छेदनम्। तेन पाठक्रमार्थक्रमयोरर्थक्रमो बलीयान्। तेनोक्तमाचार्येण विरोधेर्थपरत्वादिति। अर्थार्थो हि पाठः॥ १०९॥

## श्रुतिः क्रमादानुमानिकत्वात् ॥ ११० ॥

अथ यत्र श्रुतिपाठक्रमयोर्विरोधस्तत्र कथम्। यथा संस्थिते यज्ञे ब्राह्मणतर्पणं श्रुत्याभिहितम्। पाठात्तु प्राक् स्विष्टकृत्समनन्तरं प्राप्नोति। तत्रैतदाह। पाठक्रमाद्बलीयसी श्रुतिः। प्रत्यक्षत्वात् संस्थिते यज्ञ इति। पाठक्रमे त्वनुमानम्। नूनमेतेनैव क्रमेणानुष्ठानं येनैवं पाठ इति॥ ११०॥

अथ यत्र चोदनापाठस्य मन्त्रपाठस्य च विरोधस्तत्र कथम्। यथाज्याधिश्रयणे सोऽसावाज्यमधिश्रयतीत्येवेति पठित्वा तत्पुनरुद्वासयत्यूर्जेत्वेति पाठः। मन्त्रपाठे तु आज्याधिश्रयणमन्त्रप्रभृतिधर्मोसि विश्वायुरित्येवमादीन् बहून् पदार्थानुपक्रम्योद्वासनमन्त्र ऊर्जेत्वेति पठ्यते। यदि चोदनापाठो बलवान् अधिश्रयणसमनन्तरमुद्वासनम्। अथ मन्त्रपाठस्तत उपरिष्टादिति। किमत्र युक्तम्?—

## मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥ १११ ॥

मन्त्रपाठचोदनापाठयोर्मन्त्रपाठो बलवान्। कर्मणि क्रियमाणे प्रयुज्यते ह्यसौ मन्त्रः। अतश्च सन्निकृष्टो मन्त्रः। विप्रकृष्टो चोदनापाठ १॥ १११॥

ततश्च सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टे सम्प्रत्यय इत्येवं प्राप्त आह—

---

१ एतदुक्तं भवति, स्मारकक्रमेण तावदनुष्ठानक्रमः। न च मन्त्रे अनन्यार्थे सति ब्राह्मणस्य स्मारकत्वम्? अप्रयुज्यमानतया सामर्थ्याभावात्। न हि निर्वपामीति यन्निर्वपेदिति पदमुच्चारितमनुष्ठानौपयिकमनुष्ठेयप्रकाशनं करोति, किं तु सन्निधिमात्रतया प्रयोगबहिर्भूतं सत् अनेन वाक्येनेदं विहितमत एतत् करोमीत्येवमालोचनेन स्मारकं भवति। मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति देयवार्त्तिका-।

## न[1] समत्वात् ॥ ११२ ॥

नैतदेवं मन्त्रपाठो बलवानिति । सममेतदुभयम् । कर्मणि प्रयुज्यते मन्त्रः । चोदना तु कर्मणः प्रवर्त्तिकैव । अपि च । पूर्वं प्रवृत्ता चोदना विहिते हि पदार्थे पश्चान्मन्त्रः प्रयुज्यते ॥ ११२ ॥

## गु[2]णानां तु भूयस्त्वात् ॥ ११३ ॥

तु शब्दः पक्षव्यावृत्तौ । नैतत्समम् । मन्त्रपाठो बलवान्[3] । स हि प्रयुज्यमान उत्तरं पदार्थं बुद्धौ सन्निधापयति । नैव चोदनापाठः । पदार्थस्मारको हि मन्त्रः । तस्मान्मन्त्रपाठो बलीयान् ॥ ११३ ॥

क्रमनियमे कारणान्युक्तानि । तेषां च बलाबलमिदानीं विचार्यते । यत्र बहूनां प्रधानानां सह क्रिया तत्र किमेकैकस्य प्रधानस्य सकलं गुणकाण्डमावर्तयितव्यम् । उत प्रत्येकपदार्थेनानुसमय इति? । सकलं गुणकाण्डमेकैकस्य कर्त्तव्यमिति भ्रमः । न पदार्थानुसमयः । पदार्थानुसमये हि प्रथमस्य पदार्थे कृते द्वितीयस्य तस्मिन्नेव क्रियमाणे पूर्वस्य व्यवधानं स्यादित्येवं प्राप्त आह—

## तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात् ॥ ११४ ॥

तुल्यानां प्राधानानां सहप्रयोगे सति सामान्यं पूर्वं कर्त्तव्यम् । समानः पदार्थः सर्वेषां पूर्वः पूर्वः कर्त्तव्यः[4] । एवं क्रियमाणे आनुपूर्व्येण पदार्था युज्यन्ते । तत्तन्मन्त्राश्च । इतरथोत्तरपदार्थाभिनिर्वृत्त्युत्तर-

---

१ मध्ये पूर्वपक्षोयम् ।

२ सिद्धान्तयति ।

३ " तस्मादेतद्दविणाभ्यनूक्त " इत्यादिना श्रुतिरपि मन्त्राणाङ्गुणभूयस्त्व कथयति ।

४ तद्यथा, बहुषु हविःषु प्रथमं सर्वेषां विभस्मीकरणम्, ततः सर्वेषां पात्री स्थापनम्, ततः सर्वेषां तत्र व्यभिघारः, ततः सर्वेषां पात्र्युपस्तारः, ततः सर्वेषामुद्वासनम्, ततः सर्वेषां वेद्यामासादनम्, ततः सर्वेषामालम्भ इत्येव रूपः पदार्थानुसमयः कर्तव्य इत्यर्थः ।

काले पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात्। तस्मात्पदार्थानुसमयः । अथवानुपूर्व्ययोगादिति सकले गुणकाण्डे ऽपवृज्यमाने आनुपूर्व्येण क्रमेणायुक्तानि प्रधानानि भवन्ति । तत्र सहत्वप्रापकः प्रयोगवचनो बाध्यते । यत्पुनरुच्यते । पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे व्यवधानमिति । तत्सहत्वविधानेन परिह्रियते । आह च—

सकलं गुणकाण्डं चेदेकैकस्यापवृज्यते सहत्वप्रापको नैव प्रयोगवचनो भवेत् । यतः पदार्थानुसमये क्रियमाणे क्रमश्चानुगृहीतो भवति सहत्वञ्चेति । एवं च सति सप्तदशसु प्राजापत्येषु षोडशभिः पदार्थैः समानजातीयैर्व्यवधानमिष्यते । अनेनैव मुख्यक्रमप्रावृत्तिकावुक्तावेव भवतः । कथं । प्रथमस्य नियोगं कृत्वा द्वितीयादीनां नियोगे कृते यदि प्रोक्षणं द्वितीयतृतीयप्रभृतिक्रियते । षोडशभिरष्टादशभिर्वापदार्थै प्रथमस्य प्रोक्षणस्य व्यवधानं स्यात् । मुख्यक्रमेप्येवम् । काण्डक्रमं तु वक्ष्यत्युपरिष्टात् ॥ १४ ॥

उक्तन्यायेन चतुरोमुष्टीन्निर्वपतीत्यत्र मुष्टिनानुसमये प्राप्ते, अष्टौ कपालान्युपदधातीत्यत्र च कपालानुसमये प्राप्त आह—

## नैककर्मणि सम्बन्धात् ॥ १५ ॥

निर्वापकर्मणि न मुष्टिनानुसमयः कार्यः । चतुर्मुष्टिको निर्वापकः पदार्थः । पदार्थावयवो मुष्टिः । न चावयवेनानुसमयः कर्तव्यः । पदार्थेन ह्यनुसमयो भवति । पदार्थश्च कर्तव्यः । अवयवस्तु तादर्थ्येनैव क्रियते । संख्या मुष्ट्यश्च । मुष्टीनां निर्वापसम्बन्धः संख्यायाश्च । संख्यामुष्टिसम्बन्धे वैरूप्यलक्षणवाक्यभेदप्रसङ्गात् । तस्मादुभयोर्निर्वापसम्बन्धः । व्यवच्छेद्यव्यवच्छेदकभावस्त्वर्थो न

---

१ वैरूप्यं चैवम्, चतुरोमुष्टीन्निर्वपतीत्यत्र निर्वापं प्रति मुष्टीनामुपादेयत्वं विधेयत्वमङ्गत्वं चेति त्रिकम्, संख्यां प्रति च तेषामुद्देश्यत्वमनुवाद्यत्वं प्रधानत्वं चेति, एतत् परस्परविरुद्धं त्रिकद्वयं मुष्टीनामापद्यत इति ।

तु वाक्यावगतः१। तेन वाक्यभेदो न भवति२ ॥ ११५ ॥

एवं सर्वत्र पदार्थानुसमये प्राप्त आह—

ग्रहणसादनावदानप्रदानेषु तु वचनात् ॥ ११६

ग्रहणं सादनान्तम्। अवदानं प्रदानान्तं कर्त्तव्यम्। शाखान्तरात् ॥ ११६ ॥

एवं सर्वत्रावदाने प्रदानान्ते प्राप्त आह—

न द्रव्यभेदे गुणयोगादिति वात्स्यः ॥ ११७ ॥

द्रव्येषु भिन्नेषु देवतायामभिन्नायां नावदानं प्रदानान्तं कर्त्तव्यम्। यथा सप्तदशसु प्राजापत्येषु। स्विष्टकृद्यागे चानेकहविष्के। कुत एतत्। सर्वाङ्गानां प्रधानंप्रति गुणत्वेन योगात्। तद्यवदाने प्रदानान्तं क्रियते गुणानुरोधेन प्रधानावृत्तिः कृता स्यात्। न चासाविष्यते ॥ ११७ ॥

इदमन्यद्विचार्यते। कस्मिंश्चित्कर्मणि प्रक्रान्ते ऽपरिसमाप्त एव तिस्मिन् काल आयाते किं नित्यं कर्त्तव्यमुत न कर्त्तव्यमिति?। व्यवधानान्न कर्त्तव्यमित्येवं प्राप्त आह—

प्रवृत्ते नियतं दोषविशेषात् ॥ ११८ ॥

प्रवृत्ते कर्मणि नियतस्य काल आयाते नियतमेव कर्त्तव्यम्। अकरणे हि दोषः स्यात्। ननु पूर्वस्यापि व्यवधाने दोष एव। सत्यमेवं यत्र तु विशिष्टतरो दोषः। प्रधानस्यैवाक्रियेति। तत्र गुणभूतानां पदार्थानां व्यवधानमात्रम्। अपिचासम्बन्धेन व्यवधानेऽप्यदोषः। तस्मान्नियतमेव तावत्कर्त्तव्यम् ॥ ११८ ॥

---

१ ये चत्वारस्ते सुच्यः येसुच्यस्ते चत्वार इति परस्परव्यवच्छेद्यव्यवच्छेदकभावो ऽरुणैकहायनीन्यायेन द्रव्यस्य गुणावच्छेदकत्वेन गुणस्य च द्रव्यावच्छेदकत्वेनार्थाद्भवतीति भावः।

२ एवं 'अग्राकपालं निर्वपति' 'द्विरवद्यति' 'हिरण्यद्रुके' 'त्रि. पावयति' इत्यादावपि द्रष्टव्यम्।

३ "अथातो गृह्णात्येवायं वां मित्रावरुणेति" इत्यादिकं वचनमिति भावः।

ज्योतिष्टोमे उक्थ्यविग्रहाणां परतः १ षोडशी श्रूयते । तत्र च कालनियमोऽस्ति । समयाध्युषिते षोडशिनस्तोत्रमुपाकरोतीति । तद्यदि मानुपात्प्रतिबलादुक्थ्यविग्रहणामामुत्कर्षं स्यात् । षोडशिनोऽप्युपाकरणकालश्चायातस्तत्र किं षोडशिन उपाकरणं कर्त्तव्यम् । उतोक्थ्यविग्रहणानां परतः क्रमेणेति? । प्रवृत्तेनियतमिति न्यायेन षोडशिन उपाकरणे प्राप्त उच्यते—.

षोडशिनि त्वानुपूर्व्यभूयस्त्वात् ॥ ११९ ॥

षोडशिनि तु नैयम । क्रमेणोक्थ्यर्थविग्रहणानां परत उपाकरणं कर्त्तव्यम् । एवं गुणभूयस्त्वम् । इतरथा षोडशिनो वैगुण्यं उक्थ्यविग्रहाणां च । उत्कर्षे षोडशिन एवेति । तस्मादुत्कृष्यते षोडशी२ ॥ ११९ ॥

अग्निहोत्रादीन्युदाहृत्य चिन्त्यते । किं पाठक्रमणैषामनुष्ठानम् । उतानियमः क्रमस्यप्रतीतिति? । पाठक्रमेणानुष्ठानमिति ब्रूमः । पाठो हि नियामकः क्रमस्येत्युक्तम् । एवं प्राप्त आह—

अनियमः फलसंयुक्तेषु ॥ १२० ॥

प्रधानकर्मसु, कर्मं प्रत्यनियमः । कानिचिन्नियतकालान्येव पठ्यन्ते । कानिचित्कामनया क्रियन्ते । नचैषां परस्परेण सम्बन्धोऽस्ति । यथाङ्गकर्मणामेकप्रधानसम्बन्धः । यस्यैव निमित्तमायातं तदेय कर्त्तव्यम ॥ १२० ॥

पाठक्रमस्तर्हि किमर्थः?—

क्रमो विध्यर्थः कर्मण्यसम्भवात् ॥ १२१ ॥

विधानार्थः क्रमो नानुष्ठानार्थः । सर्वस्वारात्परे कर्मण्यसम्भ-

---

१ " तं पराञ्चमुक्थ्येभ्यो विगृह्णाति " इति वचनात् ।

२ तदुक्तं पञ्चमाध्यायस्य प्रथमपादान्त्याधिकरणे तन्त्ररत्ने " न ग्रहणक्रमानुग्रहार्थमुत्कर्षो विधीयते; किं तर्हि यागक्रमानुग्रहार्थम, तस्य च स्तोत्रं प्रति प्राधान्यमविवादम, अतस्तस्य यागाभ्यासस्य काले नाङ्गस्य स्तोत्रकालो बाध्यत इति युक्त एवोत्कर्ष इति " इत्यादिना ।

यात् । मरणकामस्यासौ विहितस्ततोऽनुष्ठानक्रमस्यासम्भव इति ॥ १२१ ॥

अवत्तस्यावदानस्य नाशे किं हविरन्तरमुत्पाद्यते । उतान्यत्तत एवावदीयते? । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

अवत्तनाशेऽन्यद्गुणानुग्रहात् ॥ १२२ ॥

अवत्तनाशेऽन्यद्धविरुत्पादयितव्यम् । कुत एतत् । गुणानुग्रहात् । एवं गुणानुग्रहः कृतो भवति । इतरथा गुणहीनेन यागः कृतः स्यात् । ये पूर्वस्मिन् हविषि गुणाः कृतास्ते ह्यवदाननिष्ठास्तद्विनाशाच्च विनाशमुपगतास्तस्माद्गुणहीनं तत् । न च गुणहीनेन याग इष्यते ॥ १२२ ॥

एवं प्राप्त आह—

न पूर्वशेषात् ॥ १२३ ॥

नैतदेवं हविरन्तरमुत्पादयितव्यम् । यतः पूर्वस्यैव हविषः संस्कृतस्य शेषो विद्यते । ननु द्व्यवदानविनाशेन गुणविनाशात् संस्काररहितं तदिति । नेत्युच्यते । उपभोगेन हि संस्काराणामपवर्गो भवति । नचोपभुक्तास्ते प्रक्षेपाभावात् । तस्मात्तत एवावदेयम्[1] ॥ १२३ ॥

अचोदितत्वाच्च ॥ १२४ ॥

नचैवं विधा चोदनास्ति । अवदाननाशे हविरन्तरोत्पत्तिः कार्येत्यतस्तत एवावदेयम् ॥ १२४ ॥

---

१ अयमभिप्रायः, पुरोडाशस्य यौ मध्यपूर्वार्धावयवौ तदुपादानफलरूपावयवभूतमवदानद्वयं यागसाधनम्, नष्टे च मध्ये पूर्वार्धावयवाविति पूर्वमफलरूपे पुरोडाशे यो मध्यावयवः पूर्वार्धावयवश्चावदानोपादानभूतः स एवावदानापेक्षयावयवी, तस्मिन्नवदानोद्धरणेन विनष्टेऽपि मध्यान्तरस्य पूर्वार्धान्तरस्य चावदानद्वयोपलक्षणत्वेन विद्यमानत्वात्तत एवावदेयम् । न चैवं सति कृत्स्नस्य मध्यपूर्वार्धावयवावदेयमिति वाच्यम् ? " मध्यादवद्यति " इत्येकदेशमात्रस्य वचनबोधितत्वात् न तु सकलस्य मध्यपूर्वार्धादिति तत्त्वम् ।

## स्विष्टकृद्वदानुपूर्व्ययोगात् ॥ १२५ ॥

अपि च । तत एवावदीयमाने स्विष्टकृद्देवतद्धविर्भवति स स्विष्टकृद्धवतीत्यर्थः । प्रधानावदानसमनन्तरं हि स्विष्टकृदित्यर्थवद्-घदानं भवति । यदि तदेव न गृह्यते स्विष्टकृदर्थमपि ततो न गृह्यते ततो हविष उत्पत्तिरनार्थिकैव स्यात् । न१ च सेष्यते ॥ १२५ ॥

इत्येवं प्राप्त आह—

## गुणहानौ तु शेषभावात् ॥ १२६ ॥

तु शब्दः पक्षव्यावृत्तौ । न तत एव पुनरवदेयम् । गुणहीनं हि तदित्युक्तमेवं ये तत्र संस्कारास्तेऽद्वयवदानानिष्टास्तद्विनाशाच्च विनाशमुपगतास्तस्मात्संस्कारहीनत्वान्न ततोऽवदेयम् । अपि च । मध्यात्पूर्वार्द्धाच्चावद्यतीति श्रुतिः । तदभावाच्च गुणहीनमेव तदिति । तस्माद्धविरन्तरोत्पत्तिः कार्येति२ । आह च—

संस्काराणां पुरोडाशद्वयवदानं प्रयोजनम् ।
तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः ॥

अपि च ।

गृहीतौ मध्यपूर्वार्धौ तौ च नष्टावुभावपि ।
अतः शेषस्य शेषत्वात्प्रधानत्वं न युज्यते ॥ १२६ ॥

नियते सामान्यतः प्रतिनिधिः स्यादित्युक्तमधस्तात् । तेन देवतादीनामपि प्रतिनिधाने प्राप्त आह—

## न देवताग्निशब्दक्रियाः परार्थत्वात् ॥ १२७ ॥

न प्रतिनिधेयान्येतानि । न ह्येतानि प्रतिनिधीयमानानि यदर्थं प्रतिनिधीयन्ते तत्कार्यं कुर्वन्ति । देवतायास्तावदैन्द्रयागे तदस्मरणे यद्यग्निः प्रतिनिधीयते । न तत्कार्यं करोति । ऐन्द्रयागनिबन्धनं यदपू-

---

१ शेषात्तु प्रधानार्थेऽवदीयमाने स्विष्टकृदर्थमपि ततोऽवदीयेत एवेति पूर्वहवि स्विष्टकृद्भवतीति पूर्वपक्षे गुण इति द्वयम् ।

२ इदमुक्तं भवति, कृत्स्नस्य हि पुरोडाशस्य मध्यदेशोपरितनाङ्गुष्ठपर्वमात्रभागोऽवदानम्, अन्यस्त्विडादिशेषकार्यार्थः अतो न तस्य हविष्ट्वम्, यस्य तु हविष्ट्वं नासौ विद्यत इत्यवश्यं हविरन्तरमुत्पादनीयम् ।

र्घम न तदाग्नेयेन साध्यते१ । अग्नेरप्याहवनीयादेरभावे यद्यन्यन्तरं प्रतिनिधीयते । नाहवनीयकार्यं करोति । अन्यद्धयदृष्टमाहवनीयस्याधिकरणत्वे अन्यदन्यन्तराधिकरणत्व इति । शब्दो मन्त्रः । सोपि मन्त्रान्तरस्य कार्यं न वर्त्तते । न हि पेषणमन्त्रः प्रथन प्रकाशयति । क्रिया द्विप्रकारा अदृष्टार्था दृष्टार्था च । सा च प्रतिनिधीयमाना क्रियान्तरकार्यं न करोति । न हि पेषणमवघातकार्ये वर्त्तते । अदृष्टार्थायामपि क्रियायामभिधीयते । न हि प्रयाजाअनुयाजकार्ये वर्त्तन्ते । न चानुयाजाः प्रयाजानाम् । प्रतिनियतानि ह्यदृष्टानीति ॥ १२७ ॥

## कामं देवताम् ॥ १२८ ॥

योग्निशब्दक्रियां प्रतिनिधत्ते स कामन्देवतामपि प्रतिनिदध्यात् । अग्निशब्दादीनामप्रतिनिधेयत्वार्थमिदमुक्तम् । येन देवताप्रतिनिधातुं नैव शक्यते । न ह्याग्नेये इन्द्रस्य देवतात्वम् । चोदनालक्षण हि तत् । तेनान्यशब्दान्यदेवतैव न भवति । अचोदितत्वात्॥ १२८ ॥

## प्रतिषिद्धं प्रत्यवायात् ॥ १२९ ॥

निवर्त्तते । यत्प्रतिषिद्धं न तत्प्रतिनिधेयम् । यथा श्यामाकचरौ कोद्रवचरटाः । मोद्गे चरौ माषाः इति । प्रतिनिधित्वेन हि निषेधो भवति । अयज्ञिया तु वै कोद्रवचरटाः अयज्ञिया माषा इति । प्रतिनिधित्वेनायं प्रतिषेधः२ । प्रतिषेधविध्यतिक्रमे च प्रत्यवायः॥१२९॥

---

१ एवं च गत्यभावाद्यागस्यापि लोपः, न हि त्यागमात्रं यागः किन्तु देवतोद्देशेन त्यागः, तेनासत्यां देवतायां प्रधानस्यैव यज्ञार्थस्य स्याल्लोप इति ।

२ तदुक्तम्, 'व्रीहिर्यवो वा श्यामाको नीवारो वा हविर्भवेत् । वेणुयवा मसूरं वा शाकं मूलं फलं जलम् । सत्यं वा हविरेतेषु यथासम्भवमाचरेत् । प्रतिनिध्यन्तरवत्सत्यं विज्ञेय हविरत्यये । प्रधानदैवतादेशात् सन्त्यजेत्सत्यमात्मनः । अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमात्रकम् । न ग्राह्यं सर्वथा माषवरकोद्दारकोद्रवम् । यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः । ओषधीः परिगृह्णीयादणुकोद्रववर्जिताः । प्राग्वाणां वा भवेत् ग्राम्यमारण्यानामरण्यजम् । यवाभावे तु गोधूमास्तदो वेणुयवादय' इति ।

## स्वामी फलयोगात्१ ॥ १३० ॥

स्वामी यजमानः । यः स्वद्रव्यपरित्यागेन फलं साधयति तस्य यद्यन्यः प्रति निधीयते स एव तत्कर्मफलेन युज्यते न पूर्वः । अतो न तस्यार्थे वर्त्तते । तस्मात्स्वामिनोऽप्यप्रतिनिधानम् ॥ १३० ॥

एवं सर्वत्राप्यप्रतिनिधाने प्राप्त आह—

१ "स्वामी फलयोगात्" नेत्यनुवर्तते । स्वामी यजमानो न प्रतिनिधेयः । मृते तावत् क पुरुषान्तरं प्रतिनिदध्यात्, को वाध्वर्य्वादीन् प्रवर्तयेत् । स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्तुः फलं सिध्यति । यदि तु प्रतिनिहितो दक्षिणादान द्रव्यत्यागं च करोति; तदा तस्य सम्यक्फलसम्बन्धान्मुख्य एव स्वामी स्यान्न प्रतिनिधिः । पत्नीस्वस्वतन्त्रा मृते पत्यौ पुरुषान्तरं प्रतिनिधाय प्रयोक्ष्यतीत्यनाशङ्कनीयमेव । प्रोषिते अन्यत्र व्यापृते वा यजमाने ये तावत् क्रत्वर्था आज्यावेक्षणादयः तेषु यथा समाख्यमध्वर्य्वादय एव कर्तारो विद्यन्त इति न प्रतिनिधिना कार्यम् । पुरुषसंस्काराणां च ऋत्विग्वरणादीनां क्रत्वर्थत्वात् विनापि यजमानेन नास्ति वैगुण्यम्; पत्न्या अपि तदनुष्ठानसम्भवात् । यानि च ब्रह्मचर्यादीनि फलं प्रति योग्यतायाः कारणानि तानि बहिरवस्थिते नापि यजमानेन क्रियमाणानि क्रतोरुपकारकाण्येव । तस्मात् वेदबन्धनाज्यावेक्षणादावध्वर्य्वादेर्विद्यमानत्वादितरत्र ब्रह्मचर्यादावसम्भवात्प्रतिनिधेरनुपपत्तो यजमानप्रतिनिधि. । कुतः ? फलयोगात् । न हि पुरुषान्तरेण क्रियमाणानि ब्रह्मचर्यादीनि यजमानस्य फलयोग्यतां सम्पादयन्तीत्यसम्भवः प्रतिनिधः । तस्मान्न प्रवासादिनापचरिते स्वामिनि तत्स्थाने स्वाम्यन्तरं प्रतिनिधेयमिति । ननु पत्न्यां मृतायां किमस्ति प्रतिनिधिरुतनेति ? नायमस्याधिकरणस्य विषयः । तदापि हि यदा तावत् 'भार्यायै पूर्वमारिण्यै दत्वाग्नीनन्त्यकर्मणि' इत्ययं पक्षः समाश्रीयते तदाऽन्यभार्यादेवानधिकारः सिद्धः । यदा तु नायमयं पत्न्यै दत्वा तदाप्याचारप्रामाण्यादपत्नीकस्य दर्शपूर्णमासाद्यनुष्ठानम् । अग्निहोत्रमात्रं तु वचनादनुष्ठीयते । तदाऽन्यपत्नीकोऽप्यग्निमाहरेदिति वचनात् । वचनान्नास्ति पत्न्याः प्रतिनिधिरिति तत्परत्व इति देयपाक्षिका. )

## गुणेषु प्रतिनिधिः परार्थत्वात् ॥ १३१ ॥

पात्रासादनाद्याज्यावेक्षणादिषु गुणपदार्थेषु स्वाम्यपिप्रतिनिधीयते । कुत एतत् । परार्थो ह्यसौ । न तत्र प्रधानवत्स्वार्थं साधयति । तस्मात्क्रत्वर्थाभिनिर्वृत्तये स्वाम्यपि प्रतिनिधीयते ॥ १३१ ॥

## सत्रेषु तु श्रुतेः ॥ १३२ ॥

सत्रेषु पुनः स्वामी श्रवणादेव प्रतिनिधीयते । अथ यदि संदीक्षितानां कश्चित्प्रमीयते तस्य यो नेदिष्ठो स्यात्तमुपदीक्ष्य तेन सह यजेरन्निति श्रुतिः१ ॥ १३२ ॥

## स तद्धर्मा कर्मयोगात् ॥ १३३ ॥

स नेदिष्ठो चिन्त्यते । यजमानधर्मैर्युज्यते । न युज्येत इति? । अयजमानत्वान्न युज्यत इत्येवं प्राप्ते ब्रूमः । स तद्धर्मा स नेदिष्ठो तद्धर्मा स्यात् । कुत एतत् । कर्मयोगात् । यजमानकर्मणा हि तस्य योगस्तद्धर्मसंस्कृतेन तत्कर्मानुष्ठानं कृतम् । अयमपि तद्धर्मसंस्कृत एव करिष्यतीति२ ॥ १३३ ॥

इदं विचार्यते । किं सत्राणि ब्राह्मणानामेव भवन्त्युत त्रयाणामपि वर्णानामिति? वैदत्वात्त्रयाणामपि प्राप्त आह—

## सत्राणि ब्राह्मणानामृत्विक्श्रुतेः ॥ १३४ ॥

ब्राह्मणानामेव सत्राणि न क्षत्रियवैश्ययोरिति । कुत एतत् । ऋत्विक् श्रवणात् । येऽऋत्विजस्ते यजमाना इति श्रुतिः । न चान्त्रिय-

---

१ काम्यमपि यत् प्रारब्धं तदवश्यं समापनीयमित्युक्तम्, आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् । अतो यद्यपि 'ये यजमानास्त ऋत्विज' इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वात् एकशब्दोपात्तयोश्च स्वामिकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात् स्वामिभिरेवार्त्विज्यं कर्तव्यम् । तथापि स्वामिगता सप्तदशादिसंख्या तदङ्गम् । तया विना च वैगुण्यम् । अतस्तत्सम्पादनाय पुरुषान्तरं प्रतिनिधेयमिति भावः ।

२ तथाच " सप्तदशावराः सत्रमासीरन् " इति शास्त्रमनुगृहीतं भवति, इतरथा सप्तदशाः षोडशैवेति शास्त्रबाधः स्यात् ।

ञो यजमाना भवन्ति । परकीये कर्मणि यः प्रवर्त्तते स ऋत्विगित्युच्यते । तेनानेन प्रकारेण ऋत्विजां यजमानसंस्कारा विधीयन्त इति गौण्या वृत्त्या एवं ऋत्विजां यजमानत्वं भवति । एवं च सति यजमानसंस्कारेभ्यो ऽदृष्टपरिकल्पनम् । तेनान्यथा वर्ण्यते ऋत्विक्शब्देनार्त्विजीनान्पदार्थाननूद्य तत्कर्तृत्वेन यजमानविधानम् । एवं दृष्टार्थता भवति । प्रत्याम्नानाच्च ऋत्विजो निवर्त्तन्ते । न त्वेवमपि ऋत्विक्शब्देन गौण्या वृत्त्या तत्कर्माभिधानम् । सत्यमेवम् । इतरस्मिन्पक्षे गौणीवृत्तिरदृष्टकल्पना चेति । तस्मादार्त्विकपदार्थेषु यजमानानां कर्तृत्वेन विधानम् । एवं सति । येन क्रियमाणा आर्त्विजीनाः पदार्थाः सगुणा भवन्ति तस्यैवाधिकार इति । तस्माद्ब्राह्मणानामेवाधिकारः सत्रेषु ॥ १३४ ॥ *

## एककल्पानामवैगुण्यात् ॥ १३५ ॥

तानि चैककल्पानां भवन्ति । एकः कल्पो येषां तनूनपाद्याजित्वं नाराशंसयाजित्वं वा तेषां सत्रेऽधिकारः । एवमवैगुण्यं भवति[1] ॥ १३५ ॥

यद्येवं तुल्यप्रमाणानां भवन्तु । एवमपि हि श्रूयते । यजमानसम्मितौदुम्बरी कार्येति । यस्यैव यजमानस्य प्रमाणं नोपसंह्रियते तस्यैव वैगुण्यं स्यादिति । एवमाशङ्कित आह—

## न परार्थत्वात् ॥ १३६ ॥

नातुल्यप्रमाणकैर्वैगुण्यं भवति । परार्थो हि यजमानोऽत्र न तनूनपाद्याजित्ववत्स्वार्थता । तत्र तनूनपाद्याजिनां नाराशंसेन वैगुण्यं नाराशंसानां च तनूनपातेनेति । इह पुनर्न तथा । इह यजमानसम्मितौदुम्बरी कार्या सा च येन केनचिद्यजमानेन सम्मि-

---

१ अयमर्थः, वसिष्ठानां नाराशंस एव प्रयाजः, तद्युक्त एव क्रतुः फलसिद्धये प्रयोग्यो भवति । एवं तनूनपायुक्त एवेतरेषाम् । अत एककल्पानामेव सत्राधिकारो न भिन्नकल्पानामिति सिद्धम् ।

ताभवतीति । तस्माद्वैषम्यं तनूनपातेनेति१ ॥ १३६ ॥

वैश्यराजन्ययोर्गार्हपते ॥ १३७ ॥

यथार्त्विज्येषु पदार्थेषु क्षत्रियवैश्ययोरनाधिकारः । गार्हपते तर्हि पदार्थेऽधिकारोऽस्त्विवत्येवमाशङ्किते अथानन्तरसूत्रारम्भेति प्रतिषेधमपशृण्यते । गार्हपतेऽपि पदार्थे वैश्यराजन्ययोर्नाधिकारः । कुत एतत् । विषमो हि तयोर्ब्रह्मसामकल्पः । बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात् । पार्थुरश्मं राजन्यस्य । रायोवाजीयं वैश्यस्येति । तेनेतरेणेतरस्य वैगुण्यमितरस्य चेतरेणेति । तस्माद्गृहपतित्वेनापि वैश्यराजन्ययोर्नाधिकारः ॥ १३७ ॥

प्रक्रान्तेषु सत्रेषु तद्विषयमेव चिन्त्यते । अस्ति२ सहस्रसम्व-

---

१ नन्वेवमग्नीनामपि परार्थत्वाद्यस्य कस्य चिदाग्निषु साधितं कर्म सर्वेषां फलसाधकं भविष्यतीत्यनाहिताग्नीनामप्यधिकारः सत्रेषु भवतीति प्राप्ते उच्यते । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यस्य प्रकृतित्वप्राप्तेः 'य एतेनानिष्ट्वा' इति वचनादकृतदर्शपूर्णमासज्योतिष्टोमानामनाहिताग्नीनां नास्ति सत्रेष्वधिकारः । तथाग्न्योऽभ्याधानगतात्मनेपदादन्याधातॄणां न कार्यसिद्धौ पर्याप्तत्वमित्यनाहिताग्नीनामनधिकारः । आदधीतेत्यात्मनेपदाद्धि आधातुरेवाधानफलेन भवितव्यम्, कर्मयोग्यता चाग्नीनां फलम्, अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति । यजमानेन सम्मितौदुम्बरीकार्येति तु शास्त्रार्थो येन केनचिदपि प्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ।

२ पञ्चविंशति ब्राह्मणे श्रूयते, 'पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशा पञ्च पञ्चाशतः सप्तदशा पञ्च पञ्चाशत एकविंशा विश्वसृजां सहस्रसंवत्सरम्' इति । तत्र सन्देहः, किमयं सहस्रसंवत्सरशब्दो मुख्यः उत गौणः ? यद्यपि मुख्यस्तदापि, किं मनुष्यव्यतिरिक्तानां स्वतः सहस्रायुषां गन्धर्वादीनामधिकारः; उत मनुष्याणामेव रसायनाभिप्रविन्दादिसम्पादितसहस्रायुषाम् ? अथवा कुलकल्पः ? अथवा मानुष्याणाम् ? । अथवा विश्वसृजामयनं कुर्वतां सहस्रायुषम् ? । अथवार्धतृतीयशतानां यजमानानामधिकारः ? । यद्यपि गौणत्वम्, तदापि किं मासेषु सम्वत्सरशब्दः उत द्वादशाहेषु; उत दिवसेषु ? इति पक्षाः । तत्र प्रथमं पक्षं तावदाह ।

त्सरं सत्रं किं तन्मनुष्याणां भवति केन चित्प्रकारेण । उत न भव-
तीति ? किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

सहस्रसंवत्सरममनुष्याणामसम्भवात् ॥ १३८ ॥

अमनुष्याणामिति पर्युदासे सति देवानां स्यात्, ते च पूर्वं निराकृता आरम्भसामर्थ्यादित्यत्र, तस्मात्प्रसज्यः प्रतिषेधार्थता वर्ण्यते। अमनुष्याणामिति । मनुष्याणां न भवतीत्येतदुक्तं भवति । तथा- चोत्तरसूत्रे मनुष्यविषयैवाऽनुज्ञा स्याद्देहानित्यत्वादिति । किमिति मनुष्याणां न भवति । तदायुष्ट्वस्यासम्भवात् । न हि सहस्रायुषो मनुष्याः सन्ति१ ॥ १३८ ॥

२स्यादेहानित्यत्वात् ॥ १३९ ॥

भवेद्वा सहस्रसंवत्सरं मनुष्याणामेव । कुत एतत् । देहानि- त्यत्वादिति । न हि नियतपरिमाणं मनुष्याणामायुरिति । कश्चि- च्छतं वर्षाणि जीवति । कश्चिदधिकतरमपरिमितायुषो मनुष्या इति ॥ १३९ ॥

३तस्य च कार्यत्वात् ॥ १४० ॥

क्रियते ह्यायुरायुषः प्रापकेण कर्मणा । यथा मित्रविन्दया धी- रग्निमित्रायुः कामस्येति । मित्रविन्दया आयुर्भवतीति गम्यते । तथा च काठके आयुःकामस्यामृतवदिति ॥ १४० ॥

---

१ अतः श्रुतिवचनादमनुष्याणां गन्धर्वादीनामधिकार इति भावः ।

२ गन्धर्वादीनामनधिकारित्वस्य पूर्वं स्थापनात् 'यमगे मन्द- न' इत्यादिना मनुष्याणामेव देवतादिप्रसंगात; शास्त्रेण वर्षादिना- नुष्ठानकर्तृत्वाच्च मनुष्याणामेवाधिकार इत्याशयवान् आह ।

३ ननु मनुष्यदेहस्यानित्यत्वेऽपि सहस्रायुष्ट्वं तेषां कथं सम्भव- तीत्यत आह ।

१नासम्भवात् ॥ १४१ ॥

न हि तत्प्रापकेण कर्मणा सहस्रायुष्ट्वं भवति २। प्रायशः शतायुष्ट्वमेव मनुष्याणामनूद्यते। शतायुर्वै पुरुष इति ३ ॥ १४१ ॥

शास्त्रसम्भवादिति भारद्वाजः ॥ १४२ ॥

अस्ति हि शास्त्रं आयुषो द्विवृद्ध्यर्थं मित्रविन्दया आयुष्कामो यजेतेति। न च तत्रायुषः परिमाणमुक्तम्। भविष्यति कश्चित्कर्माभ्यासेन सहस्रायुरिति४ ॥ १४२ ॥

नादर्शनात् ॥ १४३ ॥

नैतदेवम्। सहस्रपरिमाणं आयुः कर्मणा क्रियत इति। नैवंविधं वाक्यमस्ति। आयुर्दीर्घं भवतीत्येतावद्गम्यते। न च दृश्यन्ते सहस्रायुषो मनुष्याः। कथं तर्ह्यायुःप्रापकाणि कर्माणि विहिता-

---

१ नन्वेवं रसायनैर्मित्रविन्दादिभिश्चायुःप्रापकैः कर्मभिश्च मनुष्या अपि दीर्घमायुः प्राप्स्यन्तीत्याशङ्क्याह।

२ अयमभिप्रायः, न हि रसायनादेः सहस्रायुष्ट्वस्य च सम्बन्धो दृष्टचर, नापि रसायनादीनां तथाविधं सामर्थ्यं दृष्टं येन मनुष्याः सहस्रं वर्षाणि जीवेयुः, परं जाठरोऽग्निरभिवर्धते वलीपलितादयो नश्यन्ति स्वरवर्णमेधादीनां जननं भवतीत्येतावदेव कल्पयितुं शक्यते न सहस्रायुष्ट्वम्।

३ ननु शतान्यायूंष्यस्येति विग्रहः करिष्यते? नैवम्, न हि द्विवचनबहुवचनान्ताभ्यां समास इष्यते 'प्रमाणाभावात् अभिधानसामर्थ्याच्च। नन्वेवमकृतेऽपि प्रमाणभावात्तेन कथं विग्रहः? उच्यते, एकत्वं जात्यपेक्षं प्रातिपदिकानि हि जातिरेवेति। यद्वा जातिराश्रयमन्तरेणानुपपद्यमाना एकं तावदाश्रयमाक्षिपतीत्येकत्वसिद्धिरिति दिक्।

४ ननु 'शतायुर्वै पुरुष' इत्यनेन विरोध? तस्य शतसायकत्वाद्विति गृहाण।

नि । उच्यते । अपमृत्युनिरासार्थानि तानि । अपमृत्युनापि मरणं भवति । अथर्वणे च पठ्यते । एकशतमपमृत्यूनामिति । तेनैकं परमायुस्तदुल्लङ्घनं कर्मणापि न शक्यते कर्त्तुम् । तस्मादपमृत्युजयार्थान्यायुः प्रापकाणि कर्माणि। तथा चाह। मर्त्याः पितरः पुरा ह्यायुषो म्रियन्ते यस्तद्वाधिकं इति । परमायुषः पूर्वमपि अपमृत्युना मरणं दर्शयति । तथा चापपुनर्मृत्यु जयतीति सर्वमायुरेत्यादिति । तथा च मानवे कथं मृत्युः प्रभवतीत्युक्त्वा । अनभ्यासेन वेदानामाचारस्य तु वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसतीत्याह । अपमृत्युनापि मरणं भवतीत्यमुमर्थं ज्ञापयति । अतः सहस्रायुष्ट्वस्यासम्भवादिरयुक्तम् ॥ १४३ ॥

एवं स्थिते इदमुच्यते—

कुलसत्त्रमिति[1] कार्ष्णाजिनिः ॥ १४४ ॥

यजमानकुलीनाः परिसमापयिष्यन्त्येतत्सत्रम् । तच्च पैतृकरिक्थन्यायेन । न ह्यत्रान्यागतिरस्ति ॥ १४४ ॥

[2]साम्युत्थान[3]मिति लौगाक्षिः ॥ १४५ ॥

कार्ष्णाजिनिपक्षनिराकरणार्थमेतत्सूत्रम् ।कुलसत्रं कैश्चिदारब्धं कैश्चित्समापयिष्यन्ति । न चाययथात्फलमिष्यते । यथैवं यदं

---

१ कुलस्य पितृपुत्रपौत्रादेः सत्रं कुलसत्रमिति विग्रहः ।

२ वस्तुतस्तु 'शास्त्रफलं प्रयोक्तरि' इति न्यायात् सफलानुष्ठातृणामेव फलं नैकदेशानुष्ठातृणाम् । न च कुलसत्रे एवेन सफलं कृतम् । अतो विफलमनुष्ठानं स्यात् । न च तदुक्तमिति चतुर्थः साम्युत्थानपक्षोऽस्त्वित आह ।

३ सामिशब्दोऽर्धार्थस्यार्थे, अर्धसमाप्ते सत्रे उत्थानम् 'त्यागः साम्युत्थानमिति विग्रहः, 'सामित्यर्धे जुगुप्सिते' इत्यमरोक्तेः ।

साम्युत्थानमेव १ सर्वंथैतदपि नोपपद्यते । अत आह ॥ १४५ ॥

अन्हां वा शक्यत्वात् ॥ १४६ ॥

अन्हां वैतत्सहस्रमङ्गीकर्त्तव्यम् । न संवत्सराणामशक्यत्वात् । मुख्यार्थासम्भवे च गौणीवृत्ति राश्रीयते । तेन संवत्सरशब्दो

---

१ वस्तुतस्त्वयमप्यनुपपन्न एव, असमाप्तात् कर्मण फलानुपपत्तेः । तर्हि सत्त्रविधायकवचनबलादेव सत्रिणां दीर्घायुर्भविष्यतीति पञ्चमः पक्षोऽस्तु ? । मैवम् । न ह्यस्य वचनस्य सोऽर्थः सम्भवति । तद्वाचकपदाभावात् । न च कल्पयितुं शक्यते, सम्भावितायुष्काणामपि सत्त्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्सत्त्रविधिबलादायुर्वृद्ध्यदर्शनात् । तर्हि ' पञ्च पञ्चाशता ' इत्यस्य पुरुषपरत्वमङ्गीकृत्य सार्धद्विशतानां पुरुषाणामधिकारेऽभिहिते सम्वत्सरचतुष्टयेन सहस्रसम्वत्सरत्वं सम्पद्यते । यत एकोऽपि त्रिवृत्स्तोमकयागयुक्तः सम्वत्सर. पञ्च पञ्चाशत्संख्यैर्यजमानैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्सङ्ख्यो भवति तथा पञ्चदशादयोऽपीति, तेन चतु. सम्वत्सरमिदं सत्त्रमर्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसम्वत्सरम्भवतीति षष्ठः पक्षोऽस्तु । सोऽप्यनुपपन्न. । ' चतुर्विंशति परमाः सत्रमासीरन् ' इति वचनादधिकानां तत्राधिकाराभावात् । मनुष्यशब्दसम्वत्सरशब्दयोर्मध्ये अन्यतरस्य गौणत्वमाश्रित्य मनुष्याधिकार आश्रयणीयः । तत्रापि मनुष्यशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्याग. । सम्वत्सरपदं तु जघन्यत्वात् सावनसौरचान्द्रनाक्षत्राद्यनेकार्थसाधारणत्वेनार्थनिश्चयासामर्थ्यात् गौणं भवति । तर्हि यो मासः स सम्वत्सर इति वचनात्सम्वत्सरशब्दस्य मासपरत्वे सति सहस्रमासमेतत्सत्त्रमिति सप्तमः पक्षोऽस्तु । सोऽपि नोपपद्यते । यत अष्टमे वर्षे उपनीतो द्वादशवर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्नीनादधीत, तस्मादाधानादूर्ध्वं ज्योतिष्टोमाद्यनुष्ठानोत्तरकालमल्पायुषि न सम्भवन्ति सहस्रमासा. । ननु, तर्हि सम्वत्सरप्रतिमा वै द्वादशरात्रय इति प्रयोगाद्द्वादशरात्रिषु सम्वत्सरशब्दः ? । प्रतिमाविशेषणं तत्र सम्वत्सरशब्दः न तस्य द्वादशरात्रिषु प्रयोगः । तस्मादष्टम पक्षोऽप्ययुक्त इत्याशयेनोक्त ' सर्वथैतदपि नोपपद्यत ' इति ।

गौण्या वृत्त्याहर्विषयः १ ॥ १४६ ॥

संख्यायाः कस्माद्गौणी वृत्तिराश्रीयतेत आह—

## श्रुतिसामर्थ्यात् ॥ १४७ ॥

श्रुत्याहि संवत्सरशब्दोहर्विषयः प्रदर्शितः । अहर्वैसंवत्सर इति २। तस्मादन्हां सहस्रमङ्गीकर्त्तव्यम् ॥ १४७ ॥

## प्रकृत्यनुग्रहाच्च ॥ १४८ ॥

एवं च प्रकृति रनुगृहीता भवति । प्रकृतौ हि द्वादशाहे अहानि संख्येयानि । इहापि तद्वदेव संख्यायोग इति ॥ १४८ ॥

## कर्मणां युगपद्भावस्तन्त्रम् ॥ ४९ ॥

अत्रेदं विचार्यते । प्रधानकर्मणां यौगपद्ये सहप्रयोगे सति किमङ्गकर्मणां तन्त्रम् । उत प्रतिप्रधानमावृत्तिरिति ? । प्रतिप्रधानमावृत्तिरिति भ्रमः । प्रधानानि बहूनि । प्रत्येकं चाङ्गवत्ता सम्पादनीया । न चानावृत्तैरङ्गैरसौ सम्पद्यते । तस्मात्प्रतिधानमावृत्तिरित्येवं प्राप्त उच्यते । प्रधानानां सहप्रयोगे सत्यङ्गानां तन्त्रम् । सकृत्क्रिया ॥ १४९ ॥

कुत एतत्—

## शक्यपुरुपार्थकृतत्वैकार्थसमवायश्रुतिभ्यः ॥ १५० ॥

शक्यं यत्प्रधानकर्मणां सहप्रयोगे सत्यङ्गानां सकृत् क्रियेति ।

---

१ यथा त्रिवृत् पञ्चदश सप्तदश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्ते एकैकस्मिन्नहनि यागरूपे लक्षणया वर्तन्ते, तद्वद् सन्त्रे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः । तैश्च शब्दैः सामानाधिकरण्यात् सम्वत्सरशब्दः स्वावयवभूते अहनि तथैव लक्षणया वर्तत इति भवति तस्याह: परत्वमिति तत्त्वम् ।

२ उपलक्षणमिदम्" आदित्यस्यैव सर्वमृतवो यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोथ शरद्यदैवास्तमेत्यथ हेमन्त" इत्यस्य, अत्रापि श्रुतौ दिनपरत्वं स्पष्टमिति भावः ।

कुत एतत् । शक्यत्वात् । शक्यते ह्यदृष्टोपकारिणाङ्गेनानेकेषामुपकर्तुम् । अगृह्यमाणविशेषत्वात् । प्रदीपवत्१ । पुरुषार्थकृतत्वाच्च । प्रधानान्यङ्गवन्ति कर्तव्यानीति पुरुषार्थः सकृत् कृतैरेवासौ कृत एव भवति । एकार्थसमवायश्रुतेश्च । एकस्मिन्नर्थे फले बहुभिः प्रधानैः साध्ये अङ्गानां समवायश्रुतिर्भवति । ता एकविंशतिराहुतयो द्वावाघारौ पञ्चप्रयाजा द्वावाज्यभागावाग्नेयः पुरोडाशस्तद्वदाग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयोऽनुयाजाः सूक्तवाकश्च शंयोर्वाकश्चाथ यदेवाद' पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्चेति आहुतीनामेकविंशतिसंख्या दृश्यते । सा च तन्त्रपक्षे भवति । इतरथा आहुतिशब्दो लक्षणया तद्विधिपर एव स्यात् । अपरेऽन्यथा वर्णयन्त्येतत्सूत्रम् । शक्यपुरुषार्थत्वात् । शक्यते हि सकृत्कृतेनाप्यनेन बहूनामुपकर्तुम् । पुरुषार्थवत् । यथा पुरुषार्थेन प्रदीपेनेति । अपि च । कृतमप्यङ्गं यदि पुनः क्रियते । तत्कृतत्वादेकार्थत्वात्कृतं भवति । यथा प्रदीप एव कृतः पुनः क्रियते । समवायस्तूक्त एव । अतः सहप्रयोगे प्रधानानामङ्गानां सकृत् क्रियेति ॥१५०॥

प्रयोगैकत्वं च प्रधानानां कुत —

फलकर्मदेशकालद्रव्यदेवतागुणसामान्ये२ ॥ १५१ ॥

यत्रैकेन प्रयोगवचनेन बहूनि प्रधानान्युपदाय फले विधीयन्ते । तत्र सहप्रयोगः । इतरेतरसव्यपेक्षाणि हि तानि विहितानि । यथा वैश्वदेवेन प्रजाकामं याजयेदिति । तत्र वैश्वदेवशब्देन समुदायवचनेनाष्टानां हविषां सहत्वम् । यदि च तेषां कर्मापि समानं भवति । पञ्चप्रयाजता त्रयोऽनुयजतेत्येवमादि । भिन्नाङ्गकर्मणां सहप्रयो-

१ यथा एक एव प्रदीपो बहूनां मध्ये कृतः सन् सर्वेषामुपकरोति, यथा वा षट्सु भावनासु लिङ्पदेनैव कथंभावमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः एणामपि प्रत्येकमङ्गानि समर्पयन्ति तद्वदिमितिभावः ।

२ सामान्यशब्दस्य द्वन्द्वान्तपदत्वात् प्रत्येकं सम्बन्धः, तथा च, फलसामान्ये कर्मसामान्ये देशसामान्ये कालसामान्ये द्रव्यसामान्ये देवतासामान्ये गुणसामान्ये च सह प्रयोग इति भवति सूत्रार्थः ।

गे सतीतरेतरवैगुण्यं स्यात् । देशसामान्ये च सहप्रयोगो न भिन्नदेशानामशक्यत्वात् । कालसामान्येऽप्येवम् । परिक्रयद्रव्यसामान्ये च सहप्रयोगो युक्तः । यथा त्रिपंयुक्तेषु । त्रयाणां वामनत्रयाणां श्यामत्रयाणां बभ्रुरिति । देवतासामान्ये पुनः समानमुच्चारणम् । यथा सप्तदशसु प्राजापत्येष्वनुयाचने प्रैषे च । यदि च तासां देवतानां गुणोऽपि समानो भवति यथा तत्रैवोपांशुत्वम् । गुणभेदे पुनरशक्यं सहोच्चारणम् । यथोपांशुयाजदेवताग्नीषोमीययोः ॥ १५१ ॥

तद्भेदे भेदः ॥ १५२ ॥

तेषामेव सहत्वकारणानां यत्र भेदस्तत्र सहत्वं न भवति । यथा मित्रविन्दाप्रतिकामाग्नेययोः प्रयोगवचनभेदात् कर्मभेदो भवति । यथा कस्यचित्पञ्चप्रयाजता कस्यचिन्नवप्रयाजता । तत्र सहत्वे इतरेतरवैगुण्यमापद्यते । देशभेदेऽपि भेदो भवति । यथा वरुणप्रघासेषु मारुत्याः । कालभेदेऽपि दर्शस्य पौर्णमासस्य च सहत्वं भिद्यते । द्रव्यभेदेऽपि त्रयाणां त्रिपंयुकानां भेदः ॥ १५२ ॥

सहत्वे प्रधानानामङ्गानां तन्त्रमुक्तम् । क्वचित्तयोः सङ्गतिरेव नास्ति । यथा वैश्वदेवे देशो विरुध्यते । प्रधानानां प्राचीनप्रवणो देशः । प्राचीनप्रवणे वैश्वदेवेन यजेतेति । तदङ्गानां समो देशश्चोदकप्राप्त्या । समे दर्शपूर्णमासाभ्यां यजेतेति । तेनाङ्गप्रधानानामसङ्गतिरेव । कालोऽपि चात्र विरुध्यते । प्रधानानां पक्षान्तस्तदङ्गानां पक्षादिरित्येतदालोच्य सूत्रितम्—

[1]देशकालौ विरोधे न कृत्स्नोपदेशात् ॥ १५३ ॥

---

१ केयथाश्चिकैरेतत्सूत्र द्विधाकृतम्, " देशकालौ विरोधे " " न कृत्स्नोपदेशात् " इति । तत्र देशकालौ विरोधे इत्यस्य देशकालौ तन्त्रस्य विरोधकाविति प्रतिप्रधानं भिद्यते इत्यर्थः, यतश्च यस्यामेव पौर्णिमायां आग्नेयानुष्ठानं न तस्यामेवाग्नीषोमीयस्य । न च षड्भिः पर्वभिर्दर्शपौर्णमासानुष्ठानमेवं सति स्यात् ? इष्टापत्तेः । एवं देशस्यापि तथा च न तयोस्तन्त्रमिति पूर्वदले " न कृत्स्नोपदेशात् " नैतदेवं प्रतिप्रधानं देशकालयोरावृत्तिः, कस्मात् ? कृत्स्नसाङ्गप्रधानयागस्य पौर्णमास्यादौ उपदेशात्, यदा तु एकस्यैवानुष्ठानं न तदा कात्स्र्न्यं ? त्रयाणां देयानां प्राधान्यादिति समाहितम् ।

कृत्स्नं ह्येतत्कर्मसाङ्गं देशे काले च विधीयत इति । न ह्य-ङ्गरहितस्य प्रधानस्य पृथग्वचनम् । देशकालौ विरोध इत्येतत्सू-त्रमपरेऽन्यथा वर्णयन्ति । किं प्रयोगवचनैकत्वे सति कर्मादीनि सर्वाणि सहत्वविरोधकानि उत देशकालावेवेति ? । तद्भेदे भेदइत्यु-क्तत्वात्सर्वाणीत्येवं प्राप्त आह—

देशकालावेव विरोधकौ न कर्मादीनि । शाब्दो हि सहप्र-योगः । कर्मादीनामशब्दता । तेन वैश्वदेवे कर्मभेदेऽपि सति अ-ग्रानां हविषां सहत्वम् । कथं कर्मभेद इति चेत् । पयस्यायाः सान्नाय्यपयोविभ्यन्तेन बुधन्वन्तता प्राप्नोति । इतरेषां पौर्णमास-विभ्यन्तेन वार्त्रघ्नता । शब्दबलीयस्त्वात्सहप्रयोगः । द्रव्यभेदेऽपि शु-नासीरीये परिक्रयभेदेऽपि प्रयोगवचनैकत्वात्सहप्रयोगः । तस्मा-द्देशकालावेव सहप्रयोगस्य विरोधकौ प्रयोगवचनैकत्वे सति न कर्मादीनि । एतस्यां व्याख्यायां न कृत्स्नोपदेशादिति सूत्रं पूर्वपक्ष-मुत्थाप्य पूर्ववद्व्याख्येयम् ॥ १५३ ॥

अस्ति ज्योतिष्टोमस्तत्रोपसत्कालीनः प्रह्मण्यासु नि-गदस्त्र्यहे सुत्यामागच्छेति । स च चोदकेन द्वा-दशाह प्राप्तस्तत्र च द्वादशोपसत्कालीनान्यहानि द्वादशसौ-त्यानि । तत्रैतत्सन्दिह्यते किं सकृच्छ्रुत्या शब्दोच्चारणं, उत भेदेन प्रति सुत्यमिति? कुतः सन्देहः । यदि प्रकृतौ त्र्यहे सुत्यामागच्छेत्यने न सुत्योपलक्षणं कृतम् ततो भेदेन प्रतिसुत्यमुपलक्षणम् । अथ यागसाधनभूतदेवतेन्द्रस्मरणं चिकीर्षितं ततः सकृत्सुत्या शब्दोच्चारणं । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

## अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् ॥ १५४ ॥

अहर्गणे उपसत्कालीने सुब्रह्मण्यानिगदे सर्वाण्यहानि भे-देनोपलक्षयितव्यानि । एवं प्रकृतिवद्विप्रकृतिः कृता भवति । प्रकृतौ ह्येकं सौत्यमहरासीत्तदेवोपलक्षितम् । त्र्यहे सुत्यामागच्छे-ति । इह द्वादशसौत्यान्यहानि । तत्र च यद्येकनोपलक्ष्यते तस्यै-वोपलक्षणसंस्कारहानाद्वैगुण्यमापद्यते । तस्माद्द्वादशाहे त्रयोदशा-ह इत्येवमादिसर्वेषामुपलक्षणमित्येवं प्राप्ते ब्रूमः ॥ ५४ ॥

## तन्त्रकालकर्म प्रत्यहमविधानात् ॥ १५५ ॥

लुप्तविभक्तिको निर्देशः । तन्त्रेण उपसत्काले सुत्या शब्दोच्चारणं कर्म। सकृत्सुत्या शब्दोच्चारणमित्यर्थः । कुतं एतत् । प्रत्यहमविधानात् । नह्येवं विधं वाक्यमस्ति प्रहत्यमुच्चारणमिति । ननु चोदकेन विधानम् । प्रकृतावेकं सौत्यमहस्तदुपलक्षितम् । त्र्यहे सुत्यामागच्छेति। विकृतौ बहूनि सौत्यानि। तानि सर्वाण्युपलक्षयितव्यानि । अत्रोच्यते । न हि सुत्योपलक्षणं चिकीर्षितं न हि तयोपलक्षितया किञ्चित्प्रयोजनमित्यबाहुं परिकल्प्यं । यागसाधनभूतदेवतेन्द्रस्मरणं चिकीर्षितम् । तच्चोपसत्कालीनानामह्नां निगदद्वारेण। त्र्यहेतीते सुत्यां प्रतिभवतेन्द्रागन्तव्यमिति । ननु चाताप्यदृष्टमेव । महीन्द्रश्चामन्त्रणं शृणोति न च श्रुत्वागच्छतीति १। सत्यमेवम् । अनेन प्रकारेण यागसंस्तवोयम् । येन साधनान्यचेतयमानान्यपि चेतनावत्संश्रूयन्ते । यथा शृणोत ग्रावाणः इति। न हि ग्रावाणः शृण्वन्ति। संस्तवायैतदुच्यते । यथा शृणोतु देवः सविता हव इति यागः संस्तूयते । एवमनागच्छन्नपीन्द्र आगच्छतीवाशृण्वन्नपि सविता शृणोतीवेति । यागसंस्तवने न च कर्तुरुत्साहसजननमिति द्वयो ऽर्थः । सुत्योपलक्षणे पुनर्दृष्टस्यांशोपि नास्तीति॥ १५५ ॥

## एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात् ॥ १५६ ॥

यत्रैकद्रव्यविषयः कर्मणोऽभ्यासस्तत्र किं प्रतिक्रियं मन्त्राऽभ्यावृत्तिरुत सकृन्मन्त्रवचनमिति? क्रियाऽभ्यावृत्तौ तच्छेषस्य मन्त्रस्यापि प्राप्तौ सकृदुच्यते। एकद्रव्यविषये कर्मणोऽभ्यासे सकृन्मन्त्रो वक्तव्यः । कुत एतत् । कृतत्वादभिधानसंस्कारस्य । अपि च साऽभ्यासा एकैवेयं क्रियेति । क्रियादौ च मन्त्रवचनमुक्तम् ॥ १५६ ॥

---

१ देवतानां विग्रहवत्त्वस्य मीमांसकैरनङ्गीकारात्। इन्द्रशब्दस्यैवात्र देवतात्वं; न च शब्दस्यामन्त्रणस्मरणमागमनं वा घटत इत्याशयः।

उक्तेन न्यायेन हविषो ग्रहणे बर्हिषो लवने तस्यैव स्तरणे आज्यग्रहणे च सकृन्मन्त्रवचने प्राप्त आह—

न ग्रहणलवनस्तरणाज्यग्रहणेषु तु ॥ १५७ ॥

तु शब्दोऽवधारणे । ग्रहणादिषु नैव सकृन्मन्त्रवचनम् । न ह्यत्राभिधानसंस्कारस्य कृतत्वमस्ति । ग्रहणे तावद्यावदेव मुष्टिना गृहीतम् तावदेव मन्त्राभिधानेन संस्कृतम् । अन्यद्गृह्यमाणमभिधानसंस्कारसव्यपेक्षमेवेति । लवनस्तरणयोरप्येवम् । आज्यग्रहणे च ॥ १५७ ॥

वचनादाज्ये[1] ॥ १५८ ॥

आज्ये वाचनिकी मन्त्रावृत्तिरुक्ता । उत्तरेषु ग्रहणेषु । त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ इति । तदनु सकृत्सकृदेवेति ॥ १५८ ॥

मुष्टौ चोत्तमे ॥ १५९ ॥

तूष्णीं चतुर्थमिति ॥ १५९ ॥

दीक्षितस्यामनोज्ञस्वप्नदर्शने मन्त्रवचनमाम्नातम् । तथा नदीतरणे अववर्षणे अमेध्यदर्शने प्रयाणे च । तत्रेतरःसन्दिह्यते । किं युगपदनेकामनोज्ञस्वप्नदर्शने सकृन्मन्त्रवचनमुत भेदेनेति? । तथा नदीतरणेऽपि च स्रोतसां भेदे किं भेदेन मन्त्रवचनं उत सकृदिति? । अववर्षणे युगपदनेकधारासन्निपाते किं प्रत्यववर्षणं मन्त्रवचनमुत सकृदिति ? एवं युगपदनेकामेध्यदर्शने बलीवर्दनप्रयाणे ऽपि च किं प्रतिप्रयाणं मन्त्रवचनमुत प्रथमे प्रयाण इति ।

---

[1] यद्यप्येकः पदार्थो निर्वापादिः तथापि प्रत्यभ्यासं संस्कारभेदोऽभवति, मन्त्रवता निर्वापेण द्रव्यं संस्कर्तव्यम्, अतो यस्मिन्नेव मुष्टौ मन्त्रो नोच्यते तस्यैव मन्त्रकृतेन संस्कारेण हीनं स्यात् । कार्यप्रयुक्तोहि संस्कारो न क्रियास्वरूप प्रयुक्तः, कार्यं चात्र भिन्नम् । तस्मात् प्रतिमुष्टिमन्त्रावृत्तिरिति भावः ।

यजमानस्य स्वप्नादिदर्शने सकृन्मन्त्रवचनं प्राधानयूप- ६१
योस्तन्त्रेणानुष्ठानं च।

तत्र प्रत्येकं मन्त्रवचने प्राप्त आह—

स्वप्ननदीतरणावर्षणामेध्यदर्शनप्रयाणेषु तु सकृत्कालद्रव्यैकार्थत्वात् ॥ १६० ॥

यथासम्भवं हेतुविभागः। अनेकस्वप्नदर्शने कालैकत्वात् सकृन्मन्त्रवचनम्। नदीतरणे द्रव्यैकत्वात्। स्रोतसां भेदेऽप्येकमेव नदीद्रव्यमिति सकृन्मन्त्र। अवर्षणेऽपि कालैकत्वात्। तथामेध्यदर्शने प्रयाणेषु तु एकार्थत्वात्। एक एवायमर्थो गमनं नाम। तस्यादावेव मन्त्रवचनं न प्रतिप्रयाणमिति ॥ १६० ॥

अथ यत्र कालभेदेन पुनस्तदेव निमित्तमापतति। तत्रापि किं सकृद्वचनमुतभेदेनेतिआभिहितमेव तदिति कृत्वा सकृन्मन्त्रवचने प्राप्त आह—

न निमित्तभेदात् ॥ १६१ ॥

तत्र सकृन्मन्त्रवचनम्। भिद्यते ह्यत्र निमित्तमिति कृत्वाभ्यावृत्तिः ॥ १६१ ॥

अप्रधानकाल‍ः सकृदसन्निपातात् ॥ १६२ ॥

अप्रधानकालीनं यदङ्गं, यथा आघार, तस्य प्रतिकर्म प्राप्तौसत्यामुच्यते। सकृत्कर्त्तव्यम्। न हि तत्कश्चित्कर्मविशेषे सन्निपतितं यस्यापवर्गेऽपवृज्येत १। अतः स्वकालत्वात्सकृदेव कर्त्तव्यम् ॥ १६२ ॥

यूपः ॥ १६३ ॥

सोऽप्यप्राधेयवद्द्रष्टव्यः। सोऽप्यप्रधानकालीन एव। दीक्षासु यूपं छिनत्तीति तस्मात्सोऽपि साधारण. पशुत्रयेऽपि। नन्वग्न्याधेयाधिकरणन्यायेनैव गतार्थत्वादवाच्यमेतत्। पशवे वै यूपमुच्छ्रयन्तीति प्रतिपशुप्राप्त्याशङ्कानिवृत्त्यर्थमतिदेशः ॥ १६३ ॥

---

१ प्रथमनिहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि कादाचित्कात् किञ्चित्कर्म प्रथममापतति तथापि न तादर्थ्यमेव भवति प्रथमावस्थायामेव सर्वार्थत्वावधारणादिति भावः।

स्वरुश्च स१स्थावचनात् ॥ १६४ ॥

स्वरुरपि यूपवदग्नीषोमीयसवनीयानुबन्ध्यानां साधारण ए-
व । संस्थावचनं हि भवति । स्वरुहोमेन हि यूपः संस्थाप्यत इति ।
यदि च प्रथममेव हूयेत यूप. साधारणो न भवेत् । तस्मात्सोपि यू-
पवत्साधारणः ॥ १६४ ॥

तन्निवृत्तेश्च ॥ १६५ ॥

अपि च । तत एव यूपात्स्वरुर्निर्वर्त्यते । तस्य यः प्रथमः श-
कलः परापतेत् स स्वरुः कार्य इति समामनन्ति ॥ १६५ ॥

दर्शपूर्णमासादिषु चिन्त्यते किं सर्वं स्वयमेव कर्त्तव्यम् ।
उत किञ्चित्परकर्तृकमपीति ? फलार्थिनः कर्मचोदितं अतस्तेनैव
कर्त्तव्यमित्येवं प्राप्त आह—

कर्मणि पुरुषाणाम्१ ॥ १६६ ॥

अधिकारः । कुत एतत् । परिक्रयाम्नानात् । तद्दृश्यते हि तत्र
परिक्रयः । गोर्दक्षिणा हिरण्यं दक्षिणेत्येवमादि ॥ १६६ ॥

एवं सर्वत्र प्राप्ताविदमुच्यते—

प्रधान१ स्वामी फलयोगात् ॥ १६७ ॥

यत्प्रधानं स्वद्रव्यपरित्यागपरसत्तापादनरूपं तत्स्वामी करो-
ति । फलयुक्तं हि तदिति । तद्ध कुर्वन् फलेन युज्यते इति । एवं सू-
त्रमेवेदमपरे वर्णयन्ति । परिक्रयाम्नानात् सर्वत्र पुरुषाणां कर्तृत्वे

---

१ अत्र परिक्रयाम्नानादिति शेषः । तथाच, दर्शपूर्णमासादिक-
र्मणि होत्रध्वर्य्वादीनां कर्तव्यं भवति न यजमानस्य परिक्रयाम्ना-
नादिति सूत्रार्थः। न च यजमानस्य साक्षात्कर्तृत्वे आर्थिनः साङ्गं क-
र्तव्यमिति विरोधः ? प्रयोजकत्वेनापि तस्य कर्तृत्वोपपत्तेः ।

सति प्रधानं स्वामीकरोति। फलयोगादित्युक्तमेव[1] ॥ १६७॥
किमेतदेव स्वामीकरोति नेत्याह—

## पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात् ॥ १६८ ॥

पुरुषयोगी योमन्त्रः तनूपा अग्नेसि तन्वं मे पाहीत्येवमादिः प्रत्यगाशीर्युक्तः। यश्चात्मसंस्कारः पावनमुण्डनादिः। तौद्वावपि त्यागे प्रतिपत्तव्यौ। त्यागशब्देन त्यागाधिकृतो लक्षणया यजमानोऽभिधीयते। यजमानयोगिनौ भवत इत्यर्थः। यजमान एव हि समर्थ आशीः प्रार्थनं कर्तुम्। संस्कारोऽपि च फलप्रतिग्रहयोग्यतापत्त्या यजमानयोग्य एव ॥ १६८ ॥

## वचनादन्यत् ॥ १६९ ॥

अन्यद्वचनाद्यजमानस्य भवति। यथा शुक्रं यजमानोन्वारभत इति। ऋत्विजामपि वचनेन संस्कारो भवति। यथा हिरण्यमालिनो वाजपेयेन चरन्तीति ॥ १६९ ॥

---

१ ननु च प्रधानसमकर्तृकत्वादङ्गानामपि स एव कर्ता सेत्स्यति? न, तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्रहात्। द्रव्योत्सर्गे ह्यक्रियमाणे न किञ्चित् यजमानेन कृतं स्यादिति तं करोति। न ह्यात्मनेपदे फलार्थिकर्तृकत्वं गम्यते, किं तर्हि भावनाक्षिप्तकर्तृत्वस्य सतः फलसम्बन्धित्वम्। अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम्, न तु फलार्थिनोऽन्येन व्यापारकरणं विरुध्यते, तावता च सिद्धोऽङ्गेष्वनियम इति। अतोऽङ्गेष्वन्यकर्तृत्वं प्रधाने च स्वामिकर्तृत्वमिति। अन्येष्वपि कर्म कुर्वत्सु यजमानेन यत्नेन कृताकृतप्रत्यवेक्षणं कर्तव्यमेव। अन्यथा हि ऋत्विजः कर्मकर्तृत्वात्प्रमादेन सर्वं कर्म साधनतया यथाश्रुत न कुर्वन्ति, वैगुण्येऽपि तेषां स्वार्थविनाशाभावात्। तदुक्तं भट्टाचार्यैः, यथैवाध्वर्युणा पदार्थाः कर्तव्यास्तथैव यजमानेनाप्रमादार्थं प्रत्यवेक्षितव्या इति।

शेषमितरे यथा संख्यम् ॥ १७० ॥

इतरे स्वामिव्यतिरिक्ताः शेषं यथाख्यं कुर्वन्ति । या यस्या-ख्येति ॥ १७० ॥

उपवीतिनः १ ॥ १७१ ॥

कुर्वन्ति स्मृतेः ॥ १७१ ॥

प्राञ्च्युदग्वा ॥ १७२ ॥

प्राञ्च्युदञ्चि च कर्माणि सन्तिष्ठेरन्निति श्रुतिः२ ॥ १७२ ॥

आवृत्तिसामंतेषु३ प्रदक्षिणम् ॥ १७३ ॥

आवृत्तौ सामन्ते च प्रदक्षिणं४ स्मृतेः ॥ १७३ ॥

विपर्यस्य पित्र्येषु तु सकृद्दक्षिणाच ॥ १७४ ॥

पित्र्येषु कर्मसु विपर्यासेनाप्रदक्षिणं कार्यम् । सकृच्च । यद-

---

१ तदुक्तं शाङ्खायन श्रौतसूत्रे "यज्ञोपवीती देवकर्माणि करोति" इति ।

२ तथाच श्रुत्यन्तरम्, 'तं प्राञ्चमनुसमस्यति प्राची हि देवानां दिगथोऽउदञ्चमुदीची हि मनुष्याणां दिक्' इति । 'तथो हास्यै तस्मागेव कर्मकृत भवति तद्वै प्राङ् निदध्यात् अथोदक् प्राङेव यज्ञोऽनुसन्तिष्ठाता इति तथो हास्योदगेव कर्मानुसन्तिष्ठत, इति च । पात्राणामासादनं दक्षिणत आरभ्योदक् संस्थ, पश्चादारभ्य प्राक्संस्थ वा कार्यम् । परिस्तरणपर्युक्षणादिकमप्युत्तरतः समापनीयम्, त्रिरुल्लेखनाद्यपि एवमेव कर्तव्यम् इतितत्त्वम् ।

३ सामन्तशब्देन परिस्तरणपर्युक्षणनित्यपरिषेकपदपरिलेखपिण्डपरिलेखादिकर्म उच्यते । समन्ततो भवं सामन्तम्, सार्वत्रिकमिति तद्व्युत्पत्तेः । तथा च श्रूयते 'दक्षिणान् बाहूनन्वावर्तन्त' इति ।

४ 'प्राचीनावीती पित्र्याणि' इत्युक्तेः यत्र परिस्तरणादिप्रदक्षिणयुक्तं तत् पित्र्ये अप्रदक्षिणम्भवति इति भावः ।

भ्यस्तरूपं दैवे स्मर्यते तत्पित्र्ये सकृत्कर्त्तव्यम् । यथा परिसमुह्योपलिप्योल्लेखनम् । [1]दक्षिणा च दिक् । न प्राच्युदीची वा ॥ १७४ ॥

प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् ॥ १७५ ॥

प्रधानस्य च यत्साधनद्रव्यं तस्य व्यापत्तौ विनाशे साङ्गावृत्तिर्भवति । तेन ह्यादिष्टान्यङ्गानि तद्विनाशाच्च विनाशमुपगतानि । अपरे त्वन्यथा वर्णयन्ति । द्रव्यमेव संस्पर्शिभिरङ्गैः सहावर्त्तेत । नारादुपकारकैरपि । तेन तान्यादिष्टानी[2]त्युक्तार्थम् ॥ १७५ ॥

इदं श्रूयते । व्रीहिभिर्यजेत यवैर्वा यजेतेति । तत्रैतत्सन्दिह्यते । किमुभावपि व्रीहियवौ यागं प्रत्यङ्गभावमुपनेयौ । उत विकल्पेनेति? । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

गुणानामेकार्थानां सर्वारम्भश्चोदितत्वात् ॥ १७६ ॥

ये गुणा एकप्रयोजना यथा व्रीहियवादयः तैः सर्वैस्तत्कर्मारब्धव्यम् । कुत एतत् । चोदितत्वात् । चोदिता हि ते यागाभिनिर्वृत्ताविति [3] य एव गुणोऽङ्गभावं नोपनीयते तस्यैव श्रुतिरनर्थिका स्यादिति ॥ १७६ ॥

एवं प्राप्त आह—

न कृतत्वात् ॥ १७७ ॥

नैतदेवं सर्वैस्तत्कर्मारब्धव्यमिति । किं कारणम् । कृतत्वात् । एकेनैव यदा तत्कर्माष्टाकपालाभिनिर्वृत्तिरूपं निर्वर्तितं भवति । तदा द्वितीयोपादानमनर्थकं स्यात् । सर्वे हि ते इतरेतरनिरपेक्षा एव विधीयन्ते ॥ १७७ ॥

अथ यद्येकेनैव निर्वर्तिते यागे द्वितीयश्रुत्यनुग्रहाय यागस्यावृत्तिः क्रियते । तत्रैतदुत्तरसूत्रम्—

---

१ 'एषा वै दिक् पितॄणां या दक्षिणा दिक् सा पितॄणाम्' इति श्रुतेः ।

२ तदुक्तमापस्तम्बेन "यथाप्रत्तदेवतं हविर्व्यापद्येतान्यद्धविः संस्कृत्य प्रयच्छेद्देवतायै" इति ।

३ तयोरुभयोर्यागसाधनत्वे यवेति भावः ।

अनारभ्यत्वात् ॥ १७८ ॥

अनारभ्योयमर्थः । यद्युत गुणानुरोधेन प्रधानाभ्यावृत्तिः त-स्माद्विकल्प.१ ॥ १७८ ॥ .

दर्शनाच्च ॥ १७९ ॥

दृश्यते चायमर्थो यथा व्रीहियवयोर्विकल्प इति । हविरुद्वपनं प्रकृत्य श्रूयते । पर्यवृद्धा उ ह्यवैते यदि व्रीहयो यदि यवा इति२। य-पि च । समुच्चये सति न व्रीहिभि कृतो भवति न यवैरिति स-ङ्कीर्णमन्यदेव द्रव्यान्तरं भवति ॥ १७९ ॥

श्रुत्यानर्थक्यमिति चेत् ॥ १८० ॥

इति चेद् पश्यसि। व्रीहियवयोरेवान्यतरस्य विकल्पेनान्यतर-स्य श्रुतिरनर्थिका स्यात् ॥ १८० ॥

कालान्तरेर्थवत्वं स्यात् ॥ १८१ ॥

कालान्तरे द्वितीयश्रुति. सार्थिका भविष्यति । न ह्येकस्मि-न्कर्मणि समुच्चयः सम्भवतीत्येतदुक्तम् ३ ॥ १८१ ॥

---

१ न समुच्चय इति हृदयम ।

२ ज्योतिष्टोमे हि द्रव्यदेवतासंयोगानामदृष्टानामपर्यायविधानात् प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्त यदभ्यस्यते, व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यप्रकृतितया विधीय-मानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेणैव गृह्णाति न युगपत् येन बलात्प्रधानाभ्यासः स्यात्, अतो विकल्प एव । समुच्चित्य यज-नया तु वाक्यद्वयमपि बाधितं स्यादिति दिक् ।

३ तदुक्तं शाखान्तरे "व्रीहिभिरिष्ट्वा व्रीहिभिर्यजेता यवेभ्यो यवै-रिष्ट्वा यवैर्यजेता व्रीहिभ्यो दर्शपूर्णमासौ" इति । अतो व्रीह्याग्रय-णानन्तरं प्राग्यवाग्रयणात् व्रीहिभिरेव दर्शपूर्णयासयागः । यवाग्र-यणानन्तरं प्राग्व्रीह्याग्रयणात् यवैरिति । अत्र दर्शपूर्णमासावित्यने-न दर्शपूर्णमासयोरेवायं द्रव्यनियम उक्त, तेनान्यासु विकृतिषु नायं द्रव्यनियम इति धूर्तस्वामिनः ।

आघारं प्रकृत्यगुणाः सामम्नाताः। ऋजुमाघारयति सन्ततमाघारयति दीर्घमाघारयति प्राञ्चमाघारयति तेषामेककार्यत्वादुक्तेन न्यायेन विकल्पे प्राप्त आह—

## धर्ममात्रेषु समुच्चयो विरोधे ॥ १८२ ॥

ये गुणा धर्ममात्राः तेषां समुच्चयः। कुत एतत्। अविरोधे हि ते वर्त्तन्ते। कथम्। ऋजुसन्ततं न विरुणद्धि। न सान्तत्यं प्राञ्चम्। प्रतिनियतानि ह्यदृष्टानि। तस्मादृज्वादीनां समुच्चयः। ननूक्तमेककार्यत्वादिति। सत्यम्। परमकं कार्यम्। अवान्तरकार्याणि तु भिन्नानि। यदृजुना क्रियते। न तत्सन्ततेन यत्सन्ततेन न तत्प्राञ्चेनि ॥१८२॥

होत्राधानयोः क्रियमाणानुवादिनामग्निमन्थनप्रणयनादिषु होतृकाणां आधानमन्त्राणां च भूर्भुवः स्वरिति किमेषां समुच्चय, उत विकल्प इति?। मन्त्राणां क्रियाभिधायकत्वं तत्साधनाभिधायकत्वं च दृष्टं प्रयोजनमिति विकल्पे प्राप्त आह—

## होत्राधानयोः ॥ १८३ ॥

होतृकाणां मन्त्राणां अधस्तनसूत्रोपात्तः समुच्चयोनुकृष्यते। यत्कारणमदृष्टार्था हि ते क्रियमाणानुवादिनः। करणमन्त्राणां च विकल्प इष्यते। दृष्टार्थत्वात्। क्रियमाणानुवादिनस्त्वदृष्टार्था इति समुच्चयः१। आधानमन्त्राणां तु समुच्चयो वाचनिकः। त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयमिति ॥ १८३ ॥

सर्वत्र होतृकाणां समुच्चये प्राप्त आह—

## न याज्यानुवाक्यासु विरोधात् ॥ १८४ ॥

एकस्मिन्प्रकरणे याज्यानुवाक्यालक्षणयुक्तानां समुच्चयो न भवति। देवतास्मरणार्था ह्यनुवाक्या। हविः समर्पणार्था च याज्या। अतो दृष्टार्थत्वाद्विकल्पः। तथाचाह। इयति वा अनुवाक्यया प्रयच्छति याज्ययेति ॥ १८४ ॥

---

१ तथाच श्रुतिः "त्रिःप्रथमामन्वाह त्रिरुत्तमाम्" "आग्नेयीरन्वाह" "एकादशान्वाह नयान्वाह दशान्वाह" इत्यादि।

दर्शनाच्च ॥ १८५ ॥

दृश्यते चायमर्थो यथा याज्यानुवाक्यासु न समुच्चयः । प्राजापत्यान्प्रकृत्यामनन्ति । एकानुवाक्या भवत्येका याज्यैकदेवत्या हीति । देवतैकत्वं हेतुं ब्रुवन् याज्यानुवाक्ययोरेकत्वं च प्रदर्शयति । तथापितृयज्ञे पुरोनुवाक्यां प्रकृत्यामनन्ति । एकया च देवान्प्रत्याययन्ति द्वाभ्यां पितॄनिति अनुवाक्याद्वित्वविधिपरेवाक्ये एकत्वं दर्शयति १ ॥ १८५ ॥

प्रायश्चित्तेषु दोषनाशात् ॥ १८६ ॥

एकस्मिन् कर्मणि प्रायश्चित्तबहुत्वे आम्नाते२ किं समुच्चय, उत विकल्प इति ? । विकल्प इति ब्रूमः । कुतो दोषनिर्घातार्थं हि प्रायश्चित्तं भवति । दोषदर्शने हि सति तदाम्नायते ततस्तन्निर्वृत्तिरेव प्रयोजनं तेन विकल्प्यते ३ ॥ १८६ ॥

---

१ एवमेव महापितृयज्ञे पुरोऽनुवाक्या प्रस्तावे " स द्वे पुरोऽनुवाक्ये अन्वाहैकया वै देवान् प्रत्यायवन्ति द्वाभ्यां पितॄन् " इत्याद्यावप्येकत्वं सिद्धं दर्शयति । तस्मादत्रापि विकल्प एवेति भाव ।

२ " यो ऽमावास्यां पौर्णमासीं वातिपातयेदग्नये पथिकृते ऽष्टाकपालं पुरोडाशं निर्वपेत् " " यो ऽमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरन्द्वादशकपालं निर्वपेत् " इत्यादिना बोधिते इत्यर्थः ।

३ अयमभिप्रायः, वैगुण्यं निमित्तीकृत्य वाक्येन विधीयमानानि प्रायश्चित्तानि वैगुण्यनाशकत्वात् प्रत्येकं समर्थानि विज्ञायन्ते । तेषां विकल्पसमुच्चयविचारे अदृष्टार्थत्वात्समुच्चये प्राप्ते एकैकेन वाक्येन निरपेक्षविधानाद्वारैक्याद्विकल्प एव न समुच्चयः । तदुक्तं द्वादशाध्याये तृतीयपादे चतुर्दशसूत्रे जैमिनिना ." प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः " इति । अस्यार्थः, प्रायश्चित्तेषु विकल्पः स्यात्, कुतः ? चैकार्थ्यात्, कथमैकार्थ्यम् ? यत एकेषां निष्पन्नेन दोषेण केवलस्य तस्याभिसंयोगो यथोक्तो यज्ञ आर्तिमियाद्भूः स्वाहेति गार्हपत्ये जुहुयात् इति, तस्मात् सर्वस्य दोषस्यैकेन निर्घातः । एकेन चेन्निर्हृतो दोषस्तर्हि द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति । एवं स्मार्तेष्वपि द्रष्टव्यम् । तत्र द्वितीय सूत्रम् " समुच्चय-

एकेन च निहते दोषे द्वितीयमनर्थकमित्येवं प्राप्त आह—

नाश्रुते ॥ १८७ ॥

प्रायश्चित्ते कृते दोषः प्रयातीति नैवं श्रुतिरस्ति ॥ १८७ ॥

प्रत्यक्षाच्च ॥ १८८ ॥

प्रत्यक्षेणापि दोष निर्घातो न दृश्यते । भिन्ने जुहोति स्कन्ने जुहोतीति । कृतेपि होमे न भिन्नमभिन्नं भवति । न च स्कन्नम-स्कन्नम् । अतो धर्म मात्रं, तस्मात्समुच्चयः ॥ १८८ ॥

स्याद्वा दर्शनात् ॥ १८९ ॥

अथवैकेषुचित्प्रायश्चित्तेषु दोषनिर्घातार्थता । यथा महा-व्याहृतिहोमेषु । दोषनिघातो ह्यत्र दृश्यते । स यथा पर्वणा पर्व स-न्दध्यादेवं हैव च सन्दधाति य एताभिर्भिषज्यतीति सन्धानभैषज्ये दर्शयति ॥ १८९ ॥

एवं प्राप्त आह—

नाऽन्यार्थत्वात् ॥ १९० ॥

नैतदेवं सन्धानभैषज्ये दृष्टा विकल्प इति । किं कारणम् । अन्यार्थे होते । किमर्थे इति चेत् । महाव्याहृतिस्तुत्यर्थे, इयं

---

स्त्वदृष्टार्थेषु ( १२. ३. २५ ) यानि पुनर्न दोषनिर्घातार्थानि तेषु समु-च्चयः, कानि पुनस्तानि ? यानि न शिष्टस्याक्रियायां प्रतिषिद्धस्य क-रणे वा विधीयन्ते, यथा 'यस्याहुतमग्निहोत्रं सूर्योऽभ्युदियादग्नेयं चरुं निर्वपेत् सौर्यमेककपालम्' तथा 'यस्याहुतमग्निहोत्रं सूर्यो-ऽभ्युदियादग्निं समाधाय वाचं यत्वा दम्पती सर्वाहमुपासीयाताम्' इति । तत्र दोषो न दृश्यते दोषस्याभावान्निर्घातार्थता च नास्ति के-वलमभ्युदये निमित्ते कर्म विधीयते तन्नैमित्तिकं च कर्मणः प्रकरणे उत्पन्नत्वात् कर्माङ्गं विज्ञायते । तत्र यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन सङ्गृह्यन्ते । अतस्तेषां समुच्चयः । तदेवं जैमिनेः सि-द्धान्तः, प्रमादापातितस्य वैगुण्यस्य समाधानार्थानां विकल्पः, निमि-त्ते सति कर्माङ्गानां समुच्चय इति सङ्क्षेपः ।

नाम प्रशस्तो महाव्याहृतिहोमो येन सन्धानभैषज्ये क्रियेते । तस्माददृष्टार्थत्वम् ४ ॥ १९० ॥

इदानीमिदं विचार्यते । कर्मणि प्रयुज्यमानानां मन्त्राणां किं यथाम्नातस्वरेण प्रयोग, उत भाषिकस्वरेण ? भाषिकस्वरो ब्राह्मणस्वरः । आहोस्विदेकश्रुत्या तानेनेति ? किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

## मन्त्रे स्वरक्रिया यथाम्नातमविशेषात् ॥ १९१ ॥

कर्मणि प्रयुज्यमाने मन्त्रे आम्नातस्वरेण प्रयोगः । कुत एतदविशेषात् । न विशेषोऽवसातुं शक्यते अनेन स्वरेण अनेन वा प्रयोग इति । तस्मात्समाम्नायस्वर. ॥ १९१ ॥

एवं प्राप्त आह—

## भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् ॥ १९२ ॥

वा शब्दः पक्षव्यावृत्तौ । भाषिकस्वरो वा भवति ब्राह्मणस्वरः । न मन्त्रस्वर. । कुत एतत् । उपपन्नस्वरस्यैव मन्त्रस्य विद्यमानस्वरस्य ब्राह्मणे स्वरान्तरेणोपदेशो भवति । तस्माद्भाषिक-

---

४ अपराध्याख्या " स्याद्वादर्शनात् " प्रायश्चित्तानि द्विविधानि, कानि चिद्वैगुण्यस्य प्रमादापतितस्य समाधानार्थानि, कानि चिन्निमित्ते कर्माङ्गानि । तत्र यानि वैगुण्यसमाधानार्थानि तेषु दोषनिर्घातः स्यात्, कुतः ? दर्शनात् "स यथा पर्वणा" इत्यादिनातदुक्तम् । एकेन च निर्हृते दोषे न द्वितीयस्य प्रयोजनमित्येकमेव किंचिद्विकल्पेन कर्तव्यमिति सिद्धान्तः । एवमेव सर्वेषु प्राप्ते आह "नान्यार्थत्वात्" प्रायश्चित्तानि न दोषे निर्घातार्थानि किन्तु भेदनादिनिमित्ते सति कर्माङ्गानि, तेषु दोषेऽसति न तन्निर्घातार्थता-र्थता कुत ? अन्यार्थत्वात्, तत्र हि न प्रायश्चित्तस्य विनष्टसमाधानं कार्यम्, किञ्च स पदार्थो दृष्ट', न च होमादिना भिन्नं स्कन्नं वा अभिन्नमस्कन्नं च कर्तुं शक्यते, अत एवं विधे निमित्ते यानि विधीयन्ते तान्यदृष्टार्थान्येव, तस्मात्तेषु समुच्चय इति । एवं च जैमिनिसिद्धान्तेनाविरोधि व्याख्यानं भवति, अतो युक्तमेवेति दिक् ।

स्वर इति ॥ १९२ ॥

एवं प्राप्त उच्यते—

तानो[1] वा नित्यत्वात् ॥ १९३ ॥

वा शब्दः पक्षान्तरपरिग्रहे । नैतदस्ति यज्ञाविकस्वर इति । तानेन प्रयोगः । एकश्रुत्या प्रयोग इत्यर्थः ॥ १९३ ॥

कुत एतत्—

एकश्रुतिदूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासाम-
जपन्यूङ्खयाजमानवर्जम् ॥ १०४ ॥

स्मर्यते ह्येवमेकश्रुतिदूरात्सम्बुद्धाविति वर्त्तमाने यज्ञकर्मण्यजपन्यूङ्खसामसु । एवमादिवर्जितानां मन्त्राणां एकश्रुत्या तानेन प्रयोगः[2] । ननु चेयं स्मृतिः । श्रुत्या च मन्त्रप्रयोगः स्वरान्तरेणोच्यते । नैव श्रुतिर्मन्त्रप्रयोगार्था । तं प्रथयत्युरुप्रथा उरुप्रथस्वेति प्रयोगवचनेनोपसंगृहीतत्वात् । लिङ्गेन प्रथने प्राप्नोत्येवं तत्र श्रुतिरर्थवादार्था । उरुते यज्ञपतिः प्रथतामिति । प्रशस्तमेतत्प्रथनं येन यज्ञपतिरपि प्रजया पशुभिश्च प्रथत इति । अपि च नित्या स्मृतिरविच्छिन्नपारम्पर्यात् । अथ वा नित्यत्वादिति । नित्यं वैदिकं वचनं स्मृतानां तन्मूलमिति । एवं च स्मृतेर्नित्यत्वम् ॥ २०४ ॥

आधाने श्रूयते षड्देया द्वादशदेया इत्येवमादि । तत्र सन्देहः । किं दानसंयोगे सङ्ख्याविकल्पते । उत समुच्चीयत इति ? ।

---

१ तान एकश्रुतिरित्यर्थः ।

२ सुब्रह्मण्योमिन्द्रागच्छेत्यादिर्निगदः सुब्रह्मण्या, सामानि उद्गातृभिर्यज्ञे गीयमानानि, उपांशु धूरसि इन्द्रस्य बाहुरसि मयोदिरित्याद्या जपतीति एवंनचोदिता मन्त्राः, न्यूङ्खास्तु पृष्ठ्ये षडहे होतृवेदे प्रसिद्धा ओकारा द्वादश पिबा सोममिन्द्र मन्दतु त्वा य ते ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ सुषाव हर्यश्वाद्रिरित्यादयः, याजमानं च सर्वं विष्णुक्रमणादिकम्, तत्सम्बन्धिनो ये मन्त्राः दिवि विष्णुरित्याद्याः एषु नैकश्रुतिर्भवतीति सूत्रस्य हृदयम् ।

सर्वासामाम्नातत्वात्समुच्चये प्राप्त आह—

संख्याविकल्पो दानसंयोगे कृतत्वात् ॥ १९५ ॥

दानसंयोगे या संख्या श्रूयते सा विकल्पेन भवितुमर्हति । कुत एतत् । एकेन संख्याविशेषेणानत्यर्थस्य निर्वर्तितत्वात् । आनत्यर्थञ्चैतद्दान न धर्ममात्रम् । स एष यज्ञो हतो नददक्षे त देवा दक्षिणाभिरदक्षयन्निति प्रकृत्यामनन्ति । ता वै षड्ददद्यादित्येवमादि ॥ १९५ ॥

अस्त्यग्नीषोमीय पशुस्तत्र श्रूयते । दवञ्च उवध्यमवदधाति । वसा जुहोति । अध्वर्यवे होत्रे प्रयच्छति । वनिष्टुमग्नीधे प्रयच्छति । तच्च चोदकेन पञ्चपश्वादिपशुगणे प्राप्तम् । तत्र सन्देह । किमवध्यादीना समुच्चय, उत विकल्प इति ? । किं तावत्तावत्प्रतिभाति । एकेनैव द्रव्येण तस्या क्रियाया निर्वर्तितत्वाद्विकल्पे प्राप्ते आह—

उवध्यवसाध्यृग्नीवानिष्टुषु समुच्चयो
द्रव्यसंस्कारतद्भेदाभ्याम् ॥ १९६ ॥

उवध्यादिषु समुच्चयो न विकल्प । कुत एतत् । द्रव्याणि हि तया क्रियया संस्क्रियन्ते । प्रतिपाद्यन्ते । नात्र द्रव्य क्रियार्थं क्रिया एव द्र०यार्थेति क्रियानिर्वृत्त्युत्तरकाल चरितार्थस्य द्रव्यस्य प्रतिपत्तिःसस्कार. सस्कार्याणि भिन्नानि । यस्यैव पशो शेषसस्कारो न क्रियते तस्यैव सस्कारहानाद्वैगुण्यमापद्यते । तस्मात्समुच्चय[१] इति । भूतमप्यसमुच्चारणन्यायेन द्रव्यमन्यत्र क्रियार्थम् । एकेनैव च क्रियाया निर्वर्तितत्वान्न द्वितीयेन प्रयोजनमिति ॥ १९६ ॥

ज्योतिष्टोमे अथ प्रकृत्यामनन्ति । हिरण्येन क्रीणाति । वाससा क्रीणाति । गवा क्रीणातीत्येवमादि । तत्रैतत्सन्दिह्यते । किं क्रयचोदना गुणेषु समुच्चय, उत विकल्प इति ? । किं तावत्प्राप्तम् इतरेतरनिरपेक्षत्वाद्दक्षिणा सख्या विकल्पवत् विकल्प प्राप्तावेवमाह—

---

१ उपलक्षणमिद गुदजाघन्यादिष्वपि समुच्चयस्य ।

चोदनागुणेषु च प्रक्लृप्त्युपधन्धाभ्याम् ॥ १९७ ॥

अग्रस्तनसूत्रोपात्तसमुच्चयानुकर्षणार्थश्चशब्दः । क्रमचोदनागुणेषु समुच्चयो न विकल्पः । प्रक्लृप्तएव हि सोमे विद्यमाने कर्ममध्ये क्रयश्चोदितस्तेनास्य धर्ममात्रता । न ह्ययमप्राप्तस्य सोमस्य परिप्रापणार्थः । धर्ममात्रत्वाद्यथाचोदितं कार्यः । चोदना च सर्वद्रव्याणां । तस्मात्समुच्चयः । अपि च संख्योपबध्यते । तं वै दशभिरेव क्रीणीयात्नादशभिरिति ॥ १९७ ॥

१गार्हपत्याहवनीयौ न व्यवेयात् ॥ १९८ ॥

अर्थलक्षणेषु सञ्चरणेषु ॥ १९८ ॥

२विवृत्यावृत्य वेतरथावृत्तिः ॥ १९९ ॥

विवर्त्तनमप्रदक्षिणम् । आवर्त्तनं प्रदक्षिणं । एते शास्त्रतः कृत्वा इतरथावृत्तिः कार्या ॥ १९९ ॥

अतीत्य निष्क्रमणम् ॥ २०० ॥

यत्र सञ्चरणमार्गेण शास्त्राद्यविष्टः । यथान्तरेणापराग्नीगत्वा व्रतग्रहणे तत्र तत्पश्चार्धाभिनिर्वृत्युत्तरकालमतीत्य तेनैव मार्गेण निःक्रमणम् ॥ २०० ॥

३उत्तरत उपचारो यज्ञः ॥ २०१ ॥

उत्तरत उपचारो वै यज्ञ इति श्रुतेः । अनियतदेशस्य कर्मणो देशोयम् ॥ २०१ ॥

---

१ विना वचनं गार्हपत्याहवनीयौ न व्यवेयात् तयोर्मध्यमार्गं न कुर्यात् तयोरन्तरालेन न गच्छेत्, नापि स्फ्योदपात्रादिकमन्तरालेन नयेदित्यर्थः ।

२ निवृत्य प्रदक्षिणमावृत्य आवृत्य आवर्तनं कृत्वा प्रदक्षिणमावृत्य वा इतरथावृत्तिः प्रत्यावृत्तिः कर्तव्येत्यर्थः ।

३ यज्ञ उत्तरत उपचारो भवति, उत्तरत विहाराद्युत्तरदेशे उपचारणं कर्म करणं यस्यासावुत्तरत उपचारः, सर्वं कर्म विहारादुत्तरदेशे कर्तव्यमित्यर्थः ।

दक्षिणतो ब्रह्मयजमानयोरासने ॥ २०२ ॥

भवतः। ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते इति वचनात्। अथ हैषैव तुला यद्दक्षिणो वेद्यन्त इति प्रकृत्य तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीतेति ॥ २०२ ॥

पश्चाद्यजमानो वेदिस्पृक् ॥ २०३ ॥

ब्रह्मणः पश्चाद्यजमानो वेदिसलग्न आस्ते १ ॥ २०३ ॥

अध्वर्युः कर्मसु वेदयोगात् ॥ २०४ ॥

अध्वर्युवेदविहितस्य कर्मणश्चत्वार ऋत्विजः कर्तारः। तेषामनागृहीतकर्तृके कर्मण्यध्वर्युः कर्ता। कुत एतत्। वेदयोगात्। अध्वर्युणा हि वेदो युज्यते। समाख्यायते। अध्वर्युवेद इति। यदि तद्वेदविहितानामध्वर्युः कर्ता तदैतदुपपद्यते ॥ २०४ ॥

वचनविरोधाभ्यामन्यः२ ॥ २०५ ॥

तद्यथा प्रतिप्रस्थाता मन्थिनं जुहोति वचनात्। विरोधादपि वेपथोपधानयोर्युगपद्विधानादुपधानेग्नीद ॥ २०५ ॥

हविष्पात्रस्वाम्यृत्विजाम्३ ॥ २०६ ॥

समावेशे सत्युत्तरमुत्तरं वहिर्भवति ॥ १०६ ॥

पूर्वं पूर्वमन्तरम् ॥ २०७ ॥

भवति ॥ २०७ ॥

---

१ तथाच श्रुतिः, "अथ हैषैव तुला यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत" इति।

२ वचनाद्विरोधाच्चाध्वर्योरन्योऽपि यजुर्वेदविहितस्य कर्मणः कर्ता भवतीति सूत्रार्थः।

३ हवींषि च पात्राणि च स्वामी च ऋत्विजश्च हविष्पात्रस्वाम्यृत्विजः तेषाम्।

ऋत्विजां च१ यथापूर्वम् ॥ २०८ ॥

ऋत्विजां च यथापूर्वं समावेश सत्युत्तमुत्तरं वहिर्भवति । पूर्वं पूर्वमन्तरं भवति ॥ २०८ ॥

न वा चोदितत्वात् ॥ २०९ ॥

न वायमन्तर्बहिर्भावो भवति । न ह्यस्य ब्राह्मणे चोदनेति । एवमभिहिते पुनराचीतेन व्याख्यायते । अचोदितत्वात् । नायमन्तर्बहिर्भावः स्याद्यदि न स्मर्यते स्मर्यते च । तस्मादस्त्येवेति २ ॥ २०९ ॥

गार्हपत्ये संस्काराः ॥ २१० ॥

३प्रतपानादयो भवन्ति ॥ २१० ॥

श्रपणं वाहवनीये ॥ २११ ॥

आहवनीये वा भवति । गार्हपत्ये वा ४ एवमेवहि श्रू-

१ चकारादृत्विजां तत्पात्राणां सत्त्रगणयागादौ स्वामिनां चैवमन्तर्बहिर्भावो ज्ञेयः ।

२ तद्यथा " तामन्तरेण यूपं चाग्निं च हरन्ति " इति । " प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात् " इत्यादि, अन्तर्बहिर्भावश्चात्रान्यवधिकः । तेन यथा अग्नेरव्यवहिता, यूपस्तु पात्रत्वाद्यपेक्षया बहिः, प्रतिप्रस्थाता तु ऋत्विक्त्वाद्यूपादपि बहिर्भवतीति भावः ।

३ प्रतपनं आदिर्येषां ते प्रतपनादयः, तेच अधिश्रयणपर्यग्निकरणपात्रप्रतपनादयः, एतेषां संस्काराणां विशेषवचनाभावे गार्हपत्ये ऽनुष्ठानमित्यर्थः ।

४ आदिविकल्पोऽयम्; नेच्छाविकल्पः । " तच्छ्रापिण " इति तच्छ्रापित्वस्य नियतत्वेनानुवादात् । तदुक्तम् " रूपं कालोऽनुनिर्वाप्यः श्रपणं देवतास्तथा, आदौ ये विधृताः पक्षास्त इमे सर्वदास्मृताः " इति । रूपं कर्म स्वरूपं दाक्षायण पौर्णमासादिकम्, काल उदितानुदितादिः, अनुनिर्वाप्यो वैमृधादिरूपः, श्रपणं हविः श्रपणं गार्हपत्ये वाहवनीये वा, देवता ऐन्द्रं भवति माहेन्द्रं वा, एतेषां विकल्पानां मध्ये यः प्रथमं स्वीकृतः स एव यावज्जीवं कर्तव्यः न पक्षान्तरम् । एवमेते पञ्चैवादिविकल्पाः । अन्ये सर्वेऽपीच्छा विकल्पा इति दिक् ।

यते ॥ २११ ॥
आज्येन यूपं समनक्तीति श्रूयते । तत्रैतच्चिन्त्यते किमाज्यशब्दः संस्कारनिमित्त उत जातिनिमित्त इति ? । किं तावत्प्राप्तं । प्रयोगप्राचुर्यात्संस्कारनिमित्त इत्येवं प्राप्त इदमाह—

## घृतमाज्यं लिङ्गात् ॥ २१२ ॥

आज्ये चोदिते घृतं प्रतीयात । जातिनिमित्त १ आज्यशब्दो न संस्कारनिमित्त इति । असंस्कृतेपि हि प्रयोगो दृश्यते। क्रेयमाज्यं क्षीणमाज्यं तैलमुपसेवनं वर्त्तते । नन्वयमेकदेशे प्रयोगः । सत्यमेवं । एकदेशप्रयोगोपि वाचकशक्तिमन्तरेण न भवति । लिङ्गाच्च लिङ्गं चाश्व मेधे महौदनंप्रकृत्य भवति । यदाज्यमुच्छिष्यते तेन रशनामभ्यज्यादत्त इति । असंस्कृतेप्याज्यशब्दप्रयोगो भवति । अपरे लिङ्गादिति वर्णयन्ति लिङ्गाद्द्रव्यमेव भवति । आज्यनिर्वापं प्रकृत्यामनन्ति । महीनां पयोसीति मह इति ह वा एतासामेकं नाम यद्घृतमिति २ ॥ २१२ ॥

## तस्य होमो नादेशे ॥ २१३

तस्येत्यवयवलक्षणा षष्ठी । द्रव्यान्तरस्याविधाने तेन होमः कर्त्तव्यः ३ ॥ २१३ ॥

---

१ प्रयोजनं 'आज्येन यूपमनक्ति' 'आज्यमासिच्योद्गात्रे सोम्यं प्रयच्छति' इत्येवमादौ संस्काराभावः ।

२ तथाच मण्डनमिश्राः —

'घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आज्यं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥
तैलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम् ।
तदभावेऽतसीस्नेह कौसुम्भं सर्पपोद्भवम् ॥
वृक्षस्नेहोऽथवा ग्राह्य पूर्वालाभे पर परः ।
तदभावे यवव्रीहिश्यामाकान्यतरोद्भवम् ॥
पिष्टमालोड्य यत्नेन घृतार्थे योजयेत् सुधीः ।
वृक्षतैलेषु पुन्नागनिम्बैरण्डोद्भवं त्यजेत्' इति ॥

३ तद्यथा 'सव्येनावृत्यदक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च' इति । 'नम' कृतायेति जुहाति' इति च । अत्र सर्वत्राज्येनैव होमो भवति ।

चात्वालात्पुरीषम् ॥ २१४ ॥

यज्ञकर्मणि यत्पुरीषं तचात्वालादाहार्यम् ॥ २१४ ॥

आहवनीययजतयो ध्रुवायाः१ ॥ २१५ ॥

सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति वचनात् । तत्र केचिदुपस्तरणाभिघारणे अपि ध्रौवादेवाज्यादिच्छन्ति । उपस्तरणाभिघारणे अपि यज्ञसाधने एवेति । तत्पुनरयुक्तम् । द्यवदानसंस्कारके ह्येते । न यज्ञसाधने । कुत एतत् । उत्पद्यमानवाक्य यागोऽष्टाकपालसाधनकपत्रोत्पन्न आग्नेयोऽष्टाकपालोऽमावास्यायामित्यनेन । तत्रान्यद्द्रव्यान्तरं न विकल्पते । न समुच्चीयते । न चवैपरीत्येन बाध्यबाधकभावेन वाभिसम्बध्यते । उत्पत्तिगुणाविरोधात् । अतोऽवदानसंस्कारोऽयम् । तथाचाह । स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति । सैवापाज्येन मिश्राहुतिर्हूयत इति । मिश्रणत्वेनाज्यमभिधीयते । न यागसाधनत्वेनेति । अथ संस्कारकाण्यपि ध्रौवाद् गृह्यते । तदानीं पुरोडाशाभिघारणोपस्तरणप्राणदानादीन्यपि तत एव प्राप्नुवन्ति । अस्तु तथेतिचेत् । न स्थाल्यानर्थक्यात् ॥ २१५ ॥

इडाप्राशित्राघारांश्चैके ॥ २१६ ॥

ध्रौवादेवेच्छन्ति । तत्रापि हि यज्ञसशब्दो भवति । पाकयज्ञियं वेव वा एतदिडया चरन्ति पुरस्तादिडायाः । तथा प्राशित्रं प्रजस्यामनन्ति । तथैव यज्ञस्यावदानमेनमवत्त्यर्दित शिरा वै यज्ञस्यैतयोरन्यतराघारयोरिति यज्ञसशब्दो भवति । एके तथेच्छन्ति । अयज्ञत्वात् । उपचारिकाण्येतानि यज्ञसशब्दनानि ॥ २१६ ॥

---

१ आहवनीये च आज्यहविष्कायागा भवन्ति ते ध्रुवायाः सकाशादाज्यमवदायकार्या इत्यर्थः । 'उपस्तृणात्यभिघारयत्याज्यस्य यज्ञं ध्रुवाया गृह्णाति' इतिश्रुतौ आज्यभागार्थत्वेन ध्रौवस्य बाधनात् इति ।

दक्षिणतो ब्रह्मयजमानयोरासने ॥ २०२ ॥

भवतः। ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते इति वचनात्। अथ हैषैव तुला यद्दक्षिणो वेद्यन्त इति प्रकृत्य तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीतेति ॥ २०२ ॥

पश्चाद्यजमानो वेदिस्पृक् ॥ २०३ ॥

ब्रह्मणः पश्चाद्यजमानो वेदिसलग्न आस्ते १ ॥ २०३ ॥

अध्वर्युः कर्मसु वेदयोगात् ॥ २०४ ॥

अध्वर्युवेदविहितस्य कर्मणश्चत्वार ऋत्विजः कर्त्तारः। तेषामनागृहीतकर्तृके कर्मण्यध्वर्युः कर्त्ता। कुत एतत्। वेदयोगात्। अध्वर्युणा हि वेदो युज्यते। समाख्यायते। अध्वर्युवेद इति। यदि तद्वेदविहितानामध्वर्युः कर्त्ता तदैतदुपपद्यते ॥ २०४ ॥

वचनविरोधाभ्यामन्यः२ ॥ २०५ ॥

तद्यथा प्रतिप्रस्थाता मन्थिनं जुहोति वचनात्। विरोधादपि वेपणोपधानयोर्युगपद्विधानादुपधानेऽग्नीत् ॥ २०५ ॥

हविष्पात्रस्वाम्यृत्विजाम्३ ॥ २०६ ॥

समावेशे सत्युत्तरमुत्तर बहिर्भवति ॥ १०६ ॥

पूर्वं पूर्वमन्तरम् ॥ २०७ ॥

भवति ॥ २०७ ॥

---

१ तच्चाच श्रुतिः, "अथ हैषैवतुला यद्दक्षिणो वेद्यन्त. स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत" इति।

२ वचनाद्विरोधाच्चाध्वर्योरन्योऽपि यजुर्वेदविहितस्य कर्मणः कर्ता भवतीति सूत्रार्थः।

३ हवींषि च पात्राणि च स्वामी च ऋत्विजश्च हविष्पात्रस्वाम्यृत्विजः तेषाम्।

चात्वालात्पुरीषम् ॥ २१४ ॥

यज्ञकर्मणि यत्पुरीषं तच्चात्वालादुग्राह्यम् ॥ २१४ ॥

आहवनीययजतयो ध्रुवायाः१ ॥ २१५ ॥

सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति वचनात् । तत्र केचिदुपस्तरणाभिघारणे अपि ध्रौवादेवाज्यादिच्छन्ति । उपस्तरणाभिघारणं अपि यज्ञसाधने एवेति । तत्पुनरयुक्तम् । द्व्यवदानसंस्कारके ह्येते । न यज्ञसाधने । कुत एतत् । उत्पद्यमानएवायं यागोऽष्टाकपालसाधनकएवोत्पन्न आग्नेयोष्टाकपालोभवतीत्यनेन । तत्रान्यद्द्रव्यान्तरं न विकल्पते । न समुच्चीयते । न चवैपरीत्येन बाध्यबाधकभावेन चाभिसम्बध्यते । उत्पत्तिगुणविरोधात् । अतोद्व्यवदानसंस्कारोयम् । तथाचाह । स आज्यस्योपस्तीर्य द्विर्हविषोवदायाथोपरिष्टादाज्यस्याभिघारयति । सैवापाज्येन मिश्राहुतिर्हूयत इति । मिश्रणत्वेनाज्यमभिधीयते । न यागसाधनत्वेनेति । अथ संस्कारकाण्यपि ध्रौवाद् गृह्यते । तदानीं, पुरोडाशाभिघारणोपस्तरणप्राणदानादीन्यपितत एव प्राप्नुयन्ति । अस्तुतथेतिचेत् । न स्वात्यानर्थक्यात् ॥ २१५ ॥

इडाप्राशित्राघारांश्चैके ॥ २१६ ॥

ध्रौवादेवेच्छन्ति । तत्रापि हि यज्ञसंशब्दनं भवति । पाकयज्ञिययेव वा एतदिडया चर्यरिपुरितीडायां । तथा प्राशित्रं प्रकृत्यामनन्ति । तद्यथैव यज्ञस्यावदानमेवमेतदिति शिरो वै यज्ञस्यैतयोरन्यतरआघारयोरिति यज्ञसंशब्दनं भवति । एके तत्रेच्छन्ति । अयज्ञत्वात् । उपचारिकाण्येतानि यज्ञसशब्दनानि ॥ २१६ ॥

---

१ आहवनीये ये आज्यहविष्कायागा भवन्ति ते ध्रुवायाः सकाशादाज्यमवदायकार्या इत्यर्थ. । ' उपस्तृणन्नाभिघारयन्नाज्यस्य यजन्ध्रुवाया गृह्णाति ' इतिश्रुतौ आज्ययागार्थत्वेन ध्रौवस्य बोधनात् इति ।

यते ॥ २११ ॥
आज्येन यूपं समनक्तीति श्रूयते । तत्रैतच्चिन्त्यते किमाज्यशब्दः संस्कारनिमित्त उत जातिनिमित्त इति ? । किं तावत्प्राप्तं । प्रयोगप्राचुर्यात्संस्कारनिमित्त इत्येवं प्राप्त इदमाह—

## घृतमाज्ये लिङ्गात् ॥ २१२ ॥

आज्ये चोदिते घृतं प्रतीयात् । जातिनिमित्त १ आज्यशब्दो न संस्कारनिमित्त इति । असंस्कृतेपि हि प्रयोगो दृश्यते । क्षेयमाज्यं क्षीणमाज्यं तैलमुपसेवन वर्त्तते । नन्वयमेकदेशे प्रयोगः । सत्यमेवं । एकदेशप्रयोगोपि वाचकशक्तिमन्तरेण न भवति । लिङ्गाच्च लिङ्गं चाश्व मेधे महौदनंप्रकृत्य भवति । यदाज्यमुच्छिष्यते तेन रथनामभ्यञ्ज्यादृत्त इति । असंस्कृतेप्याज्यशब्दप्रयोगो भवति । अपरे लिङ्गादिति वर्णयन्ति लिङ्गाद्रव्यमेव भवति । आज्यनिर्वापं प्रकृत्यामनन्ति । महीनां पयोसीति मह्य इति ह वा एतासामेकं नाम यद्घृतवामिति २ ॥ २१२ ॥

## तस्य होमो नादेशे ॥ २१३

तस्येत्यवयवलक्षणा षष्ठी । द्रव्यान्तरस्याविधाने तेन होमः कर्त्तव्यः ३ ॥ २१३ ॥

---

१ प्रयोजनं 'आज्येन यूपमनक्ति' 'आज्यमासिच्योदूगात्रे सोम्यं प्रपच्छति' इत्येवमादौ संस्काराभावः ।

२ तथाच मण्डनमिश्रा—

'घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आज्यं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥
तैलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम् ।
तदभावेऽतसीस्नेह कौसुम्भं सर्षपोद्भवम् ॥
वृक्षस्नेहोऽथवा ग्राह्यः पूर्वालाभे परः परः ।
तदभावे यवव्रीहिश्यामाकान्यतरोद्भवम् ॥
पिष्टमालोड्य यत्नेन घृतार्थे योजयेत् सुधीः ।
वृक्षतैलेषु पुन्नागनिम्बैरण्डोद्भवं त्यजेत् ' इति ॥

३ नथपा 'सव्येनावृत्यदक्षिणार्ग्ना जुहोत्यग्नय इति सरस्वत्या इति च' इति । 'नम' रुनायेति जुहोति ' इति च । अत्र सर्वत्राज्येनैव होमो भवति ।

## अवषट्कारातिरेकाच्च ॥ २२२ ॥

अवषट्कारास्वाहुतिषु द्वितीयमेवावदानमतिरिक्तं ज्ञापयति। कथम्। तद्धि चतुरवत्तं भवतीदं वा अनुवाक्याय याज्याय वषट्कारो- य सा देवता चतुर्थी यस्यै देवतायै हविर्भवतीति प्रकृत्याह। अति- रिक्त इह तदवदानं यत्पञ्चममिति। तेनावषट्कारास्वाहुतिष्वनु- वाक्याद्यभावाद्द्वितीयमेवावदानमतिरिक्तमिति ज्ञापितं भवति। तथा यच्चतुरुपैर्दद्विरहौषीरथ के ते द्वे आहुती इति द्वयोरतिरि- क्ततां दर्शयति॥ २२२॥

## व्रीहीन्यवान्वा हविषि ॥ २२३ ॥

हविषि चोदिते व्रीहीन्यवान्वा प्रतीयात्॥ २२३॥

## तस्या द्विरवद्यति ॥ २२४ ॥

तस्य सकलस्यैव देवतोद्देशेन गृहीतस्य होमे प्राप्ते वचना- द्विरवद्यति॥ २२४॥

## त्रिर्जमदग्नीनाम् ॥ २२५ ॥

जमदग्नीनां त्रिरवद्येत्। पञ्चावत्तं १ जमदग्नीनामिति व- चनात्॥ २२५॥

## २पश्चात्तृतीयम् ॥ २२६ ॥

---

१ एवं च यत्र यत्रान्येषां चतुरवत्तमाज्यभागपत्नीसंयाजप्रधान- यागादौ तत्र सर्वत्र जमदग्नीनां पञ्चावत्तमेव कर्त्तव्यम्। अग्नि- होत्रहोमेऽपि तेषां पञ्चावत्तमेव पठ्यते मानवे "चतुः पञ्चकृत्वो वा" इति। आपस्तम्बोऽपि। त्रिर्जमदग्नीनाम्, इति सूत्रयामास। अत्र जमदग्निपदमुपलक्षणम्, अन्येषामपि पञ्चावत्तं स्मर्यते। तथाहि—

"जमदग्निवत्सविदा चार्ष्टिषेणास्तथैव च।
पञ्चावत्तिन एतेऽन्ये सर्वे चतुरवत्तिन." इति॥

२ तृतीयमवदानं हविषः पश्चाद्भागादवदेयम्। प्रथमद्वितीये तु मध्यात्पूर्वार्धादिति वक्ष्यते।

१प्राञ्चावाघारौ ॥ २१७ ॥

होतव्यौ ॥ २१७ ॥

२विदिशावेके ॥ २१८ ॥

जुह्वति ॥ २१८ ॥

आहवनीये होमाः श्रुतिसमाख्यानाभ्याम् ॥ २१९ ॥

यदाहवनीये जुह्वतीति श्रुतिः । आ यस्मिन्नस्मिन्नहूयत इति आहवनीयसमाख्यानम् ॥ २१९ ॥

जुह्वावचने ॥ २२० ॥

अवचनेऽन्यस्य होमार्थस्य द्रव्यस्य जुह्वा होमः कर्त्तव्यः । कुत एतत् । समाख्यानात् हूयते ऽनयेति जुहूः । एतच्च दर्शपूर्णमासप्रकरण एव तद्विध्यन्तप्राहकेषु च । तत्रैव जुहूदंष्टेति ॥ २२० ॥

सकृद्गृहीतार्थावाप्तेः ॥ २२१ ॥

सकृद्गृहीतेन होमः कर्त्तव्यः । सकृद्गृहीतेनैव हि होमार्थाभिनिर्वृत्तिरवाप्ता भवतीति ॥ २२१ ॥

किञ्च—

---

१ पूर्वाघार उत्तराघारश्चेतौ द्वावप्याघारौ प्राञ्चौ, प्राक् संस्थौ होतव्यौ ऋजू सन्ततौ दीर्घौचेति सूत्रार्थः । 'ऋजुमाघारयति' 'सन्ततमाघारयति' 'दीर्घमाघारयति' 'प्राञ्चमाघारयति' इति श्रुतेः । सूत्रे प्राञ्चावित्युक्तिस्तु ऋज्वाद्युपलक्षिकेति भावः ।

२ एके शाखिनः आघारौ विदिशौ जुह्वति, आहवनीयस्योत्तरश्रोणेरारभ्य दक्षिणांसपर्यन्तं पूर्वाघारम्; दक्षिणश्रोणेरारभ्योत्तरांसपर्यन्तमुत्तराघारमिति । तथा च सूत्रान्तरम् 'उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणतोऽजुहोति' 'तथा दक्षिणपश्चार्धादारभ्याविच्छिन्नमुत्तरतो जुहोति' इति ।

द्विश्चाभिघारणम् ॥ २३२ ॥

स्विष्टकृत्येव भवति १ ॥ २३२ ॥

२अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः ॥२३३॥

तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृतएव तत्पुनराप्यायतीति ॥ २३३ ॥

सर्वहुत एककपालः ३ ॥ २३४ ॥

कर्त्तव्यः। द्यावापृथिवीयप्रकृतित्वात्। तत्प्रकृतित्वं च ध-क्ष्यत्युपरिष्टात् ॥ २३४ ॥

४अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहीति ॥ २३५ ॥

चतुर्थ्यै तेनानुवाचनं कर्त्तव्यम् ॥ २३५ ॥

आश्राव्यप्रैषे च ॥ २३६ ॥

चतुर्थ्यन्तेनैव प्रेषणम्। यत्र मैत्रावरुणस्य प्रैषः। यथा इन्द्रा-

१ 'सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति' 'अथास्य चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति, इति 'श्रुति-द्वयात्।

२ प्रधानार्थं हविषोऽवदानं कृत्वा हविषो यावद्भ्यः प्रदेशेभ्योऽवदानग्रहणं कृतं तत्राज्येन प्रत्यभिघारणं कार्त्तव्यं, स्विष्टकृतः प्राक्, तस्मिन् कृते तु प्रत्यभिघारणं न कर्त्तव्यम्। तथा च श्रुतिः "तस्मात्" इत्यादि।

३ 'अथैत (? ) सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति' इति श्रुतेः।

४ या देवता यस्मिन् यागे भवति तद्वाचकममुष्मै इति चतुर्थ्यन्तं प्रयुज्यानुब्रूहीति प्रैषः कर्तव्य इत्यर्थः, यथा अग्नयेऽनुब्रूहि सोमायानुब्रूहि इति।

अवदेयम् ॥ २२६ ॥

सर्वेषां वोभयमविधानात् ॥ २२७ ॥

सर्वेषां वोभयं भवतीति । चतुरवत्तं पञ्चावत्तं वा । कुत एतत् । अविधानाज्जमदग्नीनां पञ्चावत्तत्वस्य । माध्यन्दिनानां पठ्यते । तद्धि चतुरवत्तं भवति उतो पञ्चावत्तमेव भवतीति । शाखान्तरे तु पञ्चावत्तं जमदग्नीनामिति । तेन जमदग्नीनां पञ्चावत्तमेव इतरेषां चतुरवत्तं पञ्चावत्तं वा ॥ २२७ ॥

मध्यात्पूर्वार्द्धाच्चासम्भिदन्नङ्गुष्ठपर्व-
मात्रमवदानम् ॥ २२८ ॥

हविषो मध्यात्पूर्वार्द्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानं गृह्णीयात् । असम्भिन्दन्नवदानमर्यादां कुर्वन् । कुत एतत् । अवदानसम्भेदेनहि मर्यादाबाधः । मर्यादाबाधे च मध्यात्पूर्वार्द्धादित्यस्य बाधः ॥ २२८ ॥

मात्रावद्दधिपयसोः ॥ २२९ ॥

दधिपयसोरपि तन्मात्रमेवावदेयम् १॥ २२९ ॥

आद्यन्तयोराज्यम् ॥ २३० ॥

कर्त्तव्यमिति शेषः । स आज्यस्योपस्तीर्य द्विर्हविषोवदाया-थोपरिष्टादाज्यस्याभिघारयतीति२ ॥ २३० ॥

एकमत्यवाय; स्विष्टकृतः ॥ २३१ ॥

स्विष्टकृतस्त्ववदानं एकमवदानं प्रत्ययति ॥ २३१ ॥

---

१ तयोर्हि द्रवत्वात्स्रुवेणावदानं सामर्थ्यात्; स्रुचपुष्करस्यैतावत्परिमाणत्वादिति भावः ।

२ तच्च ध्रुवाया अवदेयम्, 'उपस्तृणन्नभिघारयन्नाज्यस्य यजन् ध्रुवायां गृह्णाति' इति वचनात् ॥

द्विश्चाभिघारणम् ॥ २३२ ॥

स्विष्टकृत्येव भवति १ ॥ २३२ ॥

२अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः ॥२३३॥

तस्मादस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृतएव तत्पुनराप्यायतीति ॥ २३३ ॥

सर्वहुत एककपालः ३ ॥ २३४ ॥

कर्त्तव्यः । द्यावापृथिवीयप्रकृतित्वात् । तत्प्रकृतित्वं च प- क्ष्यत्युपरिष्टात् ॥ २३४ ॥

४अनुवाचनप्रैषो यथादेवतममुष्मा

अनुब्रूहीति ॥ २३५ ॥

चतुर्थ्या तेनानुवाचनं कर्त्तव्यम् ॥ २३५ ॥

आश्राव्यप्रैषे च ॥ २३६ ॥

चतुर्थ्यन्तेनैव प्रेषणम् । यत्र मैत्रावरुणस्य प्रैषः। यथा इन्द्रा-

१ 'सकृदवद्यत्योपरिष्टाद्विराज्यस्याभिघारयति ' ' अथास्य चरोः सकृदवद्यत्योपरिष्टाद्विराज्यस्याभिघारति , इति श्रुति- भ्याम् ।

२ प्रधानार्थे हविषोऽवदानं कृत्वा हविषो यावद्भ्यः प्रदे- शेभ्योऽवदानग्रहणं कृतं तत्राज्येन प्रत्यभिघारणं कर्त्तव्यं, स्विष्ट- कृतः प्राक्, तस्मिन् कृते तु प्रत्यभिघारणं न कर्त्तव्यम् । तथा च श्रुतिः "तस्मात्" इत्यादि ।

३ ' अथैत ँ सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति ' इति श्रुतेः ।

४ या देवता यस्मिन् यागे भवति तद्वाचकममुष्मै इति चतुर्थ्यन्तं प्रयुज्यानुब्रूहीति प्रैषः कर्त्तव्य इत्यर्थः, यथा अग्नयेऽनुब्रूहि सोमायानु- ब्रूहि इति ।

गिरुर्यां च्छागस्य वपां मेदः प्रेष्येति ॥ २३६ ॥

अमुं यजेति ॥ २३७ ॥

यत्र मैत्रावरुणस्य प्रैषामावस्तत्रामुं यजेति द्वितीयान्तेन प्रैषः१ ॥ २३७ ॥

प्रैषानुवाचने षष्ठी वपायै धानासोमेभ्य इति परिहाप्य ॥ २३८ ॥

प्रैषसम्बद्धेनुवाचने द्रव्ये षष्ठी विभक्तिर्भवति । वपायै धानासोमेभ्य इति परिहाप्य ॥ २३८ ॥

असावित्यपनोदे ॥ २३९ ॥

यत्रासौ यजामी यजेति । यथा पुनरभ्युद्गीतेषु । तत्र देवताविभक्तिश्चापनोदे वर्त्तते। अथवासावित्यपनोदे इति । यत्र मन्त्रेऽसाविति सर्वनामशब्दस्तस्यापनोदं कृत्वा यत्तत्राभिधेयस्तन्नामादेशः कार्यः २ ॥ २३९ ॥

सवषट्कारासु तिष्ठन्दक्षिणत उदङ् प्राङ् वषट्कृते ॥ २४० ॥

सवषट्कारास्वाहुतिषु दक्षिणतो वितानस्योदङ् प्राङ्मुखस्थितो वषट्कृते जुहोति३ ॥ २४० ॥

सह वा ॥ २४१ ॥

१ तद्यथाग्निं यज सोमं यजेति ।

२ यथा 'सम्राडयमसौ' 'बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ, 'इममुष्य पुत्रममुष्यै पुत्रमित्यादि ।

३ वषट्कारात्पूर्वं होमे निन्दा च श्रूयते 'देवपात्रं वा एष यद्वषट्कारस्तद्यथा पात्रउद्धृत्य प्रयच्छेदेवं तदय यत्पुरा वषट्काराज्जुहुयाद्यथायो भूमौ निदिग्धं तदमुया स्यादेवं तत्' इति ।

सहवा वषट्कारेण जुहुयात् । वाशब्दो विकल्पार्थः । तस्मात् सह वै वषट्कारेण जुहुयादवषट्कृते वेति ॥ २४१ ॥

## १उभयत आज्यं हविषः ॥ २४२ ॥

क्षारयेत् ॥ २४२ ॥

## सह वा ॥ २४३ ॥

एवमेव हि श्रुतत्वात्२ । अनुवाचनप्रैषौ यथादेवतमिति ॥२४३॥

प्रैषाः प्रक्रान्ता अतस्तद्विषयमेवैतच्चिन्त्यते । किमग्नीदग्नीन्विहरेत्येवमादयः कर्मचोदका, उत सम्बोधनार्था मन्त्रा इति ? । ननु चोक्तमाचार्येण निगदानां मन्त्रत्वम । 'ऋचो यजूंषि सामानि निगदा मन्त्रा इति । सत्यमेवम् । मन्त्रवैलक्षण्यात्तदेवाक्षिप्यते । स एव च निर्णयो भविष्यति । किं वैलक्षण्यमिति चेत् । उच्यते । केचित्करणमन्त्रा येनुष्ठानकाले पदार्थान्स्मारयन्ति । केचिज्जपमन्त्रा अदृष्टार्थाः । अपरे क्रियमाणानुवादिनः क्रियमाणमर्थमनुवदन्ति । यथाग्निमन्थनीयादयः । न च तद्रूपाः प्रैषाः । अपि च विधिविभक्तियुक्ता एते अग्नीदग्नीन्विहर बर्हिस्तृणीहीति । तेनामन्त्रत्वाशङ्काविनिवृत्त्यर्थमिदमारभ्यते—

## वर्त्तमानापदेशाच्चोदनाशब्दात् श्रुत्यर्थाभावात्तवैवेति वचनान्निर्देशात्कर्मचोदकः ॥ २४४ ॥

अग्नीदग्नीन्विहरेत्येवमादि कर्मचोदकः प्रतिपत्तव्य । कुत

---

१ होमकाले हविष उभयत आज्यं होतव्यम, पूर्वमल्प हुत्वा ततो हविर्हूयते पुनश्चोपर्याज्यमित्यर्थः ।

२ 'प्रदग्धाहुतिर्ह वा अन्योऽध्वर्युरिति प्रकृत्य "अथ हैना एष सन्तर्पयति योऽयमाज्य ( हुत्वावदानानि जुहोत्यथ पुनरन्ततः आज्येनाभिजुहोत्येव हैनाः सन्तर्पयति" इति, तथा "तदुहोवाच याज्ञवल्क्यो यद्वा उपस्तीर्यावदायाभिघारयति तद्वेयैनाः सन्तर्पयति" इति च श्रुतेः ।

एतत्। वर्त्तमानापदेशात्। वर्त्तमानमर्थमपदिशन्त्येवमादयोनुष्ठेयत्वेन। अग्निविहरणक्रियानुष्ठेयत्वेनोच्यते। किं च चोदनाशब्दात्। चोदनाशब्दो हि भवति। लिङ्लोटौ कर्मचोदकौ। लोड्वचनानि चैतानि श्रूयन्ते। अग्नीदग्नीन्विहर बर्हिस्तृणीहीत्येवमादीनि। अतः कर्मचोदकः। यदि च विधिविभक्तियोगेपि कर्मचोदकत्वं नाश्रीयते। लोट्श्रवणमनर्थकमेव स्यात्।

## श्रुत्यर्थभावाच्च।

अपि च लोट्श्रवणादेवायमर्थो गम्यते। यदुक्तं कर्मचोदकत्वम्। यदि च विधिविभक्तियोगेपि कर्मचोदका न भवेयुः श्रुतार्थहानिः स्यात्।

किञ्च—

## तथैवेति वचनात्।

मन्त्रवैलक्षण्यमेषाम्। तथैव वचनाः प्रैषाः पठ्यन्ते। ब्राह्मणमर्पयितवै इत्येवमादयः। इति वचनाच्च मन्त्रा यथा उरु प्रथा उरुप्रथस्वेति प्रथयत्येवैनमेतदुच्यते यज्ञपतिः प्रथतामिति च। अतोपि मन्त्रवैलक्षण्यादमन्त्रत्वम्।

## निर्देशात्।

अपि च निर्दिष्टा मन्त्राः। अहेबुध्न्यमन्त्रं मे पाहि यसृचयत्रयी विदो विदुः ऋचो यजूंषि सामानीति तन्मध्ये चाशाम्नानादमन्त्रत्वम्। अतः।

## कर्म चोदकः।

अपरे निर्देशादित्यन्यथा वर्णयन्ति विधिविभक्तियोगास्त्वनुवन्ति कर्मनिर्दिष्टमिति ॥ २४४ ॥

एवं प्राप्त आह—

## मन्त्रो वा समभिव्याहारात् ॥ २४५ ॥

वा शब्दः पक्षव्यावृत्तौ। मन्त्रो चैवञ्जातीयकः प्रतिपत्तव्यः।

कुत एतत् । समभिव्याहारात् । य एभिरर्थोऽभिधीयते स समभिव्याहृतो वाक्यान्तरेण विहरत्यग्नीनित्येवमादिना । न च विहितस्य विधानमवकल्पते । अभिधानं तु सम्भवति । तस्मान्मन्त्र एव जातीयकः प्रतिपत्तव्यः । अथवा समभिव्याहारादित्यभिव्याहरणमेषां प्रयोगकाले चाद्यते । उत्तिष्ठन्नाहाग्नीन्विहरेति । अथाह प्रोक्षणीरासादयेति च । यदि कर्मचोदका एते स्युरभिव्याहरणमेषां न चोद्येत । चोद्यते च तस्मान्मन्त्रा इति । यत्पुनरुक्तं वर्त्तमानापदेशादिति तन्मन्त्रत्वेऽपि न विरुध्यते । वर्त्तमानापदेशको हि मन्त्रो भवति । यदुच्यते । चोदनाशब्दाच्छ्रुत्यर्थाभावादिति । तत्रोच्यते । मन्त्रत्वेऽप्येतन्न दुष्यति । न लोड्विभक्तेर्विधानमेवैकोऽर्थः । प्राप्तकालतायामपि लोट् स्मर्यते । अग्नीदग्नीन्विहर बर्हिस्तृणाहीति च । अग्नीदित्यभिधीयते विहरणस्तरणयोः प्राप्तः काल इति । यदपि मन्त्रवैलक्षण्यमुक्तम् । तवै चेति वचनादिति तदप्यनैकान्तिकम् । तवै वचना अपि मन्त्रा दृश्यन्ते । कन्या इव वहतु मेतवा उ इति । मन्त्रश्चायम् । अनितिवचना च मन्त्रा दृश्यन्ते । स जुहोत्येष स्य वाजी क्षिपणिं तुरण्यतीत्येवमादयः तस्मादवैलक्षण्यम् । यच्चोक्तं निर्देशादिति निर्दिष्टा हि मन्त्रा ऋचो यजूंषि सामानीति निगदानामनिर्देशादमन्त्रत्वमित्यत्र ब्रूमः । यजुषां निर्देशात् निगदोऽपि निर्दिष्ट एवेत्यदोषः । अथवा वर्त्तमानापदेशादित्येवमादीनां व्याख्यान्तरं प्रस्तूयते । पूर्वत्रापरितोषात् । उक्तमेव हि निगदानां मन्त्रत्वमिति । विषयव्याप्तिश्च भवति । इदमामनन्ति आग्नेयोऽष्टाकपालो भवति ऐन्द्राग्नो द्वादशकपालो भवतीत्येवमादि । तत्रैतत्सन्दिह्यते । किमेते विधय उतार्थवादा आहोस्विन्मन्त्रा इति । तत्र तदुच्यते नैते विधयो वर्त्तमानापदेशात् । यो हि वर्त्तमानमर्थमुपदिशति सोऽनुवादसरूपत्वान्न विधिः स्यात् । विधौ ननु तर्हि कीदृशादवगम्यते । अत आह । चोदनाशब्दात् । लिङन्ताल्लोडन्तात्तव्यान्तात् । एते हि विधौ स्मर्यन्ते । न चाग्नेयोऽष्टाकपालो भवतीत्येवमादयो लिङन्ता न लोडन्ता नापि तव्यान्ताः । अतो न विधयोऽर्थवादास्तर्हि भवन्त्वित्याशङ्क्य आह । श्रुत्यर्थाभावात् । अर्थवादा न भवन्त्येते श्रुतस्य ह्यर्थस्यार्थवादो भवति स्तावको । न चात्र श्रुतोऽर्थो विद्यते य एभिः संस्तूयेत । तस्मान्नार्थवादाः । मन्त्रास्तर्हि भवन्तु । मन्त्रा अपि न भवन्त्येते । कुत एतत् ।

श्रुत्यर्थाभावादेव । श्रुतस्य ह्यर्थस्य मन्त्रः प्रयोगकालेऽभिधायको भवति । न चासावस्तीति । तथैवेति वचना इति वचनाश्च मन्त्रा ब्राह्मणे पठ्यन्ते । न चैव तल्लक्षणयुक्तास्तस्मादप्यमन्त्रत्वमिति । तस्मात्सर्वप्रकाराभावादानर्थक्ये प्राप्त आह । निर्देशात्कर्मचोदकः । कर्मचोदक एवं जातीयकः प्रतिपत्तव्यः । शक्नोति ह्यसौ अर्थवादपदसंयोगात् पञ्चमलकारपरिकल्पना द्वारेण विधानं कर्तुम् । ननु च वर्तमानापदेशकोऽयं भवति कथमिवानुवादस्वरूपत्वाद्विधिः स्यात् । यथा गच्छति पठतीत्येवमाद्यो न विधयः । एवमेतेऽपि । अत्रोच्यते । आग्नेयोऽष्टाकपालो भवतीति नानुवादोऽयम् । न ह्यसौ विहितः क्वचिद्येनानूद्यते । तस्मादष्टाकपालो भवतीति भावयितव्य एवमेवगम्यते । न चाभावितोऽष्टाकपालो भवतीति । तस्माद्भावयितव्य एव । अर्थवादपदसंयोगोऽप्युक्त एव । अग्निर्वै देवानां मुखमित्येवमादि । यदि वर्तमानापदेशकस्यापि विधायकत्वमाश्रीयते । गायत्रेण त्वा च्छन्दसा परिगृह्णामीत्येवमादीनामपि विधायकत्वमस्त्वित्येवं प्राप्त आह ।

## मन्त्रो वा समभिव्याहारात् ।

मन्त्रो वैवं जातीयः स्यात् । कुतः समभिव्याहारात् । य एवमादिभिरर्थो विधीयते । स वाक्यान्तरेण विहित एवेति । तस्मान्मन्त्रा एवमादय ॥ २४५ ॥

## १अर्थप्रसंख्यया द्रव्योपकल्पनम् ॥ २४६ ॥

कर्तव्यमिति शेष ॥ २४६ ॥

---

१ अर्थ प्रयोजनम् । तथाच प्रयोजनपरिगणनया शूर्पाग्निहोत्रहवण्यादिद्रव्याणां समीपे स्थापनं कर्त्तव्यमित्यर्थः । अर्थात् करिष्यमाणे कर्मणि उपयोक्ष्यमाणानि । सर्वाणि द्रव्याणि गणयित्वा कर्मारम्भात् प्रागेवाग्नीनां समीपे स्थापनीयानि अन्यथा कालविलम्बेन प्रधानकर्मबाधः स्यादिति तात्पर्यम् ।

१चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥ २४७ ॥

कर्तव्यानीति शेषः ॥ २४७ ॥

अत्रोक्तमुत्तरं२ हविषि ॥ २४८ ॥

हविषा यत्पश्चादभिहितं तदासादनादिषु उत्तर देशतः कालतश्च प्रतिपत्तव्यम् २ ॥ २४८ ॥

एकद्रव्ये साज्ये वेदेनोपग्रहणम् ३ ॥ २४९ ॥

साज्य एकस्मिन्द्रव्ये वेदेन उपग्रहो भवति। एकद्रव्यग्रहणमनेकद्रव्यव्युदासार्थम् ४ ॥ २४९ ॥

स्फ्येनान्यत ॥ २५० ॥

आज्यादन्यत्रान्येन द्रव्येण द्रव्यवत्येकस्मिन् स्फ्येनोपग्रहणम् ॥ २५० ॥

५कुशैरसत्सु ॥ २५१ ॥

असत्सु वेदचमसद्वितीयद्रव्येषु कुशैरुपग्रहणम् । अपरेन्यथा वर्णयन्ति । असत्सुद्रव्येषु जपोपस्थानादिषु कुशैरुपग्रहणम् ॥ २५१ ॥

१ चर्माणि कृष्णाजिनाधिषवणशार्दूलचर्मादीनि उत्तरलोमानि प्राग्ग्रीवाणि च स्तरणीयानि इत्यर्थः । "तदुत्तरतः पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति" इति श्रुतेः ।

२ तथाच महापितृयज्ञे 'स तत्र जुहूमासादयत्यथ पूर्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना अथ मन्थमि'ति। अत्र दिग्विपर्ययेण प्राच्येवोत्तरा तेनैवमनूद्यत इति भावः ।

३ दक्षिणहस्तस्थस्य साज्यस्यैकद्रव्यस्य हस्तकम्पनादिनाज्यस्कन्दनवारणार्थं सव्यहस्तगृहीतवेदेनाधारणमुपग्रहणमुच्यते । यथा "दर्भाग्रविभ्रेणोपगृह्य' इति।

४ तेन जुहूपभृतोर्द्वयोर्ग्रहणे न वेदोपग्रहः ।

५ तथाच स्मृतिः "सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः" इति।

पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकालेस्[१]ह्वादयन् ॥ २५२ ॥

एवमेव श्रुतत्वात् । अस्[१] ह्वादयन् शब्दमकुर्वन् ॥ २५२ ॥

इदमामनन्ति । अभिजिता यजेत विश्वजिता यजेतेत्यस्य-लमयुक्ताश्चोदनास्तत्र चिन्त्यते । किमेषु फलमस्त्युत नास्तीति ? । यदा चास्ति तदा यत्किञ्चिदुत स्वर्ग इति ? किं तावत्प्राप्तम् । फल-श्रवणाभावान्नास्ति फलमित्येव प्राप्त उच्यते—

[२]वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥ २५३ ॥

सामर्थ्याद्भवितव्यमत्र फलेन । एवमेताश्चोदनाः समर्था अ-र्थवत्यो भवन्ति । इतरथा सापेक्षाः सन्त्योनर्थिकाः स्युः । न च वेदे शब्दमात्रस्याप्यानर्थक्यमिष्यते । यत्र साकाङ्क्षं वाक्यं तदध्याहारेण वानुषङ्गेण वा निराकाङ्क्षं कर्त्तव्यम् । एवं चार्थवद्भवति । तेनेह स्वर्गकामपदानुषङ्गः कार्यः । विश्वजिता यजेत स्वर्गकाम इति नै-राकाङ्क्ष्यम् । ननु च पशुकामादिपदानुषङ्गः कस्मान्न क्रियते । अ-त्रोच्यते । स्वर्गमेव पुरुषैरभिवाञ्छ्यते । तदेव सामर्थ्यादनुषज्य-ते । नान्यानि फलवाक्यानि ॥ २५३ ॥

एककर्मणि गुणविशेषे फलविशेषः ॥ २५४ ॥

एकस्मिन्कर्मणि गुणविशेषे फलविशेषण[३] भवितव्यमाम्नान-सामर्थ्यात् ॥ २५४ ॥

१ तदुक्तम् " इत्यमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृ-ह्योपभृत्यधिनिदध्यात् " इति । तथा " ते अस्[१] शिञ्जयन्नाददीत " इति श्रुतिश्चयाम् ।

२ अश्रुतफलेषु विश्वजिदादिषु स्वर्गः फलत्वेन कल्पनीय, कु-त. ? सामर्थ्यादित्यर्थ ।

३ तद्यथा, अग्न्याधेय पूर्णाहुत्यन्तमिष्ट्यन्तं च, तत्र पूर्णाहुत्यन्त-पक्षादिष्ट्यन्तपक्षे फलभूयस्त्वम्, तत्रापि षड्दक्षिणापक्षाद्द्वादशद-क्षिणापक्षे फलाधिक्यम्, ततोऽपि चतुर्विंशतिदक्षिणापक्षे । एवमा-ङ्गाधिक्य फलाधिक्यम्, इतरथा तद्विधानवैयर्थ्यप्रसङ्ग इति भाव ।

दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु
यजमानं प्रतीयात् ॥ २५४ ॥

दानादिनिगदव्याख्यातानि तेषां कर्त्तारं यजमानं प्रतीयात् १ ॥ २५४ ॥

खातलूनच्छिन्नावहतापिष्टदुग्धदग्धेषु
यजुष्क्रियासम्भवात् ॥ २५५ ॥

खाते यूपावटे । लूने बर्हिषि । छिन्ने यूपे । अवहतेषु व्रीहिषु । पिष्टेषु तण्डुलेषु । दुग्धे पयसि । दग्धे महावीरे । तद्यजुषा क्रिया न भवति । कुत एतत् । द्वाराभावात् । क्रियाद्वारको हि मन्त्र इति । एतच्चासम्भवविषयमेव द्रष्टव्यम् २ ॥ २५५ ॥

---

१ दाने तावत् "अन्वाहार्यं ददाति" "तस्मादग्नीधे प्रथमाय दक्षिणां ददाति" इत्यादौ यजमानस्यैव दानकर्तृत्वम् । वाचने "आर्षेयेषास इति वाचयति" "रेवती यजमान इति वाचयती" त्यादौ तस्यैव वाचनकर्तृत्वम् । एवमेव "आश्विनं गृह्णात्यन्वारब्धेवा" "वर वृत्वा ददाति" इत्यादावपि यजमानस्यैव कर्तृता ज्ञेयेति भावः ।

२ याज्ञिकास्त्वेवमाहुः 'एषु लोकसिद्धेष्वपि गृहीतेष्वपि यजुः क्रिया यजुर्युक्ता क्रिया यथाकथं चित् कर्तव्या कुतः ? सम्भवात् । सम्भवति हि यथाकथं चिद्यजुः क्रिया । अथवा असम्भवात् । अन्यस्याः क्रियायाः कर्ममध्ये असम्भवात् । यश्च यत्रौ यूपाहरणार्थं सन्निकृष्टे अलाभात् देशान्तरे विप्रकृष्टे गम्यते तदा प्रधानकालविरोधो भवति । यदा चैकदीक्षापक्षः तदा महावीरादिकमेकेनाह्ना निष्पादयितुं न शक्यते इति । तदुक्तं मण्डनमिश्रैः—

"छिन्नं लूनं च पिष्टं च सान्नाय्यं मृन्मयं तथा ।
लोकसिद्धं गृहीतं चेन्मन्त्रा जाप्याः फलाशयात् ॥
छिन्नादिलोकसिद्धं चेदादिदेत कर्तुं प्रति ।
तत्तन्मन्त्रजप प्राह भारद्वाजः श्रुताहृतम् ॥
छिन्ने चावहते पिष्टे दग्धे लूने च मृन्मये ।
खाते च लौकिके प्राप्ते जपोनास्त्येव याजिनाम्" इति ।

रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा
पित्र्यमात्मानं चालभ्योपस्पृशेदपः ॥ २५६ ॥

रौद्रादिमन्त्रमुक्त्वा च शब्दात्कर्म च कृत्वा उपस्पृशेदप इति। दर्शयति चैवं रुद्रियेणेव वा एतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमय इति २५६ ॥

त्रयीसारसमुद्धारसूत्रव्याख्यानमादृते।
यत्तन्मयानुगृह्णन्तु साधुत्वेनेह साधवः ॥

इति श्रीउपाध्यायकर्ककृतौ कात्यायनसूत्रविचारणे
परिभाषाध्यायः प्रथमः समाप्तः।



# अथ द्वितीयोऽध्यायः ।

ॐ इह स्वर्गापवर्गौ परः पुरुषार्थः । तौ चानेकशाखाप्रभेदाभि-
न्ननियतवर्णानुपूर्व्याव्यवस्थिताऽकृत्रिमसर्वगतविधिनिषेधरूपशब्दैक-
समधिगम्यौ । न हि प्रत्यक्षादीनामसौ विषय१ । ननु च स्वर्गकामो
यजेतेत्येवमादिना स्वर्गस्यास्तु तत्समधिगम्यता अपवर्गः कथमिति ।
उच्यते । शुभाशुभकर्मफलोपभोगनिमित्तशरीरग्रहणाभावोऽप-
वर्गः । स च विहिताकरणप्रतिषिद्धसेवनोपजाताशुभोपभोगायाव-
श्यं भाविनि शरीरग्रहणे दुर्लभ इति भवति विधिनिषेधसमधिगम्य-
ता ऽपवर्गस्यापि । यदपि कैश्चिदुच्यते ज्ञानादपवर्ग इति । तदपि न ।
देहेन्द्रियतो व्यतिरिक्तात्मसतत्त्वावबोधस्य मुक्तेश्च केन साध्यसाध-
नसम्बन्धो गृहीत इति पर्यालोचनीयं स्वर्गयागादिवत् । आगमोपि
नैवं विधः । यदप्यात्मा वा अरे द्रष्टव्य इत्यादि तदप्यात्मनो दर्शन-
श्रवणादिपरमेव । मुक्तिस्तु पुनरपि शुभाशुभोपक्षयनिमित्तैवेति२ ।
ज्ञानेपि सति विहिताकरणात्प्रतिषिद्धसेवनाच्च मुक्तिप्रतिबन्धः । य-
दप्युच्यते न करोति न लिप्यत इति । ज्ञानप्रशंसैवासौ । नन्वेवं स-
त्यात्मसतत्त्वावबोधो न किञ्चिदुपकारं करोति । नेत्युच्यते । यदा य-
थागतमेतदस्ति देहादिव्यतिरिक्त आत्मेति तदूबन्धश्च शुभाशुभनिमित्तो
न बृहस्पतिमतानुसारिणामिव३ भूतसङ्घातमात्रमेवेदमिति तदा त-

---

१ प्रत्यक्षस्य विद्यमानोपलम्भनत्वेनातीन्द्रियेऽर्थे प्रमाणाभावात् ।
तदप्रामाण्ये तन्मूलभूतानां प्रमाणान्तराणामप्यविषय इति भावः ।
भावनाबलजं योगिप्रत्यक्षं तत्र समर्थमिति तु मनोरथमात्रं ! भाव-
नाया ह्यनुभूतविषयत्वात् ।

२ तदुक्तम् " अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः । चतु-
र्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायत इति ।

३ " यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं
कर्म न श्लिष्यते " " तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे-

दुःखहेतुपरिहारे प्रयतत इति भवति ज्ञानान्मुक्तिः । यद्यपि शुद्धं ज्ञानमेव मुक्तेः साधनमिति विधिः स्यात्तथापि विधिनिषेधमूलत्वादपवर्गस्यापीति । स च विधिनिषेधरूपः शब्दसमूहोऽनेकशाखान्तरावस्थानरूपतया स्वतश्च प्रतिवाक्यमनेकवाक्यार्थप्रतिभानिरुद्धावतारतया महोर्मिमालाकुलार्णव इव दुरवगाहः । तद्यथा क्वचिदग्निहोत्रं जुहोतीत्यादौ धात्वर्थमात्रविधानम् । तत्राप्यग्निहोत्रशब्दे गुणविध्याशङ्का । तथा किं होमः स्वर्गाय उत स्वर्गो होमाय इति । एवं सर्वत्र । क्वचित्सोमेन यजेतेतिवद्विशिष्टधात्वर्थविधानम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति फले विधिः । क्वचिच्च सौर्यादौ विशिष्टं फले विधीयते । दध्ना जुहोतीत्यत्र गुणे विधेर्व्यापारपर्यवसानम् । क्वचिच्च प्राकाशावध्वर्यवे ददातीत्यादिवदध्वर्युं ऽनन्यसम्बन्धविषयो व्यापारः । तथा क्वचिन्मुख्यार्थवृत्तिता शब्दस्य । क्वचित्सहस्रसम्वत्सरादिवत् गुणवृत्त्या शब्दवृत्तिः । विध्यर्थवादसम्मोहश्च परस्परतो रूपव्यतिषङ्गात् । शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति विधिमरूपोऽर्थवादः । रात्रीः प्रतितिष्ठन्ति य एता उपयन्तीत्यर्थवादस्वरूपं रात्रीणां फले विधानमिति । दिङ्मात्रमिदं दुरवगाहत्वे । यद्यपि च संशयविपर्ययरहितज्ञानोत्पत्तिशक्तियुक्तविधिवाक्याभिहितार्थं प्ररोचनाद्वारेणार्थवादानां तदन्तर्भाव उक्तो जैमिनिप्रभृतिभिर्मन्त्राणामभिहितार्थप्रकाशनेन क्रियाङ्गता नामधेयस्य च गुणफलोपबन्धनेनेति सुविवृतमेवैतत् । यथा मेदादिलक्षणानुकथनेनानेकरूपवाक्यार्थमार्गोपदर्शनं कृतमे-

---

पाप्मानः प्रदूयन्ते " " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे " इत्यादि श्रुतिस्मृतिभ्यस्तथैवावगमात् । तस्मात् सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः, सुखदु खोच्छेदश्च धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्चारब्धानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेनात्मज्ञानेन च विरोधाद्दुरपापानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पाद्दाद्विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारादस्मात् शरीरारम्भ एव शरीरनिपाते चेति यावदुरमाप्य शास्त्रदीपिकादौ ।

च । तथापि नैयतानेकशाखाव्यवस्थितवाक्यराशिप्रतिपादितार्थोऽनुष्ठानं शक्यं कर्तुमित्याचार्यः कल्पसूत्रमारब्धवान् । तत्र चाधिकारादिसामान्यधर्मस्तुपरिनिबन्धनं कृत्वा विशेषोपनिबन्धनं न्याय्यम् । इतरथा हि प्रतिविशेषं सामान्यानुकथने ग्रन्थगौरवं स्यादित्यतोऽधिकाराद्युपस्पृशेदप इत्येवमन्तमनुक्रम्य विशेषाननुक्रमते । तत्र च पूर्वं पौर्णमासमारभ्यते । यद्यपि फलवत्सु क्रमो नास्त्यनुष्ठानं प्रति अनुविधाने दूरोत्सारित इति । तथापि क्रमवर्त्तिनी यागस्वरूपप्रभाविनि क्रमे श्रुत्यर्थानुसारेण पौर्णमासारम्भः प्रथमः । ननु च सामर्थ्यादाधानस्य प्राक्कालता, न ह्यकृताधानः शक्नोति पौर्णमासमनुष्ठातुमिति । श्रुतिक्रमाच्च । सर्वे मन्त्रभारान्मन्त्रभरणीति । तथा स्मृत्यनुक्रमणम् । अन्वाधेयमग्निहोत्रं दर्शपौर्णमासाविति । नैतदेवम् । प्रकृत्यनुपेक्ष्यमिति श्रुतिक्रमात्पूर्वं पौर्णमासम । सामर्थ्याच्च । न हि पौर्णमासमनुपक्रम्य साकल्येनाधानमनुविधातुं शक्यते । सन्ति हि तत्र दर्शपूर्णमासविधानग्राहिण्य इष्टयः । किं च मन्त्रक्रमादप्यतएव इति । दर्शस्तर्हि प्राप्नोति इदं स्थेति । सत्यमेतत् । किं त्वसौ पौर्णमासपूर्वकः । दाक्षायणे च साक्षादेव मन्त्रक्रमानुग्रहः । तस्मात्पौर्णमासारम्भ एव कारणभूयस्त्वमिति । तेन पूर्वं पौर्णमासमारभ्यम ।

पूर्वां पौर्णमासीमुत्तरां वोपवसेत् ॥ १ ॥

मिति। न चात्र ऋग्यादिवत्समुच्चयः सम्भवति विरोधात्। न चाग्नेयप्रयाजादिवदङ्गाङ्गिभाव.। फलित्वाफलित्वानवगते। न च वार्त्रघ्न्यादिवद्वा व्यवस्था। तत्र हि लिङ्गप्रकरणानुमितवाक्यावगताङ्गभावयोर्वार्त्रघ्न्योर्वृधन्वतोश्च व्यवस्थापरमेव वचनम्। वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति। न चात्रानुवादोऽप्राप्तत्वात्। बाधोऽपि चान्यतरस्यान्यत्र चरितार्थस्यान्यतरेणाचरितार्थेन निवृत्तिः। न च ग्रहणाग्रहणयोश्चरितार्थोऽचरितार्थत्वं कुशदारवत्सम्भवत.। तस्माद्यथोक्तपवेतरवाक्यापेक्षया विकल्पः पोडशिनीति। अथोपवासशब्देनार्थप्राप्ताशननिषेधो व्रतोपायनीयमश्नीत इत्यनेनाशनविधानं स्यात्। नेत्युच्यते। अशनप्रतिषेधवैयर्थ्यात् उत्तरसूत्रादप्यस्यार्थस्य सिद्धत्वात्। अनिषेधेऽपि हि गुणार्थमुत्तरं सूत्रमारब्धव्यमेव न चात्र भिन्नविषयत्वेऽप्यविरोध.। सति ह्यशने तद्गुणविधानमुपपद्यत इति। तस्माद्विरोध एव। कस्त्वत्र समाधि। उच्यते। अन्यतरस्यायथार्थता। तत्राप्यनियम.। अस्य पाश्चात्यस्य वा। विरोधोपजनकत्वाद्यथार्थत्वे प्राप्त यस्यैवायथार्थतान्यथोपलब्धा दृष्टप्रवृत्तिरेवास्यैवाश्रयितुं युज्यते नेतरस्य। स चायमुपवासशब्दो नियतद्रव्यकालपरिमाणे ह्यशने उपलभ्यते। यथा चान्द्रायणमुपवसेदिति। अतो यमनियमविषयतोपवासशब्दस्य। केचित्पौर्णमासीशब्दं लक्षणया कर्मविषयं मन्यन्ते, पौर्णमासीमुपवसेत्प्रवसेदित्यर्थः। तदेतन्न। कर्मण. पूर्वोत्तरभावानुपपत्तेः। स्वयं होमसूत्रेऽत्र तत्सिद्धे। तस्माद्यथोक्तैव व्याख्या। पूर्वस्यां पौर्णमास्यामुत्तरस्यां वोपोष्य यमनियमवान्यजेतेति। पूर्वामुत्तरामिति हि त्रनिवन्धनम्। तत्र सन्दिह्यते। किमेकापौर्णमासी उत द्वे इति। एकेति ब्रूम.। एषाह्यागोपालाङ्गनादिप्रसिद्धा। सम्वत्सरं प्रकृत्य च दर्शयति द्वादशपौर्णमास्य इति। द्वे अपि वा स्याताम्। विज्ञानुस्मरणात्। या पूर्वपौर्णमासी सानुमतिर्योत्तरा सा राकेति विज्ञापयति इति। दर्शयति च द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये इति। तथा एषा ह सम्वत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वेति। सूत्रकारप्रस्थानाच्च। उत्तरस्यां फाल्गुन्यामिति। प्रसिद्धिलिङ्गं मुख्यविषये। द्वितीया गौणी। न ह्यनेकार्थता सति सादृश्याद्युज्यते। असति तु सादृश्ये सम्बन्धे वा नेकार्थत्वमपि भयत्यक्षादिशब्दवत्। सादृश्यं चेद्वास्तीति पश्या-

मः । एवं द्विरवापपक्षायपि सन्देहः । कतरा पूर्वा कतरोत्तरेति । मुख्यसन्निधानाच्चतुर्दशी पूर्वा पञ्चदश्युत्तरा । तत्रेतदुच्यते । चतुर्दशी पूर्वा तस्यां हि चन्द्रमसः पूरणमस्ति त्रयोदश्याद्यपेक्षया । आह च चन्द्रमसं प्रकृत्यैतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षत इति । अपि च पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणा इति चतुर्दशीं पूर्वां ज्ञापयति । तथा यदास्तमियात्सूर्यः पूर्णश्चेन्दुरुपागमत् । युगपत्सोत्तरा राका तदाभवति पूर्णिमा इति पञ्चदशीमुत्तरां दर्शयति । ज्ञापयति पञ्चदशी वा पूर्वा प्रतिपदुत्तरेति । कुत एतत् । सादृश्याद्धि पौर्णमासीशब्दस्तिस्ययन्तो प्रवर्त्तते । तच्च सादृश्यं पौर्णमास्याः प्रतिपदि न चतुर्दश्याम् । कथं मासस्य पूरणं पौर्णमासीशब्दस्य प्रवृत्तौ निमित्त मासमानं चन्द्रमाः । मन्त्रलिङ्गाच्च । यथा देवप्रपिबन्ति तत आप्यायते पुनः । वायु सोमस्य रक्षिता समानां मास आकृतिरिति । तच्चैतच्चन्द्रमसः पूरणं प्रतिपदि पञ्चदश्यां च तुल्यम् । अन्त्यकलाव्यापारसामान्यात् । अन्त्या हि कलोभयत्र व्याप्रियते । इयांस्तु विशेषः । एकत्रोपैतीतरत्र यापैति । चतुर्दशकलत्वसामान्याच्च । प्रागन्त्यकलाव्यापाराच्चतुर्दशकलः पञ्चदश्यां प्रतिपद्यपि तद्व्यापारोपरमे चतुर्दशकल एव । तदेतत्सादृश्ययुक्ता पञ्चदशीति प्रतिपल्लक्ष्यते एवन्तु न चतुर्दशी सादृश्याभावात् । यच्चोक्तं त्रयोदश्याद्यपेक्षया तत्र पूरणमस्तीति । एवं चेन्न काचिदपूर्णमासी सर्वत्र ह्यापेक्षिकं पूरणमिति । यदुक्तं पूर्वोदिते कलाहीन इति तदपि खर्विकाभिप्रायम् । दृश्यते चायमर्थोऽन्यपरे वाक्ये । स वैसम्यत्येवोपवसेत् सप्रतिवृत्रः हनानि सम्प्रतिद्विपन्तं भ्रातृव्य ह्यनानीति मुख्योपवासविषयम् । तथा स वा उत्तरामेवोपवसेदिति प्रकृत्य पूर्वोपधासविषयं दोषमाह समिव वा एष क्रमते यः सम्प्रत्युपवसतीति । आदित्यरूपिणो यजमानस्यास्तमनकाले सम्पूर्णोदितेन वृत्ररूपिणा चन्द्रमसा सङ्क्रमणं भवति । तस्य चास्पष्टौ जयपराजयौ मत्वेतदुच्यते । अनद्धा वै सङ्क्रान्तयोर्यदीतरोचेतरमभिभवतीतरोवेतरमिति । अथ य उत्तरामुपवसति तस्य को गुणोभवति । यथा पराञ्चमावृत्तः सपिरः स्यादप्रत्यालभमानः सोन्यतो वाल्येव स्यादिति । तत्र ह्यसम्पूर्णा आभिमुख्येन वाव्ययवस्थितः पापरूपी चन्द्रमा यमनिपयमवता आदित्यरूपिणा यजमानेन सुखेन जेतुं शक्येत इति प्रतिपदमुत्तरां दर्शयति । यथा एषा ह सम्वत्स-

रस्य प्रथममा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वे ति । पक्षादौ सम्वत्सरादिरिति प्रतिप्रतिपत्प्रथमोच्यते । पक्षान्ते च तदन्त इति पौर्णमास्युत्तमा । न च पौर्णमास्यां पक्षादित्वं चतुर्दश्यां चापक्षान्तता सम्भवति । तस्मादेतत् । सूत्रकारप्रत्याख्यानाच्च । पक्षादौ यथर्द्धविरिति । यदा चतुर्दशी पूर्वा तदा पञ्चदश्यां यागः स्यात् । तत्र पक्षादौ हविः पाक्षिकं स्यात् । नन्वेवं सत्युक्तोपवासपक्षे द्वितीयायां यागः प्राप्नोति, तत्र पक्षादौ यथर्द्धविरिति पाक्षिकमेव । न, सूत्रारम्भसामर्थ्यात् सद्यो वा प्रातरिति ॥ १ ॥

अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥ २ ॥

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम मह्यं नमन्तां प्रदिशश्चतस्रस्त्वया ध्यक्षेण पृतनाजयेमेत्याहवनीये समिधमादधाति ॥ ३ ॥

अग्न्यन्वाधानमिति कर्मणो नामधेयम् । कर्तृनिर्देशात् । गुणविध्यसम्भवात् । द्रव्ये चाप्रसिद्धेः । तत्राध्वर्युग्रहणं न कर्तव्यम् । अध्वर्युः कर्मसु वेदयोगादिति प्राप्तत्वात् । अथ यजमानो वेत्येवमर्थमुच्येत । तत्र इयतापि सिद्धत्वात् । यथान्यत्र पात्राणि सः सादयति यजमानो वा । तथाऽज्यमवेक्षते तेजोसीति यजमानो वेति । तस्मादध्वर्युरित्यवाच्यम् । अत्रोच्यते । यजमानकाण्डमित्यन्तरा-र्थाऽसौ च महासमारम्भायाः बाधिका भवति । तेन यजमानो वेतीयत्युच्यमाने वा शब्दो यथारणं न्यायमूलत्वेन माभूदिति शास्त्रमूलोयं विकल्प इत्यध्वर्युग्रहणम् । नन्वितरत्रापि शास्त्रमूल एव विकल्पः । आज्यमवेक्षत तेजोसीति यजमानो वेति । अत्राध्वर्युग्रहणं तर्हि कर्तव्यमेवेति । सत्यमेवम् । प्रत्यक्षं हि तत्र वचनम् । तदेके यजमानमवेक्षयन्ति तस्मादध्वर्युरेवावेक्षेतेति च । ननु चात्राप्याचार्यस्य प्रत्यक्षमेव वचनम् । स्मरन्ति हि, पञ्चदशानां निवपनमन्वधानं कृतमाचर्येणेति । तस्मान्नास्ति प्रत्यक्षतो विशेषः । उच्यते । शास्त्रार्थमधिकृत्य तात्पर्येणानुप्रश्न आचार्यः । तत्र नित्यनैमित्तिककाम्यवैकल्पिकानि कार्त्स्न्येनोपनिबद्धानि शाखान्तरव्यतिरेकेण नेच्छ्यमिकमात्रमेव । तेन शाखा-

प्रयविहितस्येतरेणास्ति विशेषः । तद्विहितं प्रत्यक्षपक्षनिक्षिप्तमिव यथाकथञ्चिदपि ज्ञाप्यते। शाखान्तरीयं पुनः प्रयत्नतो ज्ञापनीयमित्यध्वर्युग्रहणम् । ननु कतिपयशाखोपसंहारे सति असर्वशाखाप्रत्ययत्वादनादरणीयमेतत् सूत्रकारवचनमिति। नैतदेवम् एवं हि स्मरन्ति या एव काश्चन मन्त्रदृशशाखा उपनिषद्यन्ते । तत्रैव नैयमिकाङ्गप्रधानकर्मोपसंहारः सम्भाव्यते । किमुत पञ्चदशशाखोपनिबन्धन इति । तस्मादपरिचोदना ऽसर्वशाखाप्रत्ययत्वमिति । अथ सर्वशाखाप्रत्ययकर्मोपसंहारेणैवाधिक्रियेत तथासत्यधाक्यशब्दार्थोपदेशात्सर्वशाखानामानर्थक्यमेव स्यात् । स्मर्यते ह्येकतमध्वर्युशाखानामिति । तथैकदेशाध्ययनेनाप्यधिकारं स्मरन्ति । वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदिति । तथा च लिङ्गम् । यो वै ज्ञातोनूचानस्समवकाशयेदिति । सर्वशाखाप्रत्ययत्वे ह्यनूचानो न कश्चित्स्यात् । अपरेध्वर्युग्रहणं यजमानसम्बन्धार्थं व्याचक्षते । तत् किमर्थं व्यूहनेध्वर्युर्वैयुक्ते यजमानो यथास्यादिति । किं वा स्यादध्वर्युणा विकल्पितत्वादधिकृतमेव ऋत्विगन्तरं प्राप्नुयात । अथ पुनर्यजमानसम्बन्धे ज्ञापिते यजमानः सिद्धो भवति । एतस्यामपि व्याख्यायामध्वर्युर्यजमानो वा यूपमनक्ति, तथाध्वर्युर्यजमानो वा सोमोपनहनं हरतीत्यत्र दोषः । तस्माद्यथोक्तैव व्याख्या । यदृच्छा वा चार्यस्य कचित्कथञ्चिद्विकल्पं ज्ञापयतीति । अथवान्यदेव व्याख्यान्तरम् । ऋग्वेदविहितमन्वाधाने समाख्यया होतुः प्राप्नोति, तन्माभूदित्यध्वर्युग्रहणम् । सचायं ममाग्न इति मन्त्रोङ्गभूतार्थप्रकाशकत्वादाहवनीयकार्यापत्तावप्सु ममाप इति यथार्थं विपरिणस्यते । न ह्यविपरिणतोङ्गभूतार्थप्रकाशने समर्थो भवति। सत्रे गणयज्ञेषु च यजमानाभिधायीनि पदानि यजमानकर्तृकेन्वाधाने यथार्थं विपरिणस्यन्ते। अस्माकमग्नेऽस्मभ्यं ममेतामिति चैवमादीनि। अध्वर्युकर्तृके त्वन्वाधाने न्यायनिगदत्वादनूह एव। न च वचो दिशां चावनतिरध्वर्युविषया। कर्मणः परार्थत्वात्। लिङ्गाच्च। या वै काश्च यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सेति । असौ च समिद्बाहुप्रमाणा स्यादधिकरणस्यैतावत्प्रमाणत्वात् । कुतः । परिधीनां यमं सश्रुतेः । यमणश्च शरीरप्रमाणत्वादाधेयं चाधिकरणप्रमाणमुचितम् । लिङ्गाच्च । यदु वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्तीति इति । मा-

देशमात्री वा शिष्टानुस्मरणात् । वेदः समित्पवित्रं च अयं प्रादेशसम्मितामिति । तस्य चाविरोधात् । कश्चिच्च दर्शनात्प्रादेशमात्र्योभवन्तीति । अधिकरणप्रमाणत्वमाधेयस्यानैकान्तिकं लिङ्गं विध्यर्थशेष स्तस्मात्प्रादेशमात्र्येव ॥ ३ ॥

## तूष्णीं द्वितीयाम् ॥ ४ ॥

द्वितीया ग्रहणेन प्राप्तो मन्त्रो निवर्त्यते तूष्णीमिति ॥ ४ ॥

## एवमितरयोरग्न्योः ॥ ५ ॥

समिधावादधातीति वाक्यशेषः । प्रथमं दक्षिणाग्नौ सन्निधानात् । प्रदक्षिण क्रमयोगादुदक्संस्थता सम्पत्तेश्च । गार्हपत्ये वा मुख्यक्रमानुग्रहात् । अग्न्यन्वाधानस्य हि कार्यं देवता परिग्रहः । ताश्च पूर्वं गार्हपत्येऽभीज्यन्ते । ततो दक्षिणाग्नाविति । सन्निधानाद्यकारणं कश्चिदग्निग्रहणं प्रकृतत्वादवाच्यं मन्यमाना गार्हपत्यदक्षिणाग्न्योः क्रमार्थं मन्यन्ते ॥ ५ ॥

## महाव्याहृतिभिर्वा प्राक्संस्थम् ॥ ६ ॥

भूर्भुवः स्वः इत्येता महाव्याहृतयः अध्येतृप्रसिद्धा, भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिरिति लिङ्गात् । विभागानुपदेशात् समस्ताभिः, भेदेन कश्चिदुपदेशात् प्रतिमहाव्याहृतीति । न वाक्यभेदात् । वाक्यसमुच्चयस्य चान्याय्यत्वात् । तस्मात्प्रत्यग्निविभक्ताभिर्व्याहृतिभिः समिदाधानम् । सूत्रकारानुपदेशाच्चेति चेत् । स्वारपरिभावितत्वात् । तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वादिति । तत्कथम्? अर्थवादात् । भूरिति गार्हपत्यो भुव इत्यन्वाहार्यपचनः स्वरित्याहवनीय इति । तथा भूरिति वा अयं लोको भुव इत्यन्तरिक्षलोकः स्वरित्यसौ लोक इति । अयं वै लोको गार्हपत्योऽन्तरिक्षलोकोऽन्वाहार्यपचनो ऽसौ लोक आहवनीय इति । समस्तोपदेशो लाघवार्थः । भेदोपदेशश्च होमविधानार्थः । तार्थेताः शब्दत्वसामान्यान्मन्त्रस्य निवर्त्तिकाः ॥ ६ ॥

## तूष्णीं वा यथापूर्वम् ॥ ७ ॥

समिदाधानमिति वाक्यशेषः । तत्र च युगपत्समिदाधानं

भेदे कारणाभावात् । केचित्तूष्णीं द्वितीयामिति द्वितीया ग्रहणमिहार्थं मन्यन्ते । तूष्णीं चेति लघीयसा न्यासेन सिद्धत्वात्, यद्गुरुत्व करोति तदिह भेदेनाधानं यथा स्यादिति । तदयुक्तम् । न हि सूत्रकारस्याशुप्रवृत्तिरीदृशी यन्न्यासगौरवमर्थान्तराय भवत्यसति वचने । सति तु वचने प्रमाणाधानमर्थं इत्यतिरेकोपि गृह्यते । न च न्यासगौरवस्यान्यथानुपपत्त्या शक्यं वचनमनुमातुम् । द्वितीयां समिधमादधातीति कदाचित्स्वशब्देनोच्यते कदाचिच्चशब्देन । न्यायप्राप्ते युगपत्समिदाधाने दुर्निवारमिति । ये तु सूत्रगौरवमार्गेणैवार्थान्तरं परिकल्पयन्ति नमस्तेभ्यः । यथापूर्वमिति च न यथाध्यवसितं सूत्रादेशवैलक्षण्यात् । पूर्ववदिति ह्येव प्रकारेष्वर्थेष्वाचार्याः प्रायशः सूत्राणि प्रणयन्ति । तस्माद्यथापूर्वं यथोत्पन्न अग्नय इति । तदेतन्निविकल्पकमग्न्यन्वाधानं दृष्टार्थमुत धर्ममात्रमिति ? । दृष्टार्थमिति ब्रूमः । इदं हि कार्यमग्नौ काष्ठमाधीयमानं करोत्यग्नीन्धनं तद्धारण च । न च तदनभिवाञ्छितम् । कार्यस्य विद्यमानत्वात् । ते वा एते उल्मुके उद्गृहन्तीति च पूर्वाहितसमिद्द्वयविषयस्तच्छब्दो द्विवचनान्त एवमेवोपपद्यते । देवतापरिग्रहार्थं वा वचनसामर्थ्यात् । कस्य देवा गृहानागच्छन्ति कस्य न य. पूर्वे द्युर्मग्न इत्यग्नीन् गृह्णातीत्यर्थवादसरूपमपि कार्यनिर्देशविषयमभ्युपगतमाचार्येण । येनाग्न्यन्वाधानप्रभृतीन्यनुक्रम्य दीक्षणीयादिप्रागुदवसानीयाया निवर्त्तयति । तत्राग्न्यन्वाधानकार्यं दीक्षणीयायां कृतमित्यभिप्राय । तत्र हि वचनमाग्नावैष्णवं प्रकृत्य अग्निर्वै यज्ञस्यावरार्द्ध्यो विष्णु परार्द्ध्यस्तत् सर्वाश्चैवैतद्देवता परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा इति दीक्षणीयाङ्गप्रधानदेवतापरिग्रहस्य निवर्त्तितत्वात् । प्रायणीयादिष्वग्न्यन्वाधाननिवृत्तिरुच्यते । तच्च देवता परिग्रहणार्थे अग्न्यन्वाधाने उपपद्यते नाग्निधारणार्थे । ननु चार्थवादसरूपमेव वचनम् । आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति प्रकृत्य तत्सर्वाश्चैवैतद्देवता परिगृह्येत्युक्तम् । निर्ज्ञातदीक्षाप्रयोजनाया दीक्षणीयाया देवतापरिग्रहफलश्रुतिरर्थवादो भवति । किं पुनरभ्युपगतो देवतापरिग्रहोऽप्यत्र प्रयोजनत्वेन जैमिनिप्रभृतिभिरपि । एवं च सति वाचनिकं कार्यं देवतापरिग्रहः । तस्मिन्सति नोपलभ्यमानमपि प्रयोजनान्तरमवगन्तु न्याय्यम् । यच्च लिङ्गमुक्तं ते वा एते उल्मुके इति तदपूर्वप्रकृतेपि दृश्यते । तद्यथा स यत्रा दृश्यश्चेतश्च सम्मरतीति । अप्रकृत-

विषयस्तच्छब्दः। प्रयोजनमथादिष्वपि क्रियते। किमिदमेकं कर्म, उत बह्विति। बह्विति ब्रूमः। अधिकरणभेदादाधेयभेदाच्च प्रत्यग्निसामिदृह्य पर्यवसनात्। एकं वा कार्यैकत्वात्। एकं हि कार्यमभीज्यमानदेवतापरिग्रहः। एकवचनान्तेन चैकेन शब्देनोपदेशोऽभवत्यस्य चाधानमिति। न चाधिकरणभेदः पर्यवसाने वा कर्मभेदे कारणं, परिधिपरिधानवत्। तस्मादेकमिति। प्रयोजनमन्ते नैमित्तिकं भवतीति सम्प्रदायः। केचित्तु गृहमेधीयादिषु सर्वत्र कर्त्तव्यमिति प्रयोजनमाहुः। तत्पुनरालोचनीयम्। न ह्यपराग्निसम्बद्धहोमाभीज्यमानदेवतापरिग्रहस्तत्रोपपद्यते। तस्मात्तत्राप्रवृत्तिः। अपरे त्वाहुः। अग्निपरिग्रहणद्वारेण देवतापरिग्रहो ममाग्ने इत्यग्नीन् गृह्णातीति वचनात्। तेषां चाग्नीनां भेदः। प्रत्यग्निचान्याश्चान्याश्च देवताः परिगृह्यन्ते। तेनापराग्निहोमेष्वसत्सु तद्देवतापरिग्रहो नास्तीति निवर्त्ततेऽन्वाधानम्। न चात्र समुदितानामेककार्यता। तद्यथा त्रयो ग्रावाण इतरेतरसव्यपेक्षा उखां धारयन्ति। प्रत्यक्षं हि तत्र समुदितानामेककार्यत्वमिहत्वग्निद्वारेण भेदाध्यवसानमिति। नन्वेवं सत्यपराग्निकयोः कार्यान्तरं प्राप्नोति। अस्तु को दोषः? कर्मभेदः स्यात् तत्र याशागोमिप्रभृतिकृतव्याख्योपरोधः स्यात्। उच्यते न व्याख्योपरोधनयान्यदार्थस्यान्यथात्वमवसातुं शक्यम्। यथा हि प्रमाणैरर्थः प्रमीयते तथैव गृह्यत इति। अथैककर्मताग्न्यन्वाधानं प्रत्यग्न्यभ्यस्यत इत्याक्षेपः। एवमाश्रीयमाणे प्रत्यग्न्यभ्यासं नैमित्तिकावसर इति ॥ ७ ॥

## अहनि मांसमैथुने वर्जयेत् ॥ ८ ॥

ननु चाहनि मैथुनस्य प्रतिषिद्धत्वादवाच्यत्वम्। कर्मोपलक्षणार्थमहर्ग्रहणमित्यदोषः। दृश्यते च कर्मणः कालव्यपदेशः। चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति। नियमस्य च कर्माङ्गता न्याय्या। अतदङ्गत्वे हि पुरुषमात्राभिसंबन्धात्फलपरिकल्पना स्यात्। ननु च मांसमैथुने वर्जयेदितीयत्यपि सूत्रे प्रकरणात्कर्माङ्गतावगतिरविरुद्धा व्यर्थमहर्ग्रहणमिति। सत्यमेवमप्रयोगकालपरिसमाप्तेरयं धर्मो मा भूदिति प्रतिप्रयोगावसायित्वमङ्गानामिति न्यायसंसूचनार्थमहर्ग्रहणम्। एवं च सति

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।
२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।
३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एतत्र सुपरिष्कृत्य मुद्यन्ते।
४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।
५ भारतवर्षीयैः,श्रङ्गदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्रा ७ आणका ८
६ कालान्तरे प्रतिस्तवकं " " १ " ०
७ प्रापणव्ययः पृथग् नास्ति ।
८ साम्प्रतं मुद्यमाणा ग्रन्था.- मुद्रिता स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता ( संस्कार ) २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । ( मीमांसा ) १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्।श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः। (वेदान्तः) २
(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्ण (ज्योतिषः) १
(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपाद. ( मीमांसा ) २
(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्ण. । ( मीमांसा ) २
(८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । (वेदान्तः) ६

(९) स्याद्वादमञ्जरी—मल्लिषेणनिर्मिता सम्पूर्णम्। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्—विशिष्टाद्वैत—ब्रह्मनिरूपण-
परम्—श्रीभाष्यकृतां परमगुरुभिः श्री ६
यामुनमुनिभिर्विरचितम्। सम्पूर्ण. } ( वेदान्त. ) १

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टा-
रकाचार्यसंग्रहीतः आचार्यचित्सुखमु-
निविरचितव्याख्योपेतं } ( वेदान्तः ) २

(१२) विभक्त्यर्थनिर्णय न्यायानुसारिप्रथमादि-
सप्तविभक्तिविस्तृतविचाररूप. म० म०
श्रीगिरिधरोपाध्यायरचित । सम्पूर्ण. } ( न्याय ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसो-
मेश्वरविरचिता। } ( वेदान्त ) ११

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता।
श्रीक्षेमराजविरचितवृत्तिसमेता। } ( वेदान्त ) २

(१६) मीमांसाबालप्रकाश ( जैमिनीयद्वादशा-
ध्यायार्थसंग्रहः ) श्रीमद्पदवाक्यप्रमा-
णपारावारीणधुरीणमीमांसाद्वैतसाम्रा-
ज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्कर-
विरचित। } ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महा-
महोपाध्याय श्रीशालिकनाथमिश्र विरचितम्। ( मीमांसा ) २

(१८) अद्वैतामोदसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यास-
प्रणीतस्वकृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९ कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्य-
विरचित भाष्यसहितम्। १

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्त,
चौखम्बा-संस्कृतपुस्तकालय
बनारस सिटी।



No 69.] [Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

KÂTYÂYANA SRAUTASUTRA,

WITH A COMMENTARY BY SRI KARKÂCHÂRYA

EDITED BY


VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mimâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthshâlâ,

*Central Hindu College*, Benares


FASCICULAS II


*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT,

BENARES

AGENT -OTTO HARRASSOWITZ LEIPZIG

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA VILASA PRESS

BENARES

1903.

श्रीः

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता।
सुवर्णगुच्छितग्रन्थामरतपत्त्रपरिष्कृता॥ १॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम्॥ २॥

स्तबकः—६९

दाक्षायणे पुनरारम्भसामर्थ्यादप्रयोगद्वयपरिसमाप्तेर्मासं सत्यमृत-मूनकृतचासांसि वर्जयेदित्ययं धर्मः ॥ ८ ॥

## केशश्मश्रु वपते वाऽशिखम् ॥ ९ ॥

वा शब्दस्य सन्निधानाविशेषेऽपि सति वपतिनैव सम्बन्धः । शिखासम्बन्धे हि पक्षे सति सशिखं स्यात् । तत्र स्मृतिरुपरुध्यते । अशुचिर्वा एष यन्मुण्डस्तस्यैतदविधानं यच्छिखेति । न चाहत्य वचनं सशिखस्य । तस्मात्स्मृत्यनुरोध एव ज्यायानिति १ ॥ ९ ॥

## अपराह्णे२ व्रतोपायनीयमश्नीतः सर्पिषा सुहितौ ॥१०॥

अपराह्णग्रहणं अह्नोपरभागमात्रविषयम् । शब्दसामर्थ्यान्न यथान्यत्राह्नस्त्रिभागविषयता । तत्र ह्यपराह्णे ददातीति प्रकृत्य पूर्वोक्ता वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणामिति वाक्यशेषाद्विशेषाध्यवसानम् । इहत्वपरभागमात्रवृत्तित्वमिति । भोजनकालप्रत्यासत्तेश्च । व्रतोपायनीयमिति व्रतं भोजनमुच्यते यथाऽन्यत्र तद्व्रतं स्यात् । पयो व्रतमिति च । तद्येनोपेयते अमावास्यादिना तद्व्रतोपायनीयम् । अश्नीत इति द्विवचनोपदेशात्पत्नी च । इतरथा हि याजमानमेव नियमं स्यात् । यथा सौत्रामण्यां हुतोच्छिष्टभक्षं इति । सर्पिषेति । नात्र पयो व्रतवत्सर्पिरेव साधनमित्यसम्भवात् । अमाषममांसमिति च पर्युदासात् । तेन यथाप्राप्त सर्पिरभिधीयते । तत्रापि किं नियमविधिरुत तैलादिपरिसंख्या? कश्चात्र विशेषः । यदि नियमं तैलमपि व्यञ्जनादिसंस्कारप्राप्त्या न

---

१ केचिद्वाशब्दमशिखमित्यनेन सह योजयन्ति, अशिखं वा सशिखं वेति । तन्मते केशश्मश्रुवपनं नित्यमेव । सूत्रकारमतानादृत्य यमर्थो ऽवसीयते । येनाधाने " पौर्णमासवद्वपनम् " इत्युक्त्वा, " ऋतुनक्षत्रसम्भारसामवपन ' त्यादिना वपनस्य विकल्पमाह । यदि पौर्णमासे वपनं विकल्पेन स्यात्तदा पौर्णमासीवदित्यनेनैवाधानेऽपि विकल्पस्य सिद्धत्वात्पुनर्विकल्पो न वक्तव्यः स्यात् । उक्तश्च । अत एव ज्ञायते पौर्णमासे वपनस्य विकल्पो नास्तीति याज्ञिकदेवाः ।

२ व्रतं भोजनं येनाश्नोपेयते क्रियते तद्व्रतोपायनीयम् उच्यते ।

निवर्त्यते । अथ परिसंख्यया सर्पिषो न नियम इति । किमत्र युक्तम् । नियमविधिः । तत्र हि स्वार्थप्रवृत्तिता शब्दस्य स्यात् । तैलव्युदासे परार्थता कल्पेत । लक्षणा च स्यात् । तस्मान्नियमविधिरेव । नियम च सत्यर्थात्तैलादिनिवृत्तिः । अस्तु हितौ, अतृप्ताचिति । तदेतद्दृष्टार्थमुत धर्ममात्रमिति? । धर्ममात्रमिति ब्रूमः । कुतः । द्रव्यकालादिनियमात् । दृष्टार्थे हि यत्किंचित्स्यात् । तस्माद्धर्ममात्रमिति । दृष्टार्थे वा प्रसिद्धेस्तदर्थत्वात् । न ह्यदृष्टाय कश्चिद्भुङ्क्ते । यत्तूक्तं द्रव्यादिनियम इति । काम नियमाददृष्टपरिकल्पना प्राङ्मुखस्याश्नाति भुञ्जीतेति वत् । न तु गम्यमानतृप्त्यपन्हवद्वारेणादृष्टपरिकल्पनामिति । प्रयोजन सति सामर्थ्ये ऽश्नीयात् ॥ १० ॥

अन्तरेणापराग्नीगत्वा परेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोप उपस्पृश्य व्रतमुपैत्यग्ने व्रतपत इदमहमिमिति वा ॥ ११ ॥

अन्तरेणापराग्न्योरिति पश्चिमयोः प्राप्तयोः तदपवादोऽन्तरान्तरेण युक्त इत्युपपदविभक्तिर्द्वितीया । प्राङ्तिष्ठन्निति शक्यमवक्तुम् । अपरेण व्यवस्थितस्याग्नीक्षणविधानसामर्थ्यात् । अग्निमीक्षमाण इत्यपि न वाच्यम् । मन्त्रलिङ्गादेव प्राप्तः । उक्तं च प्रदेशान्तरे । आहवनीयमीक्षमाणस्तद्वचनत्वादिति । वक्तव्यं वोक्तरमन्त्रार्थत्वात् । तस्य च विलिङ्गत्वात् । प्राङ्मुखता अप्राप्ता । प्राप्तिस्यापि दिङ्नियमो यथा स्यादिति । अपामुपस्पर्शनमाचमनं लिङ्गात् । प्राङ्तिष्ठन्नप उपस्पृशतीति प्रकृत्य तेन पुनिरन्तरता मध्या वा आपो मध्यो भूत्वा व्रतमुपायामीति । आलम्भनमात्र वा आचमनानुपदेशात्स्य नैमित्तिकत्वात् । शब्दसामर्थ्याच्चाप उपस्पृशतीतिलिङ्गमर्थवादमात्र दीक्षास्नानवत् । व्रतमुपैति नियमगुपगच्छनीति । अग्ने व्रतप इत्याहवनीयाग्निरुच्यते । न हि देवस्याग्नेरीक्षण मरमयति । तेन दार्शपूर्णमासावभृथ विपरिणामः । ननु च समिष्टयजुरन्ते - प्रकृतौ चावभृथप्रधानात्तत्र च व्रतस्य प्रासङ्गिकत्वादग्रहणमिति चेत् । न । अतद्धर्मत्वात् । न हि समिष्टयजुरन्तताऽवभृथस्य धर्मः । तस्मान्न तदन्तपयावभृथ । तत्र न व्रतग्रहणेऽन-

शब्दो विपरिणाम्यत इति न तद् युक्तम् ॥ ११ ॥

सत्यव्राचरतः ॥ १२ ॥

अत इत्यवाच्यम् । पाठादेव तत्सिद्धेः । स्थानसम्बन्धज्ञापनार्थत्वात् । व्रतग्रहणोत्कर्षे सत्यं नियमो यथोत्कृष्येतेति । अपरे त्वत. शब्दं हेत्वर्थं मन्यन्ते । ननु चैवमुपनयनसमकालमेव सत्यवदनमुत्तरत्र चैतद्विरोधीतीहापि प्राप्तम् । तथा परमाधानसमकालं न वा आहिताग्निनानृतं वदितव्यमिति । अनृतात्तिव्यपनोदेति सूत्रितम् ॥ १२ ॥

इदमन्यत् सत्यवाचरत इत्यस्य विषयोपदर्शनायाह—

कर्माङ्गमुत्तरे सत्यवदनमिति ॥ १३ ॥

पूर्वं तु पुरुषाङ्गम् । यदिदमुत्तरदेशे तत्कर्माङ्गमिति । को विशेष इति चेत् । कर्माङ्गे प्रायश्चित्तसमुच्चयः । पुरुषार्थोपचारे स्मार्त्तमेव । श्रौतापचारे श्रौतम् । नन्विह द्वे पुरुषार्थे श्रौतं स्मार्त्तं च । तत्र श्रौतापचारे कृते प्रायश्चित्तसमुच्चय इह प्राप्नोत्येव । पुनरारम्भो व्यर्थ इति । सत्यमेवं कर्माङ्गे कर्मगतविशेषनिबन्धनं विशिष्टं प्रायश्चित्तं यथा स्यादिति । तथार्ग्वेदिके भूरिति याजुर्वेदिके भुव इति । हौतृकपदार्थानुष्ठानकाले सत्यवदनापचारे हौतृकं श्रौतं आध्वर्यवं च । स्मार्त्तं च । केचिदाधानकालानृतवदनप्रतिषेधमनुवादं मन्यन्ते । तथा हि न वा आहिताग्निनानृतं वदितव्यम् । न च वदन् जातु नानृतमवदेदित्याह ॥ १३ ॥

वृक्षारण्यौषधीनामश्नीयाद्वा ॥ १४ ॥

इदमवसथप्राप्तं सायाशनमुच्यते । आरण्यवृक्षाणामारण्यौषधीनां वा अश्नीयान्न वेति विकल्पः । केचिदारण्यशब्दमौषधिविशेषणं मन्यन्ते । निर्देशसामर्थ्याच्च आरण्यशब्दो वृक्षपदात्पूर्वः । अतो न तदुपसर्जनमिति । न वा अविशेषेण श्रवणात् । स वा आरण्यमेवाश्नीयादिति हि ब्राह्मणे वा आरण्या ओषधयो वृक्ष्यमित्याह । सूत्रस्य च तन्मूलत्वात्तथो निर्देश इति । सामर्थ्यासिद्धत्वात् विकल्पोऽप्राप्य इति चेत् । न, अ-

पधारणार्थत्वात् । अवधार्य हि वैकल्पिके कर्मणि प्रवृत्तिर्न्याय्येति । आरण्यगुणविधित्सया वेदमुच्यते ॥ १४ ॥

## आहवनीयगृहशाय्यधो गार्हपत्यस्य वा ॥ १५ ॥

विकल्पेन हि श्रवणमत्र । तत्रायमधः शब्दः किं खट्वादिविरोधकृद्वुतास्तरणस्यापीति? । नास्तरणनिषेधकः । तत्रापि प्रयोगप्रत्ययाऽयामधः सुप्तावयमिति । क्वचिच्च स्थण्डिलशायीत्यतो नास्तरणस्य निषेधः । अध.शयीताधस्तादिव हि श्रेयस उपचार इति लिङ्गात् ॥ १५ ॥

## सद्यो वा प्रातः ॥ १६ ॥

पूर्वामुत्तरां वोपवसेदिति हि पूर्वमुक्तम् । तत्र सद्यो वेत्तीयत्युच्यमाने तयोरेवान्यतरत्र याग. प्राप्नोति । उत्तरोपवासपक्षे च द्वितीयायाम् । तन्माभूदित्यत. प्रातर्ग्रहणम् । अथाक्रियमाणेपि प्रातर्ग्रहणे अङ्गानां प्रधानकालत्वस्य न्याय्यत्वात्पूर्वस्यामप्राप्तिरेव यागस्येति । उच्यते । एवं सति यथोत्तरस्यां साङ्गप्राप्तिरेवमुत्तरोपवासपक्षाऽवलम्बनद्वारेणोत्तरोत्तरस्यामपि प्राप्नुयात् । तन्निरासार्थं प्रातर्ग्रहणम् । अस्तु तथेति चेत् । न, पौर्णमास्यां यागविधानसामर्थ्यात् । एवं उत्तरस्यामप्यप्रासिरिति चेत् । स्यादारम्भसामर्थ्यात् पूर्वामुत्तरां वोपवसेदिति । उत्तरापि हि पौर्णमासीप्रतिपदिति प्रतिपादितम् । तेन सद्यो वा प्रातः प्रातरिति यदा प्रातस्तदा सद्य इति इतिपौर्णमासी द्वितीया च निरस्ते भवतः । सूत्रारम्भसामर्थ्यादप्ययमर्थोवसीयते । पक्षादौ यजध्वमिति । हवि. पक्षादिना विशेष्यते तथैवमुपपद्यते । अथेतस्यानैकान्तिकत्वाद्विशेषणं स्यात् । तस्मादुत्तरस्यामेव याग इति साधूच्यते १ ॥ १६ ॥

---

१ याज्ञिकदेवभाष्ये त्वत्र सूत्रभेदो दृश्यते । तथा हि " सद्यो वा " पौर्णमासे यदग्न्यादकर्तव्यमुक्तं तदेकस्यामहन्यग्न्यन्वाधानादि कर्मापवर्गान्तं भवति । " प्रात. " अस्मिन् पक्षे प्रात. प्रतिपद्दिने एव सर्वमग्न्यन्वाधानादि कर्मापवर्गान्तं कर्तव्यं न पूर्वेद्युरग्न्यन्वाधानदिने प्रतिपद. प्रधानकालत्वात् अङ्गानां प्रधानकाल·

अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते ब्रह्मिष्ठं भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति ॥ १७ ॥

प्रातरित्यनुवर्त्तमाने अग्निहोत्रं हुत्वेत्युक्ते तत्प्रतिपत्तिर्मा भूत् सायमग्निहोत्रमिति । ततः अहनि कर्मसाफल्याद्रात्रौ चाविधानात् । अग्निहोत्रग्रहणं च इहार्थाभावादमावास्या विषयम् । तत्र हि वचनम् । उदिते पौर्णमासस्य तन्त्रं प्रक्रमियादनुदिते अमावास्यस्येति । अतो अग्निहोत्रग्रहणमानन्तर्यार्थम् । ब्रह्मिष्ठमिति च पदार्थसतत्त्वोपजातावबोधेन । न हि परमात्माख्यब्रह्मसतत्त्वावबोधो-ऽत्रोपयुज्यते १ ॥ १७ ॥

वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे

---

त्वस्य न्याय्यत्वात् । तत्र च व्रतोपायनीयाशनादूर्ध्वाशनान्यतरागारशयनानि न भवन्ति, उक्तकालाभावात् । रागप्राप्तेष्वेवैतेषु द्रव्यादिनियममात्रविधानाच्च । न हि रागतस्तदानीमशनादीनि प्राप्नुवन्ति । अन्यद्वपनादि सर्वं भवत्येव ।

व्यवस्थितविकल्पोऽयमिति केचित् । तथाच कात्यायनः—

"सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः

सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः" इति ।

१ वरणं चाचारादेवं कर्तव्यम् । वितानस्योत्तरतः प्राङ्मुखोपविष्टं ब्रह्माणमुदङ्मुखोपविष्टो यजमानः स्कन्धं सव्येन गृहीत्वा दक्षिणेन पवसहितेन ब्रह्मणो जान्वालभ्य वृणीते ? अमुकगोत्र अमुकशर्मन् पौर्णमासेष्ट्या वयं यक्ष्यामहे तत्र त्वं ब्रह्मा भवेति, अत्र च भूपत इत्यादिमन्त्रः, । एतच्च वरणमप्रवृत्तस्य प्रवर्तनम् । तेन यथानिर्दिष्टाक्षरपाठादौ न भवतीति ।

त्रिष्टुब् जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम् ॥ १८ ॥

वृतो जपति ब्रह्मा जपतीति यावदुक्तम् । अथवा यदा वृतः समस्तेन मन्त्रेण भवति तदा जपति कर्तृभेदाद्यौगपद्य मा भूदिति ॥१८॥

वाचस्पते यज्ञं गोपायेत्याह ॥ १९ ॥

सामर्थ्याद्यजमानः । स हि वरणेनाऽस्या च यज्ञगोपायने नियोक्तुं समर्थो नान्यः । वाचस्पतित्वं च स्तोतुं ब्रह्मण्यध्यारोप्यते । वाचस्पते ब्रह्मन् यज्ञं गोपायेति । यदपि च कण्वानां देवसवितरित्युक्त्वा वाचस्पते यज्ञं गोपायेत्याहेति पठ्यते । तदपि न समानकर्तृकार्थम् । पूर्वकालता मात्रे हि क्त्वाशब्दः । समानकर्तृकतायामसामञ्जस्यं स्यात् । न हि ब्रह्मात्मानमेव वाचस्पते इति सम्बोधयति । अथाधिष्ठात्री देवतोच्यते । तत्रापि नियोगाभावाददृष्टार्थता स्यात् । तस्माद्यथोपवर्णित एवार्थः । स चायं प्रैषो नियोगार्थत्वादसत्यपि वरणे प्रवर्तते । यथा ज्योतिष्टोमे दीक्षणीयादिष्वाधाने चेष्टिषु । कथमाधाने वरणाभाव इति चेतस्यात् प्रवृत्तिदर्शनात्, चत्वार ऋत्विजः प्राश्नन्तीति ब्रह्मौदनाभावे ऽस्तु वरणमिति चेन्न । तत्रापि दर्शनादन्याधेये ब्रह्मा सामानि गायतीति । तेन प्रतिपन्नब्रह्मत्वस्य वरणं क्रियमाणमप्राकृतप्रयोजनं स्यात् । वरणविशेषनियमार्थमस्तु प्रवृत्तिरिति चेत् । न, नियमस्य क्रियापुरःसरत्वात् । सत्यां हि क्रियायां नियमानुग्रहो न नियमानुग्रहाय क्रियाप्रवृत्तिः । यो हि पण्डितं मन्यमान एवं कुर्यात्स प्राङ्मुखोऽन्नानि भुञ्जीतेति भोजननियमानुग्रहाय तृप्तोपि सन् भुञ्जीतापि । यच्च ज्योतिष्टोमे ब्रह्मवरणनिषेधो न्यायमूलः सइहापि प्रवर्त्तत एव ॥ १९ ॥

अपरेण वाहवनीयं दक्षिणातिक्रामति ॥ २० ॥

उत्तरत उपचारो यज्ञ इति वरणमुत्तरतः । दक्षिणतो ब्रह्मयजमानयोरासने इति । गमनं विपर्ययः । शास्त्रसामर्थ्यात् ॥ २० ॥

अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ब्रह्मसदनमीक्षते ॥ २१ ॥

तच्चैतत्कौशं स्यात्तृणनिरसनोपदेशात्, प्रसिद्धेश्च । न वा नियमशासनाभावात् । तृणनिरसनं तु कुशास्तृतत्वादासनस्य । तत्कुतः शिष्टानुस्मरणात्प्रसिद्धिरविरोधा । तस्माद्यथा प्रसिद्धमेवेधयिद्ब्रह्मासनमिति ॥ २१ ॥

ब्रह्मसदनात्तृणं निरस्यति१ निरस्तः पाप्मा सह तेन यं द्विष्म इति ॥ २२ ॥

स चायमासनसंस्कारस्तेन पशुपुरोडाशे आपशुपरिसमाप्तेः संस्कृतत्वादासनस्य पुनर्न प्रवर्त्तते ॥ २२ ॥

इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्या इति ॥ २३ ॥

ब्रह्मसदन आहवनीयमभिमुख२ उपविशति॥२४॥

तदग्नये प्रब्रवीमीत्यग्निशब्दो देवता वचनः स्यात्प्रकृतत्वात् । न वा वायुना समुच्चारणात् । तस्य चाप्रकृतत्वात् । तस्माद्देवतान्तरवचनं । प्रयोजनम् सौर्यादावविपरिणामः । ब्रह्मसदनग्रहणं गुणार्थं प्रकृतत्वादेव । को गुण इति चेदाहवनीयमभिमुख इति ॥ २३ ॥ २४ ॥

---

१ नैर्ऋत्यां दिशि प्रक्षिपति शाङ्खायने दर्शनात् । तत्र " समान होत्रा तृणा निरसनम् " इत्युक्तम् । होतुश्च पठितम् " होतृषदनात्तृणं तृणमुभयतः प्रतिच्छिद्य दक्षिणापरमवान्तरदेशं निरस्यति " इति, एवञ्च होत्रासाम्यसम्पादनाय तथैव कर्तव्यमिति भावः ।

२ छन्दोग सूत्रे तु " परिध्योर्वा सन्धि स्रुचां वाग्राणि उत्करवाभिमुख " इति पठितम् ।

वाग्यत आनुयाजप्रसवात् ॥ २५ ॥

यतवाग्ब्रह्मा भवत्यनुयाजप्रसवं यावत् ॥ २५ ॥

भागपरिहरणादि वा ॥ २६ ॥

सा चैषाऽवधारणा अथास्मै ब्रह्मभागं पर्याहरन्तीति प्रकृत्य स वै वाचं यम एव स्याद् ब्रह्मन् प्रस्थास्यामीत्येतस्माद्वचस इति आम्नायते । पूर्वमविशेषादध्यवसितम् । पाठक्रमाद्विशेषाध्यवसानम् । लिङ्गाच्च, विवृहन्ति वा एते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्तीति हेतुत्वेन वाग्यमनस्येहाचरणं निर्दिशति । तस्माद्भागपरिहरणाद्येव । स चायं पदार्थधर्मो यतवाक्त्वे हि सत्यप्रमादात्कृताकृतप्रत्यवेक्षणमाचरति ॥ २६ ॥

आवृता ऽवषट्कारासु ॥ २७ ॥

अवषट्कारास्वाहुतिषु[1] ब्रह्माऽऽवृतोत्पाद्यते । ताश्चैता अग्निहोत्राहुतयो ऽवषट्काराः । अस्ति हि तत्रैकर्त्विक्त्वेपि सति प्रायश्चित्तार्थतया ब्रह्मणः प्राप्तिः । तेन निमित्ताद्व्याहृतिहोम आपन्ने सति आवृता क्रियामात्रेण ब्रह्मोत्पद्यत इति । क्रियया हि कारकमाक्षिप्यते । लिङ्गाच्च । अथ हैतामिन्द्र ऋषये प्रायश्चित्तिमुवाचाग्निहोत्रादग्न आमहत उत्क्रान्तादिति । न चैतदेवमेकर्त्विक्त्वात् । एवं हि श्रूयते एकर्त्विजमग्निहोत्रमिति । अङ्गप्रधानपदार्थाभिनिर्वृत्तिरेकेनर्त्विजा कर्तव्येति । ननु नैमित्तिकार्थतया द्वितीयोपि भविष्यति । नेत्युच्यते । न हि नैमित्तिकस्य ब्रह्माक्षेपसामर्थ्यमस्ति । भिन्नं जुहोतीति होममात्र एव विधेर्व्यापारपर्यवसानं वाक्यान्तरपरिप्राप्त इति चेत् । यदेव यस्यै विधायै श्रुतं तेन ब्रह्मत्वामित्येवमादिना व्याहृतिहोमे ब्रह्मसम्बन्धविधानम् । तेन यत्र व्याहृतयस्तत्र ब्रह्मणा भवितव्यम् । नैतदेवम् । यदि ह्यन्यदन्यत्राचरितार्थं स्यात्ततः पदार्थाचरस्यादपि । अस्ति ह्यस्य चरितार्थत्वं दर्शपूर्णमासयोः । तेनाग्निहोत्रे नान्यथानुपपत्त्या ब्रह्माक्षेप्तुं शक्यत इति । एकर्त्विक्त्वविरोधाच्च । न चात्र क्रिया ब्रह्मागममन्तरेण न सम्भवति । कर्मान्तरविधानात् । अस्ति ह्यनारभ्याधीतं कर्मान्तरम् । तेनापि न तदाक्षेपः । यथाग्निहोत्रादग्न आमहत उत्क्रान्तादिति ।

१ ताश्च पूर्णाहुतिपूर्णाहुतिहोमाहुतिसावित्राहुत्याद्याः ।

सोऽपि चतुर्थिशद्धोमविषयोऽर्थवादः । अस्तु तर्हि दर्विहोमविषयतास्य सूत्रस्य । दर्विहोमाहुतयोऽवषट्काराः तासां हि पौर्णमासविघ्यन्तग्राहित्वेनोचितो वषट्कारः । स्वाहाकाराम्नानात्पुनर्निवृत्तिः । तदभावे ऽन्वाख्यानमुपपद्यते । तदेतदनुपपन्नम् । तत्र हि प्राप्त एव ब्रह्मा मन्त्ररहिता च क्रिया ब्रह्मवरणादिका तूष्णीमर्थलुप्ता इति । पूर्णाहुतिविघ्यन्तग्राहिहोमविषयता तर्ह्यस्तु अस्य सूत्रस्य । ता अपि ह्यवषट्कारा इति । एतदपि नोपपद्यते । अग्निहोत्रन्यायसालक्षण्यादनुदृताभ्यस्तमयाहुतौ पूर्णाहुतिका धर्मा विहितास्त आचार्येण पूर्णाहुत्यामुपसंहृत्यान्यत्रातिदिष्टाः । अतस्तत्रापि ब्रह्मणः प्राप्त्यभाव एव । एवं चेदिहार्थमेव सूत्रमस्तु । इह हि प्राग्ब्रह्मवरणाद्व्याहृतिहोमनिमित्ते सति तदर्थं ब्रह्मवरणापकर्षोऽन्याय्यः । अङ्गप्रधानार्थत्वाद्ब्रह्मणः । तदर्थमिदं सूत्रं आवृताऽवषट्कारासु । आवृता क्रियया । समन्त्रिकाचासौ क्रिया न्यायतः प्राप्नोति । ननु चान्यत्राचार्येणायमावृच्छब्दो मन्त्ररहितक्रियाविषयः प्रयुक्तः । मृदा सहोपां करोत्यावृतेति । सत्यमेवं मृदा सहोपां करोतीत्यत्रैव समन्त्रिका क्रिया प्राप्ता तत्रावृच्छब्दो मन्त्रनिवृत्तिपर एव । तन्निवृत्तिश्च वाचनिकी । एतयैवावृतानुपहरन्यजुरिति । अतो ब्रह्मवरणापकर्षार्थमेतत् । वाचस्पतिमिश्रैस्तु स्वकालीन एव व्याहृतीनामतदङ्गत्वात् । अतदङ्गता च प्रकरणव्यवच्छेदात् । शक्यन्ते चावषट्कारा व्याहृतयो वक्तुम् । उचितत्वाद्वषट्कारस्य । याज्याकार्ये हि तासामाम्नानमस्ति । यदि याज्यां पुरोनुवाक्यां वा न विन्देद्व्याहृतीरेव याज्यायाः पुरोनुवाक्यायाः स्वस्थाने कुर्यादिति । तेनेह वषट्काराभावे अवषट्कारा व्याहृतय उच्यन्ते ॥ २७ ॥

अत्र वा व्रतोपायनम् ॥ २८ ॥

शास्त्रस्य तुल्यत्वात् ॥ २८ ॥

व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ २९ ॥

वाग्यत आनुयाजप्रसवादिति वाग्यमे सति यद्यनुव्याहरेति तदा वैष्णवं मन्त्रंजपेत् ॥ २९ ॥

अधिकारमुपजीवन्नाह—

पुनरादाय देवस्यत्वेत्यनामिकाङ्गुष्ठाभ्याममेदूत्वेति प्राश्नाति दन्तैरनुपस्पृशन्नत चेत् ॥ ३९ ॥

पुनरादानं च द्रव्यमात्रस्य प्राशनार्थत्वात् । अतश्च आसादितेऽपि भविष्यति । अनामिकाङ्गुष्ठाभ्यामादायाम्रेष्ठेत्यनेन मन्त्रेण प्राश्नाति । चेच्छब्दो विकल्पार्थः । अत्र चेत्प्राश्नाति पुनरादाय प्राश्नाति । अर्थोपरिष्टात्ततो ॥ ३९ ॥

निदधाति वा ऽसदेशे ॥ ४० ॥

पूर्वमविशेषेणाभिहितं विशेषप्रतिपिपादयिषयाऽत्र पुनर्वचनम् ॥ ४० ॥

प्रक्षाल्य पात्रं नाभिमालभते या अप्स्वन्तर्देवतास्ता इदं शमयन्तु स्वाहा कृतं जठरमिन्द्रस्य गच्छ वसिना मे मासं पृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति ॥ ४१ ॥

प्रक्षालनं च कार्यसम्बन्धाविशेषाद्द्वयोरपि पात्रयोः । एकवचनं तु जात्यपेक्षं । ननु चैकमेवैतत्पात्रं प्रक्षाल्य पात्रमित्येकवचननिर्देशात् । तथा तूष्णीं प्राशित्रहरणमिति । द्वे वा स्यातां प्रतिपात्रसदर्शनात् । कर्णयोः प्राशित्रहरणे इतीतरज्जात्यपेक्षयेत्युक्तम् ॥ ४१ ॥

एतं त इति समिदामन्त्रितः प्रसौति ॥ ४२ ॥

समित्सम्बन्धादामन्त्रणं समिच्छब्देनोच्यते । अथवा समिच्छब्देन तादर्थ्यादनुयाजा उच्यन्ते । अनुयाजार्थमामन्त्रित एतं त इत्यनेन मन्त्रेणानुजानाति । यज्ञपतिशब्दश्च सर्वत्र विपरिणम्यते । यज्ञपतिसम्बन्धवचनसंस्कारपरिलोपः कस्य चिन्माभूदिति ॥ ४२ ॥

प्रतितिष्ठेति ब्रूयाद्वा ॥ ४३ ॥

स यदि कामयेत ब्रूयात्प्रतिष्ठेति वचनात् । केचित्प्रतितिष्ठेति क्रियापदात्पदान्तरमध्याहरन्ति सामर्थ्यात् । तत्पुनर्युक्तमयुक्तं वेति-

विचारणीयम् । प्रतिष्ठतमिति च चरणप्रघासेषु विपरिणामः ॥ ४३ ॥

कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा नमः कृताय कर्मणे अकृताय कर्मणे नमः अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्व्; सनिः; सुविमुचाविमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति यथेतमेत्य ॥ ४४ ॥

अपवर्गः समाप्तिः[१]। यथेतमेत्येति[२] परिभाषितत्वादप्राप्यमिति चेत्। अर्तास्य निःक्रमणमिति। नेदमर्थेनाऽप्राप्तेः। तत्रस्थस्यापि हि समिदाधानादि न विरुध्यते। स्वाहाकाराम्नानं च उपस्थानसमिदाधानार्थम्। होमे ह्यसमाम्नातोपि प्राप्नुयादेव। स्वाहाकारः सर्वत्रेत्यनेन। स ह्ययं पदार्थो यावदुक्तान्तापच्छिन्नाविषु निवर्तते ॥ ४४ ॥

एतद् ब्रह्मत्वमिष्टिपश्वोः ॥ ४५ ॥

एतद्ब्रह्मत्वमधिकारादिहोक्तम्। तदिष्टिपशुविषयम्प्रत्येतव्यम्। इष्टिग्रहणं प्रकृतत्वादकार्यम्। पशुग्रहणं च चोदकपरिप्रापितत्वादकर्त्तव्यं वा पशुग्रहणम्। ब्रह्मानुज्ञाते प्रोक्षणं यथा स्यादिति न हि तत्र साम्राज्यविकारत्वात् प्रोक्षणमस्ति। इष्टिग्रहणं तर्हि न कर्तव्यम्। न वा कार्यं वाक्याद्धि पश्वर्थतैव ब्रह्मत्वस्य स्यात्। तन्माभूदितीष्टिग्रहणम्। ब्रह्मवरणाधिकारे तत्प्रसङ्गमुपजीवता यावद्ब्रह्मत्वं तत्सर्वमभिहितं अतः प्रणयनाद्युच्यते ॥ ४५ ॥

---

१ ब्राह्मणतर्पणान्तम्। तस्मिन् इत्यर्थः।

२ यथा येन क्रमेण इतं गतं आहवनीयस्य पूर्वेणापरेण वा तथैव पत्य आगत्य आहवनीये समिदाधानहोमोपस्थानाद्यन्यतमं करोति। होमपक्षे ' इदं जातवेदसे ' इति त्यागमात्रमाधिकमिति भावः।

अध्वर्युश्च ॥ ३० ॥

हविर्ग्रहणकाले वाग्यमने । तुल्यं हि शास्त्रमुभयोः । स यदि पुरा मानुषीं वाच व्याहरेत्ततो वैष्णवीमृच वा यजुर्वा जपेदिति । यजमानस्य त्वनाम्नानादाध्वर्यवमेव । केचित्तु च शब्दा यजमानस्य दीक्षाकालवाग्यमापचारे वैष्णवमिच्छन्ति । तत्रापि ह्याम्नायते वा यद्वाचंयमोऽप्रमत्तव्याहरतीति । स च मन्त्र प्राकरणिकः स्यात् । प्रकरणादेवसामान्यसम्बन्धावगतेर्विशेषविषयत्वे सति वाच्यस्य लाघवं । इतरथा ह्यप्रकृत उपादीयमाने सामान्यसम्बन्धो विशेषसम्बन्धश्चेति गौरवस्यात् ॥ ३० ॥

प्रणय यज्ञं देवता वर्धयत्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तऋषीणा; सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योम् प्रणयेति प्रणीताः प्रसौति ॥ ३१ ॥

प्रणययज्ञमित्यनेन मन्त्रेण प्रणीताः प्रणीयमाना अनुजानाति ॐ प्रणयेत्यस्य प्रसवार्थत्वातः पुरस्ताज्जपः । प्रयोजनमुपांशुप्रयोग. । अत्र पुनर्लोपमव्ययपुरुषैकवचनाविरोधेपि सति मृग्याविशेषः। अयं च मन्त्रोनेकयजमानके कर्मणि१ यजमानाः सन्तु यजमानांश्च धेहीति विपरिणम्यते । द्वित्वेपि यजमानौ स्तां यजमानौ च धेहीति च ॥ ३१ ॥

एवमामन्त्रित ॐकारेण प्रोक्ष यज्ञमिति हविष्यावर्हिषोश्च ॥ ३२ ॥

प्रोक्षणं प्रसौति। एवमामन्त्रित इत्यामन्त्रणविधानं प्रधानं हविः प्रोक्षिष्यामीत्येवमादिलाभार्थम्।न हि तत्र प्रणीताप्रणयनवदाम्नातम्। एवमोङ्कारेणेति, ॐकारपूर्वकेणार्थसरूपेण वचसेति यावत् ॥ ३२ ॥

१ महीनेन्द्राग्रसुत्यायसत्त्रगणयागादौ ।

बृहस्पते परिगृहाण वेदिं सुगात्रो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां साध्वन्तर्हिं स्पापृथिवी देवी देव्यस्त्विति वेदिं परिगृह्णन्तम् ॥ ३३ ॥

प्रसौतीत्यनुवर्तते ॥ ३३ ॥

प्रजापतेनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ॥ ३४ ॥

होतारं प्रसौति ॥ ३४ ॥

देवता वर्द्धयत्वमिति सर्वत्रानुषजति[1] ॥ ३५ ॥

अनुषङ्गश्च लाघवार्थः । अत्र च प्रोक्षणपरिग्रहेषु अध्वर्युपदं वेदिपदं च वरणप्रयासेषु वचनमूह्यते । यजमानपदं चानेकयजमानके ॥ ३५ ॥

मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं[2] प्रतीक्षते ॥ ३६ ॥

देवस्यत्वेति प्रगृह्णाति ॥ ३७ ॥

स पार्श्वे प्रसिद्धेः सादनोपदेशाद् पुनरादानसामर्थ्याच्च ॥ ३७ ॥

[3]पृथिव्यास्त्वेतिसादयत्यपोह्य बर्हींषि ॥ ३८ ॥

---

[1] पूर्वोक्तेषु प्रोक्ष यज्ञमित्यादिकेषु सर्वेष्वपि मन्त्रेषु 'देवतावर्धय त्व नाकस्य पृष्ठे यजमानो अस्तु सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेहीति' मन्त्रमनुषजति ।

[2] प्राशित्रं ब्रह्मणो भाग., यवमात्रं पिप्पलमात्रं वा ।

[3] ब्रह्मा तत्प्रातिगृह्य वेदेर्दक्षिणांसदेशे स्तृतानि बर्हींषि अपसार्य प्रागुदण्डं सादयति । आश्वलायनादिसूत्रेषु तद्दर्शनात् ।

गार्हपत्यमुत्तरेणोदपात्रं निधायालभते भूतस्त्वा भूतकरिष्यामीति ॥ ४६ ॥

गार्हपत्यमित्युपपदविभक्ति पष्ठ्यर्थपवादो द्वितीया । उदपात्र उदकस्य पात्रम् । उदकस्योदादेश । तथाविशेषेपि सति चतुरस्र स्यात् । चमसेनाप प्रणयतीति । स च चतुरस्र प्रसिद्धे । लिङ्गा च । चमस प्रकृत्य चतु स्रक्तिना चतस्रो वै दिश इत्याम्नायते । सु- प्रकारप्रस्थानात् च । चमसवत् स्रुवेणेति । आलम्भ उदकस्य स्या- त्तत्संस्काराभिप्रवृत्ते । पात्रस्य वा । तदुपदेशात्तत्संस्कारतश्च तत्स म्बन्धिद्वारेण इडापहवे होतृत्वारम्भणवत् । प्रयोजन प्रणीताकार्या- पश्ययोद्दधिपयसोरविपरिणाम । उदकालम्भ हि भूतस्त्वा भूतकरि- ष्यामीति त्वाशब्दस्तद्विषय स्यात् । तत्र द्रव्यद्वित्वे विप- रिणाम्येत ॥ ४६ ॥

ब्रह्मन्नपः१ प्रणेष्यामि यजमान वाचं यच्छेत्याह ॥ ४७ ॥

ब्रह्मन्नप प्रणेष्यामीति ब्रह्मानुज्ञाप्रार्थन ब्रह्मेत्यृत्विग्विशेष । स च यद्यपि वरणावरणनिमित्तस्तथापि तु ब्रह्मत्व कर्त्तृमुपचर्य- त । प्रयाजन तु सत्रे ऽविपरिणाम । कुण्डपायिनामयने च मैत्राव रुणे ब्रह्मत्व कुर्वेति । यजमान वाच यच्छेत्यनकयजमानके यथार्थ

१ यदा च प्रणीताना सर्वार्थत्व संयवनार्थत्व वा तदा यस्मिन् कर्मणि चरुश्रपणार्थं पयो घृत वा विहितम्, यथा 'वैश्वदेवश्चरु पयसि वा' इति, 'घृत चरुरादित्येभ्य' इति च, तत्र पयो घृतस्य च प्रणयन दध्नश्च मन्थाद्यर्थं कर्तव्यम्, तत्र ब्रह्मन् अप्पयास अ- भ्यूतानि शब्दधिनी प्रणेष्यामीत्यूह । पित्र्यायामपि प्रणयनात्पूर्व- मेव निवान्या दुग्ध्वा तद्दुग्धस्य प्रणयन कर्त्तव्यम् ' अत्र नैमित्ति- मत प्रणीता संयवनार्था एव, कर्काचार्याणां मते सर्वार्था एव, इत- रेषामदर्थ्या एवेति तत्त्वम् ।

विपरिणंस्यते। स चायं वाग्यम पदार्थधर्मत्वादसत्यपि प्रणयने प्र· वर्त्तेत इति । प्रैषश्च तादर्थ्यात् ॥ ४७ ॥

## अनुज्ञात उत्तरेणाऽऽहवनीयं सम्प्रतिनिदधाति कस्त्वेति ॥ ४८ ॥

सामर्थ्यपरिप्रापितत्वादनुज्ञात इत्यवाच्यम् । न वा प्रैषप्रैषार्थयोरानन्तर्यव्युदासार्थत्वाद्यजमान वाचं यच्छेत्यनन्तर यथा स्यादिति । पाठादेव तत्प्राप्तिरिति चेत् । न प्रैषसमनन्तर तदर्थानुष्ठानं न्याय्यमिति । सम्प्रतिशब्दो ऽनतिकानतिदूरविषयत्वानातिहृत्य सादयन्नो अनाप्ता. सादयेदिति वचनात् । नि धाने मन्त्र. स्यात्तदुपदेशात् । निदधाति कस्त्वेति । श्रुतिविरोधान्नेति चेत् । स प्रणयति कस्त्वा युनक्तीति । निधाने वा प्रणयनस्य तदर्थत्वात्तस्मादुत्तरप्रत्येनोत्तरेणाहवनीय प्रणयतीत्युपसंहारात् । शाखान्तरे तु स्पष्टतर. पाठ' स निदधाति कस्त्वेति। त्वा शब्दो द्रव्यपरत्वाद्रव्यबहुत्वेऽपि यथा दधिघृतादौ विपरिणंस्यते । न वाऽन्यायनिगदत्वादप प्रणयनीति हि बहुवचनान्तोपदेशः । त्वाशब्दश्चैकवचनान्तस्तस्मादनूह इति ॥ ४८ ॥

## नान्तरेणगच्छेयुः ॥ ४९ ॥

प्रकृताप्रकृतयोरुपदेशात् लिङ्गाच्च नेनन्मिथुन चर्यमाणामन्तरेण सञ्चरानिति । प्रयोजन सर्वत्र प्रायश्चित्तम ॥ ४९ ॥

## कांस्य वानस्पत्य मार्त्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासंख्यम् ॥ ५० ॥

कांस्यादीनि प्रणयनाश्रितानि मृदन्तानि अभिचारादीन्साधयन्ति । न तदाश्रया क्रिया। शब्दस्य तत्परत्वात्कांस्यादीनां फलसम्बधः । एवं च सति विकार एवामप्रवृत्त पुरुषार्थत्वात् । वानस्पत्ये तु वारणो प्रवर्त्तमाने क्रत्वर्थस्य साधारणत्वात्तदाश्रयः । कामो ब्रह्मवर्चसे प्रवर्त्तयत्येव । ता एता प्रणीता दृष्टार्था उत धर्ममात्रा इति? धर्ममात्रा इति ब्रूम' । देशनियमात्पात्रनियमाच्च । तथा मन्त्रवत्तोपदेशात् । शिरः संस्तवाच्च । शिरो ह वा एतद्यज्ञस्य यत्प्रणीता

इति। अनवखण्डनसामान्याच्छिरः संस्तवः। स्कन्दनप्रतिषेधश्च धर्ममात्र उपपद्यते। इतरथा ह्यवश्यम्भाविस्कन्दनमिति। अन्ते प्रतिपत्तिविधानाच्च। अथ प्रणीता दक्षिणतः परीत्य निनयतीति। दृष्टार्थत्वे हि कदाचिदुपयुक्ता भवेयुस्तत्र प्रतिपत्तिविधानं पाक्षिकं स्यात्। अपाक्षिकं च श्रवणम्। तस्माद्धर्ममात्रा इति। दृष्टार्था वा द्रव्याणां क्रियाभिनिर्वृत्त्यर्थता प्रसिद्धेः। न हि कश्चिद्द्रव्यमदृष्टार्थं परिकल्पयति। सन्ति चात्रोदकसाध्याः क्रियाः। न च तत्सिद्धयेन्यदुदकमुपदिश्यते। तेन दृष्टार्थेवगम्यमानेपि यो नामादृष्टं कल्पयति स दिङ्नियमवद्भोजनादप्यदृष्टं कल्पयेत्। लिङ्गाच्च प्रणीताभिर्हवींषि संयौतीति। यदुक्तं दृष्टादिनियम इति स नियमो दृष्टाय। शिरः संस्तुतिः प्राग्भागसामान्यात्। स्कन्दनप्रतिषेधश्च सुतरां दृष्टार्थत्व उपपद्यते। प्रतिपत्तिः शेषस्येति। दृष्टार्थत्वेपि सन्देहः। किं संयवनार्था उत सर्वार्था इति? तत्र केचित्प्रतिषेधश्च सुतरां दृष्टार्थत्व उपपद्यते। प्रतिपत्तिः शेषस्येति। दृष्टार्थत्वेपि सन्देहः। किं संयवनार्था उत सर्वार्था इति? तत्र केचित्प्रणीताभिः संयौतीति वाक्यसामर्थ्यात् संयवनार्थतामाहुः। द्रव्यप्रक्लृप्तेः परार्थत्वात्तत्र चाविशेषात्सर्वार्थत्वाद्नुवादोयमित्यपरे। किं चाग्नीषोमीये प्रतिषेधानुपपत्तेः संयवनार्थत्वे हि तदभावादेव प्रणीतासु व्यर्थं प्रतिषेध इति। निरूढे च प्रतिप्रसवानुपपत्तिः। तत्रापि हि नैव संयवनमस्ति। सर्वार्थत्वे पुन प्रतिषेधप्रतिप्रसवावुपपद्येते। सूत्रकारप्रस्थानाच्च प्रणीतास्वुपसदिति। तस्मात्सर्वार्था इति ॥ ५० ॥

तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं द्विशः पात्राणि सं सादयति ॥ ५१ ॥

तृणशब्दो दर्भविषयः। यज्ञिया वै दर्भा इति लिङ्गात्। दर्भैस्तृणन्ति हरितैः सुवर्णैरिति च। समाचाराच्च। आचरन्ति हि दर्भैः परिस्तरणम्। आचार्याभिप्रायाच्च। बर्हिषस्तृणे तिरश्चीने दधातीत्युक्त्वा ऽन्ये वा युक्तत्वादित्यभिधायाह्यन्यत्रापि तृणार्थ इति। अन्यदुपादीयमानं बर्हिर्जातीयमेव प्रतीयते न तृणान्तरजातीयम्। पुरस्तात्प्रथममिति दिगभिप्रायम्। आहवनीयस्तु कार्यक्रमादेव प्राप्नोति। ततो गार्हपत्यदक्षिणाग्नी तयोरपि पुरस्तादेव प्रथमं श्रुतेः।

शेषं च स्मृतिवशात्। प्रदक्षिणमावृत्तिसामन्तेषु अप्रदक्षिणमिति। इह च परिस्तीर्येति परिः समन्तार्थः। स्मार्ते चैतस्मिन् सति क्रमे तदपचारे स्मार्तमेव प्रायश्चित्तम्। तथैतत्परिस्तरणमाहुत्यङ्गं यज्ञसंयोगात्। स हैव यज्ञ उवाच नग्नताया वै बिभेमीति प्रकृत्य तस्मादेतदग्निमभितः परिस्तृणन्तीत्याह। यज्ञसम्बन्धादाहुतिर्यज्ञशब्देनोच्यते। अथ यज्ञसम्बन्धमात्रमेवोच्यते। तथासत्याग्निव्यतिरेकेणान्यत्रापि स्यात्। तत्र तस्मादेतदग्निमभितः परिस्तृणन्तीत्यसमञ्जसं स्यात्। तस्मादाहुत्यङ्गमेतत्। तत्रापि केचिदाहुत्यर्थत्वात्पशुधर्महोमहिरण्यादिषु वाक्यसंयोगात्परिस्तरणमिच्छन्ति। वाक्यं ह्येतत्। स हैव यज्ञ उवाचेति। तत्र प्रकरणानुरोधेन न यज्ञविशेषे व्यवस्थापयितुं शक्यमिति। तदेतदसद्वाक्यस्य यज्ञविशेषविषयत्वात्। स हैव यज्ञ उवाचेति एष इत्ययं शब्दः प्रकृतयागविषयः। तस्माद्दर्शपूर्णमासाहुत्यङ्गमेव। तथा चाह परिस्तीर्य तं पूर्ववत्पात्रासादनमिति। द्विशः पात्राणि सादयतीति द्वे द्वे एकीकृत्य सा चैषा द्वन्द्वता पात्रोद्देशसामर्थ्यात्सर्वत्र प्रवर्तते। एवं हि समामनन्ति द्वन्द्वं पात्राण्युदाहरन्ति। ननु च शूर्पं चाग्निहोत्रहवणी चेत्येवमादिसमाम्नानाद्दर्शगणस्यैव द्वन्द्वता। इतरथा हि पाठवैयर्थ्यप्रसङ्गात्। आह च तद्दशाक्षरा वै विराड् विराड् वै यज्ञ इति। नवोक्तहेतुत्वात्। उक्तं हि पात्रोद्देशेन द्वन्द्वता विधानमिति। पाठवैयर्थ्यप्रसङ्ग इति चेत्। न विशिष्टद्वन्द्वपरिग्रहार्थत्वादन्यथा हि विनियोगक्रमव्यवस्थितानां द्वन्द्वता स्यात्। तत्र स्फ्यस्य कपालैः सह द्वन्द्वता न स्यात्। अथ पुनः पाठे सति विशिष्टद्वन्द्वपरिग्रहः सिद्धो भवति। यत्पुनरुक्तं तद्दशाक्षरा वै विराड् विराड् वै यज्ञ इति। सोऽप्यनुवादः। एवं च सति विकारे चर्विष्ट्यां स्फ्य एक एवासादने। न हि तत्र द्वन्द्वोपजनकानि कपालानि सन्तीति। यथोपरितनेन द्वन्द्वता क्रियते। तत्र यथापाठं द्वन्द्वता न कस्यचित्स्यात्। ननु वैपरीत्येपि स्फ्यस्य द्वन्द्वताभावप्रसङ्गः किं क्रियताम्। द्वन्द्वयथाऽर्थं मा भूदिति। अर्थवदासादितानां तु द्वन्द्वगतविशेषानाम्नानात् यस्य कस्य चिद्येन केन चिद्द्वन्द्वतेत्यविरुद्धम्। सूत्रकाराभिप्रायश्च। द्विशः पात्राणीत्युक्त्वा शूर्पाग्निहोत्रहवणिस्फ्यकपालमित्येवमादि तु द्वन्द्वैकपक्षभावमाह। तेन च सिद्धायां द्वन्द्वतायां द्विश इत्यवाच्यं

श्रपणस्य पश्चादुत्तरतो वा[1] ॥ ५४ ॥

शास्त्रस्य तुल्यत्वात् ॥ ५४ ॥

कर्म्मणे वामिति शूर्प्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥ ५५ ॥

साकाङ्क्षत्वादाददे इत्यध्याहारः मन्त्रस्याविशेषादुभयार्थः। प्रयोजनमन्तरा येन्यन्तरेणापि प्रयुज्यते। शूर्पाग्निहोत्रहवण्यादानं निर्वापार्थम्। तत्सन्निधावाम्नानात्। प्रयोजनं पशायमन्त्रवदग्निहोत्रहवण्यादानं प्रोक्षण्यर्थतया। वाग्यमस्तु पदार्थधर्म्मः। यां वा अमूं ह विर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां विसृजत इति। कालोपलक्षणार्थत्वात्प्रयोजन हविर्ग्रहणाभावेपि पश्चादौ भविष्यति ॥ ५५ ॥

प्रतप्तं प्रत्युष्टं निष्टप्तमिति वा ५६ ॥

तत्संस्कारो हविर्ग्रहणार्थः तेन तदभावे न भवति ॥ ५६ ॥

गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठ त्समाङ्गि ॥ ॥ ५७ ॥

श्रपणशब्दस्याविशेषेपि सति अत्र गार्हपत्यविषयो ग्राह्यः। जघनेन गार्हपत्यं प्रागीषमनोऽवस्थितं भवति। तस्यदक्षिणं चक्रमाध्यानसोऽधिनिर्वपतीति। विकृत्यनुप्रवृत्तिदर्शनाच्च। स जघनेन गार्हपत्य प्राचीनावीति भूत्वा दक्षिणासीन एतां षट्कपालं पुरोडाशं गृह्णा-

---

१ श्रप्यन्ते अनेन हवींषि इति श्रपणो गार्हपत्यो आहवनीयो वा तस्य पश्चात् प्राक्संस्थान्युदगग्राणि प्रागग्राणि वा पात्राण्यासादयति। तदुक्तं कारिकायाम्—

"उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्" इति।

तीति । सङ्गताङ्ग समाङ्गि । सांयौगिकानि चाङ्गान्यत्र गृह्यन्ते । न हि सामवायिकव्यतिरेकणानां व्यपदेशोऽस्ति । अनडुत्प्राप्तिरपि तर्हि स्यात् । न केवलं गमनार्थत्वात्तयोस्तस्य चार्थाभावात् । तस्माद्युगयोक्त्रवरत्रादिमात्रमेव ॥ ५७ ॥

## धूरसीति धूरभिमर्शनम् ॥ ५८ ॥

धूः शब्दो युगशम्यान्तरालवचनः स्मृतः । एवं हि स्मरन्ति व्युत्पादयन्ति च । धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहम् । धारयतेर्वा इति । वहस्य विहन्तिरनसो वाधारणं शम्यान्तरालावनडुत्स्कन्धसम्बन्धाद्भवति । लिङ्गाच्च । तस्य वा एतस्यानसोऽग्निरेव धूरग्निर्हि वै धूरथ य एनद्वहन्त्यग्निदग्धमिवैषां वहं भवतीति । अतोऽन्यशेषपचारवृत्तिर्यथैवाग्नयोः । धूर्भेदाच्चोभयोरभिमर्शनम् । तत्संस्कारार्थ । दक्षिणामभिमृश्य तत उत्तराम् । उदक्संस्थतासम्पत्ते. । स्मर्यते हि सर्वत्रोदक्संस्थता । लिङ्ग च भवति । तथाह्युदग्भवति । तथोदीची भवतीति च । केचित्त्वेकस्या एव धुरोऽभिमर्शनमिच्छन्ति । वाक्यशेषात् । अग्निर्वा एव धुर्यस्तमेतदत्येष्यम्भवति हविर्ग्रहीष्यन्तस्मा एवैतन्निह्नुत इति । एकत्वादग्नेः सकृदेव निन्हव इति । तत्पुनरेतदर्थवादप्रायम् । अनोवयवसंस्कारश्चायम् । तौ च संस्कार्यौ भिन्नौ । प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्येति भेदेनाभिमर्शनमिति सम्प्रदायः ॥ ५८ ॥

## देवानामित्युपस्तम्भनस्य पश्चादीषाम् ॥ ५९ ॥

अभिमृश्य जपतीति सूत्रशेषः । अथ जघनेन कात्सम्भीमीषामभिमृश्य जपतीति श्रुतत्वात् । स चायमनः संस्कारत्वाच्च प्रतीवमावर्त्तते । तत्संस्कारश्च मन्त्रलिङ्गवाक्यशेषाभ्यां देवानामसि वन्हितममित्येवमादिना ऽनोऽभिधीयते नेषेति । अत एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति च वाक्यशेषः । अयं च मन्त्रश्चोदितार्थाभिधायी पितृयज्ञे विपरिणीयते । पितृणामसि वन्हितमं पितृहुतममिति च । देवशब्दस्य प्रकृतदेवबचनत्वात् । वचनं चात्रासमवेतम् । द्वयोर्हि देवतयोर्बहुवचनं श्रूयते । तेन विकार एकदैवत्ये वचनस्याविपरिणाम इति केचित् । तदेतदनुपपन्नमिव वचनस्याप्यत्र

स्यात् । उक्तं च तस्मात्सर्वत्र द्वन्द्वतेति सिद्धम् । पात्रशब्द साधनवचनो न खानवद्विषय । तथा हि स्फ्यकपालशम्याकृष्णाजिनादीनामपात्रता स्यात् । साधन चेत्पात्र कपालसमुदायस्य साधनत्वाद्यथाभूतस्य द्वन्द्वता । प्रतिचितिसाधनभाव इति चेत् । तथा च प्रतिचिति द्वन्द्वता । न समाम्नानसामर्थ्यात् । स्फ्य च कपालानि चेति । उद्धरणपाञ्योरपि कपालवदन्येन द्वन्द्वता । अर्थप्रसख्यया द्रव्योपकल्पनमिति परिभाषितत्वादवाच्यम् । पात्रासादनमिति चेत्स्यादेशकालार्थत्वात् ॥ ५१ ॥

यजमानो वा ॥ ५२ ॥

विकल्पार्थोयमारम्भ ॥ ५२ ॥

शूर्पाग्निहोत्रहवणि १अर्थवच्च ॥ ५३ ॥

स्फ्यकपालशम्याकृष्णाजिनमुलूखलमुसल दृषदुपलमिति यावत् । आसादयतीति अनुवर्तते । शूर्पं प्रसिद्धमेव स्यात् लिङ्गाच्च । यदि नडानां यदि षणूनां यदीषीकाणामिति । यथा चाध्वर्युरेव कर्त्ता स्यात्समाख्यानात्र वा करणस्याचादित्वात् । अव्यासङ्गाच्च । तस्मात्तद्भूतानामुपादानमिति । लिङ्गाच्च । तथदेवैषामत्राशुद्धस्तक्षावाऽन्यो वामेध्य कश्चित्पराहन्तीति । १अर्थवच्चेति

१ येषां येषां पात्राणामत्रोपयोगस्तेषा सर्वेषामुपयोगक्रमेणासादनमित्यर्थवच्चेत्यनेन बोध्यते । तथा च कात्यायन —

" प्राश्च प्राश्चमुदगग्नेरुदगग्र समीपत ।

तत्तथा सादयेद्द्रव्य यथया विनियुज्यत " इति ।

तानि चैवम् शूर्पाग्निहोत्रहवणी, स्फ्य कपालानि, शम्या कृष्णाजिनम्, उलूखलमुसलम्, दृषदुपलम्, पात्री पवित्रच्छेदनानि, पवित्रे उपवेष , आज्यस्थाल्युपसर्जनी पात्रम्, कुयमुष्टिरन्वाहार्यपात्रम्, वेदितृणमग्नि , योक्त्र स्रुव , जुहूपभृत्, ध्रुवा सन्नहनावच्छादनानि, परिधयो विधृती, आज्य पुरोडाशपात्र्यौ, होत्रषदन प्रतावदानम्, औषध प्राशित्रहरणे, अन्वाहार्यतण्डुला अन्तर्धानकट , पूर्णपात्र पक्षे समिद्द्रव्य च, इध्मबर्हिपास्पफलरण खड्गस्त्त चेति ।

अर्थोऽस्यास्मिन्निधत इति अर्थवत्प्रयोजनवदित्यर्थः । तच्च विनियोगक्रमेणासाधने । अर्थवद्भहणाद्यपि न परिध्युपवेपादिवत्साक्षाच्छ्रूयत । अन्वाहार्योपसर्जनीपात्रादि तदप्यासादनीयम् । इन्धनाद्यपीति चेत् । नाचोदितार्थत्वात् । चोदिते हि यदर्थात्प्राप्नोति तदासाधते । तत्रापि याज्ञिकैर्दण्डक. प्रणीतो ऽन. पात्री वा पवित्रच्छेदनानि चेत्यत्रमादि । तत्र चोपवेपसमनन्तरमाज्यस्थाल्युपसर्जनीपात्रम् । पेषणोपधानाज्यनिर्वपणानामेककालत्वात् । पिंषन्ति पिष्टान्यभिन्धन्ते कपालान्यधैक आज्यं निर्वपतीति । उपधानोत्तरकालमुपसर्जन्यधिश्रयणमिति । कुशमुष्टिरपि तर्हि ततः पूर्वं प्राप्नोति । पव हि सूत्रितं निरुप्याज्यं वेदं करोतीति । न समत्वादुपधानादुत्तरकालमुपसर्जन्यधिश्रयणमाज्यनिर्वापणाच्च वेदबन्धनम् । तुल्यकालतोभयोरपीति न नियमोऽवसीयते । उच्यते । कुशमुष्ट्युपसर्जनीपात्रयोर्यद्यप्येककालता । तत्कार्ययोस्तुगम्यते पौर्वापर्यं । प्राक्कालीनं ह्युपसर्जनीकार्यं वेदकार्यादतः पूर्वमुपसर्जनीपात्र ततः कुशमुष्टिरिति । ततश्चान्वाहार्यपात्र प्राशित्रहरणोत्तरकाल प्राप्नोति । न तण्डुलानामसाधवसरः तत्पात्रं तु कुशमुष्ट्यन्तर्धानतृणयोरन्तराल इति । पात्रस्याधिश्रयणार्थत्वादेवं सर्वत्र कार्यक्रमेणासादनमालोचनीयमिति । विकारेपि च प्राकृतपात्रकार्यापत्रस्य वैकृतस्यासादनादिप्रवर्त्तत एव । किं पुनस्तत्रापि कार्यक्रम एव । न, प्राकृतपात्रक्रमः । प्रकृतावपि हि कार्यक्रम एव कारणमासादने । तद्यथा निरूढे वपाश्रपण्यनन्तरं दक्षिणाद्रव्यमिति । यत्पुनर्विकृतावप्राकृतकार्यापत्रम् । यथा मन्थनचतुष्टयम् । यूपश्रुरचतुष्टयादि तत्प्रकल्प्यत एव नासाद्यते न प्रोक्ष्यते च । न हि तस्यासादनप्रोक्षणे विहिते । न च कार्यापत्तित. प्राप्तिस्तस्मादुपकल्पनमेव । चर्विष्टयां चरुपात्रस्य तर्हि कपत्तित. प्राप्तिस्तस्मादुपकल्पनमेव । पालधर्मा. सन्तु कार्यापत्तेरिति । स्यादेतदेव यदि कार्यापत्तिः स्यात् । न त्विह तथा । इह हि न चरुपात्रगतेनोष्मणा चरु. पच्यते । कपालगतेनेव पुरोडाश. । कथं तर्हि चरुपात्रगत ऊष्मोदकमेव तपयति तत्त अग्निसिद्धिरित्यकपालकार्यापत्तिरिति । ततश्चरुपात्रमप्युपकल्प्यते । यच्चप्रकृतावेव याज्ञिका इध्मावर्हिषोरुपकल्पनमाहुः तदिह प्रोक्षणाभावात् । तदभावश्चोपरिष्टात्प्रोक्षणविधानात् । प्रोक्षति विप्रस्येति ॥ ५३ ॥

समवायात् । यद्वोऽह्यत्र देवता अग्निरग्नीषोमौचेति । न त्वग्नीषोमयोः समुदितयोः देवतात्वादेकत्वम् । नैतदेवम् । समुदितयोरपि देवतात्वे देवशब्दस्य प्रत्येकवृत्तित्वम् । अग्निर्देवः सोमोदेव इति प्रसिद्धम् । मन्त्रलिङ्गाच्च । देवो अग्निर्देवः सोम इति च । न चात्रावयवभूतोग्निः सोमो वा नास्ति । किं तु पृथक्त्वेन देवतात्वाभावः । पृथक् तद्धितानुपपत्तेः । समुदायाच्च तद्धितप्रत्ययदर्शनात् । समुदितयोरपि देवतात्वेऽग्नेः सोमस्य चास्त्येव समवायः । एवं च सति अग्नीषोमाभ्यामिति द्विवचनोपपत्तिः । एवं च सति अग्नीषोमयोरुज्जितिमिति च । यच्चोक्तं अपिष्टो वा देवतान्यत्वादिति युक्तं तदग्निसद्वितीयस्य पूष्णो देवतात्वाद्भवति पूष्णोन्यत्वम् । समवायस्तु पूष्णोपि न निवार्यते । अथ देवतैव देवशब्देनोच्यते । तथा च सति प्रातिपदिकार्थस्याप्यनन्यत्वात् पितृयज्ञे देवशब्दस्याप्यविपरिणामः । पितरोपि हि नादितत्वाद्देवता शब्देनाभिधातुं शक्यन्ते । ततश्च देवताविषयो देवशब्द इति अविपरिणामः । अथ तत्र पितृशब्देन चोदना पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्य इति । न च पितरो न देवशब्देनाभिधातु शक्यन्त इति विपरिणंस्यते देवशब्दः । नैतदेवं देवताविषये हि देवशब्दे पितॄणामपि नोदितत्वाद्देवतात्वाद्देवशब्दप्रयोगो ऽविरुद्ध एव । अथ शब्दान्तराभिहितेषु देवशब्दो न प्रवर्त्तत इति । तथा च सत्यग्न्यादिष्वपि देवशब्दप्रयोगो दुर्लभः । तत्रापि हि शब्दान्तरत्वमाग्नेयो ऽग्नीषोमीय इति । इयांस्तु विशेषः इह तद्धितस्तत्र चतुर्थी । न चोदित एव शब्दोन्यत्रापि प्रयोगादित्युक्तम् । अथ देवशब्दो योगादग्न्यादिषु प्रवर्त्तते दानादेव इति । तथापि पितृयज्ञे अनूह एव । पितरो हि तत्साध्यक्रियाभिनिर्वृत्तिद्वारेण फलदानादेवा इति । तदेतदप्यसत् । प्रत्यस्तमितावयवार्थवृत्तितया देवशब्दस्यार्थप्रतीतिसामर्थ्यात् । न च दानादेवत्वं सर्वत्रेष्यते । न हि सर्पन्त्यपि गोधा सर्पशब्देनाभिधातुं शक्यते । प्रत्ययस्य विशिष्टजातिविषयत्वाद् भुजङ्ग एव सर्पशब्देनाभिधीयते । तेनेहापि प्रत्ययस्य विशिष्टार्थप्रवृत्तिरग्नादिव एव देवः । तेषां च बहुत्वात्समवेतं वचनम् । ननु चैवमपि देवद्वित्वम् । अग्नेरुभयत्रैकत्वात् । नैतदेवम् । एको हि केवलोग्निरपरः सोमसद्वितीय इति बहुत्वम् । ननु चैवमपि देवानामिति षष्ठी बहुवचनमनुपपन्नम् । न हि तदन्तः पृथगग्निना

सोमेन च सम्बध्यते । इतरेतरमन्यपेक्षयोर्देवतात्वात् । यथा च देवानां देवतात्वं तथा तदर्थहविर्द्धारणद्वारेणाग्नो देवानामित्यु- च्यते । सत्यमेतदेवं मन्त्रे देवशब्दस्य वहुवचनान्तत्वात्तेषां च सा- क्षादनः सम्बन्धाभावात्तदुपलक्षितसमुदायद्वारेणानः सम्बध्यत इ- त्यदोषः । ततश्च विकार एकदेवत्ययोर्देवस्यासि देवयोरसीति च यु- क्तरूपतरं वचनम् । लिङ्गमपि चात्र समवेतं । विशिष्टलिङ्गत्वादग्न्या- दीनाम् । ततश्चादित्यैषर्चा देव्या असीति प्रयोगः । न च देवशब्दो दे- वताशब्दवदाविष्टलिङ्गः । येनादित्येष्यामप्यविकृतः प्रयुज्येत । देवीं वाचमजनयन्त देवा इति दर्शनात् । तथा देव्यनुमते देव्यदिते देवी- राप इति चेति । केचित्तु लिङ्गवचनयोरसमवायं मन्यमाना अपि प- रिणाममिच्छन्ति । तत्पुनर्विचारणीयम् । यज्ञपतिशब्दश्चानेकयज- मानके विपरिणम्यते । चोदितार्थाभिधानात् ॥ ५९ ॥

## विष्णुस्त्वेत्यारोहणम् ॥ ६० ॥

विष्णुस्त्वेत्यनेन मन्त्रेणानसो दक्षिणं चक्रमारोहति । एवं हि श्रूयते । स जघनेन गार्हपत्यं प्रागीषमनोवस्थितं भवति । तस्य दक्षिणं चक्रमारुह्यानसो विनिर्वपतीति ॥ ६० ॥

## प्रेक्षत उरुवातायेति हविष्यान् ॥ ६१ ॥

व्रीहीन्यवान्वा । तच्चैतद्धविः प्रेक्षणं नानाबीजेष्वपि तत्संस्का- रत्वात्प्रतिबीजमावर्त्तते । मन्त्रश्च क्रियार्थपरत्वात् । साकाङ्क्षत्वाच्चोरु- वातायेत्यस्य भवेत्यध्याहारः । ननु चात्र प्रेक्षत इति प्रेक्षणस्य चोदि- तत्वात् श्रौतक्रियापदाध्याहार एव न्याय्यः । सत्यमेवं, यत्र तेनैक- वाक्यतोपजायते । इह पुनरुरुवातायेति विस्तीर्णाना हविषः प्राणाय वाताय प्रार्थ्यते । न चासौ प्रेक्षत इति क्रियापदेन शक्यतेऽभिधातुम् । तस्माद्यथोक्त एव भवेत्यध्याहारः ॥ ६१ ॥

## अपहतमिति निरस्यत्यन्यत ॥ ६२ ॥

हविर्द्रव्यव्यतिरेकेण यदन्यत्तुषादि तदपहतमित्यनेन मन्त्रेण निरस्यति । रक्षोभिधायकत्वाच्च मन्त्रस्योदकोपस्पर्शनं भवति । प्रतपनमन्त्रे चैवम् । नानाबीजेषु च शक्यत्वाद्युगपदपद्रव्य-

निरसनं भवति ॥ ६२ ॥

अविद्यमाने ऽभिमृशेत् ॥ ६३ ॥

अभिमर्शनेऽप्ययमेव मन्त्रो । अथापास्तत्वपहतꣳ रक्ष इति यद्यत्र किञ्चिदापन्नं भवति । यद्युताऽपैव मृशेदिति श्रुतत्वात् । नानावर्जितेषु च भेदेनाभिमर्शनसंस्कारः । ततश्च मन्त्रावृत्तिः ॥ ५३ ॥

यच्छन्तामित्यालभते ॥ ६४ ॥

हविर्द्रव्यं प्रकृतत्वात् । पञ्चभिरङ्गुलीभिरभिमर्शनं स्यात् । मन्त्रलिङ्गवाक्यशेषाभ्यां यच्छन्तां पञ्चेति नियमन्तु पञ्चेत्येतदुक्तं भवति । तथा पञ्च वा इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञ मेवैतदत्र दधातीति । नचोपदेशाभावात् । मन्त्राणां चाविधायकत्वात् यच्छन्तां पञ्चेति चग्रहणापेक्षया । बहुषु च भेदेनालम्भः संस्कारात् ॥ ६४ ॥

देवस्यत्वेति गृह्णात्याग्नेयं चतुरो१ मुष्टीन् ॥ ६५ ॥

ग्रहणे मन्त्रः स्यात् । तदुपदेशात् । स गृह्णाति देवस्यत्वेति । प्रक्षेपे वा । गृह्णातेस्तदर्थत्वात् । तत्कुतः । वचनादाग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति । मुष्टीन्यजमानो गृह्णीयात् । परिमाणस्य याजमानत्वात् । न वा पदार्थप्राधान्यात् । तस्य चाध्वर्युकर्तृकत्वात् । तत्कुतः । समाख्यानायजमानपरिमाणमन्यविषयम् यथा पञ्चारत्निं परिवासयेदिति ॥ ६५ ॥

एवमग्नीषोमीयम् ॥ ६६ ॥

ननु चोत्तरसूत्रादेव तत्प्राप्तेरवाच्यमेतदिति । न हि तदैन्द्राग्नविषयम् । यथा दैवतमन्यदित्येतद्विषयताप्यस्यास्यिति चेत् ।

---

१ मुष्टित्रयं मन्त्रेण चतुर्थं तूष्णीम् । एवमेव सर्वेषु सूत्रेषु । प्रक्षेपानन्तरं चाग्निहोत्रहवण्याः शूर्पे हविः पृथक् पृथक् प्रक्षेपणीयम् । एवं शूर्पादानस्यापि स्थापेता भवति । अग्निहोत्रहवण्यां च रिक्तायां हविरन्तरं प्रदीप्यते; आपश्च तत्र परिप्लवन्त इति तत्त्वम् ।

ततश्चावाच्यमेवमग्नीषोमीयमिति । न समाम्नायोपप्रदर्शनार्थत्वात् । यथा दैवतमन्यदिति हि प्राप्तौ समाम्नायो न प्रदर्शितः स्यात् । तत्र पूर्वस्मिन् मन्त्रे ऽग्नीषोमाभ्यां जुष्टं गृह्णामीति शेषभावमियात् ॥ ६६ ॥

## यथादेवतमन्यत् ॥ ६७ ॥

ऐन्द्राग्नाद्यर्थोयमारम्भः । ननु चैवं यथा देवतमिति नोपपद्यते । वीप्सायां ह्ययमव्ययीभावः । या या देवता यथादेवतमिति । वीप्सा च बहुविषया । न चात्र देवता बहुत्वम् । अतोनुपपन्नमेतदिति । अथ विप्रकृत्यर्थमुच्येत । तत्रापि चोदकेनैव प्राप्तत्वादवाच्यता । प्रकृत्यर्थत्वे च शब्द दोष इत्युक्तम् । उच्यते, प्रकृतावेव देवता बहुत्वमस्ति । तद्वैके चरु निर्वपन्ति पौर्णमास्यां सारस्वते ऽमावास्यायां सरस्वत्या इति । ऐन्द्राग्नेन सह देवता बहुत्वम् । अथायमविधिः स्यात्तयाभ्युदितेष्टिविषयं भविष्यति । अस्ति हि तत्र व्रतावक्तौ ग्रहणे देवताबहुत्वमिति । नन्वभ्युदितेष्टिरपि विकृतिरूपा ततश्च विकृत्यन्तरवत्रैवं विषयतापि स्याद । सत्यमेवम् । तदेवेदं कर्मविकृतरूपमित्यदोषः ६७ ॥

## भूतायत्वेति शेषाभिमर्शनम् ॥ ६८ ॥

साकाङ्क्षत्वान्मन्त्रस्य परिशेषयामीत्यध्याहारः । न ह्यत्राभिमर्शनक्रियापदमेकवाक्यतामुपैति । किमिति । भूताय प्रभवायाविच्छेदाय नारातये नादानाय कृपणतया परिशेषयामीति एकवाक्यता । न ह्यस्याविच्छेदायाभिमर्शनम् । परिशेषणं त्वविच्छेदाय भवति । तस्माद्यथोक्त एव वाक्यशेषः । स चायं शेषसम्बन्धेपि सति दृष्ट एव संस्कारः । प्रयोजनवत्त्वात् । न च शेषेण संस्कृते नास्ति प्रयोजनम् । अत स्रङ्मालापनयनवच्छेषसंस्कारः प्रतिपत्तव्यः । तद्यथा । स्रङ्मालां देवदत्तस्येति कृत्वा शुचौ देशे व्यवस्थाप्यते । अपगतदेवदत्तसम्बन्धाया अपि मालायाः संस्कारो देवदत्तस्यैवानिष्टपरिहारार्थं, न मालाया, एवमिहापीति, प्रयोजनं शेषसंस्काराभिसम्बन्धार्थतया सशेष ग्रहणं कर्त्तव्यमिति ॥ ६८ ॥

स्वरति प्राङीक्षते ॥ ६९ ॥

तथैतद्दृक्सनिरोधोपजातश्रमापनोदायेक्षणम । परिवृतमिव वा एतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति यत्रो वै स्वरहर्देवाः सूर्यस्तत्स्वरे वै तदनोभिविपदयतीति लिङ्गात । प्रयोजन निर्वापाभावे न भवति ॥ ६९ ॥

, इ; हन्तामित्यवरोहति ॥ ७० ॥

अनसः ॥ ७० ॥

गच्छत्युर्वन्तरिक्षमिति१ श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति ॥ ७१ ॥

यो यदा श्रपण । अग्निशब्दश्चात्र श्रपणाग्निविषयः । न देवतावचनः सन्निधानात् । प्रयोजन विकृतावविपरिणामः ॥ ७१ ॥

पात्र्यां वा स्फ्योपहितायाम् ॥ ७२ ॥

एतदनः सम्यग्विप्रतिपत्तव्यम् । उतो पात्र्यै गृह्णन्तीति हि समामनन्ति तदा ॥ ७२ ॥

धूरीपारोहणानि पात्रीविले जपति ॥ ७३ ॥

धूरीपारोहणादिमन्त्रैस्तन्मन्त्रा लक्ष्यन्ते । जपति शब्दोपादानात । विलिङ्गा अपि वचनसामर्थ्यात् विनियुज्यन्ते । अनन्तरायमुनर्हि य-

१ उत्तरद्देशं प्रति ।

२ अत एव वरुणप्रघासेषु पूर्वेधुर्मेषमिथुनकरम्भपात्राणि गृहीतानां यवानां दक्षिणाग्नेः पश्चात् सादनम् । विध्यावां च द्विविपर्यया-दुगार्हपत्यदक्षिणाग्न्योरुत्तरतो दधिपात्रासादनम् । त्र्यम्बकेषु गार्हपत्यस्य दक्षिणत इति विवेकः ।

जूंषि जपेदिति १ ॥ ७३ ॥

इदंहन्तामित्युत्थानम् ॥ ७४ ॥

अस्मिन्पक्षे ॥ ७४ ॥

कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशौ च्छिनत्ति पवित्रे स्थ इति ॥ ७५ ॥

अप्रशीर्णाग्रावग्रवन्तौ । अनन्तर्गर्भौ ययोरन्तर्मध्ये गर्भौ न स्तः । तौ कुशौ छिनत्ति पवित्रे स्थ इत्यनेन मन्त्रेण ॥ ७५ ॥

त्रीन् वा ॥ ७६ ॥

छिनत्तीत्यनुवर्त्तते । तत्र मन्त्रो न स्यात् द्विवचनान्तत्वात् । पवित्रद्वयपक्षे च कृतार्थत्वात् । स्वाद्यार्थाभिधानसामर्थ्यात् । प्रातिपदिकार्थस्य विद्यमानत्वात् । द्विवचनस्यासमवायान्नेति चेत् । माभूत्समवायः । गुणो हि संख्या प्रातिपदिकार्थः प्रधानभूतः । न च

---

१ इदमत्रानुसन्धेयम् । एषां मन्त्राणां न पदार्था भवन्ति येऽनसि । कथम् ? धूस्तावद्धूर्वन्तेर्वधकर्मण इति सापि ( पात्री ) किंचिदागच्छद्धिहन्ति । तत्राप्यग्निरस्ति सर्वगतत्वात् । हविर्महीष्यन्नप्ययुंस्तामतिक्रामति, तस्या अपि निन्हुते धूरसीत्यादिना । अनोऽयमपाऽप्यपि हविष्यान् धारयतीति वन्हितममित्यादिशब्दैरुच्यते । विष्णुश्चाध्वर्य्वात्मकः, तत्र पादेन क्रमते अत्र तु हस्तेनेति विशेषः । तस्मात् सिद्धप्रयोगाणां पात्र्यामपि न पदार्था इति हरिस्वामी । यदि तु पात्र्यां गृह्णीयात्तदा धूर्विशाद्यभावेन तदननुष्ठानकृतं व्यवधानमन्तरायमन्तरेण तत्प्रकाशकयजूंषि जपेदिति माधवाचार्याः । पार्श्वतः पश्चाद्देशे उत्तरस्मिन्नुपविश्य प्राङ्मुखो ग्रहणं कुर्यात्, पित्र्यायां दक्षिणासीनः, व्यत्ययकेऽप्युदङ्ङासीनः । आसनाय स्थानासम्भवे पार्श्वमपरेणैव गत्वा दक्षिणतः प्राङुपविष्टेनैव ग्रहणं कार्यम् । पार्श्वागारपत्योरन्तराले गमनस्यासिद्धत्वात् । अनस्यपि प्राङ्मुखोपविष्टेनैव ग्रहणं कर्तव्यमिति दिक् ।

ग्न इत्यनेन मन्त्रेण प्राचोऽङ्गारानुदूहति । तच्चैतदङ्गारापोहनं दे॰ शरेचनार्थं रिक्ते हि देशे कपालानि यथोपधीयेरन्निति । एवं च सति चर्विष्वामपोहनाभावः । धानाभर्जनस्य च देशरेचनकृतोपकाराभा॰ वात् । अङ्गारेषु ह्यधिश्रयणमुभयोरपि प्रसिद्धम् । केचिदनेन मन्त्रे॰ णाङ्गारनिरसनमेव कुर्वन्ति । मन्त्रलिङ्गात् । अपाग्ने अग्निमामादं जहि निःक्रव्यादꣳ सेधेति अपजह्याग्निमामादं निषेध च क्रव्यादमि॰ ति । वाक्यशेषाच्च । एतावेवैतदुभावतोपहन्तीति । तदेतदनुपपन्न॰ मविधानात् । विध्यन्तरशेषत्वाच्च । अस्तिह्यत्र विध्यन्तरम् । तेन प्रा॰ चोऽङ्गारानुदूहतीति । मन्त्राणाञ्चाविधायकत्वमुक्तम् अत उद्वहनमा॰ त्रमेव । अपिचाग्न्युत्सर्गे दोषो दृश्यते वीरहा वा एष भवति योऽग्नीनुत्सृजतीति ॥ १०९ ॥

## आदेवयजमित्यङ्गारमाहृत्य कपालेनाभ्यच्छादयति ध्रुवमसीति ॥ ११० ॥

यद्यपि चाङ्गारे द्वितीया कपाले च तृतीया । तथाप्यङ्गारस्य निष्प्रयोजनत्वात्कपालस्य च प्रयोजनवत्त्वात् कपालार्थतैवाङ्गार॰ स्य । कपालधर्मोऽपि च सन् तं मध्यमेन कपालेनाभ्युपदधातीति । मध्य॰ मसंयोगात्तद्धर्मे एवायं न कपालमात्रधर्मः । न च भर्जने प्रवर्त्तते । अङ्गारेषु हि तस्याधिश्रयणम् । आपितृयज्ञं वहेति च पितृयज्ञे विप॰ रिणामः । ननु चायमसमवेतवचनः । न ह्यत्र देवा इज्यन्त इति । तेन देवयाड्वत्वं यथाकथञ्चिदिदमुच्यते । देवेज्यार्थहविःश्रपणद्वारे॰ ण देवयाड्त्वमस्यापि भवति । यथा च देवयाड्त्वं तथा मन्त्रो॰ ऽनुवदति । तस्मात्समवेतवचनः ॥ ११० ॥

## अमुष्येति द्विषच्छब्दे ऽभिचरन् ॥ १११ ॥

अमुष्य यथायेति अभिचरन्नामातिदिशति । द्विषच्छब्दमपनीय । सचायं द्विषच्छब्दो न स्वरूपतो गृह्यते किं तर्हि द्विषच्छब्दान्तरम॰ पि । एवं च सतीह भ्रातृव्यशब्दे स्यादेशः सिद्धो भवति ॥ १११ ॥
किमिदंच द्विषच्छब्दे भिचरतो नामादेशः । नेत्युच्यते—

## अन्यत्रापि ॥ ११२ ॥

अतोऽन्यत्रापि अभिचरतो द्विषच्छब्दे नामादेशः कर्त्तव्यः । यथा द्विषतो बधोऽसि भ्रातृव्यमवबाध इत्येवमादि ॥ ११२ ॥

संव्याङ्गुल्याशुन्येङ्गारं निदधात्यग्ने ब्रह्मेति ॥११३॥

अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवतीति श्रूयते । स चार्थं कपालसंस्कारत्वात्प्रतिकपालमावर्त्तते । गुणविभक्तिनिर्दिष्टमपि चात्र प्रयोजनवत्वात्कपालमेव संस्कार्यमगारे गावो वास्यन्ताम्, आकारे कुसुमानीति वत् । भर्जनेपि चोपरिष्टादङ्गार· प्रयत्नेत एव । मद्रार्थत्वात् । चरोस्त्वकपालकार्योपपत्तेर्न तद्धर्मप्रवृत्तिः ॥ ११३ ॥

धरुणमिति पश्चात् ॥ ११४ ॥

कपालमुपदधातीति वाक्यशेष· ॥ ११४ ॥

[1]पुरस्ताद्धर्त्रमिति ॥ ११५ ॥

[2]विश्वाभ्य इति दक्षिणतः ॥ ११६ ॥

प्रथमं कपालमङ्गीकृत्येतरत्र दिङ्नियम उच्यते—

समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित-
स्येति ॥ ११७ ॥

समं विभज्य चितस्येत्यनेन मन्त्रेण द्वे दक्षिणत एवमुत्तरत उपदधाति प्रदक्षिणक्रमयोगेन । स्मार्त्तं चैतत्प्रदक्षिणं न श्रौतं तत-श्च तद्व्यत्यारे स्मार्त्तमेव प्रायश्चित्तं भवति । समं विभज्येत्यवाच्य· म । द्वे दक्षिणत एवमुत्तरत इति स्वशब्दाभिधानात् । स्याद्गनीषो· मीयार्थत्वात् । तत्र हि समविभागानुकाधिक दक्षिणत इति न वि-

१ 'धर्त्रमसि दिवम' इत्यनेन मन्त्रेण पुरस्तात् पूर्वस्यां दिशि कपालमुपदधाति ।
२ 'विश्वाभ्यस्त्वाशाभ्य' इत्यनेन दक्षिणतः दक्षिणभागे कपालं स्थापयति ।

गुणानभिधानेन प्रधानमभिधास्यतीति शक्यते उत्स्रष्टुम्। तस्मादितरपक्षेऽपि मन्त्रः प्रवर्तत एव ॥ ७६ ॥

हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ॥ ७७ ॥

हविर्ग्रहणीति न हविर्ग्रहणविवक्षया। किं तर्हि अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपतीत्याम्नानात्। अतस्तद्विवक्षेयम्। प्रयोजनं ग्रहण्याभावेऽपि तत्राऽपः क्रियेरन्। ताभ्यामुत्पुनाति सवितुर्व इत्यनेन मन्त्रेण ॥ ७७ ॥

तास्थानं तयोः ॥ ७८ ॥

ताः अपः पवित्रयोः स्थानं वचनसामर्थ्यात्। पवित्रे निधाय प्रणीतास्विति चाम्नानात् ॥ ७८ ॥

सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति ॥ ७९ ॥

उदिङ्गयति ऊर्ध्वं गमयति। दक्षिणग्रहणं शक्यमवक्तुं, समाचारात्प्राप्तेः। कर्तव्यं वा, सव्यस्थितानामेव प्रोक्षणीनामुदिङ्गनं यथा स्यादिति। यज्ञपतिशब्दश्चानेकयजमानके यथार्थं विपरिणम्यते १ ॥ ७९ ॥

प्रोक्षितास्थेति तासां प्रोक्षणम् ॥ ८० ॥

तास्य यथाक्रम एकदेशेनेति सम्प्रदायः। नेत्यपरं स्मारन्ति क्रियाविरोधात्। न हि प्रोक्षणे कर्मता करणता च

---

१ स च 'यज्ञपती सुधातू' 'यज्ञपती देवयुवौ' 'यज्ञपतीन् सुधातून्' 'यज्ञपतीन् देवयून्' इत्यादि यथायथमूहनीयः।

तासां सम्भवतीति । मन्त्राश्च नोपदिश्यन्ते । तस्मादमन्त्रोच्चारणमेव । तदेताभ्यो निन्हुत इति च लिङ्गात् । अत्र पुनस्तासां प्रोक्षणमित्यसमञ्जसं स्यात् । हविश्चेति प्रोक्षणक्रियानुकर्षणार्थचशब्दानुपपत्तिश्च । तस्मात्सम्प्रदाय एव ज्यायान् । अथ ताभिरेव प्रोक्षणं विरुध्यते नतः प्रणीतेन भविष्यति । निन्हवश्चार्थवादमात्रः ॥ ८० ॥

## हविश्चाग्नये त्वाग्नीषोमाभ्यां त्वेति ॥ ८१ ॥

अत्र क्रियापदाभावात् अधस्तनसूत्रोपात्त प्रोक्षणक्रियापदं चशब्देनानुकृष्यते । तच्च यथाश्रुतमेकवाक्यतामनुपपद्यमानस्तत्प्रोक्षतीति विपरिणतरूपमनुकृष्यते ॥ ८१ ॥

## यथा देवतमन्यत् ॥ ८२ ॥

एवं व्याख्यानम् ॥ ८२ ॥

## पात्राणि दैव्यायेति ॥ ८३ ॥

प्रोक्षतीत्यनुवर्त्तते । शुन्धध्वं इति बहुवचनसामर्थ्यात् । कुटीकृत्य प्रोक्षणमित्येके । तत्र प्रोक्षणस्य पात्रोद्देशेन विधानात् । समुदायस्य चाचोदितत्वात् । प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्या । तस्मात्प्रतिपात्रमेव । बहुवचनं तु पूजार्थम् १ । यतः उत्सा उपसःकेतुमक्रवेति यत् । देवशब्दस्य स्थाने पितृयज्ञे प्रधानार्थेषु पात्रेषु शूर्पकपालकृष्णाजिनोलूखलमुसलादिषु पितृशब्देन प्रयोगः । यानि त्वङ्गप्रधानार्थानि प्रनाडिकयापि तेषु देवपितृशब्दप्रयोगः । यत्तु तत्रापि देवकर्मार्थं तत्र दैव्यायेत्येव । पात्र प्रोक्षणे च विनियोगक्रम । क्रमान्तराभावात् ॥ ८३ ॥

## असञ्चरे प्रोक्षणीर्निधाय ॥ ८४ ॥

स चासञ्चरः प्रणीताहवनीयान्तरालम् । ता ह्यन्तरेण सञ्चरेयुरित्युक्तत्वात् । यद्यपि चाहवनीयगार्हपत्यान्तराले हविष्पात्रस्या-

---

१ परेतु यथाग्निहिप्रोक्षणे जातेः प्रोक्षणं न व्यक्तेरेवं प्रात्रप्रोक्षणेपि, तथाच बहुवचनमप्युपपन्नमित्याहुः ।

म्पृत्विजां अन्तरागमनप्रतिषेधे सति असञ्चरव्यपदेशो भवति। तथा-पि तु प्रकरणसमर्थीत एव परिगृह्यते। नान्तरेण गच्छेयुरिति। इत-रस्य च सर्वविषयत्वात्। प्रोक्षणीशब्दश्च यौगिको न जातिनि-मित्तः संस्कारनिमित्तो वा। प्रोक्षणीभिरुद्धजिताः स्म इत्यसंस्कृतेपि शब्दप्रयोगात्। प्रकृत्युपसर्गप्रत्ययसमुदायार्थस्यावगम्यमानत्वत्। उक्षतिः सेचने, प्रशब्दश्च प्रकर्षे, करणे च प्रत्ययः प्रोक्ष्यत आभि-रिति। चिन्तायाः प्रयोजनम्। आज्यप्रोक्षणीष्वप्यसंस्कृता आदीयन्ते॥ ८४॥

## शर्मासीति कृष्णाजिनादानम्॥ ८५॥

शर्मासीत्यनेन मन्त्रेण कृष्णाजिनादानम्। कृष्णाजिनमिति ष-ष्ठीतत्पुरुषः। कृष्णस्य अजिनं कृष्णाजिनम्। न कर्मधारयः। कृष्णं च तदजिनं चेति। कुत एतल्लिङ्गात्। स कृष्णो भूत्वाचचार तस्य देवा अनुविद्य त्वचमेवाच्छाया जहुरिति। कृष्ण इति मृगोऽभिधीयते। प्र-योजनं मार्ग यथा स्यादिति। तदेतदादानमयथार्थं तदभा-वेऽभावः॥ ८५॥

## अपेत्य पात्रेभ्योवधूनोत्यवधूतमिति॥ ८६॥

यद्यपि चापगमनक्रियाऽध्वर्युविषया १। तथापि सामर्थ्यात्। कृष्णाजिनापनयनं प्रत्येतव्यम्। तस्य ह्यपनयनमपेक्ष्यते। अतिनत्येव पात्राण्यवधूनोति यद्धस्यामेध्यमभूत्तद्धस्यैतदवधूनोतीति। तदेत-दवधूननं रक्षार्थत्वात्संस्क्रियते। रक्षोभिधायकत्वाच्च मन्त्रस्योदका-लम्भो भवति॥ ८६॥

---

१ हरिस्वामिमतेनेदम्, तेहि' अतिनत्य पात्राणि' इत्यस्य अति-नत्य अतिक्रम्य पात्राण्यतीत्य 'नहि पात्राणि मेध्यानि सन्ति पु-नरमेध्यानि परं तु पुरुषः, इत्यभिप्रायेणाध्वर्युः पात्राण्यतिक्रम्य कृ-ष्णाजिनं सहृदवधूनोतीति व्याचख्युरिति।

१प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति ॥ ८७ ॥

चर्मणां प्राग्ग्रीवतोक्ता तदपवादः प्रत्यग्ग्रीवमिति ॥ ८७ ॥

सव्याशून्ये निदधात्युलूखलमद्रिरसि ग्रावासीति वा ॥ ८८ ॥

सव्येन पाणिना अशून्ये कृष्णाजिने उलूखलं स्थापयति । अद्रिरसीत्यनेन मन्त्रेण ग्रावासीति वा ॥ ८८ ॥

प्रतित्वेत्युभयोः ॥ ८९ ॥

शेषः । अत्राद्रिग्रावशब्दावुलूखलं स्तोतुं प्रयुज्येते । नहीदमश्ममयमुलूखलम् । वानस्पत्य इति विरोधात् । पृथुबुध्न इति च मन्त्रवर्णात् । सामर्थ्याच्च । अभिनिहितमेव सव्येन पाणिना भवति । अथ दक्षिणेनोलूखलमाहरतीति । न ह्यश्ममयमुलूखलं दक्षिणेनैकेनाहर्तुं शक्यते । तस्मादुपचारस्तुत्यर्थावद्रिग्रावशब्दौ । ये तु मन्त्राभिधानसामर्थ्यमात्रेणेपाश्ममयतां नियमयन्ति त एव प्रष्टव्याः । किं च मुसलेऽपि ग्रावशब्दप्रयोगात् । बृहद्ग्रावासीति । असंशयं च तद्वानस्पत्यम् । अत्र केचिद्वनिर्भिन्नचरो वानस्पत्यपदस्य स्थाने मानुष इति विपरिणाममिच्छन्ति । तत्पुनर्नातियुक्तमिव । न ह्युलूखलस्थापनपक्षेऽपि मन्त्राणां कृष्णाजिने स्थापनमस्ति । यतो न ते उलूखलमपस्कृष्णाजिने विना तण्डुलनिष्पत्तिं कुर्वन्ति ॥ ८९ ॥

हविरावपत्यग्नेस्तनूरिति ॥ ९० ॥

अग्नेस्तनूरित्यनेन मन्त्रेणोलूखले हविर्द्रव्यमावपति । अग्निशब्दश्च न देवतावचनो लिङ्गात् । यतो हि तेनाग्नेस्तनूर्भवति । यज्ञसा-

---

१ प्रतीच्यां ग्रीवा यस्य तत् प्रत्यग्ग्रीवम् । "कृष्णाजिनमयपूर्णोत्पूर्णायविमुरक्ष्याम्यापपूतमित्यत्रैतम्पुरस्तात्प्रतीचीनमर्णाधिमुत्तरलोमोपस्तृणाति" इत्यादिना तैत्तिरीयैरुक्तमेतत् ।

धत्ते यज्ञशब्दस्तस्य चाग्निसम्बन्धादग्नेस्तनूरित्युच्यते । तस्मात् ज्वलनविषयोऽग्निशब्दः। अग्नीषोमयोश्चानभिधानात्। प्रयोजनमवभृथे अपान्तनूरिति विपरिणामः। तत्रापि सवनीयैः सहानुष्ठानात्। असति प्रयोजने दार्विहुतावभृथविषयतोऽस्य। पितृयज्ञे च देववीतय इत्यस्य स्थाने पितृवीतय इति प्रयोगश्चोदितार्थाभिधानात् ॥ ९० ॥

वाचं विसृजते ॥ ९१ ॥

एवं हि श्रूयते यां वा अमूं हविर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां विसृजते इति ॥ ९१ ॥

यजमानश्च ॥ ९२ ॥

वाचं विसृजत इति वर्त्तते ॥ ९२ ॥

हविष्कृता वा ॥ ९३ ॥

हविष्कृदाह्वानकाले वा वाग्विसर्गः । तत्रापि हि श्रूयते। यावै हविष्कृद्वाचमेवैतद्विसृजत इति । नन्वर्थवादरूपत्वान्नाद विसर्गकालः। सत्यमेवं पूर्वत्रापि ह्यर्थवादरूपतैव किं तूभयत्राश्रितं विधिरवमाचार्येण वाक्यान्तराद्वा कुतश्चित् ॥ ९३ ॥

नानाबीजेष्वन्त्ये सामर्थ्यात् ॥ ९४ ॥

नानाबीजेष्टयां किमन्त्ये वाग्विसर्जनमुताद्ये? यथा देवसू हविःषु। तत्र हविरावपनस्य यतवाक्त्वं धर्मः। शूर्पादानादेर्व्याभाषणम्। एकैकं च हविस्तुषविप्रमोकान्तं कर्त्तव्यम । पदार्थस्यैतावत्त्वात्। तत्र यद्याद्ये वाग्विसर्गः शूर्पादानादेर्व्याभाषणधर्मानुग्रहः। अथान्तेह विरावपनस्य यतवाक्त्वधर्मानुग्रहः । तत्र नियमानियमयोर्नियमसामर्थ्यादन्त्य एव वाग्विसर्गः । न हि शूर्पादानादेर्व्याभाषणधर्मनियमः। इतरत्र यतवाक्त्वं नियतं इति ॥ ९४ ॥

बृहद्ग्रावेति मुसलमादत्ते ॥ ९५ ॥

हविष्येषु मुसलमिति वाक्यशेषः ॥ ९५ ॥

स इदमित्यवदधाति ॥ ९६ ॥

स चायं मन्त्रः स इदामिति चोदितार्थाभिधायकत्वात् पितृपक्षे विपरिणम्यते । वचनलिङ्गयोस्तु कृतं व्याख्यानम ॥ ९६ ॥

हविष्कृदेहीति त्रिराह्वयति ॥ ९७ ॥

हविष्कृदेहीत्यनेन मन्त्रेण त्रिः संशब्दयति हविः संस्कर्त्रीं पत्नीमग्नीधं वा ॥ ९७ ॥

अतः पत्न्यवहन्त्यन्यो वा ॥ ९८ ॥

अत इत्यवाच्यं पाठक्रमादेव तत्सिद्धेः । वाच्यं वा । प्रवृत्तावघातस्याह्वानप्रज्ञापनार्थत्वात् । तत्कुतो वचनसामर्थ्यात् । हविष्कृदेहीति त्रिरवघाताह्वयतीति । अन्यशब्देन च नर्त्विग्व्यतिरिक्तोऽन्य उच्यते । अन्यस्याप्रकृतत्वात् । ऋत्विजां च परिक्रीतत्वात् । सूत्रकारप्रस्तावाच्च । ऋत्विजां वैको प्रकृतत्वादिति । तेनाध्वर्युव्यतिरिक्तोऽन्यः परिगृह्यते । स चाग्नीत्सन्निकर्षात् । समाख्यानुग्रहाच्च । प्रज्ञापीति चेत् । न, तस्य वेदत्रयविहितकर्मसम्बन्धात् समाख्यानुग्रहाभावात् । भवति चाग्नीधोऽध्वर्युसमाख्यानम । आश्विनमध्वर्यवो भक्षयन्तीति प्रकृत्याम्नायते । त्रय आश्विनं भक्षयन्ति अध्वर्युः प्रतिप्रस्थाताग्नीध्र इति । तस्मादन्यशब्देनाग्नीदभिधीयते ॥ ९८ ॥

आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोसीति त्रिः शम्यया द्विर्दृषदं सकृदुपलाम् ॥ ९९ ॥

हविष्कृदाह्वानं कुर्वत्यध्वर्यावन्यो दृषदुपले आहन्ति । शम्यया कारणभूतया । द्विर्दृषदं सकृदुपलाम । कुक्कुटोसीत्यनेन मन्त्रेण । अन्य इति कुतो वचनात् । स यथैव हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्तीति । एक इति सर्वनामशब्देनाध्वर्योः परामर्शात्तदेको दृषदुपले समाहन्तीत्येकशब्दोऽग्नीद्विषयः । ततश्च वचनादग्नीध आहनने कर्तृत्वम् । न विरोधादुपधानवत् । तत्र हस्ताग्रहीतकर्तृविशेषकं वचनं स वै कपालान्येवाध्वरत उपदधाति दृषदुपले अध्वरत इति । इह पुनर्गृहीतः कर्तृविशेषः । अथ हविष्कृतमुद्वादयतीति

समाप्ययाध्वर्युः स यत्रैव हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्तीति । तस्माच्च विरोधादग्नीदिति । प्रयोजनमप्यध्वर्युस्त्वग्नीद्वेवावहन्ति इति । ननु च त्रिर्हविषद् सकृदुपलामित्युक्तत्वात्त्रिरित्यवाच्यम् । स्यादेतदेवं यदि त्रिशब्दो हन्तिना सम्बध्यते । अथ तु मन्त्रेणाभिसम्बध्यते । त्रिः कुक्कुटोसीति । त्रिर्हविषि सकृन्मन्त्रप्रयोगे प्राप्ते एकद्रव्ये कर्मावृत्ताविति मन्त्राभ्यासार्थोऽयमारम्भः । हन्त्यपि सम्बन्धे पुनस्त्रिशब्दस्यानुवादत्वं स्यात् । स चायमदृष्टोपकारकः पदार्थ इति । वक्ष्यत्युत्तरत्र तथा च सति यावदुक्तं निवर्तते ॥ ९९ ॥

वर्षवृद्धमसीति शूर्प्पमादत्ते ॥ १०० ॥

अवहन्ताऽभिप्रवृत्तत्वात् ॥ १०० ॥

प्रतित्वेति हविरुद्वपति ॥ १०१ ॥

स एव ॥ १०१ ॥

परापूतमिति निष्पुनाति ॥ १०२ ॥

अपहतमिति तुषान्निरस्यति ॥ १०३ ॥

अध्वर्यु रवघातशेषत्वात् । न चैषा प्रसिद्धिर्यदवहन्ता तुषान्निरस्यतीति । प्रतिपत्तिश्चैषा । तदभावेऽभावः ॥ १०२ ॥ १०३ ॥

वायुर्व इति विविनक्ति ॥ १०४ ॥

पृथक् करोति । तण्डुलान् कणांश्च वितुषीकरणाय । तण्डुलविविक्तीकरणं तुषनिरासनात्पूर्वं प्रतिपत्तव्यम् । सामर्थ्यात्तुषनिरसनं ह्येवं सति भवति । उक्तं च विरोधेऽन्तरपरत्वादिति । सूत्रमध्यं यथाश्रुतीत्यदोषः । स चायमवघातः कृष्णाजिनादारभ्य तुषविप्रमोकान्तः । तत्र नानार्थानामेषां हविरावपनमुसलयोरुत्तरविवेचननिष्पवनविवेकाकरणानि भेदेन मन्त्रयन्ति । हविष्परस्यामन्त्रस्य । शेषं तन्त्रेण ॥ १०४ ॥

देवोव इति पात्र्यामोप्याभिमन्त्रयते ॥ १०५ ॥

हविष्यात् । नानार्थाजेष्टयां च सन्निपातात्तन्त्रेणाभिमन्त्रणम् १ ॥ १०५ ॥

त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके ॥ १०६ ॥

फलीकरणं कणविमोकः । तत्र कर्तव्यं देवेभ्यः शुन्धध्वमित्यनेन मन्त्रेण । वीप्सा प्रतिफलीकरणमन्त्रावृत्तिपरा । न हि प्रतिप्रहारं मन्त्रावृत्तिर्युज्यते । पितृयज्ञे च पितृभ्यः शुन्धध्वमिति विपरिणामः ॥ १०६ ॥

फलीकृत्य कणान्निदधाति ॥ १०७ ॥

फलीकृत्येत्यवाच्यम् । पाठक्रमादेवतत्सिद्धेः । स्यात्प्रतिफलीकरणं कणनिधानं यथा स्यादिति ॥ १०७ ॥

पेषणोपधाने युगपत् ॥ १०८ ॥

स वै कपालान्येवान्यतर उपदधाति दृषदुपले अन्यतर इति हि प्रकृत्य समामनन्ति । तस्मा एतदुभयं सह क्रियत इति । तत्र पेषणमन्तरङ्गत्वादध्वर्युः करोति । बहिरङ्गत्वात् चोपधानमग्नीदेव वर्तयति २ । तत्र श्रुतिपठानुसारेण पूर्वमुपधानमुच्यते ॥ १०८ ॥

धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान्प्राचः करोति ॥ १०९ ॥

उपवेषोऽङ्गारापोहनसमर्थं काष्ठम् । तद्धृष्टिरसीत्यादाय अपा-

---

१ परेतु नानार्थाजेष्टयां भेदेन मन्त्रपाठमिच्छन्ति कालभेदात् ।

२ अध्वर्योः पेषणकार्ये व्यापृतत्वात् । ततश्च यत्र विरोधो नास्ति यथा वरुणप्रघासेषु अध्वर्योर्मेषकरणे प्रतिप्रस्थातुश्च करम्भपात्रमेषीकरणे तत्रोभयोर्पेषास्यं स्वयमेव कपरोपधानं, नाग्नीधः ।

न इत्यनेन मन्त्रेण प्राचोऽङ्गारानुदूहति । तच्चैतदङ्गारापोहनं देशान्तरेचनार्थं रिक्ते हि देशे कपालानि यथोपधीयेरन्निति । एवं च सति चर्विद्वयामपोहनाभावः । धानाभर्जनस्य च देशरेचनकृतोपकाराभावात् । अङ्गारेषु ह्यधिश्रयणमुभयोरपि प्रसिद्धम् । केचिदनेन मन्त्रेणाङ्गारानिरसनमेव कुर्वन्ति । मन्त्रलिङ्गात् । अपाग्ने अग्निमामादं जहि निःक्रव्यादं सेधेति अपजह्याग्निमामादं निषेध च क्रव्यादमिति । वाक्यशेषाच्च । एतावेवैतदुभावतोऽपहन्तीति । तदेतदनुपपन्नमविधानात् । विध्यन्तरशेषत्वाच्च । अस्तिह्यत्र विध्यन्तरम् । तेन प्राचोऽङ्गारानुदूहतीति । मन्त्राणाञ्चाविधायकत्वमुक्तम् अत उदूहनमात्रमेव । अपिचाग्न्युत्सर्गे दोषो दृश्यते वीरहा वा एष भवति योऽग्निनुत्सृजतीति ॥ १०९ ॥

## आदेवयजमित्यङ्गारमाहृत्य कपालेनाच्छादयति ध्रुवमसीति ॥ ११० ॥

यद्यपि चाङ्गारे द्वितीया कपाले च तृतीया । तथाप्यङ्गारस्य निष्प्रयोजनत्वात्कपालस्य च प्रयोजनपरत्वात् कपालार्थत्वेनैवाङ्गारस्य । कपालधर्मोऽपि च सन् तं मध्यमेन कपालेनाभ्युपदधातीति । मध्यमसंयोगात्तद्धर्म एवायं न कपालमात्रधर्मः । न च भर्जने प्रवर्त्तते । अङ्गारेषु हि तस्याधिश्रयणम् । आपितृयज्ञे यद्देति च पितृयज्ञे विपरिणामः । ननु चायमसमवेतवचनः । न ह्यत्र देवा इज्यन्त इति । तेन देवयाट्त्वं यथाकथञ्चिदुच्यते । देवैर्ज्यार्थहविःश्रपणद्वारेण देवयाट्त्वमस्यापि भवति । यथा च देवयाट्त्वं तथा मन्त्रोऽनुवदति । तस्मात्समवेतवचनः ॥ ११० ॥

## अमुष्येति द्विपच्छब्दे ऽभिचरन् ॥ १११ ॥

अमुष्य यथार्थेति अभिचरतामाभिदिशति । द्विपच्छब्दमपनीय । स्वार्थं द्विपच्छब्दो न स्वरूपतो गृह्यते किं तर्हि द्विपच्छब्दाग्तरमपि । एवं च सर्वत्र प्राकृतशब्दे स्वादेशः सिद्धो भवति ॥ १११ ॥

किमिदं द्विपच्छब्दं भिचरतो नामादेशः । नेत्युच्यते—

## अन्यत्रापि ॥ ११२ ॥

अतोऽन्यत्रापि अभिचरतो द्विषच्छब्दे नामादेशः कर्त्तव्यः । यथा द्विषतो वधोसि भ्रातृव्यमवबाध इत्येवमादि ॥ ११२ ॥

सव्याङ्गुल्याशुन्येङ्गारं निदधात्यग्ने ब्रह्मेति ॥११३॥

अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवतीति श्रूयते । स चायं कपालसंस्कारत्वात्प्रतिकपालमावर्त्तते । गुणविभक्तिनिर्दिष्टमपि चात्र प्रयोजनवत्त्वात्कपालमेव संस्कार्यमागारे गावो वास्यन्ताम्, प्राकारे कुसुमानीति वत् । भर्जनेपि चोपरिष्टादङ्गारः प्रवर्त्तत एव । अदृष्टार्थत्वात् । चरोस्त्वकपालकार्यापत्तेर्न तद्धर्मप्रवृत्तिः ॥ ११३ ॥

धरुणमिति पश्चात् ॥ ११४ ॥

कपालमुपदधातीति वाक्यशेषः ॥ ११४ ॥

१पुरस्ताद्धर्त्रमिति ॥ ११५ ॥

२विश्वाभ्य इति दक्षिणतः ॥ ११६ ॥

प्रथमं कपालमङ्गीकृत्येतरत्र दिङ्नियम उच्यते—

समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चित-स्येति ॥ ११७ ॥

समं विभज्य चितस्येत्यनेन मन्त्रेण द्वे दक्षिणत एवमुत्तरत उपदधाति प्रदक्षिणक्रमप्रयोगेन । स्मार्त्तं चैतत्प्रदक्षिणं न श्रौतं तत-श्च तदपचारे स्मार्त्तमेव प्रायश्चित्तं भवति । समं विभज्येत्यवाच्य-म । द्वे दक्षिणत एवमुत्तरत इति स्वशब्दाभिधानात् । स्यादर्त्तीयो-मीयार्थत्वात् । तत्र हि समविभागानुक्तावधिक दक्षिणत इति न चि-

१ ' धर्त्रमसि दिवम् ' इत्यनेन मन्त्रेण पुरस्तात् पूर्वस्यां दिशि-कपालमुपदधाति ।

२ ' विश्वाभ्यस्त्वाशाभ्य ' इत्यनेन दक्षिणतः दक्षिणभागे कपालं स्थापयति ।

भागाधिकं स्यात् । तत्र को दोषः १. संख्याधिक्यमप्याग्रङ्कोत । अथ पुनः समविभाग उक्ते यदधिकं विभागस्य दक्षिणत उपधानं सिद्धं भवति ॥ ११७ ॥

तूष्णीं वा ॥ ११८ ॥

न चितस्येति ॥ ११८ ॥

एवमेकादशाग्नीषोमीयस्य ॥ ११९ ॥

कपालान्युपदधातीति शेषः १ ॥ ११९ ॥

---

१ इदमप्राकृतम् । एतानि सर्वाणि कपालानि निरन्तराणि संश्लिष्टानि समानि चोपधेयानि यथान्तरा भूमिर्न दृश्यते । अत्र मध्यमपङ्क्तिकपालानि षडङ्गुलानि समचतुरस्राणि; एवं च षडङ्गुलदीर्घा मध्यमापङ्क्तिः । दक्षिणोत्तरपङ्क्ती तु किञ्चित्ततो न्यूने पुरोडाशस्य कूर्माकारतया वृत्ताकारत्वप्रसिद्धेर्यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थात् वृत्ताकारताया गम्यमानत्वात् । ऐन्द्राग्ने चतुर्थोपधानानन्तरं समविभागेन चत्वारि दक्षिणतश्चत्वार्येवोत्तरतः । अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणम् । षडङ्गुलवृत्तं कृत्वाततः प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य तिर्यगपच्छेदेन त्रेधा विभागः कार्यः, दक्षिणोत्तरभागयोस्तु खण्डचन्द्राकारयोः पुरोडाशकपालसङ्ख्यानुरोधेन तिर्यग्विभागः । तत्र षट्कपाले दक्षिणो भागो द्वेधा उत्तरे त्वेकमेव कपालं खण्डचन्द्राकारमुत्तरभागप्रमाणम् । सप्तकपाले दक्षिणो भागस्त्रेधा, उत्तर एकधा । अष्टाकपाले दक्षिणो भागस्त्रेधा उत्तरो द्वेधा । नवकपाले दक्षिणश्चतुर्धा उत्तरो द्वेधा । दशकपाले दक्षिणश्चतुर्धा मध्यमोत्तरौ त्रेधा । एकादशकपाले दक्षिणः पञ्चधा इतरौ त्रेधा । द्वादशकपाले दक्षिणः पञ्चधा मध्ये त्रेधा उत्तरश्चतुर्धा । त्रयोदशकपाले दक्षिणः षड्धा उत्तरश्चतुर्धा, मध्यमः सर्वत्र त्रेधैव । एकं कपालं चेत्पाणिसंमितम् । द्विकपाले वृत्तस्य तिर्यगपच्छेदेन द्वेधा विभागः । त्रिकपाले वृत्तस्य तिर्यक्समं त्रेधा विभागः । चतुष्क-

## अधिकं दक्षिणतः ॥ १२० ॥

विभागाधिकं यत्तद्दक्षिणत उपधेयं* क्रमेणैव न सर्वोपधानानुत्तरं स्मृत्यनुग्रहात् ॥ १२० ॥

## भृगूणामित्यङ्गारैरभ्यूहति ॥ १२१ ॥

कपालानीति शेषः । स चायं मन्त्र एककपाले विपरिणंस्यते । तपसा तप्यस्वेति वचनस्य समवायात् । द्विकपाले च तप्येथामिति । अभ्यूहनं च कपालाभितापनार्थम् । तप्तेषु कपालेषु यथा पुरोडाशाः पच्येरन् । एवं च सति कपालविध्यन्तग्राहिणोऽपि धानाभर्जनस्य नाङ्गारैरभ्यूहनं भवति । प्रसिद्धभावात् । अधस्ताद्धि तस्य सन्तापनं प्रसिद्धमिति ॥ १२१ ॥

## उपसर्जनीराधिश्रयति ॥ १२२ ॥

उपसर्जनी शब्देन संयवनार्था आप उच्यन्ते । तदधिश्रयणं च ताभिः पिष्टानां मार्दवं यथा स्यादिति । एवं च सति पुरोडाशपाकार्था एवैताः । ततश्च यत्र श्रपणं तत्रोपसर्जन्यधिश्रयणमपि कार्यम् । पितृयज्ञे च दक्षिणाग्नौ श्रपणविधानात् मन्थक्षीरोपसर्जन्यधिश्रयणमपि तत्रैवेति सम्प्रदायः । अत्र पुनरधिश्रयणे कृते उपकारो मन्थे दर्शयितव्यो । न ह्युपसर्जनीगतेनोष्मणा सक्तूनां पाक उपजन्यते । पिष्टानामिव पुरोडाशे । तस्मादनधिश्रयणमेव न्याय्यतरमिवाभाति । करम्भपात्रेषु चैवम् । ननु चोपधानसमनन्तरं युगपदुपक्रमाभिधानादर्पणमभिप्रेयम् । इतरथा हि प्रकृतपरित्यागोऽप्रकृतोपादानं चायुक्तं स्यात् । तेनोपसर्जन्यधिश्रयणविधानस्यायमनवसर इति । उच्यते । उपधानवदर्पणेन

---

पाले वृत्तसमं प्राग्भागपश्चिमोत्तरभागस्य त्रेधा विभागः दक्षिणत एकम् । पञ्चकपालेऽपि वृत्तं प्राग्भागं द्वेधा पश्चिमोत्तरभागस्य त्रेधा विभागः दक्षिणस्य द्वेधा । कपालानि तु घर्षणाद्युपायेन तथा करणीयानि यथा कपालचितिरत्र वृत्तं सम्पूर्यत इति याज्ञिकादिभाष्येषु ।

सह यौगपद्यं यथा स्यादित्येवमर्थमिहाभिधानम् । तथा च विरोधादग्नीध एव कर्तृत्वमत्रापि । यत्र तु विरोधो नास्ति यथा चर्विष्ट्यां तत्राध्वर्योरेवोपसर्जन्यधिश्रयणे कर्तृत्वम् । अपरे तूपधानसमनन्तरमुपसर्जन्यधिश्रयणाभिधानस्य प्रयोजनान्तरं व्याचक्षते । यत्रोपधानं तदधिश्रयणमपि तत्रैवाधिकाराद्यथा स्यादिति । एवं चोपसर्जन्यानयकाल एव तासामधिश्रयणम् ॥ १२२ ॥

## कृष्णाजिनमादत्ते पूर्ववत्प्रतिकृष्णाजिनम् ॥ १२३ ॥

कृष्णाजिनस्य यत्पूर्वं धर्मजातमुपदिष्टम् आदानादि सव्याशून्यकरणान्तं तदिहातिदिश्यते । तुल्यश्रुतित्वात् । तच्चैतत्पेषणार्थत्वादपेषणे न स्यात् ॥ १२३ ॥

## तस्मिन्दृषदं धिषणासीति ॥ १२४ ॥

तस्मिन्कृष्णाजिने दृषदमुपधाति धिषणासीत्यनेन मन्त्रेण ॥ १२४ ॥

## पश्चाच्छम्यामुपोहत्युदीची दिव इति ॥ १२५ ॥

उपरिस्याद्वाक्यशेषात् । हनू एव दृषदुपले जिह्वैव शम्येति जिह्वासस्तुतिरन्तरालवृत्तिसामान्येन । न चाविरोधात् । विरुध्यते सुपरिशम्ययोपहितया पेषणम् । किं चान्यदधस्तादुपहिता दृषद् प्राप्नवयतामुपजनयतीति निश्चलीकरोति । अतोदृष्टार्थत्वादधस्तादुपधानम् । लिङ्गाच्च । स ये अधनेन शम्या पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वेति । अधस्तादुपहिताया यनक्त्यति नोपरि । जिह्वासस्तुतिरप्रधानत्वमापेक्षया ॥ १२५ ॥

धान्यमसीति तण्डुलानोप्य पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम् ॥ १२७ ॥

धान्यशब्दः सत्यक्षेपु व्रीह्यादिषु रूढः । यद्यपि च धिनोतेर्धान्यमित्यवयवार्थो गम्यते । तथापि प्रत्ययस्य विशिष्टार्थविषयत्वात् गोशब्दवद्रूढिशब्दत्वम् । एवं च सति लक्षणया तद्विकारप्रकाशनं शब्दस्य । यवगुलिका अपि तद्विकार एवेति मन्त्र प्रयुज्यत एव । शाक्यानामयने च तरसमयाः पुरोडाशा भवन्तीत्यत्र तरसमसीति मन्त्रो विपरिणम्यते । धान्यशब्दस्य जातिनिमित्तत्वात् । ननु च प्रकृतौ प्रकृतिद्रव्यशब्देन धान्यविकारद्रव्याभिधानादत्रापि तरसप्रकृतिद्रव्यशब्देन मृगोऽसीत्यभिधानं कर्त्तव्यम् । एवं हि तत्र वचनं संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान् मृगान् हन्ति तेन तरसमया' सवनीयाः पुरोडाशा भवन्तीति । तरसस्य मृग प्रकृतिद्रव्यम् । नैतदेवम् । प्रकृतौ ह्याम्नानसामर्थ्यात् धान्यशब्देन लक्षणया तण्डुलाभिधानम् । इह पुनः स्वायत्ते प्रयोगे नावाचकशब्दप्रयोगो युज्यते । तस्मात्तरसमसीत्येव प्रयोग. । पिनष्मीति चाध्याहारः साकाङ्क्षत्वात् ॥ १२७ ॥

दीर्घामिति कृष्णाजिने प्रोहति ॥ १२८ ॥

प्रक्षिपति पिष्टानि । प्रोहनं च पिष्टस्य सत. । नानाबीजेषु चैकैकं प्रोहणान्तं कर्त्तव्यं प्रसिद्धेः ॥ १२८ ॥

चक्षुषे त्वेतीक्षते ॥ १२९ ॥

पिष्टानि इति चाध्याहार । साकाङ्क्षत्वात् । ईक्षणं च द्रव्यसंस्कारत्वात्तण्डुलानामपि चर्विष्टयां प्रयत्तेते १॥ १२९ ॥

पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ॥ १३० ॥

---

१ वाजप्रसवीयजुहोतौ चयने; वाजपेये च सर्वौषधीनामिति देवादिभाष्येष्वधिकम् ।

पिंषन्ति पिष्टान्यभावर्तेत कपालान्यथैक आज्यं निर्वपतीति तुल्यकालश्रवणात्। अत्रान्यशब्देन कैश्चिद्यजमानोऽभिप्रायुतिष्यते। अध्वर्य्वग्नीधौ हि पेषणोपधानयोर्व्यापृताविति। तथा च सूत्रकारप्रस्थानम्। निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोतीति। तदेतदयुक्तमिवाभाति। यत्कारणम्। यत्किञ्चिदिह कर्तव्यं तत्सर्वमृत्विग्भिः परिक्रीतत्वादृत्विजाम्। अतोऽन्यशब्देन ब्रह्माभिधीयते। अन्य इत्यध्वर्युसन्निकर्षादृत्विगेव गृहीतुं न्याय्यो न यजमानः। सूत्रकारप्रस्थानाच्च। वचनविरोधाभ्यामन्य इति। यत्पुनरुक्तं निरुप्याज्यं वेदं करोतीति तत्रापि न समानकर्तृकतार्थः क्त्वाप्रत्ययादेशः। न ह्याज्यनिर्वापविधानमन्यत्र विहितत्वात्। तेनानिर्ज्ञातकालस्य वेदबन्धस्य कालं लक्षयितुं क्त्वाप्रत्ययविकारो ल्यप् प्रयुक्तः। यथान्यत्र निरुप्याज्य प्रातर्दोहमन्यस्मिन्निति। तस्माद् ब्रह्मैवाज्यं निर्वपेत्। निर्वापश्च पात्रान्तरे [1]प्रक्षेपणम् ॥१३०॥

पात्र्यां सपवित्रायां पिष्टान्यावपति देवस्येत्वेति ॥ १३१ ॥

पात्र्यामावपनं संयवनार्थम्। ततश्च चर्विष्टयां तण्डुलानां पात्र्यामनावपनम्। संयवनाभावात्। सपवित्रता चादृष्टोपकारित्वादिति चर्वायपि भवति ॥ १३१ ॥

[2]श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा ॥ १३२ ॥

अन्तर्वेदिग्रहणाच्छ्रपणोऽत्र गार्हपत्योऽभिप्रेतः ॥ १३२ ॥

उपसर्जनीरानयत्यन्यः ॥ १३३ ॥

---

१ पात्रान्तरमाज्यस्थाली। तस्या लक्षणमुक्तं छन्दोगपरिशिष्टे—
" आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च" इति।

२ सपवित्रां पात्रीमादायेत उत्थाय गार्हपत्यस्य पश्चादुपविशति यया वेधाः करिष्यमाणाया अन्तर्वेद्यां उपविशतीत्यर्थः।

उपसर्जन्यन्यशब्दो व्याख्यातार्थो ॥ १३३ ॥

पवित्राभ्यां प्रतिगृह्णाति समाप इति ॥ १३४ ॥

ता आनीयमानाः पवित्राभ्यां प्रतिगृह्णाति समाप इत्यनेन मन्त्रेण । तथा चानीयन्ते यथा मन्त्रान्तेन ग्रहणं भवति । स चायमपामभिधायकत्वात्तत्कार्यापत्ते पयसि दधनि घृते च विपरिणम्यते । उपसर्जन्यानयनं च चरावप्यकार्यलोपात् प्रवर्त्तत एव ॥ १३४ ॥

संयौति जनयत्यै त्वेति ॥ १३५ ॥

तथैतत्पिण्डार्थत्वाच्चरौ न भवति ॥ १३५ ॥

[1]समं विभज्यास्[1]हिरण्यश्चालभत इदमग्नेरिदमग्नीषोमयोरिति ॥ १३६ ॥

समविभागो दृष्टार्थः । तत्सहावघ्नाति तत्सहपिनष्टि तत्पुनर्नानाकरोतीति दृष्टार्थावगमात् । ततश्चैकस्मिन्न प्रवर्त्तते । केचिदाग्नेयालम्भात् दृष्टार्थेऽभिनिर्वृत्ते अग्नीषोमीयाभिलम्भनमदृष्टायेति मन्यमाना विकृतावग्नीषोमीयविकार एककेऽप्याग्नावैष्णवादौ आलम्भमिच्छन्ति । तत्पुनरयुक्तम् । दृष्टार्थत्वात्तस्य । विभागपूर्वको ह्यालम्भः एवं ह्युक्तम् । तत्पुनर्नानाकरोतीति । तस्मादेकके ऽनालम्भः । समं विभज्यालभत इतीयतापि सिद्धे यदसंहरिष्यन्निति सूचयति तदस्य यस्य यदा संहारस्तस्य तस्य तदालम्भो यथा स्यादिति । यथा चरूणां फलीकरणान्ते पौष्णस्यावेक्षणान्त इति ॥ १३६ ॥

यथा देवतमन्यत् ॥ १३७ ॥

कृतव्याख्यानम् ॥ १३७ ॥

इषे त्वेत्याज्यमधिश्रयत्यन्यः ॥ १३८ ॥

---

[1] द्वौ पिण्डौ कृत्वा पुनर्मिश्रणमकरिष्यन् क्रमेणैतौ पिण्डावालभत इत्यर्थः ।

अन्यश्चात्र ब्रह्माभिधीयते । पुरोडाशयोर्हाध्वर्युर्वेब्रह्माथो व्याप्नुतौ । ऋत्विक्कर्तृकत्वं च कर्मणः परिक्रयाम्नानादित्युक्तम् । यजमानं च परिभाषितमेव, प्रधानः स्वामी फलयोगादित्यत्रमादि । विरोधाच्च प्राप्त एव ब्रह्माणि यदन्यग्रहणं करोति तदविरोधेष्वुपसदादौ ब्रह्मैव यथा स्यादित्येवमर्थमिति सम्प्रदायः । अपरे त्वन्य इति न्यायसूत्रमाहुः । विरोधादेवान्यप्राप्त । एव ह्याह । तद्वा एतदुभयं सह क्रियत इति प्रकृत्यार्द्धोह वा एष आत्मना यज्ञस्य यदाज्यमर्द्धो यद्धविर्भवति स यश्चासावर्द्धो य उच्चायमर्द्धस्ता उभावग्निं गमयाघति । एव चाविरोधेध्वर्योरेनाधिश्रयणं स्यात् ॥ १३८ ॥

## अपत्नीकस्याहवनीये तच्छ्रापिणः ॥ १३९ ॥

अपत्नीक इति नाविद्यमानया पत्न्याधिकाराभावात् । तस्माद्विद्यमाना एव पत्न्यपत्नीवत् यदा रजस्वला तदैतच्च-
ति । तथाचाह प्रेत्यहानि यस्य पत्न्यनालम्भुका स्यात्तामवरुध्य यजेतेति । आहवनीयश्रापिणोऽपत्नीकस्याहवनीय एवाज्याधिश्रयणम् । एव सुक्तमाहवनीयश्रापिणं प्रकृत्य यस्यपत्नी न भवत्यग्न एव तस्याहवनीयेधिश्रयतीति । इतरस्य तु गार्हपत्य एव १ ॥ १३९ ॥

## घर्मोसीति पुरोडाशौ युगपत् ॥ १४० ॥

आज्यस्य पुरोडाशयोश्च युगपद्धाधिश्रयणम् । तद्वा एतदुभयं

---

१ केचित् अपत्नीको मृतपत्नीक इत्याहुः । तस्याप्येकाकिन एवाधानं श्रूयते आश्वलायनब्राह्मणे । पत्न्या मृतायामग्निमिद्ध्यायां पुनर्विवाहासम्भवे आत्मार्थमन्याधानमाहापस्तम्बो दर्शपौर्णमासाप्रयणार्थं शेषाणि कर्माणि न भवन्तीति । तथा त्रिकाण्डे मण्डनः —

" तस्माश्रयैकदेशेन दग्धव्या पर्यमारिणी ।
पत्नी ज्येष्ठतरा चापि यज्ञपार्श्वे निरूपितम् " इति ।

कर्मप्रदीपे कात्यायनः —

" मृतायामपि भार्यायां वैदिकाग्नीन्न हि त्यजेत् ।
उपाधिनापि तत् कर्म यावज्जीवं समापयेत् " इति ।

सह क्रियत इति शुक्रम् । तत्र चाभ्यर्थुमुंवयत्वादाग्नेयमाधिश्रयति । अग्नीषोमीयमग्न्नीत् ॥ १४० ॥

उरुप्रथा इति प्रथयति यावत्कपालमनति पृथुम् ॥ १४१ ॥

यावत्कपालमित्युक्ते ऽति पृथुप्राप्त्यभावात् । निषेधवैयर्थ्यमनतिपृथुमिति उच्यते । कपालपरिमाणसिद्धौ यावत्कपालमिति प्रथनपरिमाणोपपत्तिः स्यात् न तु कपालपरिमाण सिद्धम् । अतस्तत्परिमाणावधारणायानतिपृथुग्रहणम् । तत्कथं? श्रुतिसंयोगात् । 'तं न सम्राट्पृथुं कुर्यादिति प्रकृत्याभ्यरात्मात्रं कुर्यादित्युहैक आहुरिति । अनेकयजमानके च यथार्थं मन्त्रविपरिणामः । चरौ च कार्याभावात्प्रथनाभावः । यश्च येनाधिश्रितः स तस्य प्रथनाभिमर्शने करोतीतरथा हि तत्कपालसंयोगाच्छोषणे सति प्रथनमनुपपन्नम् ॥ १४१ ॥

१अभिष्टं इत्यद्भिरभिमृशति सकृत्त्रिर्वा ॥ १४२ ॥

चरौ न स्यात्कार्यलोपात् ॥ १४२ ॥

पर्यग्निकरोत्यन्तरित; रक्षोन्तरिता अरातय इति सहाज्यम् ॥ १४३ ॥

पुरोडाशाज्यसंयोगात्पर्यग्निकरणस्योपदेशिकत्वाच्च प्रकृतौ धर्माणां साधारण्ये ऽप्रवृत्तिः । एवं च तद्विकारे पशौ पर्यग्निकरणविधानमुपपन्नं भवति । प्राक् पर्यग्निकरणादपिष्टलेपापनयनपाण्यङ्गुलिप्रक्षालने ऽर्थात्कर्तव्ये । न हि तयोरुत्पत्तिश्चोदिता । २प्रतिपत्ति-

१ तं पृथु कृतं पुरोडाशं सोदकेन हस्तेन सर्वतः स्पृशति । पृथने क्रियमाणे यत्र यत्र विदीर्णं भवति तदद्भिः सन्दधाति, सकृन्मन्त्रेण द्विस्तूष्णीम् । "पिष्टलेपेनाविक्षारयन्निः परिमार्ष्टि" इति मानवे । "अद्भिः श्लक्ष्णीकरोत्यनाविक्षारयन्" इत्यापस्तम्बः ।

२ अन्यथाग्निसंयोगात् कालविलम्बाच्च शोषणे सति प्रतिपत्तिकाले क्षालनमतिदुष्करं स्यात् ।

मात्रविधानं त्वस्ति१। सामर्थ्यादपि च क्रमोवसातु शक्यते ॥ १४३ ॥

२देवस्त्वेति श्रपणम् ॥ १४४ ॥

ददातीति वाक्यशेष। समर्थ्याश्चरोरधस्तात् ३ ॥ १४४ ॥

मामेरित्यालभते ॥ १४५ ॥

तच्चैतच्छृताश्रृतसवित्यर्थं। तमभिमृशति शृत येदानीति श्रूयते। प्रयोजन धानानामभावोभिमर्शनस्य दर्शनस्य दर्शनात्पाकसंवित्ते। मन्त्रो दर्शन एवास्त्विति चेत्। आलम्भेपि सामर्थ्यपरिप्रापितत्वात्। अतस्तदकार्योपपत्तिः। चरौ च स्यादकार्यलोपादालम्भ ॥ १४५ ॥

अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥ १४६ ॥

अशृतयोः श्रपणप्रदानार्थं शृतग्रहणम्। इतरथा ह्यावाच्य स्यादिति। भस्मनाभिवासयति आच्छादयति। वेदेनोपवेषेण वा करणभूतेन। विरोधाद्यरावप्रवृत्तिवासस्य। अनेकयजमानके मन्त्रस्य विपरिणाम. ॥ १४६ ॥

पान्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयत्यभितप्य प्रत्यगसः स्यन्दमानं त्रितायत्वेति प्रतिमन्त्रम् ॥ १४७ ॥

---

१ "पान्यङ्गुलिप्रक्षालनमाप्तेभ्यो निनयति, पिष्टलेपान्युदाति" इत्यादिना।

२ "देवस्त्वेत्युल्मुकेनाभितापयति दर्भस्त्वच प्राहयति" इति मनु।

३ उपलक्षणमिद धानानामपि।

आसग्रहणं यागदेवता ज्ञापनार्थम् । इतरथा हि देवतोद्देशाभावे प्रतिपत्तिमात्रमेव स्यात् । अथ पुनरासग्रहणे तदुद्देशेन परित्यागः कार्यः । तथा च नाशदोषादौ द्रव्यमात्रमुत्पादयितव्यमिति याज्ञिकाः । अपरे तु द्रव्यप्रधानत्वात्तस्य च नाशे देवरक्ताः किंशुका इति नोत्पत्तिमिच्छन्ति । अभितप्येति प्राग्नीत्समेवोल्कया तापयित्वा । प्रत्यगिति प्रत्यग्वचनात्प्रागुदग्वा असस्पन्दमानमिति समुपसर्गनिर्देशादसङ्कच्छत् । न स्पन्दनमात्र प्रतिषेधः । त्रितायत्वेत्येभिर्मन्त्रैः प्रतिमन्त्रम् । निनयामीति वाक्यशेषः ॥ १४७ ॥

## अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ १४८ ॥

अन्वाहार्यो दक्षिणार्थ ओदनः । ततो देवा एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन्यदन्वाहार्यमिति श्रूयते । दक्षिणाग्नावन्वाहार्यं पचतीति विधानात्तत्राधिश्रयणम् । स च भोक्तृतृप्तिव्यवच्छिन्नपरिमाणः स्यात् । परिमाणान्तरानभिधानात् । अन्नस्य च भुज्यर्थत्वात् । भुजेश्च तृप्तिप्रवृत्तिसंयोगात् । अनवधृतपरिमाणत्वान्नेति चेत् । स्यादौचित्यात् । उचिता हि पुरुषाणां प्रकृतित्रयेण तृप्तिरिति । स च लौकिक उदके पच्यते । सामर्थ्यगृहीतत्वात्तस्य । न चेह प्रणीतमुपदिश्यते । परिक्रयार्थत्वाच्चास्य पुरुषार्थरूपता । तस्मान्न प्रणीतोदकसाध्य इति सम्प्रदायः । अपरे व्याचक्षते । सामर्थ्यपरिगृहीतमपि यदेव सर्वार्थत्वेन प्रक्लृप्तं तदेव गृहीतुं न्याय्यम् । न च सर्वार्थत्वे कश्चिद्विशेष आश्रयितुं शक्यते ऐदमर्थ्यं प्रति । प्रणीतं च सर्वार्थमित्युक्तम् । पुरुषार्थरूपत्वेऽपि सति क्रत्वभिनिर्वृत्त्यर्थपुरुषस्थितिद्वारेण कर्म सम्बन्धो स्त्येवेत्यदोषः । अथ निर्दिष्टकार्यार्थत्वेन प्रणीतानां नार्थगृहीतार्थता । तद्यथा हविर्ग्रहण्यामपः कृत्वा इति, अपः उपस्पृश्येति च । तथासत्यप्राप्तिः स्यात्पाण्योरवनेजनं प्राशित्रहरणप्रक्षालने च । अथ कर्मसम्बद्धपात्रसंस्कारः स इत्युच्येत तत्सम्बन्धाविशेषादध्वर्युपाण्योरपि संस्कारः शक्यो वक्तुम् । केवलं तु तत्र कृतप्रयोजनता पात्रस्य । पाण्योरवनेजनं तु क्रियमाणप्रयोजनम् । न चैयता विशेषः शक्योऽवसातुम् । तस्मात्पाण्योरवनेजनपात्रप्रक्षालनयोः प्रणीतमेवोदकम् । सम्प्रदाये तु पात्रप्रक्षालन एव प्रणीतमुदकमिच्छन्ति न पाण्योरवनेजने । तत्पुनर्विचार्यमाणं ना-

तिसमञ्जसमिव । उभयत्र हि क्रियाक्षिप्तमुदकं न स्वशब्दाभिहितम् । तस्मादुभयत्र प्राणीतमुदकमिति । अन्वाहार्ये तु द्रव्याक्षिप्तमित्यक्रियाक्षेपाद्यदि विशेष उपलभ्यते ततोस्तु लौकिकमिति ॥ १४८ ॥

अत्र वा व्रतोपायनम् ॥ १४९ ॥

तुल्यश्रुतित्वात् । तुल्यसूत्रारम्भसामर्थ्यात् ॥ १४९ ॥

अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याममात्रीं पश्चात् त्र्यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणामुदग्वा मध्यसङ्गृहीतामग्निमभि.

तो; सौ ॥ १५० ॥

आहवनीयमपरेणेति । कुतः । वाक्यशेषात् । सोयं विष्णुत्वेन छन्दोभिरभित. परिगृहीतोग्निः पुरस्तान्नापक्रमणमासेति । वेदिरिति संस्कारनामधेयम् । तेषु हि सत्सु शब्दप्रयोगादाहवनीयवत् । प्रयोजन सोमे धर्मप्रवृत्तिरिति । खनति. करोत्यर्थे. । अवश्यमेवात्राख्यातपदप्रयोगेण भवितव्यम् । तत्र किं सामान्यरूपः करोति प्रयुज्यतामुत विशेषरूपः खनत्यादिरिति । तत्र विशेषरूपे खनत्यादौ प्रयुज्यमाने सामान्यरूपाख्यातपदप्रयोगमन्तरेणापि कार्यसिद्धेः तत्प्रयोग एव ज्यायानिति खनतीति सूत्रितम् । मानपरिसमूहनादीनामन्यतमस्योच्चारणमस्त्विति चेत् । तेऽपि हि वेद्यर्थाः खनत्यादिवत् । न, अप्रकाशरूपत्वात् । प्रकाशरूपो हि खनतिर्वेदिस्वरूपं प्रकाशयति न तथेतरे मानादय. । तस्मात्खनतिशब्द. प्रयुक्तः । तथा चवक्ष्यत्र वेदिकरणं यथोक्तमिति खनतिशब्दार्थं करोतिनानुवदति । खननाधिकारादाह त्र्यङ्गुलखातां त्र्यङ्गुलपरिमाणं खातमस्या इति । व्याममात्रीं पश्चात् परिमाणतः । व्याममात्री पश्चात्स्यादित्याहुरिति वचनात् । त्र्यरत्निं प्राचीम् । अरत्नित्रयपरिमाणा प्राची भवति । अपरिमितां वेत्ययमपरिमितशब्दो यद्यपि पूर्वप्रमाणापेक्षया बहुतरे रूढितो वर्तते । तथापि नञ् समास एवात्र गृहीतव्य. । किं कार-

पाम । एवं हि श्रूयते । तान्न मन्त्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यादिति । तेन न परिमिता अपरिमितेति । यथा चाग्नौ अपरिमितेष्टक इति । तत्राप्यपरिमाणमेव शाब्दम् । ते अपरिमिता एव परिश्रित उपदध्युरपरिमिता यजुष्मतीरपरिमिता लोक पृणेति । कुत एतदिति चेल्लिङ्गात् । न वैमे सर्वाणि रूपाणि उपधत्तानि ये घरे च यथनवाप्यापधेति । अनात्तिरपरिमाणपक्ष उपपद्यते । इतरथा ह्यतिरेक एव स्यात् । पुनश्चामृतत्वप्राप्तये इष्टका परिमाण आह । षष्टिं च त्रीणि च शतानि परिश्रित उपधत्तेत्येवमादि । तच्चैतदपरिमाणवचने अपरिमितशब्द उपपद्यते नान्यथा । तेनैतौ द्वावेव यज्ञशास्त्रेऽपरिमितशब्दावपरिमाणवाचिनौ । शेषा रूढिवशेन बहुवाचका इति । यथा द्वादशदीक्षा अपरिमिता वा । यथा च यूपे ऽपरिमितो वेत्येवमादि । तथा च परिशिष्टकार आह अपरिमितं प्रमाणादभूय इति । प्रशस्तमितावयवार्थवृत्तितया अपरिमितशब्दः श्रुत्यैव बहुनि वर्त्तते । अपरिमितपक्षेऽपि च मानं वर्त्तत एव । न ह्यपरिच्छिन्ने देशे खननादिशक्यं कर्तुमिति । प्राक्प्रवणामुदग्वेति । समां हि दर्शपूर्णमासयोर्देशो विहितः । समे दर्शपूर्णमासाभ्यां यजेतेति । तत्र वेदेः प्राक्प्रवणनियमो वाचनिकः । सा वै प्राक्प्रवणा स्यादिति प्रकृत्याह अथोदक्प्रवणेति । मध्ये संह्वारितेति वचनान्मध्ये सङ्गृहीताम् । अग्निमभितोऽसौ भवत । तावपि च वेदिशब्दवाच्यावतः खन्येते तावपि । इतरथाहवनीयमपरेण वेदिं खनतीत्यपरत एव खननम् । तथा च सूत्रकारः । अपोह्य बर्हिऽपि निदधात्यग्रदेशे इदंशयोः स्तरणं दर्शयति ॥ १५० ॥

आमूलोच्छेदनादोषधीनाम् ॥ १५१ ॥

वेति सामर्थ्याद्द्रष्टव्यम । न हि त्र्यङ्गुलखातमूलोच्छेदनयोः समुच्चयः सम्भवति । त्र्यङ्गुलस्य ह्यनतिरिक्तमन्यूनं च खातं त्र्यङ्गुलखातमित्युच्यते । अस्मिंश्च पक्षे ॥ १५१ ॥

ओषधीनां मूलान्युच्छेत्तवैब्रूयात् ॥ १५२ ॥

इति प्रैषः। तत्राग्नीदाहेति पद्यामः। केचित्पूर्वसूत्रमाकारान्तमेव कुर्वन्ति। सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इति अकारस्याकार आदेशः। छन्दो वद्भावेन सूत्राणाम्। तत्रोत्तर, सूत्र वा मूलोच्छेदनादौषधीनामिति स्वशब्दाभिहित एव विकल्प। न हि तदानीं सान्धिकोयमावादेशवकार.। स चायं प्रैषस्तादर्थ्यात्खननकाल एव दातव्य'। केचिदाहु. मूलोच्छेदनान्तता सारस्वतादिविषया। न हि दर्शपूर्णमासयोर्वेद्यां मूलानि सन्ति कुतस्तदुच्छेदनमिति। अपरे तु मूलोच्छेदनस्य खननपरिमाणविषयत्वादिहापि मन्यन्ते। एवं ह्याह तस्मात् त्र्यङ्गुला वेदि' स्यादिति। पुनश्च तदुतया न कुर्यादौषधीनां वै समूलान्युपाम्लोचत्तस्मादोषधीनामिवमूलान्युच्छेत्तवै ब्रूयादिति। ओषधिमूलोचितखननपरिमाणं खेयमित्यतदुक्तं भवति। ततश्च सर्वत्र सम्भवात् सर्वविषयता। एवं च प्रकरणमनुगृहीतं भवति ॥ १५२ ॥

आहार्यपुरीषां पशुकामस्य ॥ १५३ ॥

वेदिपुरीषमपनीयान्यत्पुरीषमाहर्त्तव्यम्। तच्चैतदनुमार्जनात्पूर्वं सामर्थ्यात्कर्त्तव्यम्। पुरुषार्थत्वाच्च विकृतावप्रवृत्ति' ॥ १५३ ॥

वेदिं परिसमुह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति ॥ १५४ ॥

परिसमूहनोत्करकरणयोरग्नीध. कर्तृत्वं स्फ्यादेशसामर्थ्यात्। वितृतीयं च सामर्थ्यात् वेदग्राह्यम्। तच्च पूर्वविवृतीयम्। परिशिष्टकारवचनात्। विपर्यस्योत्तरां स उत्कर इति। आचार्याभिप्रायाच्च। चात्वालोत्करायन्तरेण सञ्चर इति। सन्निहितो हि चात्वालस्योत्करः पूर्ववितृतीये भवति ॥ १५४ ॥

देवस्यत्वेति स्फ्यमादाय सतृणं सव्ये कृत्वा दक्षिणेनालभ्य जपन्तीन्द्रस्य बाहुरिति ॥ १५५ ॥

आदानं सतृणस्य स्फ्यस्यैव तृणस्य सहत्वमात्रम्। सतृणमित्यु॰

पदिष्टत्वात् । प्रयोजनमन्तरायै तूष्णीमेव तृणादानम् । आददेऽध्वरकृतं देवेभ्य इति अङ्गप्रधानदेवताविषयो देवशब्दस्तदर्थं हि वज्रस्यादानम् । वेदिनिष्पत्त्यर्थत्वात् । वेदेश्चाङ्गप्रधानदेवतासम्बन्धो हविर्द्धारणार्थतया शक्यते तादर्थ्यं वदितुम् । ततश्च पितृयज्ञे देवपितृभ्य इति विपरिणामः । दक्षिणेनालभ्येत्यस्य वाक्यं सामर्थ्यसिद्धत्वात् । न हि सव्ये कृतस्यान्यथा लम्भः सम्भवति । तेन सव्यपाणिस्थस्यैवालम्भो यथा स्यादिति । अक्रियमाणे हि दक्षिणेनालभ्येत्येतस्मिन् मुक्त्वाप्यालम्भः प्राप्नोति तन्माभूदिति दक्षिण ग्रहणम् । तथैतद्वज्रादानं जपश्च स्तम्बयजुर्हरणार्थत्वात्तदभावे न भवति । तादर्थ्यं च तत्सन्निधावाम्नानात् । तत्र वाक्यस्य विद्यमानत्वात्सतृणमिति चोपदेशात् तृणस्य हि निःसन्दिग्धं स्तम्बयजुर्हरणार्थत्वम् । स्फ्यस्यापि तद्वत्तदर्थतैव ॥ १५५ ॥

नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरि-
ष्यन् ॥ १५६ ॥

प्राक् स्तम्बयजुर्हरणात्स्फ्येन पृथिव्यात्मानौ नोपसंस्प्रष्टव्यौ । एवं हि श्रूयते । यज्ञं प्रकृत्य तेन संशितेन नात्मानमुपस्पृशति न पृथिवीमिति । केचित्त्वेतदनुपस्पर्शनमाकर्मपरिसमाप्तेरिच्छन्ति । अविशेषाम्नानसामर्थ्यात् । स्तम्बयजुर्हरिष्यन्निति चोत्तरसूत्रेऽवयवं योजयन्ति । स्तम्बयजुर्हरिष्यन्वेद्यां तृणं निदधातीत्येवम् । तत्पुनर्नोपपद्यते । न ह्युत्तरसूत्रेण सम्बध्यमानः स्तम्बयजुर्हरिष्यन्नित्यवयवोऽर्थवान्भवति । स्तम्बयजुर्हरणं हि प्रहरणादिपुरीषनिवपनान्तम् । तत्र पाठादेव वेद्यां तृणं निदधातीत्यतोऽपि सूत्रेणार्थः सिद्ध्यति नार्थोऽनेनावयवेन । पूर्वसूत्रे चार्थवत्ताऽस्यावयवस्य । नोपस्पृशेत्पृथिव्यात्मानौ तेन कियन्तं कालमित्यपेक्षिते स्तम्बयजुर्हरिष्यन्निति कालसमर्पणेनार्थवत्त्वावयवस्य । अपि च वज्रादानस्य स्तम्बयजुर्हरणार्थतेत्युक्तम् । जपस्यापि तत्संस्कारद्वारेण तादर्थ्यमेव । तत्र वाक्यशेषः । संश्यत्येवैनमेतद्यजुर्जपतीति । संश्यति शातनूकरणे तीक्ष्णी करोतीत्येतदुक्तं भवति । पुनश्चाह तेन संशितेन नात्मानमुपस्पृशति न पृथिवीमिति । तीक्ष्णीकरणस्य स्तम्बयजुर्हरणार्थत्वादनुपस्पर्शनमपि तावदेवेति गम्यते । तस्माद्यथोपवर्णितमेवा-

स्माभिः सूलम । नोपस्पृशेत्पृथिव्यामग्नौ तेन स्तम्बयजुर्हरिष्यामीति ॥ १५६ ॥

वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्मासीति ॥ १५७ ॥

भाविन्या बुद्ध्या वेदिः । न ह्यद्यापि संस्क्रियते भूप्रदेशः । तृणं प्रकृतत्वाद्यदात्तं तन्निधेयम् । उदगिति च प्राक्त्वनिवृत्त्यर्थम् । स्तृत्या हि प्रागग्रतोदगग्रता वाप्नोति । तन्निवृत्तौ च श्रौतीयमुदगग्रतेति गम्यते । ततश्च तदपचारे श्रौतमेव प्रायश्चित्तं भवति ॥ १५७ ॥

पृथिविदेवयजनीति तृणेऽन्तर्हिते प्रहरति ॥ १५८ ॥

तच्च यजेण तदर्थत्वात्तदादानस्य । देवयजनीति वास्य स्थाने पितृयज्ञे देवपितृयजनीति प्रयोगः । अङ्गप्रधानार्थत्वाद्वेदेरित्युक्तम् । पृथिविशब्देन च वेदिरत्राभिधीयते । तत् संस्काराभिप्रवृत्तेः । प्रहरणं च वेद्यां न तृणे अन्तर्हित इति सूत्रितत्वात् । इतरथा हि तृणे प्रहरतीत्येवमवक्ष्यत् । अथ पुनरन्तर्द्धानवचनात्तादर्थ्यमेव तृणस्य न प्रहराणाधिकरणता । तृण एव प्रहरणमिति सम्प्रदायः ॥ १५८ ॥

व्रजं गच्छेति पुरीषमादत्ते ॥ १५९ ॥

यजेणोद्धृतं यत्पुरीषं तद्व्रजं गच्छेत्यनेन मन्त्रेणादत्ते ॥१५९॥

वर्षतु त इति वेदिं प्रेक्षते ॥ १६० ॥

आत्तं पुरीषमिति वाक्यशेषः ॥ १६० ॥

बधानेत्युत्करे करोति ॥ १६१ ॥

प्रहृत्य निदधाति बधान देवसवितारिति श्रूयते ॥ १६१ ॥

प्रहरणशेषो वा विशेषोपदेशात् ॥ १६२ ॥

प्रह्रियतेऽनेनेति प्रहरणं मन्त्रः प्रहरणशब्देनाभिधीयते । तस्य शेष एकदेशः प्रहरणशेषः । कुत एतद्विशेषोपदेशात् । प्रहरणं हि प्रहृत्य अभिशेषेणोपदिश्यते । स प्रहरति पृथिविदेवयज-

ष्योपघ्यास्ते मूलं मा हिंसिषमित्येवमादि तमतो मा मौगिति यावत् । यद्येवं खण्डशोऽध्यवसाने च कथम् । मन्त्रलिङ्गादिति केचित् । एवं चेत्प्रहरणशेषतैव प्राप्नोति । न हि विधायका मन्त्रा इति । लिङ्गमपि च कयाचिद् वृत्त्या प्रहरणशेषभावमुपयास्यति । श्रुतितः खण्डशो विधानमित्यपरे । तथा च सति श्रुतिद्वयसामर्थ्याद्विकल्पो भवति । एवं च सति प्रहरणशेषो वाविशेषोपदेशात् । प्रतिकर्म वा खण्डशः प्रयोक्तव्यो विशेषोपदेशादिति । एवमपि संलग्येऽन्यथा वर्णयन्ति । माध्यंदिनपाठे ऽविशेषोपदेशात् । शाखान्तरे तु विशेषेणोपदिश्यते । तेनाविशेषस्य विशेषे प्रवृत्तिरविरुद्धा । न तु विशेषस्याविशेष इति । तेन विशेषोपदेशाद्खण्डश एव प्रयोग इत्यवधारणा प्राप्नोति । सम्प्रदाये तु विकल्पमेवेच्छन्ति । प्रहरणशेषपक्षेऽपि तूष्णीं पुरीषादानवेदिप्रेक्षणपुरीषाहरणानि ॥ १६२ ॥

अपाररुमिति द्वितीयं प्रहरणादि ॥ १६३ ॥

अपाररुमित्यनेन मन्त्रेण प्रहरणादि द्वितीयं कर्मोत्करकरणान्तं प्रतिपत्तव्यम् । अररुर्ह वै नामासुररक्षसमासेति रक्षाभिधायकत्वाद्राक्षसो मन्त्रः । ततश्चोदकोस्पर्शनमत्र भवति । देवपितृयजनाद्वृध्यासमिति च प्रयोगः पितृयज्ञे । देवजनं हि वेदिरत्राभिप्रेता । असौ च पितृयज्ञे देवपितृयजनं भवति ॥ १६३ ॥

अभिन्न्यस्यत्समीदुत्तरमररो दिवमिति ॥ १६४ ॥

अभिन्यासश्च हस्तद्वयेन भवति नैकेन पाणिना । कुत एतलिङ्गात् । अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहु प्रतिगृह्णातीति । प्रस्तरं स्तृत्वा तमभिनिदधातीति हि प्रकृत्यैवमामनन्ति अभिनिहित एव सव्येन पाणिनेति । पूर्वाभिनिहिते ह्युत्करकरणं समर्थं भवति । इहापि चाभिनिधानमेव चोदितम् । तमग्नीदभिनिदधातीति ॥ १६४ ॥

द्रप्सस्त इति तृतीयम् ॥ १६५ ॥

प्रहरणादीति वर्तते ॥ १६५ ॥

तूष्णीं चतुर्थं सतृणम् ॥ १६६ ॥

सह तृणेन पुरीषमुत्करे करोति ॥ १६६ ॥

पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रति मन्त्रम् ॥ १६७ ॥

पूर्वशब्दः सम्बन्धिशब्दः पूर्वं नद्याः कूलमिति यथा । परिग्रहणं परिग्रहः । यद्येवं परिगृह्णातीति नोपपद्यते । तस्मात्परिग्रहं करोतीत्येतदुक्तं भवति । दक्षिणतः पश्चादुत्तरतश्च स्फ्येन करणभूतेन गायत्रेणेत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १६७ ॥

वेद्यां त्रिरुल्लिख्याह हर त्रिरिति ॥ १६८ ॥

अयं च मन्त्रः किमियत्तापेक्षया उत त्रित्वविवक्षया । किंस्वात: यदीयत्तापेक्षया वरुणप्रघासेषु हर षट्कृत्व इति प्रयोगो वेदिद्वित्वात्प्रति वेदि हि तिस्रस्तिस्रो लेखाः । अथ त्रित्वविवक्षया ततस्त्रिशब्दोऽभ्यसितव्यः । न ह्यनभ्यस्ते प्रति वेदि त्रित्वविशिष्टं हरणमभिहितं भवति । तत्र केचिदाहुरियत्ता विवक्षा । प्रकृतौ हि लेखानां त्रित्वात्त्रिसंख्या विशिष्टं हरणमभिहितम् । विकृतावपि षड्लेखा इति षट्संख्याविशिष्टं हरणमभिधेयमिति । अन्ये त्वाहुस्त्रिशब्दस्य श्रुत्यैव त्रिस्वरूपविषयता । लक्षणयेयत्ता परता स्यात् । श्रुतिलक्षणा विषयैव श्रुतिर्ज्यायसीति साभ्यासस्त्रिशब्दः प्रयोक्तव्यः ॥ १६८ ॥

[1]हृत्वाग्नील्लेखाः संमृशति ॥ १६९ ॥

हरणसंमर्शने अग्नीत्कर्तृके । क्त्वाशब्दसामर्थ्यात् ॥ १६९ ॥

पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात् ॥ १७० ॥

ते चैते पितृयज्ञाग्निचित्ययोः प्रतिपत्तव्ये । कुत एतत् । तत्र

---

१ एवं प्रेषितोऽग्नीदाग्नीध्रो लेखाभ्यः पांसून् त्रिर्हृत्वा उत्करे प्रक्षिप्य लेखाः सम्मर्शनेन समीकरोतीत्यर्थः ।

दर्शनात् । तत्र होने दृश्यन्ते । पितृयज्ञे तावत् । लिखति हरति यज्ञार्थं भवति । अग्निचित्यपि च लिखित्वाह हरतेति त्रिराग्नीध्र इति । दर्शनमत्र विधानमभिप्रेतं भवति । कुत एतत् । तत्र दर्शनादेव । तत्र हि दर्शनं न विधानमन्यपरत्वाद्वचनस्य । किं परतेति चेत् । पितृयज्ञे तावल्लिखति हरतीति प्रकृत्य स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति । पितृपरत्वादत्र स्मृत्युदितं प्राचीनावीतमुचितमतो यज्ञोपवीतविधानपरं वचनम् । अग्निचित्येऽपि च प्रायणीयहविष्कृदन्ते सौमिक्या वेदेः स्फ्यादिसमर्पणान्तस्यावसरविधानार्थं वचनम् । वेदिशब्दस्य संस्कारनिमित्तत्वात् । तद्धर्मपरिप्राप्तौ सत्यामवसरो विधीयते । एवं हि तत्र वचनं प्रायणीयं प्रकृत्य, तस्य हविष्कृता वाचं विसृजते, वाचं विसृज्य स्तम्बयजुर्हरति, स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति, हरति त्रिराग्नीध्र इति । अतो विकृत्यनुप्रवृत्तिदर्शनात्प्रकृतावुपदेशोऽनुमीयते । किं च स्तम्बयजुर्हरणादीनां सहोच्चारणात् । तस्मादिह भवति लेखा हरत्यादि ॥ १७० ॥

## १अत्र वेदिकरणं यथोक्तम् ॥ १७१ ॥

खननमिहावसरे प्रतिपत्तव्यम् । आमूलोच्छेदनात् त्र्यङ्गुलम् वा ॥ १७१ ॥

## उत्तरं परिग्रहं २परिगृह्णाति सुक्ष्मास्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववत् ॥ १७२ ॥

प्रतिमन्त्रमितीयताऽपि सिद्धे यत्प्रतीकोच्चारणं करोति, तद्वाक्यावसानप्रज्ञप्तये । इतरथा हि सुक्ष्मा चासि शिवा चेत्यत्रापि पर्यव-

---

१ याज्ञिकदेवमते ' वेदिकरणं यथोक्तम् ' इत्येव सूत्ररूपम्, ' अत्र ' पदं त्वनुवर्तत इति, अत्र मूलं मृग्यम् ।

२ अत्रापि ' ब्रह्मन् ! उत्तरं परिग्रहं परिग्रहीष्यामि ' इति ब्रह्माणमामन्त्र्य 'ओ३म् परिग्रहाण ' इति तेनाऽनुज्ञातः परिगृह्णाति ।

सार्नं स्यादतः प्रतीकोच्चारणम् । पूर्ववदिति स्फ्येन दक्षिणतः प-
श्चादुत्तरतश्चेत्येवमर्थम् ॥ १७२ ॥

पुरा क्रूरस्येत्यनुमार्ष्टि[1] ॥ १७३ ॥

अनुमार्जनं समीकरणमभिप्रेतम् । पुरीषाहरणपक्षे चा-
स्मिन्नवसरे वेदिपुरीषमपनीयाप्यदानीयानुमार्जनं कर्त्तव्यम् । सा-
मर्थ्यात् । यच्चोक्तं प्राक्प्रवणामुदक्प्रवणेति तदप्यस्मिन्नेवावसरे का-
र्यम् । करणान्तरानुपदेशाच्च यज्ञेनैवानुमार्जनम् । प्रकृत-
त्वात् ॥ १७३ ॥

अध्यधिवेदिं प्रोक्षणीर्द्धारयति ॥ १७४ ॥

अध्यधिशब्दः सामीप्ये उपरिभावे च । वेदिमिति द्वितीयोपप
दविभक्तिः । प्रोक्षणी शब्दो यौगिकोपि प्रोक्षणी विशेषविषय. । वि-
शिष्टशब्दोपादानसामर्थ्यात् ॥ १७४ ॥

अन्योथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुप-
सादय स्रुचः सम्मृड्ढि पत्नीᳪ सन्नह्याज्येनो-
देहीति यदीच्छेत् ॥ १७५ ॥

अन्यशब्देनाग्नीदभिधीयत इत्युक्तम् । अथ शब्दप्रयोगोनर्थकः
पाठानुपूर्व्यादपि तत्प्राप्तेः । उच्यते । प्रोक्षणी धारणस्य यज्ञोद्यमनस्य
चैककालता यथा स्यादिति । आनन्तर्यार्थत्वादथ शब्दस्य नैकका-
लार्थतेति चेत् । स्यात्पाठादपि तत्प्राप्तेः । व्यर्थोथ शब्दप्रयोगो मा
भूदिति एककालार्थता कल्प्यते । एवं ह्याह स वा उपर्युपर्येव प्रो-
क्षणीषुधार्यमाणास्वथ स्फ्यमुद्यच्छतीति । ननु च सप्तम्याप्ययम-
र्थो लभ्यते । अध्यधिवेदि प्रोक्षणीर्द्धारयत्स्वध्वर्यावन्यः स्फ्यमुद्य-
म्याहेति सिद्धत्वेवैककालता । एवं चेदन्यार्थोयमथ शब्दः । को-
ऽस्यार्थोसति ह्यथ शब्दे धार्यमाणासु प्रोक्षणीषु सर्वे प्रैषाः प्राप्नुव-

---

१ 'तां प्रतिमार्ष्टि' इति श्रुतेः । प्रतिशब्दः पूर्वक्रियाविनिमयद्यो-
तकः, पूर्वं खननेन विषमां कृतां इदानीं समीकरोति इति श्रुतेरर्थः ।

न्ति । नान्यथा । इध्मबर्हिः शब्दो वरुणप्रघासेषु न विपरिणम्यते । यत इन्धनादिध्मः । एष चैकस्मिन्नपि काष्ठे प्रयोगे उपलभ्यते । इध्मस्य वा शकलमपच्छिद्येति । बर्हिः शब्देतु जात्यपेक्षयैकवचनम् । दृश्यते चैकस्मिन्नपि तृणे बर्हिः शब्दप्रयोगः । बर्हिरंधास्मा एतत् स्तृणात्यस्कन्नं हविरसदिति । इह समुदाय एकवचनान्तो जात्यपेक्षः । ततश्चाविपरिणामः तृणसमुदायान्तरेपि सैव जातिरिति । स्रुक् शब्दे बहुवचनस्य समवायाद् गृहमेधीयोपसदादौ यथार्थं विपरिणामः । पत्नीशब्दस्य त्वनेकपत्नीकेप्यनूह एवैकवचनान्तस्य समाम्नानात् । आज्येनोदेहीति आज्येन गृहीतेनोद्गच्छेत्येतदुक्तं भवति । प्रैषार्थकतृणगतमपि वचन समवायाद्यथार्थं विपरिणम्यते । यथा वरुणप्रघासेषु प्रोक्षणीरासादयतमित्येवमादि । यदीच्छेत्ततः प्रैषो भवति । स यदि कामयेत ब्रूयादेतद्यकामयेतापि नाद्रियेतेति ॥१७५॥

प्रैषप्रैषार्थयोरध्वर्युकर्तृकत्वं विरोधाच्च स्यादन्यः प्रैषेऽन्यश्च प्रैषार्थे इति प्राप्त इदमाह—

## यथाप्रैषितमन्यः पराधिकारात् ॥ १७६ ॥

यथाप्रैषितमन्यः करोति । प्रैषवचनसामर्थ्यादेवान्यस्मिन्प्राप्तेऽन्यशब्दोऽग्नीद्विषयः । यथान्यत्राहन्त्यन्य इति । अन्यः करोत्यग्नीत्करोतीति यावत् । कुत एतत् । पराधिकारात् । सामर्थ्यादेव च परप्राप्तौ परशब्दो जघन्यविषयः । परं हि जघन्यं निकृष्टमधिकृत्य प्रैषः प्रवर्त्तत इति । अपि च निकृष्टेनोत्कृष्टस्य प्रैषणं विरुध्यते । न ह्येवमाचरन्ति यदि ह्यध्वर्युः प्रेषयिताग्नीच्च प्रैषार्थं करोति ततोऽध्वर्युणा किञ्चित्कृतं किञ्चित्कारितं भवति । तथा च सति समाख्यानुगृहीत । प्रैषार्थस्यः पुनरध्वर्युकर्तृकत्वे कृतमेव न कारितं स्यात् । तत्र नातीव समाख्यानुग्रहः स्यात् । तस्मादध्वर्युः प्रैषेदग्नीच्च प्रैषार्थं इति ॥ १७६ ॥

एवं प्राप्त उच्यते—

## स्वयं वा अविरोधात् ॥ १७७ ॥

स्वयं वा अध्वर्युः प्रैषार्थं करोति सामर्थ्यादग्नीत्प्रेषयति । कुत एतत् । प्रैषार्थस्य प्राधान्यात् । कुत एतादिति चेत् । प्रैषस्य तदर्थ-

सादृश्यादिवियुक्तेऽर्थे युज्यते नैकवाचिता ॥
लोकेऽपि कारयन्तेव कर्त्तेति व्यपदिश्यते ।
कुर्वाणमेव कर्त्तारमाहुर्नैव प्रयोजकम् ॥
कर्तृशब्दः प्रयोज्ये हि कर्तृत्वादेव वर्त्तते ।
प्रयोजके च सम्बन्धादकर्त्तर्युपचर्यते ॥
शब्दस्यार्थेन सम्बन्धो वाच्यवाचकयोर्द्वयोः ।
अपि शक्ती प्रकल्प्येते प्रत्ययी नान्यथा भवेत् ॥
तेन यत्रान्यसादृश्यं सम्बन्धो वा कचिद्भवेत् ।
तत एव प्रतीतत्वाच्छक्तिर्नैवानुमीयते ॥
एवं प्रयोजकेऽध्वर्यौ कर्तृत्वानुपपत्तितः ।
प्रैषार्थस्यान्यकर्तृत्वात्समाप्त्यानुग्रहः कथम् ॥
प्रैषप्रैषार्थयोर्येन कर्त्रैकत्वं विरुध्यते ।
अतः कर्त्रन्तरापत्तिः सामर्थ्यादुपजायते ॥
प्रैषार्थस्यान्तरङ्गत्वात्प्रधानत्वाच्च कर्तृता ।
अध्वर्योरिव पश्यामः कातीयवचनाद्वयम् ॥
प्रैषस्य बहिरङ्गत्वाद् गुणत्वेनैव युज्यते ।
अग्नीध एव कर्तृत्वं विपरीतमतोऽन्यथा ॥
लोकस्य भ्रान्तिनाशाय महान्त यत्नमास्थितैः ।
कृतेय न्यायमास्थाय हेतुकर्तृनिराक्रिया ॥ १७८ ॥

प्राक्स्तरणाद्वेदिं नावमृशेत् ॥ १७९ ॥

वेदिं प्रकृत्य ह्येवमामनन्ति । तेनानवमर्शो यजस्य तथा श्रेयांसो भविष्यथेति ॥ १७९ ॥

शृतानि च हवी१ंष्याप्रचरणात् ॥ १८० ॥

नावमृशेदिति वर्त्तते प्रचरणं च प्रधानविषयम् । न स्विष्टकृदादि विषयम् । अतदर्थत्वात्तस्येति ॥ १८० ॥

अङ्गुष्ठाङ्गुलिभ्यां मा१ंस१ंहिताभ्यामवद्यन्त्येके१ ॥ १८१ ॥

१ अवमर्शननिषेधात् तत्प्रतिप्रसवार्थोऽयम् ।

मांससंहिते मांससंलग्ने ताभ्यामेके अवद्यन्ति । एके काष्ठेन । एवं ह्याम्नानम् । काष्ठेनावद्यतीति । तथा स्रुवेणावद्यति स्वधितिनावद्यति हस्तेनावद्यतीति । तत्र सामर्थ्यात् स्रुवस्य द्रवद्रव्यविषयता स्वधितेश्च मांसविषयता हस्तकाष्ठयोस्तु पुरोडाशविषयत्वम् । तथा च सूत्रकारः । शृतावदानं पात्रीं चेति । आह च—

सामर्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात् स्रुवस्तथा ।
हस्तकाष्ठे पुरोडाशमवदातुं प्रकल्प्यते ॥ १८१ ॥

आपन्नं स्तृणन्निरस्येत् ॥ १८२ ॥

यद्वेद्यां तृणकाष्ठाद्यापन्नं तत्स्तरणकाले निरसितव्यम् ॥१८२॥

१ह्विपतो वध इति स्फ्यमुदञ्चं प्रहरति ॥१८३॥

तदेतददृष्टार्थम् । दृष्टस्यासम्भवात् । प्रधानोपकारकं च प्रयाजादिवत् । ततश्च यावदुक्ते निवर्त्तते ॥ १८३ ॥

२अत्रनिज्यपाणी अपरेण प्रणीताः स्फ्यं निदधाति ॥ १८४ ॥

पाण्योरवनेजनं दृष्टार्थम् । वेदिरननेन हि पूलीधवलाद्यमलौ क्रियते । प्रयोजनम् तदभावे न भवति । तावदनिज्य प्रणीतानामपरतः स्फ्यं निदधाति ॥ १८४ ॥

इध्माबर्हिश्च ॥ १८५ ॥

समासोक्तयोः क्रमापरिज्ञाने सत्याह—

पूर्वमिध्मम् ॥ १८६ ॥

निदधातीति वर्त्तते ॥ १८६ ॥

---

१ अध्वर्युः प्रैषार्थमुद्यतं यज्ञ प्रैषान्ते उदगग्रमुत्करे क्षिपतीत्यर्थः ।
२ हस्तावुत्करेऽद्भिः प्रक्षाल्य प्रणीतानां समीपे पश्चं स्फ्यमासादयत्यध्वर्युरित्यर्थः ।

स्यात् । अन्तरङ्गं प्रैषार्थो बहिरङ्गं प्रैषः । प्रैषार्थेन व्यवहितत्वात । ततश्च यदन्तरङ्गं प्रधानं च तदध्वर्युः करोति । बहिरङ्गं गुणभूतं चाग्नीदिति न्याय्यम् । ननु च विरुध्यत एतदुक्तम् । न हि निकृष्ट उत्कृष्टं प्रैषयितुमलमित्यत आह । अविरोधात् । स्यादयं विरोधो यद्ययं प्रैषः स्यात् । अध्येषणा त्वेषा । अग्नीदध्वर्युमधीच्छति । यथैतच्चैतच्च कुर्यादिति । प्रैषणाध्येषणयोः को विशेष इति चेत् । निकृष्टविषयं प्रैषणम् । उत्कृष्टविषयमध्येषणमिति । यथा लोके माणवकः प्रेष्यते काष्ठान्याहरेति । स्वामिनं च प्रत्यध्येषणा स्नायतां भुज्यतामिति । वेदेऽपि च पश्यिरग्ने सख्ये वाश्वर्वोद्गातरथ वा विमवो ह्मध्वा इति । अग्नीधाग्निरधीष्यते ततश्च न विरोधः ॥ १७७ ॥

प्रैषावचनाच ॥ १७८ ॥

न च सम्प्रैष वचनमस्ति । यथान्यत्राग्नीदग्नीन्विहरेति । अथवा सम्प्रैषावचनादिति । नैतत्सम्प्रैषवचनं किं तर्ह्यध्येषणमेतदिति । अथ यदुक्तमध्वर्यौ प्रैषे सति किञ्चित्कृतं अध्वर्योः किञ्चित्कारितं तथा सति समाख्यानुग्रह इति । उच्यते । एवं हि प्रैषदानक्रियामेव प्रति साक्षादध्वर्योः कर्तृत्वं न प्रैषार्थे । साक्षात्कर्त्रन्तरस्य विद्यमानत्वात् । ननु चोक्तं स्वतन्त्रः कर्तेति प्रकम्य तत्प्रयोजको हेतुश्च कर्ता चेति प्रयोजकस्यापि कर्तृत्वम् । नैतदेवम् । अन्यकर्तृत्वात्प्रैषार्थस्येत्युक्तम् । कथं तर्हि प्रयोजकस्य कर्तृत्वम् । प्रैषे व्यापारात् क्रियायां चान्यस्य दृष्टत्वात् । तेन कर्तृत्वनिबन्धनकार्यार्थं कर्तृत्वमतिदिश्यते । आह च—

प्रेषणे यदि कर्तृत्वं तदर्थेनोपपद्यते ।
तत्र चान्यस्य दृष्टत्वात् कर्तृत्वमुपचर्यते ॥

कर्तृनिर्देशकार्यं च कर्तृकारणयोस्तृतीयेत्येवमादि । यथा अपिति सार्वधातुके ङित्वातिदेशो ङिन्निबन्धनकार्यार्थं । न च तस्य साक्षात् ङित्व ङकारस्येतोऽभावात् । एवमिहाप्यकर्त्तरि कर्तृत्वातिदेशः । तेन समाख्यानुग्रहो नातीवोपपद्यत इति ।

प्रयोजकस्य कर्तृत्वं स्याच्चेत्किमतिदिश्यते ।
अथातिदेशः कार्यार्थस्तदेव स्यात्प्रयोजनम् ॥

एवं च सति नातीवसमाख्यानुग्रह उपपद्यते । तस्मादध्वर्युः प्रैषार्थमग्नीच्च प्रैष इति । तथा च लिङ्गम् । प्रैषवचनं हि प्रकृत्याम्नायते । स यदि कामयेत ब्रूयादेतद्यद्युकामयेतापि नाद्रियेत स्वयमुद्धोचैतत् वेदेदमतः कर्माणि अध्वर्युं प्रैषार्थस्य कर्तारं दर्शयति । सूत्रकारानुप्रवृत्तेश्चायमेवार्थोऽवसीयते । हर त्रिरिति प्रैषवचने हि मनि हत्वाग्नील्लेखाः संमृशतीत्याह । तच्चैवमुपपद्यते । यद्यस्माभिन्यायोऽभिहितः । यदा चाध्वर्युः प्रैषदानेऽधिक्रियते । तत्राग्नीधः प्रैषार्थः स्यात् । तथा च सति हत्याग्नील्लेखाः संमृशतीत्यवाच्यं स्यात् । आह च—

प्रेषणे यदि कर्तृत्वं तदर्थे नोपपद्यते ।
तत्र चान्यस्य दृष्टत्वात्कर्तृत्वमुपचर्यते ॥
प्रयोजकस्य कर्तृत्वं तदुक्तिं प्रत्यसंशयम् ।
उक्तेरपि च कर्मत्वं उच्यमानतयैव हि ॥
तस्या अपि च कर्तृत्वमुच्यमानप्रबोधनात् ।
उच्यमानस्य कर्मत्वं कर्तृत्वं चार्थसाधनात् ॥
एवं ह्यनेककर्तृत्वं कर्मत्वव्यवधानतः ।
प्रयोजकस्य कर्तृत्वमुच्यमानं न शोभते ॥
प्रयोजकोक्तिस्तस्यैव व्यापारः स्फुट एव हि ।
न तेन व्यवधानं तु पाक एधोदकादिवत् ॥
पच्यर्थः सम्भवत्येव हेतुवाक्यं विनापि हि ।
तेन पूर्वापरीभावो हेतुवाक्यस्य नेष्यते ॥
अङ्गित्वेऽपि हि ङित्वस्य यथादेशः कृतोऽपि ति ।
प्रयोजकस्य कर्तृत्वमेवमेवातिदिश्यते ॥
ङिन्निबन्धनकार्यार्थं ङित्वं हाङिति माप्यते ।
कर्तृकार्यातिदेशार्थमकर्तर्येवमुच्यते ॥
गुणवृद्धिनिषेधार्थं ङित्वं हाङिति कथ्यते ।
अकर्तर्यपि कर्तृत्वं तृतीयाद्यर्थमुच्यते ॥
अपचारिककर्तृत्वं न सर्वैरभ्युपेयते ।
गोरालम्भविधाने हि याज्ञिको नैव गृह्यते ॥
कर्तृशब्दस्य वाच्यर्थोऽप्रयोज्यो हेतुरेव च ।
एवमप्येकशब्दस्य प्राप्तानेकार्थवाचिता ॥
तस्याङ्गतौ च सा नेष्टा तत्प्रभावेऽन्तवाद्यपत् ।

प्रणीतादक्षिणेन वाहृत्य ॥ १८७ ॥

१इध्मं निदधाति ॥ १८७ ॥

२स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्संमार्ष्टि- निशित इति विपर्यस्य बहिर्मूलैः प्राङुत्क्रम्य ॥ १८८ ॥

स्रुवं प्रतप्य पूर्ववदिति प्रत्युष्टं निष्टप्तमिति वा । तुल्यश्रुतित्वात् । वेदाग्रैः करणभूतैरन्तरत इति । मुखतः प्रागिति बुध्नादारभ्याग्रात्संमार्ष्टि । अनिशित इत्यनेन मन्त्रेण । विपर्यस्य बहिर्मूलैर्विपर्यासात् प्रत्यगिति लभ्यते । बहिर्बाह्यतः । वेदाग्रमूले प्राङुत्क्रम्येति । प्राङ्गत्वा । प्राङिवैवोत्क्रम्येति वचनात् । उत्क्रमणं च सम्मार्गमात्रे । न प्रतपने । तस्मात् तथैव सम्मृज्याग्रथाग्निं नाभिव्युक्षेत्प्राङिवैवोत्क्रम्येति वचनात् ॥ बहिरपि मन्त्रः प्रवर्तते । देशभेदात्तथा च सूत्रकारः । देशभेदे मन्त्रप्रवृत्तिं ज्ञापयति । अग्निसम्मार्गे तूष्णीमुपरीति ॥ १८८ ॥

३प्रतप्य प्रतप्य प्रयच्छति ॥ १८९ ॥

---

१ प्रणीतानामाहवनीयस्य चान्तरालेन प्रदक्षिणामिध्मावर्हिराहृत्य निदधातीत्यर्थः ।

२ अग्नीत् स्रुवं प्रतप्य अथ उपसृत्य ततोऽग्निदेशात् प्राङुत्क्रम्य प्राच्यां गत्वा वेदाग्रैः अग्रे प्रतिपत्तिविधानाद्वेदात् पृथग्भूतैः अन्तरतो मुखप्रदेशे स्रुवं प्राक् सम्मार्ष्टि, वेदाग्रैर्मूलादारभ्याग्रपर्यन्तमुपरिप्रदेशे प्राक् सम्मार्ष्टि मार्जनेन तत्संलग्नं रजः पातयतीत्यर्थ इति देवः ।

३ यस्य यस्य स्रुवादेः सम्मार्गो विहितो विधास्यते तस्य तस्य सम्मार्गानन्तरं तत्तत्प्रतप्य प्रतप्याध्वर्यवे प्रयच्छति । अत्रायं क्रमः पूर्वं स्रुचस्य प्रतपनम्, ततः प्राङ्गत्वा यथोक्तः सम्मार्गः, पुनः प्रत्यावृत्य प्रतपनम्, तत उदकोपस्पर्शनमथ समर्पणमिति । अग्निपक्षे अध्वर्यो. प्रतपनपक्षेचार्याद्ग्नीधे समर्पणमिति विशेषः ।

वीप्सा स्रुगादिविषया । ततश्च स्रुगादीनामपि उत्तर प्रतपन प्रवर्त्तते । पूर्वं तु स्रुवस्यैव विधानात् ॥ १८९ ॥

अनिशितेति स्रुच १ ॥ १९० ॥

सम्मार्ष्टीत्यनुवर्त्तते ॥ १९० ॥

तूष्णीं प्राशित्रहरण ; शृतावदानं पात्रीं च ॥ १९१ ॥

ननु चावाच्य तूष्णीमिति । सम्मार्गमन्त्रानुपदेशात् । स्यात्प्रतपनमन्त्रव्युदासार्थत्वात् । न प्राशित्र क्रियानिर्देशात् । तच्छेषत्वाच्च मन्त्रस्य । पात्रीमात्रोपदेशसामर्थ्यात् । प्रयोजनवत्त्वाविशेषाच्च । उद्धरणपात्र्योरिडापात्र्याश्च सम्मार्गं । स च विनियोक्रमेण । क्रमान्तरे प्रमाणाभावात्२ ॥ १९१ ॥

३सम्मार्जनान्यपास्यति ॥ १९२ ॥

अपक्षिपत्युत्करे । प्रदेशान्तराविधानात् । लिङ्गाद्योत्तरो वा अतिरिक्तस्य प्रतिपत्ति ॥ १९३ ॥

४आहवनीये प्रासनमेके ॥ १९३ ॥

---

१ जुहूपभृद्ध्रुवा ।

२ परेतु यदुक्तमविशेषादुद्धरणपात्र्योरिडापात्र्योश्च तूष्णीं विनियोगक्रमेण प्रतपनादीनीति, तदयुक्तम, 'पात्रीम' इत्येकवचनप्रयोगेण पात्रीगतद्वित्वस्याप्रामाणिकत्वात्, आसादनोपस्तरणादौ एकस्या एवपर्याप्तत्वात शाखान्तरेषु तथैव श्रवणात् । इडापात्र्यास्तु न कुत्रापि सूत्रे सम्मार्गप्रतपन विहित स्त , अतस्तयो सम्मार्गप्रतपने निर्मूले एव । अत एव विप्रभूत्याचार्यैर्नैतयो सम्मार्गो ह्यनुक्तम इति प्राहु ।

३ सम्मार्गोत्तर सम्मार्जनसाधनानि वेदप्रान्ते उत्करे क्षिपतीत्यर्थं ।

४ 'आहवनीये वा ' इति देव । अत्रार्थे 'सम्मार्जनान्यद्भि संस्पृश्याग्नौ प्रहरति यस्मिन् प्रतपत्युत्करे वा ' इत्यापस्तम्बान्तिशरणम ।

तद्धैके स्रुवं समार्जनान्यग्नावभ्यादधतीति वचनात् ॥ १९३ ॥

पत्नीं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टांगार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता परिहरत्यधीवासोदित्यै रास्नेति ॥ १९४ ॥

पत्नीशब्देन यज्ञस्य स्वामिन्यभिधीयते । कुत एतत् । स्मृते । स्मरन्ति हि वैयाकरणाः । पत्युर्नो यज्ञसंयोग इति । तत्रैव पत्नीरूपं भवति । नान्यत्र । यच्च रजकस्य पत्नी कूपकस्य पत्नीति । उपचारमात्रं तत् । चिन्ताया प्रयोजनम् । सन्नहनक्रियाकर्तृत्वसम्बन्धाद्याध्वर्युपत्नी गृह्यते । सन्नहनं च सम्पूर्वस्य नहे. । सन्नहनं बन्धनमित्यर्थ । प्रत्यग्दक्षिणत इत्यवान्तरदेश उच्यते । स कस्य । गार्हपत्यस्य । कुत एतत् । श्रुते. । सा वै न पश्चात्प्राची यज्ञमन्वासीतेति हि प्रकृत्य तस्माद्दु दक्षिणत इवैवान्वासीतेत्याह । उपविष्टामिति च भूतकालप्रत्ययनिर्देशान्नेदानीमुपवेशनम् । पूर्वमेवोपविष्टां सन्नह्यति । तथा अपि च कर्म सन्निधिव्यवस्थानं नाध्यम । यजमानवत् स्वामित्वाविशेषात् । क्वचिच्च दर्शयति । पत्नी च पूर्ववत्पत्नी च यथादेशमिति । मुञ्जयोक्त्रेण त्रिवृता मुञ्जमयेन त्रिगुणेन योक्त्रेण सन्नह्यति । तच्च परिहरत्यधीवासोदित्यै रास्नेत्यनेन मन्त्रेण । अधीवास इति बहिर्वासस इति । स वा अधिवास सन्नह्योपधये वैवासो वरुण्या रज्जुस्तदोपधीरेवैतदन्तर्दधाति॥१९४॥

दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वेष्प इति ॥ १९५ ॥

उत्तरस्य शङ्कुस्थानीयता । प्रतिमोकश्च उपानहौ प्रतिमुञ्चत इति न्यायेन प्रवपणमुच्यते । ऊर्ध्वमुद्गूहति विष्णोर्वेष्प इत्यनेन मन्त्रेण । तच्चैतत्पत्नी सन्नहनं तत्संस्कारार्थमनिपातिन कर्तव्यम् । यच्चोच्यते सन्नहनं प्रकृत्याथ मेध्येनवोत्तरार्द्धेनाज्यमवेक्षत इति ततश्चाज्यावेक्षणार्थतावगम्यते । तदप्यर्थवादमात्रम् । न हि सन्नहनस्याज्यावेक्षणार्थत्वे प्रमाणमस्ति ॥ १९५ ॥

## न ग्रन्थिं करोति ॥ १९६ ॥

स वै न ग्रन्थिं कुर्यादिति वचनात् ॥ १९६ ॥

## ऊर्जेत्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्यदब्धेनेति[1] ॥ १९७ ॥

ऊर्जेत्वेत्यनेन मन्त्रेणाज्यमुद्वास्य पत्नीमवेक्षयत्यवेक्षणं कारयति । ततश्चाध्वर्युणा पत्न्याज्यमवेक्षस्वेति । न ह्यन्यथा अवेक्षयितुं शक्यते । अदब्धेनेत्यवेक्षते । यद्यपि चोक्तमवेक्षयत्यदब्धेनेति । तथापि त्वावपश्यामीत्युत्तमपुरुषयोगादवेक्षण एव मन्त्रो नाध्वर्युण इति । तत्रैतत्त्वनेकपत्नीकः परार्थत्वादेकैव करोति । पत्न्यभावेऽपि च पितृयज्ञे[2] द्रव्यसंस्कारानपायादध्वर्युरवेक्षते ॥ १९७ ॥

## [3]वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥ १९८ ॥

निगदव्याख्यातम् ॥ १९८ ॥

## आहवनीये वा कृत्वा तच्छ्रापिणः ॥ १९९ ॥

आहवनीये वा कृत्वा तच्छ्रापिणः । आहवनीये वा[4] कृत्वा वेद्यां करोति । तत्र नैवमेवं विकल्प्यते । किं तर्हि व्यवस्थितविभाषयम् । आहवनीयश्रापिण आहवनीये वा कृत्वा एवं ह्यामनन्ति । यथाज्यमादाय प्राङुदाद्रवति तदाहवनीयेऽधिश्रयति यस्याहवनीये हवींषि श्रपयन्ति । सर्वो मे यज्ञ आहवनीये शृतोऽभूदिति ॥ १९९ ॥

---

१ आपस्तम्बः ' सा निमील्याक्ष्यानुच्छ्वसन्ती वीक्षत 'इति।

२ एव रजस्वलायां प्रसूतायां प्रोषितायां वाऽध्वर्युरेवावेक्षते ।

३ अग्नीत्तदाज्यं नीत्वा आसादितानां प्रोक्षणीनां पश्चाद्वेद्यां करोतीत्यर्थः ।

४ ' अधिश्रपणम् 'इति शेषः ।

सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च
पूर्ववत् ॥ २०० ॥

च शब्दादाज्यं च पूर्ववदेव । न ह्यन्यथाज्योत्पवने पवित्रे प्राप्येते इति । कुत एतादिति चेत् । प्रोक्षणीषु पवित्रे भवतस्ते तत आदत्ते ताभ्यामाज्यमुत्पुनातीति । प्रोक्षणीनां पुनः संस्कारः कार्यार्थः । प्रयोजनमिध्माबर्हिषोः प्रोक्षणाभावे न भवति ॥ २०० ॥

आज्यमवेक्षते तेजोसीति यजमानो वा ॥ २०१ ॥

प्रकृतत्वादध्वर्युः ॥ २०१ ॥

स्रुवेणाज्यग्रहणं चतुर्जुह्वां धामनामेति
सकृन्मन्त्रः २०२ ॥

मिह सकृन्मन्त्र इति । सत्यमेतदेवम् । वाक्यद्वयप्रतिपत्त्यर्थस्तु पुनरारम्भः इतरथा ह्येकवाक्यताप्याशङ्क्येत सकृन्मन्त्रवचनविधिप्रयसार्थतया त्रिशब्दस्य तन्माभूदित्यतः सकृन्मन्त्रवचनमुच्यते ॥ २०२ ॥

अष्टावुपभृत्यल्पीयोनुयाजाश्चेत् ॥ २०३ ॥

अष्टगृहीतमुपभृति गृहीतव्यम् । जौहवादल्पतरम् । यद्यनुयाजाः सन्ति । इहानुयाजानामवैकल्पिकत्वाद्विकृत्यर्थश्चेच्छब्दः ॥२०३॥

चतुरन्यत्र प्रतिविभागात् ॥ २०४ ॥

अनुयाजवत्कर्मणोऽन्यत्र अन्यद्रव्यानुयाजके च कर्मणि चतुर्गृहीतमुपभृति ग्राह्यम् । कुत एतत् । प्रतिविभागात् । प्रतिविभागेनैवोपयोग औपभृतस्य दृश्यते प्रयाजेषु चानुयाजेषु च । तेनोभयार्थतौपभृतस्याध्यवसीयते । ततश्चानुयाजाभावे प्रयाजार्थमेव चतुर्गृहीतं भवतीत्ययमभिप्रायः ॥ २०४ ॥

किञ्च—

पश्चातिथ्यादर्शनाच्च ॥ २०५ ॥

पशौ तावदन्यद्रव्यकेष्वनुयाजेषूपभृति चतुर्गृहीतं दर्शयति । अथोत्पूयाज्यं चतुर्गृहीतं जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यमिति । तथा अननुयाजके कर्मण्यातिथ्यायाम् । अथोत्पूयाज्यं सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्तीति । तत्रानुयाजार्थेन द्रव्येण नार्थ इति प्रयाजार्थमेव चतुर्गृहीतं दर्शयति ॥ २०५ ॥

न कृत्स्नोपदेशात् ॥ २०६ ॥

नैतदेवं कृत्स्नं ह्येतदष्टगृहीतमनुयाजार्थत्वेनोपदिश्यते । अथ यदष्टौकृत्व उपभृति गृह्णाति छन्दोभ्यस्तद् गृह्णाति अनुयाजेभ्यो हि तद्गृह्णाति छन्दांसि ह्यनुयाजा इति । एवं चानुयाजार्थस्यैव वचनात्प्रयाजेषु विनियोगः । यथा प्रयाजार्थस्योत्तरार्थे ॥ २०६ ॥

यदुक्तं पश्चातिथ्यादर्शनादिति । न तद्दर्शनं किं तर्हि वचनं तत्—

पश्चातिथ्ययोर्वचनात् ॥ २०७ ॥

यदा सकलस्यानुयाजार्थता तदानुयाजाभावे उपभृद्ग्रहणे प्राप्ते वचनाच्चतुर्गृहीतं विधीयते । प्राप्तिपूर्वकं हि दर्शनं भवति । न चेह प्राप्तिरस्तीत्यतो वचनमिदमिति । अत्र वदामः । स्यादेतदेवं यदि कृत्स्नमनुयाजार्थत्वेनोपदिश्येत । न तूपदिश्यते । एवं हि शाखिनां वचनम् । यदष्टौकृत्व उपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णातीत्युभयार्थतया विधानम् । यत्पुनरुक्तम् । अनुयाजेभ्यो हि तद्गृह्णातीति, तदनेनोभयार्थत्वविधानादनुवादः स इति । ननु स एव विधिरयमनुवादः कस्मान्न भवति । न, तेन सकलस्यानुयाजार्थत्वे प्रयाजार्थतानुपपत्तिः स्यात्, उभयार्थविधाने पुनर्यथाप्राप्तावनुयाजांशोऽनूद्यत इत्यदोषः । कृत्स्नोपदेशे हि स्यादेतदेवम् । नायं कृत्स्नोपदेशः । पश्चातिथ्ययोश्च वचनं स्यात् । यद्युभयार्थता न स्यात् । उक्तेन न्यायेनोभयार्थत्वे प्राप्तिपूर्वकत्वाद्दर्शनमेव तदिति । किं च वचने सत्येतस्मिन्न ह्यत्रानुयाजा भवन्तीति हेतुरसमर्थः स्यात् । तस्मादपि दर्शनमेवेति । आह च । उभयार्थविधेर्विदितस्यानुवादता ॥ २०७ ॥

ध्रुवायां च जुहूवत् ॥ २०८ ॥

चशब्दादुपभृति च । किं सिद्धं भवति सकृन्निधानमन्त्रवचनम् । तच्च वचनपरिप्राप्तं त्रिस्त्रिरेव पञ्चधा गृह्णीयादिति विधा पुनराह तदनुसकृत्सकृदेवेति ॥ २०८ ॥

इध्मं प्रोक्षति विस्रंस्य वेदिं च बर्हिः

प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं

कृष्णोसीति प्रतिमन्त्रम् ॥ २०९ ॥

इध्मादिप्रोक्षति । कृष्णोसीत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । कथं पुनरिध्मं विस्रंस्य प्रोक्षति बर्हिश्च प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थिं प्रतिग्रहणं च समर्पणपूर्वकं प्रत्युपसर्गप्रयोगसामर्थ्यात् ।

तथा च वचनम् अथास्मै बर्हिः प्रयच्छन्तीति। इध्मस्याग्न्यर्थस्य प्रोक्षणम् । मन्त्रलिङ्गवाक्यशेषाभ्याम् । अग्नये त्वा जुष्टं प्रोक्षामीति मन्त्रवर्णः । इध्मं प्रकृत्य चाह । तन्मेध्यमेवैतदग्नय करोतीति । प्रयोजनम् । तादर्थ्याभावे न प्रोक्षणम् । यथावभृथेऽप्सु परिधिरुत्सु परिधिसंस्कारार्थस्येध्मकाष्ठस्य यदेराप यानेन कारणेन स्तरणाभावे न प्रोक्षणम् । यथा गृहमधीय, तत्रापि हि मन्त्रलिङ्गम् । बर्हिष त्वा जुष्टं प्रोक्षामीति । तन्मध्यामेवैतद् बर्हिष करोति वाक्यशेष । उपसत्सु तु स्तृतायाँ अप्येकवृतस्तरणमस्त्यवेति प्रोक्षणं प्रवर्तत एव । बर्हिर्मन्त्रस्रुग्भ्यस्त्वेति समवेतवचनत्वात् स्रुग् छित्वैकावयोर्विपरिणाम्यते । स्रुगभावे च ज्योतिष्टोमेनूबन्ध्यापक्षे स्रुक्शब्दस्याप्रयोग ॥ २०९ ॥

## शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति ॥ २१० ॥

अत्र शेषस्य द्वितीयान्तनिर्देशात्, मूलाना च सप्तम्या गुणविभक्त्या निर्दिष्टत्वात्, शेषार्थतेति केचित् । नेत्यपरे । वेदवाक्य हि शेषस्य मूलार्थतैव गम्यते । एव ह्याह । अथवा प्रोक्षण्य परिशिष्यन्ते ताभिरोषधीना मूलान्युपनिनयादिति तत्संस्कार इव दृश्यते । ता इमा आर्द्रमूला आपधय इति । किं च प्रयोजनवत् द्रव्यसंस्कारावगतेरिति प्रयोजनवद् बर्हिर्द्रव्य तदनेन सम्रियत इति । सूत्र च यथावेदवाक्य नेयम् । यथाथ या प्रोक्षण्य परिशिष्यन्त इति शेषस्य व्यपदेश सापि सामस्त्यार्थ । प्रयोजन नाशादोषादौ मूलोपनिनयन कर्त्तव्यमेव ॥ २१० ॥

## पवित्रे निधार्य प्रणीतासु बर्हिर्विस्रंस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ॥ २११ ॥

प्रणीतासु निधान याचानिक्रम । बर्हिर्विमुच्य पूर्वस्मात्प्रदेशात् प्रमुष्टिप्रस्तरग्रहण विष्णोरित्यनेन मन्त्रण । स चायमपच्छेदे मन्त्र पुरस्ताद्गृह्णातीति वचनात् । ततश्च यत्रापच्छेदो नास्ति तथा पितृयज्ञ परिच्छिन्न एव गृहीतोऽसाविति तत्र मन्त्रो निवर्त्तत ॥ २११ ॥

## ब्रह्मणे प्रदाय सन्नहनं विस्रंस्य दक्षिणस्यां

वेदिश्रोणी निधायान्यैरवच्छाद्य वेदिं स्तृणा-
त्यूर्णम्रदसमिति त्रिवृत् ॥ २१२ ॥

प्रस्तरं प्रदाय प्रस्तरं बर्हिः सन्नहनं विस्रस्य विमुच्य दक्षि-
णस्यां वेदिश्रोण्यौ स्थापयित्वा अन्यैस्तृणैरेव प्रच्छाद्य वेदिं तृणैश्छा-
दयति ऊर्णम्रदसमित्यनेन मन्त्रेण । त्रिवृदिति त्रिधातुम् । मन्त्र-
स्य नोदितार्थाभिधायकत्वात्पितृयज्ञे विपरिणामो बर्हिषः ॥ २१२ ॥

उपपत्त्या वा[१] ॥ २१३ ॥

[२]बहुलम् ॥ २१४ ॥

स्तृणातीति ॥ २१४ ॥

अधरमूलम् ॥ २१५ ॥

स्तृणाति अधरमूलानि[३] करोति ॥ २१५ ॥

पश्चादपवर्गम् ॥ २१६ ॥

[४]पश्चाद्यापवर्गः समाप्तिर्भवति । न प्रागुदग्वा । प्रस्तरे प्रदानं
इत्याचम, व्यापृतहस्तः स्तरणं कथं नाम कुर्यादिति । तेन पितृयज्ञे न
भवति । गृहमेधीयेऽपि च केचित्स्तरणाभावात्र प्रदानमिच्छन्ति ।
नेत्यपरं । अस्ति हि तत्र व्यापारः । सन्नहनविस्रंसननिधानाच्छा-

---

१ न त्रिवृत्, अपितु यावतीभिराहृद्भिर्भवति वेदेः स्तरणं ताव-
तीभि कर्तव्यमित्यर्थः ।

२ निबिडं घनं यथा स्यात्तथाच्छादयतीत्यर्थः ।

३ पूर्वस्तृतस्य बर्हिषो मूलानि पश्चात्स्तीर्यमाणबर्हिषोऽग्रैः प्रच्छा-
दनीयानीत्यर्थः ।

४ वेदेः पूर्वभागादारभ्येति शेषः । एकं मुष्टिं वेदेः पूर्वभागेऽन्ती-
र्यां द्वितीयं मुष्टिं वेदेर्मध्यमभागे पूर्वस्तृतबर्हिषो मूलान्यग्रैश्छादयन्
स्तृणाति, ततस्तृतीयं मुष्टिं वेदेः पश्चिमभागे पूर्ववत् द्वितीयमुष्टि-
स्तरणेन सम्बद्धं स्तृणीयात् । अयमेकः प्रकारः ।

दनानि । प्रकृतौ हि तानि प्रत्तप्रस्तरेणाध्वर्युणानुप्रितानि इहापि तद्वत्क्रियेति ॥ २१६ ॥

[1]प्रवृहन्वा ॥ २१७ ॥

वृहाग्निष्कर्षे, 'निष्कृष्य अथो अपि प्रवर्ह्य स्तृणीयादिति वचनात् । अस्मिंश्च पक्षे मन्त्रावृत्तिं नेच्छन्ति । स्तरणक्रियासात्र स्यात् । इतरथा प्रतिमुष्टिक्रियाविच्छेदान्मन्त्रावृत्तिरिष्यते । स्तरणद्रव्यान्यत्वात् । यद्यपि च स्तीर्यमाणैकवेदिविषया स्तरणक्रिया मन्त्रोऽपि तत्परः । अथापि स्तरणद्रव्यान्यत्वमात्रमङ्गीकृत्य सूत्रकृता मन्त्रावृत्तिरभिहिता, न प्रहणलवनस्तरणाद्यग्रहणेऽपीति ॥ २१७ ॥

अत्रोद्वासनमाहवनीयश्रापिणः ॥ २१८ ॥

विरोधात् आहवनीयकल्पने हि हवींष्यपि दहेरन् । यद्येवं कपालोद्वासनमपि कर्त्तव्यम् ॥ २१८ ॥

इध्मात्समिधमादायाहवनीयं कल्पयत्युपरि

र्युपरि प्रस्तरं धारयन् ॥ २१९ ॥

उपर्युपरीति सामीप्ये, प्रस्तरं धारयत्समिधाऽऽहवनीयं समर्थं करोति[2] । तथैतत्समर्थीकरणममन्त्रमेव दृष्टार्थत्वात् । नतत्कार्यापन्नानामपां परिश्रितां वा ॥ २१९ ॥

उल्मुके उदूहत्यनुयाजाश्चेत् ॥ २२० ॥

अनुयाजार्थमुल्मुकोदूहनम् । तत्संस्पर्शनेन ह्यग्रेऽनुयाजा-

---

१ एवं च प्रागपवर्गमेव कृतं भवति । वेदेः पश्चिमपार्श्वे स्तीर्यां तस्याग्राणि यष्ट्यादिनोत्पाट्य तेषामधस्तादन्यस्य बर्हिषो यथा मूलानि भवन्ति तथा स्तृणीयात् ।

२ समिद्धाधानेन पलाससमिन्धनेध्मादेर्ज्वालनसमर्थं करोति । लोकेऽपि काष्ठादिना पूर्वमग्निमाहृत्य पश्चात् सन्धुक्षणं क्रियते, एवमत्रापीति भावः ।

र्थस्यायातयामतोपजन्यते । तत्संस्कारप्रयोजनत्वाच्चोल्मुकयोरा हवनीयानुगमने ततो नानयनं गार्हपत्यादेव प्रणीयत इति । तयोश्च पुनरनुसंस्पर्शनविस्मरणेऽनुयाजनिर्वृत्युत्तरकालं, नाहवनीये तत्संस्पर्शनं तदर्थसंस्कारत्वात् । ननु चोत्तरपदार्थार्थमग्निसंस्कारार्थतापीष्यते । तथा ह्याह । ते पुनरनुसंस्पर्शयन्तीति प्रकृत्य अयातयाम्नियदत ऊर्ध्वमसंस्थितं यज्ञस्य तत्तेनवा मह इति । न केवलानुयाजार्थत्वात् । तत्कुतो वचनात् । ते वा एते उल्मुके उदूहन्त्यनुयाजेभ्य इति । इतरदर्थवादप्रायम् । तथाच सूत्रकारः । अनुयाजार्थे दिति । तच्चैतद्यागामिनिर्वेत्यर्थद्रव्यादृष्टसंस्कारत्वादुदयेपि भवति ॥ २२० ॥

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पालाशवैकङ्कतकार्ष्मर्यवैल्वान्पूर्वालाभेपूर्वालाभ उत्तरान् खादिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम् ॥ २२१ ॥

परिधीयन्त इति परिधयः । संज्ञा चैषा यौगिकी । न हि लोके परिधिशब्दः प्रत्यस्तमितावयवार्थवृत्तितया गवादिशब्दवत्क्वचिद्रूढः । न च यूपादिवत् संस्कारनिमित्तता शक्यावसातुम् । संस्काराणामविधानात् । गम्यते चात्रावयवार्थः सर्वतो धानात्परिधय इति । यूपे त्ववयवार्थो नावगम्यते । तत्संस्काराश्च विहितास्छेदनादयः । तेन तन्निमित्ततावगम्यते यूपशब्दस्य । ननु चैवं सति परिधानात्परिधय इति चत्वारः प्राप्नुवन्ति । नोपदेशसामर्थ्यान्मध्यमदक्षिणोत्तरानिति । यत्र तु नैवं विधं वचनं न च चोदनानुवृत्तिस्तत्र चत्वार एव भवन्ति । यथा पितृमेधे वारणान्परिधीन्परिधायेति । प्रत्यर्थेपीति चेत् । न, मध्यमश्रवणात् । यदुक्तम् मध्यमं परिधिमुपस्पर्शयति इति त्रयाणां च मध्यमो भवति । पैतृदार्येषु चतुःसंख्यास्तीति चेत् । न, सूत्रारम्भसामर्थ्यात्पूर्ववदिति । परिधानयोगनिमित्तत्वे च परिधिशब्दस्य पितृमेधादौ न धर्मप्राप्तिर्न ह्यत्र व-

र्मोपलक्षणार्थः परिधिशब्दो ऽग्निहोत्रादिशब्दवत् । संज्ञा तर्ह्यनर्थिका । न, संव्यवहारार्थत्वात् । परिधिपरिधानं शकलान्याधाय मत्येति । एकवृक्षीयानिति । उत्तरसूत्रादेवैकजातीयत्वं प्राप्ते एकवृक्षव्यक्त्यर्थमेवैकवृक्षीयग्रहणम् । अपरे तु वचनाभावान्नैवमिच्छन्ति । नह्येकत्वव्यवच्छिन्नवृक्षव्यक्तिपरं वचनमस्ति । अस्ति च जातिपरं वचनम् । ते वै पालाशाः स्युरिति । ननु पालाशादिग्रहणादेतत्सिद्धम् । सत्यमेवम् । अभाव उत्तरानियुक्तत्वादेकस्य द्वयोर्वाभावे उत्तरजातिर्मा भूदित्येकवृक्षीयग्रहणम् । बाहुमात्रान् बाहुप्रमाणान् । पालाशादीनां पूर्वस्य पूर्वस्यालाभे उत्तरोत्तरस्य ग्रहणम् । स चायं प्रतिनिधिः स्यात्पूतीकादिवत् । न चानर्थप्राप्तत्वात् । न ह्यर्थेन परिधिमात्रं प्राप्नोति येन जातिर्नियम्येत । तस्माद्विधानमेवेदम् । पूतिकेषु तु द्रव्यापचारे सामर्थ्यात्सदृशद्रव्यप्राप्तौ ईषत्सदृशपूतीकानियम उपपद्यते । प्रयोजनं पूर्वाभावेपि न प्रायश्चित्तमिति । खादिरौदुम्बरत्वात्ते चामी खादिरौदुम्बराः अभावमिधानाभावात्पालाशैः सह विकल्प्यन्ते । अपरे तु वैल्वैः सह विकल्पमिच्छन्ति । एवं ह्याम्नायते । ते वै पालाशाः स्युरिति प्रकृत्य यदि पालाशान्न विन्देदथो अपि वैकङ्कताः स्युर्यदि वैकङ्कतान्न विन्देदथो अपि काष्मर्यमयाः स्युर्यदि काष्मर्यमयान्न विन्देदथो अपि वैल्वास्युरथो खादिरा अथा उदुम्बरा इति । तेन काष्मर्यमयाभावे बिल्वखादिरौदुम्बरा विकल्प्यन्ते । आह च—

अभावे च पलाशस्य विकङ्कतविधिर्यतः ।
तेन विल्वविकल्पार्हौ खादिरौदुम्बराविति ॥

मध्यमदक्षिणोत्तरानिति । त्रित्वार्थं क्रमार्थं च गन्धर्व इत्येभिर्मन्त्रैः प्रतिमन्त्रं परिदधाति । त्वाशब्दस्याग्निपरत्वादवभृथ विपरिणाममिच्छन्ति । अग्निपरता च तत्संस्काराभिप्रवृत्ते । सूर्यस्त्वा पुरस्तात्पात्विति च व्यक्तमग्निपरत्वम् । अतोस्यापि तत्परतैवेति । तदेतन्नातीव सुविचार्यालोचितमिव । परिधिपरत्वात्त्वाशब्दस्य । तत्कथमेकवाक्यत्वात् परिधिर्ह्यत्राभिधीयते । गन्धर्वस्त्वा विश्वावसु परिदधात्विति यजमानस्य परिधिरसीति च स्पष्टैव परिधिपरता तस्मादवभृथेप्यनूह एव । यत्पुनरुक्तं सूर्यस्त्वा पुरस्तात्पात्विति अग्निप-

रत्नेति। यदि तस्याग्निपरतास्य किमायातम्। अतोयमनुपन्याम'। इन्द्रस्य बाहुरसि दक्षिण इत्यौपचारिकमेतत्। न तेन दाक्षिणादिक्संस्थितत्वाद्दक्षिण इति। कुतो, लिङ्गात्। एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिण इति। तेन पितृयज्ञे न विपरिणामः। मित्रावरुणौ त्वोत्तरतः परिधत्तामिति युक्तरूपोऽत्र विपरिणामः। उत्तरशब्दस्य समवेतवचनत्वात् ॥ २२१ ॥

प्रथमं परिधिं समिधोपस्पृश्य वीतिहोत्रमित्यादधाति ॥ २२२ ॥

प्रथमग्रहणं द्वितीयतृतीययुदासार्थम्। उपस्पर्शनं च तत्संस्कारः। द्वितीयानिर्देशात्। वाक्यशेषाच्च। तेनैतानग्ने समिन्धे इति। प्रयोजनमवभृथेऽपि क्रियते। अग्नौ तु समिदाधान दृष्टार्थम्। तत-श्चावभृथे न भवति ॥ १२२ ॥

अनुपस्पृश्य द्वितीयां समिदसीति ॥ २२३ ॥

द्वितीयाग्रहणादुपस्पर्शनमपि प्राप्तं निषिध्यते ॥ २२३ ॥

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्वचनत्वात् ॥ २२४ ॥

त्वाशब्दोऽग्निपरत्वादवभृथे विपरिणम्यते। पुरस्ताच्छब्दश्च दिक्परत्वात्पितृयज्ञे सूर्यस्त्वादक्षिणतः पात्विति। सम्प्रदाये त्वस्याविपरिणाममिच्छन्ति। तेषामयमभिप्रायः। पुरस्ताच्छब्दोऽत्र वचनो न दिग्वाचीति। तथैतत्परिधिपरिधानाद्यवेक्षणान्तमेव कर्मकार्यकत्वात्। एकं हि कार्यमग्निसंस्कारः। तत्कुतो, वाक्यशेषात्। यज्ञाङ्गे वषट्कारात् बिभेमीति प्रकृत्य तद्यमेवैतदग्नये गह्णाति। तथा गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति। एककर्मत्वे च नैमित्तिकमते भवति। अग्निसंस्कारत्वादग्निकार्याभावाच्चाप्सु परिधिषु च भवति। ननु च वषट्कारभूर्निर्निमित्तं परिधानमिति। तेनायमत्कारं जुह्वतो न प्रयत्नम् इति। नैतदेवम्। न हि कश्चिद्वषट्काराद्बिभेति न च तद्भय प-

रिधिभिरपनीयते । तेनाग्निसंस्कारविध्यर्थवादप्रायमेतत् । स चाह- ऐग्निसंस्कारो ह्यस्यासम्भवात् ॥ २२४ ॥

१आवृत्य वेदिं बर्हिस्तृणेतिरश्चीनि दधाति सवितुरिति ॥ २२५ ॥

अथस्तीर्णां वेदिमुपावर्त्तते स तृण आदाय तिरश्चीनि दधाति हि श्रूयते । तिरश्ची इत्युदगग्रे । अत एव प्रागग्रवदेस्तरणम् । आवृत्य वेदिमित्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः स्याद्वेद्यधिकरणार्थत्वात् । अन्यथा हि न ज्ञायते क्वैते तृणे निधीयेते इति ॥ २२५ ॥

अन्ये वायुक्तत्वात् ॥ २२६ ॥

अन्ये वा तृणे उपादेये न वेदिसम्बन्धिनी । कुत एतत् । अयुक्तत्वादन्येषां इतरेषां च बर्हिस्तृणानां वेदिस्तरणे विनियुक्तत्वात् । न च विनियुक्तं वचनमन्तरेणार्थान्तरं विनियोगमर्हति । वेदितृणेऽध्वर्युरादत्त इति यथा । नत्वत्रापि वचनमस्ति तस्या द्वे तृणे आदायेति । न । पञ्चम्यभावात् । पञ्चम्या ह्ययमर्थो लभ्यते । षष्ठ्यापि ह्ययमर्थो लभ्येत इति चेत् । सत्यं, लभ्यते विभक्तिव्यत्ययेन । अस्तु व्यत्यय इति चेत् । न, न्यायविरोधात् । षष्ठ्यर्थस्यासम्भव इति चेत् । सप्तम्यर्थे षष्ठी भविष्यति । एवं चावश्यं भाविनि व्यत्यये न न्यायविरुद्धो विनियुक्तस्य विनियोग आश्रितो भवति । तस्मादप्रकृते तृणे आदाय वेद्यां निदधातीति सूत्रार्थः ॥ २२६ ॥

तथाचोत्तरसूत्रम्—

---

१ अध्वर्युर्वेदिं प्रत्यावृत्य आहवनीयसमीपाद्वेदिं प्रत्यागत्य स्तृतस्यैव बर्हिषो द्वे तृणे आदाय मध्ये स्तृतस्य बर्हिष उपरि आहवनीयस्य पश्चात् प्रदेशे तिरश्ची उदगग्रे स्थापयति । आपस्तम्ब. ' समाधनन्तर्गर्भौ दर्भौ विधृती कुरुत ' इति, तथा ' अन्तर्वेद्युदगग्रे निधायेति ' च । काठके च ' पुरस्तात्प्रस्तरादन्तर्गर्भौ विधृती आदाय वेद्यामुदञ्चौ निधाय ' इति । अत एव तिरश्ची इति साम्प्रतमिति देवभाष्ये ।

## अन्यत्रापि तृणार्थं इति ॥ २२७ ॥

अतोऽन्यत्रापि तृणार्थेऽन्यान्येव तृणानि गृहीतव्यानि । यथो-पावीरसीति तृणमादायेति । कुत एतदयुक्तत्वादेव । युक्तग्रहणे ह्या-दरं करोति । अथस्तीर्णायै वेदेर्द्वे तृणे अध्वर्युरादत्त इति । ननु वि-शये लौकिकमित्यनेनैव सिद्धत्वादवाच्यमेतत् । नैतदेवम् । तद्धि सर्वार्थनिराकरणविषयम् । सर्वार्थतया ह्यग्निद्रव्ये प्राप्ते अग्निमुप-समाधाय स्तुवन्तीत्यत्र, उल्कुषीमेवादायोपपरेयादित्यत्र च, लौकि-कमुपादेय इत्येवमर्थम् । ननु चैवमग्नीनां सर्वार्थता विरोधः । न, निर्दिष्टकार्यसर्वार्थत्वाददोषः । इदं च सर्वार्थत्वात्कार्यविशेषद्रव्य-निराकरणविषयम् ॥ २२७ ॥

## यूपाञ्जने च सर्पिः ॥ २२८ ॥

अन्यदेव ग्राह्यम् । प्रकरणे ह्यसंयुक्तविधानात्स्थाल्यस्य सर्वा-र्थता तेन पश्चावपि सर्वार्थमेवैतदाज्यमिति यूपाञ्जनमाशङ्क्यते । य-द्येवं किमिति न भवति । प्राकृतकार्यविशेषसम्बन्धादित्यदोषः । का-र्यविशेषसम्बन्धाविशेषादस्य विशये लौकिकमित्यनेन तर्हि पुनरुक्त-म् । न, तद्वाक्यावगतकार्यविशेषसम्बन्धविषयम् । इदं तु प्रकरणा-वगतमित्यदोषः । अन्यत्रापि तृणार्थ इत्यस्यापरा व्याख्या । अन्ये चा-युक्तत्वादित्यनेनैवोपाकरणतृणादिष्वप्यन्यत्वासिद्धाववाच्यमेतदिति । अतोऽन्यथा व्याख्यायते । अन्यत्रापि तृणार्थे बर्हिस्तृणसदृशेभ्यो-ऽन्यानि तृणानि भवन्ति । तस्मादिदं च संस्कारैर्भवति । तेभ्योऽन्या-न्यसंस्कृतानीत्यर्थः । कुत एतत् । बर्हिः शब्दस्य जातिनिमित्तत्वात् । संस्कारनिमित्तताप्याशङ्क्यत एवेति चेत् । संस्कृतेषु बर्हिस्तृणेषु बर्हिः शब्दं प्रयुञ्जते याज्ञिकाः । नासंस्कृतेष्वपि शब्दप्रयोगात्, बर्हि-रादाय गावो गता इति । सादृश्यात्संप्रयोग इति चेत् । न, इतरेत-राश्रयप्रसङ्गात् । यदि संस्कारनिमित्तस्तदा सादृश्याज्जातौ प्रयोगः । तत्र कथं बर्हिः शब्देन जातिनिमित्तेनैवोद्दिश्य संस्कारविधानमुपप-द्यते । बर्हिरासादयति । बर्हिः प्रोक्षतीति च । जातिनिमित्तत्वे पुनरेष दोषो न भवति । तस्माज्जातिनिमित्त. । एव चेद् बर्हिषा यूपावट स्तृ-णातीत्येवमादौ संस्काराणामप्राप्ति. । अतइदमुक्तमन्यत्रापि तृणार्थे

इति । यूपाञ्जने च सर्पिरित्येतदपि केचिदेवं व्याचक्षते । तदुक्तमुक्तो ह्ययमर्थो घृतमाज्ये लिङ्गादिति । तस्माद्यथोक्तैव व्याख्या ॥ २२८ ॥

## पुरोडाशपयस्याधानासु चेच्छन् ॥ २२९ ॥

पुरोडाशमात्रामैन्द्रवायवे प्रास्यति । पयस्यां मैत्रावरुणा, आश्विने धाना इति । अत्रेच्छया लौकिकानि गृह्यन्ते । इच्छया प्राकरणिकानि । तुल्यशास्त्रत्वाद्विकल्पः । अपरे तु न्यायत एव विकल्पमिच्छन्ति । सवनीययागशेषस्य हविः शेषभक्ष इत्यनेन यजमानादाने विनियोगः । अत्र च पुरुषार्थत्वादभक्षणेऽप्यदोष. । ननु चैवं सतिप्राकृतं चतुर्द्धा करणं कस्मान्न भवति । नान्यत्र विनियोगशासनात् अत इदमुक्तं पुरोडाशपयस्याधानासु चेच्छन्निति१ ॥ २२९ ॥

## तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमिति ॥ २३० ॥

तयोर्विधृत्योरुपरि प्रस्तरं स्तृणात्यूर्णम्रदसमित्यनेन मन्त्रेण । अङ्गप्रधानार्थजुहूधारणार्थत्वात् । पितृयज्ञे देवपितृभ्य इति विपरिणस्यते मन्त्रश्चोदितार्थाभिधानात् ॥ २३० ॥

## आभिनिदधात्यात्वावसव इति ॥ २३१ ॥

---

१ पितृभूत्याचार्यास्त्वेवं व्याचक्षते ' च शब्दस्तुशब्दस्यार्थे, पुरोडाशपयस्याधानासु तु योऽप्राकृतान्युपादद्यात स इच्छयैवोपादद्यात न तु शास्त्रतः, अशास्त्रार्थे पयायम यत प्राकृतादन्यस्योपादानम, कुत ? पुरोडाशादिषु द्वितीयादर्शनात् पुरोडाशादीनामेवार्थं प्रतिपत्तिरूप. संस्कारो न ग्रहाणाम, प्रतिपत्तिश्च विद्यमानानां क्वचिदुपयुक्तानां भवति; न प्रतिपत्त्यर्थमुत्पाद्यन्ते, अपि वाक्यश्रवणान्येतानि, विद्यमानानां वाक्यवशा गृह्यन्ते नाक्यार्थमुत्पाद्यन्ते, तस्मात् द्विदेवत्यपात्रेषु प्रतिपादितशेष यजमानेन भक्षितव्यम, इति ।

अत्रार्थे जैमिनीयं ' अपनयस्त्वेकदेशस्य विद्यमानसंयोगात्' इति तार्तीयिकाष्टमपादस्थत्रयस्त्रिंशसूत्रमपि गमकम् ।

अभिनिधानं पाणिद्वयेन क्रियेत प्रसिद्धिलिङ्गाभ्यामित्युक्तमु-त्करामिन्यासे ॥ २३१ ॥

सव्यासून्ये जुहूं प्रतिगृह्य निदधाति घृताचीति ॥ २३२ ॥

अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहूं प्रतिगृह्णातीति श्रूयते । प्रतिग्रहणं च समर्पणपूर्वकं प्रत्युपसर्गप्रयोगसामर्थ्यात् । बर्हिषि च श्रुतौ समर्पणे विहिते ऽथास्मै बर्हिः प्रयच्छन्तीति । सूत्रे, तं बर्हिः प्रतिगृह्णेति । घृताच्यसीति मन्त्रश्चोदितार्थाभिधानाद्विकृतौ विपरिणम्यते । यथा गृहमेधीयादावनाज्यस्रुगासादने घृताच्यसीति पदद्वयं निवर्त्तते । घृतमंचितमस्यामिति घृताची । अपरे त्वाहुः । घृतमच्यतेनयेति घृताची । तदेतदयुक्तमिव । उपभृति ध्रुवायां चासम्भवात् । न हि ताभ्यां घृतमच्यते । चिन्तायाः प्रयोजनं करणपक्षे न विपरिणामः । प्रियेण धाम्नेत्यस्याप्यप्रयोगमिच्छन्ति केचित् । धाम शब्दस्याज्यविषयत्वात् । एतद्वै देवानां प्रियतमं धाम यदाज्यमिति हि श्रूयते । या त्वं घृताच्यसि जुहूश्च नाम्ना सेदं प्रियं सद आसीद प्रियेण धाम्नाज्येनोपेता सतीति वाक्यार्थः । तदेतदनुपपन्नम् । न हि धामशब्द आज्यविषयः । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति चेति ह्यभियुक्तोपदेशः । तस्मात्प्रियेण धाम्ना मिहिता सतीदं प्रियं सद आसीदेति । यत्तु धामशब्द आज्ये दृश्यते । स कथं चिदुपचारवृत्त्या प्रतिपत्तव्यः ॥ २३२ ॥

एवमितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवायां चात्रकृष्टेनुपूर्वम् ॥ २३३ ॥

एव मितरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्यासादयति । के इतरे इत्यत आह । उपभृतं ध्रुवाञ्च । अनुपूर्वमवकृष्टे मन्त्रान्तरविधानाद् । बर्हिषीति च प्रस्तरनिरासार्थम् । एवशब्दः प्रतिग्रहणविषयः । समर्पणपूर्वकं यथा स्यादिति । ननितरे इत्युक्त्वानुपभृत ध्रुवां चेत्यवाच्यम् । वाच्यं वा स्रुगासादनप्रतिपत्त्यर्थ-

स्यात् इतरथा ह्याधेयस्यासादनं प्रतीयेत । न गुणत्वाद्यधिकरणस्य । अथ पुनरुपभृद्ध्रुवाग्रहणे क्रियमाणे स्रुगा सादनमेतदिति ज्ञापितं भवति । तत्कथमिति चेद्वचनात् । घृताच्यसि जुहूर्नाम्नेति जुहूं, उपभृन्नाम्नेत्युपभृत, ध्रुवानाम्नेति च ध्रुवाम् । मन्त्रलिङ्गाच्च । जुहूर्नाम्नेत्येवमादि । प्रयोजनमाज्याभावेऽप्यासादनमिति । अपरे तूपभृद्ध्रुवाग्रहणस्य फलं व्यायर्णयन्ति । पृषदाज्यपात्रस्यासादनं व्युदासार्थम् । तत्पुनराचार्येणाभिहितमेवोपभृतासादनमित्युक्त्वा प्रियेण धाम्नेति वा विशेषोपदेशादिति । पृषदाज्यपात्रस्य वाचकशब्दव्युदासार्थमुपभृद्ध्रुवाग्रहणम् । तत्कथमनुपभृद्विकारत्वादुपभृतो ह्युपधारणां कार्यम् । न च तत्पृषदाज्यपात्रेण क्रियते । अत एवार्थगृहीतत्वात्तस्य सादनादि न भवति ॥ २३३ ॥

१पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति

यस्ते प्राणः पशुषु प्रविष्टो देवानां

विष्ठामनु यो वितस्थे आत्मन्वान्

सोम घृतवान् हि भूत्वाग्निं

गच्छ स्वर्यजमानाय

विन्देति ॥ २३४ ॥

उपस्तीर्ण इति पूर्वतरं द्रष्टव्यम् । तद्भूतोपदेशादुद्वासयोपस्तरणमशक्यं कर्तुम् । अभिघारणं हविर्मात्रस्य तत्सम्बन्धेनोपदेशात् । यद्वै हविरभिघारितं तन्मेध्यमिति । सूत्रकारस्तु पुरोडाशौ लेक्ष्यति ॥ २३४ ॥

---

१ अयमत्र क्रमः प्रथमं वेदेन पुरोडाशविभस्मीकरणम्, ततः पात्र्याः स्थापनम्. पुरोडाशयोरभिघारः, पात्र्याः स्थानद्वये उपस्तारः, अथवा प्रथमं पात्र्यामुपस्तारस्ततः पुरोडाशयोरभिघारः, उदगुद्वासनम्, वेदेन पुनर्विरजस्करणम्, स्थापनम्, पात्र्या उपरि प्राणदानमिति देवभाष्ये ।

यथा देवतमन्यत् ॥ २३५ ॥

इति उत्कार्यम् ॥ २३५ ॥

प्रत्यनक्ति कपालानि यानि घर्मे कपाला-
न्युपचिन्वन्ति वेधसः पूष्णस्तान्यपि-
व्रतऽइन्द्रवायू विमुञ्चतामिति ॥ २३६ ॥

कपालोद्देशेन विधानसामर्थ्यात्प्रतिकपालमञ्जनम् । युगपच्चाशक्यत्वात् । एवं सति यानि कपालानीति बहुवचनमञ्जनक्रियाव्यवच्छिन्नसमुदायापेक्षम् । पात्रप्रोक्षणमन्त्रवत्पूजार्थं वा ॥ २३६ ॥

तूष्णीं वा ॥ २३७ ॥

कपालाञ्जनम् ॥ २३७ ॥

संख्ययोद्वासयति ॥ २३८ ॥

संख्याशब्देन करणभूतेनोद्वासयतीत्येतदुक्तं भवति । तत्रैतद्विचार्यते । किमेकमेकमिति प्रयोगः सर्वत्र । उत एकं द्वे त्रीणीति । उत प्रथमं द्वितीयं तृतीयमिति । एकमुद्वासयामीति प्रतिकपालं प्रयोगः । एकमिति हि संख्याशब्दः च स प्रायस्पादविरोधाच्च सर्वत्र प्रयुज्यत इति । तदेतदयुक्तम् । न ह्येकशब्दः सर्वत्र प्रयुज्यमानः समर्थो भवति । एवं चेदेकं द्वे त्रीणीति प्रयोगस्तथा सति यथावत्संख्यासंख्येयसम्बन्धात्सामञ्जस्योपपत्तिः । एतदपि नोपपद्यते । न हि द्वितीये कपाले द्वित्वविशिष्टमुद्वासनं तथा तृतीये चतुर्थे च । अतः पूरणप्रत्ययान्ता संख्या परिगृह्यते । प्रथमं द्वितीयं तृतीयमित्येवमादि । एवं संख्ययोद्वासनं कृतं भवति । यथावत्संख्यासंख्येयसम्बन्धश्च । तथा च कपालनाशसंवित्तेः प्रायश्चित्तवचनमुपपद्यते । ननु च प्रथमशब्दस्य द्वितीयापेक्षत्वाद्धि कृतावेककपाले ऽप्रयोगः । उच्यते । न विकृतिवशेन प्रकृतौ पदार्थावधारणमुपपद्यते । प्रकृतिवशेन हि विकृतावधारणं युक्तरूपमतो यत्किञ्चिदेतदिति ॥ २३८ ॥

प्रियेण धाम्नेति हवींऽपि वेद्यां कृत्वा स्रुवा अस-

दन्निति सर्वाण्यालभते ॥ २३९ ॥

बहुवचनं स्वाल्पपेक्षया । सर्वशब्दश्च जौहवाद्यपेक्षः । मुख्यक्रमेण वासादनालम्भने । क्रमान्तराभावात् । यज्ञपतिशब्दश्च बहुयजमानके विपरिणम्यते ॥ २३९ ॥

पाहि मामित्यात्मानम् ॥ २४० ॥

आलभत इति वर्त्तते । स चायमात्मसंस्कारः करिष्यमाणप्रयोजनः ।[१]ततश्चाध्वमध्ये विरोधात्प्रतिप्रस्थता सवनीयाद्यासादनालम्भने कृते ऽध्वर्युरग्निहोमाभिप्रवृत्त एवात्मानं संस्पृशतीति ॥ २४० ॥

अत्र वा व्रतोपायनम् ॥ २४१ ॥

तुल्यशास्त्रत्वात् ॥ २४१ ॥

इति कात्यायनसूत्रविवरणे कर्कोपाध्यायकृतौ
द्वितीयोऽध्यायः ।

---

१ ततः पशौ सुत्यायां च पुनः पुनर्हविरासादने कृते न भवति; प्रथमत एव सकृत् कृतेनात्मनः कर्मसमाप्तिपर्यन्तं संस्कृतत्वादिति देवभाष्ये ।

# अथ तृतीयोऽध्यायः ।

[1] होतृषदनं कृत्वा परेण वेदिं श्रोणिं वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्याह ॥ १ ॥

होता यस्मिन्सीदति तद्धोतृषदनम् । समाचारादवेधविधं स्यात् । तच्च कुशोत्तरीयम् । उपरिष्टात्तृणनिरसनोपदेशसामर्थ्यात् । कृत्वेति । करोतिरयमभूतप्रादुर्भाववचनः । शब्दसामर्थ्यात् । दृश्यते च कर्ममध्येऽप्युत्पत्तिर्यूपादीनाम् । स्थापनार्थो वाऽपरेण वेदिमिति प्रदेशनिर्देशात् । किं च कृते चोदितत्वात् । प्रक्लृप्तद्रव्यस्य च कर्मण्यभिवृत्तिसामर्थ्यात् । क्रियासातत्याविच्छेदाच्च । यूपादीनां त्वाहत्यैवोत्पत्तिश्चोद्यते । तस्माद्वैषम्यमनेन । यत्तु करोतिरभूतप्रादुर्भाव इति । तदनैकान्तिकम् । अन्यत्रापि दृष्टत्वात् । पादौ करोतीति संस्कारे । गोमयानि करोतीति संहारे । घटमत्र कुर्विति स्थापने । तस्मात्स्थापनार्थ एव । अपरेण वेदिमिति लिङ्गादध्यवसानम् । एवं वां लोक इत्युदङ्ङेजतीति प्रकृत्याह । अन्तरा वा एतदाहवनीयं च गार्हपत्यं चास्त इति । श्रोणिं वोत्तरेणेति तु साक्षात् । यद्येवं श्रोणिमुत्तरेपीत्यवधारणा । ननु लिङ्गविरोधः । नोद्गमनविधिशेषत्वात् । एष वां लोक इत्युदङ्ङेजतीत्यभिधाय संस्तौति । अन्तरा वा एतदाहवनीयं च गार्हपत्यं चास्त इति । स चोपचारवृत्त्या अन्तराशब्दोऽन्तरे वान्तरे-

---

१ अध्वर्युर्वेदिमपरेण वेदेः पश्चाद्गार्हपत्याहवनीययोरन्तराले होतुरुपवेशनार्थं वारणादिवृक्षज शुष्ककुशैरास्तीर्णमासनं स्थापयित्वा, तत 'एहि! होतर्' इति होतारमामन्त्र्य तत्रागते सति इध्मादेकां समिधं हस्ते गृहीत्वाग्नये समिध्यमानायानुब्रूहीत्येवं होतारं प्रति ब्रवीतीति सूत्रार्थः ।

ति । इध्मात्समिधं गृहीत्वा अग्नये समिध्यमानायेत्यमुं मन्त्रमाह । स चायमग्निशब्दो जात्यर्थपक्षः । जातेः पदार्थत्वात् । ततश्च वरुणप्रघासेष्वनूहः । दृश्यते च आसाद्य हवींष्यग्निं मन्थतीति प्रकृत्याध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहीत्यूहाभावः । तथा प्रतिपराणीयोदीति प्रतिप्रस्थाता सम्मृजन्त्यग्नीः सम्मृष्टेग्नावितीति । तथाचाध्वर्युरेवाह प्रजन्मस्यास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढीत्येकवचनान्तोग्निशब्दः । एवं च सति आज्येपि तुल्यत्वादविपर्यासाम एव आज्येनोद्देहीत्येवमादौ । ननु चाग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूहीति द्विवचनमपि दृश्यते । तच्च जातिपरे नोपपद्यत इति । नैष दोषः । वचनं हि तद्व्यक्तिपरम् । व्यक्तंर्हि जातिशब्दमन्तरेण प्रत्यायनानुपपत्तिरिति ॥ १ ॥

होतरिति चैके ॥ २ ॥

होतरित्येवं चैक आहु । तथैनद्धोतृपदमनुब्रूहीत्यस्मात्प्राग्वक्तव्यम् । तदुहैक आहुरग्नये समिध्यमानाय होतरनुब्रूहीति वचनात् ॥ २ ॥

प्रथमस्थानेन प्राक् स्विष्टकृतः[1] ॥ ३ ॥

स्थानशब्दः सवनाभिप्रायः ॥ ३ ॥

मध्यमेनेडायाः ॥ ४ ॥

स्विष्टकृत्प्रभृतीडान्तं मध्यमेन सवनेन[2] ॥ ४ ॥

शेषमुत्तमेन[3] ॥ ५ ॥

---

१ सर्वे मन्त्राः स्विष्टकृतः प्राक् स्विष्टकृत प्रैषा अपि उपांश्वपेक्षया किञ्चिदुच्चैर्भवता स्वरेण प्रयोक्तव्या इति ।

२ प्रयोज्यमित्यध्याहारः ।

३ इडात आरभ्य कर्मापवर्गान्तं सर्वे मन्त्रा उत्तमेन सवनेन प्रयोज्याः । अत ' उपांशुप्रयोगः श्रुतेः ' इत्यस्य दर्शपूर्णमासयोरप्रवृत्तिः । स्वरान्तरविधानात् ।

स चायं सवनधर्म उक्तैर्धर्मकाणाम् । न यजुषाम् । यस्य धूर्धर्मस्तस्य तदनुगतो विशेषो वक्तुं युज्यत इति ॥ ५ ॥

सन्तत्वन्निव मेनुब्रूहीत्याह यजमानः ॥ ६ ॥

स चायं होतृसम्बोधनार्थत्वात् प्रोषितेन न प्रयोक्तव्य । इहैव होतृसम्बोधनमन्य करोति । तदुक्तं गुणेषु प्रतिनिधिः परार्थत्वादिति । सत्रेषु चैक एवानुवदति । न ह्यत्रात्माभिवादिपदसम्बन्धेष्वात्मन किं चित्प्रार्थ्यते यदनुच्चारणे यजमानानां संस्कारपरिलोप आशङ्क्यते । तस्मादेक एवाहेति ॥ ६ ॥

अङ्गुष्ठाभ्यां चाववाधते पाद्याभ्यां वेदमह-

ममुमववाध इति द्वेष्यम् ॥ ७ ॥

अङ्गुष्ठाभ्यां चाववाधते । अववाधनमाक्रमणम् । च शब्दाद्यजमानः । इदमहममुमववाध इत्यनेन मन्त्रेण द्वेष्यम् । एवं च अमुमित्यस्यस्थाने द्वेष्यस्य नामादेशः । स च क्रत्वर्थो न पुरुषार्थः भ्रातृव्यमित्युपदेशसामर्थ्यात् । यदि हि पुरुषार्थत्वं स्यात्र द्वेष्यस्याभावे भ्रातृव्याववाधनमुपदिश्येत । उपदिश्यते च । तस्मात्क्रतूपकारार्थं द्वेष्यस्याववाधनमिति निरवद्यम् । पाद्याभ्यां चेति इयमवधारणा । माध्यन्दिनीयायां ह्यविशेषपाठः । तस्मादेतास्वनूच्यमानासु य द्विष्यात्तमङ्गुष्ठाभ्यामववाधेतेति । काण्वीयायां तु विशेषपाठः । पाद्याभ्यामङ्गुष्ठाभ्यामिति । दृश्यते च सामान्यस्य विशेषविषयता । अतो न विकल्पः । पाद्याभ्यामेवेत्यवधार्यत इति । इदमहमिति च सत्यप्यात्माभिवादिपदप्रयोगे पुरुषार्थरूपताभावात्तत्रेष्वविपरिणामः । अतएवैकः कुर्यादिति ॥ ७ ॥

अभावे द्विषन्तं भ्रातृव्यमिति वा ॥ ८ ॥

द्वेष्यस्याभावे द्विषन्तमववाधे भ्रातृव्यमिति वा प्रयोगः । अत्र च क्रत्वर्थत्वप्रयोजनं अमुष्येति द्विपच्छब्देभिचरन्नन्यत्रापीत्यभिधानादभिचरत्यामादिशति तत उदकोपस्पर्शनं भवति । ननु च द्वेष्यद्विषतोर्नामादेशोऽवश्यम्भावी तत्र को विशेषः । उच्यत बुद्धिरस्य इति ब्रूमः । यदाभिचारबुद्ध्या नामादेशस्तदोदकस्पर्शन-

म । न क्रत्वर्थरूपतायामिति । अन्यत्वनेनैवाभिचारमिच्छन्ति । न ह्यत्र वचनमस्ति । यथा यज्ञाभिमर्शनजपे द्विषतो वध इति । यदि नाभिचरेदित्युक्त्वा यद्यु अभिचरेदमुष्य वध इति ब्रूयादिति । एवं स्फ्योदकप्रहरणेऽपि वचनम् । तथा 'स्तम्बयजुर्हरणे यद्यु अभिचरेदमुमतो मा मौगिति ब्रूयादिति । वचनपूर्वकं च तत्सूत्रं अमुष्येति द्विषच्छब्देमिचरन्नन्यत्रापीति । न चेह वचनमतोऽभिचाराभावात्कुत उदकोत्सर्पणम् ॥ ८ ॥

## यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ॥ ९ ॥

प्रयोगार्थमिदमारभ्यते । यावत्यः सामिधेन्योऽस्मिन्कर्मणीति वेद विजानीयादिदमहं तावतिथेन वज्रेणेति१ । ननु चात्र पञ्चदशैव सामिधेन्यः । तत्र यावत्सामिधेनि वेदेत्यवाच्यम् । सत्यमेवमेव हि ता अभिविधीयन्ते । अथ चैकविंशतिसंख्याप्रवृत्तिज्ञापनार्थम् । एकविंशतिसामिधेनीरपि दर्शपूर्णमासयोरनुब्रूयादिति । इदमहममुमवबाध इत्यत्राभिहित एव इदमहमिति शब्दः । पुनरिहोच्चारणं तावतिथेन वज्रेणेत्यस्यावसरार्थम् । तावतिथ इति च पूरणप्रत्ययान्तः । तावतां पूरणस्तावतिथ इति । पञ्चदशानां पूरणः पञ्चदश इति । यद्येवं विध्यायां सामिधेनीविरधे तीयप्रत्ययान्तत्वात्तृशब्दस्य तृतीयेनेति प्रयोगः । उपसत्सु च नान्तादसंख्यादेर्मडिति मट् प्रत्ययान्तत्वान्नव शब्दस्य नवमेनेति प्रयोगः२ ॥ ९ ॥

## प्रतिप्रणवमाधानम् ॥ १० ॥

सामिधेन्यनुवचनं कुर्वतो होतुः प्रणवे प्रणव इध्माधानं कुर्यात् । स चायं कालार्थः संयोगः उभयोरग्न्यर्थत्वात् । इध्मो ह्यग्नीन्धनार्थः, सामिधेन्योपीध्यमानानुवादिन्यः । न च वचनमन्तरेण गुणयोर्गुणगुणितेष्यते । यत्तु सामिधेनीयाज्या इध्मपयाहुतिरिति स्तु-

---

१ द्विषन्तमववाध इति शेषः ।

२ तथा च 'इदमहं तृतीयेन, इदमहं नवमेन, इदमहं चतुर्विंशेन, इदमहं एकविंशेन' इत्यादि विध्यायामुपसत्स्विष्टकापशौ प्राजापत्यपशौ च यथासंख्येन प्रयोगः ।

तिमात्रं तत् कालार्थेप्युपपद्यते । प्रयोजनं मानुपादपचारादनुक्त्यां सामिधेन्यां प्रक्षिप्ते इध्मकाष्ठे सामिधेन्यनूच्यत एवेति । उप घेतदिन्धनाभावे ऽवभृथादौ निवर्त्तते ॥ १० ॥

सामिद्ध इति प्रागतः सर्वमिध्ममेकवर्जमनुयाजार्थेत् ॥ ११ ॥

समिद्ध इत्यतः प्रतीकात् प्राक् यः प्रणवस्तत्र सर्वमिध्ममस्यां दधाति । एकमिध्मकाष्ठं वर्जयित्वा, यद्यनुयाजाः सन्ति । तच्चैतदिह चैकल्पिकत्वादनुयाजानां विकृतिविषयम् । समिद्ध इत्यतः शब्दो पादागसामर्थ्यात् । केचित्सामिधेनी विवृद्धावागन्तूनामन्त्यायां सर्वेध्मप्रक्षेपमिच्छन्ति । तत्पुनरनुपपन्नम् । प्रकृतौ हि समिध्यमानो अध्वर इत्यस्याः प्रणवे सर्वेध्मप्रक्षेपः कृतो विकृतावपि चोदकानुग्रहात्तत्रैव कार्यः । किं च यत्र बह्व्यो धाय्या भवन्ति तत्रानुपपत्तिः काष्ठानामष्टादशेध्ममित्युक्तपरिमाणत्वात् । अथ विवृद्धिरुपगम्यते । सा हि निष्प्रमाणिका स्यात् । न हि सामिधेनीनामिध्मस्य च परस्परतोगाङ्गिभावः । तस्मात्समिद्ध इति प्रागत इत्यत्र श्रुतिरनुकृता । एवं हि श्रयते समिद्धो अग्न आहुतेत्यत प्राचीनः सर्वमिध्ममभ्यादधाति ॥ ११ ॥

अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघारयाह्याग्निमग्नीत्सन्मृड्ढीति ॥१२॥

अनुवचनान्तः सामिधेन्यन्त उच्यते । त्रिरेव प्रथमा त्रिरुत्तमामन्वाहेत्यनुब्रूयादिति हि प्रकृत्य आह । एतदनुवचनमिति । अपरे तु कल्पकारान्तराभिप्रायात्स्रुयजा च यजेत्येतदनुवचनं मन्यन्ते । तदभिप्रायः । अग्ने महाँ असि ब्राह्मण भारतेत्यादीध्यमानाप्रभृत्यादितया सामिधेन्यनुवचनैकदेशभूतमिति । तदन्ते वेदेनाहवनीयस्य त्रिरुपवाजनं कृत्वा स्रुवेण पूर्वमाघारमाघारयति । तदेतदुपवाजनं प्रमिदितादप्युद्दष्टार्थम् । उचितं ह्यग्नौ काष्ठान्याधायेन्धनायोपवाजनमिति । धर्ममात्रं वा द्रव्यविशेषनियमाद्वेदेनेति । संख्यानियमाच त्रिरिति । न च वेदद्रव्येण त्रिरपविदिष्ट उपवाजने

दृष्टार्थाभिनिर्वृत्तिः । तस्मादुधर्ममाश्रम । प्रयोजनमयादावपि क्रियते । स्रुचग्रहणं जुह्वा निवृत्त्यर्थम् । होमे हि जुहूः परिभाषितेति। आघारमिति संज्ञानिर्देशः । आघारयेति च ऋज्वादिगुण परिग्रहार्थम् । अत्र च प्रजापतिर्देवता । निरुक्तत्वात्स्रुवप्रकारप्रस्थानाच्च । पूर्वो देवता सामान्यादिति । स्वाहाकारः स्वात्परिभाषितत्वात् स्वाहाकारः सर्वत्रेति । न वा प्रतिषिद्धत्वात् । न स्वाहेति वचनात् । अनिरुक्तं हि मन इति । परिभाषान्यविषया । अग्निमग्नीत्सम्मृड्ढीत्यय मन्त्रश्चोदितार्थाभिधायी विकृतौ विपरिणम्यते । पदार्थत्वाच्च पूर्वाघारो यावदुक्तं निवर्त्तते । उपवाजनं तु द्रव्यसंस्कारात्प्रवर्त्तत एव ॥ १२ ॥

इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने वाजजि-
दिति त्रिस्त्रिः परिक्रामन् ॥ १३ ॥

इध्मसंनहनैः करणभूतैरनुपरिध्यग्निं त्रिस्त्रिः परिक्रम्य संमार्ष्ट्यग्ने वाजजिदित्यनेन मन्त्रेण। स चाय होमसाधनभूताहवनीयद्रव्यसंस्कारत्वात्सम्मार्गो यावदुक्तेपि प्रवर्त्तते । मन्त्रस्तु चोदितार्थाभिधायित्वादवभृथेष्टयां विपरिणम्यते । अत्र केचिदग्निद्रव्याभिधायकत्वात्सकृन्मन्त्रवचनमिच्छन्ति । देशभेदाच्चेत्यपरे । परिध्युपलक्षिता हि भिन्ना देशाः । तथा च लिङ्गमथोपरिष्टात्तूष्णीं त्रिरिति । प्रतिदिशं हि मन्त्रप्राप्तौ तूष्णीमिति वचनमर्थवद्भवति । प्रतिदिशं तु सकृत्सकृन्मन्त्रवचनमिष्यते । तदुक्तमेकद्रव्य कर्मावृत्ताविति ॥ १३ ॥

तूष्णीमुपरि ॥ १४ ॥

तमुल्लवचनात्तुपृसिसामर्थ्यात्परिक्रम्येत्यत्रापि भवति । अनुपरिध्युपदेशसामर्थ्याद्ययोपहितामिति केचित् । नेत्यपरे । न ह्ययं परिधिसहकारो येनाभिप्रवृत्त्या तत्क्रम आश्रीयते । अग्निसंस्कारस्त्वयम् । तेन प्रदक्षिणोपचारोदकसंस्थता सम्पादनाय प्रथम दक्षिण ततः सम्मार्गः ॥ १४ ॥

अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः

स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ १५ ॥

आहवनीयस्यापरतो नमो देवेभ्य इत्यनेन मन्त्रेणाञ्जलिं करोति। नमस्कारार्थत्वाच्च पुटाञ्जलिं करोति। स्वधा पितृभ्य इत्यनेन दक्षिणत उत्तानमञ्जलिं करोति। तदेतदञ्जलिकरणमुत्तरार्थम्। स स्रुचोत्तरमाघारमाघारयिष्यन्पूर्वेण स्रुचावञ्जलिं निदधाति इति वचनात्। प्रयोजनं तदभावे ऽभावः ॥ १५ ॥

अप उपस्पृश्य सुयमेम इति जुह्वुपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणातिक्रामत्यङ्घ्रिणा विष्णविति ॥ १६ ॥

अपामुपस्पर्शनं पित्र्यं मन्त्रमुक्त्वेति परिभाषितत्वाद्वाच्यमतः प्राचीनावीत्यादि व्युदासार्थम्। सुयमेम इत्यनेन मन्त्रेण जुहूपभृतावादत्ते। किं तूत्तरां जुहूं कृत्वा पूर्वतरम्। नन्वेतदवाच्यं पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकाल इत्युक्तत्वात्। उच्यते। तत्सर्वविषयम्। एतदुत्तराघारार्थमित्यदोषः। सर्वार्थतयैवाप्राप्ते प्राप्तेर्वाच्यतेत्येवं चेत्। मन्त्रपदादानस्योत्तराघारार्थतां ज्ञापयति। इतरथा हि जुहूपभृतोरादानोद्देशेन विधानसामर्थ्यात्तदादानमात्रे प्रवृत्तिराशङ्क्येत। अथ पुनरुत्तरां जुहूं कृत्वेति सूत्रारम्भे सति कर्मार्थस्रुगादानादन्यदेतदिति ज्ञापितं भवति। ननु च पारिभाषिकस्य सर्वार्थता कथमवगम्यते। उच्यते। वाक्यस्याविशेषविषयत्वात्। इत्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यादिति। इदं तूत्तराघारायान्तरप्रकरणात्तदर्थमिति निरवद्यम्। दक्षिणातिक्रामत्यङ्घ्रिणा विष्णवित्यनेन मन्त्रेण। यजतिस्थानं प्रतिगमने मन्त्रः। अयमपि चोत्तराघारार्थगमनविषयः प्रयाजान्तरप्रकरणादेव ॥ १६ ॥

[1]परिधीनपरेण सञ्चरो ह्योप्यतः ॥ १७ ॥

---

१ परिधीनां पश्चात्स्रुचां पूर्वेण होम करिष्यतो ऽध्वर्योर्गमनागमनमार्गः सञ्चरः।

इति । अपरेणेति तृतीया । न हि एतत् प्रत्ययोऽत्र एतवन्यतरस्यामदूरे पञ्चम्या इति । सर्वार्थं होष्यत इति सम्बन्धात् ॥ १७ ॥

## सव्येनेतो दक्षिणेनामुतो ॥ १८ ॥

गच्छतीत्यध्याहारः । इतो गच्छन्यजति स्थानं सव्येन गच्छति अमुत आगच्छन् दक्षिणेनेति । न च सव्यदक्षिणयोरितरेतरनिरपेक्षयोर्गमनसामर्थ्यमस्ति । तेन प्रवृत्त्युपलक्षणार्थं वचनम् । एतदपि सर्वार्थमेवाविशेषविधानसामर्थ्यात् । अथास्मेतिक्रमणस्यैवेति हि प्रकृत्य य आश्रावयिष्यन्सव्येनातिक्रामति दक्षिणेनाश्राव्येति । ननु चैवं सति आश्रावणविशिष्टस्यातिक्रमणे सव्येतरपादनियमो भवति न सर्वत्र । ततश्चोत्तराघारे न भवति । अत्रोच्यते । अतिक्रमणं हि प्रकृत्य सव्येतरपादनियमाभिधानम् । तस्मिंश्चाश्रावणेन विशेष्यमाणे विशिष्टानुवादलक्षणो वाक्यभेदः प्रसज्यते ऽतः सर्वार्थतेत्युक्तम् । अत एव सूत्र कारेणेहोपनिबद्धम् । आह च । आश्रावणविशिष्टे तु नियमो यद्ययं भवेत् । विशिष्टस्यानुवादत्वाद्वाक्यभेदः प्रसज्यते । तस्मात्सर्वार्थतैव ॥ १८ ॥

## वसुमतीमित्यवस्थायेत इन्द्र इति जुहोत्युत्तराघारम् ॥ १९ ॥

अवस्थानवचनमुपवेशननिषेधार्थम् । जुहोतीत्यादूध्युपवेशनं प्राप्नोति । अतो वचनात्तिष्ठति क्रियोच्यते । तिष्ठन्समाघारयति यं वा च आघारयतीति श्रूयते । अत एव च दर्विहोमेष्वपि तिष्ठतैवोत्तराघारआघार्यते । मन्त्रवर्णाच्चेन्द्रो देवता ततश्च दर्विहोमेष्विन्द्राय स्वाहेति होमः । दक्षिणतश्च होमोऽस्य दक्षिणतस्तिष्ठन्नाघारयतीति वचनात् । पूर्वाघारे तु जुहोति स्थानादेवोत्तरत आघारणं सिद्धम् । आघारौ प्रकृत्य स यदुभयत आघारयतीति हि श्रूयते । स चायं पदार्थत्वाघावत्तुक्ते निवर्त्तते । प्रयाजार्थद्रव्येण वचनसामर्थ्यात्क्रियते । चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजतीति । प्रयाजार्थता चास्य वाचनिकी । स यच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यो हि तद्गृह्णातीति । एवं

च प्रयाजार्थद्रव्याभावे ऽवश्यकर्त्तव्यत्वादाघारस्य स्थाल्यादेवैक-
गृहीतेन निर्वर्त्यते । यथा दार्विहोमेषु ॥ १९ ॥

आघार्यासंस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवां समनक्ति संज्योतिषेति ॥ २० ॥

जुहोत्युत्तराघारमिति क्रियानिर्देशादवाच्यमाघार्येति । उच्य-
ते । ऋज्वाघार्योयमारम्भः । श्रूयते हि जुमाघारयति तथा सन्तत-
दीर्घं प्राञ्चमिति । असंस्पर्शयन्नसलागयन् स्रुचावेत्य यजति स्था-
नात् जुह्वा ध्रुवां समनक्ति संज्योतिषेत्यनेन मन्त्रेण । गच्छतामि-
त्यध्याहारः । यद्यपि जुह्वा श्रूयते तथाप्यञ्जनक्रियोपदेशसामर्थ्या-
ज्जौहवपरतैव न्याय्या । ननु चैवं सति जौहवेनानक्तीति सूत्रमा-
रब्धव्यम् । नेत्याह । तथा च सति स्रुवस्य करणता स्यात् । अथ
पुनर्जुह्वेत्युक्ते तस्यापि करणतेति साधूक्तम् । स चायं ध्रुवासंस्का-
रोऽप्युत्तराघारे सति प्रवर्त्तते । एवं ह्याह । शिरो वै यज्ञस्योत्तर
आघार आत्मा वै ध्रुवा तदात्मन्येवैतद्यज्ञस्य शिरः प्रति द-
धातीति ॥ २० ॥

निधायेध्मसन्नहनान्यादाय ओश्रावयेत्याह ॥ २१ ॥

निधाय स्रुचाविध्मसन्नहनानि गृहीत्वोश्रावयेत्येनमाह ।
स्रुङ्निधानं च वाचनिकम् । इतरथा हि युक्तयोराप्रयोजनामिनिर्वृत्त-
र्विमोकः स्यात् । एवं च सति स्विष्टकृदन्तेपि निधानोपदेश उपपद्य-
ते । निधाय सञ्चरमग्नेरुप प्रावित्रमवद्यतीति ॥ २१ ॥

अस्तु श्रौषडित्यग्नीत् ॥ २२ ॥

अस्तु श्रौषडित्येवं पुनरग्नीदाह ॥ २२ ॥

वेदिबर्हिरिध्मशकलमपच्छिद्यैके ॥ २३ ॥

आग्नायणं कुर्वन्ति । एवं ह्यत्र वचनम् । तद्वैके वेदं स्तीर्णायै
बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्ती-
ति । एवं च इध्मशकलस्यापच्छेदो बर्हिषश्चापच्छिमात्रमेव ॥२३॥

## एवं सर्वत्राश्रुतप्रत्याश्रुतेषु ॥ २४ ॥

उपग्रहद्रव्याणीति केचित् । तदयुक्तम् । न ह्याश्रावणमात्रे विधानमेषामिति । होतृवरणे तु विधानमेषाम् । इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्यथ होतारं प्रवृणा इति । तस्मादेवं सर्वत्राश्रावणे ध्वर्युः प्रत्याश्रावणे चाग्नीदिति । तथा च लिङ्गमाश्रावयत्यध्वर्युमग्नीधं यज्ञ उपावर्त्तते सोऽग्नीन्नापव्याहरेदाप्रत्याश्रावणात् । प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्युं यज्ञ उपावर्त्तत इति अध्वर्य्वग्नीधोराश्रुतप्रत्याश्रुते दर्शयति ॥ २४ ॥

## अथ प्रवृणीतेऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवत् ॥ २५ ॥

अथेत्यवाच्यं पाठादेव तदर्थप्राप्तेः । तेन वरणे यजमानस्य प्राप्तत्वादध्वर्य्वर्थोयमथ शब्द इति केचित् । तदेतदनुपपन्नम् । आमन्त्र्यर्थे हि वरणे यजमानः परिभाषितो नादृष्टसंस्कारार्थे । न चैतदामन्त्र्यर्थम् । प्रवृतत्वाद्धोतुः । अतो यजमानस्याप्रवृत्तिरेव । अथ शब्दप्रयोगस्तर्हि किमर्थः । इध्मसन्नहनादि गृहीत्वाश्रवणं कृतम् । तथ तावन्मात्र एव मामूत् । अत उपग्रहद्रव्यस्योत्तरत्रानुकर्षणार्थोऽथ शब्दः । अथ प्रवृणीते गृहीतेनैवेध्मसन्नहनादिना प्रवृणीते इत्येतदुक्तं भवति । तदर्थमेव ह्युपग्रहद्रव्यं श्रूयते । इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याथ होतारं प्रवृणा इति । अथ वा श्रुतप्रत्याश्रुतयोः वरणार्थत्वज्ञापनायाथ शब्दः । स वै प्रवरायाश्रावयतीति हि श्रूयते । अग्निर्देवो दैव्य इति देवताग्नेरभिधानं स्यात्प्रकृतत्वात् । न वा सविशेषणत्वात् । होतृपदोपसंहितो ह्ययमग्निशब्दः । तेन स्विष्टकृदग्न्यभिधायकः स्यात् । दृश्यते हि तत्र होतृपदोपसंग्रहनमावाहने प्रयाजाज्यभागप्रधानदेवतासङ्कीर्त्तनोत्तरकालम् । अग्निं होत्रायावहेति तदग्निं होत्रायावोदया आहेति । तथा स्विष्टकृति यक्षदग्नेर्होतुः प्रियाधामानीति प्रकृत्याह । तदस्मा एतां देवा आहुतिं फल्पयित्वा येनैनतद्भूयः समदाम्यधिति स्विष्टकृदग्नेर्होतुराहुतिः परिकल्पिता । अतो होतृतदोपसंहितः स्विष्टकृदग्निः । तथा सूक्तवाके अग्निर्होत्रेणेदं हविरजुषतावीवृधतेति । तदेतन्नोपपद्यते । स्विष्टकृदग्नेरप्रकृ-

तत्वात्। न हि स्विष्टकृदग्न्यर्थोऽयम्। किं च होतृसंस्काराभिप्रवृत्तेः। तेनाग्निर्दैवो दैव्यो होता स होतर्यध्यारोप्यते तदभिप्रायम्। एवं प्रकृतवस्त्वभिधायकत्वं मन्त्रस्याभ्युपगतं भवति। इतरथा ह्यप्रकृतवस्त्वन्तरपर्यन्तता प्रकृतवस्त्वभिधायकत्वैकवाक्यत्वे सत्ययुक्तापद्यते। किं च एकवाक्यतानुपपत्तेः। न ह्यग्न्यभिधायकत्वे एकवाक्यतोपपद्यते। देवान्यक्षद्विद्वांश्चिकित्वानिति प्रकृत्य भरतवदित्याह। भरतश्चाग्निरभिधीयते। एष हि देवेभ्यो हव्यं भरतीति। न चाग्निवदग्नेर्यष्टृत्वं सम्भवति। होतुस्तु सम्भवत्यग्निवद्यष्टृत्वम्। तेनाग्न्यभिधायकत्वे भरतवदिति दृष्टान्तानुपपत्तिः। किं च ब्रह्मण्वदिति च नोपपद्यते। उक्तेनैव न्यायेन ब्रह्म ह्यग्निरित्याह। एवं सति सर्वपदानां सामञ्जस्येनैकवाक्यता। तस्मान्न स्विष्टकृदग्न्यभिधानार्थमिदमुच्चारणमिति। चिन्तायाः प्रयोजनं प्रधानदेवताभिधायकत्वे आग्नेयविकारे सौर्यादौ विपरिणामः। स्विष्टकृदग्न्यभिधायकत्वेऽविभूयेष्टयाम्। अस्मदभिप्राये त्वविकृत एव सर्वत्र प्रयुज्यते॥ २५॥

अमुवदमुवदिति यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि॥ २६॥

अमुवदिति आर्षेयोच्चारणम्। त्रीणीति कुतः। त्रीन्वृणीत इति वचनात्। इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्र इति लिङ्गात्। यजमानग्रहणं च ऋत्विगार्षेयव्युदासार्थम्॥ २६॥

यावन्तो वा मन्त्रकृतः॥ २७॥

वा शब्दः पक्षान्तरपरिग्रहे। यावन्तो वा मन्त्रकृतस्तावन्तो नियमेनैव। यावन्ति यस्य प्राप्नुवन्ति तावन्ति प्रवृणीते न त्रीणीति। तत्कथं आर्षेयं प्रवृणीत इत्येषोऽत्र विधिः। एकं वृणीते द्वौ वृणीते त्रीन् वृणीत इत्यनुवादः। तथा न चतुरो वृणीते न पञ्चातिवृणीत इति। आर्षेयाणि ह्येकत्वद्वित्वत्रित्वपञ्चत्वपरिच्छिन्नानि प्रायशिकायां पठ्यन्ते। तेनार्षेयं वृणीत इतीयत्तया यावन्ति यस्य प्राप्नुवन्ति तावन्त्येव त्रियन्ते। नियमविधानं तु केवलैकत्वद्वित्व-

योरव्युत्पत्त्यादसम्भवमात्रादेवाभ्युपेयते१ । मन्त्रकृतो मन्त्रदृश उच्यन्ते । न हि मन्त्राणां करणं भवति । अनित्यत्वप्रसङ्गात् । तेन दर्शनार्थे कृञिति व्यवसीयते । दृश्यते चानेकार्थता धातूनाम् । गन्धनावक्षेपण सेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ इति आत्मनेपदप्रतिपादने गन्धनादीनर्थान् कृञो दर्शयति ॥ २७ ॥

## २पुरोहितार्षेयेण वा ॥ २८ ॥

तच्चैतद्राजविषयम् । पुरोहितोपपत्ते । तथाचोत्तरसूत्रम् ॥२८॥

## क्षत्रियवैश्ययोश्च नित्यम् ॥ २९ ॥

क्षत्रियोऽभिषेकक्रियारहितोऽभिप्रेतोऽधस्तनसूत्रारम्भवैयर्थ्यप्रसङ्गात् । अनयोर्नित्यं पुरोहितार्षेयोच्चारणं, राज्ञस्तु विकल्प ॥ २९ ॥

## मनुवदिति वा सर्वेषाम् ॥ ३० ॥

ब्राह्मणादीनां मनुवदिति प्रवरणम् । तच्च सकृदेवाभ्यासेकारणाभावात्३ । यच्चोक्तमिदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्र इति तत्प्रदर्शनार्थम् ॥ ३० ॥

४ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रा-

---

१ अत्र '' ऊर्ध्वज्ञुमासीनः होतारं वृणीते मनुष्वद्भरतवदमुवदिति यथार्षेयो यजमानस्त्रीण्यय ऽऋषि मन्त्रकृतो वृणीते ऽपि वा एकं द्वौ त्रीन् पञ्च न पञ्चातिवृणीते ' इत्यापस्तम्बवचनमप्यनुकूलम् ।

२ राज्ञो यजमानस्य पुरोहितार्षेयाणि स्वकीयानि वा वृणीत इत्यर्थ ।

३ आपस्तम्ब ' पुरोहितस्य प्रवरेण राजा वृणीते ' इति, ' अपि वा नार्षेयं वृणीते मनुवदित्येव ब्रूयात् ' इति च । मनु 'यद्यब्राह्मणो यजेत पुरोहितस्य प्रवरेण प्रवृणीयात् ' इति ।

४ आर्षेयो धारणादनन्तरं ब्रह्मण्वदित्यादिकं मन्त्रशेषं ब्रूयात् । तदन्तेऽसौ मानुष इत्यत्रासावित्यस्य पदस्य स्थाने अमुकशर्मेति होतुर्नाम ब्रह्मा ब्रूयात् ।

त्रितारोऽसौ मानुष इति होतृनामग्रहणम् ॥३१॥

ब्रह्मण्वदित्यारभ्य होतृनामग्रहणान्तो मन्त्रः ॥ ३१ ॥

उपांशु वा ॥ ३२ ॥

होतृनामग्रहणं भवति। एवमपि हि श्रूयते। तथैतद्धोतृवरणमदृष्टसंस्कारस्तथा च यावदुक्तेऽपि प्रवर्त्तते॥ ३२ ॥

सम्मृष्टा उपाविशतः ॥ ३३ ॥

अथाध्वर्युं चाग्नीधं च सम्मृशतीति सम्मर्शनविधानात्। तावेवोपविशतः सन्निधानात् ॥ ३३ ॥

अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः ॥३४॥

स्रुगादापनविधानसामर्थ्यात्। १सर्वत्र परिप्राप्ताविदमुच्यते। सन्निधानात्प्रयाजार्थस्रुगादापनविषयतैवास्य वाक्यस्य। एवं च सति पशावेकादशप्रयाजोत्कर्षे पुनरुच्चारणम् ॥ ३४ ॥

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे ॥ ३५ ॥

घृतवतीमित्यस्मिन्सकले मन्त्रवाक्ये उक्ते स्रुचौ गृहीत्वातिक्रम्याश्रावयति। ततश्च पुरोनुवाक्याभावः। अथ यद्पुरोनुवाक्यकाः प्रयाजा भवन्तीति श्रूयते। पञ्चग्रहणं कर्मभेदज्ञापनार्थम्। पञ्च होमानि कर्माणि। समिद्धहोमेन ह्येवसमृद्धा आहुतय इति वचनात् समिद्धतम इत्युक्तम् ॥ ३५ ॥

यज यजेति शेषम् ॥ ३६ ॥

समिधो यजेति हि प्रथममुक्तम्। शेषं यज यजेत्येव वक्तव्यम्। अथ यज यजेत्येवोत्तरानाहेति वचनात् ॥ ३६ ॥

---

१ अन्यर्थसंज्ञाविधानात् सर्वत्र प्राप्नोति तेन प्रयाजेष्विति नियम्यते; समाख्यातः सन्निधेर्बलवत्त्वादित्याशयः।

१ध्रुवस्तिष्ठन् ॥ ३७ ॥

इति वचनम् । अभिक्रमणमुत्तरसूत्रे वक्ष्यति ॥ ३७ ॥

२पूर्वं पूर्वं वाभिक्रामम् ॥ ३८ ॥

णमुलयं ततश्चाभिक्रम्याभिक्रम्येति द्रष्टव्यम् । तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयादिति । तेन ध्रुवपक्षे समिद्धतमे, अभिक्रमणपक्षे पूर्वे पूर्वस्मिंत ॥ ३८ ॥

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥ ३९ ॥

चतुर्थं प्रयाजं प्रति उपभृतो जुह्वामानयति । तत्रानवमृशन् स्रुचौ । स वा अनवमृशन्समानयतीति ३ ॥ ३९ ॥

अधिकारमुपजीवन्नाह--

एवं प्रवृद्धौ ॥ ४० ॥

प्रयाजप्रवृद्धौ चतुर्थे चतुर्थे समानयति४ ॥ ४० ॥

अनुयाजेषु ॥ ४१ ॥

चैवमेव प्रतिपत्तव्यम् ॥ ४१ ॥

---

१ एकस्मिन् स्थाने स्तम्भ इव तिष्ठन् पञ्च प्रयाजान् यजति, अपक्रमणकारणे सत्यपि नापक्रामेदिति भाव.। अत्र 'सर्वोन्वैकध्यम' इत्यापस्तम्बसूत्रमुपोद्‌बलकम् ।

२ अभिक्रम्याभिक्रम्याहवनीयसमुख गमन कृत्वा पूर्वे पूर्वे प्राक्संस्थपङ्क्त्या पञ्चापि प्रयाजान् पृथक् पृथक् स्थाने जुहोतीत्यर्थं । 'पञ्च प्रयाजान् प्राचः प्रति दिशं वा, सामधः पुरस्तात्तनूनपातं दक्षिणात इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये' इत्यापस्तम्बसूत्रं ।

३ आपस्तम्बः ' त्रीनिष्ट्वार्धमौपभृतस्य जुह्वामानीय प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयन्त्युपभृतमन्तत' इति ।

४ अत एव 'चतुर्थसप्तमदशमेषु समानयन्ति' इति याज्ञिकोक्तिः ।

वितारोऽसौ मानुष इति होतृनामग्रहणम् ॥३१॥

ब्रह्मण्वदित्यारभ्य होतृनामग्रहणान्तो मन्त्रः ॥ ३१ ॥

उपांशु वा ॥ ३२ ॥

होतृनामग्रहणं भवति। एवमपि हि श्रूयते। तथैतद्धोतृवरणमदृष्टसंस्कारस्तथा च यावदुक्तेऽपि प्रवर्त्तते ॥ ३२ ॥

सम्मृष्टा उपविशतः ॥ ३३ ॥

अथाध्वर्यु चाग्नीधं च सम्मृशतीति सम्मर्शनविधानात्। तावेवोपविशतः सन्निधानात् ॥ ३३ ॥

अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः ॥३४॥

स्रुगादापनविधानसामर्थ्यात्। १सर्वत्र परिप्राप्ताविदमुच्यते। सन्निधानात्प्रयाजार्थस्रुगादापनविषयतैवास्य वाक्यस्य। एवं च सति पशावेकादशप्रयाजोत्कर्षे पुनरुच्चारणम् ॥ ३४ ॥

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे ॥ ३५ ॥

घृतवतीमित्यस्मिन्सकले मन्त्रवाक्ये उक्ते स्रुचौ गृहीत्वातिक्रम्याश्रावयति। ततश्च पुरोनुवाक्याभावः। अथ यद्पुरोनुवाक्यकाः प्रयाजा भवन्तीति श्रूयते। पञ्चग्रहणं कर्मभेदज्ञापनार्थम्। पञ्च होमानि कर्माणि। समिद्धहोमेन होयसमृद्धा आहुतय इति वचनात् समिद्धतम इत्युक्तम् ॥ ३५ ॥

यज यजेति शेषम् ॥ ३६ ॥

समिधो यजेति हि प्रथममुक्तम्। शेषं यज यजेत्येव वक्तव्यम्। अथ यज यजेत्येवोत्तरानाहेति वचनात् ॥ ३६ ॥

---

१ अन्वर्थसंज्ञाविज्ञानात् सर्वत्र प्राप्नोति तेन प्रयाजेष्विति नियम्यते; समाख्यातः सन्निधेर्बलवत्त्वादित्याशयः।

१ध्रुवस्तिष्ठन् ॥ ३७ ॥

इति वचनम् । अभिक्रमणमुत्तरसूत्रे वक्ष्यति ॥ ३७ ॥

२पूर्वं पूर्वं वाभिक्रामम् ॥ ३८ ॥

णमुलयं ततश्चाभिक्रम्याभिक्रम्येति द्रष्टव्यम् । तस्मादभितराममितरामव क्रामेदभितरामभितरामाहुतीर्जुहुयादिति । तेन ध्रुवपक्षे समिद्धतमे, अभिक्रमणपक्षे पूर्वं पूर्वमिति ॥ ३८ ॥

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥ ३९ ॥

चतुर्थे प्रयाजं प्रति उपभृतो जुह्वामानयति । तच्चानवमृशन् स्रुचौ । स वा अनवमृशन्समानयतीति ३ ॥ ३९ ॥

अधिकारमुपजीवन्नाह--

एवं प्रवृत्तौ ॥ ४० ॥

प्रयाजप्रवृत्तौ चतुर्थे चतुर्थे समानयति४ ॥ ४० ॥

अनुयाजेषु ॥ ४१ ॥

चैवमेव प्रतिपत्तव्यम् ॥ ४१ ॥

---

१ एकस्मिन् स्थाने स्तम्भ इव तिष्ठन् पञ्च प्रयाजान् यजति, अपक्रमणकारणे सत्यपि नापक्रामेदिति भाव । अत्र 'सर्वान्वैकध्यम' इत्यापस्तम्बसूत्रमुपोद्बलकम् ।

२ अभिक्रम्याभिक्रम्याहवनीयसमुख गमन कृत्वा पूर्वे पूर्वे प्राप्तसंस्पर्शपङ्क्त्या पश्चापि प्रयाजान् पृथक् पृथक् स्थाने जुहोतीत्यर्थ । 'पञ्च प्रयाजान् प्राच. प्रति दिश वा, सामध पुरस्तात्सनूनपात दक्षिणात इड पश्चाद्बर्हिरुत्तरत- स्वाहाकार मध्ये' इत्यापस्तम्बसूत्रं ।

३ आपस्तम्ब 'त्रीनिष्ट्वार्धमौपभृतस्य जुह्वामानीय प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयन्स्युपभृतमन्तत' इति ।

४ अत एव 'चतुर्थसप्तमदशमेषु समानयन्ति' इति वार्त्तिकोक्तिः ॥

उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥ ४२ ॥

उत्तरैव जुहूरित्यवाच्यं उत्तरामिति। तेनोत्तरां प्राचीमवहृत्येति सम्बन्धः। इत्थमेव कुर्यात् प्राचीमेव स्रुचमुपावहृत्येति हि श्रूयते। मध्युह्याध्युह्य जुहोति न सकृदवतारितया। हुत्वा तेनैवाधिहत्योपभृत्यधिनिदध्यादिति वचनात् ॥ ४२ ॥

एवं सर्वत्र ॥ ४३ ॥

न प्रयाजमात्र एवैतत्। न हि प्रयाजान् प्रकृत्य श्रूयते इदम्। होममात्रोद्देशेन च श्रवणम्। अथ तो होमस्यैवेति प्रकृत्यैतच्छ्रूयत इति ॥ ४३ ॥

नाभिदेशे धारणम् ॥ ४४ ॥

प्रकृतयोर्जुहूपभृतोः। अथातो धारणस्यैवेति हि प्रकृत्यामनन्ति। अयं ह्येव मध्यमः प्राणस्तस्मादुतमुपन्यथ्यैवे धारयेदिति। सर्वत्र यद्यानुवर्त्तते। तथा च सर्वविषयमेतद्धारणं भवति न प्रयाजेष्वेव। अनारभ्य ह्येतत्पठ्यते ॥ ४४ ॥

प्रयाजानुमन्त्रणमेको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ॥ ४५ ॥

प्रयाजे हुते सत्यनुमन्त्रणं कर्त्तव्यम्। एको ममेति। तथैतद्याजमानं अकरणत्वात्। अस्माभियादिपदसम्बन्धे सत्यप्यार्त्विज्यामावात् अनेकयाजमानके कर्मण्यविपरिणामः ॥ ४५ ॥

एवं मिथुनैर्यथासंख्यम् ॥ ४६ ॥

उत्तरत्र यथा संख्यमेवमनुमन्त्रणानि कार्याणि। एवं ह्याम्नायते। तस्मात्प्रथमे प्रयाजे हुते द्वयोरेको ममेति, तथा द्वौ ममेति द्वितीये प्रयाजे, त्रयो ममेति तृतीये प्रयाजे इत्येवमादि। तदेवमर्थम्। लाघविक आचार्यः सूचयत्येवं मिथुनैर्यथा संख्यमिति ॥ ४६ ॥

न तस्य किंचनेति पञ्चमे ॥ ४७ ॥

पञ्च मम न तस्य किं चनेत्येवं पञ्चमे प्रयाजे प्रयोगः ॥ ४७ ॥

त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यसाद इति च ॥ ४८ ॥

एतैश्च यथा संख्यमनुमन्त्रयीत साकाङ्क्षत्वात् । अभूयासमिति प्रति पदमध्याहारः । स च श्रुतावभिहित एव । प्रथम प्रयाजमनुमन्त्रयेत् त्विषिमान् भूयासमिति । पूर्वसमाचैतदनुमन्त्रणं भिद्यते । पृथग्विधानसामर्थ्यात् । प्रयोजनं संहितावत्प्रयोगः । त्विषिमान्भूयासमित्येवमाशीर्योगसामर्थ्यादनेकयजमानके विपरिणम्यते । अनुमन्त्रणस्य चासन्निपातात्प्रोषितोपि यजमानः करोति ॥ ४८ ॥

आगन्तूनां चतुर्थपञ्चमाभ्यां स्थानात् ॥ ४९ ॥

नव प्रयाजान्यजतीत्येवमादौ प्रयाजधर्मपरिप्राप्तौ सन्देहे इदमारभ्यते । आगन्तूनां चतुर्थपञ्चमाभ्यां यो धर्मः प्राप्तस्तेन सम्बन्धं कुर्यात् । स चानुमन्त्रणस्थानादिकः । कुत एतत् । स्थानात् । क्रमादित्यर्थः । चतुर्थपञ्चमयोर्ह्यन्तराले आगन्तवः पठ्यन्ते । अतश्च सन्निधानात्तद्धर्मसम्बन्ध इष्यते । धर्मापेक्षायां हि सन्निहितव्यतिक्रमे कारणं नास्ति ॥ ४९ ॥

प्रथमचतुर्थाभ्यां वा यथालिङ्गम् ॥ ५० ॥

प्रथमचतुर्थयोर्वा धर्मेण सम्बन्धः कर्त्तव्यो लिङ्गात् । यो बहुदेवत्यस्तस्य प्रथमधर्म य एकदेवत्यस्तस्य चतुर्थधर्मः इति । लिङ्ग ह्यत्र पर्युपस्थापकम् । ननु चैव सतिद्वितीयतृतीययोरप्यविशेषाद्धर्मप्रवृत्त्या भावितव्यम् । नेत्युच्यते । प्रथमचतुर्थयोर्हि कारणमन्यदप्यस्ति । एकत्र प्राथम्यमितरत्रानन्तर्यम् ॥ ५० ॥

१सर्वान्वोत्तमेनोपायित्वात् ॥ ५१ ॥

अथ वा उत्तमधर्मेण सर्वान् सम्बध्नीयात् । कुत एतत् । उपायित्वात् । तमेव पञ्चमं होतव्यं प्रति तत्साकल्यसञ्जननाय उपायिन

१ सिद्धान्तमाह ।

आगन्तवः। कथमवगम्यते। येन नव प्रयाजान्यजतीत्यभ्यासेन सख्यापूरयितव्या। न हि नवैतानि कर्माणि। उत्पन्नसयोगात्सख्याया। एव च सति न्यायादन्त्यस्याभ्यास. प्राप्नोति। न हि पूर्वाभ्यासो युज्यत इत्यन्त्यस्याभ्यासोयम्। तेन पञ्चमधर्मसम्बन्ध एवात्र युज्यते१ ॥ ५१ ॥

## एत्य जुह्वाभिघारणं ध्रुवाया हविष उपभृतश्च ॥ ५२ ॥

सन्निधानाद्यजति स्थानस्थितस्यैवाभिघारणं मा भूदित्यत एत्येत्युच्यते। ध्रुवादीनामुद्धारया स्थालीष्वुदासार्थम्। तत्कथ, न हि स्थाल्यामभिघारास्य प्राप्तिरस्ति। उत्तमप्रयाजसङ्कीर्तितदेवतास्यद्धविरभिघारणमत्रेष्यते। तच्च ध्रौव पुरोडाशावौपभृतं च। एवं ह्यत्र वाक्यशेषस्तु उत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञ समस्थापयन्निति प्रकृत्याग्न्यादय. सङ्कीर्तिता.। ततश्चात्रैव सर्वयागपरिसमाप्तयायातयामानि हवींषि संवृत्तानीति। पुनराह ते देवा अकामयन्त कथं न्विमं यज्ञं पुनराप्याययेमेति प्रकृत्य स यज्जुह्वामाज्य परिशिष्टमासीत्तेन यद्यं समस्थापयंस्तेनैव यथापूर्वं हवींष्यभ्यघारयन्निति। तत्र स्थाल्या अनभिघारणम्। हवि शब्दश्चात्र गोबलीवर्दन्यायेन पुरोडाशयोर्वर्तते। अत्रैतद्विचार्यते। किं हवि सस्कारोऽयमुत प्रयाजशेषप्रतिपत्ति.? किं तावत् प्राप्तम्। हवि. सस्कारोय द्वितीया निर्देशात्। ध्रुव च तृतीया श्रूयते। प्रयाजशेषेण हवींष्यभिघारयति। लिङ्गाच्च। पुनरेवैतानि तदाप्याययत्ययातयामानि करोतीति। प्रयाजशेषप्रतिपत्तिर्वा हवीरर्थत्वात्। हवी ह्यत्रार्थो जुह्वारिक्ता। तया ह्याज्यमागाविज्येते। अतस्तद्द्रव्यसस्तम्भावे हवीरर्थता। इतरथा हि हविरभिघारणादृष्टं कल्प्येत। तच्चाप्याय्य ह-

---

१ एवं च नवैवाद्यप्रयाजादापि 'पञ्चमम न तस्य पिवन्तोऽस्मान् द्वेष्टि यं च वयं द्विष्मः अपाड् भूयासम्' इत्येवानुमन्त्रणम्। अत्र तनूनपान्नाराशसयोर्विकल्प, शतपथे विशेषाभावोपि शाखान्तरे विशेषश्रुते.।

ष्टे सति । यथुक्तं हविषि द्वितीया द्रव्ये च तृतीया । तत्रापि वस्तुबला तृतीया द्वितीयार्थे, द्वितीया च सप्तम्यर्थे, सुपां सुपो भवन्तीति । लिङ्गं त्वर्थवादप्रायम । चिन्ताया. प्रयोजनम् । हविः संस्कारे पशुपुरोडाशाभिघारणार्थं. प्रयाजशेष. स्थापयितव्यः । शेषप्रतिपत्तौ सन्निहितत्वेन कार्य इति ॥ ५२ ॥

आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ ५३ ॥

आज्यभागाविति कर्मणो. सञ्ज्ञा । असौ च संव्यवहारार्था आज्यभागप्रभृतीडान्तमेक इत्येवमादयर्थां । ताभ्यां चरति । चरति रनुष्ठानार्थ । तावनुनिष्ठतीत्यर्थ । स चैक आग्नेयो ऽपरः सौम्य । अग्निर्देवत्य आग्नेय. । सोमदेवत्यश्च सौम्य. । स्मर्यते हि देवता तद्धितो ऽग्नेर्ढक् सोमाद्यणिति च । आग्नेयमस्मिन् कर्मणि द्रव्यमित्याग्नेय । एव सौम्यः ॥ ५३ ॥

चतुरवत्तः सवषट्कारासु ॥ ५४ ॥

सवषट्कारास्वाहुतिषु चतुरवत्तं होतव्यम् । चतुरवत्तं जुहोतीति हि श्रूयते ॥ ५४ ॥

अनिधायावदायावदाय ध्रुवामभिघारयति, आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः सूर्यायाऊधो अदित्या उपस्थ ऊरुधारा यज्ञे अस्मिन्निति ॥ ५५ ॥

अनेन मन्त्रेण । अनिधाय स्रुचावित्युच्यते । धाचनिको हि तयोर्विमोक. । ते पतस्त्रिदयकृति विमोचनमागच्छत इत्यादि । अवदायावदायेति वीप्सा प्रति स्रुवविषया । चतुरवत्तविपर्यये ह्यनुपपत्तिः । आहवनीययजतया ध्रुवाया इति परिभाषितम् । अतस्तदभिघारणमुच्यते । आज्यभागयोर्यजति स्वाधाज्यापुरोनुवाक्यावत्त्व म । अनुवाक्या च प्रेषितानूच्यते । तत्रैतत्सन्दिह्यते । किमयदानोत्तरकालमनुवाचनमुत सहाहोस्वित्पूर्वमिति । न चेहाचार्येण वि-

शेष. प्रदर्शित । किं तु विकृतावनुप्रवृत्तिर्दृश्यते । पशौ गृहीत्वानुवाचनम् । तत्पुरोडाशे च सहानुवाचनम् । अवद्यन्त हीन्द्राग्निभ्यामिति । क्वचिच्च पूर्वानुवाचनम् । यथावरुणप्रघासेषु मारुत्यां, स्व्येन स्रुचौ गृहीत्वेति । तत्र पूर्वानुवाचनमेवयुज्यते । तस्य हि विकृत्यनुप्रवृत्तिदर्शनं मारुत्यामित्युक्तम् । नन्वितरयोरप्यस्ति । सत्यमेवम् । तत्तु वाचनिकम् । अस्यापि वाचनिकत्वमिति चेत् । न वचनस्यान्यपरत्वात् । यास आलम्भोऽत्र विधीयते । स चाप्राप्तस्तस्मात्पूर्वानुवाचनं प्रकृतितः प्राप्तमेवानूद्यत इति । पशुपुरोडाशादौ त्वनन्यपरत्वात् वचनस्य सहानुवचनादि परतैव । तस्मात्पूर्वमनुवचनम् । ततोऽवदानं । पुनरतिक्रम्य प्रवचनमिति । तदपि प्रदर्शितमाचार्येणातिक्रम्याश्राव्याह समिधो यजेत्येवमादौ १सर्वेयजतिष्वेव क्रम इति ॥ ५५ ॥

अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाश्राव-
णात् ॥ ५६ ॥

अनुवचनोत्तरकालमध्वर्युर्नापव्याहरेत्, होता चाश्रावणं यावत् ॥ ५६ ॥

२आश्रावितेऽग्नीदाप्रत्याश्रावणात् ॥ ५७ ॥

प्रत्याश्रावणमस्तु श्रौषडिति । आ तत इत्येतदुक्तं भवति ॥५७॥

---

१ आपस्तम्बः 'आग्नेयं सौम्यमाज्यहविषा याज्यमानो चतुर्गृहीताभ्यां जमदग्नीनां तु पञ्चावत्ताभ्यामथ जामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्त कुर्वीत सर्वप्रायश्चित्तमुष्मै अनुब्रूहीति पुरोनुवाक्यां सम्प्रेष्यत्यवदायावदाय स्रुचेण प्रस्तरयोर्हि समज्य जुहूपसृतावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते ऽमु यजेति याज्यामिति सार्वत्रिकम्' इति ।

२ अध्वर्युणा आश्रावणे कृते आ प्रत्याश्रावणमग्नीध्राप्व्याहरेत् । 'ओश्रावय' 'अस्तु श्रौषट्' इत्यनयोरन्तरा नापव्याहरणमग्नीध इति ।

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठशालायाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै, र्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकै-र्देयं वार्षिकमग्रिमं मूल्यम् मुद्रा ७ आणका ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्र्यमाणा ग्रन्था - मुद्रिता स्तवका

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कार ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृत. | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचित. सम्पूर्ण | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपाद | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्ण. । | ( वेदान्त. ) | १ |

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णम् । ( जैनदर्शनम् )

(१०) सिद्धित्रयम–विशिष्टाद्वैत–ब्रह्मनिरूपण- परम्–श्रीभाष्यकृतां परमगुरुभि श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्ण. ( वेदान्त )

(११) न्यायमकरन्द. । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीत आचार्यचित्सुखमुनिविरचितव्याख्योपते ( वेदान्त )

(१२) विभक्त्यर्थनिर्णय न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायरचित । सम्पूर्ण ( न्याय )

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा)

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( वेदान्त ) १

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्त )

(१६) मीमांसाबालप्रकाश ( जैमिनीयद्वादशाध्यायार्थसंग्रह ) श्रीमदूपदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैत साम्राज्यधुरन्धरश्रीमट्टनारायणात्मजभट्टशङ्करविरचित । ( मीमांसा )

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम । ( मीमांसा )

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीमदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त )

(१९) कात्यायनश्रौतसूत्रम महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्त,
चौखम्बा-संस्कृतप्रकाशक
बनारस सिटी ।



No 72 ] [ Price Rupees One.

THE

# CHOWKHAMBÂ-SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY ŚRI KARKÂCHÂRYA.

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mimâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthshâlâ,

*Central Hindu College, Benares.*

FASCICULUS III

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT,

BENARES

AGENT - OTTO HARRASSOWITZ LEIPZIG

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1903.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोदितम् ॥ २ ॥

स्तबकः—७२

प्रत्याश्रावितेऽध्वर्युराहोतृप्रैषात् ॥ ५८ ॥

यजेति होतृप्रैषः, आ ततो नापव्याहरेदिति ॥ ५८ ॥

होता वषट्कारात् ॥ ५९ ॥

नापव्याहरेदिति वर्त्तते । सोऽनुब्रूहीत्येवोक्त्वाध्वर्युर्नापव्याह-रेदिति प्रकरणैतच्छ्रूयते ॥ ५९ ॥

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ ६० ॥

सोमे चाध्वर्युर्ग्रहं गृहीत्वा नापव्याहरेदास्तोत्रोपाकरणात् ॥ ६० ॥

उपाकृत उद्गातार आ होतृप्रैषात् ॥ ६१ ॥

उपाकृते स्तोत्रे उद्गातारो नापव्याहरेयुराहोतृप्रैषात् । होतृ-प्रैष उत्तमस्तोत्रीयायाः प्रस्तावसमनन्तरं यजोत्तमेति येन होता सम्बोध्यते ॥ ६१ ॥

[1]होता वषट्कारात् ॥ ६२ ॥

नापव्याहरेदिति वर्त्तते । कियन्तं कालम् । आ ग्रहसम्बद्ध-होमवषट्कारात् । यच सौम्येऽध्वरे स वै ग्रहं गृहीत्वाध्वर्युर्नापव्या-हरेदिति प्रकृत्यैतदपि हि श्रूयते ॥ ६२ ॥

आग्नेयमुत्तरापूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्यम् ॥ ६३ ॥

आग्नेयमाज्यभागमुत्तरपूर्वार्द्धे जुहोति दक्षिणपूर्वार्द्धे सौम्यं ॥ ६३ ॥

समिद्धतमे वा ॥ ६४ ॥

उत्तरार्द्धपूर्वार्द्धे देशे आग्नेयमाज्यभागं जुहतीति प्रकृत्यैत-च्छ्रूयते ॥ ६४ ॥

हविर्भ्यां च ६५ ॥

---

[1] सूत्रे होतृग्रहणं सकलशस्त्रकर्तृणामुपलक्षणम्, तेन प्रशास्त्रादि-योऽपि यजोत्तमेति प्रैषोत्तरं शस्त्रव्यतिरिक्तं किमपि न ब्रूयुः ।

चरतीति वाक्यशेषः । समिद्धतम इति च । समिद्धहोमेन ह्येव समृद्धा आहुतय इति श्रूयते ॥ ६५ ॥

पुरोडाशावन्तरेणाग्नीषोमा उपांश्वाज्यस्य ॥ ६६ ॥

पुरोडाशयागयोर्मध्ये उपांश्वाज्यस्याग्नीषोमौ यजति । अत्र पुरोडाशाविति द्वितीयोपपदविभक्तिः१ ॥ ६६ ॥

विष्णुर्वामावास्यायां हौत्राम्नानात् ॥ ६७ ॥

अमावास्यायां विष्णुर्वेज्यते अग्नीषोमौ वा । एवं हि हौत्रे आम्नायते । वैष्णवश्चेदिदं विष्णुरिति२ ॥ ६७ ॥

यावद्धविरुत्तरार्धात्स्विष्टकृत् ॥ ६८ ॥

यावन्ति हवींऽपि सर्वेषामुत्तरार्धात्स्विष्टकृदिज्यते । सम्प्रतिपन्नदेवतैकत्वाच्च सकृत्प्रक्षेपः । प्रतिपत्त्यर्थकर्म चैतदुत्तरार्धात् प्रतिपाद्यते । यागश्च निर्वर्त्यते । अत एव च यावदुक्तेऽपि प्रवर्तते॥६८॥

तत एव होमः ॥ ६९ ॥

---

१ अयं क्रमः, आग्नेय आज्यभागो ध्रुवातश्चतुर्गृहीतेन, सौम्य आज्यभागोऽपि, आग्नेयेन पुरोडाशेन यागः तत्राग्नये ऽनुब्रूहीत्यनुवाचनम् जुह्वां ध्रुवाया स्रुवेणाज्यं गृहीत्वोपस्तारः, आज्यस्थाल्याः सकाशाद्ध्रुवाया अभिघारणम् पुरोडाशमध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनमवदानं प्राक्तनम् द्वितीयं पूर्वार्धात् पश्चादवत्तिनस्तृतीयं पश्चार्धात् ध्रौवेणोपर्यभिघारः पुनर्ध्रुवाया आप्यायनम् आज्यस्थाल्याज्येनावत्तस्य हविषोऽवदानयोः प्रत्यभिघारः अतिक्रम्याश्राव्याग्नि यजेत्युक्त्वा वषट्कृते सह वा स्रुक्पादेनहोमः, आज्यभागवत् ध्रुवातश्चतु. पञ्चकृत्वो यावदायोपानुयाग., आग्नेययागवत् द्वितीयेन पुरोडाशेनाग्नीषोमीययागः स्विष्टकृदिति देवभाष्ये ।

२ व्यवस्थितोऽयं विकल्पः सन्नयतोऽग्नीषोमौ असंनयतो विष्णुरिति, कात्यायनः 'ऐन्द्रं सान्नाय्य संनयतो माहेन्द्रं वा ; वैष्णवं त्वसंनयन्नुपांशुयाजम' इति ।

उत्तरत एव होमो भवति । शेषात्स्विष्टकृते समवद्यतीत्येतदुक्तम् ॥ ६९ ॥

उपांशुयाजशेषादपि ध्रौवात्स्विष्टकृदवदाने प्राप्त आह—

## नाज्यादशेषात् ॥ ७० ॥

न स्विष्टकृदर्थमवदानं ध्रौवादाज्यादग्रहीतव्यम् । कुत एतत् । अशेषत्वात् । न ह्येतच्छेषभूतम् । ननूपांशुयाजनिर्वृत्त्युत्तरकालं शेषव्यपदेशोऽस्येति । नेति ब्रूमः । न ह्येतदुपांशुयाजायैव गृह्यते । सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति । न च सर्वार्थस्यैकदेशे निवृत्ते शेषव्यपदेशोऽस्ति[१] ॥ ७० ॥

## असंसृष्टामाहुतिभिः ॥ ७१ ॥

स्विष्टकृदाहुतिं जुहोतीति वाक्यशेषः । स वा अन्यदुक्तं इतराभ्य आहुतिभ्यो जुहोतीति मन्त्रव्याह यद्वियः स्विष्टकृद्द्वितीयेन ह पशून्प्रसज्येयादितराभिराहुतिभिः संसृजेदिति ॥ ७१ ॥

## निधाय सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत आज्यमुभयतो वाम्नेयात् ॥ ७२ ॥

स्रुग्निधानं प्राचनिकम् । ते एतास्विष्टकृति विमोचनमागच्छन्ति । सञ्चरश्च परिधीनपरेण सञ्चरोऽभिप्रेतः । तस्य चाभ्युक्षणा-

---

१ अपरा व्याख्या । न ह्याज्यं शेषरूपमस्ति शेषस्य हि कृतार्थस्य प्रतिपत्त्यपक्षस्य स्विनस्य प्रतिपत्त्यर्थानि शेषकार्याणि । न चाज्यमेषं विधमस्ति । न ह्युपांशुयाजार्थं पूर्वं पृथक् प्रविभक्तमस्ति यस्य शेषो भवति । अत. साधारणादेव ध्रौवाद्वचनेनोपांशुयाजार्थं गृह्यते । यत्तावद्ध्रुवायामुपांशुयाजार्थं गृहीतेऽवशिष्टमाज्यम् तच्चाज्याद्युपस्तरणाभिघारणाद्युपयोगित्वादकृतार्थं न प्रतिपत्त्यर्हम् । सर्वान्ते च तेन ति शेषेण समिष्टयजुर्हूयत इति न ततः शेषकार्यम् । यज्जुह्वां चतुर्गृहीतं तदपि सर्वं हूयमिति यथाम्नायादृत तास्मिन्नपि कार्यस्याभाव इत्यनन्तरं वा ।

मनुयाजार्थम् । स्विष्टकृत ऊर्ध्वमनुयाजार्थं ह्यनेन सम्भरेण सम्भरणम् । ननु प्राशित्रसमर्पणार्थं कस्मान्न भवति । न, तस्य पाशिकमनेन समर्पणम् । अपाक्षिकं चाभ्युक्षणम् । तेन करिष्यमाणप्रयोजनत्वादनुयाजार्थतैव व्याख्या । प्रयोजनं तदभावेऽप्राप इति। पशौ च स्वष्टस्विष्टकृदुत्तरकालमभ्युक्षणं न पुरोडाशादिष्वष्टीति । ज्योतिष्टोमे च तृतीयसवने सौम्ययागसमनन्तरमभ्युक्षणम् । नेतरयो. सवनयोरनुयाजाभावात् । केचित्तु तृतीयसवनेऽपि स्विष्टकृद्यागसमनन्तरमेवाभ्युक्षणमिच्छन्ति न सौम्यसमनन्तरम् । तदनन्तरमेव दृष्टत्वात् । युक्तरूपतरमिवचैतदिति । प्राशित्रमिति ब्रह्मणो भागस्तदवद्यति । अवद्यति शब्दोपादानसामर्थ्याद्धविरिति प्रतिपत्तव्यम् । अवद्यतेर्हि हविरवदानसम्बन्धो दृष्टः । त्रित्वसम्बन्धोपीति चेत् । न, विशेषसंयोगात् । विजेमदप्रोनामिति । तथा च प्राशित्रं प्रकृत्य पठ्यते । द्विर्हविषोवद्यतीति । तेन यदवद्यति तद्यवमात्रं पिप्पलमात्रं वेति । शाखिनां तु पठ्यते । द्वे यकलेवद्यति यवमात्रे पिप्पलमात्रे वेति । पिप्पलमात्रमिति च पिप्पलफलमभिप्रेतम । न पिप्पलमात्रेण सहोच्चारणात् । कचिच्च दर्शनाद्यायामं घोतुम्यरंवा पिप्पलं वा बन्धनात्प्रमुच्येतेति फलविषय एव पिप्पलशब्दः । आज्यं चान्यतरतो भवत्युभयतो वा अन्यतरत आज्यं कुर्यादधस्ताद्वोपरिष्टाद्वेति वचनात् । तथा स आज्यस्योपस्तीर्य द्विर्हविषोवदायायोपरिष्टादाज्यस्याभिघारयति । तथैव यजमानस्यावदानमेवमेषतदिति । आग्नेयान्मस्तकं विरुज्य द्वे यकलेवद्यति यवमात्रे पिप्पलमात्रे वेति । वचनमङ्गीकृत्याग्नेयादित्युक्तम् ॥ ७२ ॥

भागांश्च ॥ ७३ ॥

गृह्णातीति सूत्रशेषः । तांश्चाग्नेयादेव प्राशित्रसह चरतया । स चायमुपदेशः । क्रमस्तूपरिष्टाद्वक्ष्यते । त्रित्व तावदपर्यवसितमन्तरान्यत्प्रक्रियते । तत्किमर्थं चतुर्धाकरणसिद्धान्तसमानन्यायतयेति निरवद्यम् ॥ ७३ ॥

अध्वर्युसम्भरेण ब्रह्मणे प्रदाय पूर्वेणैके
ऽप उपस्पृश्येडां पञ्चावत्तां दक्षिणतो म-

ध्याच्च यावद्धविस्स्विष्टकृद्वदाज्यम् ॥ ७४ ॥

प्रक्रान्तं प्राशित्रमध्वर्युसञ्चरेण समर्प्य पूर्वेण चाहवनीयं त-तोप उपस्पृशति । हृदिय. प्राशित्रमिति । ततश्च तदभावे न भवति । तत इडां पञ्चावत्तां गृह्णाति । यावद्धविरिति । प्रतिपत्तित्वात् । ननु च दक्षिणतो मध्याच्च स्विष्टकृद्वदाज्यमिति चोक्ते पञ्चावत्तग्रहणमपा-र्थ्यम् । सर्वेषां तुल्यत्वप्रज्ञापनार्थेति कश्चित् । तदेतदसत् । न हि पुरोडा-शस्याज्यस्य च तुल्यता शक्याभ्युपगन्तुम् । प्रतिपाद्यते ह्यत्र पुरोडा-शो नाज्यमसंयुक्तार्थविधानात् । तेन पत्नीसंयाजेडायामपि पञ्चावत्तता यथा स्यादिति पञ्चावत्तग्रहणम् । ननु चानुक्तेऽपि पञ्चावत्तमेवेदम् । ततश्च तत्रापि भविष्यत्येव । नेह पुरोडाशप्राधान्यात्तत्कार्ये च पत्नी-संयाजेष्वाज्यप्रसङ्गाद्द्विरेवाज्यं प्राप्नोति । नोपस्तरणाभिघारणप्राप्ति-रिति । तेन सुष्ठूच्यते पञ्चावत्तामिति ॥ ७४ ॥

यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ता-
द्ध्रुवायाः करोति ॥ ७५ ॥

पूर्वार्द्धे पुरोडाशस्य प्रशीर्यं पुरस्ताद्ध्रुवायै निदधातीति सूत्र-स्यार्थः । अयं च भागानामवसरः । ततश्च विनियोगक्रमेण पूर्वमग्नीध-स्ततो ब्रह्मणस्ततो यजमानस्येति । ध्रुवायाः पुरस्तादिति व्यतिरिक्ते दे-शे करोति ॥ ७५ ॥

इडां होत्रे प्रदायाविसृजन् दक्षिणाति-
क्रामति ॥ ७६ ॥

प्राशित्रवदिह स्यादिडाग्रहणं क्रियते । तां होत्रे प्रदायाविसृ-जं दक्षिणातिक्रामति ॥ ७६ ॥

इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति ॥ ७७ ॥

प्रकृतत्वादिडाग्रहणमनर्थकं क्रियते च पर्वाग्रं यथा तत्र वि-धेयत्वेनार्थम् । यथा च दर्शयति । स होतुरिड निलिम्पति नखांगो-ष्ठयोर्निलिम्पत इति प्रहस्याह मनसे मनुर्विभयाद्यदिदं यं मे तनिष्ठ

यज्ञस्य यज्ञियमिडा पाकयज्ञिया यद्वै म इह रक्षांसि यज्ञं न हिंस्युरिति तमेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्रापयत तथो एवैनामेष एतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्रापयते ऽथ यत्प्रत्यक्षम प्राश्नाति तिनेदनुपहूतां प्राश्नानीत्येतदेवैनां प्रापयते यदोष्ठयोर्निलिम्पत इति इडाया अङ्गुलिपर्वाञ्जन दर्शयति । नेन प्रकृतायामपीडायां पुनरिडाग्रहणम । पर्वशब्दः सन्धिवचनो लिङ्गात् । काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परीति । तथा काण्डात्काण्डाद्धृवंशा पर्वशः पर्वणः प्ररोहतीति दूर्वोच्यते । तत्र पर्वशब्दं सन्धिवचनं दर्शयति ॥ ७७ ॥

अवान्तरेडामादधाति पूर्ववत् ॥ ७८ ॥

अवान्तरेडामिडाया एव होतुः पाणौ समवद्यति । अथ होतुः पाणौ समवद्यति समवत्तामेव सतीं तदेनां प्रत्यक्षं होतरि श्रयतीति श्रूयते । पूर्ववद्ग्रहणाच्च पञ्चावत्तामिति । पुरोडाशावदानादेव पञ्चावत्तता । न ह्याज्यं संसृष्टरूपत्वाद्विवेकेन गृहीतुं शक्यते इति ॥ ७८ ॥

इडाञ्च ॥ ७९ ॥

[1]आदधातीति वर्तते ॥ ७९ ॥

सर्वे ऽन्वारभन्ते ॥ ८० ॥

प्रकृतत्वादिडामिति केचित् । अपरे तु वाक्यसामर्थ्याद्धोतुरन्वारम्भमिच्छन्ति स्वर्गस्य लोकस्यैतद्द्वारं यद्धोता तस्माद्धोतारमन्वारभेतेति ॥ ८० ॥

इडोपहूतेत्युच्यमाने आग्नेयं बर्हिपदं करोति
ब्रह्मपिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून् मे
धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे
धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य
प्रजया पशुभिराप्यायस्वेति ॥ ८१ ॥

---

१ होतुर्दत्ते इति पाठः ।

इडोपहूतेऽवेत्युच्यमाने आग्नेयं बर्हिषदं करोति प्रथमपिरञ्सेस्यनेन मन्त्रेण । विपरिणम्यते चासावनेकयजमानके कर्मणि ॥ ८१ ॥

## तं चतुर्धा कृत्वा ॥ ८२ ॥

तन्निर्देशाच्चतुर्धा कृतं बर्हिषदं करोति । आग्नेयं चतुर्धाकरोतीति वचनादाग्नेयमित्युक्तम् । चतुर्धाकरणस्य च स्यादेशार्थत्वात्तस्य च यजमानकर्तृकत्वात् क्त्वाप्रत्ययसामर्थ्याच्च यजमानश्चतुर्धा करणे । सत्रेषु च स्यादेशाभावाद्भावश्चतुर्धा करणस्य ॥ ८२ ॥

## बर्हिषि ऋत्विग्भ्य आदिशति ॥ ८३ ॥

बर्हिषीति नियमार्थमुच्यते । आदेशश्च वाचनिको न समर्पणं यावत् । तेनेदं ब्रह्मण, इदं होतुरित्येवमाद्यादेशः ॥ ८३ ॥

## उभौ वाविशेषात् ॥ ८४ ॥

उभौ वा चतुर्धा क्रियेते नाग्नेय एव । कुतो ऽविशेषात् । अथ यत्र प्रतिपद्यते तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोतीत्यविशेषश्रवणात् । किं च चरितार्थत्वाविशेषात्संस्कार्यत्वाविशेषाच्च । तथा प्रतिपत्तिसव्यपेक्षत्वादिति याज्ञिकाः । अत्रोच्यते । स्यादेतदेवं यद्यविशेषः स्यात् । अस्ति तु विशेषः । आग्नेयं चतुर्धाकरोतीति । यद्यपि च माध्यन्दिनीयायां पुरोडाशमात्रश्रवणम् । तथापि स्याग्नेयमिति वचनाद्विशेषनिवृत्तैव व्याख्या । न चाग्नीषोमीय आग्नेयः । यत्र हि निरपेक्षादग्निपदात्तद्धित उत्पद्यते स आग्नेयः । न च सोमसव्यपेक्षस्याग्निपदस्य सामर्थ्यमस्ति । सापेक्षं चासमर्थं भवतीति समर्थानां प्रथमाद्वेति ह्यधिकृत्य तद्धिताम्नानम् । तेनाग्नीषोमीयस्यानाग्नेयत्वाच्चतुर्धा करणाभाव इष्यते । यद्येवमुभौ वाविशेषादिति सूत्रं किमर्थम् । आशङ्कानिवृत्त्यर्थम् । अपि च प्राशित्रभागानां आग्नेयादिति सूत्रितम् । आग्नेयाद्भागाद्यति । तत्सिद्धान्तार्थं वक्तव्यमुभौ वाविशेषादिति । तत्तु तो वचनात् । इयमांत्रस्य हि प्राशित्रं श्रूयते । द्विर्हविषोऽवद्यतीति । भागानां च । पूर्वार्धे पुरोडाशस्य प्राशीर्येति पुरोडाशसंयोग । यद्येवं किमर्थं सूत्रमाग्नेयादिति । आग्नेयाग्मलर्क विरुज्येत्ततोवचनादस्तु तदर्थेति चेद ।

न, प्रदेशविधिपरत्वाद्वाक्यस्य । तस्मात्सर्वत्र प्राशित्रग्रहणं न्याय्यम् । भागास्तु पुरोडाशसंयोगात्सान्नाय्ये न प्रवर्त्तन्ते । दार्भिकसिद्धान्तेपि न चतुर्द्धा करणं सान्नाय्यस्यापुरोडाशत्वात् । तस्य च पुरोडाशसंयोगात् । प्रकृतौ ह्यौपदेशिका धर्माः । सान्नाय्यविकारे च पशौ चतुर्द्धाकरणाभावात् । अथ पशुं सम्मृशन्तीति हि प्रकृत्याहैतर्हि सम्मर्शनस्य कालोथ यत्पुरा सम्मृशति य इम उपतिष्ठन्ते ते विमथिष्यन्त इति शङ्कमानो यद्यु विमथनाश शङ्कातत्रैव सम्मृशेदिति चतुर्द्धा करणाभावो विमथनाशङ्कायां सम्मर्शनविधिसस्तत्र इति ॥ ८४ ॥

अत्र पितर इति यजमानो जपति ॥ ८५ ॥

चतुर्द्धाकृतं पुरोडाशमालभ्य उत्तरत्र विसर्गोपदेशात् । अत्र पितर इति जयमानो जपेत् ॥ ८५ ॥

विसृज्यामी मदन्तेति ॥ ८६ ॥

जपतीति वर्त्तते । अयं च कैश्चित्प्रोषितस्यापि यजमानस्येष्यतेऽनाश्रितत्वात् । तत्पुनरनुपपन्नम् । आलम्भपूर्वकत्वाद्विसर्गस्य । तेन यथापूर्वेऽध्वर्युरेवमुत्तरेपीति । चतुर्द्धा करणे च सत्यनयोः प्रवृत्तिस्तत्र पितॄणां भाजनेनेति वाक्यशेषात् ॥ ८६ ॥

एकैकमाहरति ॥ ८७ ॥

भागिने भागमिति वाक्यशेषः । तच पक्षाशोपहारतादर्थ्यो भक्षणार्थं हरणम् । द्रव्यसंस्कारत्वाच । अन्वाहार्येपि तथेति चेत् । न, परिक्रयार्थत्वाद्द्रव्यसस्कारत्वाच्चेति ॥ ८७ ॥

द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् ॥ ८८ ॥

अथ यत्राहोपहूते द्यावापृथिवी इति तदग्नीध आदधातीति हि श्रूयते । तत्र कैश्चिद्भागद्वयं उपस्तरणाभिघारणोपेतं षडवत्तमिष्यते । अन्यथा षडवत्ताभावात्तत्पुनर्नोपपद्येत । न ह्यत्रोपस्तरणाभिघारणे विहिते । कथं तर्हि षडवत्तमुच्यते । प्रत्यस्तमितावयवार्थवृत्तितया षडवत्तशब्दोऽग्नीद्भाग उपचरित उपलभ्यते । मदग्कर्णादिवद्यत् ॥ ८८ ॥

## प्राश्नात्युपहूता पृथिवी इति ॥ ८९ ॥

तत्पञ्चयत्तमग्नीत्प्राश्नात्युपहूता पृथिवीत्यनेन मन्त्रेण । अथ द्वितीयमुपहूतो द्यौरिति श्रुतमपि सूत्रकृता नोपनिबद्धम् । वाक्यभेदादेव तदर्थोपलब्धेः ॥ ८९ ॥

## आशासाने मयीदमिति यजमानो जपति ॥ ९० ॥

भूयसि हविष्करण उपहूत इत्येवमाद्याशीः प्रार्थनमाशासनम् । एषा वा आशीरिति वचनात् । अत्र मयीदमिति यजमानो जपति । अत्र यजमानग्रहणं शक्यमकर्तुम् । पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यादिति परिभाषितत्वात् । एवं तर्हि पत्नीसंयाजेडायामपि यजमानो यथाजपेदिति । तत्र हि पत्न्युपहवः कचिदाम्नातः । उपहूतेयं पत्नीति । आशीर्वचनेनैकवाक्यत्वात्तस्या एव जपो मा भूदिति यजमानग्रहणम् ॥ ९० ॥

## उपहूतां प्राश्नन्ति युक्ताः ॥ ९१ ॥

उपहूतामिडामृत्विजः प्राश्नन्तीत्यर्थः । यजमानश्च । सा चैषा इडा प्राशित्रभागाश्च यावदुक्तोऽपि वर्तते । द्रव्यसंस्कारत्वात् ॥ ९१ ॥

## [1]पवित्रयोर्मार्जयन्ते परेण वेदिं सुमित्रि-या न इति ॥ ९२ ॥

तृतीयार्थे सप्तमी । न ह्यत्र सप्तम्यर्थसम्भवः । करणता तु सम्भवति मार्जनं प्रति । सुपां हि स्थाने सुपः छन्दसि भवन्तीति । छन्दोवत्सूत्राणि चेति स्मर्यते । तेनात्र सप्तमी तृतीयार्थे । लिङ्गाच्च । पवित्रपूता यद्वत ऊर्ध्वमिति । केचिच्चात्रोदकेन मार्जनमिच्छन्ति । मन्त्रलिङ्गात् । सुमित्रिया न आप इति । तत्पुनरविधायकत्वान्मन्त्राणामनुपपन्नम् । उदकानुपदेशाच्च । न चान्यदत्र शुद्ध्यर्थे करणं नास्ति । यथा पत्न्युपपाते । न च पवित्राभ्यां शुद्ध्यर्थो न सम्भवति । लि-

---

१ वेदिमपरेणापविद्या, पवित्राभ्यामात्मानं मार्जयन्ते शोधयन्त इत्यर्थः ।

न, प्रदेशविधिपरत्वाद्वाक्यस्य । तस्मात्सर्वत्र प्राशित्रग्रहणं न्याय्यम् । भागास्तु पुरोडाशसंयोगात्सान्नाय्ये न प्रवर्त्तन्ते । दार्विकसिद्धान्तेऽपि न चतुर्द्धा करणं सान्नाय्यस्यापुरोडाशत्वात् । तस्य च पुरोडाशसंयोगात् । प्रकृतौ ह्यौपदेशिका धर्माः । सान्नाय्यविकारे च पशौ चतुर्द्धाकरणाभावात् । अथ यत्पुरा सम्मृशन्तीति हि प्रकृत्याहैतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा सम्मृशति य इम उप तिष्ठन्ते ते विमथिष्यन्त इति शङ्कमानो यद्यु विमथनाश्च पङ्क्तावत्रैव सम्मृशेदिति चतुर्द्धा करणाभावो विमथनाशङ्काया सम्मर्शनविधिसस्तत्र इति ॥ ८४ ॥

## अत्र पितर इति यजमानो जपति ॥ ८५ ॥

चतुर्द्धाकृतं पुरोडाशमालभ्य उत्तरत्र विसर्गोपदेशात् । अत्र पितर इति जयमानो जपेत् ॥ ८५ ॥

## विसृज्यामी मदन्तेति ॥ ८६ ॥

जपतीति वर्त्तते । अथ च कैश्चित्प्रोषितस्यापि यजमानस्येष्यतेऽनाश्रितत्वात् । तत्पुनरनुपपन्नम् । आलम्भपूर्वकत्वाद्विसर्गस्य । तेन यथापूर्वेऽध्वर्युरेवमुत्तरेऽपीति । चतुर्द्धा करणे च सत्यमयो प्रवृत्तिस्तत्र पितॄणां भोजनेनेति वाक्यशेषात् ॥ ८६ ॥

## एकैकमाहरति ॥ ८७ ॥

भागिने भागमिति वाक्यशेषः । तत्र यज्ञाङ्गोपहारत्वाद्दर्शाद्भक्षणार्थं हरणम् । द्रव्यसंस्कारत्वाच्च । अन्वाहार्येऽपि तथेति चेत् । न, परिक्रयार्थत्वाद्द्रव्यसंस्कारत्वाच्चेति ॥ ८७ ॥

## द्यावापृथिव्योरुपह्वानेग्नीधे पडवत्तम् ॥ ८८ ॥

अथ यत्राहोपहूते द्यावापृथिवी इति तदग्नीध आदधातीति हि श्रूयते । तत्र कैश्चिद्भागद्वय उपस्तरणाभिघारणोपेतं पडवत्तमिष्यते । अन्यथा पडवत्तामावात्पुनर्नोपपद्येत । न ह्यत्रोपस्तरणाभिघारणौ विहितौ । कथं तर्हि पडवत्तमुच्यते । प्रत्यस्तमितावयवार्थवृत्तितया पडवत्तशब्दोऽग्नीध्भाग उपचरित उपलभ्यते । मदन्तीदिवद्यत ॥ ८८ ॥

प्राश्नात्युपहूता पृथिवी इति ॥ ८९ ॥

तत्पूर्वस्तमग्नीत्प्राश्नात्युपहूता पृथिवीत्यनेन मन्त्रेण । अथ द्वितीयमुपहूतो द्यौरिति श्रुतमपि सूत्रकृता नोपनिबद्धम् । वाक्यभेदादेव तदर्थोपलब्धेः ॥ ८९ ॥

आशासाने मयीदमिति यजमानो जपति ॥ ९० ॥

भूयसि हविष्करण उपहूत इत्येवमाद्याशीः प्रार्थनमाशासनम् । एता वा आशीरिति वचनात् । अत्र मयीदमिति यजमानो जपति । अत्र यजमानग्रहणं शक्यमकर्तुम् । पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यादिति परिभाषितत्वात् । एवं तर्हि पत्नीसंयाजेड्डायामपि यजमानो यथाजपेदिति । तत्र हि पत्न्युपहवः कचिदाम्नातः । उपहूतेयं पत्नीति । आशीर्वचनेनैकवाक्यत्वात्तस्या एव जपो मा भूदिति यजमानग्रहणम् ॥ ९० ॥

उपहूतां प्राश्नन्ति युक्ताः ॥ ९१ ॥

उपहूतामिडामृत्विज प्राश्नन्तीत्यर्थः । यजमानश्च । सा चैषा इडा प्राशित्रभागाश्च यावदुक्तोऽपि वर्तते । द्रव्यसंस्कारत्वात् ॥ ९१ ॥

[1]पवित्रयोर्मार्जयन्ते परेण वेदिं सुमित्रिया न इति ॥ ९२ ॥

तृतीयार्थे सप्तमी । न ह्यत्र सप्तम्यर्थसम्भवः । करणता तु सम्भवति मार्जनं प्रति । सुपां हि स्थाने सुपः छन्दसि भवन्तीति । उभयोपस्सूत्राणि चेति स्मर्यते । तेनात्र सप्तमी तृतीयार्थे । लिङ्गाच्च । पवित्रपूता यदत ऊर्ध्वमिति । केचिद्यायोदकेन मार्जनमिच्छन्ति । मन्त्रलिङ्गात् । सुमित्रिया न आप इति । तत्पुनरविधायकत्वान्मन्त्राणामनुपपन्नम् । उदकानुपदेशाच्च । न चान्यदत्र मृज्यर्थे करणं भाति । यथा पशुप्रपान्ते । न च पवित्राभ्यां मृज्यर्थो न सम्भवति । लि-

---

१ वेदिमपरेणापविश्य. पवित्राभ्यामात्मानं मार्जयन्ते शोधयन्त इत्यर्थः ।

ङ्गाद्य । पवित्रेण पूताः पवित्रपूता इति । यदि चोदकमपि साधन स्यात् । पवित्रपूता इति समासो न स्यादसामर्थ्यात् । यच्च श्रूयते पवित्रवति मार्जयन्त इति । तत्रापि पवित्रवद्वस्तुनिर्देशादनध्यवसाय एवेत्यन्यथानेयमिति । मन्त्रश्च सुमित्रिया न आप ओषधयः सन्त्वित्येवमन्तः स्यात्परिसमाप्तत्वाद्वाक्यस्य । न च दुर्मित्रिया इति प्रदेशान्तरे न विनियुक्तः । न च परादिना पूर्वान्तन्यायोऽत्र सम्भवत्यप्रकरणसमधीतत्वात्तस्य । प्रकरणान्तरसमधीते तु यत्नाद्वाक्यसमुच्चयो भवति । यथा ज्योतिरसीति समिदन्तेन ॥ ९२ ॥

यजमानस्य प्राणापानौ पातमिति प्रस्तरे ते करोति ॥ ९३ ॥

प्रकृतत्वात्पवित्रप्राप्तौ ते इत्यवाच्यम् । उच्यते च । तेन शाखापवित्रव्युदासार्थमिति । तस्यापि समस्य मार्जनात्प्राप्तिरतस्ते इति यत्नः क्रियते । अनेकयजमानके च विपरिणामो मन्त्रस्य । मार्जनं चेडाभक्षनिमित्तत्वात्तदभावे न भवति । पवित्रप्रतिपत्तिस्तु भवति प्रतिपत्तेरेव ॥ ९३ ॥

तूर्ष्णीं वा ॥ ९४ ॥

पवित्रयोः प्रस्तरे करणम् ॥ ९४ ॥

अत्र वा ब्रह्मा प्राश्नाति ॥ ९५ ॥

तुल्यश्रुतित्वादत्र वा प्राशित्रभक्षणम् ॥ ९५ ॥

[1]भागमस्मै परिन्तिहरति ॥ ९६ ॥

अस्मै ब्रह्मणे पूर्वेणाहवनीयं भागं समर्पयतीत्यर्थः ॥ ९६ ॥

यजमानभागं चाग्रोपिते ॥ ९७ ॥

---

१ अयं च चतुर्धाकरणभागव्यतिरिक्तः, तेषां दानस्य पूर्वमेव विहितत्वात् ।

अप्रोषिते यजमानभागं च परिहरति[1] ॥ ९७ ॥

२अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते प्रजापतेर्भागो ऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मे धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिन् लोक इह चेति ॥ ९८ ॥

सर्वार्थत्वात्स्थाल्यैवाभिघारणम् । आलम्भो यजमानस्य स्यात् । मन्त्रलिङ्गात् । दाने च तस्याधिकारात् । अध्वर्योर्वा करणत्वात् । करणमन्त्रविषयाशिषां च यजमानयोगित्वं न्यायात् । तत्कथं आध्वर्यवः पदार्थः मन्त्रोपि । लिङ्गेन यजमान आशङ्कते । प्रधानभूतश्च पदार्थः । गुणभूतश्च मन्त्रः । तेनाध्वर्योरालम्भेधिकारो युज्यते । तन्मन्त्रेपि लक्षणया यजमानाभिधानमित्यदोषः । तथा च लिङ्गं यां वै कांश्च यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सेति । ऊर्गसीत्यस्यापाध्वर्युपरत्वाद्यद्यपि विपरिणामः । ऊर्जं मयि धेहीत्यत्रापि केचिदिच्छन्ति । तत्पुनर्विचारयितव्यम् । न हि प्रकृतोर्विपर्यासेष्यते । तेनान्यदेवोर्जोन्तरं प्रार्थ्यते । ततश्चाविपरिणाम इष्यते । मयि धेहीति गणयन्नेव विपरिणम्यते । अभिघारणं तु गवादेरनुपकारकत्वान्न प्रय-

---

१ यदि तु यजमानः प्रोषितो भवति तदाऽध्वर्युणा दत्त यजमानभागं ब्रह्मा गृहीत्वा प्राशित्रे निदधाति, प्रस्तरहोमांतरं तु स हूयत इत्यर्थः ।

२ भागपरिहरणानन्तरमध्वर्युरन्वाहार्यमभिघार्य स्थालीस्थेनाज्येनोपरि निश्रया उत्तरत उद्वास्य दक्षिणाग्नेरुपरिष्टात्तुपाय गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ् नीत्वा दक्षिणाग्नेर्दक्षिणेन अन्तरा ब्रह्मयजमानौ हृत्वा ब्रह्मयजमानयोरन्तरालेन नीत्वा तत्रापि यजमानं दक्षिणेन ब्रह्माणमुत्तरेण पूर्वेणाहवनीयं प्रणीतोत्करावन्तरा हृत्वा वेदिमध्ये आसाद्यालभतेऽध्वर्युरित्यर्थः ।

र्त्तते । स्वादिम्ने ह्योदनोऽभिधार्यते । न च गोः स्वादिम्ना प्रयोजनम् । ब्रह्मयजमानयोस्तु अन्तराहरणं गौणं भवति । वाससस्तु प्रवर्त्तते ऽविरोधादिति ॥ ९८ ॥

## १सा दक्षिणा ॥ ९९ ॥

स दक्षिणेति वक्तव्ये दक्षिणागतलिङ्गान्तर्भावेन सेत्युक्तम् । अयं च परिक्रयार्थः । ततश्च पक्वान्नोपहारतादर्थ्येऽपि दानसमनन्तरं भक्षणं न भवति । चतुर्द्धाकरणे तु द्रव्यसंस्कारात्पक्वान्नोपहारतादर्थ्याच्चानन्तरमेव भक्षणम् ॥ ९९ ॥

## उदगुद्वासयति हविश्च ॥ १०० ॥

उदगुद्वासनमन्वाहार्यस्य हविषश्च पुरोडाशादेः ॥ १०० ॥

## २समस्योल्मुके समिधमादायाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ १०१ ॥

समास आहवनीय एव प्रतिक्षेपः । ते पुनरनुसंस्पर्शयन्तीति हि श्रूयते । समिच्च या साऽनुयाजार्थे परिशेषिता तामादायाह ब्रह्मन्प्रस्थास्यामीत्येवमादि । प्रैषद्वयं चैतत् । तत्रैकोऽनुयाजार्थस्ततश्च तदभावे आतिथ्यादौ न भवति । सम्मार्गप्रैषस्तु सम्मृड्ढिद्वारेण सर्वार्थत्वात्प्रतिपत्त्यर्थकर्मसाधनभूताहवनीयसंस्कारोपजनकत्वेनानुयाजाभावेऽपि प्रवर्त्तत एव । तथा च सम्मार्गं प्रकृत्याह युक्तो यदत ऊर्ध्वमसंस्थितं यज्ञस्य तद्दहादिति । अत्र केचित्पूर्वं समिदादानमिच्छन्ति । तत उल्मुकसमासः । कुत एतत् । एवं विकृतौ ह्यनुप्रवृत्तिर्दृश्यते । पात्रप्रक्षालनान्तानुयाजाः समिदादीनि । तदेतदनुपपन्नमिव । न ह्यत्र सूत्रभङ्गे किञ्चित्कारणमस्ति । तदभावे च यथाव्यवस्थितसूत्रव्याख्यैव युज्यते । यत्तु समिदादीत्युक्तम् । तन्न्यायपूर्वकत्वादेक-

---

१ य एषोऽन्वाहार्य उक्तः सा दर्शपूर्णमासयोर्दक्षिणा भवति ।

२ अध्वर्युरुल्मुकं आहवनीये प्रक्षिप्य प्राक् परिशेषितां समिधमादाय 'ब्रह्मन् प्रस्थास्यामि' इति ब्रह्माणं प्रति ब्रवीति; अग्नीधं चाग्निमग्नीत्सम्मृड्ढीति ब्रवीतीत्यर्थः ।

स्यादिशब्दस्य लोपेन समिध आदौ यत्तदादीति द्रष्टव्यम् । समिदादान च प्रैषाद्व केचिदिच्छन्ति । तदुत्तरकालीनप्रैषविधानात् । न चाध्वर्योः समिदाधान येन दृष्टार्थता स्यात् । अत आदानस्य प्रैषार्थतेति । तच्चानुपपन्नमदृष्टार्थप्रसङ्गात् । दृष्टार्थश्चात्र आधान तत्तश्च तादर्थ्ये नादृष्टपरिकल्पन भवति । नन्वाधानमग्नीधो नाध्वर्योरिति कथ दृष्टार्थता स्यात् । उच्यते । अर्थादग्नीध समर्पयिष्यत्येव दृष्टार्थता सम्भवति । तस्मादाधानार्थमेव । एव च सत्यवभृथेनुयाजसद्भावादाधानाभावाद्दानमिति । उल्मुकममासश्चानुयाजार्थं आहवनीयसस्कार । तथाचाऽस्मृतावनुयाजनिर्वृत्युत्तरकाल पुनरसमास । स्वावयवेनोपचयस्य सस्कारत्वादवभृथेप्यामपि प्रवर्त्तते । अग्निमग्नीत्सम्मृड्ढीति वाक्यस्य विपरिणामश्चोदितार्थाभिधानात् ॥ १०१ ॥

एषात इति होतानुमन्त्रयते ॥ १०२ ॥

अनुमन्त्रणं च समिध स्यात् । तां होतानुमन्त्रयत इति वचनात् । मन्त्रलिङ्गाच्च । ततश्च वरुणप्रघासेषु विपरिणाम । एते ते समिधौ ताभ्यामिति ॥ १०२ ॥

[1]अजानति यजमानः ॥ १०३ ॥

स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोनुमन्त्रयेतेति वचनात् ॥ १०३ ॥

संमार्ष्टि पर्वूवदपरिक्रामꣳ सकृत्सकृत्सस्रुवाꣳ समिति ॥ १०४ ॥

पूर्ववद्विन सम्मार्ष्टि अपरिक्रम्य मध्यत्सरत् । त्रिस्त्रि परिक्रम्येति मा भूत् । सस्रुवाꣳसमिति च विशेषमन्त्रस्य चावभृथे परिणाम ॥ १०४ ॥

---

१ अनुमन्त्रण कर्तुं होतरि अजानति यजमान एषात इति समिधमनुमन्त्रयत इत्यर्थ ।

ब्रह्मानुज्ञातोऽनुयाजैस्त्रिभिश्चरत्यौपभृतं समानीय ॥ १०५ ॥

ब्रह्मानुज्ञात इत्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः । उक्तं च । एतं त इति समिदामन्त्रितः प्रसौतीति । वाच्यं वा तदनुज्ञोत्तरकालं प्रवृत्तिर्यथा स्यादिति । अथवा प्रैषसमनन्तरं तदर्थप्रवृत्तिर्माभूत् न्यायतो हि प्रैषसमनन्तरं प्रैषार्थः प्राप्नोति तन्माभूदित्यत इदमुच्यते । ब्रह्मानुज्ञात इति । नत्वथानुज्ञात उत्तरेणाहवनीयं सम्मति निदधातीति । त्रिभिरिति चानुयाजत्रित्वप्रज्ञापनायोच्यते । अथवा चतुर्थस्यानुयाजाभावप्रज्ञापनार्थम् । यद्यप्यनुयाजान्ते स्रुचौ जुहोतीति प्राक् ततः स्रुग्घोमः प्राप्नोति । नैतदेवम् । अनुयाजाङ्गं होमो न त एव निरुपचरितान्तस्तस्माददोषः । औपभृतं समानीय जुह्वाम् ॥ १०५ ॥

अतिक्रम्याश्राव्याह देवान्यजेति ॥ १०६ ॥

अतिक्रम्याश्रावणवचनमनुवाक्यानिरासार्थम् । याज्यापुरोऽनुवाक्यावन्तो यजतय इत्यनेन प्राप्तत्वात् । अथ यदपुरोऽनुवाक्यका अनुयाजा भवन्तीति विशेषवचनात् तन्निरासः । तस्मात्स्यादभिहितमतिक्रम्याश्राव्याह देवान्यजेति ॥ १०६ ॥

यज यजेत्युत्तरौ ॥ १०७ ॥

उत्तरौ द्वावनुयाजौ प्रति यज यजेत्येवं वक्तव्यम् । एवं हि श्रूयते ॥ १०७ ॥

देवान् देवानिति वा सर्वत्र नियमशब्दात् ॥ १०८ ॥

सर्वत्र देवान्यजेत्येवं प्रयोगः । कुत एतत् नियमशब्दात् । देवान्यजेत्येवाध्वर्युराह, देवं देवमिति प्रैषेषु होतेति । अथ यज यजेत्युत्तरयोरभिधीयते तत्रैवकारो न समर्थितः स्याद्देवान्यजेत्येवाध्वर्युराहेति ॥ १०८ ॥

किञ्च—

विकृतिदर्शनाच्च ॥ १०९ ॥

विकृतौ हि दर्शनं भवति । अतिक्रम्याश्राव्याह देवान्यजेति । सोऽयमर्थहिर्यो ह्यननुयाजौ यजतीति। तेन नियमशब्दाद्देवान्देवानिति चा मर्वत्र । यजेति चोत्तरयोरिति तु शाखान्तरात्। एवं च सति वरुणप्रघासादौ यत्र यज यजेति पुनर्वचनम् तत्र नियम एवेष्यत इति सम्प्रदायः ॥ १०९ ॥

[1]प्रतीचो जुहोति ॥ ११० ॥

प्रत्यञ्चोऽनुयाजास्तदपानमिति वचनात् ॥ ११० ॥

उपसत्सु च ॥ १११ ॥

अग्निकारमुपजीवन्नाह । उपसत्सु च प्रत्यञ्चो होमाः । तुल्यं हि शास्त्रमत्रापि ॥ १११ ॥

प्रतीचो जुहोतीति वचनात्कर्तुरपि प्रत्यगपसरणे प्राप्ते ऽनियमे वा नियमार्थमाह—

[2]ध्रुवः ॥ ११२ ॥

चतुर्थं समानीय प्राचीम् ॥ ११३ ॥

चतुर्थं होमं प्रति औपभृतं समानीय प्राचीमाहुतिं जुहोति । तत्र यजति स्थानादेत्य । यजतीनां हि स्थानं परिभाषितम् । तिष्ठन्दुङ्क्प्राङिति । तथाचोक्तं परिधीनपरेण सञ्चरो होष्यत इति । ननु च होममात्राभिसम्बन्धात्सर्वत्रैवं प्राप्नोति । नाश्रावणाभिसम्बन्धाच्च आश्रावयिष्यन् सव्येनातिक्रामति दक्षिणेनाश्राव्येति । नन्वाश्रावणानिक्रमणविधेये इदं वचनं अनाश्रावणहोमे त्वनियम इति । उच्यते । एतन्मूलमेवैतत्सूत्रं वचनान्तराभावात् । तस्मादाश्रयणसम्बन्धेनैवातिक्रमणं नेतरत्रेति । इतरहोमस्तूत्तरत एव व्यवस्थितेन कर्तव्यः । तथाक्तमुत्तरत उपचारो यज्ञ इति । चतुर्थग्रहणं चानुयाजाङ्गत्वप्रज्ञापनार्थम् । इतरथा ह्यनुयाजत्रयव्यतिरेके-

---

१ एतांस्त्रीननुयाजानध्वर्युः प्रत्यक् संस्थान् जुहोतीत्यर्थः ।

२ अध्वर्युरेकत्र स्थित एव त्रीननुयाजान् प्रत्यक् सस्थान् जुहोति न प्रत्यनुयाजं प्रत्यगपसरतीत्यर्थः ।

णान्यदपूर्वोत्पादकं होमान्तरमाशङ्केत । अतश्चानुयाजप्रवृत्तौ प्रवृत्तिरस्य न तदभाव इति। एवं च सत्यनुयाजान्ते स्वरुं जुहोतीति साङ्गानुयाजकर्माभिनिर्वृत्त्युत्तरकालं स्वरुहोमः सिद्धो भवति। अथ वा देवानामेव देवतात्वमत्रापि यथा स्यादिति चतुर्थग्रहणम् । मन्त्राभावेऽपि चात्र स्वाहाकारोऽस्त्येवेति वक्ष्याम उपरिष्टात् ॥ ११३ ॥

अभिचरन्ननुयाजानुमन्त्रणमशन्यमुं जहि ह्रादुन्यमुं जह्युल्कुष्यमुं जहीति ॥ ११४ ॥

अभिचरन्ननुयाजानुमन्त्रणं करोति । अशन्यमुं जहीति । एवमादिभिः प्रतिमन्त्रं वाक्यभेदात् । तच्चाध्वर्युः पुरुषयोगाभावात्समाख्यानाच्च ॥ ११४ ॥

एवं प्रवृद्धौ समं विभजेत् ॥ ११५ ॥

एवमनुमन्त्रणानां विकारेऽनुयाजप्रवृद्धौ समो विभागः कर्त्तव्यः । समं स्यादश्रुतित्वादिति न्यायात् । अनुयाजप्राप्तौ च पुरुषार्थस्वरूपस्याप्यनुमन्त्रणस्य प्रवृत्तिरिष्टैवेत्यभिप्रायः ॥ ११५ ॥

स्वस्थानान्त्येन वोपायित्वात् ॥ ११६ ॥

न वा समो विभागः कर्त्तव्यः । किं तर्हि विकृतौ पठ्यमानानुयाजमन्त्राणां यत्स्वं स्थानं तदन्त्येन धर्मसम्बन्धः कर्त्तव्यः । ततश्च द्वितीयादीनां नाराशंसानुमन्त्रणमितरेषां स्विष्टकृदनुमन्त्रणमिति। कुत एतदुपायित्वात् । प्रथमे ह्यभिनिर्वृत्ते द्वितीयेऽनिर्वृत्ते तमेव प्रत्यपेक्षा न प्रथमं तृतीयं वा । एवं द्वितीयेऽभिनिर्वृत्ते तृतीयविषयापेक्षेति । ततश्च स्वस्थानान्त्ययोरेवायमभ्यास इति । यद्यपि च पूर्वान्त्यस्याभ्यासो न्याय्यः । तथापि पाठक्रमाद्द्वितीयस्याभ्यास इष्यते । प्रयाजेषु च चतुर्थान्त एव पाठ इति । तेन युक्तस्तत्र पञ्चमस्यैवाभ्यासः। प्रयोजनम्। प्राङ्नाराशंसादभ्यासविनाशो साऽभ्यासो द्वितीय आवर्त्तते। एवं तृतीयेऽपि द्रष्टव्यम्। आह च—

अनुत्पत्तौ तु या संख्या साऽभ्यासेनैव पूर्यते।
इत्येतेनानुयाजानामभ्यासो विहितावितिं ॥

तस्यान्याभ्यास इष्येत न स्यात्पाठो यदान्तरा ।
सति त्वन्तरपाठे हि नान्यस्याभ्यास इष्यते ॥
देवीर्द्वारो यदि ह्येष प्रथमाभ्यास इष्यते ।
निवृत्तत्वात्स्वरूपेण तस्य न ह्युपपद्यते ॥

किञ्च—

अकृते हि द्वितीये च तदपेक्षैव युज्यते ।
स्वस्थानान्त्येन चोपायादिति सूत्रमुदाहृतम् ॥
प्रयाजेषु तु पाठस्य न्यायेनाभिप्रधाक्यता ।
अतः पञ्चम एवासौ पौतः पुन्येन भाव्यते ॥

अत्रोच्यते । एवं प्रवृत्तौ सर्वं विमर्जत् । स्वस्थानान्त्येन चोपायादिति । अनेनानुमन्त्रणविषयो निर्णयः कृतः । न च पुरुषार्थस्वरूपस्यानुमन्त्रणस्य विकारे अनपेक्षितत्वात्प्रवृत्तिरस्ति । न च खादिरं वीर्यकामस्य यूपं कुर्यादिति वत् प्रवृत्तिरिष्यते । तत्र हि खादिरः क्रत्वपेक्षयैव प्रवृत्तः । इह त्वनुमन्त्रणनिबन्धनोभिचारो, न चानुमन्त्रणं क्रत्वपेक्षया गृह्यते । अतदर्थत्वात् । तेन न्यायोपदर्शनार्थमिदमुक्तम् । धर्मान्तरविवक्षया वा । स च स्थानादिः । यद्वाभ्यस्यमानप्रज्ञापनायेत्युक्तमेव ॥ ११६ ॥

एत्य जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति जुहूं प्राचीं दक्षिणेनोत्तानेनाग्नीषोमौ समितीतरेणेतरां नीचा प्रतीचीम् ॥ ११७ ॥

एत्येत्यध्वर्युविषयमवाच्यम् । प्राप्तत्वादेव । तेन यजमानस्येत्यव्यूहनं यथा स्यादेवमर्थमुच्यते । जुहूपभृद्ग्रहणं च न कार्यम् । जुहूं प्राचीं दक्षिणेनेत्यभिहितत्वात् । इतरेणेतरामिति चोक्तत्वात् । अतस्तद्विकाराणां व्यूहनव्युदासार्थमिति केचित् । न हि तद्विकाराणां स्रुवादीनां चोदकेन व्यूहनं प्राप्तं निवर्तयितुं शक्यम् । प्रतिषेधशास्त्राभावादिति । फलहि जुहूपभृद्ग्रहणस्य समाधिः । उच्यते । जुहूपभृतौ व्यूहतीत्युक्ते विशेषार्थं पुनर्वचनं, जुहूं प्राचीं दक्षिणेनेति । इतरेणेतरां प्रतीचीमिति च । अपि चोपभृत्संशब्दनं पुनरत्र नास्त्येव । तेन जुहूपभृतौ व्यूहतीति पूर्वमभिहिते इतरशब्देनोपभृच्छक्यते वक्तुम् । तस्मादपुनरुक्ततेति । अग्नीषोमयोरित्यनेन मन्त्रे-

ण दक्षिणेन हस्तेन जुहूं प्राचीं व्यूहतीति । अग्नीषोमौ तमितीतरेण सव्येन इतरामुपभृतं नीचा प्रतीचीं व्यूहति । अत्र प्रतीचीमिति प्र-त्यङ्मुखीमुपभृतं कृत्वा प्रतीचीमेव केचित्प्रेरयन्ति । तदेतन्नोपपद्यते। यत्कारणं प्रतीचीमित्येक. शब्दः स यदि वा प्रेरणेन सम्बध्यते स्रुचा-वेति । तत्र प्रेरणाभिसम्बन्धो युज्यते । यत उपभृतं प्रतीचीं सव्येने-येव मुक्त्वाह अपार्श्वं तमपोहति योऽस्मा अरातीयतीति । अथ कस्मात्प्रतीचीमित्यस्य प्रेरणसम्बन्धः स्रुक् सम्बन्धश्च नेष्यते । अ-स्ति किल शाखिनां वचन नानाविपूचौ नौ व्यूहतीति । नैतदेवं वच-नमस्ति नास्तीति सन्दिग्धम् । अथाप्यस्ति तथापि माध्यन्दिनपाठार्थ एव तस्यापि वचनस्य नानाविषूचौ नौ व्यूहतीति । विष्लृव्याप्तौ । उच्चीसमवाये । नानाव्याप्तिसमवायिनी व्यूहतीत्यर्थः । तेन प्राची प्र-तीचीमित्येतदेवोक्तं भवति । ततश्च प्राच्येव प्रतीची प्रेर्यते ॥ ११७ ॥

यथा देवतमन्यत् ॥ ११८ ॥

प्रकृत्यर्थ एवायमारम्भ. । विकृतौ सूत्रारम्भसामर्थ्यात् । य-थार्थमूहश्चोदित इति । तेन प्रकृतावेवाग्नीन्द्रमित्रावरुणार्थं वचन-म् । ननु चैव सति इन्द्राग्न्योरिति व्यूहनमवाच्यम् । समाम्नायप्र-दर्शनार्थत्वाददोषः । तत्पुनर्वचनं पराद्दिना पूर्वान्त इत्यनेन इन्द्रा-ग्न्योरिति मित्यस्यापि प्राप्तिर्मा भूदिति प्रकृत्यर्थम् । उपांशुयाजपु रोडाशाग्नीषोमयोस्तु तन्त्रेणोच्चारण गुणभेदाभावात् ॥ ११८ ॥

अध्वर्युर्वानूजयत्वयं यजमानो वाजस्यैन-मिति पूर्वे, यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे ॥ ११९ ॥

अध्वर्युर्वा स्रुचौ व्यूहति । तुल्यशास्त्रत्वात् । यदि त्वय यज-मानो यपु अध्वर्युरिति । तदा मन्त्रे विशेषमाह । अनूज्जयत्वयं य-जमानो वाजस्यैनमिति पूर्वे । यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्यु-त्तर इति । यजमानपदस्य चात्र समवायादनेकयजमानके सविशे पणस्य विपरिणामः । व्यूहनस्य चेष्टदेवतासङ्कीर्तनार्थतया कृतप्रयो-जनस्त्वसंस्कारद्वारेण चान्वापत्तिप्रेऽपि प्रयोगः। यपदान्वातिरयास-

न्तिष्ठत इति । तत्रापि हि देवतासङ्कीर्त्तनमिष्यते । इष्टत्वाद्देवतायाः स्तवप्रयोजनकत्वात्स्रुचाम् । तथाच सूत्रप्रस्थानं व्यूहनपरिध्यञ्जने ष्टत्वैक इति ॥ ११९ ॥

अभ्युक्ष्य जुह्वा परिधीननक्ति यथापूर्वं वसुभ्य इति प्रति मन्त्रम् ॥ १२० ॥

अभ्युक्षणं च जौहवः स्यात् । कार्याभिसम्बन्धात् । जुह्वेति जौहवेनेत्यर्थः । यथापूर्वमिति न्यायात् । अथ वा प्रदक्षिणोपचारोद्पसंस्रवतासम्पत्त्या दाक्षिणस्य प्रथमं मा भूदिति । अस्तु तथेति चेत् । न, तस्य स्मार्त्तत्वात् । एतत्तु वाचनिकमिति । वसुभ्य इत्यनेन मन्त्रेण प्रति मन्त्रम् । अत्र रुद्रेभ्यस्त्वेति चतुर्थ्यन्तनिर्देशाद्रौद्रोयमिति केचित् । ततश्च तदन्त उदकोपस्पर्शनमिति । तदयुक्तम् । परार्थत्वाद्रुद्रपदस्य । नात्र रुद्रस्य देवतात्वम् । हविर्भाग्वा देवता स्यात्सूक्तभाग्वा । न चात्र रुद्रो हविर्भजते, न च सूक्तम् । परिधिपरत्वान्मन्त्रस्य । रुद्रेभ्यस्त्वाऽनज्मीत्यज्यमानपरिध्यभिधानम् । अतस्तत्प्रशंसार्थं वस्वाद्युच्चारणम् । एवं प्रशस्तमिदमञ्जनं यत्क्रियमाणं वसुभ्यो रुद्रेभ्यश्च क्रियत इति । तस्मादरौद्रत्वान्नोदकोपस्पर्शनमत्रेति ॥ १२० ॥

प्रथमं परिधिं गृहीत्वाश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति ॥ १२१ ॥

प्रथमग्रहणमनियमव्युदासार्थम् । अन्यथा हि यः कश्चिद्गृह्येत । परिधिग्रहणं च परिधिसंस्कारार्थम्, ग्रहणक्रियाकर्मतानिर्देशात् । परिधिमभिपद्याश्रावयतीति । तथा परिधिभ्यो ह्येतमाश्रावयन्तीति आश्रावणस्य तादर्थ्यं दर्शयति । तथा आश्राव्याहेषिता दैव्या होतार इति प्रकृत्याह । दैव्या वा एते होतारो यत्परिधय इति परिध्यर्थतां मन्त्रस्य दर्शयति । सूक्तवाकप्रैषणक्रियोपग्रहार्थं वा । तदागमे विधानाद्विज्ञाय । इषिता दैव्या होतार इति दैव्या वा एते होतारो यत्परिधयोऽग्नयो हौत्रा दैव्या होतार इति । दैव्या होतारः

घालिङ्गाच्च । तद्यथावपद्रूकृतं हुतमेघमस्येतद्भवतीति । यत्पुनर्वचनं तद्धोमोपलक्षणार्थम् । प्रतिपत्त्यर्थंकर्म चैतत् । ततश्चान्तापच्छिन्नेऽपि प्रवर्त्तते । अविशेषितत्वाच्च संस्रवाणां नाज्यसाधनयागशेषभूतता । अतश्च सर्वत्र प्रवृत्ति. । विश्वे देवाश्चात्र देवता । इमां वाचममिविश्वे गृणन्त इति मन्त्रलिङ्गात् । वाक्यशेषाच्च । स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णातीति । एवं च सति दर्विहोमेषु विश्वेभ्यो देवेभ्यः स्वाहेति होमः । अथ जुहूं चोपभृतं च सम्प्रगृह्णातीति द्वयोः प्रग्रहणविधानसामर्थ्याद् उभाभ्यामपि होमः ॥ १३६ ॥

घृताची इति धुरि निदधात्यनसि-

वद्ग्रहणम् ॥ १३७ ॥

घृताची इत्यनेन मन्त्रेण धुरि स्रुचौ निदधाति । चरितार्थत्वाद्द्रव्यसंस्कारः । अतश्चान्तापच्छिन्नेऽपि प्रवृत्तिः । अयं धुर्यशब्द कैश्चित् पत्नीयजमानविषयतया वर्ण्यते । धुर्याविव धुर्यौ । यथा धुर्यावनड्वाहावनसः प्रणेतारौ एवं दम्पती अपि यज्ञस्येति । एवं च सति विगृह्यते धुर्ये पाहीति विपरिणाम. । पत्न्यभावात् । सम्प्रदाये तु नेष्यते । धुर्यशब्दस्यानडुद्विषयत्वात् । यद्यपि च तावत्र नस्त एव तथापि त्वनसानडुत्सम्बन्धोऽस्तीति । तत्र निधीयमानाभ्यां स्रुग्भ्यां ताविमा भूर्दिति धुर्यौ पातमिति स्रुगभिधानं युक्तरूपम् ॥ १३७ ॥

स्फ्ये पात्र्यां चेत् ॥ १३८ ॥

पात्र्यां चेद्ग्रहणं स्फ्ये सादयति ॥ १३८ ॥

यज्ञ नमश्च त इति वेदिमालभते ॥ १३९ ॥

स चायं वेदिसंस्कारः समिष्टयजुः साधनभूतद्रव्यप्रयुक्तः । सतश्च तदभावे ऽभाव इति ॥ १३९ ॥

वेदं होता स्रुक्स्रुवमध्वर्युराज्यस्थाली-

मग्नीदादाय पत्नीसंयाजेभ्यो गार्हपत्यं

गच्छन्ति ॥ १४० ॥

तेषै पत्नी सयाजयिष्यन्त' प्रतिपरायन्तीति प्रकृत्य जुहूं च स्रुवं चाध्वर्युरादत्ते वेदं होताज्यविलापनीमग्नीदिति ह्यामनन्ति । प्रतिपरायन्तीति वचनाद्गार्हपत्यो गम्यते । विकल्पस्तुप्रवृत्तिदर्शनाच्च । गृहपतेरेव गार्हपत्ये जाघन्या पत्नी सयाजयन्तीति । स्रुवग्रहणं च उपभृद्ध्रुव्युदासार्थम् । उपभरणार्थे न हि तत्प्राप्तिरिति ॥ १४० ॥

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणापरेणान्तरेण पत्नीमेकेषाम् ॥ १४१ ॥

पूर्वेणाहवनीयम् । अपरेण वा गार्हपत्यम् । तत्राप्येकेषामन्तरेण वाह्यतो वा पत्नीमिति ॥ १४१ ॥

१उपविश्य दक्षिणं जान्वाच्य ॥ १४२ ॥

सोमादीन्यजति ॥ १४२ ॥
अधिकारमुपजीवन्नाह—

एवं सर्वत्रोपविष्टहोमेषु ॥ १४३ ॥

'उपविश्य दक्षिणं जान्वाच्य । यजतित्वाच्चिष्ठति क्रियायां प्राप्तायां उपविश्येत्युच्यते । जान्वञ्चन च भूमौ पातन समाचाराल्लिङ्गाच्च । ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्निति ॥ १४३ ॥

उपांशु चरन्ति ॥ १४४ ॥

पत्नी सयाजैरिति ॥ १४४ ॥
अधिकारमुपजीवन्नाह—

चरणशब्दे सर्वं देवतान्यत्र ॥ १४५ ॥

यत्र चरणशब्दस्तत्र सर्वमुपांशु भवति । तथा पितृयज्ञ उपांशु चरन्तीति । देवतान्यत्र, चरणशब्दात्प्रयोगोपांशुश्रवणे देवतामात्रमुपांशु ॥ १४५ ॥

---

१ यजतित्वाच्चिष्ठद्धामे प्राप्ते आह उपविश्येति ।

प्रेषिता इदानीं भद्रवाच्याय भद्रवदनाय मानुषं होतारं सूक्तवाकाय प्रसौतीत्येकवाक्यतासामर्थ्यात्तादर्थ्यमवगम्यते । अन्यथा ह्येकवाक्यता समधिगता भिन्नवाक्यतैा अन्याय्यापद्यते। तत्रैतदुक्त भवति। एते परिधयः प्रेषिता इदानीं मानुषो होता प्रेष्यत इति । ग्रहणक्रियाकर्मभावः प्रैषार्थत्वेप्यविरुद्धः। प्रयोजनं प्रैषाभावे परिध्यनालम्भो यथा दर्विहोमेषु ॥ १२१ ॥

पशौ प्रैष्येति ॥ १२२ ॥

गृहीत्यस्य स्थाने पशौ प्रैष्येति वक्तव्यम् । तत्र हि मैत्रावरुणस्य प्रैषाम्नानम् ॥ १२२ ॥

सञ्ज्ञानाथामिति प्रस्तरादानम् ॥ १२३ ॥

कर्तव्यमिति सूत्रशेषः ॥ १२३ ॥

विधृती स्थाने कृत्वानक्त्येनं व्यन्तु वय इति ॥ १२४ ॥

विधृत्योस्थानमाहवनीयः। सर्वहविषां तदधिकरणत्वात् । अनक्तयेनं प्रस्तरं व्यन्तु वय इत्यनेन मन्त्रेण ॥ १२४ ॥

कथम्—

अग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ॥ १२५ ॥

ध्रुवायाम् । प्रस्तरसंस्कारश्चायम् । तथा चोपभृद्यायमावेपि प्रस्तरोऽज्यत एवेति ॥ १२५ ॥

मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरति ॥ १२६ ॥

मरुतामित्यनेन मन्त्रेण प्रस्तरम् नीचैर्हृत्वा ततस्तृणमादायानुप्रहरति ॥ १२६ ॥

हस्तेनाचरति ॥ १२७ ॥

आचरणमुपसमूहनम् । तत्र सामर्थ्यात्काष्ठादिना मा भू०

वचनसामर्थ्याद्धस्तेनैवोच्यते । तमङ्गुलिभिरेव योयुप्येरन्न काष्ठैरिति ॥ १२७ ॥

हस्ताचरणाधिकारमुपजीवन्नाह—

## यजमानभागं च प्रोषिते ॥ १२८ ॥

प्रोषिते यजमाने तद्भागं च हस्तेनैवाचरति । तच्च स्वावसर एव, गुणपरत्वाद्वचनस्य ॥ १२८ ॥

## क्षत्रियवैश्ययोश्च नित्यम् ॥ १२९ ॥

क्षत्रियवैश्ययोः पुनर्नित्यमेव हस्तेन भागो होतव्यः ॥ १२९ ॥

## अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहेति ॥ १३० ॥

अनेन मन्त्रेण ॥ १३० ॥

## सूक्तवाकान्ते ॥ १३१ ॥

इत्यस्य तृणमादायानुप्रहरतीत्यनेन सम्बन्धः । एवं ह्यामनन्ति सूक्तवाकेन प्रस्तरं प्रहरतीति । तत्रैतत्सन्दिह्यते । किं सूक्तवाकप्रस्तरहरणयोरङ्गाङ्गिलक्षणः संयोगः । उत कालार्थ इति ? । किं तावत्प्रतिभाति । अङ्गाङ्गिलक्षण इति । कुत एतत् । सूक्तवाकेनेति करणविभक्त्या निर्देशात् । प्रस्तरमिति च कर्मविभक्त्या । सूक्तवाके एव याज्या प्रस्तरमाहुतिरिति चामनन्ति । तत्राय यागः प्रस्तरद्रव्यकः । अग्न्यादिदेवताकश्च । अग्न्यादयो ह्यत्र सूक्तवाके सङ्कीर्त्यन्ते । मन्त्रस्य च क्रियासाधनप्रकाशकत्वमुचितम् । तेनात्र प्रस्तरद्रव्यस्याग्न्यादयो देवता इति गम्यते । स्पष्टतरं चैतदभिधीयते । अग्निरिदं हविरजुषतावीवृधतेति । इदमिति सन्निहितं प्रस्तरद्रव्यं निर्दिशति । अपि च । फलसङ्कीर्तनं भवति । आयुराशास्त इत्येवमादि । तेन प्रस्तरद्रव्यकः सूक्तवाकमन्त्रकश्चाग्न्यादिदेवताकश्चायुरादिफलको होम इति । तदेतदपरे नेच्छन्ति । उभयोः परार्थत्वात् । प्रस्तरस्य हि स्रुग्धारणार्थता ज्ञाता । प्रस्तरे जुहू

सादयतीति । सूक्तवाकस्य चेष्टदेवतासङ्कीर्त्तने इष्टार्थ इति तादर्थ्योऽध्यवसानं युक्तम् । अतो निर्ज्ञातार्थयोरर्थः संयोगः स कालार्थ एव भवति । यथेध्मप्रक्षेपसामिधेन्यनुवचनयोरिति । तदन्ते प्रक्षिप्यमाणः प्रस्तरः सूक्तवाकेनैव प्रहृतो भवतीति वचनं सूक्तवाकेन प्रस्तरं प्रहरतीति । सूक्तवाक एव याज्या प्रस्तरं आहुरिति चैवमेव द्रष्टव्यम् । यथाग्न्यादिसङ्कीर्त्तनं तत्प्रधानयागेष्टदेवताभिधानपरम् । कर्मनिर्वृत्त्युत्तरकालमपि हि कृताकृतप्रश्नप्रया देवतास्मरणं दृष्टार्थमेव भवति । अतो न प्रस्तरदेवतात्वेनाग्न्यादिसङ्कीर्त्तनमिति । न हि प्रस्तरस्य चाग्न्यादीनां च सम्बन्धो ज्ञातः । येन प्रस्तरदेवतासङ्कीर्त्तनं भवेदिति । यथाग्निरिदं हविरिति सन्निहितप्रस्तराभिनिर्देशक इति । तदपि प्रस्तरस्य प्रतिपाद्यस्य हविष्ट्वानुपपत्तेः तत्प्रतिनिर्देशाभावात्पुरोडाशादिविषयमेव । यथायुरादिफलसङ्कीर्त्तनं तदपि स्तुतिमात्रपरम् । न ह्यायुरादिफलता प्रस्तरप्रहरणस्य वाक्यादवगता । न च मन्त्रे सङ्कीर्त्तनमात्रादेव निर्ज्ञातप्रधानसम्बन्धस्य फलवत्ता शक्याभ्युपगन्तुम् । न चाफलवत् फलवतोऽङ्गं भवति वचनमन्तरेण । तस्मान्नाङ्गिलक्षणः संयोग इति । प्रयोजनं प्रस्तरप्रहरणाभावेऽप्यातिथ्यादौ सूक्तवाकः प्रयुज्यत एव ॥ १३१ ॥

## अग्नीदाहानुप्रहरेति ॥ १३२ ॥

अग्नीद्वचनं न कर्त्तव्यम् । प्रैषार्थत्वस्तुः प्रैषे चाग्नीदित्युक्तत्वात्स्वयं चाविरोधादित्यत्र । तेन वरुणप्रघासादिष्वविपरिणामार्थमिति केचित् । तत्कथम् । वचनात् । वचनं हि तत्र भवति । अथाग्नीदाहानुप्रहरेति ता उभावेवानुप्रहरत इति । तदेतदसत् । न हि वरुणप्रघासेष्वनुप्रहरेत्यस्य विपरिणामो न युज्यते । प्रकृतौ प्रहरणक्रियाकर्तुरेकस्य प्रैषणम् । विकृतौ द्वयोः कर्त्रोरिति । न च भेदेन प्रैषदानं प्रयोगवचनो मा बाधीति । तस्माद्युक्तरूप ऊहः । न च तथाग्नीदाहानुप्रहरेति विधानम् । प्रकृतितः प्राप्तत्वात् । अतो यथाप्राप्तस्यानुवादोऽयम् । अतः श्रुत्यनुकरणमेतत् । अथवा ऽध्वर्योः प्रैषार्थकर्तृत्वे सति य. कश्चिदध्येषणायां स्यात्तत्राध्वर्युमत्यासत्तेरग्नीधा स्यादित्येवमर्थमग्नीद्ग्रहणम् । न्यायतः प्राप्त एव चात्राग्नीदभिधीयते अन्यत्रापि स एव यथा स्यादिति । यथा हन्त्यन्यो दृषदुपले इति । यथा

स्यात: पत्न्यवहन्त्यन्यो वेति । एवं च सत्यनेनैव न्यायेन ज्योतिष्टोमे प्रतिप्रस्थातुः प्रैषे ऽधिकारः । अपि चाह—

उक्तत्वात्प्रैषणेन्यस्य तद्विशेषो वसीयते ।
तेन सूत्रकृता प्रोक्तमग्नीदित्यग्रहणमत्र तु ॥ १३२ ॥

प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभेत ॥ १३३ ॥

प्रस्तरसम्बद्धं तृणमाहवनीये प्रास्य चक्षुष्पा इत्यात्मानमालभेत । स चायं तृणप्रहरणे सति भवति । तेनो अप्यात्मानं नानुमवृणक्तीति लिङ्गात् । करिष्यमाणप्रयोजनात्मसंस्कार इत्यपरे । तथा च सर्वत्र प्रवृत्तिः ॥ १३३ ॥

सम्वदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा-
दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रू-
हीत्येतेषा; सम्वदस्वागञ्छ्रौषडित्यग्नीच्छेष-
मितरो व्यत्यासं ब्रूतः ॥ १३४ ॥

सम्वदस्वेत्येवमादीनां सम्वदस्वागञ्छ्रौषडित्यग्नीदाह शेषं चाध्वर्युर्व्यत्यासेन । तत्र चास्य शंयोर्वाकार्थत्वात्तदभावे निवृत्तिः । शंयोर्वाकश्चार्थकर्मत्वाद्यावदुक्ते निवर्तते ॥ १३४ ॥

परिधीननुप्रहरति यं परिधिमिति प्रथममितरौ
च युगपदग्नेः प्रियमिति ॥ १३५ ॥

प्रतिपत्तिश्चरितार्थत्वात् । ततश्च यावदुक्तान्तापच्छिन्नयोरपि प्रवृत्तिः । प्रहरणमन्त्रयोश्चाग्न्यभिधायकत्वादवभृथे विपरिणामः ॥ १३५ ॥

स्रुचौ प्रगृह्णाति स; स्रवभागा इति स;
स्रवां जुहोति ॥ १३६ ॥

प्रग्रहणे मन्त्रः स्यात् । स सम्प्रगृह्णाति स; स्रवभागास्थेति वचनात् । होमे वा स्वाहाकारवषट्कारयोस्तदर्थत्वात् । तयोश्च तत्र मा-

घालिङ्गाच्च । तद्यथावषट्कृतं हुतमेवमस्यैतद्भवतीति । यत्पुनर्वचनं तद्धोमोपलक्षणार्थम् । प्रतिपत्त्यर्थकर्म चैतत् । ततश्चान्तापच्छिन्नेपि प्रवर्त्तते । अविशेषितत्वाच्च संस्रवाणां नाज्यसाधनयागशेषभूतता । अतश्च सर्वत्र प्रवृत्तिः । विश्वे देवाश्चात्र देवता । इमां वाचमभिविश्वे गृणन्त इति मन्त्रलिङ्गात् । वाक्यशेषाच्च । स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णातीति । एवं च सति दर्विहोमेषु विश्वेभ्यो देवेभ्यः स्वाहेति होमः । अथ जुहू चोपभृत च सम्प्रगृह्णातीति द्वयोः प्रग्रहणविधानसामर्थ्यात् उभाभ्यामपि होमः ॥ १३६ ॥

घृताची इति धुरि निदधात्यनसि-

वद्ग्रहणम् ॥ १३७ ॥

घृताची इत्यनेन मन्त्रेण धुरि स्रुची निदधाति । चरितार्थत्वाद्द्रव्यसंस्कारः । अतश्चान्तापच्छिन्नेपि प्रवृत्तिः । अयं धुर्यशब्दः कैश्चित् पत्नीयजमानविषयतया वर्ण्यते । धुर्याविव धुर्यौ । यथा धुर्यावनड्वाहावनसः प्रणेतारौ एवं दम्पती अपि यज्ञस्येति । एवं च सति पितृयज्ञे धुर्यं पाहीति विपरिणामः । पत्न्यभावात् । सम्प्रदाये तु नेष्यते । धुर्यशब्दस्यानडुद्विषयत्वात् । यद्यपि च तावत्र नस्त एव तथापि त्वनसानडुत्सम्बन्धोस्तीति । तत्र निधीयमानाभ्यां स्रुग्भ्यां तद्धिंसा मा भूदिति धुर्यौ पातामिति स्रुगभिधानं युक्तरूपम् ॥ १३७ ॥

स्फ्ये पात्र्यां चेत् ॥ १३८ ॥

पात्र्यां चेद्ग्रहणं स्फ्ये सादयति ॥ १३८ ॥

यज्ञ नमश्च त इति वेदिमालभते ॥ १३९ ॥

स चायं वेदिसंस्कारः समिद्यजुःसाधनभूतद्रव्यप्रयुक्तः । ततश्च तदभावे ऽभाव इति ॥ १३९ ॥

वेदं होता स्रुक्स्रुवमध्वर्युराज्यस्थली-

मग्नीदादाय पत्नीसंयाजेभ्यो गार्हपत्यं

गच्छन्ति ॥ १४० ॥

तेषै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्तीति प्रकृत्य शुह्रूं च स्रुवं चाध्वर्युरादत्ते वेदं होताज्यविलापनीमग्नीदिति समामनन्ति । प्रतिपरायन्तीति वचनाद्गार्हपत्यो गम्यते । विकृत्यनुप्रवृत्तिदर्शनाच्च । गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्तीति । स्रुवग्रहणं च उपभृद्व्युदासार्थम् । उपभरणार्थे न हि तत्प्राप्तिरिति ॥ १४० ॥

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणापरेणान्तरेण पत्नीमेकेषाम् ॥ १४१ ॥

पूर्वेणाहवनीयम् । अपरेण वा गार्हपत्यम् । तत्राप्येकेषामन्तरेण वाहुतो वा पत्नीमिति ॥ १४१ ॥

१उपविश्य दक्षिणं जान्वाच्य ॥ १४२ ॥

सोमादीन्यजति ॥ १४२ ॥

अधिकारमुपजीवन्नाह—

एवꣳ सर्वत्रोपविष्टहोमेषु ॥ १४३ ॥

उपविश्य दक्षिणं जान्वाच्य । यजतिस्त्वाचिष्ठति क्रियायां प्राप्तायां उपविश्येत्युच्यते । जान्वञ्चनं च भूमौ पातनं समाचाराल्लिङ्गाच्च । ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिण जान्वाच्योपासीदन्निति ॥ १४३ ॥

उपाꣳशु चरन्ति ॥ १४४ ॥

पत्नी संयाजैरिति ॥ १४४ ॥

अधिकारमुपजीवन्नाह—

चरणशब्दे सर्वं देवतान्यत्र ॥ १४५ ॥

यत्र चरणशब्दस्तत्र सर्वमुपांशु भवति । तथा पितृयज्ञ उपांशु चरन्तीति । देवतान्यत्र, चरणशब्दादन्यत्रोपांशुत्वश्रवणे देवतामात्रमुपांशु ॥ १४५ ॥

---

१ यजतिस्त्वाचिष्ठद्धोमे प्राप्ते आह उपविश्येति ।

यजति सोमं त्वष्टारं देवनां पत्नीरग्निं गृहपतिमिति ॥ १४६ ॥

स्वाहयेनाज्येन सोमादीन्यजति । पत्नयो देवतायजतीति प्र-कृत्याह ता वा आज्यहविषा भवन्तीति ॥ १४६ ॥

तृतीयेऽन्तर्द्धानं पुरस्तात् ॥ १४७ ॥

तृतीये पत्नीसंयाजे पुरस्तात्कटादिनान्तर्द्धानं, स यत्र देवानां पत्नीर्यजति तत्पुरस्तात्तिरः करोतीति श्रुतेः ॥ १४७ ॥

पत्न्यन्वारभतेध्वर्युम् ॥ १४८ ॥

अधिकारात्तृतीय एव पत्नीसंयाजेन्वारम्भः । अध्वर्युग्रहणा-च्च न द्रव्यान्वारम्भः । स चायमध्वर्युसंस्कारो द्वितीयानिर्देशात्। ततश्च पत्न्यभावेपि यैः कश्चित्करोति ॥ १४८ ॥

शंय्वन्तं भवतीडान्तं वा ॥ १४९ ॥

यदेतदेतत्पत्नीसंयाजकर्म तच्छंय्वन्तमिडान्तं भवति । न चात्र विकल्पः । शंयुरिडा वान्ते भवति, किं तर्हि इडामवसेव । शंयोर्विक-ल्पः । कुत एतदत इदमामनन्ति । तदिडान्तं भवतीति कृत्य उतो प्रस्तरस्यैव रूपं क्रियते स यदि प्रस्तरस्य रूपं कुर्यात् वेदस्यैकं तृणमाच्छिद्येत्येवमादि यावच्छंयोर्ब्रूहीति१ ॥ १४९ ॥

शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रु-चि स्रुवे स्थाल्यां च ॥ १५० ॥

---

१ गृहपतियागानन्तरं पूर्ववदिडां पश्चात्तामादायेडां होत्रे प्र-दायायिवृजन्दक्षिणातिक्रामतीडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अन-क्त्यवान्तरेडामादधाति पूर्ववदिडां च सर्वेन्वारभन्ते मर्यादमिति यजमानो जपत्युपहूतां प्राश्नन्ति युक्ता यजमानश्च पवित्रयोर-भावाद्भर्भैर्मार्जयन्ते ऽपरेण वेदिं सुमित्रियान इत्येतावदिडान्तं भव-तीत्यभिप्रायः ।

शंय्वन्ते कर्मणि वेदतृणं गृहीत्वा प्रस्तरवदनक्ति अग्रं जुह्वां मध्यं स्रुवे बुध्नं[१] स्थाल्यां व्यन्तु वय इत्यनेन मन्त्रेण अनक्ति। प्रस्तरवदित्युपदेशात् ॥ १५० ॥

अग्नीदाहानुप्रहरेति ॥ १५१ ॥

कृतं व्याख्यानम् ॥ १५१ ॥

प्रास्य तृणादि पूर्ववत् ॥ १५२ ॥

प्रास्यतृण तदादि पूर्ववत्कर्म भवति ॥ १५२ ॥

शंय्वन्ते स्रुक् स्रुवं प्रगृह्याग्ने दब्धायविति ॥ १५३ ॥

शंयोर्वाकान्ते स्रुक् स्रुवं प्रगृह्याति अग्नेदब्धायविति जुहोति । अधिकाराद्गार्हपत्ये । प्रतिपत्त्यर्थं कर्म चैतत् । पत्नीसंयाजशेषत्वाच तदभावे निवृत्तिः । न च पत्नौ भवति । प्रतिपाद्यद्रव्याभावात् । पत्नीसंयाजानां चार्थकर्मत्वाद्यावदुक्ते निवृत्तिः ॥ १५३ ॥

सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च ॥ १५४ ॥

सव्यावर्त्तनविधानशास्त्राभावादतीत्य निष्क्रमणप्रज्ञापनार्थम् । ततश्च यदि पूर्वदक्षिणेन गार्हपत्यं प्रविष्टस्तदेतद्भवति नेतरत्र । तत्रापि केचित्सव्येनावृत्य इडां करोतीति सूत्रमभिसम्बन्धयन्ति । होमार्थत्वात्प्रवेशनस्य । तदयुक्तम् । अव्यवहितसम्बन्धेपि तदर्थोपपत्तेः । न च होमार्थैव प्रवेशनम् । विशेषानवगतेः । अतः साङ्गपत्नीसंयाजनिवृत्त्युत्तरकालमतीत्य निष्क्रमणम् । तेन सव्येनावृत्य दक्षिणाग्नौ जुहोतीति पदमभिसम्बन्धः । तच्चैतदर्थकर्म ततश्च यावदुक्तान्तापच्छिन्नादौ निवृत्तिः ॥ १५४ ॥

उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले उत्प्रुषो विप्रुषः सत्याः सन्तु

१ 'बुध्नम्' मूलमित्यर्थः ।

यजमानस्य कामाः स्वाहेति पिष्टलेपं जुहोति ॥ १५५ ॥

अधिकाराद्दक्षिणाग्नावेव । पिष्टलेपसाधनत्वाच्च तच्छब्देनाहुत्यभिधानम् । अथवा पिष्टसम्बन्धिनो लेपास्तैराहुतिरिति । एवं च सति प्रतिपत्तिरेषा ततश्चैडान्तेपि कर्मणि प्रवर्तते । यच्च कैश्चिदभिधीयते । आज्याहुतिरेषेति । तदपि पिष्टलेपग्रहणादचसक्षम् । प्रतिपाद्यमानेपि हि द्रव्ये जुहोति संशब्दनादत्र देवतया भवितव्यम् । देवतोद्देशेन हि परित्यक्तस्य द्रव्यस्य प्रक्षेपे जुहोति शब्दो वर्तते । न चात्र देवता गम्यते । तद्धितेन चतुर्थ्या वा । मन्त्रोपि चानिर्दिष्टदेवता लिङ्ग एव । उलूखलादीनां चात्रोपादानमाश्लिष्टविशेषणत्वेन न देवतात्वेन । यदुलूखलादिष्वाश्लिष्टं तज्जुहोतीति सम्बन्धो न तेभ्य इति । कामानामपि चात्र सत्यता प्रार्थ्यते । ततश्च तेषामपि न देवतात्वम् । एवञ्चानवगतदेवताको होम इत्यनुपपन्नम् । अत्रोच्यते । अनादिष्टदेवतालिङ्गेष्वपि मन्त्रेषु देवतापेक्षायां सत्यां किं यत्किञ्चिद्देवतान्तरं परिकल्प्यतामुत प्रकृतैव गृह्यतामिति । तत्र प्रकृतपरिग्रहोन्याय्यः । सन्निधानात् । अप्रकृतोपदाने पुनरसन्निधानात्सन्देह इति । तथा च नैरुक्ताः । तद्येनादिष्टदेवतामन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवतीति । तत्राप्याग्नेयोपांशुयाजाग्नीषोमीयसन्निधाने पुरोडाशसम्बन्धिनः पिष्टलेपा इति सन्निधानविशेषादाग्नेयाग्नीषोमीयदेवतापरिकल्पनं न्याय्यतरम् । तदुद्देशेन हि तद्द्रव्यं गृहीतं यच्छेषोयमिति । उपांशुयाजसाध्यदेवतानामसम्बन्धादतद्देवतात्वम् । केचित्तु सम्बन्धाविशेषे सत्यप्येकयैव देवतया कार्यमिति निर्दिष्टमुख्यत्वादग्निमेव प्रकल्पयन्ति । विकारेतर्हि कथम् । तत्रापि वैकृतदेवताभिसम्बन्धात् तद्देवतापरिकल्पने प्राप्त उच्यते । प्रकृतदेवताभिहितत्वेनैव मन्त्रो विकृतिमुपाऽऽछंतीति न वैकृतदेवता घटते । न ह्यस्य विकृतौ पाठ इति । तस्माद्विकृतावपि प्रकृतदेवताकरणमेवेति ॥ १५५ ॥

पत्नी वेदं प्रमुञ्चति वेदोसीति योक्त्रं च प्रमामुञ्चामि वरुणस्य पाशायेन मा बधा-

.त्सविता सुशेवः ऋतस्य योनौ सुकृतस्य
लोकेऽरिष्टां मा सह पत्न्या दधात्विति ॥१५६॥

च शब्दात्पत्न्येव, कृतप्रयोजनत्वात्प्रतिपत्तिरूपता । ततश्चान्तापच्छिन्नेऽपि प्रवृत्तिः ॥ १५६ ॥

स्तृणात्यावेदेः ॥ १५७ ॥

तां होता आवेदेस्तृणातीत्येतच्छ्रूयते । द्रव्यविपर्ययमाङ् शब्दप्रयोग इति मर्यादा प्रतिपत्तव्या । कर्मविषये त्वभिविधिरिति परिभाषितम् । आमुष्मादिति कर्मसु तद्यति । अथ हौत्रे स्पष्टतरं वचनं ततोऽप्यभिविधिरस्तु ॥ १५७ ॥

ध्रौवेः समिष्टयजुर्जुहोति देवागातु विद इति ॥१५८॥

समिष्टयजुरिति कर्मणः संज्ञा । समिष्टयजुरन्तं भवतीत्येवमार्थः । जुह्वा वचन इति जुह्वैव होमः । जुहोतिर्वाचोपविष्टस्य । तिष्ठन् ध्रुवया समिष्टयजुर्जुहोतीति तु नोपनिबद्धम् । अर्थकर्मचैतत् । ततश्चान्तापच्छिन्ने निवृत्तिः । वातश्चात्र देवता । स्वाहा वातेधा इति लिङ्गात् । ननु च देवागातु विद इति सम्बुद्धिनिर्दिष्टानां देवानां देवतात्वमस्तु । नेत्युच्यते । न हि ते हवि सम्बन्धितया सम्बोध्यन्ते । किं तर्हि विसर्गाय देवागातु विदोगातु यज्ञ वित्त्वा गातुं गन्तव्यमितो गच्छतेति । तथा च लिङ्गम् । तद्देवेन यथायथं व्यवसृजन्तीति । तेन विसर्गाय सम्बोधनम् । मनसस्पतेस्तर्हि देवतात्वमस्तु । तस्य हि सम्बोधनं मनसस्पत इमं देवयज्ञमिति देवयज्ञसम्बन्धस्त्वावसीयत इति । नैतदेवम् । तस्यापि ह्यत्र पारार्थ्येनैव श्रवणम् । मनसस्पतिरुच्यते इम यज्ञ वाते धेहीति । न यज्ञसम्बन्धो मनसस्पते । गतेषु देवेषु मनसस्पतिरिम यज्ञ वाते स्थापयत्वित्याशास्यते । एवं सप्तमीनिर्दिष्टस्यापि तस्यैव देवतात्वमनुरूपतरम् । यज्ञशब्देन चात्र लक्षणया द्रव्यं वोच्यते, कर्म वा । द्रव्यवचनत्वे द्रव्यस्य वात इति स्थापनं तदुद्देशांशेनैवोपपद्यते, नान्यथा । कर्मवचनेऽपि च कर्मणोऽपि तत्साधनभावाभ्युपगमने वाते ऽवस्थानमुपपद्यते । तस्माद्वात एवात्र देवतेति । प्रयोजनं जुहोतौ वाताय स्वाहेति प्रयोगः ॥ १५८ ॥

बर्हिः सम्बर्हिरिति ॥ १५९ ॥

जुहोतीति वर्त्तते । सम्बर्हिरित्यनेन मन्त्रेण बर्हिर्जुहोति । प्रतिपत्तिश्चरितार्थत्वात् । तस्यान्तापच्छिन्नेष्वनिवृत्तिः ॥ १५९ ॥

वेद्यां प्रणीतानिनयति परीत्य कस्त्वेति ॥ १६० ॥

परिगमनं कर्तुरेव न प्रणीतानाम् । तत्परिगमने हि प्रणीये-ष्वेवमवक्ष्यत् । प्रतिपत्तिश्चरितार्थत्वादिति । प्रणीतासम्बन्धाद्दाह-वनीयं परीत्यानि ॥ १६० ॥

पुरोडाशकपालेन कणानपास्यत्यधः कृष्णा-जिनं रक्षसामिति ॥ १६१ ॥

पुरोडाशकपालयोर्भूतपूर्वगत्या सम्बन्धविवक्षेयम् । न हि व-र्त्तमानः कपालस्य पुरोडाशेन सम्बन्धोऽस्ति । तस्य करणत्वेन निर्दे-शाद्यद्यपि पुरोडाशो नास्ति यथा चर्विष्ट्यां तत्रापि कपालमात्रमुपादे-यम् । तस्यैतद्देवताभिसम्बन्धात्प्रतिपत्त्यर्थकर्म केश्चिदिष्यते । देवता-भिसम्बन्धश्च मन्त्रवर्णाद्रक्षसां भागोऽसीति । वाक्यशेषाच्च । ततो देवाः सर्वं यज्ञं समवृञ्जतेति प्रकृत्य । अथ यदपाविध्य यज्ञस्य भागधेय-मासीत्तेनैनां निरभजन्नस्त्रापयो. फलीकरणैर्हविर्येशादिति रक्षांसि फलीकरणैर्निर्भक्तानीत्याह । ततश्च तेषां देवतात्वमिति । नैतदेवमि-च्छन्ति । न ह्यत्र देवता चोद्यते । नात्र चतुर्थीतद्धितो वा । येन देवता-गम्यते । मन्त्रवर्णादपि देवताकल्प्यते यत्र जुहोति चोदना । तत्र हि देवतोद्देशेन परित्यक्तस्य द्रव्यस्य प्रक्षेपो युज्यते । तत्रावश्यम्भावि-न्यां देवतायां मन्त्रवर्णस्य च क्रियासाधनाभिधायित्वसामर्थ्यात्ततो देवतापरिकल्प्यते । न चेह होमश्चोद्यते । तस्मान्न देवता प-रिकल्प्यते । मन्त्रवर्णवाक्यशेषौ त्वर्थवादमात्र. प्रयोजनं न देवता-भिधानमत्र । न चायं रक्षोऽभिधायकः । द्रव्यपरत्वान्निर्देशस्य । ततश्च नोदकोपस्पर्शनमत्र ॥ १६१ ॥

पूर्णपात्रं निनयति परीत्य सन्ततं यजमानो-

अञ्जलिना प्रति गृह्णाति संवर्च्चे सेति ॥ १६२ ॥

आहवनीयं परीत्य पूर्णपात्रं निनयति । संस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयतीति वचनात् । सन्ततमित्यव्यवच्छिन्नम् । यजमानश्च तदञ्जलिना प्रतिगृह्णाति संवर्चसमित्यनेन मन्त्रेण । यदार्थश्चायं तत्रश्चान्तरापच्छिन्ने निवर्त्तते । तत्रैतद्विचार्यते । किं नयनं प्रधानमुत ग्रहणमिति? । किं चातः । यदि निनयनस्य प्राधान्यम् । प्रोषितेऽपि यजमान इहैव कर्त्तव्यम् । अथ ग्रहणस्य प्राधान्यम् । यत्र यजमानस्तत्र पूर्णपात्रो निनयः । पूर्णपात्रं निनयतीति वचनात् निनयनस्य प्रधानताग्रहणस्य तु तादर्थ्यम्।तदञ्जलिना प्रतिगृह्णातीति ग्रहणार्थता वा निनयनस्य । चोदितत्वाविशेषात् । दृष्टोपकाराभिनिर्वृत्तेश्च । सञ्जनयति हि निनयनं ग्रहणस्य दृष्टमुपकारम् । अन्यथा ग्रहणानभिनिर्वृत्तिः । न तु ग्रहणं निनयनस्य दृष्टोपकारोपजनकम् । तदभावेऽपि निनयनोपपत्तेः । तस्माद्ग्रहणार्थं निनयनमिति द्वादशाहे सर्वग्राह्यः ॥ १६२ ॥

मुखं विमृष्टे ॥ १६३ ॥

अधिकाराद्यजमान एव ॥ १६३ ॥

विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रति मन्त्रं पृथिव्यामितीत ऊर्ध्वो वा ॥ ६४ ॥

पृथिव्यामिति इतो मन्त्रपदादूर्ध्वो वा । क्रमणं तु प्रागुदग्वाऽयमपि पदार्थ एव ॥ १६४ ॥

अस्मादन्नादिति भागमवेक्षते ॥ १६५ ॥

साकाङ्क्षत्वाविभक्त इत्यनुषङ्गः । भागसंस्काराच्चान्तलुप्तेऽपि प्रवृत्तिः । एतस्मादेव बहुयजमानकेप्येकः करोति । स्वांशावेक्षणमित्यपरे । एककर्तृकत्वे चान्वारम्भः ॥ १६५ ॥

अस्यै प्रतिष्ठाया इति भूमिम् ॥ १६६ ॥

अवेक्षत इति क्रियापदानुपङ्गः । मन्त्रे च ततोनिर्भक्त इत्येवमादि । स चाय पदार्थोऽर्थकर्मत्वादन्तलुप्ते निवर्त्तते ॥ १६६ ॥

अगन्मस्वरिति प्राङ् ॥ १६७ ॥

ईक्षत इति वर्त्तते । एतदप्यर्थकर्मैव । नात्र प्रतिपत्तिरूपतेति ॥ १६७ ॥

संज्योतिषेत्याहवनीयम् ॥ १६८ ॥

ईक्षत इति च वर्त्तते । अप्रतिपत्तिरूपत्वादेतदप्यर्थकर्म । ज्योतिषा हि सम्भवनमत्रप्रार्थ्यते । तेन यागसाधनभूताहवनीय इत्यसम्बन्धेपि सति न तत्संस्कारपरिकल्पनम् । एवं चान्तलोपे निवृत्ति ॥ १६८ ॥

स्वयम्भूरिति सूर्यम् ॥ १६९ ॥

स्वयम्भूरित्यनेन मन्त्रेण सूर्यमवेक्षते ॥ १६९ ॥

वर्च्चोदा इति यं वा कामं कामयते ॥ १७० ॥

वर्च्चोदा असीत्यत्र मन्त्रप्रयोग । य वा कामं कामयते त प्रति पदप्रयोगो वा । सूर्यावेक्षणमपि अर्थकर्म एव ॥ १७० ॥

सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ १७१ ॥

प्रदक्षिणग्रहणादितरथावृत्तिव्युदास । अथवा श्रौतमेतदिति । आवृत्तिसामन्त्यपु प्रदक्षिणमिति तस्मात्सम । श्रौते सति कोविशेष इति चेत् । श्रौत प्रायश्चित्त तदपचारे यथा स्यादिति ॥ १७१ ॥

प्रदक्षिणाधिकारमुपजीवन्नाह—

ग्रहग्रहणप्रतिगरहोमेषु च तूष्णीम् ॥ १७२ ॥

ग्रहग्रहणादिषु तूष्णीं प्रदक्षिणावर्त्तनम्[१] ॥ १७२ ॥

---

१ कर्त्तव्यमिति शेष । इदमत्रानुसन्धेयम्, सशब्दग्रहेष्वेवायं धर्म, न शब्दमात्रे प्रतीगारे न ग्रहग्रहणमात्रे न होममात्रे इति । प्रदक्षिणक्रियाद्येपरवामन्त्रेपि प्राप्तस्तूष्णींमित्यनेन व्यावर्त्यते इति ।

गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति शतं
हि मा इति ब्रूयाद्वा ॥ १७३ ॥

नवेति मन्त्रे विशेष । एतदेष्यर्थकर्म ॥ १७३ ॥

सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ १७४ ॥

गच्छति प्राङुरु विष्णविति ॥ १७५ ॥

ततोसि तन्तुरस्यनुमा तनुह्यस्मिन्यज्ञे ऽस्याः
साधुकृत्यायामास्मिन्नन्ने ऽस्मिल्लोक इदं मे
कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति पुत्रस्य
नाम गृह्णाति ॥ १७६ ॥

पुत्रस्याशी प्रार्थनार्थत्वादुद्धाद्याहे प्रतियजमाने पुत्रनाम ग्रहणम् ॥ १७४ ॥ १७५ ॥ १७६ ॥

आत्मनो ऽविद्यमाने तन्तवे त्वा ज्यो-
तिषे त्वेति वा ॥ १७७ ॥

अविद्यमाने पुत्रे आत्मनो नाम गृह्णीयात् । तत्स्थाने तन्तवे त्वा-ज्योतिषत्वेति वा प्रयोग ॥ १७७ ॥

आहवनीयमुपतिष्ठते तूष्णीम् ॥ १७८ ॥

मन्त्राभावाल्लौकिकवागुच्चारणप्रतिषेध ॥ १७८ ॥

वृतं विसृजते येनोपेयात् ॥ १७९ ॥

येन मन्त्रेणोपेयात्तेनैवोत्सर्ग ॥ १७९ ॥

संयज्ञपतिराशिषेति भागं प्राश्नाति ॥ १८० ॥

साकाङ्क्षत्वात् युज्यतामित्यध्याहार । व्रतविसर्गभागप्राशन-

नयोरन्तापच्छिन्नेऽपि प्रवृत्तिः प्रतिपत्तिरूपत्वात् ॥ १८० ॥

ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयतीति श्रुतेः ॥ १८१ ॥

श्रुत्युपादानसामर्थ्यात्तदनुष्ठानं यथा स्यात् प्रैषवचनमात्रमेव मा भूदिति ॥ १८१ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे तृतीयोऽध्यायः समाप्तः ।



# चतुर्थोऽध्यायः ।

अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावा-
स्यायाम् ॥ १ ॥

श्रुत्यर्थमनुविधित्सुनाचार्येण पौर्णमासमनुविहितमिदानी-मवसरप्राप्तं दर्शस्यानुविधानं कर्तव्यम्, तत्र च प्राक्कालीनः पिण्डपितृयज्ञः सोऽनुविधेय इत्यत आह । अपराह्णे पिण्डपितृयज्ञः । अह्नोऽपरो भाग अपराह्णः । तृतीयो भाग इत्यपरे वाक्यशेषात् । पूर्वाह्णो वै देवानामित्युपक्रम्य अपराह्णः पितॄणामिति । पिण्डपितृयज्ञ इति पिण्डदानकर्मनाम । अर्थानुगमात्सञ्ज्ञेयम् यौगिकी पिण्डैः पितॄणां यज्ञः पिण्डपितृयज्ञ इति । होमस्य च तादर्थ्यदर्शनात् । स इंधे प्रसूतोऽपेतवितृभ्यो ददातीति । मासि मासि वोऽशनमिति च प्रकृत्य यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददातीत्याह पिण्डदानमेवाभिधीयते । न उपहोमादि । प्रयोजनं तदकरणेऽप्यावृत्तिः । चन्द्रादर्शनमभ्रादिनापि भवति, तस्मादिहामावास्यया विशेष्यते । तदेवोच्यतामिति चेत्, न अमावास्या शब्दस्य कर्मविषयतापि दृश्यते । चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामिति । तत्र को दोषः । चतुर्दश्युपवासपक्षेऽपि प्राप्नोति । अस्तु तथेति चेत् । न श्रुतिविरोधात् । यदैवैष न पुरस्तान्न पश्चाद्ददृश इति । अनेन च क्षयो लक्ष्यते तस्मिन् क्षीणे ददातीति श्रूयते । स च परमः क्षय इतरस्तु प्रत्यहमेव भवति । एवं च सति परमक्षयविशिष्ट एव काले पिण्डपितृयज्ञो नान्यत्रेति । यथा राजसूये पक्षमध्य अमावास्ये दाक्षायणे च । पर्विणामावास्यायां दृष्टेऽपि चन्द्रमस्यपराह्णे परमक्षय इति क्रियत एव काले पिण्डपितृयज्ञः । यदैवैष न पुरस्तान्न पश्चाद्ददृश इति क्षयोपलक्षणार्थत्वात् । तस्मिन्क्षीणे ददातीत्यत्र पक्षीणे इत्यासमदृष्टे कुर्यादित्येऽप्यत्र पितरोऽपयन्तीति ॥ १ ॥

दक्षिणाग्नौ श्रपणꣳ होमश्च ॥ २ ॥

गार्हपत्याहवनीयापवादोऽयं वचनात् ॥ २ ॥

परिस्तीर्य तं पूर्ववत्पात्रासादनमेकशः ॥ ३ ॥

तमित्यवाच्यमाने न ज्ञायते कस्य परिस्तरणमिति तन्निर्देशः । पूर्ववदिति श्रपणस्य पश्चादुत्तरतश्चार्यवद्येति । द्वन्द्वता मा भूदेकश इति ॥ ३ ॥

अपरेण गार्हपत्यं चरुमपूर्णꣳ श्रुवं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥ ४ ॥

स जघनेन गार्हपत्यमिति वचनात् । अपूर्णता चरो स्रुचश्च । अपूर्णं पितृणामिति । तूष्णीमिति च लौकिकवागुच्चारणप्रतिषेधो, न ह्यत्र मन्त्रप्राप्तिरस्त्यपूर्वत्वात् । उत्तरेण दक्षिणाग्निं तिष्ठन्नवहन्तीति वचनात् ॥ ४ ॥

सकृत्फलीकरोति ॥ ५ ॥

फलीकरणं पुनः पुनर्लोके प्राप्तं सकृदुच्यते ॥ ५ ॥

सारतण्डुलमपूर्णꣳ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नये इति सोमायेति च ॥ ६ ॥

सारशब्दः सकलतण्डुलवाची । प्रसिद्धेः । ईषत्स्विन्नता वा वाक्यशेषात् । शृताशृत पितृणामिति । प्रसिद्धिरनैकान्तिकी । गुरुण्यपि सारशब्दप्रयोगात् । पूर्णं यं देवानामर्द्धपूर्णं मनुष्याणामुपर्यर्द्धं पितृणामित्यपूर्णग्रहणम् । श्रपयित्वाभिघारयत्याज्येन । तत्सुतोऽन्यत्रापि दर्शनात् । आज्येनाभिघार्येति । तत्र यथाकथंचिदभिघारणमात्रं नियमाभावात् । उद्वासनं दक्षिणतः पित्र्यत्वात् । पूर्वेणानीय मेक्षणेन जुहोत्यग्नय इति सोमायेति च । तत्र यं कञ्चनमाहुतिसम्बन्धात् । होमश्च यज्ञोपवीतिना प्राङ्मुखेनैव दैवत्वात् । स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्य इति । न वा पित्र्यकर्मां

इत्थात् । प्रधानोपचारन्यायाच्चाङ्गानाम् । महापितृयज्ञे च देवाज्यग्रहणे: यज्ञोपवीतित्वविधानात् । स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति । प्राप्तानुवाद इति चेत् । नानन्यपरत्वाद्वाक्यस्य । मन्त्रलिङ्गाच्च । कव्यवहनाय पितृमत इति कव्यवाहनः पितृणामिति पितृसम्बन्धात् । तस्मात्पित्र्यवदेव होमः ॥ ७ ॥

प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ॥ ७ ॥

अग्नौ मेक्षणमभ्यादधातीति । दक्षिणेनापरेण वाग्नेरेव रूपेणेति शाखान्तरात् ॥ ८ ॥

उल्मुकं परस्तात्करोति ये रूपाणीति ॥ ८ ॥

लेखायां ॥ ८ ॥

उदपात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यात् ॥ ९ ॥

अत्राभिनये श्रुतिरुद्धादितोद्धरणसामर्थ्यादिति । दर्शीय वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽधेवं पितृणामिति । पाणौ द्वितीयं चतुष्टयम् । अग्रे देवतीर्थम् । मूले मनुष्याणामिति । मध्येऽमित्यङ्गुष्ठमूल वा कनिष्ठिकाप्रदेशो वा । तत्राङ्गुष्ठमूलः पितृतीर्थं स्मर्यत इत्यपसव्यमिति । कनिष्ठिकोद्देशे हि सव्यता भवति । सा च पित्र्यनुचितेति ॥ ९ ॥

असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतित्रीन् ॥ १० ॥

असाविति नामादेशपूर्वकं यजमानस्य पितृप्रभृतित्रीनवनेजयति ॥ १० ॥

उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति ॥ ११ ॥

अत्रमिति चाध्याहारः । उपरवमूलमित्यन्यपदविग्रहो नित्यसमासः । मूलसमीपे यानि सकृदाच्छिन्नानि तान्युपमूलं दितानि बर्हिस्तृणानि अन्यत्रापि तृणार्थ इत्युक्तत्वात् लेखायां कृत्वा यथावनिक्तं यत्र यत्रावनेजनं कृतं तत्र तत्र पिण्डान् ददात्यसावेतत इति पितृप्रभृति ॥ ११ ॥

१ये चत्वामन्विति चैके ॥ १२ ॥

मन्त्रशेषं कुर्वन्ति ॥ १२ ॥

अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनात् ॥ १३ ॥

पिण्डानामाभिमुख्येनोक्त्वाऽप्रदक्षिणं गत्वोदङ्ङास्ते २तमनादर्वाक् ॥ १३ ॥

आवृत्यामीमदन्तेति जपति ॥ १४ ॥

आवर्त्तनन्तेनैव मार्गेण । अथोपपल्यय्य जपतीत्युपदेशात् ॥ १४ ॥

अवनेज्य पूर्ववन्नीविं विस्रस्य नमो व इत्यञ्जलिं करोति ॥ १५ ॥

विस्रंसनोपदेशात्पूर्वमेव नीविमत्परिधानम । प्रति नमस्कारं साञ्जलिकरणम । षट्कृत्वो नमस्करोतीति वचनात् । षट्कृत्वो नमस्करोतीति सूत्रकारानुपदेशाश्चेति चेद । स्वान्महाविभ्रमयत उक्तत्वात् । षड्वा नमस्कारमिति श्रुतेश्च । तुल्यत्वात् षट् कृत्वो नमस्करोतीति ॥ १५ ॥

---

१ यदि द्विपितृकः स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति विशेषः । शौनकः 'नामान्यविद्वान् पितः पितामह प्रपितामह' इति । व्याघ्रपात् ' गोत्राणां काश्यप ' इति ।

२ तमनं ग्लानिः, आ ग्लानिपर्यन्तमित्यर्थः । विष्णुः ' यथाशक्ति प्राणनिरोधं कृत्वासीत ' इति ।

एतद्व इत्युपास्यति सूत्राणि प्रति पिण्डम् ॥१६॥

बहुवचनोपदेशात् त्रिणि त्रीणि ॥ १६ ॥

ऊर्णा दशा वा ॥ १७ ॥

येति विकल्पः ॥ १७ ॥

वयस्युत्तरे यजमानलोमानि वा ॥ १८ ॥

उत्तरग्रहणादेव वयसी अभिप्रेते । ततश्चोर्ध्वं पञ्चाशतः ॥१८॥

ऊर्जमित्यपो निषिञ्चति ॥ १९ ॥

पिण्डमूलेषु । तर्पयत मेपितॄनिति लिङ्गात् ॥ १९ ॥

अवधायावजिघ्रति यजमानः ॥ २० ॥

स चायं यजमानसंस्कारः । स यजमान भाग इति वचनात्। ततश्च नाध्वर्युरवजिघ्रति । अथावजिघ्रति प्रत्यवधाय पिण्डानिति । प्रतिप्रयोगसामर्थ्यादध्वर्युरेव । प्रत्यवधाने ल्यप् प्रयोगाच्चेति चेत्। स्यात्कार्यार्थत्वात् । निरुप्याज्यं प्रातर्दोहनमिति यथा ॥ २० ॥

उल्मुकसकृदाच्छिन्नान्यग्नौ ॥ २१ ॥

अभ्यादधातीति वाक्य शेष. । तत्र च पूर्वं सकृदाच्छिन्नानि तत उल्मुकम् । अग्नौ सकृदाच्छिन्नान्यग्नावभ्यादधाति पुनरुल्मुकमपि सृजतीति वचनात् । अजादित्वादल्पाक्षरत्वाच्च पूर्वनिपातः ॥ २१ ॥

१आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥ २२ ॥

---

१ पुत्र कामा यजमानपत्नि 'आधत्तगर्भम' इत्यनेन मन्त्रेण मध्यमपिण्डं प्राश्नाति, भुनक्तीति यावत् ।

प्रसवसमर्थेति वाक्यशेषः ॥ २२ ॥
पिण्डपितृयज्ञस्याधिकारनिरूपणायाह—

प्रेतेभ्यो ददाति जीवपितृकोपि जीवान्तर्हितेपि ॥ २३ ॥

दानं प्रवर्त्तत एव । पितृशब्दस्याविशेषविषयत्वात् ॥ २३ ॥

जीवत्पितृकस्य होमान्तम् ॥ २४ ॥

कर्म स्यात् ॥ २४ ॥

व्यवेते जातूकर्ण्यः ॥ २५ ॥

कुतः । यस्मान्न जीवेन व्यवेते दानं मेने जातूकर्ण्यः ॥ २५ ॥
किमिति न व्यवेते—

न जीवन्तमतीत्य ददातीति ॥ २६ ॥

शाखान्तरेषु श्रवणात् । अतो होमान्तं कर्म स्यात् । यद्येवमनारम्भ एव श्रेयान् । कुतः । दानस्य प्रधानभूतत्वात् । न च प्रधानाभावेङ्गानां प्रवृत्तिरस्ति । अतोनारम्भ एवेत्यवधार्यते । चतुर्दश्युपवासपक्षे ऽमावास्यायां पूर्वाह्णे दर्शयागः । तत्र चापराह्णे पश्चात्पिण्डपितृयज्ञः । अमावास्योपवासे पूर्वः प्राप्नोति ॥ २६ ॥
तत्रानियमे प्राप्त आह—

पूर्वो वाङ्गत्वात् पिण्डपितृयज्ञः ॥२७ ॥

पूर्व एव दर्शात्पिण्डपितृयज्ञो न पश्चात् । कुतः । एतदङ्गत्वप्रतिपादकवाक्यात् । पूर्वेद्युः पितृभ्यो यज्ञ निपृणीय प्रातर्देवेभ्यः प्रतनुत इति । अमावास्यायामेव पूर्वो भवति ॥ २७ ॥
इदमेव विचार्यते । किं पिण्डपितृयज्ञो दर्शाङ्गमुतानङ्गमिति? । किं तावत्प्राप्तम् । अनङ्गमिति ब्रूमः—

प्रकरणकाललिङ्गानुग्रहवचनाहिताग्निश्रुतिभ्यो नाङ्गम् ॥ २८ ॥

प्रकरणभेदात् । प्रकरणपठितमङ्गं भवति, न चायं तत्प्रकरणे पठ्यते । किं च कालभेदात् । पूर्वाह्णे पराह्ण इत्यङ्गानां चैककालता भवति । अपि च लिङ्गं भवति । यदमुना गृहीतः पौर्णमासेन यजेत । पिण्डपितृयज्ञेनैवामावास्यामवरुन्धे नामावस्यमन्तरेणापि पिण्डपितृयज्ञं दर्शयति । तथानङ्गं उपपद्यते । अनुग्रहवचनं च पृथग्दर्शयति । कथमेषां पितृयज्ञोऽनन्तरितो भवतीति । अथाङ्गं स्यात् । कथमेवामावास्यं हविरनन्तरितं भवतीत्युक्ते दृष्टा चेदमावास्यानुग्रहेणैवानुगृह्णीत. पितृयज्ञे ऽनुग्रहवचनं पृथक् नोपपद्येत । अपि चानाहिताग्निश्रुतिर्भवति । अथ नाहिताग्निना कार्यं इति अङ्गत्वे हि दर्शो असति न क्रियेत । ततोऽप्यनङ्गमिति ॥ २८ ॥

अङ्गं वा समभिव्याहारात् ॥ २९ ॥

अथवाङ्गं पिण्डपितृयज्ञः । पुन यजत । समभिव्याहारात् । समित्येकीभावेनाभिव्याहारो वाक्यं वाक्यादित्यर्थः । पूर्वेद्यु पितृभ्यो निकार्य एतया प्रातर्देवेभ्य प्रतननम । यच्च येन विना न भवति तत्तदर्थं, तादर्थ्यलक्षणं तु शेषत्वं, तस्मादङ्गमिति । यत्तु प्रकरणभेदादनङ्गमिति । प्रकरणान्तरसमधीतमप्यङ्गं भवत्येव । यथा प्रयाजः सौत्रामणी चेति । भिन्नकालमप्यङ्गं भवति । यथाग्निहोत्रांशुमुदरणलिङ्गं वचनं दृष्टव्यम् । अनुग्रहवचनमर्थवादोऽङ्गत्वेऽप्युपपद्यते । अनग्नेरहिताग्निना कार्यं इति वचनम् । तस्मादङ्गं पिण्डपितृयज्ञ इति ॥२९॥

पिण्डपितृयज्ञः प्रासङ्गिकत्वादनुविहित इदानीमावास्यमनुविधीयते—

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति शाल्मलीं वेपत्वेत्यूर्जेत्येति ॥ ३० ॥

श्व न उदेता चन्द्रमा इति मत्वा पर्णशाखा छिनत्ति । पुन यजत । तदृक्षे दृष्ट उपवसन्तीति वचनात् । अदृष्टे वा । तत्तुन । अमावास्यायां अमावास्यया यजन्तेति श्रुतत्वात् । पर्णं पलाशः । शा-

मीलीं१ वा । शमीमयम् वेत्यर्थः । इषेत्वेत्यूर्जेत्वेति वा तामाच्छिनत्ती-षेत्वोर्जेत्वेति हि श्रूयते । न चानयोर्मन्त्रयोः करणत्वात्समुच्चयः ॥३०॥

छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥ ३१ ॥

छिनद्मीति उभाभ्यां सम्बध्यते । कुतः साकाङ्क्षत्वात् । उभयोश्छेद-ने विनियुक्तत्वात् । तामाच्छिनत्तीषेत्वोर्जेत्वेति ॥ ३१ ॥

सन्नमयामीति वोत्तरे ॥ ३२ ॥

तत्कुतः । ऊर्जे त्वेत्यनुमार्ष्टीति वचनात् । अनुमार्ष्टीति च प्र-गुणीकरणमातश्च मन्त्रलिङ्गादेव प्राप्तमाचार्येण नाभिहितम् । एवं च सति द्वावपि मन्त्रौ माध्यन्दिने पाठाच्छेदने विनियुज्येते विकल्पेन । उत्तरस्त्वनुमार्जन एव काण्वपाठात्२ ॥ ३२ ॥

बहुलपलाशामशुष्काग्रां प्रागुदीची-
मन्यतमां वा ॥ ३३ ॥

अन्यतमामिति वचनं न सर्वदिग्विषयम् । प्राचीमाहरति उ-दीचीमाहरति प्रागुदीचीमाहरतीति वचनात् ॥ ३३ ॥

वृतमुपैति ॥ ३४ ॥

अनिर्ज्ञातकालस्य शाखाच्छेदनस्यावसरविवक्षयेदमुक्तम् । ततश्च व्रतोपायनीयाशनोत्तरकाले छेदनमिति । तत्प्राप्तिश्च प्रकर-णाविभागात् । सूत्रकारोपदेशाच्च । पौर्णमासवदन्यदिति ॥ ३४ ॥

व्रतग्रहणे नियमो माभूदित्याह—

३यथोक्तं वा ॥ ३५ ॥

१ शम्या अवयवः शामीली ताम्, 'शम्या ष्लञ्, टिड्ढाणञ्' इति पाणिनिसूत्राभ्यां ष्लञ्ङीप्प्रत्ययाभ्यां रूपम् ।

२ तथा चापस्तम्बः 'ऊर्जेत्वेति सन्नमयत्यनुमार्ष्टि वा' इति । स-न्नमनमृजूकरणम् ।

३ यस्मिन् काले वैकल्पिकमुक्तम् तत्र काले वा भवति इह चेति सूत्रार्थः ।

मातृभिर्वत्सान्त्संसृज्य वत्सं शाखयो
पस्पृशति वायव स्थेति ॥ ६६ ॥

संसर्गश्च मेलापकः । वत्सस्य चोद्दिश्यमानत्वात्प्रतिवत्समुपस्पर्शनम् । लिङ्गं चाविवक्षितमुद्दिश्यमानत्वादेव । क्वचिद्योपदेशात्पुंवत्सामिति । यदि वत्सशब्दः स्त्रीविषयोपि तदैतदुपपद्यते । तथा च पाणिनिः । ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री इति । स्त्री शब्दः साधुर्भवति तरुणेषु पुंशब्द इति । एवं च सति स्त्रीवत्सा अपि गावो गृह्यन्ते ॥ ३६ ॥

उपायव स्थेति चैके ॥ ३७ ॥

मन्त्रशेषं कुर्वन्ति।उपस्पर्शनं च पृथक्करणार्थं उत्तरसूत्रात् ॥३७॥

देवो व इति मातृणामेकां व्याकृत्य ॥ ३८ ॥

शाखयोपस्पृशति । वत्सेन व्याकृत्येति वचनात् । एकस्याश्चोपस्पर्शने सर्वासां संस्कार इति । कुत एतन्मन्त्रे बहुवचनोपदेशात् । आप्यायध्वमघ्न्या इति । ततश्च यांहनी दध्येन्द्रमित्यत्र मन्त्रो विपरिणाम्यत इति सम्प्रदायः । अपरे तु न्यायनिगदत्वादविपरिणाममिच्छन्ति । यैषोपस्पृश्यते तस्या एव संस्कार इति । बहुवचनं पूजार्थम् । यथा उत्था उषसः केतुमकृतेति यत् ॥ ३८ ॥

ऐन्द्रं भवति माहेन्द्रं वा ॥ ३९ ॥

मन्त्रे हीन्द्रशब्द एव दृश्यते स एव मा भूदित्यत आह माहेन्द्रं वेति । अतश्च विकल्पः । तथ वचनात् । तदेके महेन्द्रायेति कुर्वन्ति ॥ ३९ ॥

यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य
पुरस्ताच्छाखामुपगूहति ॥ ४० ॥

द्वे ह्यग्न्यगारे तयोरन्यतरस्य पुरस्तादुपगूहनम् । यजमानग्रहणं च पशुविशेषणायादृयजमानकेऽपि नोद्यते । पशूनां तु द्रव्य-

भूतानां पालनमिहेष्यते । ततश्च यद्दिनीदधानि विपरिणामः ॥ ४० ॥

मूलादुपवेषं करोति ॥ ४१ ॥

येनोस्युपवेष इति । मूलतः शाखां परिवास्योपवेषं करोतीति वचनात् । उपवेषनिष्पत्तौ च मन्त्रः । शाखायाश्च परिवासन संस्कारः । ततश्च केवलायाममिश्रायां तूष्णीमेव शाखापरिवासनम । परिवासितया हि पयसोपाकरणमिति ॥ ४१ ॥

सान्नाय्ये शाखासंयोगात् ॥ ४२ ॥

सान्नाय्ये पयोपवेषः । कुतः । शाखासंयोगात् । शाखां परिवास्योपवेषं करोतीति ॥ ४२ ॥

उपधानाद्वोभयोः ॥ ४३ ॥

वाशब्दः पक्षव्यावृत्तौ । उपधानार्थत्वादुपवेषस्योभयत्र प्रवृत्तिः । ततश्च शाखाभावे वारणो भवति ॥ ४३ ॥

वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ ॥ ४४ ॥

वसोः पवित्रमित्यनेन मन्त्रेण कुशावेव पवित्रं बध्नाति शाखायाम । ते चैते परिवासनपवित्रबन्धने शाखोपगूहनात्पूर्वं कर्तव्ये । अर्थाद्धि पाठो बाध्यत इत्युक्त विरोधेऽर्थस्तत्परत्वादिति । पश्चाच्च परिवासनादौ क्रियमाणे सति उपगूहनमदृष्टार्थं स्यात् । दृष्टार्थता चास्याः शाखाया अनाशा इति । दृष्टे च सति नादृष्टपरिकल्पना साध्वी । अतः पश्चादुपगूहनमिति ॥ ४४ ॥

त्रिवृद्वा ॥ ४५ ॥

त्रिवृत् येण्यमिधीयते । तां बध्नाति । वाशब्दो विकल्पार्थः ॥४५॥

यत्रास्याग्निहोत्रहोमः सन्नयतस्तां रात्रिम् ॥ ४६ ॥

तां रात्रिमिति वचनात् पक्षमध्ये आमावास्ये न यवागूनियमः ॥ ४६ ॥

---

आपस्तम्बः, 'त्रिवृद्दर्भमयं पवित्रं शाखायां शिथिलमवसजति' इति ।

हुत उपसृष्टां प्रब्रूतादित्याह ॥ ४७ ॥

हुतेऽग्निहोत्रे दोग्धारमाहोपसृष्टां प्रब्रूतादिति ॥ ४७ ॥

प्रोक्ते द्यौरसीति स्थाल्यादानम् ॥ ४८ ॥

उपसृष्टेति प्रोक्ते दोग्धा प्रति प्रश्ने द्यौरसीति स्थाल्यादानम् । तथाधिश्रयणार्थमतश्च वायव्ये पयसि अधिश्रयणाभावादनादानम् । एवं कार्यापरया च यथाश्रपण्योरादाने विपरिणामः । द्यौ स्थः पृथिवी स्थ इति ॥ ४८ ॥

मातरिश्वन इत्यधिश्रयति ॥ ४९ ॥

स्पष्टम् ॥ ४९ ॥

वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा ॥५०॥

प्रागग्रेति विकल्पः । तथैतच्छ्रौतं प्रागुदग्ग्रहणम् । स्मार्तं हि वचनमन्तरेणापि प्राप्नोत्येव । प्रयोजनं तदपचारे श्रौतं प्रायश्चित्तम् ॥ ५० ॥

वाग्यतो दोहयत्यशूद्रेण ॥ ५१ ॥

दोहयतीति कारितत्वादन्येनाप्यसौ गां धुक्षेति । शूद्रपर्युदासाच्च क्षत्रियवैश्ययोरभ्यनुज्ञा ॥ ५१ ॥

स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने जपति ॥५२॥

स्थाल्यन्वारब्धे यजमाने देवस्त्वेत्यासिच्यमाने जपत्यध्वर्युः ॥ ५२ ॥

कामधुक्ष इति प्रश्नः ॥ ५३ ॥

कां दुग्धवानसीति दोग्धारं पृच्छति ॥ ५३ ॥

प्रोक्ते सा विश्वायुरित्याह ॥ ५४ ॥

अमूमिति प्रोक्ते गोनाम्नि सा विश्वायुरिति आह ॥ ५४ ॥

एवमितरे उत्तराभ्यां प्रतिमन्त्रम् ॥ ५५ ॥

एवमितरे द्वे दोहयति । एवं शब्दाच्च समस्तः क्रियोपदेशः । अयं तु विशेषः । उत्तराभ्यां प्रतिमन्त्रमभिदधाति ॥ ५५ ॥

विसृष्टवागुत्तरा अनन्वारब्धे ॥ ५६ ॥

दोहयतीति वाक्यशेषः । अन्वारम्भवाग्यमयोश्च प्रतिषेधाद्योर्भवत्येव । उत्तरा दोहयतीत्येतावत्युक्ते न ज्ञायते ॥ ५६ ॥

कियत्यो दुह्यन्त इत्यत आह—

यावत्स्वमधिकारात् ॥ ५७ ॥

यावत्योऽस्य गावस्तावत्य इति । कुत एतत् । अधिकारात् । अपरिज्ञाने सत्यधिकारो व्यवच्छेदकः ॥ ५७ ॥

तिस्रो वा नित्यत्वात् ॥ ५८ ॥

तिस्रो वा दुह्यन्ते । त्रित्वे हि नित्यं बहुवचनं व्यवस्थितम् । ननु चतुर्थादावपि भवत्येव । सत्यमेव ॥ ५८ ॥

आदिसामर्थ्यात् ॥ ५९ ॥

त्रित्वगतमेव बहुत्वमाद्रियते । उक्ते हि बहुत्वे कृतः शास्त्रार्थ इति किमित्युत्तरं गम्यत ॥ ५९ ॥

दर्शनाच्च ॥ ६० ॥

दृश्यते चायमर्थो यथा बहुवचनश्रवणे त्रित्वगतमेवोपादीयते । कृष्णा भौमा धूम्रा आन्तरिक्षा, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारका इति । पञ्च बहुवचनान्यनुक्रम्य पञ्चदश दर्शयति । अर्द्धमासानां वा एतद्रूपं यत्पञ्चदशिनो यत्पञ्चदशिन आलभत इति ॥ ६० ॥

परिक्षालनमानयति सम्पृच्यध्वमिति ॥ ६१ ॥

तथाध्वर्युरानयति दोह्यमाने ऽन्यस्य श्रुतत्वात् ॥ ६१ ॥

उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति ॥६२॥

प्रातर्हुतशेषेणेति सम्प्रदायः । नेत्यपरे । तदा प्रातर्हुतशेषेणेत्येवावक्ष्यत् । अत्र प्राक् शब्दस्य पूर्वकालवाचित्वात्पूर्वं यद्धुतशेषं प्राप होमशेषमित्यर्थः । आतनक्तीति आतञ्चनतः पयसङ्कोचनार्थः । सङ्कोचः काठिन्यं तत्सायं होमशेषेण सुकरमिति । इन्द्रस्येति चोपलक्षणम् । महेन्द्रस्यापि भावात् । तथैवेन्द्रायेति कुर्वन्तीति ॥ ६२ ॥

सोदकेनापिदधात्यमृन्मयेन [1]विष्णो

हव्यमिति ॥ ६३ ॥

अथोदकवतोत्तानेन पात्रेणापिदधातीति वचनात् ॥ ६३ ॥

निधाय वत्सापाकरणं पूर्ववत् ॥ ६४ ॥

निधाय तत्पयो वत्सापाकरणं पूर्ववत् । तथ पयस ऐन्द्रं पयोऽभाग्यस्यायामिति ॥ ६४ ॥

प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालो

ऽसन्नयतः ॥ ६५ ॥

स एव उभयत्राच्युत आग्नेयोऽष्टाकपाल इत्याग्नेयमहयाम । अमा वै नोच वसुवंसतीत्युपक्रम्य तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीत्याह । तथैतदसन्नयतः ॥ ६५ ॥

निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥ ६६ ॥

आज्यनिर्वापे कृते प्रातर्दोहनमन्यस्मिन्पात्रे कर्तव्यम् । अन्यस्मिन्निति ग्रहणात्सायं दोहस्य तत्रैवान्तर्भावम् ॥ ६६ ॥

परिक्षालनान्तं कृत्वा सायं दोहमाहृत्य प्रातर्दोहे श्रपयित्वाभिघार्योद्वास्योभावनक्ति ॥ ६७ ॥

---

१ यदि मृन्मयं स्यात्तृणं दारु वान्तर्धाति ।

मातर्दोह अपयित्वा सायं दोहाहरणम् । यथासूत्रं इत्यर्थेना भवति । अभिघारणं च पयसः । उभावनक्तीति प्राणदानं तदुभयो ॥ ६७ ॥

शृतस्याग्रेवद्यतीति श्रुतेः ॥ ६८ ॥

अपन्यायत्वाच्छृतस्यातिग्रहणम् । दध्ना हि पूर्वं क्रम इति । यद्यद्यानि तच्छृतस्य प्रथमम् ॥ ६८ ॥

समस्य मार्जनम् ॥ ६९ ॥

शाखापवित्रेण सह मार्जनम् । तत्र पुनः शाखायामेव कर्तव्यम् । मार्जनमात्र एव श्रवणात् ॥ ६९ ॥

इन्द्राग्न्योरिति व्यूहनम् ॥ ७० ॥

ननु च यथा देवतमन्यदित्युक्तत्वादयाच्यमेतत् । न समाम्नायप्राप्ततायत्तात् । अज्ञाप्यमानं हि समाम्नाये पराहिता पूर्वानन्यायेन इन्द्राग्न्यारित्यस्य पृथग्व्यूहनशपत्वैव प्राप्नोति । तस्मात्साधूक्तमिन्द्राग्न्योरिति व्यूहनमिति ॥ ७० ॥

सह शाखाया प्रस्तरानुप्रहरणम् ॥ ७१ ॥

प्रस्तरप्रहरणस्य निर्ज्ञातकालत्वात् शाखाप्रहरणस्य चानिर्ज्ञातकालत्वात् प्रस्तरेण सह शाखा प्रहरतीति वाक्यार्थः ॥ ७१ ॥

परिधिभिः सहोपवेष जुहोति जोहोमि त्वा सुभगसौभगाय पुरुत्तम पुरुहूतश्रवस्यन्निति॥७२॥

मन्त्रभेदाच्च कर्तृभेदस्ततश्चाग्नीदुपवेषं जुहोति[१] ॥ ७२ ॥

पौर्णमासवदन्यदसद्यः ॥ ७३ ॥

---

१ प्रतिपत्तिरियम्, चरितार्थत्वात् । अतः नाग्नीदोपादौ सदृद्गृहीतेनाज्येन होम ।

न चायमतिदेशः । प्रकरणसाधारण्यात् । साधारणत्वाद्धर्माणाम् । एवं चोभयत्र गुणकामप्रवृत्तिरविरुद्धा । १इयांस्तु विशेषः । असद्य. ॥ ७३ ॥

## सोमयाजी सन्नयेत् ॥ ७४ ॥

सोमयाजिनो नियमः ॥ ७४ ॥

## कामादितरः ॥ ७५ ॥

तस्मादप्यसोमयाजी सन्नयनयेदिति ॥ ७५ ॥

## त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥७६॥

तस्मात् त्रिंशतमेव वर्षाणि यजेतेति श्रुतत्वात् । दर्शपौर्णमासग्रहणं न कर्तव्यम् । उपक्रमादेतत्सिद्धेः । कर्तव्यं वा । आनन्त्यात्साम्राज्यस्य तद्गुणकविषयतैव मा भूदिति ॥ ७६ ॥

## पञ्चदशदाक्षायणयज्ञी ॥ ७७ ॥

यद्युदाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेतेति ॥ ७७ ॥

## अग्निहोत्रमेव वा जुहुयात् ॥ ७८ ॥

एव शब्द इवार्थे । यथाग्निहोत्रं यावज्जीवं एवं दर्शपूर्णमासावपीति । उभयोस्तुल्यशास्त्रत्वात्२ । यावज्जीवमग्निहोत्रं जुहोति । यावज्जीवं दर्शपूर्णमासाभ्यां यजतेति । दर्शपूर्णमासयोः साम्राज्यवतोश्चानुविधानं कृतम् । इदानीं दाक्षायणगुणकयोः कर्तव्यम् । तत्र च पयसा विधते । सा च दधिपयोभ्यां भाव्यते । विकारत्वाच्च धर्मातिदेशं प्रत्यपेक्ष्य किमत्र दध्नो धर्मा उत पयस इति । अनेनाति-

१ अत्र 'उक्तादन्यत् सर्वं दर्शपूर्णमासवद्भवति' इति शेषः ।

२ अतश्च विकल्पः, तथाचापस्तम्बः स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत सर्वकामो वा युगपत् कामयेताहारपृथक्त्वे वा यावज्जीवं यजेत त्रिंशतं वर्षाणि वा जीर्णो वा विरमेद' इति ।

देशप्रसङ्गेन यावानतिदेशः स सर्वोऽभिधीयते । तत्पूर्वकत्वाच्च विशेषातिदेश ऊहो बाधश्चेति ॥ ७८ ॥

तत्र तावदतिदेशविचारः क्रियते । यावच्चैकतीषु चादेनासु यागत्वं नच प्रतिपाद्यते सौर्यं चरुं निर्वपेत् ब्रह्मवर्चस कामः ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः अग्नीषोमीयमजमालभेतेति चैवमाद्यासु किं यावदुक्तं निर्वापमात्रं आलम्भमात्रं च उत यागा एत इति? । एवल्लक्षणत्वात्कर्मणो यावदुक्तान्येतानीति प्राप्त उच्यते—

कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः ॥७९॥

कर्मशब्द आख्यातशब्दो व्यापारशब्दो यो द्रव्यदेवतायुक्तः स यजतिः प्रत्येतव्यः । यागः प्रत्येतव्य इत्यर्थः । यद्यपि यजतिर्यजिरिति च धातोर्निर्देशकस्तथापि तस्य द्रव्यदेवतासंयोगाभावात् तदर्थ एव गृह्यते । द्रव्यदेवतायुक्तः कर्मशब्दो याग इति । कुत एतत् । द्रव्यदेवतासंयोगात् । यत्र द्रव्यस्य देवतोद्देशेन त्यागः स याग इति । द्रव्यदेवतायुक्तं च कर्मशब्दे यागं दर्शयति । मैत्रावार्हस्पत्यं चरुं निर्वपतीत्यभिधाय तयोरुभयोरवघ्राह मित्रावृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्रावृहस्पती यजेति वषट् कृते जुहोतीति सहानुवाचनविधिपरे वाक्ये यागं दर्शयति । तथा पशावग्नीषोमाभ्यां छागस्य हविः प्रेष्येति वषट् कृते जुहोतीति प्रैषविशेषविधिपरे वाक्ये यागं दर्शयति । एकदेशश्रितमपि च लिङ्गं स्थालीपुलाकवत् सर्वेषामकरम्भयति न्यायस्य तुल्यत्वात् । तस्माद्यागा एत इति ॥ ७९ ॥

यागेषु सत्सु किं यागमात्रं भवत्युत धर्मा अपि सन्तीति? । यदा च सन्ति तदा किं पूर्णाहुतिका, उताग्निहोत्रिका, उतदर्शपौर्णमासिका, उत ज्योतिष्टोमिका इति, अथ दर्शपूर्णमासिका एवेति । किं तावत्प्राप्तं धर्माणामनाम्नानादधर्मका इति, एवं प्राप्तेऽभिधीयते—

दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् ॥ ८० ॥

सामर्थ्यादित्ययं हेतुर्धर्मसत्तायां तद्विशेषे च । साधारणधर्मे

सत्यां तावत् एवमेताश्चोदनाः समर्था भवन्त्यर्थवन्त्यो भवन्ती-
त्यर्थः । इतरथा सापेक्षाः सत्योऽनर्थिका स्युः । तत्कथम् । सौर्ययागेन ब्रह्मवर्चसकामायेत्यपरिपूर्णं वाक्यम्१, यच्च नामापरिपूर्णं तदध्याहारेण वानुषङ्गेण वा पूरयितव्यम् । न हि वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते । तेनात्र विध्यन्तोऽनुषक्तव्यो वाक्यपूरणायानर्थक्यं मा भूदिति । स च दार्शपौर्णमासिकः सामर्थ्यादेव । स एवात्र दोषीभावयितुं समर्थः । व्यक्तचोदनाचोदितत्वेन निर्वपति संबद्धत्वेन च प्रतीयमानत्वात् । नान्य इति । विध्यन्तानुषङ्गेण च धर्माणामनुषङ्ग इति दर्शपौर्णमास धर्मा इति सूचितम् । इष्टिपशुष्विति च इष्टिषु पशौ चेति द्रष्टव्यम् । एवमन्तरेषु ह्याग्नीषोमीयधर्मप्राप्तिं वक्ष्यत्यग्नीषोमीयदर्शनादिति ॥ ८० ॥

## दर्शनाच्च ॥ ८१ ॥

दृश्यते चायमर्थो यथा दर्शपूर्णमासधर्मा इष्टिपशुषु प्रवर्तन्त इति । सावित्रीमिष्टिं निर्वपतीति प्रकृत्याह । तस्यै प्रयाजेषु तायमानेषु ब्राह्मणौ वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नं तिस्रः स्वयं सम्भृता गाथा गायतीति गाथागानविधिपरे वाक्ये प्रयाजान्दर्शयति । तथा पशौ स उत्तरमाघारमाघार्याग्निमुपस्पर्शयन् स्रुचौ पर्यस्य जुहूं पशुं समनक्तीति पशुसमञ्जनविधिपरे वाक्ये उत्तराघारं दर्शयति ॥ ८१ ॥

एवं सर्वेष्टिष्वेवानुमानिकवचनेन धर्मप्राप्तिरभिमिता । इदानीं तदपवादत्वेन प्रत्यक्षविधिना धर्मप्राप्तिरभिधीयते—

## वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ॥ ८१ ॥

वैश्वदेवमिति चातुर्मास्यानां प्रथमं पर्व, तस्य धर्मा उत्तरेषु पर्वसु प्रवर्तन्ते, कुतो, वचनात् । वचनादिति हेतुभागमुपदर्शनाय । ततश्च यत्रैव वचनं तत्रैव प्राप्तिः । प्रतिपर्वं वचनं भवति, एतान्यपि

१ किम्, केन, कथम्, इत्याकाङ्क्षात्रयेषु कथंभावाकाङ्क्षापरिपूर्णता वाक्यस्य ।

पञ्च हवींषि भवन्तीति । तानि चाग्नेयादीनि वैश्वदेविकानि पञ्च चोद्यन्ते । तेषां चोपक्षीणत्वात्तद्धर्मकाणीति गम्यते । धर्मप्रवृत्तिं च दर्शयति शुनासीरीये । आग्नेयैतान्येव पञ्च हवींषि भवन्तीत्यभिधाय तस्याद्वृत्तोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मथन्त्यग्निमिति प्रतिषेधति । प्रतिषेधश्च प्राप्तिपूर्वको भवति । अप्राप्तत्वाच्चोत्तरवेदिप्रतिषेधोनुवादकः ॥ ८२ ॥

## सोमाच्चावभृथे सामप्रतिषेधात् ॥ ८३ ॥

सोमिकादवभृथाद्वारुणप्रघासिके धर्मप्राप्तिः । कुतो वचनात् । च शब्देन वचनमनुकृष्यते । उच्यते ऽनेनशब्देनेति वचनं नामधेयमवभृथ इति । सामप्रतिषेधाच्च । सोमिकादवभृथात्साम सामान्येन सामगानं प्राप्तम् । तत्प्रतिषेधो विधीयते । नाप्राप्तं प्रतिषेधति । तत्र न सामगीयत इति ॥ ८३ ॥

## कणवत्पशौ न मन्त्रोपदेशात् ॥ ८४ ॥

कणापासनक्रियाच्च रुधिरापासनक्रिया तयो पचासृक्पशोरिति वचनेन प्राप्नोति । सा च प्रतिषिध्यते । न मन्त्रोपदेशादिति । यद्यपेक्षक्रियाप्राप्तिः स्यात् न मन्त्र उपदिश्येत उपदिश्यते च रक्षसां भागोसीति तस्मात्तावन्मात्रमेव भवति । अशेषक्रियाविषयं वचनमित्याशङ्कानिवृत्त्यर्थमिदमुक्तम् ॥ ८४ ॥

## विशये लौकिकमयुक्तत्वात् ॥ ८५ ॥

विशयः संशय उच्यते । यथा आज्यदोहेषु सामसु अग्निमुपधाय स्तुवन्तीति, किं लौकिक अग्निद्रव्यं उत वैदिकमिति । अत्र लौकिकं ग्रहीतव्यम् । अयुक्तत्वात् । इतरस्य च विशिष्टकार्यसंयोगादिति । ननु अन्ये चायुक्तत्वादित्यभिहित एवायं न्यायः । न प्रकरणसमधीतविषयता तस्येति । अस्य पुनरप्रकरणसमधीतविषयतेति योगान्तरारम्भः ॥ ८५ ॥

दर्शपौर्णमासधर्माः सौर्यादिष्वपि भवन्तीत्येतदुक्तम् । दर्शपौर्णमासयोश्च षट् प्रधानानि । तत्रैतच्चिन्त्यते किं यस्मिन्कस्मिंश्चिद्दृष्टे प्रधाने यतः कुतश्चिद्धर्मप्राप्तिरुत नि-

यमकारिकारण किं चिदस्तीति? । किं तावत्प्राप्तं नियमकारणाभावादनियम इति । एवं प्राप्त उच्यते—

त्रिधिविशेषः कर्मण्येकद्विशब्दपरिमाण-
द्रव्यदेवतागुणसामान्येभ्यः ॥ ८६ ॥

विधेर्विशेषः विधिविशेष. वैकृते प्रधाने एकत्वादिभिर्विशेषैर्विशेषेण धर्मप्राप्ति. । यथा सौर्ये देवतैकत्वे नावान्तरसामान्येनाग्नेयधर्मप्राप्ति. । सत्यपि व्यकत्वे निर्वपाति संशब्द न च नाग्नीषोमीयादिभ्य. । सदृशे हि प्रतीतिर्भवति । प्रतीतेन च धर्मसम्बन्ध दृश्यते । द्विदेवतत्वाच्चाग्नावैष्णव चाग्नीषोमीयविध्यन्त. । द्वित्वसामान्यात् । ऐन्द्राग्नस्यापीति चेत् । न शब्दपरिमाणात् । उभौ हि पञ्चाक्षराविति । मारुते च शब्दपरिमाणादैन्द्राग्नविध्यन्त । द्रव्यसामान्येन च विध्यन्तप्राप्तिर्यथा पुराडाशे पौरोडाशिका. । साम्नाय्ये च साम्नाय्यस्य । देवतासामान्येन च विध्यन्तप्राप्तिर्यथाग्नेये आग्नेयस्य । ननु चैतदवाच्यम्, एकत्वेनैव गतार्थत्वात् । वाच्य वा, सौम्ये चरावग्नीषोमीयधर्मपरिप्रापणार्थं तत्र हि सामोप्यस्तीति । इन्द्रसद्भावादैन्द्राग्नविध्यन्त ऐन्द्रे पुरोडाशे । तदेतदनुदाहरणम् । न ह्यत्र देवतासामान्यमस्ति समुदायात्तद्धितोत्पत्ते । कस्तर्ह्यत्र समाधि । वक्ष्यति द्रव्यदेवताविरोधे द्रव्यस्य समवायादिति । तादर्थ्येन देवतासामान्योपन्यासः । गुणसामान्येनापि विध्यन्तप्रवृत्तिरिष्यते । यथा प्रतिकामाग्नेये पौर्णमास्यां क्रियमाणे पौर्णमासाग्नेयविध्यन्त. । अमावास्यायाममावास्याग्नेयविध्यन्त इति । कालो ह्यत्र गुण इति । तदेतदपरेनुदाहरणमाहुः । न हि कालो गुण इति शक्यते वक्तुम् । सगुणं हि कर्म काले विधीयत इति । गुणसामान्ये तर्हि किमुदाहरणम् । अस्ति वैश्वदेवो द्वादशकपालस्तत्र देवतानेकत्वसामान्यादैन्द्राग्नविध्यन्तेनाग्नीषोमीयविध्यन्तेन वानियमेन भवितव्यमित्येवं प्राप्त आह । गुणसामान्यादैन्द्राग्नविध्यन्त । उभौ हि द्वादशकपालाविति । शब्दपरिमाणन्तत्रोदासीनमेव ॥ ८६ ॥

अथ द्रव्यदेवताविरोधे किं द्रव्यसामान्येन विध्यन्तनियमोऽस्तु उतदेवतासामान्येनेति? । यथावैष्णवे नवकपाले द्रव्यसामान्येन

पौरोडाशिको देवतासामान्येनोपांशुयाजविध्यन्त इति । तत्र नियम-कारिकारणाभावादनियमे प्राप्त आह—

## नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात् ॥ ८७ ॥

अत्र नानियमो द्रव्यस्य सामान्येन पौरोडाशिको विध्यन्तो नोपांशुयाजकस्य । द्रव्यदेवतयोरुभयोरपि विध्यन्तपर्युपस्थापकत्वे द्रव्यमेव बलीयः । कुत एतत् । समवायात् । द्रव्यं हि यागं समवैति । तद्धि त्यज्यमानं यागमभिनिर्वर्त्तयति । देवतातूद्देशेनोपकरोति । तेनासौ विप्रकर्षेति *सन्निकृष्टे सम्प्रत्ययः । अथवा समवायादिति* द्रव्यमेव विशेष्यत्वेन हृदि समवैति । देवताविशेषणत्वेन । विशेषणविशेष्ययोश्च विशेष्ये सम्प्रत्ययः ॥ ८७ ॥

## १आमिक्षायामुभयोस्तन्निवृत्तेः ॥ ८८ ॥

*आमिक्षायामुभयोर्दधिपयसोर्धर्मप्रासिस्ताभ्यां ह्यसौ नि-*र्वर्त्यते ॥ ८८ ॥

## नैकचोदनात् ॥ ८९ ॥

नैतदस्ति यदुक्तमुभयोर्धर्मप्राप्तिरिति । किं कारणम् । एकचोदनात् । एकाहीय चोदना मैत्रावरुण्यामिक्षेति । सा चैकासती नोभे विकर्तुमर्हति । अतोऽन्यतरस्य विध्यन्त इति ॥ ८९ ॥

## २दध्नः संघातात् ॥ ९० ॥

दध्नो हि विध्यन्त. प्रवर्त्तते । सङ्घातत्वसामान्यात् ॥ ९० ॥

---

१ ' दाक्षायणे श्रूयते ' ' मैत्रावरुणी पयस्या ' इति, चातुर्मास्येषु ' वैश्वदेवी पयस्या' इति, पयस्या वारुणी मारुती च । सा च पयस्या दधिपयोभ्यां निष्पाद्यते । तत्र सन्देहः, किमस्यामुभयोर्धर्मा, उत दध्नः, उत पयसश्चेति ? । तत्राद्य पक्षमुद्भावयति ' इति देव भाष्ये ।

२ द्वितीय पक्षमनुवदति ।

## १पयसस्तद्भावात् ॥ ९१ ॥

पयसो वा तत्र विध्यन्त प्रवर्तते। कुतस्तद्भावात्। अतो ह्यामिक्षा भवति घनीभावयितु दध्यानीयते। अथवा तद्भावादिति तद्रसस्य भावादामिक्षायां मधुरं पयो मधुरा चामिक्षा ॥ ९१ ॥

पशौ देवतासामान्यादग्नीषोमीयविध्यन्ते प्राप्त आह—

## पशोः सान्नाय्यस्य तदुक्तम् ॥ ९२ ॥

पशौ सान्नाय्यस्य विध्यन्तः। तदुक्तम्। द्रव्यदेवताविरोधे द्रव्यस्य समवायादिति। ननु नैवात्र द्रव्यदेवतयोर्विरोधो विद्यते। पशुद्रव्यस्य चादितत्वात्। इतरेतरप्रभवत्वेन पशुद्रव्ये प्रतीते सान्नाय्ये प्रतीतिर्भवति। प्रतीत्या च धर्मसम्बन्ध इष्यते। सान्नाय्यधर्माणां पशुद्रव्यं पर्युपस्थापकम्। देवतापौरोडाशिकानाम्। अतो द्रव्यदेवताविरोध एवायम्। ननु तेनैव गतार्थत्वादवाच्यमेतत्। न, तत्रान्यवहितं द्रव्यं, इह पशुद्रव्येण व्यवधानादारम्भः ॥ ९२ ॥

## प्रायश्चित्तश्रुतेश्च ॥ ९३ ॥

पशुना चरन्नवेत्सान्नाय्येनेवा वा तामभिमन्त्रयतेति पशावप्युक्तं दर्शयति। सा च सान्नाय्यस्य विध्यन्ते घटते। ननु विपरीतमेतल्लिङ्गम्। सान्नाय्यस्य विध्यन्ते हि सति तदुक्ता श्रुत्यभिमन्त्रणं पशुनायां प्राप्तोत्येव। विधानं तु सुतरामप्राप्तिर्गम्यते। सत्यम्। सान्नाय्ये च प्रधानस्य श्रुति पयावुपसर्जनभूतस्यादकरयेति। तेन द्रव्यान्यत्वात्पुनरुच्यते ॥ ९३ ॥

सङ्घातत्वसामान्यात्पशौ दध्नो विध्यन्ते प्राप्त आह—

## पयसः कालानन्तर्यधर्मानुग्रहेभ्यः ॥ ९४ ॥

पयसो वा विध्यन्त प्रवर्तते। एककालता पयसः पशोश्च। यदा वै योषा रेतो धत्ते पयो धत्त इति। तथा यदा पशुर्जायते ऽथ

---

१ सिद्धान्तमाह।

पया जायत इति। अथवा सद्यः कालः पशु पयोपि सद्य' कालमेध। अनन्तरं च पशो पय। दधि तु पयोवस्थाया व्यवहितम्। अत आनन्तर्यात्पयसा विधानं। धनुर्मानुग्रहश्च भवति। पय. पात्राणां प्राक्षणादयो धर्माः प्रवर्त्तन्ते न दध्न.। तेषां चानुग्रह कृतो भवति॥ ९४॥

प्राकृत धर्मजातं विकृतिषु चोदकेन प्राप्नोतीत्युक्तम्। ततो द्व्यहकालतायामपि प्राप्तायामिदमाह—

## सद्यस्त्वं काशकृत्स्निः॥ ९५॥

काशकृत्स्नि' सद्यस्त्वम मेन विकृतीनाम। य इष्ट्या सोमेन पशुनाग्रयणेन वा यक्ष्यमाणः स पौर्णमास्याममावस्यायां वा यजेतेति वचनात्॥ ९५॥

## अनुवादः पूर्वस्येति वात्स्यबादरी॥ ९६॥

वात्स्यश्च बादरिश्च वात्स्यबादरी तावाहतु। विकृतिविषयत्वेन पौर्णमासी वामावास्या वोच्यते। तच्च प्रकृतितोपि चोदकेन प्राप्त एवातानुवादोयमिति॥ ९६॥

स्थित तावदपयवसितमन्यदन्तरा चिन्त्यते। यत्राम प्राकृतस्य द्रव्यस्य कार्ये वैकृतमन्यद्द्रव्यान्तरं विधीयते। यथा मौद्ग चरु निर्वपच्छ्रियं श्रीकाम इति। किं तत्प्राकृतद्रव्यधर्मान् लभते उत न लभत इति। किं तावत्प्राप्तम्। व्रीहीनवहन्तीति व्रीहिसंयोगेन श्रुता धर्मा कथमिव मुद्गेषु भविष्यन्तीत्यत आह—

## स्थानापत्तेर्द्रव्येषु धर्मलाभो विप्रतिषिद्धः॥ ९७॥

यद्वैकृत द्रव्यं प्राकृतस्य कार्यापन्न भवति। तधर्मान् लभते। कुत। कार्यापत्ते। प्राकृतस्य हि द्रव्यस्य धर्मसम्बन्धोऽपूर्वप्रयुक्तो न स्वरूपप्रयुक्त। आनर्थक्यात्। अपूर्वसाधनविशेषकारितो ह्यसौ परं च वैकृतेपि सोस्तीति प्रवर्त्तत एव॥ ९७॥

वैकृतद्रव्य प्राकृतकार्यापन्न तद्धर्मैर्युज्यत इत्युक्तम्। तेन तन्नामधेयमपि लभते। इह तु सन्दिह्यत, किमुद्दितनामधेयम क-

ऽस्यमुतानूहितेनेति । किं तावत्प्राप्तं अर्थवाधो मा भूदित्यनूहितेने-
ति प्राप्त आह—

यथार्थमूहश्चोदिते ॥ ९८ ॥

चोदिते वैकृत्ये प्रधाने द्रव्ये यथार्थमूह कर्त्तव्यः । १यथा तमर्थं
प्रकाशयति तथा तथोह्यते । यत्कारणम् । प्रकृतौ तेन मन्त्रेण याग-
साधन द्रव्यमभिहित विकारेपि हि तेन तदेव कर्त्तव्यम् । न चाविप-
रिणतरूप' प्राप्नोति कर्तुमित्यर्थाद्विपरिणम्यते ॥ ९८ ॥

प्रकृतावनेकपत्नीके यागे पत्नीशब्दस्य विपरिणामे प्राप्त आह—

न प्रकृतावपूर्वत्वादिति ॥ ९९ ॥

न प्रकृतौ विपरिणामोस्ति, अपूर्वत्वात्प्रकृते. । न हि प्रकृते-
रन्या प्रकृतिरस्ति यद्विक्रियते । विकृतौ तु प्रकृतिवद्भावाद्विप-
रिणाम. ॥ ९९ ॥

प्रकृतिवद्विकृतिः कर्त्तव्येत्यनेनाशेषधर्मपरिप्राप्तावित्यमाह—

विकृतौ वचनार्थलोपविरोधेभ्यो

ऽप्रवृत्तिः ॥ १०० ॥

विकृतौ वचनादप्रवृत्तिर्भवति । यथा पितृयज्ञे न होतारं वृ-
णीते नार्षेयमिति । अर्थलोपादप्रवृत्तिर्भवति । यथा मुदुगेष्ववघात-
स्य । विरोधादपि निवर्त्तते । यथा चरौपेषणमिति ॥ १०० ॥

किमतावदेव विकृतौ न प्रवर्त्तते नेत्याह—

परार्थोत्पत्तेस्तदभावे ऽभावः ॥ १०१ ॥

परस्यार्थे निष्पद्यमाने यदुत्पन्न तस्य परस्याभावे तस्याऽप्यभा-
वो भवति । यथा साम्राय्येष्वपां फणापासनस्य ॥ १०१ ॥

---

१ यथा प्रकृतौ ' अग्नीषोमाभ्यां छागस्य वपायै मेदस ' इति म-
न्त्रघटकछागपदस्थाने ' मेषस्य ' इति भवत्यैन्द्रमेषादौ । तदुक्तम्
' शब्दे अविप्रतिपत्ति ' इति ।

परार्थोत्पन्नस्य पराभावे ऽभावे प्राप्त आह—

चोदितत्वाद्वा भावः ॥ १०२ ॥

परार्थानुत्पत्तावपि भवत्यत्र । यत्र यथा चोदना भवति । यथा यूपशकलेन मद्दं सम्मार्ष्टीति, यूपाभावेपि शकलमात्रं गृह्यते ग्रहसम्मृज्यर्थम्१ ॥ १०२ ॥

स्थितावुत्तरमुच्यते । पौर्णमास्याममावास्यायां वा यजेतेत्यनुवादोयमित्युक्तम् । तत्र प्रति विधीयते—

न विपक्षे क्रियाः स्युः समभिव्याहारात् ॥१०३॥

किं चिद्विगतं पक्षं स्येति विपक्षः प्रतिपदुच्यते । तत्र च वैकृत्य. क्रिया न स्यु. । क तर्हि । पक्षान्त एव स्यु. । कुतः। पौर्णमास्याममावास्यायां वा यजेतेति वचनात् । ननूक्तमयमनुवाद इति । नानुवादः । अनुवादे हि पौर्णमासीशब्देन गौण्या वृत्त्या प्रतिपल्लक्ष्यते । तत्र श्रुति. परित्यक्ता भवति । न चैतद्युक्तं पक्षलक्षणानुरोधेन श्रुतिर्बाध्यते । अपि चानुवादो ऽप्रवृत्तिविशेषकरत्वादनर्थक एव भवति । सोमस्य चैतदेव कालविधानं च इत्याग्नेयेन पशुना ऽऽग्रयणेन यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेतेति । न ह्यत्र सोमस्य पौर्णमास्यमावास्ये विहिते अतोपि नानुवाद २ ॥ १०३ ॥

दर्शपौर्णमासयोः सान्नाय्यवतोरसान्नाय्यवतोश्चानुविधानं कृतमिदानीं दाक्षायणयज्ञोनुविधीयते—

दाक्षायणयज्ञः प्रजापशुस्वयशस्कामस्य ॥१०४॥

---

१ यत्र तु क्रिया द्रव्यार्था तत्र साधनभूतद्रव्याभावे तदभाव, यथा पौष्णचरौ करण्डनस्य ।

२ ' यद्दृष्ट्येत्यत्राग्रिमग्रहणेनैवाग्रयणग्रहयो प्राप्ते पुनस्तदुपादान पौर्णमास्यमावास्यकालग्रहणार्थम । अत. । ' दर्श पूर्णमासानीजान इत्यादाविनिष्टावप्ययं काल सिद्धो भवतीति भाव. ।

दाक्षायणयज्ञ इति कर्मणो नामधेयम् । द्रव्यगुणसंस्कारे-ष्वप्रसिद्धत्वात् । तस्माद्दाक्षायणयज्ञो नामेति वचनात् । स च प्र-जापश्वन्नयशस्कामस्य भवति । पर्यायेण च योगसिद्धिः । न हि कामानां युगपदुत्पत्तिसम्भवः ॥ १०४ ॥

## नामफलगुणयोगात्कर्मान्तरम् ॥ १०५ ॥

तदेतत्कर्मान्तरं न दर्शपौर्णमासाविति । कुतः । नामान्य-त्वात् । अन्यद्धि नाम दाक्षायण इति । नामान्यत्वे चान्या प्रतीति-र्भवति । यथा देवदत्तादन्यो यज्ञदत्त इति । फलान्यत्वाच्च । अ-न्यद्धि फलं श्रूयते । प्रजादिफलान्यत्वे च फलिनोऽन्यत्वं भवति । गुणान्यत्वाच्च । गुणान्यत्वं च दृश्यते । मैत्रावरुण्यामिक्षेत्येवमादि । गुणान्यत्वे च गुणिनोऽन्यत्वं गम्यते । अतः कर्मान्तरमिति ॥ १०५ ॥

## गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम् ॥१०६॥

अथवा न कर्मान्तरम् । तावेव गुणविकृतौ दर्शपौर्णमासा-विति । कुत एतत् । सन्निधेः । दर्शपौर्णमासौ हि प्रकृत्याह त-स्मात् त्रिंशतमेव वर्षाणि यजेतेत्यभिधाय यद्युदाक्षायणयज्ञी स्या-दथो अपि पञ्चदशैव वर्षाणि यजेतेति । सन्निहिते च तत्प्रतीतिर्भव-ति । तथा च सम्पद्वचन अत्र होच सा सम्पत्सम्पद्वचन इति । यदि तदेव कर्म तदा साऽभ्यासेयोगैस्त्रिंशत्सम्पत्पञ्चदशभिर्वर्षैः सम्पा-द्यते । यत्तु नामान्तरत्वादिति । भवत्येकस्यापि नामान्तरं हस्तः करः पाणिरिति । धर्मान्तरत्वाच्च नामान्यत्वं ब्राह्मणपरिव्राजकवत् । फलं गुणाश्रयम् । गुणान्यत्वेऽपि च न गुणिनोऽन्यता । न हि देव-दत्तस्योन्मादादिनान्यत्वं भवति । तस्मात्तदेवेदं कर्म गुणविकृत-मिति । [1]प्रयोजनं दर्शपूर्णमासयोरक्रिया ॥ १०६ ॥

---

१ अस्यामे 'दाक्षायणयज्ञानुष्ठानपक्षे' इति शेषः । अत एव 'अ-प्रसाह या अस्य दर्शपूर्णमासाऽयामिष्टं भवति' इति श्रुतावपि दाक्षायणानुष्ठानोत्तरं दर्शपूर्णमाससमाप्तिरुक्ता ।

अग्नीषोमीयः पौर्णमास्यामैन्द्राग्नोऽमावास्यायाम् ॥ १०७ ॥

क्रियते इति वाक्यशेषः । एवं हि श्रूयते पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्याम् । तथैन्द्राग्नेन यजतेऽमावास्यायामिति ॥१०७ ॥

सान्नाय्यवत्प्रातः ॥ १०८ ॥

सान्नाय्यशब्दो यागार्थे दधनि पयसि च वर्त्तते । तच्च नोभयमुभयत्र भवति । अमावास्यायां हि पयस्योच्यते । पौर्णमास्यां पुनराग्नेय पुरोडाशो भवत्यैन्द्रं सान्नाय्यमित्येतावदेव । उभयरूपे ह्युभयत्र प्रवर्त्तमाने सत्यथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरुणीपयस्यानेवशादयानीति त्वेवाग्नेय. पुरोडाशोऽथैतयैव मित्रावरुणौ द्वे देवते इति देवताद्वित्वं नोपपद्यते । उभयरूपे हीन्द्रोऽपि प्राप्नुयात् । तस्माद्विभागेन सान्नाय्यवत्प्रातरेव चोपांशुयाजो न भवति१ ॥ १०८ ॥

अमावास्यायां पयस्या मैत्रावरुणी२ ॥ १०९ ॥

---

१ अत्र मुख्यायां पौर्णमास्यामुद्धरणादिकर्मापवर्गान्तमग्नीषोमीयं सद्य एव प्रातः परिसमाप्य पुनरदूधृत्यान्यन्वाधानवत्साशाखाच्छेदद्ध्यर्थवत्सापाकरणोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा साय होमानन्तरं दोहयित्वा निधानान्त कृत्वा प्रातर्दोहार्थं वत्सापाकरण शाखोपगूहनं च कुर्यादिति देवभाष्ये ।

२ अत्र मुख्यायाममावास्यायां प्रातः काले सद्य एवोद्धरणादि कर्मापवर्गान्त कृत्वा तदानीमेव पुनरुद्धृत्यान्यन्वाधानपिण्डपितृयज्ञवत्साशाखाच्छेदनसन्नमनोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा साय होमानन्तरं मैत्रावरुणपयस्यार्थं वत्सापाकरण कुर्यात् । अत्र 'मित्रावरुणाभ्यां भागमिति' गोरुपस्पर्शने विशेषः शाखोद्गूहन चेति देवभाष्ये ।

१तत्रैव दोहनं२शृते वा दध्यानयति ॥ ११० ॥

दधनि वा दोहनम् ॥ ११० ॥

वाजिनं निषिच्योत्करे करोति ॥ १११ ॥

वाजिनमवसेचनमुच्यते । तस्य च यागसम्बन्धायागधर्माः प्रवर्त्तन्ते । वेद्यामासादनं प्राप्तं उत्करे इत्युच्यते । न चात्र वेदिधर्माः प्रवर्त्तन्ते । स्वरूपप्रयुक्तत्वात् ॥ १११ ॥

अनाज्यलिप्तं वा ॥ ११२ ॥

तत्रस्थाभिघारस्य विकल्पः । अनाज्यलिप्तं निषिञ्चेति वचनात् । ततश्च प्राणदानं भवत्यवरं ॥ ११२ ॥

प्रहृत्य तृणं तेन चरति विमुच्य वा
स्रुचौ ॥ ११३ ॥

---

१ तत्रैव तस्मिन् लौकिकदध्न्येवाज्यांजिवोपानन्तरं पयस्यार्थं दोहनं कर्तव्यम्, प्रथममुखायां लौकिकं घनीभूतं दध्यासिच्यत्यर्थः । अथवा पयसि शृते तप्ते सति पश्चाद्दध्यानयति न प्रथमम् । अत्र देवयाज्ञिकभाष्ये व्याख्याद्वयं दृश्यते, तत्र ' तत्रैव दोहनम् 'इत्यत्र 'सांनाय्यवत् ' इत्यनेन सायम्प्रातश्च दोहे प्राप्ते प्रातरेवेति नियमः, एवं ' शृते वा दध्यानयति ' इत्यत्र वाशब्दो पादानादशृते पयसि लौकिकदध्यानयनमित्याद्या । द्वितीया तु उभयत्र दधिपयसोर्विधमानत्वेन तत्रैव दोहने प्राप्ते पयो विकारत्वात्पयस्याया प्रातर्दोहनं कर्तव्यम्, अथवा शृते प्रातर्दोहे सायदोहदधि आनयतीति । वस्तुतस्तु उखायां पयस्याप्रकारस्यानुपदेशात् शाखान्तरोक्त प्रकारस्य ज्यायस्त्वादिदमेव मत साधु भाति । अत्रार्थे ' तप्ते प्रातर्दोहे सायन्दोहमानयति ' इति आपस्तम्बवचनं मूलम् ।

२ अथवा वाजिनस्याज्यलेपो न कार्य इत्यर्थः । अत्र वाजिनस्य तप्ताभिघारप्राणदानापस्तरणाभिघारणादयो न भवन्ति ।

एव हि श्रूयते इति ॥ ११३ ॥

बर्हिरवसिञ्चन् गृह्णाति तद्दपभेषु रेतो दधातीति श्रुतेः ॥ ११४ ॥

ग्रहणं च यथा कथञ्चित् न स्रुवेण । अवद्यतीत्यश्रवणात् । अपन्यायश्चावसेक इति श्रुतिग्रहणम् ॥ ११४ ॥

वाजिभ्योनुवाचयति ॥ ११५ ॥

पूर्वानुवाचनं मा भूदित्यत उच्यते ॥ ११५ ॥

प्रति वषट्कारं हुत्वा वाजिनशेषेण दिशो व्याघारयति दिश इति प्रति मन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् ॥ ११६ ॥

वाजिनशेषं च तुल्यम । प्रदक्षिणग्रहणं च श्रौतं न स्मार्त्तम । अतस्तदपचारे श्रौतमेव प्रायश्चित्तम् ॥ ११६ ॥

उत्तमाभ्यां मध्ये पूर्वार्द्धे च ॥ ११७ ॥

१मन्त्राभ्यां मध्ये पूर्वार्द्धे च व्याघारणम् ॥ ११७ ॥

स्वाहाकारः सर्वत्र साकाङ्क्षत्वात् ॥ ११८ ॥

साकाङ्क्षा ह्येत । क्रियापदाभावात् । अत स्वाहाकारविधानम । मन्त्राश्च यथा श्रुता एव । न चतुर्थ्यन्तेन प्रयोग । सुपां सुपो भवन्तीति चतुर्थ्यर्थे एव प्रथमा । एवं च सति जयादावपि यथा श्रुतादेव मन्त्राश्चिच च्चित्तश्चेति न चतुर्थ्यन्तेन प्रयोग ॥ ११८ ॥

---

१ दिश इत्यादिमन्त्राणां मध्ये 'उदिश' 'दिग्भ्य' इत्याभ्यामिति भाव ।

१ शेषमुपह्वयस्वेत्यामन्त्र्यामन्त्र्य भक्षणमुपहूत इति प्रसूतः ॥ ११९ ॥

उपह्वयस्वेत्यामन्त्रणं प्रत्यृत्विजां प्रसूत इत्यनुज्ञातः ॥११९॥

पितृकृतैर्नामभिरामन्त्रणे प्राप्ते—

युक्तनामभिर्वेत्याह ॥ १२० ॥

युक्तनामानि होत्रादीनि । एवं हि श्रूयते तद्वै पश्चैव भक्षयन्ति होताचाध्वर्युश्चैत्येवमादि ॥ १२० ॥

अधिकारमुपजीवन्नाह—

सोमे च ॥ १२१ ॥

सोपह्वं भक्षणं कर्त्तव्यम् । नानुपहूतः सोमः पातव्य इति वचनात् ॥ १२१ ॥

साधारणेषु वा सामर्थ्यात् ॥ २२२ ॥

एवमनुज्ञावचनमर्थवद्भवति ॥ १२२ ॥

इदानीं भक्षमन्त्रानाह—

ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति ॥१२३॥

वाक्यभेदाद्य विकल्पः ॥ १२३ ॥

इदानीं भक्षयितृनाह—

वाज्यहं वाजिनस्योपहूतस्योपहूतोभक्षयामीति वा ॥ १२४ ॥

वाजे वाजी भूयासमिति वा ॥ १२५ ॥

---

२ शेषं भक्षणार्थं हस्ते कृत्वा ऽमुकोपह्वयस्वेति होत्रादीन् पृष्ट्वा पृष्टा उपहूत इति तेनानुज्ञातः सन् शेषभक्षणं करोतीत्यर्थः ।

होतध्वर्युब्रह्माग्नीधयजमानाः ॥ १२६ ॥

भक्षयन्तीति वाक्यशेषः। समासोक्तावपि हि क्रमोऽयमेवा-भ्यिनत्र्यो येन यजमानस्य प्राथम्यमुच्यते ॥ १२६ ॥

प्रथमो वोभयतस्तु यजमानः ॥ १२७ ॥

प्रथमो वेति। तत्र कुतः। प्रथमो यजमानो भक्षयतीति। उभ-यतस्त्विर्याते प्राथम्यपक्षे उत्तमोपि भक्षयेत्। अथो अप्युत्तम इति वचनात् ॥ १२७ ॥

दाक्षायणं वा दक्षिणा ॥ १२८ ॥

दाक्षायणं सुवर्णमुच्यते। अन्वाहार्यो वेति विकल्पः ॥१२८॥

संवत्सरं वा यजेत ॥ १२९ ॥

पञ्चदशवर्षाणीत्युक्तमेव। संवत्सरश्चात्र सावनः परिगृह्य-ते। अत्रापि सैव यागसम्पत्कर्त्तव्यतेति। सा च सावन उपपद्यते न चान्द्रमस इति ॥ १२९ ॥

सत्यमनृतसूत्रकृतवासांसि वर्जयेत् ॥ १३० ॥

अहनि माऽसमैथुने वर्जयेदिति तत्कर्माणि वर्त्तमाने प्रत्यय-म। अहनीति वचनात्। एतत्पुनरादर्शप्रयोगादन्तरालधर्मो वच-नसामर्थ्यादिति ॥ १३० ॥

दर्शपूर्णमासप्रकरण एव काम्ये आग्नेय आम्नातः। यत्कामो ह एवा एतेन यज्ञेन यजेत सोऽस्मै कामः समृध्यते इति। तं च प्र-कृत्योपांशुत्वविधानम्। उपांशु तस्यै देवतायै यजति यस्या इष्टिं निर्व-पतीति। तदनुविधानप्रसङ्गेन यस्य यस्योपांशुत्वं तस्य तस्योच्यते—

उपांशुकाम्यदेवता ॥ १३१ ॥

काम्ये कर्मणि देवतानामुपांशुत्वं भवति। देवताग्रहणं न कर्त्तव्यम्। चरणशब्द सर्वदेवतान्यत्रेत्युक्तत्वादुपांशुत्वस्य। एवं चब्रह्मकचोदना देवतास्वेवोपांशुत्वं नाव्यक्तासु सोमविकारे-ष्विति देवताग्रहणम्। सौत्रामण्यां तर्हि व्यक्तत्वादुपांशुत्वमस्तु।

नैतदेवम् । तन्त्रभेदस्तु तत्र । एकतन्त्रे चोपांशुत्वमित्याचार्याभिप्रायः येनैन्द्रवायवोधसयोरुपांशुत्वं विदधातीष्टिषु च । एवं च राजसूयेष्वनुमत्यादिषु नैवोपांशुत्वं तन्त्रभेदात् । प्रजाकामवैश्वदेवे तर्हीस्तु उपांशुत्वं व्यक्तत्वादेकतन्त्रत्वाच्चोदनैकत्वात् काम्यत्वाच्च । तथा पश्चाविले । नैतदेवम् । न हि तत्र काम्यतयैवोत्पत्तिस्तेन यत्र व्यक्तत्वं चोदनैकत्वं चैकतन्त्रत्वं च कामार्थं चोत्पत्तिस्तत्रैवोपांशुत्वम् । यथा मित्रविन्दायाम् । आह च ।

व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना ।
तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुता ॥ १३१ ॥

आग्रयणे वैश्वदेवः ॥ १३२ ॥

उपांशुर्भवति ॥ १३२ ॥

एककपालाश्चावरुणाः ॥ १३३ ॥

वारुणवर्जम् ॥ १३३ ॥

प्राजापत्यः ॥ १३४ ॥

उपांशुर्भवति । तस्माद्यत्किंच प्राजापत्यं यज्ञे क्रियत उपांश्वेव तत्क्रियत इति वचनात् ॥ १३४ ॥

सावित्रश्चातुर्मास्येषु ॥ १३५ ॥

उपांशु ॥ १३५ ॥

तत्रैव—

वैश्वदेवी ॥ १३६ ॥

पयस्या ॥ १३६ ॥

वायव्यं ॥ १३७ ॥

पयः, नपुंसकलिङ्गोपदेशात् । पयस्यायां तर्हि न प्राप्नोति । प्राप्नोति यागधर्मत्वात् । न हि द्रव्यधर्मोऽयं अपूर्वप्रयुक्तत्वात् । दर्शयति च पर्वाणि प्रकृत्य तेषां वै चतुर्णां द्वयोस्त्रीणि त्रीणि हवींष्यनिरुक्तानि

भवन्ति द्वे द्वे ह्वयोरिति वैश्वदेवशुनासीरीययोस्त्रयाणामनिरुक्ततां दर्शयति । तस्माद्यवाग्वामप्युपांशु चम ॥ १३७ ॥

[1]तनूहवींषि ॥ १३८ ॥

दीक्षणीयाप्रायणीयातिथ्यादेवताः ॥ १३९ ॥

देवसूदेविकाहवींषि ॥ १४० ॥

उपांशुभवन्ति । दीक्षणीयादिषु देवताग्रहणं यागन्तपक्षार्थम् । सहप्रधानेन दीक्षणीयादौ यागन्तेन मा भूदिति ॥ १४० ॥

वायव्योग्नौ ॥ १४१ ॥

मैत्रावरुणी च ॥ १४२ ॥

अग्नावेव ॥ १४२ ॥

ऐन्द्रः सौत्रामण्यां प्रथमः ॥ १४३ ॥

वायोधसश्च ॥ १४४ ॥

उपांशु ॥ १४४ ॥

आग्नेयं प्रतिकाममाहरेत् ॥ १४५ ॥

आग्नेय प्रकृत्य श्रूयते । सास्मै काम समृध्यते यस्मै कामायाग्निं निर्वपतीति ॥ १४५ ॥

वर्षार्थे पुनः प्रकृतौ वा ब्रूयाद्वृष्टिकामोस्मीति ॥ १४६ ॥

अध्वर्यु ब्रूयात्पुरोवातं च विद्युतं च मनसाध्यायेति ॥ १४७ ॥

---

१ तानिचाग्नये पवमानायग्नये पावकायाग्नयशुचय इत्यग्रमादीनि ।

एवमादि निगदव्याख्यातम् । सर्वाण्येतानीति चार्थनिर्देशो न शब्दनिर्देशः । यत्कारणम् । न ह्येतानीत्येतावता नैराकाङ्क्ष्यं भवति । अतः प्रतिपदमुच्चारणमिति ॥ १४७ ॥

इदानीं दर्शपूर्णमासयोरेवारम्भनिमित्तमङ्गमाह—

अभ्राण्यग्नीधम् ॥ १४८ ॥

स्तनयित्नु च वर्षं चेति होतारम् ॥ १४९ ॥

सर्वाण्येतानीति ब्रह्माणम् ॥ १५० ॥

अन्वारम्भणीयाग्नावैष्णव एकादशकपालः

सरस्वत्यै [1]चरुः सरस्वते द्वादशकपालो

दर्शपूर्णमासारम्भे ॥ १५१ ॥

एकादशकपालग्रहणं न कर्तव्यम् । अग्नीषोमीयविकारत्वादेव तत्प्राप्तेः । कर्तव्यं वा, कपालानां प्रत्यक्षविधानं यथा स्यादिति । ततश्च तद्गतगुणकामप्रवृत्तिरिति केचित् । दर्शपूर्णमासारम्भ इति श्रुतत्वात्प्रथमप्रयोग एव भवति । एवं हि श्रूयते । दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यजेतेति । आरम्भस्य च विद्यमानत्वाद्विकारेऽपि प्रवृत्तिः । यथाग्रयणेष्टयां चातुर्मास्येषु चारम्भस्य एकत्वात्सकृदेव भवति । क्षामवत्यादिषु त्वारम्भभेदात्पुनः पुनः प्रयोगः ॥ १५१ ॥

पष्ठौही दक्षिणा मिथुनौ वा ॥ १५२ ॥

पृष्ठेनया वोढुं समर्था वृषभं सा पष्ठौही । मिथुनौ चेति । मिथुनौ द्वौ द्वौ वद्यादिति ॥ १५२ ॥

इन्द्राय विमृध एकादशकपालः

पौर्णमासमनु ॥ १५३ ॥

---

१ चरुलक्षणं छन्दोगपरिशिष्टे 'स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धोऽकठिनः शुभः न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा' इति ।

पौर्णमासेनेष्ट्वेन्द्राग्नं विमृधेनुनिर्वपतीति वचनात् ॥ १५३ ॥
सवायम—

१अदिविकल्पः ॥ १५४ ॥

शाखान्तरादादित एवारभ्यान्ताविकल्पः ॥ १५४ ॥

आदित्येभ्यश्चरुरामावास्यम् ॥ १५५ ॥

अनुभवतीति सूत्रशेषः ॥ १५५ ॥

आग्रयणमैन्द्राग्नमग्रपाकस्य ॥ १५६ ॥

आग्रयणमिति कर्मणो नामधेयं वक्ष्यमाणस्य । तत्र च प्रथमं हविरैन्द्राग्नम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीति । अग्रपाकग्रहणेन च शरद्वसन्तौ लक्ष्यते । तत्कथमग्र पाकाग्रपाकः प्रथमपाक इत्यर्थः । स च शरद्वसन्तयोर्भवति । शरद्वसन्तयोराग्रयणमिति शाखान्तरात् ॥ १५६ ॥

व्रीहीणां यवानां च ॥ १५७ ॥

यवैरपि यथो यथा स्यादिति यवग्रहणम् । तेषामेव नियमो माभूदिति व्रीहिग्रहणम् । व्रीहिकाले व्रीहीणां यवकाले यवानाम् । अत एव च यावश्चरुर्भवति ॥ १५७ ॥

वैश्वदेवश्चरुः ॥ १५८ ॥

तस्मादेव वैश्वदेवश्चरुर्भवतीति ॥ १५८ ॥

पयसि वा ॥ १५९ ॥

स च वा पयसि भवति । एव पक्षे अत्र प्रणीता धर्माः कार्याः ॥ १५९ ॥

---

१ आदावारम्भ एव विकल्पो यस्य स । आरभ्यते न वेति, यद्यारभ्यते तदा यावज्जीव क्रियत एव । तदुक्तम् ' रूप कालोऽनुनिर्वापो देवता श्रपण हवि , आदौ च विधृताः पक्षास्त इमे सर्वदा मता , इति ।

## द्यावापृथिवीय एककपालः ॥ १६० ॥

अस्य च वैश्वदेविकद्यावापृथिवीयप्रकृतित्वम् लिङ्गदर्शनात् । तस्य हि सर्वहुतं करोति अपर्यावर्त्तं जुहोतीति चाम्नायते । नचैतं सर्वहोमापरिवृत्ती आज्ययागविधिपरे वाक्ये अनुवदति । तस्य परिचक्षा यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वस्यैव स्विष्टकृदन्वाभक्तो भवेत् सर्वमेव जुहोति न स्विष्टकृते यदाति सा च परिचक्षोक्ता हुतः पर्यावर्त्तेत इति सा द्वितीया परिचक्षा । तथैतदुभयमप्यनिष्टमत्याज्यस्यैव यागः कर्त्तव्य इति । तस्माद्वैश्वदेविकैककपालप्रकृतित्वमिति । एवं च सति त्रेधा बर्हिरहतवास परिधानं चेहापि भवति । नृधप्रयाजाद्यपीति चेत् । नैन्द्राग्नवैश्वदेवविरोधात् । आज्ययागेपि वासः परिधानादि भवत्विति चेत् । नैतदेवम् । पुरोडाशेन हि तत्पर्युपस्थाप्यते । न चाज्यस्यासौ धर्मः । तस्मादप्रवृत्तिरिति । यत्तु वायव्ये पयसि द्रव्यान्यत्वेप्युपांशुत्वं भवति । युक्तं तत्र प्रत्यक्षो ह्यसौ धर्मः । इह पुनश्चोदकत इति ॥ १६० ॥

## १उद्वास्यान्ताश्छादयेदाज्येन ॥ १६१ ॥

तथैतदाज्यं लौकिकमपूर्वत्वात् ॥ १६१ ॥

## आज्यस्य वा यजेत् ॥ १६२ ॥

तस्मादाज्यस्यैव यजेदिति वचनात् ॥ १६२ ॥

## पुराणानां वा चरुः ॥ १६३ ॥

वैश्वदेवश्चरुर्वा पुराणानां कर्त्तव्यः । तं वै पुराणानां कुर्यादित्याहुरिति वचनात् । वा नवानाम् । तौ वा उभावेव नवानां स्यातामिति ॥ १६३ ॥

## प्रथमजो गौर्दक्षिणा ॥ १६४ ॥

---

२ द्यावापृथिवायमुद्वास्य प्राणदानामन्तरमस्यान्तानाज्येन लौकिकघृतेनाच्छादयेदित्यर्थः ।

प्रथमजश्च गौर्न गोकुलस्याप्रतीतत्वात् । गोश्च जन्मना सम्बन्धोऽतः प्रतीतत्वात्प्राथम्यं तदपेक्षम् ॥ १६४ ॥

प्रसङ्गमुपजीवन्नाह—

वैश्वदेवस्य च ॥ १६५ ॥

प्रथमाजा गौर्दक्षिणा ॥ १६५ ॥

दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चानुप्राश्यं ब्राह्मणान् भोजयेत्किञ्चिद्दद्यात् ॥ १६६ ॥

आहिताग्निः सन्यावदर्शपूर्णमासौ न करोति अथ चाग्रयणकालातिपत्तिर्भवति तत्राग्रयणे विशेषः कथ्यते । नवानां दक्षिणाग्निपक्वं चानुप्राश्य ब्राह्मणान् भोजयित्वा किञ्चिद्दद्यात् । ततो यच्छक्नुयात्तद्दद्यादिति वचनात् । अस्य चाग्रयणत्वात् पौर्णमास्यमावास्या वा काल इति ॥ १६६ ॥

अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः ॥ १६७ ॥

अग्निहोत्रेणैव यो नामायन गमनं कर्तुमिच्छति अग्निहोत्रेणैवाग्रयण गमयतीत्यर्थः । स न वै. साय प्रातरग्निहोत्रहोमं कुर्यात् । य सायं प्रातरग्निहोत्रहोम स न वै कर्त्तव्यः । न ह्यनदाग्रयण सायं प्रातर्ग्रहणादेवाग्रयणा इष्टिरिति । तथा च दर्शपूर्णमासानीजानस्य चातुष्प्राश्यविधिपरे वाक्ये अग्निहोमं प्रतिषेधति । नाग्निहोत्रं जुहुयादन्यदा आग्रयणमन्यदग्निहोत्रमिति । अतश्चात्र न यजनीयकालनियम इति ॥ १६७ ॥

१तदाशिताया वा पयसा ॥ १६८ ॥

नवाशिताया वा गोः पयसा जुहोति ॥ १६८ ॥

---

१ नवधान्यमाशिता नवाशिता तस्याः, नवान्न खादिताया वा गोः पयसा साय प्रातरग्निहोत्रहोम इत्यर्थः ।

दीक्षितव्रतं च ॥ १६९ ॥

तत्कालातिपाते नवाशितायां गो पयसा कर्त्तव्यम् ॥१६९॥

उपसत्सु रौहिणौ कुर्वीत ॥ १७० ॥

उपसत्सु वर्त्तमानासु नवद्रव्येण रौहिणौ कर्त्तव्यौ ॥ १७० ॥

सुत्यासु सवनीयाः ॥ १७१ ॥

कर्त्तव्या ॥ १७१ ॥

सौम्यः श्यामाकचरुरारण्यस्य ॥ १७२ ॥

आरण्याग्रयणं श्यामाकनीवारादि । आरण्यग्रहणाच्च सौम्ये कृते तत्र भक्ष्यत इति ॥ १७२ ॥

[1]वैणवो ग्रीष्मे ॥ १७३ ॥

सौम्य कर्त्तव्य । श्यामाकचरोश्च कालातिदेशात् शरद्येव भवति ॥ १७३ ॥

पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ॥ १७४ ॥

क्षौममात्रस्य मुच्यते । वर्षासु यत्परिहितं उतमित्यके । तत्र धृतशब्दा नाश्रुतो भवति । तस्माद्वर्षासु यद्धृतं परिहितं तदेव ग्रहीतव्यमिति ॥ १७४ ॥

अमावास्यायामग्न्याधेयम् ॥ १७५ ॥

अग्न्याधेयमिति कर्मणो नामधेयम् । तच्च समुदायस्य तेन ह्यसावग्निराधीयते उत्पाद्यते निष्पाद्यते । न मन्थनमात्र स्थापनमात्र

---

१ वैणवं वेणुमयश्चरुरित्यर्थः । तथाचापस्तम्ब —' वेणुयवानामिष्टिमेके समामनन्ति ' इति ।

वा। आहवनीयशब्दो हि संस्कारनिमित्तः न जातिनिमित्तो योगनिमित्तो वा। तेषु सत्सु शब्दप्रयोगदर्शनात्। अतश्च यावानूकश्चिद्दृष्टार्थो अदृष्टार्थो वा तत्संस्कारायाम्नायते स सर्वोऽप्याधेयशब्दवाच्यः। एव च सति संस्कारैकदेशाभावेऽपि अनाहवनीयता। अतश्च सकलकर्मसमुदायाऽप्यावृत्तिरिति सम्प्रदायः। अत्र पक्षः। कश्चित्संस्काराङ्गवान्भवति। यथा पूर्णाहुत्यामाज्याधिश्रयणाद्यङ्गतूष्णीम्। अग्निहोत्रे च परिस्तरणादि। इष्टिषु चान्वन्वाधानादि। यस्यैवाङ्गिनाङ्गापचारस्तस्यैवावृत्तिर्युक्तरूपा न सकलस्याधानस्येति। न चेहाङ्गापचारेऽपि मायश्चित्तं भवत्याहवनीयाद्यधिष्ठानाभावात्। ननु च विद्यन्त एवाहवनीयादयस्त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयमादधातीति प्रयोगदर्शनात्। नेत्युच्यते। यदीयतैवाहवनीयाद्युत्पत्तिः स्यात् शेष व्यर्थमेव स्यात्। तस्मात्पञ्चभिराहवनीयमादधातीति भाविनीवृत्तिः। अतो नैमित्तिकहोमस्याभाव। यथेव पूर्णाहुत्यादि होमोऽप्यत्र न भवति। उच्यते। आहुत्याहवनीयसंस्कारायैव विधानादित्यदोषः। तस्मादिह विहितानां भाविनीवृत्तिर्युक्ता न तु नैमित्तिकहोमानां। ते हि सत्याहवनीये विधीयन्ते। पूर्णाहुत्यादयस्तु तदुत्पत्त्यर्थतयेति विशेषः। अमावास्या शब्दश्चात्र गौण्या वृत्त्या प्रतिपद्विषयः। एवम् हि श्रूयते आधानं प्रकृत्य यदहरेवैष न पुरस्तान्न पश्चाद्ददृश्येत तदहरुपवसेदिति। उपवासशब्दश्च यमनियमापेक्ष। यदहरस्याश्चान्वाधेयं स्याद्विवेवाहनीयादिस्येवमादिविधानात्। तस्मादमावास्यायामुपक्रम्य प्रतिपद्याधानम्। कृत्तिकादिषु तु नैवं, न हि तत्रैवं वचनमस्तीति ॥ १७५ ॥

## कृत्तिकारोहिणीमृगशिरःफल्गुनीषु ॥ १७६ ॥

स चायं विकल्प। कृत्तिकास्वग्नी आदधीतेति निरपेक्षविधानात्। ननु चामावास्यायां कृत्तिकास्विति च किमिति न भवति। नैतदेवम्। एवं हि समामनन्ति स योऽमावास्यायामग्नी आधत्ते यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत एव स्वर्गं लोकमियादेवं तदित्यमावास्यायां विधाय नक्षत्रनिषेधेन संस्तौति। अथ यो नक्षत्र आधत्ते यथा विहितायां द्वार्यद्वारा पुरं प्रतिपि-

रसोऽस जिह्वा पुर स्यादेवन्तदिति । तस्मादत्रापि नक्षत्रविकल्प ॥१७६॥

हस्तो लाभकामस्य ॥ १७७ ॥

स चाय विशिष्टो लाभ उच्यते न लाभमात्रं य इच्छेत्प्रमे धीयतेति वचनात् । तस्मात्प्रतिग्रहलाभ । अतश्च ब्राह्मणविषय ए- वायम् ॥ १७७ ॥

चित्रा च क्षत्रियस्य ॥ १७८ ॥

च शब्दाल्लाभकामस्य ॥ १७८ ॥

वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ॥ १७९ ॥

तस्माद्ब्राह्मणो वसन्त आदधीतेति वचनात् । ब्रह्मवर्चस- कामो वसन्त आदधीतेति । ब्रह्मवर्चस च ब्राह्मणस्यैवोचितम् । त- स्मात्सकामनिष्कामयोर्ब्राह्मणयोरिति ॥ १७९ ॥

ग्रीष्मः क्षत्रियश्रीकामयोः ॥ १८० ॥

ग्रीष्म क्षत्रियस्याधानकालो भवति । तस्मात् क्षत्रियो ग्रीष्म आदधीतेति वचनात् । श्रीकामो ग्रीष्मआदधीतेति हि श्रूयते । सर्वविषयं चैतत् । विशेषानवगमात् ॥ १८० ॥

वर्षाः प्रजापशुकामवैश्यरथकृताम् ॥ १८१ ॥

आधानस्य कालो भवति प्रजाकामपशुकामवैश्यर- थकृताम् । कामसम्बन्धश्च सर्वविषय न वैश्य विषय एव । वैश्यो व- र्षास्वादधीतेति च निष्कामस्यापि वैश्यस्य । वर्षासु रथकार आदधीतेति च रथकारस्य वर्षा ॥ १८१ ॥

इदानीं पूर्वेद्यु रुपक्रममाह—

अग्न्यगारे कुर्वन्ति ॥ १८२ ॥

बहुवचनोपदेशादप्रकृता ॥ १८२ ॥

उदग्व(?)शं वा परम् ॥ १८३ ॥

वा प्राग्व(?)शपूर्वं तु प्राग्वशमथ ॥ १८३ ॥

दक्षिणपूर्वे द्वारे ॥ १८४ ॥

अपरस्य दक्षिणम् पूर्वस्य पूर्वम् । न ह्येकैकस्य द्वारद्वय-
विधानमुपपद्यते । यस्मादपरस्य पूर्वं सामर्थ्यपरिमाणम् ॥ १८४ ॥

पौर्णमासवद्वपनम् ॥ १८५ ॥

भवति । उनिना च सविशेषमतिदिश्यते । विकल्पस्य तु
सूत्रान्तराभिहितत्वात् । ऋतुपक्षत्रसम्भारसामवपनादीन् वा कु-
र्यादिति ॥ १८५ ॥

. क्षौमे वस्ते ऽहते पत्नी च ॥ १८६ ॥

क्षौमे आतसे अहते अधौते पत्नी च । क्षौमे वसानावग्नी आ-
दधीयातामिति वचनात् ॥ १८६ ॥

स꣡ꣳस्थिते ऽध्वर्यवे देये ॥ १८७ ॥

ते च परिसमाप्ते ऽध्वर्यवे देये ॥ १८७ ॥

गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥ १८८ ॥

मन्थनसन्निधानात्समक्षताभ्यामेवारणिभ्या, अनयोर्हि सन्नि-
धानात् ॥ १८८ ॥

वैश्यकुलाम्बरीषमहानसाद्वा ॥ १८९ ॥

वैश्यकुलादपरिगृहीतो हुतोच्छिष्टो वा परिगृह्यते । अम्बरीषो
भ्राष्ट्र कन्दुरिति च प्रसिद्ध । महानसो यत्राश्रीयोऽग्निर्यथा लौकि-
केषु सत्त्रेषु ॥ १८९ ॥

दिवाश्नाति रात्रौ वा ॥ १९० ॥

यद्ददस्य श्वोऽग्न्याधेयऽस्याद्दिवैवाश्नीयादिति । न चार्यं
दिवमनियम । किं तर्हि रात्र्यद्दानविकल्पार्थमिदमुक्तम् । तद्व्यपि-
कामश्च नक्तमश्नीयादिति ॥ १९० ॥

उपास्तमयं देवाः पितरः पितरो देवा योऽह-
मस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि
स्वं म इष्टꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतमस्त्विति ॥१९१॥

इत्याह्वयति । तत्कृत । स यो हैव विद्वान् देवाः पितर इति ह्वयतीत्याह्वाने विनियोगात् ॥ १९१ ॥

पूर्वेण प्रविशति दक्षिणेन पत्नी ॥ १९२ ॥

पूर्वेण द्वारेण यजमानो दक्षिणेन पत्नी ॥ १९२ ॥

पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥ १९३ ॥

गार्हपत्यागारनिहितस्याग्नेः पश्चाद्दक्षिणतः पत्नीमनुबन्धनात् ॥ १९३ ॥

अश्वत्थशमीगर्भारणी प्रयच्छति ॥ १९४ ॥

अश्वत्थश्चासौ शमीगर्भश्च अश्वत्थशमीगर्भस्तत्सम्बन्धिन्यौ अरणी प्रयच्छति यजमानाय । ते चाग्न्युत्पत्त्यर्थे परिगृह्येते । एवं च सति ते एव व्यक्ती सर्वदा भवतः । अन्ते च प्रतिपत्तिदर्शनात् । अरणी क्षपणयोरिति । तथा च सत्यनयोरभावे नारण्यन्तरादुपादानं शक्यं कर्तुं व्यक्तिनियमात् ॥ १९४ ॥

अभावेऽगर्भस्य ॥ १९५ ॥

शमीगर्भाभावेऽश्वत्थमात्राद्गृह्येते ॥ १९५ ॥

वाचं यच्छत्यापूर्णाहुतेरित्याहास्तमिते निशायां
पर्युदयं वा प्रधान कालत्वात् ॥ १९६ ॥

अस्तमित आदित्ये रात्रौ यजमानमाहेति शाखान्तरश्रवणात् । अस्तमित इति श्रुतत्वादस्तमितग्रहणम् । रात्राविति च श्रुतत्वान्निशाग्रहणम् । पर्युदयमिति च वाग्यमस्य पदार्थधर्मत्वात् ।

तेषां च पर्युदयकालता यद्या यतवाक्त्वेन हि पदार्थाः सुखेनानुष्ठीयन्त इति दृष्टार्थता भवति। इतरथा ऽदृष्टार्थता स्यात्। तस्मात्पर्युदयमेवेति। यत्तु अस्तमिते आदित्ये रात्रावित्ति च श्रूयते तदुदयसमीपेपि भवत्येव। प्रागुदयाद्धि रात्रिरेव भवतीति। अपरे तु विकल्पमेवेच्छन्ति ॥ १९६ ॥

गार्हपत्यागारे ऽजं बध्नाति न वा विद्यमानं प्रातरग्नीधे दद्यात् ॥ १९७ ॥

तत्रैके ऽजमुपबध्नन्तीति प्रकृत्याह। तत्तु तथा न कुर्याद्यद्यजः स्यादग्नीधएवैनं प्रातर्दद्यात्तेनैवं तं काममाप्नोतीति। तेन यदजो नास्ति ततो नियोगतो बध्यते। अविद्यमाने प्रातरग्नीधे संस्थिते कर्मणि दानं संस्थित इति काण्वपाठात्। एतां रात्रिमजं बध्नातीति चास्तमितग्रहणम् ॥ १९७ ॥

१अस्तमिते रोहिते चर्मण्यानडुहे चत्वारि हविष्यपात्राणि मिमीते तं चातुष्प्राश्यं पचति ॥ १९८ ॥

हविष्याश्च व्रीहयो न यवाः। ओदननिर्देशात्। अथ चातुष्प्राश्यमोदनं पचन्तीति। तं चातुष्प्राश्यं पचतीति तमिति निर्देशात्तण्डुला एव मीयन्ते न व्रीहयः। कण्डनस्याश्रुतत्वात्। पात्राणि च प्रसृतिपरिमाणानि भोक्तृतृप्तिपरिमाणं सावच्छेदकम् ॥ १९८ ॥

उद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम् ॥ १९९ ॥

---

१ सूर्ये ऽस्तमुपगते रक्तवृषभचर्मणि व्रीहिपूर्णानि चत्वारि पात्राणि स्थापयति। चतुर्णामृत्विजां तृप्तिपर्याप्तं तं चातुष्प्राश्यं गार्हपत्ये ऽग्नौ पचति इत्यर्थः।

चातुष्प्राश्यस्यासेचनं मध्ये कृत्वा सर्पिरासिच्य तेनाक्तास्ति स्र समिध आदधाति समिधाग्निमिति प्रत्यृचमिति ॥ १९९ ॥

उपत्वेति जपति ॥ २०० ॥

भिमिरादधास्येष जपतीति हि श्रूयते ॥ २०० ॥

१द्वितीयां वाध्वर्युः ॥ २०१ ॥

द्वितीयां वा जपति । येनैवं श्रूयते । समिद्वतीभिर्घृतवती-भिश्चाग्निमभ्यादधतीति समिच्छब्दवतीभिर्घृतशब्दवतीभिश्चेति । द्वितीया च न समिच्छब्दवती अतो द्वितीयामेव जपतीति । पाठक्रमस्तु लिङ्गेन बाध्यते । अध्वर्युग्रहणं च पाठक्रमव्युदासार्थम् । अतश्च समिदाधानान्ते जप । अपरे तु जप याजमानमिच्छन्ति । मन्त्राश्चाकर्मकरणा इति सूत्रितत्वात्तत्राध्वर्युरित्युच्यते ॥२०१॥

चत्वार ऋत्विजः प्राश्नन्ति ॥ २०२ ॥

तमादनम् ॥ २०२ ॥

राद्धस्ते ब्रह्मौदन इत्याह ॥ २०३ ॥

अध्वर्यु ॥ २०३ ॥

वरं ददाति ॥ २०४ ॥

ऋत्विग्भ्यो यजमान । चातुष्प्राश्येन चानतैर्निर्वर्तित्वादि-ष्विषु ब्रह्मवरणं न भवति । असति चातुष्प्राश्य भवतीति चेत् । नाध्वर्य्वादिविषयत्वात् । अग्न्याधेय ब्रह्मा सामानि गायतीति प्रवृत्तक्रिय एवासाविति ॥ २०४ ॥

संवत्सर वापुरस्तात्कुर्यात्ततः सर्वानादधीत ॥ २०५ ॥

---

१ अथवा न उपत्वेति ऋच जपत्यपि तु सुसमिधायतीमा जपतीत्यर्थं ।

इदमन्यत्पक्षान्तरम् । पुरस्तादाधानस्य संवत्सरं यावद् मांसादिवर्जनान्तमादनं कुर्यादिति । अस्मिंश्च पक्षे उत्तमरात्रिसंयोगेन चत्वारः पदार्था भवन्ति । अशननियमः । अजबन्धनम् । जागरणम् । वाग्यन्धश्चेति । उत्तमसंयोगेन ह्येते श्रूयन्ते । पञ्चहरस्य श्वोऽग्न्याधेयः स्यादिवैवा श्नीयादिति अशननियमः । तथा पतां रात्रिमजं बध्नन्तीति अजबन्धनम् । तथा जाग्रति देवा इति प्रकृत्याह । स स देवतरं भ्रान्ततरस्तपस्विनरोऽग्नी आधत्त इत्याधानकालता भवति । वाग्यन्धस्य प्रधानकालत्वादियुक्तमवेति । ततः सर्वानादधीत । ततः एवाग्नः सकाशात् सर्वमग्य आधीयन्त । सभ्योऽपि तत एव सर्वग्रहणात् । तस्य हिं मन्थनं विहितम् । सभ्य च निर्मथ्येति ॥ २०५ ॥

अत्राधानोत्तरकालं कर्म विरच्यते—

गार्हपत्येनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् ॥ २०६ ॥

विहरणोपदेशादग्निहोत्रकाले गार्हपत्यानुगमने लौकिकमग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्भ्यो दत्वा तमेव विहृत्याग्निहोत्रहोमं कुर्यात् । पुनः स्वयोनेराहरणम् । गुणार्थत्वाच्च मात्र मानादि भवति ॥ २०६ ॥

रात्रिं जागरणधारणे ॥ २०७ ॥

जागरणं यजमानस्य धारणमग्ने ॥ २०७ ॥

शकलैर्वा ॥ २०८ ॥

प्रसिद्धे । गोमयादिभिर्वा । ननु चैतद्व्याख्यम् । सामर्थ्यसिद्धत्वात् । वाच्य वान्यतरनियमो यथा स्यादिति ॥ २०८ ॥

व्युष्टायामुपशमय्य दक्षिणा वासः हरेदन्वाहार्यपचनश्चेत् ॥ २०९ ॥

व्युष्टायां रात्रावुपशमय्यतमग्निं दक्षिणा वा संहरेत् । यद्य-

न्वाहार्यपचनो नित्योऽभिप्रेतः स एवं भवति ॥ २०९ ॥

स्थानमुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः ॥ २१० ॥

उपशमितस्याग्नेः स्थानमुल्लिख्यान्वारब्धेऽभ्युक्ष्य हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः । अन्तग्रहणाच्च उपाखूत्करैर्वृत्ताकारः कर्त्तव्यः । ततोऽन्तेषु शर्करा इति । अत्र चोल्लेखमोपलक्षिताः स्मार्त्ताअपि पदार्थाः परिसमूहनादयः पूर्वं कर्त्तव्याः । अभ्युक्षणं तु मन्त्रेणैव भवति ॥ २१० ॥

हिरण्यमुपर्यके ॥ २११ ॥

उपरिष्टादेके हिरण्यमिच्छन्ति । एवमपि हि श्रुतत्वात् ॥२११॥

एवमितरयोः ॥ २१२ ॥

आहवनीयदक्षिणाग्न्योः स्थाने कर्त्तव्ये ॥ २१२ ॥
अयं तु विशेषः—

पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु मत्या वा ॥ २१३ ॥

तं वा अष्टासु विक्रमेष्वादधीतेत्येवमादि वचनात् ॥ २१३ ॥

इतरस्य त्रितृतीये दक्षिणतः ॥ २१४ ॥

इतरस्य दक्षिणाग्नेः त्रितृतीये देशे दक्षिणतः स्थानं कर्त्तव्यम ॥ २१४ ॥

उत्सृष्टेमिमथनमनुद्धृत एके ॥ २१५ ॥

उदितेऽनुदिते वाग्निमन्थनं भवति ॥ २१५ ॥

उदिते तूद्धरणम् ॥ २१६ ॥

उद्धरणं तूदित एव कर्त्तव्यम ॥ २१६ ॥

अपरेण गार्हपत्यायतनम् ॥ २१७ ॥

मन्थनं भवतीति वाक्यशेषः ॥ २१७ ॥

तत्र च—

अश्वमानयेति ब्रूयात् ॥ २१८ ॥

तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयादिति। अतश्च यो मन्थिष्यन् स प्रैषं ददाति। स चाध्वर्युः शाखान्तरे विहितः। तस्मादध्वर्युः प्रत्यङ्मुखोमन्थतीति। अग्नीमनुप्रैषार्थं करोति ॥२१८॥

१स्थितेऽश्वे पुरस्तात् ॥ २१९ ॥

मन्थनं भवति ॥ २१९ ॥

जाते वरदानम् ॥ २२० ॥

जातेऽग्नौ वरदानं कर्त्तव्यम् ॥ २२० ॥

मनसैके ॥ २२१ ॥

मनसा वा सङ्कल्पमात्रं कृत्वा पश्चाद्ददाति ॥ २२१ ॥

तस्याभिश्वासः प्राणममृते दध इति ॥ २२२॥

---

१ तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ईशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्याः मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पूर्वेऽरण्यन्ते मन्थनस्थानं कृत्वा चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्रकीलकस्योपर्युदगग्रामोविलीं निधाय यन्त्रं धारयित्वा चात्रं नेत्रेण प्रदक्षिणं त्रिर्वेष्टयित्वा तथा मन्थनं कुर्याद्यथा जातोऽग्निः प्राच्यां पतति। तत्र यजमानः प्राङ्मुखो यन्त्रधारणं करोति, पत्नी चात्रं नेत्रेण त्रिर्वेष्टयित्वा मन्थनं करोति। ततः शाखान्तरादध्वर्युश्च। 'तस्मादध्वर्युः प्रत्यङ्मुखोऽभिमन्थति' इति। चात्रादीनां लक्षणमन्यत्र स्पष्टम्।

अभिश्वासेन च प्राण्यते अग्निः समर्थः क्रियते । ततश्च मुखेनाभिश्वासः क्रियते ॥ २२२ ॥

उच्छ्वासोमृतं प्राण आदध इति ॥ २२३ ॥

वायूपादान उच्छ्वास । सैव चापाननक्रिया । स पुनरपानिति त्वदेनमन्तरात्मन्नादध इति । तदेनमग्निम् अन्तरात्मनादध इति । यजमानसंस्कारोयमिति तत्कर्तृकः । अतश्च पुनराधेये न भवत्यग्निसंस्कारत्वात् । अभिश्वासस्तु भवत्येव । द्वावपि चैतावेककर्तृकौ । सपुनरपानितीति वचनात् । अभिश्वास पुनर्जातसंयोगात्ततः सर्वाना-दधीतेत्यत्र न भवति । उच्छ्वासस्त्वात्मसंस्कारादपर्येवेति ॥२२३॥

१दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्वमुष्य त्वा व्रतपते व्रतेनादध इति यथर्षि ॥ २२४ ॥

यथर्षि ग्रहणेन शाखान्तरपरिपठितमार्षेय गृह्यते । यद्यङ्गिरा अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादध इति । यदि भृगवः भृगूणां त्वा देवानां व्रतपते व्रतेनादध इति । भार्गवाङ्गिरसव्यतिरिक्तानामादित्यानां त्वा देवानामिति । एवं हि शाखान्तरे पठ्यते२ ॥ २२४ ॥

---

१ तं जातमग्निं दारुभिर्यज्ञीयवृक्षकाष्ठैर्ज्वलन्तं दीप्यमानं सम्भारेषु सम्भाराणां हिरण्यादीनामुपरि भूर्भुव इति मन्त्रेण अमुष्य त्वेति मन्त्रेण च स्थापयति, यथर्षि यस्य य ऋषिर्भवति तस्यामुष्येति स्थाने तद्वाचि पदं षष्ठ्यन्तं प्रयोज्यमित्यर्थः ।

२ तथा चापस्तम्बः 'भृगूणां त्वा देवानामिति यो भार्गवः स्यादङ्गिरसां त्वा देवानामिति यो ब्राह्मण आङ्गिरसः स्यादादित्यानां त्वा देवानामित्यन्यासां प्रजानां, वरुणस्य त्वा राज्ञो व्रतपत इति राज्ञ इन्द्रस्य त्वेन्द्रियेण व्रतपत इति राजन्यस्य मनोर्ग्रामण्यो व्रतपत इति वैश्यस्य आदित्यानां त्वेति रथकारस्येति यथर्ष्याधानमिति ।

वरुणस्य त्वेति क्षत्रियस्यैन्द्रस्य त्वेति राजन्यस्य ॥ २२५ ॥

मनपते मवेनादश्च इत्युभयत्र सम्बध्यते । राजन्यग्रहणेन च कैश्चिदनभिषिक्तो गृह्यते । अनभिषिक्त क्षत्रिय इति । एतच्चायुक्तम् यत्कारण क्षत्रियायां ब्राह्मणाज्जाता राजन्य इति स्मर्यते । तस्मात्स एव गृहीतव्य ॥ २२५ ॥

मनोर्ग्राम्या ग्रामण्य इति वैश्यस्य ॥ २२६ ॥

ऋभूणां त्वेति रथकृतः ॥ २२७ ॥

आदधाति । देवानामित्यत्रापि हि पठ्यते । रथकारशब्द स्वजातिनिमित्त इत्युक्तम् ॥ २२७ ॥

रथन्तरं गायेति प्रेष्यति ॥ २२८ ॥

प्रैषप्रैषार्थयोः कर्तृभेदात्र ज्ञायते क प्रैषे को वा प्रैषार्थ इत्यत आह—

गानमध्वर्योः ॥ २२९ ॥

समाख्यानात् । अध्वर्युवेदविहित हि सामगानम । उत्पत्तिमात्र हि सामवेदे । प्रैषार्थस्य च प्रधानभूतत्वात् ॥ २२९ ॥ पत्र प्राप्त आह—

ब्रह्मा वा वेदयोगात् ॥ २३० ॥

ब्रह्मा वा सामगायति । कुत एतत् । ब्रह्मणोपि ह्यध्वर्युवेदविहितकर्मयोगास्ति । यवत्रयविहित हि ब्रह्मत्वमत. समाख्यातस्तत्रापि घटते ॥ २३० ॥

युक्तत्वाच्चाध्वर्योः ॥ २३१ ॥

अपि च युक्तोध्वर्यु पदार्थान्तरेषु । तथा च सूत्रान्तरम् ।

प्रस्तोता परिसामानि गायति अग्न्याधेये सौत्रामण्यां च प्रस्तौति । तस्माद् प्रस्तौव सामगाने ॥ २३१ ॥

## इध्मेनोद्धरणमुपयम्य ॥ २३२ ॥

परिधिवृक्षसम्बन्धिनेध्मेनाहवनीयोद्धरणम् । उपयमनीभिर्मृद्भिर्गृहीत्वा विस्रस्तत्वाच्च मृद्भिर्ग्रहणानुपपत्तिस्तत्रारोपणमात्रेणैवोपयमनम् । तत्र चेध्माग्नमारोप्यते । बुध्रा. पुनरग्न्याविति ॥२३२॥

## यथैनं धूम उपेयात् ॥ २३३ ॥

तथा चोद्धरणं कर्त्तव्यम् । यथा यजमानं धूम उपगच्छेत् । अनेन च प्रकारेण यजमानस्य धूमानुगमनं विधीयते ॥ २३३ ॥

## वामदेव्यमिति प्रेष्यत्यश्वः पुरस्ताद्युवा तदभावे ऽयुवाश्वाभावे ऽनड्वान् ॥ २३४ ॥

तं यत्र प्राञ्चं हरन्ति तत्पुरस्तादश्वं नयन्तीति वचनात् । मन्थनकालाहृत एवायमश्वो नाश्वान्तरं तदभावे वानड्वान्भवति । अस्मिंश्च पक्षे अनभिधायकत्वादश्वमानयेति प्रैषाभावः ॥ २३४ ॥

## [1]सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वावर्त्य स्थापयति ॥ २३५ ॥

दक्षिणपूर्वपादेनेति सन्निधानात्सम्भारानुसरेण प्राञ्चं नीत्वावर्त्य स्थापने क्रियमाणे सन्निहितो दक्षिणपूर्वपादः । एवं च सत्यश्वो सव्येनाक्रमणम् ॥ २३५ ॥

---

१ एवं प्राङ्मुखे ऽश्वे भ्रमतो नीयमाने आहवनीयस्थानसमीपं प्राप्य प्राङ्मुखस्यैवाश्वस्य दक्षिणपूर्वपादेनाग्नेर्दक्षिणचरणेनाहवनीयस्थानात् हिरण्यादिसम्भारानधिष्ठाप्य अश्वपादेनाक्रमय्य तमश्वं प्राञ्चं नीत्वा तत आवर्त्य प्रदक्षिणावर्तनेन प्रत्यङ्मुखं कृत्वा समुखं स्थापयतीत्यर्थः ।

वृहदिति प्रेष्यत्यग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत् ॥ २३६ ॥

अग्निना पद द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेनादधाति द्वितीयेन वा भूर्भुवः स्वरित्यनेन मन्त्रेण । पूर्ववच्छब्देन च यथर्षीति लभ्यते ॥ २३६ ॥

पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह ॥ २३७ ॥

पुरस्तात्परिक्रम्याग्नेः इध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेति मन्त्रं जपति । तच्चैतद्यजमानः करोति । इध्मपूर्वार्द्धान्वारम्भण इति अन्वारम्भोपदेशात् । तस्य च याजमानत्वात् । मन्त्रलिङ्गाच्च । अग्निमग्नादमन्नाद्यायादध इति ॥ २३७ ॥

आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः ॥ २३८ ॥

शब्दाद्यजमानोऽग्न्युपस्थाने । सार्पराज्ञी ग्रहणं च सव्यवहारार्थम् । सार्पराज्ञीर्वा कुर्यादिति ॥ २३८ ॥

दक्षिणाग्निमादधाति ॥ २३९ ॥

गार्हपत्यात् । नित्यपक्षे योऽसौ दक्षिणाह्वनस्तमादधाति ॥ २३९ ॥

सभ्यं च निर्मथ्य ॥ २४० ॥

चशब्दादादधातीति । तं च सभायाम् । अथ य एष सभ्यामग्निरिति वचनात् । सभा च यत्र स्थितोऽध्यापयति व्याचष्टे वा ॥ २४० ॥

गां दीव्यध्वमित्याह ॥ २४१ ॥

दीव्यतिः क्रीडार्थः । गां पणं कृत्वा द्यूतं रमध्वमित्यर्थः । बहुवचनापदेशात्प्रकृतत्वाच्च ऋत्विजोऽभिधीयन्ते द्यूतस्य कर्तृत्वेन ।

तथैतधृतं सभ्याङ्गम् । सभ्यस्य प्रकृतत्वात् । उपरितनसूत्रे च तद्धर्मोपदेशात् ॥ २४१ ॥

धारणोपस्थानमत इति ॥ २४२ ॥

सभ्याङ्गत्वे च पुनराधेये न भवत्येव विद्यमानत्वादेव सभ्यस्य । यद्यपि च तनूहवींषि कालान्तरे क्रियन्ते तथापि तु सभासनमत एवारभ्य कर्त्तव्यमिति ॥ २४२ ॥

श्यैतवारवन्तीययज्ञायज्ञियानीति च

प्रेष्यति ॥ २४३ ॥

च शब्दः सभ्यानन्तर्यप्रज्ञप्त्यर्थः । श्यैतादीनां चैककालं प्रैषोच्चारणमिति सम्प्रदायः । प्रैषप्रैषार्थयोरानन्तर्याद्भेदे नेत्यपरे । तत्र श्यैतगानोत्तरकालीनो वारवन्तीयप्रैषः । वारवन्तीयोत्तरकालीनश्च यज्ञायज्ञियस्य ॥ २४३ ॥

दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥२४४॥

प्रदक्षिणमग्निपरिगमनं कृत्वा उदगुत्सृजत्यश्वम् । दक्षिणप्रदेशाच्च नेतरथावृत्तिर्भवति ॥ २४४ ॥

ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्य-

जागरणेध्मपूर्वाह्णान्वारम्भणसार्पराज्ञीर्न

वा कुर्यात् ॥ २४५ ॥

ऋत्वादिविकल्पार्थमिदमुक्तम् । ऋतौ तावत् । ते वा एत ऋतव उभय एवापहतपाप्मान इति प्रकृत्याह तस्माद्यदैवैनं कदाच यज्ञ उपनमेदथाग्नीआदधीतेति । तथा यदैवैनं श्रद्धोपनमेदथादधातीति ऋत्वनादरः । तस्मान्न नक्षत्र आदधीतेति नक्षत्रविषयोनादरः । नक्षत्रानादरे चामावास्यायां नियम इति सम्प्रदायः । तत्पुनर्नातीव युक्तरूपम् । यत्कारणं अमावास्या नक्षत्रं च मेदेन विहिते । कृत्तिकास्वग्नीनादधीतेति नक्षत्रविधानम् । तद-

नादरे चाकृत्तिकादिष्वपीति गम्यते । तथा चाह, यस्तु नक्षत्रकामः स्यादेतद्वा अनपरार्द्धं नक्षत्रं यत्सूर्यः स एनेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सैंदिति । एवं सत्यमावास्यायामकृत्तिकादिष्वप्याधान भवत्येव । सम्भारेषु विहितप्रतिषेधाद्विकल्प । न वै कश्चनं सम्भारः सम्भरेदिति वचनात् । सामस्वपि वालेऽग्निस्तेजोचन्ति सामानि तस्मान्न गेयानीति । वपनेपि शाखान्तराद्विकल्प । चातुष्प्राश्येपि चातुष्प्राश्यमोदनं पचन्तीति विधायाह यद्वा अस्य ब्राह्मणाः कुले वसंत्यृत्विजश्चानृत्विजश्च तेनैतं काममाप्नोतीति विकल्पः । जागरणमपि विधायोच्यते । तद्वपि काममेव स्वप्यादिति । इध्मपूर्वार्द्धान्वारम्भणे च पूर्वार्द्धमुल्मुकानामभिपद्य जपतीत्युक्त्वाह स यदि कामयेत जपेदेतद्यदु कामयेतापि नाद्रियेतेति । सार्पराज्ञ्युपस्थानमपि सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति विधायाह तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति ॥ २४५ ॥

विकल्पप्रसङ्गेनेदमपरमुच्यते—

## अग्निहोत्रं च तूष्णीं, श्रुतेः पूर्णाहुत्यन्ते ॥ २४६ ॥

अग्निहोत्रशब्दोऽत्र धर्मवचनीयमिकाग्निहोत्रधर्मातिदेशार्थः । वा जुहुयाद्वा न जुहुयादिति । कुत एतत् । एवं हि शाखान्तरे पठ्यते । होतव्यमग्निहोत्रं न होतव्यमग्निहोत्र विधिप्रतिषेधाशङ्काग्निहोत्रं चेत्युक्तम् । तत्पुनरयुक्तम् । न ह्येतौ विधिप्रतिषेधौ । तूष्णीं होमप्रशंसैषा । यदि जुहोत्ययथाकुर्यादथ न जुहोत्यग्निः परापतेत्तस्मात्तूष्णीं जुहुयादिति । अतो न विकल्पः । तच्चैतदग्निहोत्रं सायारम्भ प्रातरपवर्गं प्रयोगद्वयपरिसमापनम् । आग्नेयी सायमाहुतिः सौरी प्रातराहुतिः प्रधानभूते । अत्र चैककालत्वादङ्गानि तन्त्रेण । प्रधानाहुती तु चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तर तदुत्तीय चतुर्गृहीतान्तरेण सौरीम् शेषमेकीकृत्योत्तराहुतिरिति । तच्चैतत्पूर्णाहुत्यन्ते भवति ॥ २४६ ॥

पूर्णाहुतिविधानायाह—

## निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक् स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वान्वार-

अत एव सर्वत्र स्वाहेति ॥ २४७ ॥

पूर्णाहुतिरिति कर्मणो नामधेयम । अन्वर्थसञ्ज्ञा चैषा । तेन पूर्णैव होतव्या । तां चै पूर्णां जुहोतीति वचनात । निरुप्याज्य गार्हपत्येधिश्रयेत । गार्हपत्यग्रहणं च आहवनीयव्युदासार्थम । तत्रापि हि श्रपण विहित श्रपण चाहवनीय इति । अपरे तु मन्यन्ते । अधिश्रयण संस्कारमात्रमेवैतत् । न ह्येतच्छ्रपण धापाक इति धात्वर्थ पाकनैव त्वाज्य सद्वृत्तं तस्मान्नाहवनीयव्युदासार्थम गार्हपत्यग्रहणम् । कस्तह्यत्र समाधि. । गार्हपत्यशब्दस्य संस्कारनिमित्तत्वात्तदभावाच्च भाविन्या वृत्त्या गार्हपत्यत्वाध्यारोपणार्थं गार्हपत्यग्रहणम् । एव च सत्याहवनीयत्वमेव न्याय । स्रुक् स्रुव-समुच्यते । होमसम्बन्धाद्वैकद्रुती स्रुक । स्रुवश्च विशेषितत्वात्खादिर एव । तथा च अग्निहोत्र विधानसामर्थ्यात । चैकन्तः स्रुवो भवति । उद्वास्योत्पूयावेक्ष्य स्रुवेण ग्रहणम । स्रुवस्य सम्मार्जनविधानात । ग्रहणार्थता सम्मार्जनोत्पवने च दर्भेयेन कचित्पाणिना सम्मार्ष्टीत्याह । अन्वारब्धे जुहोति स्वाहेति । एव सर्वत्र । यत्राव्यक्ता जुहोति चोदना तत्राधिश्रयणादि प्रवर्त्तते । कुत एतत् । जुहोति शब्दात् । अव्यक्तता सामान्याच्च ॥ २४७ ॥

वरं ददामीति वाग्विसर्जनम् ॥ २४८ ॥

वरदान च पूर्णाहुत्यङ्गम । तस्यां वर ददातीति वचनात । पूर्णाहुतिधर्मांश्चानुदृधृताऽयस्तमयाहुतौ विहिता गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयानेक्ष्यैरयेवमादि । इयं त्वविहितधर्मका तेन चोदनासारूप्येण ततो धर्मान् गृह्णाति । अत आचार्येण तदीया धर्मा इहापदिष्टा । तत्रान्वारम्भणवरदाने न विहिते । अतस्तयोरतिदेश. । वाग्यमोपि चेहैवेति नातिदिश्यते ॥ २४८ ॥

द्वादशाहान्ते तनूहवीं षि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा न वेति ॥ २४९ ॥

निगदव्याख्यातम् ॥ २४९ ॥

तनूहवींष्युच्यन्ते—

अग्नये पवमानाय प्रथमा ॥ २५० ॥

इष्टिमंत्रति ॥ २५० ॥

अग्नये पावकायाग्नये शुचये ॥ २५१ ॥

द्वितीया ॥ २५१ ॥

अदित्यै चरुस्तृतीया ॥ २५२ ॥

न चेयं तनूहविषां मध्ये पठ्यते । तेनास्या उपांशुत्वं न भवतीति सम्प्रदायः । शाङ्खायनशाखायां तूपांशुत्वमस्याः पठ्यते ॥२५२॥

आग्नेय एव वा पुरस्तादादित्यस्य ॥ २५३ ॥

आग्नेयो वा प्रागादित्यात् अथादित्यै चरुरुपांशु ॥ २५३ ॥

षड्दक्षिणाः प्रतिविभज्य ददाति द्वादशचतुर्विंशतिं वा ॥ २५४ ॥

प्रतीष्टिविभागेन दक्षिणादानम् ॥ २५४ ॥

भूयसीश्च यथा श्रद्धम् ॥ २५५ ॥

उक्तसंख्याव्यतिरेकेण यथा श्रद्धं भूयसीश्च ददाति ॥ २५५ ॥

धेनुरादित्यस्य ॥ २५६ ॥

ताश्चैता दक्षिणा इष्टिसम्बन्धादिष्टयङ्गं न सफलस्याधानस्य । तथाचोक्तम् । उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्तीति प्रकृत्य स एष यज्ञो हतो न ददक्षे तं देवा दक्षिणाभिरदक्षयन्निति तस्मादिष्टीनामेव दक्षिणा इति । प्रयोजनं इष्ट्यभावे तदभावः ॥ २५६ ॥

अनृतातिथ्यपनोदपूतिदार्वाधानवीसपक्वना-

व्युदकानि वर्जयेत् ॥ २५७ ॥

अनृतातिथ्यपनोदः स्मृतिप्राप्त एवानूद्यते । नानृतं वदेदिति स्मृतिः । अब्राह्मणोऽतिथिरिति च । तदनुवादोऽयम् । न वा आहिताग्निनानृतं वदितव्यमिति । तदेतच्छ्रौतीव शुक्लरूपम् । यतोऽनुवादसामानर्थक्यम् । विधौ च प्रवृत्तिविशेषकरत्वम् । तस्माच्छ्रुतेर्यथार्थं सत्यवदननियमः । एवं च तदपचारे श्रौतं स्मार्तं च प्रायश्चित्तम् । पूतिशब्दो दुर्गन्धिद्रव्यवाची प्रसिद्धेः । ऋषीसपक्वं यत्पृथिव्या गर्ते तिन्दुकादि पाचितम् । ऋषीसशब्दश्च पृथिवीवचनो नैघण्टुकाभिमानात् । योऽयमृषीसे पृथिव्यामग्निरिति । व्युदकं च । अग्निहोत्रार्थमुद्धृते उन्नायुदकदानप्रतिषेधः । स यदुद्धृते प्राय-स्यागताय नोदकं याचन्त इति । नौशब्दश्चात्राग्निहोत्रविषयो नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रमिति ॥ २५७ ॥

१ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी-

द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥ २५८ ॥

निगदव्याख्यातम् । पुरुषधर्मश्चायम् । ततश्च सोमाधाने समारोपस्य क्रतुधर्मत्वात् पुरुषधर्मोऽग्निनित्यधारित्वं बाध्यते ॥२५८॥ अन्याधेयमनुविहितमवसरप्राप्तमिदानीं पुनराधेयमुच्यते—

२पुनराधेयमाधानाप्रतिज्ञातस्य ॥ २५९ ॥

---

१ यजमान आधानानन्तरं द्वादशरात्रम् अथवा षड्रात्रम्, अथवा अन्ततः अन्तिमपक्षे त्रिरात्रं ब्रह्मचारी भवेत् । अग्निनित्यधारी गार्हपत्याहवनीयदक्षिणाग्निसंज्ञानग्नीन् नित्यं धारयेत् । क्षीरहोमी दुग्धेनैवाग्निहोत्रं जुहुयात् । अग्निमुपशायी अग्निसमीप एव भूमौ शयीतेत्यर्थः ।

२ सूत्रार्थस्तु योऽधनवृत्ताध्ययनादिमत्तयाऽतिप्रसिद्धः पुरुषः स प्रतिज्ञात इत्युच्यते, न प्रतिज्ञातोऽप्रतिज्ञातः, आधानलक्षणेन निमित्तेनाप्रतिज्ञातः आधानाप्रतिज्ञातः यः प्रागाधानाल्लब्धप्रतिष्ठोऽपि अग्न्याधानसमनन्तरं सपशुपादयोगेन विद्यमानानामपि हानेर्लोमामाषा-प्राप्रतिष्ठितोऽप्रसिद्ध इव स्यात् अप्रतिष्ठ इव भवेत् तदर्थं पुनराग्न्यु-

पुनराधेयमिति कर्मणो नामधेयम् । तच्चाधानाप्रतिज्ञातस्य भवति । यस्याधानसमनन्तरमेव प्रतिज्ञातमपगतं स आधानाप्रतिज्ञातः । एवं हि श्रूयते । यस्याधानमनर्थकं स्यात् स पुनरादधीत । तथा योऽग्नी आधाय सर्वज्यानिं जायते स पुनरादधीत ॥ २५९ ॥

राज्ययशस्कामस्य वा ॥ २६० ॥

त्रिरात्रावरमग्नीनुत्सृज्य ॥ २६१ ॥

त्रिरात्रमवरं यस्य कालस्य स त्रिरात्रावरः । अतश्च त्रिरात्रादपि भवति । अग्नीनिति बहुवचनोपदेशात् त्रय एवोत्सृज्यन्ते ।, अतश्च सभ्यस्यानुत्सर्गः ॥ २६१ ॥

सद्यो वा ॥ २६२ ॥

तत्र विशेष वक्ष्यति । सद्यश्चेदिति ॥ २६२ ॥

पुनर्वस्वोः ॥ २६३ ॥

पुनराधेयमादधीतेति वचनात् ॥ २६३ ॥

वर्षासु मध्यन्दिने वा ॥ २६४ ॥

स वै वर्षास्वादधीतेति वचनात् । तस्मात् मध्यन्दिन एवादधीतेति वा । स चायं विकल्पः । मध्यन्दिने वर्षाकालसम्पत्तेः । यावद्वा मध्यन्दिनीय वर्षा इति प्रकृत्य तस्मात् मध्यन्दिन एवादधीतेत्याह ॥ २६४ ॥

---

रुत्सर्गपूर्वकमनुद्धाग्न्युत्पादकं पुनराधेयसञ्ज्ञकं कर्म भवतीत्यर्थः । तथाथर्वणे पठ्यते 'आधानादृद्धिर्हानिश्चेदर्वाक् संवत्सराद्व्रीहिष्वामग्निहोत्रमुत्सृज्य पुनर्दर्शे पुनरादधीत' इति । बाद्रायणोऽपि 'काम्य पुनराधेयमजानानस्य' इति पठितवान् । अथवा प्रतिज्ञातं प्रियं न प्रतिज्ञानमप्रतिज्ञातमप्रियम् आधानसमनन्तरमेव सर्वस्वहानिपुत्रमरणादिहानिदर्शनादाधानमेव यस्याप्रियमभवति तस्य पुनराधेयमिति । 'एतद्वास्य प्रियतमं धाम' इत्यादि दर्शनात्प्रतिज्ञातशब्दस्य प्रीतौ वृत्तेः ।

कुशैराधानम् ॥ २६५ ॥

उभयोरन्योः । तं वै दर्भैरुद्धरन्तीति हि श्रूयते ॥ २६५ ॥

व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यावुभौ सद्यश्चेत् ॥ २६६ ॥

स चायमपूपः प्राक् सम्भारेभ्यः स्थाप्यते । सम्भारेषु ह्यग्निनिधानं विहितं भूर्भुव इति सम्भारेष्विति । न चापूपस्य सम्भारैः सह विकल्पो धर्ममात्रत्वात् । अतः परिसमूहनादीन्पञ्च पदार्थान् कृत्वा अपूपस्थापनम् । सद्यः पक्षे चापूपौ भवतः । न त्वन्यतरपक्षे । अपूपं प्रकृत्याह पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म इति । पुनस्तन्निराकरणायाह रात्रिभिर्होमैरन्तर्हितौ भवत इति ॥ २६६ ॥

आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुयाजात् ॥ २६७ ॥

तेनोपांशु चरन्तीति प्रकृत्याह उपैवोत्तममनुयाजं यजतीति । अतः प्रागित्युक्तम् ॥ २६७ ॥

तद्वर्जं वा ॥ २६८ ॥

उत्तमानुयाजवर्जं वोपांशु भवति । उपैवोत्तममनुयाजं यजतीति । एतावानेव हि विधिः । आग्नेयं प्रकृत्याह तेनोपांशु चरन्तीति । चरणशब्दे च सर्वस्योपांशुताचार्येणोक्ता चरणशब्दे सर्वमिति । पञ्चकपाल एवैको भवति । नान्या इष्टयः । एवकारकरणात् । आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपतीति ॥ २६८ ॥

अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च ॥ २६९ ॥

या समिधो यजेति देवान् यजेति वा । एवं श्रूयते प्रयाजानप्रकृत्य स आश्राव्याह समिधो यजेति अग्नीन्यजेति इत्येव प्रयाजेन विकल्पनाद्वा अग्नीनिति वेत्युक्तम् । यद्येवमग्नीनित्येवैतस्यावधारयित-

व्यम समिधो यजेति हि तस्यैव संस्तवायोच्यते । अतोऽग्नीतिनिवेत्यवधार्यते ॥ २६९ ॥

अज्यभागो द्वितीयो ऽग्नये पवमानायेन्दुमते वा ॥ २७० ॥

सत्यार्यं वाचनिको देवता विकल्पः ॥ २७० ॥

हिरण्यं दक्षिणानड्वान्वाग्न्याधेयिकीश्चेच्छऽच्छ्रुतेः ॥ २७१ ॥

श्रुतिग्रहणं समुच्चयविधानार्थमिति केचित् । तदयुक्तम् । अग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददात्ययमनुवाद एव । अग्न्याधेयिक्यो हि पूर्वं दत्तास्ततः पुनराधेयिक्यः । श्रुतिग्रहणं च विध्याशङ्कानिवृत्त्यर्थम् ॥ २७१ ॥

अग्न्याधेयवदन्यत्सद्यः ॥ २७२ ॥

उक्तव्यतिरेकेणान्यदग्न्याधेयवद्भवति । इयांस्तु विशेषः । सद्यः । अन्यगारकरणं अरणिप्रदानं उच्छ्वासश्च न भवति । अनग्निसंस्कारात् ॥ २७२ ॥

अपराह्णे मैत्रावरुणी वशानस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिशृतया प्रातश्चरन्ति तत आधानम् ॥ २७३ ॥

इदमन्यत्पक्षान्तरम् । पूर्वेद्युरपराह्णे मैत्रावरुणीं यथामालभ्य रात्रौ श्रपयित्वा प्रातः प्रचारस्तत आदधीत । पुनर्वस्त्वोरेव नान्यत्र । न त्रिरात्रावरमुत्सर्गो नापूपाचिति ॥ २७३ ॥

पुनराधेयमनुविहितमिदानीमग्निहोत्रस्यावसरस्तं प्रोत्सार्य यागान्तरावगतक्रमेण तदङ्गभूतमुपस्थानमनुविधीयते—

सायमाहुत्यां हुतायां यजमानोऽग्नी उपतिष्ठ-

ते वात्सप्रेण ॥ २७४ ॥

सायमुपतिष्ठेत सायः । द्वि देया उपातिष्ठन्तेति वचनात् । वात्सप्रमिति चोपस्थानक्रियानाम । यद्यपि च हुतायामित्युक्तम् तथापि तु समिदाधानमन्त्रकर्मानन्तर्यात्तदनन्तरमेव कर्त्तव्यम् । हुतशब्दश्च हुतप्रायविषयःयथा हुते च धारावर्जमिति ॥ २७४ ॥

न वा ॥ २७५ ॥

न चोपतिष्ठेत । अथ यस्मात्पुर्वतिष्ठेताथ यस्मान्नोपतिष्ठेतेति । विहितप्रतिषिद्धत्वाद्विकल्पः ॥ २७५ ॥

१तिस्रस्त्रिरुपप्रयन्तोस्य प्रत्नां परितो चित्रावसविति च ॥ २७६ ॥

प्रक्रमादेव त्रित्वसिद्धेस्त्रिरिति प्रहणात् स्वस्थानस्थितानामेव त्रिरावृत्तिः । चित्रावसविति च त्रिरेव ॥ २७६ ॥

सन्त्वमित्युपविश्य ॥ २७७ ॥

उपवीति वाक्यशेषः । एतावत्तुतिष्ठन् जपत्यथासीनः सन्त्वमिति वचनात् ॥ २७७ ॥

गां गच्छत्यन्वस्थेति ॥ २७८ ॥

एतच्च सन्निधानात् कर्माङ्गभूतां गां प्रति गमनं सन्निहितप्रत्ययन्यायात् । एवं च सति गोपक्ष एवैतदुपस्थानं नान्यत्रेति ॥ २७८॥

स्ंहितेत्यालभते ॥ २७९ ॥

नामेन ॥ २७९ ॥

गार्हपत्यं गत्वोपतिष्ठत उपत्वेति ॥ २८० ॥

---

१ अत्रोपप्रयन्तो ऽध्वरमित्यारभ्य परितं तृडम इत्यन्तं वात्सप्रोपस्थानं समाम्नायक्रमेणैव कर्त्तव्यम् । तत्र विशेषमाह—

अग्नी उपतिष्ठत इति द्विवचनोपदेशात् अधस्तनमाहवनीयस्य ॥ २८० ॥

. गां गच्छतीड एहीति ॥ २८१ ॥

तामेव ॥ २८१ ॥

काम्या एतेत्यालभते ॥ २८२ ॥

सोमानमित्यनुदकं व्रतोपायनवत् ॥ २८३ ॥

अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानमिति वचनात् । उदकसंस्पर्शनाविधानाच्चानुदकमिति ॥ २८३ ॥

पौर्णमासवत्पुत्रनाम ग्रहणम् ॥ २८४ ॥

वत्युपदेशाच्च तन्तवे त्वेत्यादिसर्वं प्रवर्त्तते । नाम ग्रहणान्त वात्सप्रमिति ॥ २८४ ॥

भूर्भुवः स्वरिति वोभौः ॥ २८५ ॥

भूर्भुवः स्वरित्यनेन वा मन्त्रणोभावप्यग्नी उपतिष्ठते । क्रमस्तु स एव । क्रमान्तराविधानात् । अस्य च वात्सप्रेण सह विकल्पः । यद्वा वा अदो दीर्घमग्न्युपस्थानमिति प्रकृत्य यत आह तस्मादेतेनैवोपतिष्ठेतेति । एतच्चागोपक्षेपि भवति । न ह्यत्र गांप्रति गमनं स्पर्शनं वास्तीति ॥ २८५ ॥

प्रवत्स्यन्सर्वाग्निर्यैति प्रति मन्त्रम् ॥ २८६ ॥

अधस्तनोपस्थानसमनन्तरमस्य पाठ इति प्रवसतो यजमानस्याग्न्युपस्थानमभिधीयते । प्रवसन्यजमानः सर्वानग्नीनुपतिष्ठते । नर्येति प्रति मन्त्रम् । नर्यप्रजां मे पाहीति च । गार्हपत्य प्रथममुत्पत्तिक्रमात्तत आहवनीयं पुनर्दक्षिणाग्निम् । मन्त्राणां तु लैङ्गिको विनियोगः । नृभ्यो हितो नर्यो गार्हपत्यः ॥ २८६ ॥

गच्छति मत्या वाग्विसर्जनम् ॥ २८७ ॥

गमन सामर्थ्यपरिप्राप्तमेव धाग्निसर्गावसरविधिरस्यो-च्यते । वाग्यमस्तूपस्थानसमनन्तरमेव भवत्यवसरान्तराविधानात् ॥ २८७ ॥

प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्का-
राद्धर्ममात्रत्वाच्छ्रुतेश्च ॥ २८८ ॥

प्रोषितोऽपि याजमानं करोति यथा कालमिति । अग्निहोत्रकाले अग्निहोत्रं याजमानं पौर्णमासकाले पौर्णमासं एवं सर्वत्र । कुत एतत् । आत्मसंस्कारादनुष्ठायमुपदेशाच्च । यदात्मसंस्कारकं तत् कर्तव्यम् । यथा व्रतग्रहणवपनमुण्डनादि । यजमानस्यात्मा संस्कारः । प्रोषितोऽपि च यजमानो यजमान एव । यच्च धर्ममात्रं तत्कर्तव्यमेव । यथा त्रिष्णुक्रमादि । कुत एतत् । धर्ममात्रत्वाच्च । न ह्यनत्कर्मणि सन्निपतितम् । श्रुतेश्च । श्रुतिरप्येतमर्थं ज्ञापयति । यथा प्रोषितेनापि याजमानं कर्तव्यम् । यस्सदूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्नस्य हुताहुतिगृहे याभस्य हुतमिति प्रकृत्याह यो जयिष्ठो भुवनेष्वित्यथमाद्यमिधाय मन एवैतदाह मनसैवास्यानपप्रोषितं भवतीति मनसैवानुचिन्तनेन प्रत्यक्ष इव भवतीत्यमुमर्थं ज्ञापयति ॥ २८८ ॥

एत्य च मत्या वाग्यमनम् ॥ २८९ ॥

पुनरेत्य मत्या वाग्यमनं करोति ॥ २८९ ॥

समित्पाणिरनुपेत्य कञ्चिदुपतिष्ठते आहवनीयगा-
र्हपत्यदक्षिणाग्नीनागन्मेति प्रति मन्त्रम् ॥२९०॥

समिद्भिर्गृहीताभिरागच्छति । गुर्वादिकमप्यनुपेत्य कं चिदाहवनीयादीनुपतिष्ठते आगन्मेति प्रति मन्त्रम् । समासे च सत्यपमेव मम । स आहवनीयमेवाग्र उपतिष्ठतेति श्रुतत्वात् ॥ २९० ॥

समित्परिसमूहनानि चोपनिदय ॥ २९१ ॥

च शब्दादनन्तरमेव । तिष्ठत्समिध सर्वमित्युक्ते समिदुपवेशनं पाचनिकम् । परिसमूहनानामपलुपनमपनय । अग्नेस्तृणान्यपचिनोतीति शाखान्तरात् । तृणप्रक्षेप इत्यपर ॥ २९१ ॥

तूष्णीं वोपस्थानं पूर्ववत् ॥ २९२ ॥

येन क्रमेण गच्छता कृतं तेनैव क्रमेण । स वै खलु तूष्णीमेवोपतिष्ठेतेति प्रकृत्य यत आह स येद् गार्हपत्य· परिदम्मेद् सुपागादिति स वेदाहवनीय इति च ॥ २९२ ॥

गृहा माविभीतेति एत्य च ॥ २९३ ॥

गृहानुपैति ॥ २९४ ॥

क्षेमाय व इति प्रविशति ॥ २९५॥

पूर्ववदेव । येन क्रमेणागच्छता कृतम् ॥ २९५ ॥

नहि; स्याद् गृहान्काम; श्वः ॥ २९६ ॥

गृहानेव । अत ऊर्ध्वं स्मार्त्तं पुनर्दर्शनजपादि प्रवर्त्तते ॥२९६॥

शाखान्तरपाठक्रमात् वात्सप्रोपस्थानमुक्तमिदानीमवसरप्राप्तमग्निहोत्रमनुविधीयते—

उद्धरेति यजमानो ब्रूयात्सायं प्रातरग्निहोत्रे ॥२९७॥

पतच्चाध्वर्युहोमपक्षे । स्वय होमपक्षे तु स्वयमेवोद्धरणमिति प्रैषाभाव । अग्निहोत्रग्रहणाच्च सत्यप्युद्धरणे पौर्णमासादिषु न भवति । सायारम्भं प्रातरपवर्गमग्निहोत्रमिति सायमभिहितत्वान्मा भूदात· प्रैषाभाव इति प्रातर्ग्रहणम् । तत्कृत । आचार्यमिश्रायादावृत्तिर्वा प्रधानकालादिति ॥ २९७ ॥

प्रत्यङ्मुखो वा सायं निदध्यात्

तस्मिंश्शायं प्रातर्होममेके ॥ २९८ ॥

गार्हपत्य धाव स गच्छति गार्हपत्याद्धि स आहतो भवतीति

श्रुतत्वात् । अनस्तमितानुदितयोरिति श्रवणात् । उदितहोमिनामपि अनुदित पर्योक्षणम् तस्मिन्प्रत्यङ्मुखविहिते पक्षे सायं प्रातर्होमं कुर्वन्ति । पक्षे विकल्पेन श्रुतत्वात् ॥ २९८ ॥

नित्यो दक्षिणाग्निः ॥ २९९ ॥

स च दक्षिणा वा संहरेदित्यस्मिन्पक्षे ॥ २९९ ॥

नित्याधिकारोपजिजीविषयेदमाह—

सर्वे गतश्रियः ॥ ३०० ॥

नित्यमश्नन्ति । धार्यो गतश्रिय इति वचनात् । गतश्रीश्च ग्रामश्रीः । स प्रति गता श्रीः एवं हि श्रूयते त्रयो ह वै गतश्रियः ब्राह्मणः शुश्रुवान् क्षत्रियो विजयी राजा वैश्यो ग्रामणीरिति ॥ ३०० ॥

सदा वा हरणम् ॥ ३०१ ॥

दक्षिणाग्नेरधिकारात् । दक्षिणाग्निं ह्यत्राह अहरहरेवैनमाहरेयुरिति ॥ ३०१ ॥

एकेषामुपवसथे ॥ ३०२ ॥

उपवसथ एवैनमाहरेयुरिति वचनात् ॥ ३०२ ॥

[1]नवावसिते वा ॥ ३०३ ॥

नवावसिते चैनमाहरेयुरिति वचनात् नवावसिते चेरयुश्च ॥ ३०३ ॥

तस्मिन्पचेयुरमांसम् ॥ ३०४ ॥

तस्मिन्नवावसिताहने पचेयुरमांसम् । तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नीयुरिति वचनात् ॥ ३०४ ॥

---

१ नवावसिते नवगृहे इत्यर्थः ।

१पाक्याभावे गोः पयोऽधिश्रयितवै ब्रूयात् ॥३०५॥

तश्च यजमान । अध्वर्योरधिश्रयण कर्तृत्वात् ॥ ३०५ ॥

तद्ब्राह्मणं पाययितवै ब्रूयात् ॥ ३०६ ॥

तच्चाध्वर्युं प्रत्याह । पय पायने यजमानस्याधिकारात् ॥ ३०६ ॥

अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः ॥ ३०७ ॥

दक्षिणेन प्रवेशनमग्निहोत्र इति अन्तरेणापराग्नी गत्वा दक्षिणेन वेति । अप्रदक्षिणमाहवनीय परीत्योपविशति यजमान । वचनादप्रदक्षिण परिगमनम् ॥ ३०७ ॥

पत्नी च पूर्ववत् ॥ ३०८ ॥

प्रत्यग्दक्षिणतोगार्हपत्यस्य । च शब्दाद्यजमानश्च पूर्ववत् दक्षिणतो ब्रह्मयजमानयोरासने इति पौर्णमासे परिभाषितम् । यतिना तदतिदिश्यते ॥ ३०८ ॥

अपरेणाहवनीयं कूर्चं निदधाति कुशान्वा ॥३०९॥

कूर्चशब्द आसने निर्दिष्ट । कूर्चावुपावसर्पन्तुपाचेति । तथा हिरण्मये वा कूर्चे हिरण्मये वा फलक इति । एवञ्चैतदासन कूर्चं निधायेति वचनात् । कुशानामपि वैपदिपयस्यासदेयकार्यम् ॥३०९॥

परिस्तरणं वा सर्वेषां प्रागुदग्भिरुदगग्रान्दक्षिणाग्रान्करोतीति श्रुतेः ॥ ३१० ॥

---

१ पचनार्हतण्डुलाभावे 'गो पयो अधिश्रयितवै' इति यजमानोऽध्वर्युं ब्रूयात् ।

परिस्तरणमाहवनीयस्य प्रागुदग्भिर्दर्भैः प्रागग्रैरुदगग्रैश्च दर्भैः । यत्र हि मृतकाग्निहोत्रे आहवनीयं प्रकृत्य श्रूयते । अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोतीति वचनात् । अमूनीति चाग्निहोत्रतृणान्युच्यन्ते । तद्यदि तत्र प्रागुदग्भिस्तदेतदुपपद्यत इति । मृतकाग्निहोत्रे आहवनीयस्यैव दृष्टमिहापि तस्यैव परिस्तरणमित्याशङ्का या सर्वेषामित्युच्यते । सर्वेषामेवैतत्परिस्तरणं कार्याविशेषात् ॥ ३१० ॥

आहवनीयं पर्युक्ष्योदधारां निनयत्यागार्हपत्यात् ॥ ३११ ॥

तं च ॥ ३१२ ॥

*ततो दक्षिणाग्निम् ॥ ३१३ ॥

तं च पर्युक्ष्य ततो दक्षिणाग्निं पर्युक्षतीति प्राप्तस्येऽपि पर्युक्षणे गार्हपत्यसमनन्तरमेव दक्षिणाग्नेः पर्युक्षणम् । अतस्ततो दक्षिणाग्निमित्युक्तम् ॥ ३१३ ॥

हुते च धारावर्जम् ॥ ३१४ ॥

पर्युक्षतीति वाक्यशेषः । तच्च प्राग्यतधिसर्गात् प्रतस्य हि पदार्थधर्मत्वात् । पर्युक्षणमपि हि पदार्थं इति ॥ ३१४ ॥

अग्निहोत्रीं दोहयति पुंवत्सामशूद्रेणस्थाल्यामार्यकृत्यामूर्द्धकपालायां दक्षिणतः प्राचीमुदीचीं वा ॥ ३१५ ॥

अग्निहोत्रशब्दः कर्मवाची सन्निहितसाधनभूते द्रव्ये द्रष्टव्यः । तदग्निहोत्राख्यं द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी । अत्रापि मतुब्लोपे कृते अग्निहोत्रीमिति भवति । तथा च दृश्यते यदाग्निहोत्री दोह्यमाना वा दृश्येतेति । पयस्यपि चाग्निहोत्रशब्दो दृश्यते । यस्याग्निहोत्रं दोह्यमानममेध्यमापद्यतेति । पुंवत्सामिति वच-

# विज्ञप्तिः ।

अस्या चौखम्बा-संस्कृतग्रन्थमालाया प्रतिमासं पृष्ठशतकेः सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते । काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापका पण्डिता अन्यच शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

१ भारतवर्षीयै, ब्रह्मदेशीयै, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्रा ७ आणका ८

६ कालान्तरे प्रतिस्तवकं " " १ " ०

७ प्रापणव्ययं पृथग् नास्ति ।

८ साम्प्रतं मुद्र्यमाणा ग्रन्था — मुद्रिता स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कार) २

(१) शब्दकौस्तुभ । भट्टोजिदीक्षितकृत (व्याकरणम्) १०

(१) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । (मीमांसा) १०

(१) भाष्योपबृंहित तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्यभाषा प्रकाश सहितम् । सम्पूर्ण । (वेदान्त) १

(१) करणप्रकाश । श्रीब्रह्मदेवविरचित सम्पूर्ण (ज्योतिष) १

(१) भाट्टचिन्तामणि महामहोपाध्याय-श्रीगागाभट्ट विरचित । तर्कपाद (मीमांसा) १

(१) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्ण । (मीमांसा) १

(१) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्ण । (वेदान्त) ६

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—७४

तृणेनावज्योत्यासिच्यापः पुनरवज्योत्य नि-
धाय त्रिरुद्वासयन्त्युदक् ॥ ३१९ ॥

तदधिश्रितं द्रव्यं तृणेनावज्योतयेत् ।[1]अवज्योतनं च दृष्टार्थम् । तदवज्योतयति शृतं वेदानीति श्रुतिः । अतश्चाधिश्रयणाभावे तण्डुलादावनवज्योतनम् । अपासेकोऽपि च दृष्टार्थः । उदकस्य हि क्षयो यथा स्यान्न पयस इति । पुनरवज्योतनं च उदकक्षयसंवित्त्यर्थम् । न च यवाग्वामुदकासेको विरोधात् । अवज्योतनं तु तन्त्रेण भवति । घृते पुनरुदकासेको न भवत्येव विरोधात् । निधाय त्रिरुद्वासयन्त्युदगिति । णमुलयम् ततश्च मुक्त्वा मुक्त्वा त्रिरुद्वासयेत् । तथा च मृताग्निहोत्रे श्रूयते न त्रिःप्रतिष्ठाप्य हरति यत्त्रिः प्रतिष्ठापयन् हरेद्यथा कुर्यात् ॥ ३१९ ॥

अस्तमिते जुहोति ॥ ३२० ॥

प्रधानसन्निधेश्चोद्धरणादूर्ध्वमस्तमित एव कर्त्तव्यम् । उद्धरणमात्र एव हि वचनमनस्तमित उद्धरतीति ॥ ३२० ॥

वैकङ्कतीं स्रुक्स्रुवं प्रतप्य पाणिना
सम्मार्ष्टि ॥ ३२१ ॥

होमार्थत्वाद्वैकङ्कती स्रुक् प्राप्तैत्येव स्रुवार्थोऽयमारम्भः ॥३२१॥

पुनः प्रत्यतप्योन्नेष्यामीत्याह ॥ ३२२ ॥

ओ३मुन्नयेति यजमानस्तिष्ठन् ॥ ३२३ ॥

प्रत्याह ॥ ३२३ ॥

चतुरः स्रुवानुन्नयति ॥ ३२४ ॥

चतुर्गृहीतं च होमद्वयार्थमुभयत्रोपयोगात् । अनश्च नाशे चा-

---

१ अवज्योतनं प्रकाशनम् ।

न्यतरस्यापि प्रयोक्तृत्वम् । प्राशनं तु शेषसाध्यत्वादप्रयोजकम् । तथा लिङ्गं स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमिति ॥३२४॥

स्थाल्यां परिशिनष्टि तदब्राह्मणः पिबेत् ॥३२५॥

अब्राह्मणप्रतिषेधार्थोऽयमारम्भः । तद्धि नाब्राह्मणः पिबेदिति वचनात् ॥ ३२५ ॥

उपरि समिधं धारयन्वार्क्षीमध्यधि गार्हपत्या-

दाहवनीयं हरति मुखमात्रे धारयन् ॥३२६॥

स्रुच उपरि समिधं धारयन्वार्क्षीम् । न गुच्छगुल्मलता सम्भविनीम् । अध्यधिशब्दः सामीप्य उपरिभावे च गार्हपत्यादाहवनीयं हरति मुखमात्रे स्रुचं धारयन् ॥ ३२६ ॥

मध्ये निगृह्योपविश्य समिधमादधात्यग्निज्यो-

तिषं त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्व-

र्ग्यायोपदधामि भास्वतीमिति ॥ ३२७ ॥

गार्हपत्याहवनीययोर्मध्ये निगृह्य नीचैर्गृहीत्वा पुनरुद्धृत्य मुखमात्र एव उपविश्य समिधमादधात्यग्निज्योतिषमित्यनेन मन्त्रेण । समिदाधानं स्वार्थम् । अतश्च नैमित्तिकेषु कुशास्तरणादिषु न भवति ॥ ३२७ ॥

प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजू-

रिति वा ॥ ३२८ ॥

विकल्प मन्त्रे ॥ ३२८ ॥

अग्निर्वर्च इति ब्रह्मवर्चसकामस्य ॥ ३२९ ॥

जुहुयादिति वाक्यशेषः ॥ ३२९ ॥

कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्न-

रिमन् ॥ ३३० ॥

कालद्वयोपादानसामर्थ्याद्विकल्प । होष्यन्वा अस्मिन्वा काल इति । होष्यन् अवेक्षणमनुपमार्ग्यैव स्रुचम । सोनुपसाद्य पूर्वामाहुतिमिति वचनात् ॥ ३३० ॥

तूष्णीमुत्तरां भूयसीम् ॥ ३३१ ॥

स वै कनीय इव पूर्वामाहुतिं जुहोति भूय इवोत्तराम । उत्तराशब्दश्च देशपरोपि द्रष्टव्यः । अथ योत्तरार्धिवरूकञ्जाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोतीति ॥ ३३१ ॥

भूयिष्ठं स्रुचि ॥ ३३२ ॥

परिशेषयतीति वाक्यशेष ॥ ३३२ ॥

द्विः प्रकंप्य निदधाति ॥ ३३३ ॥

स्रुचं कुर्चे ॥ ३३३ ॥

उपमृज्य स्रुचं कूर्चे निमार्ष्टि नमो देवेभ्यः स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ ३३४ ॥

अप उपस्पृश्य ॥ ३३५ ॥

उपमार्जनं च स्रुगग्रस्य । मध्ये द्रव्यस्य विद्यमानत्वात् । स्रुगग्रमुपमृज्य कूर्चस्योत्तरे प्रदेशे निमार्ष्टि नमो देवेभ्य इत्यनेन मन्त्रेण । स्वधा पितृभ्य इति दक्षिणत उत्तान निमार्ष्टि । अतश्चोत्तानेनैव पाणिनोपमार्जनम । अपामुपस्पर्शनं पित्र्यत्वे सत्यपि प्राचीनावीत्यादि व्युदासार्थम ॥ ३३४ ॥ ३३५ ॥

इतरयोश्च पुष्टिकामः स्थाल्याः स्रुवेणेह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजा-

पतिः अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति गार्हपत्ये ॥ ३३६ ॥

इतरयोरग्न्योः पुष्टिकामो जुहोति। च शब्दादपुष्टिकामश्च। स्वाहयाः स्वरूपेणोद्धपुष्टिमित्यनेन मन्त्रेण गार्हपत्ये ॥ ३३६ ॥

तूष्णीं द्वितीयाम् ॥ ३३७ ॥

अग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ ॥३३८॥

जुहोति ॥ ३३८ ॥

तूष्णीं द्वितीयाम् ॥ ३३९ ॥

अनामिकया द्विः प्राश्नाति ॥ ३४० ॥

स्रौच द्रव्यम ॥ ३४० ॥

उत्सृप्य निर्लेढ्याचम्योत्सिञ्चति देवान् जिन्व पितॄन् जिन्व तृतीयामुदुक्षति सप्तऋषीन् जिन्वेति ॥ ३४१ ॥

उत्सृप्येति पात्रान्तरे नीत्वा। सर्पिर्हि गत्यर्थ। चतुर्भक्षणे भक्षयित्वा द्रव्यपात्रं निर्लेढि लिह आस्वादने जिह्वया आस्वादयति तत उत्सिञ्चति। देवाञ्जिन्व पितॄञ्जिन्वेति। तृतीयां सप्तऋषीञ्जिन्वति तृतीयामिति स्वाग्निपयम्। तनश्च भेदेन द्विः इत्यं- पूर्व तृतीय पुन तदुत्पोत्सिञ्चति ॥ ३४१ ॥

चतुर्थी कूर्चस्थाने त्रिनिर्पिञ्चत्यग्नये पृथिवीक्षिते स्वाहा पृथिव्या अमृतं जुहोमिस्वाहा ऽमृते अमृतं जुहोमि स्वाहेति ॥ ३४२ ॥

चतुर्थीस्रुचं पूरयित्वा कूर्चस्थाने त्रि इत्यपो निषिञ्चति। अ-

न्नये पृथिवीक्षित एवमादिभिर्मन्त्रैः प्रति मन्त्रं वाक्यभेदात् ॥३४२॥

स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ॥३४३॥

गार्हपत्ये संस्कारप्राप्ते आहवनीय उच्यते ॥ ३४३ ॥

समिध आदधाति सर्वेषु यथा पर्युक्षितः;
समिदसि समिद्धो मेऽग्ने दीदिहि समेद्धा ते
अग्ने दीद्यासमिति ३४४ ॥

सर्वेष्वग्निषु । यथा पर्युक्षितमिति क्रमार्थम् । स चायं मन्त्रो ब्राह्मणहस्तादिषु समवेतवचनत्वाद्विपरिणम्यते । ननु च प्रकृतौ विपरिणामो न युज्यते । यागसाधनभूताग्निविकारत्वाददोष. ॥३४४॥

वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत् ॥३४५॥

क्षीरहोता प्रत्यक्षमितावयवार्थवृत्तितयाऽध्वर्युरुच्यते। चेच्छब्दो यद्यर्थ. । यदि वाग्यतो यद्यवाग्यत इति । अतश्चाध्वर्योर्दोहप्रभृति वाग्यमविकल्प ॥ ३४५ ॥

प्रातर्जुहोत्यनुदिते ॥ ३४६ ॥

सायं होमो ऽनुविहित इदानीं प्रातर्होमस्य विशेषानुकथनं क्रियते प्रातर्जुहोत्यनुदित इति। अत्र च यत्र यत्र प्रातर्ग्रहणं तदेव प्रातरितरत्सामान्यम् । किञ्चिदधस्तादभिहितं किञ्चिदत्र तयोरुभयोरपि होमयोर्द्रष्टव्यम् । तथैवमभिधीयते कर्मैकत्वज्ञापनार्थम् । सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति । तदुक्तः । अग्निहोत्रं जुहोतीत्यभिधाय सायं जुहोति प्रातर्जुहोतीति कालविधानम् । तथा दध्ना जुहोति पयसा जुहोतीति होमानुवादेन दध्यादि विधानम् । तथा अग्निर्ज्योतिरिति सायम् । सूर्यो ज्योतिरिति प्रातः । एवं सति सायं प्रातः सम्बद्धहोमाविषयोग्निहोत्रशब्दत्वेन विशिष्टद्रव्यदेवताकालीनमिदमेकं कर्म । तदेतद्धिनियुज्यते अग्निहोत्रं जुहुयात्स्वर्गकाम इति । आग्नेयी सायमाहुतिः । सौरी प्रातराहुति । सायं जुहोत्यग्निर्ज्योतिरिति वचनात् । अथ प्रातः सूर्योज्योतिरिति । अत्र च कालभेदा-

दङ्गानां भेदेनानुष्ठानम् । तदेतत्सूत्रकारेणापि प्रदर्शितम् आवृत्ति- र्वा प्रधानकालत्यादिति । एवं च सति कुण्डपायिनामयनादिषु प्रधा- नाहुतीभेदेन । अङ्गानि तु तन्त्रेण कालैकत्वात् । तथा च सूत्रकारेण केचिद्धर्माः सायं होमसन्निधौ विहिताः केचित्प्रातर्होमसन्निधावि- ति कर्मैकत्वज्ञापनायैव ॥ ३४६ ॥

अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः ॥३४७॥

स चायं प्रवेशः साधारणः। प्रातरित्यविशेषितत्वात् ॥३४७॥

पत्नी च यथा देशम् ॥ ३४८ ॥

योऽस्या देशः प्रदेशान्तरे विहितः प्रत्यग्दक्षिणत उपविशं गार्हपत्यस्येति । पत्न्युपवेशनं च विधीयते । अथाचमनावसर्पवि- धित्सया अथाचनञोमयत्र ॥ ३४८ ॥

अप आचामति वृष्टिरासि वृश्च मे पाप्मा- नं; सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति ॥ ३४९ ॥

अप आचामति यजमानो वृष्टिरसीत्यनेन मन्त्रेण ॥ ३४९ ॥

वाचं विसृज्य पुनराचामति विद्युदसि वृश्च मे पाप्मानं जह्यपो ऽवभृथमभ्युपैमि मयि सत्यं गोपु मे व्रतमिति ॥ ३५० ॥

वाग्यमस्य च पदार्थधर्मत्वात् सर्वान्ते विसर्गः । अतश्च पू- र्वेणाचमनेन वाग्यमनमुत्तरेण विसर्गः । विसर्गस्य ग्रहणपूर्वकत्वात् मन्त्रलिङ्गाच्च । सत्येन व्रतमुपैमीति व्रतशब्देन च वाङ्नियमोऽभिधी- यते । तस्य च विसर्गः प्रतीतोऽयं निष्क्रमणात् ॥ ३५० ॥

उन्नयामीत्याह प्रातः ॥ ३५१ ॥

उन्नेष्यामीत्यस्य स्थाने उन्नयामीति ॥ ३५१ ॥

प्राक्स(स्थ) समित्पर्युक्षणं धाराचोभ-
यत्र वा ॥ ३५२ ॥

येरयुक्तत्वात् उभयत्र वा प्राक्संस्थं समित्पर्युक्षणं भवति ॥ ३५२ ॥

अग्निशब्दे सूर्यः ॥ ३५३ ॥

सायं होममन्त्रेषु यत्राग्निशब्दस्तत्र सूर्यशब्दः प्रयोक्तव्यः । समाम्नायप्रदर्शनार्थं चैतत् । समाम्नाये यत्राग्निशब्दस्तत्र सूर्यशब्दः प्रयुज्यते । नाग्निपराग्निकयोरपि होममन्त्रयोः ॥ ३५३ ॥

रात्र्युपसान्हेति वा ॥ ३५४ ॥

रात्रिशब्द उपसेति वा प्रयोगः अन्हेति वा ॥ ३५४ ॥

ज्योतिः सूर्य इति वा प्रातः ॥ ३५५ ॥

अनेन मन्त्रेण प्रातर्होमस्तत्र च यदि रात्रौ हुतमग्निर्ज्योतिरिति प्रात. तदा प्रात. सूर्योज्योतिर्ज्योतिः सूर्यः इति वा जुहोति । एवं हि श्रूयते अथ प्रातः सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहेति । पुनश्चाहाथ प्रातर्ज्योतिः सूर्यः सूर्योज्योतिः स्वाहेत्यतश्च मन्त्रौ विकल्पितौ ॥ ३५५ ॥

प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य ॥ ३५६ ॥

अस्तमितमात्रे उदयसन्निकृष्टे च स्वर्गकामस्य जुहुयात् । स चायं गुणफलसम्बन्धो न कर्मफलसम्बन्धः ॥ ३५६ ॥

तमोऽभ्यये सायं जुहुयाद्दियति प्रातरायु-

कामस्य ॥ ३५७ ॥

तमोऽग्न्यागमे सायमायुः कामस्य जुहुयात् । विगच्छति च तमसि प्रातः ॥ ३५७ ॥

अन्तः पशौ पशुकामस्य सायं प्रातः ॥ ३५८ ॥

सायं प्रविष्टेषु पशुषु पशुकामो जुहोति । प्रातश्चानिःक्रान्तेषु ॥ ३५८ ॥

शयाने श्रीकामस्य प्रातः ॥ ३५९ ॥

शयाने जनपदे श्रीकामस्य जुहुयात् ॥ ३५९ ॥

प्रथमसमिद्धे धूप्यमाने प्रजासु निहृत्येव सहसान्नमत्स्यतः ॥ ३६० ॥

समिद्धमात्रे धूप्यमाने चाग्नौ यो नाम प्रजासु निहृत्येवान्नमत्तुमिच्छति स एवं स्वरूपेऽग्नौ जुहोति । तच्चैतत् क्षत्रियविषयं न ब्राह्मणविषयोर्जनपदस्य सम्भवः ॥ ३६० ॥

भूयिष्ठार्चिषि गृहीत्वेव सहसा ॥ ३६१ ॥

यो नाम गृहीत्वेव अधिष्ठायैवान्नमत्तुमिच्छति स एवं स्वरूपेऽग्नौ जुहुयात् । तदपि क्षत्रियविषयमेवोक्तहेतुत्वात् ॥ ३६१ ॥

प्रदीप्ततमे श्रीयशस्कामस्य ॥ ३६२ ॥

अथ यत्रैतत्प्रदीप्तो भवति तत्र श्रीयशस्कामो जुहुयात् । तच्चैतद्वर्णत्रयविषयमपि भवति ॥ ३६२ ॥

अर्चिः प्रत्यवाये मैत्रेणान्नमत्स्यतः ॥ ३६३ ॥

अथ यत्रार्चींषि प्रत्यवयन्ति तत्र मैत्रेणान्नमिच्छन् जुहोति । एतदपि सर्ववर्णविषयमेव ॥ ३६३ ॥

अङ्गारेषु चाकृश्यमानेषु ब्रह्मवर्चसकामस्य ॥३६४॥

जुहुयात् । तच्चैतद्ब्राह्मणविषयमेव न हीतरयोर्ब्रह्मवर्चससंबन्धोऽस्ति ॥ ३६४ ॥

पयसा स्वर्गकामः पशुकामो वा ॥ ३६५ ॥

जुहोति ॥ ३६५ ॥

यवाग्वा ग्रामकामः ॥ ३६६ ॥

तण्डुलैर्बलकामः ॥ ३६७ ॥

दध्नेन्द्रिय कामः ॥ ३६८ ॥

अनधिश्रयणे च श्रुतिसामर्थ्याभ्याम् ॥ ३६९ ॥

न दध्यधिश्रयेदिति श्रुतिः । सामर्थ्यं च दधित्वमेवापैति । धान्युपादाने सति सामर्थ्यग्रहणं क्रियमाणं तण्डुलार्थं भवति । दध्यधिश्रयणप्रतिषेधश्च लिङ्गम् । अनुवादो ह्ययम् ॥ ३६९ ॥

घृतेन तेजस्कामः ॥ ३७० ॥

जुहुयात् ॥ ३७० ॥

संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे॥३७१॥

एतेषां द्रव्याणां कामसंयोगे सति संवत्सरं जुहुयात् । एवं किल कामः समृध्यते । संवत्सरसम्मिता वै व्रतचर्येति श्रुतत्वात् ॥ ३७१ ॥

सायं प्रातर्वा ॥ ३७२ ॥

वा शब्दात्पक्षो विपरिवर्तते । सायं प्रातर्वा कामसंयोगेन जुहोति न संवत्सरम् । अग्निहोत्रं हि साय प्रातः परिसमाप्यते । तत्र चायं गुणसम्बन्धः । तस्मात्सायं प्रातरेवेति । संवत्सरसंमिता वै व्रतचर्येत्ययमन्यविषयोऽर्थवादः । अग्निविकल्पेषु संवत्सर इ-

ष्यते । तत्र अग्निविकल्पान्प्रकृत्याह पत्नैषामेकः संवत्सरमुपेत्सेंदिति ॥ ३७२ ॥

दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु ॥ ३७३ ॥

अयं च द्वारनियमो अग्निहोत्रे इष्टयां च । तत्रैव हि श्रूयत इति ॥ ३७३ ॥

सायं प्रातराहवनीयस्यासनोपस्थाने ॥ ३७४ ॥

यदेवसायं प्रातराहवनीयमुपतिष्ठत उपचास्त इति वचनात् । पूर्वमुपस्थानं पश्चादासनम् । अल्पाच्तरमिति कृत्वा पूर्वमासनमुक्तमाचार्येण । तच्चैतदुपस्थानं प्राक्पर्युक्षणाद्भवति । हुते हि पर्युक्षणमुक्तम । हुते च धारावर्जमिति । उपस्थाने च पूर्वमक्रियमाणे हुतशब्द औपचारिकः स्यात् । वात्सप्रोपस्थानं तस्मादपि पूर्वतरम् । काण्वानां हि समिदाधानमन्त्रसमनन्तरं वात्सप्रमन्त्राणां पाठः ॥ ३७४ ॥

शय्यासनं वा गार्हपत्ये ॥ ३७५ ॥

अथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वेति वचनात् ॥ ३७५ ॥

संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् ॥ ३७६ ॥

अथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेदिति । तथैतत्पारिसमाप्योत्तरकालमतीत्य निष्क्रमणम ॥ ३७६ ॥

अनशित्वा प्रातर्मुहूर्त्तं सभासनं सभ्यस्य ॥ ३७७ ॥

अथ प्रातरनशित्वा मुहूर्त्तं सभायामासित्वापि कामं पल्ययेतेति वचनात् ॥ ३७७ ॥

भस्मोद्धृतमुपेयात् ॥ ३७८ ॥

अथ यत्रैव भस्मांवृधृतमुपनिगच्छेत् तत्रैव तस्योपस्थानमिति।
तच्च पाठानुपूर्व्यात्प्रातरेव ॥ ३७८ ॥

स्वयं वा जुहुयात् ॥ ३७९ ॥

अध्वर्युर्वेति विकल्पः ॥ ३७९ ॥

उपवसथे नियमः ॥ ३८० ॥

स्वयं होमित्यस्य । स यो हैवं विद्वान् स्वयमुपवसथे जुहोतीति वचनात् । स चायमुपवसथसंयोगेनैव नियम इति ॥ ३८० ॥

इत्युपाध्यायकर्ककृतौ कात्यायनभाष्ये
चतुर्थोऽध्यायः समाप्तः ।



वैश्वानरपार्जन्यौ निरुप्येच्छन् ॥ २ ॥

वैश्वानर इति च गुणात्तद्धित सौविष्टकृत इति वत् । अत्र हि गुणिनी देवता अग्नि. । सा हि याज्यानुवाक्य सु दृश्यते । वैश्वानरोऽजीजनदग्निर्नो न ज्यसीमिति । तथा पृष्टो दिवि पृष्टो अग्निः पृथिव्यामिति । तथा च वैश्वानर. पशुपुरोडाश इति प्रकृत्याह यदग्नय इति स्यादितितद्विचयोदिति । तथा चाभ्युदयेष्ट्यां पठ्यते अग्नये पथिकृते ऽष्टाकपाल पुरोडाशं इन्द्राय वृत्रघ्न एकादशकपालमग्नये वैश्वानराय द्वादशकपालमिति पठिते सूत्रकारेण गुणादेव तद्धित. प्रदर्शित. इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानराग्नेति । एवं च सति यत्र यत्र वैश्वानरश्रवण तत्र तत्राग्निर्गुणिनी देवता द्रष्टव्या । यथा यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानर निर्वपेदिति । वैश्वानरपार्जन्यौ निरुप्येच्छन्नित्यनेच्छया वैश्वानरपार्जन्याविच्छयान्वारम्भणीया । यत्कारण वैश्वानरपर्जन्यौ प्रकृत्य द्विहविष्कान्वारम्भणीयेत्यामनन्ति । अनन्वारम्भणीयाया अन्वारम्भणीयशब्दः तत्कार्यलक्षणार्थं । तेनेच्छयान्वारम्भणीयां करोति इच्छया वैश्वानरपार्जन्याविति ॥ २ ॥

वैश्वानरो द्वादशकपलश्चरुरुत्तरः ॥ ३ ॥

निगदव्याख्यातम । सा चैवान्वारम्भणीया सत्यपि यजतित्वे चातुर्मास्याङ्गभूता न चातुर्मास्यशब्दवाच्येति । यथा पौर्णमासान्वारम्भणीया न पौर्णमासशब्दवाच्या एवमिहापि । तथा च सत्यन्तराये अप्रयाकत्वमस्या ॥ ३ ॥

आग्नेयः सौम्यश्चरुः सावित्रो द्वादशक
पालो ऽष्टाकपालो वा सारस्वतश्चरुः
पौष्णश्चरुः प्रविष्टानाम् ॥ ४ ॥

स च प्रविष्टानां भवति । एव हि श्रूयते । तस्मात् पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति । एतच्च दर्शपूर्णमासप्रकरणपरिपठितमपि पाठेन प्रकरणमुल्लङ्घ्य यत्र पूषा तत्र नीयते पदनम् ॥ ४ ॥

द्विदेवत्योपि नियमसामर्थ्यात् ॥ ५ ॥

यत्रापि पूषा सद्वितीयस्तत्रापि पेषणं भवत्येव । कुतो नियमसामर्थ्यात् । पूष्णो नियोगतः पिष्टताप्रतिपाद्यते । इतरस्येन्द्रस्याग्नेर्वा अनियम इति ॥ ५ ॥

अर्द्धपिष्टं वोभयसामर्थ्यात् ॥ ६ ॥

वा शब्दात्पक्षो विपरिवर्त्तते । यत्र पूषा सद्वितीयस्तमर्द्धपिष्टं कुर्यात् । उभावपि ह्येवं सङ्गतार्थावुचितार्थौ भविष्यतः । पिष्टं पूष्ण इतरस्यापिष्टमिति ॥ ६ ॥

सौमापौष्णदर्शनाच्च ॥ ७ ॥

अपिच सोमापौष्णे नेमपिष्टानां दर्शयति । सौमापौष्णं चरुं निर्वपेत्नेमपिष्टानां पशुकाम इति ॥ ७ ॥

अपिष्टो वा देवतान्यत्वात् ॥ ८ ॥

अपिष्टो वा भवति । द्विदेवत्यो न पिष्यते । कुत एतद्देवतान्यत्वात् । न ह्याग्नापौष्ण ऐन्द्रापौष्णे वा पूष्णो देवतात्वम् । यत्र पूषपदात्तद्धित उत्पद्यते तत्रैव पूष्णो देवतात्वं न पदान्तरात् । न च पदान्तरसत्यपेक्षात्पूषपदात्तद्धितोत्पत्तिः । सापेक्षत्वात् । सापेक्षं चासमर्थं भवति । समर्थानां प्रथमाद्वेति तद्धितोत्पत्तिरुक्ता । तस्माद्यत्र केवलः पूषा तत्रैव पेषणमिति ॥ ८ ॥

सोमापौष्णे वचनात् ॥ ९ ॥

यत्तु दर्शनमुक्तं तद्विशिष्टविधानम् । सोमापौष्णदेवत्यश्चरुरर्द्धपिष्टानां पशुकामस्य भवतीति वचनं तत्र दर्शनमिति ॥ ९ ॥

एतानि सर्वत्र ॥ १० ॥

एतानि पञ्च हवींषि सर्वत्र भवन्ति । सर्वशब्देन वरुणप्रघासा महाहविः शुनासीरीयं च ग्रहीतव्यम् । तत्र हि प्रतिपर्व वचनं भवति । अर्थेनाप्येव पञ्च हवींऽपि भवन्ति ॥ १० ॥

मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ॥ ११ ॥

स्वतवद्गुणविशिष्टानां मरुतां सप्तकपालः कर्त्तव्यः ॥ ११ ॥

मरुतो वा ॥ १२ ॥

वैश्वदेवी पयस्या ॥ १३ ॥

एतत्प्रकृतित्वं च कैश्चित्पयस्यान्तर इष्यते । तत्पुनर्नातीव युक्तरूपमिव । येन प्रकृतितो विकृतौ धर्मप्राप्तिरिष्यते । न विकृतितः प्रकृतौ । प्रकृतौ च दाक्षायणे धर्मवती पयस्या विद्यते । अथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्येति । धर्माश्चास्या विहिताः । श्वने वा श्ष्यानयतीति तथा वाजिनमनाज्यलिप्तं निषिञ्चति उत्करेकरोति । वाजिनयागश्च भक्षान्तः सधर्मको विहितः । एवं च सति प्राकृत्या एव पयस्यायाः सकाशात् वैकृत्यां धर्मप्रवृत्तिर्युक्तरूपेति । तथा च सूत्रकारप्रस्थानम् । अग्नौ पयस्याया उपांशुत्वं विहितं उपांशुकाण्डे वायव्योग्नौ मैत्रावरुणी चेति । वैश्वदेविकपयस्याप्रकृतित्वे हि उपांशुत्वं प्राप्नोत्येव न विधेयमिति ॥ १३ ॥

द्यावापृथिवीय एककपालः ॥ १४ ॥

एतत्प्रकृतित्वं चैककपालानामित्युक्तमेव ॥ १४ ॥

एतद्वैश्वदेवम् ॥ १५ ॥

अस्य पर्वणो वैश्वदेवमितीयं संज्ञा । असौ च संव्यवहारार्थी प्रजाकामस्यापि वैश्वदेवमित्यादौ ॥ १५ ॥

प्राचीनप्रवणे ॥ १६ ॥

तच्च प्राचीनप्रवणे कर्त्तव्यम् । दर्शपूर्णमासयागधर्मत्वेन सम्प्राप्तौ प्राचीनप्रवणविधानम् ॥ १६ ॥

अहतवासाः पत्नी च ॥ १७ ॥

नियमार्थमेतदुक्तम् ॥ १७ ॥

रवा इत्यभिनिधानं तयोः ॥ २५ ॥

अधरारण्यामभिनिधानं करोति पुरूरवा इत्यनेन मन्त्रेण ॥२५॥

अग्नये मथ्यमानायानुवाचयति ॥ २६ ॥

मथ्यमानायानुवाचनं कारयति । अनुवाचनं हि निर्ज्ञानक-र्तृकं तेनाध्वर्योः प्रैषदानेऽधिकारः । अन्यत्र तु प्रैषार्थ इत्युक्तम् ॥२६॥

मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम् ॥ २७ ॥

पुनः प्रदक्षिणं चाप्रदक्षिणं च ॥ २७ ॥

जाते जातायेति ॥ २८ ॥

जाते ऽग्नौ जातायेत्यनुवाचयति । सापेक्षत्वाच्चाग्नय इत्यनुव-र्तते ॥ २८ ॥

प्रह्रियमाणायेति प्रास्यन् ॥ २९ ॥

अग्नावग्निं प्रास्यन् अग्नये प्रह्रियमाणायेत्यनुवाचयति ॥२९॥

भवतन्न इति प्रास्यति ॥ ३० ॥

अग्नावग्निम् ॥ ३० ॥

अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण ॥३१॥

स्थालीग्रहणं च पूर्णाहुतिवदाज्यसंस्कारव्युदासार्थम् । स्रु-वग्रहणं च प्रचरणी व्युदासार्थम् । ते हि सर्वहोमेष्वेव विहिते इति ॥ ३१ ॥

नवप्रयाजं नवानुयाजम् ॥ ३२ ॥

वैश्वदेवं भवति । नवानुयाजं भवतीति वचनात् । पञ्चमा-भ्यासेन नवसंख्याप्रयाजानामित्युक्तमेव ॥ ३२ ॥

वरुणप्रघासा महाहविश्च ॥ ३३ ॥

ननु वैश्वदेवधर्मित्वेन नवप्रयाजानुयाजता प्राप्तैव । आधिकहविः सम्बन्धार्थमित्यदोषः । तथा च मारुत्या अपि नवप्रयाजता भवति । इतरेषामप्यन्तराय इति । अपरे त्वन्तराये अङ्गानुष्ठानं नेच्छन्ति । समुदायस्य ह्यङ्गसम्बन्ध इति । तेषामपि मारुत्यर्थेन नवप्रयाजता वक्तव्या । तत्रोपसंहारोमा भूदिति वरुणप्रघासा महाहविश्चेत्युक्तम् ॥ ३३ ॥

त्रीणि समिष्टयजूꣳषि जुहोति देवा गातुविदो यज्ञ यज्ञमेष त इति ॥ ३४ ॥

एकचोदनासंयोगात्संख्याया अभ्यासेन त्रित्वम् । वैश्वदेवधर्मित्वेन च वरुणप्रघासेषु महाहविषि च समिष्टयजुषां त्रित्वम् ॥ ३४ ॥

पशौ च ॥ ३५ ॥

त्रीणि समिष्टयजूꣳषि भवन्ति ॥ ३५ ॥

यां आवह इति वा पशौ ॥ ३६ ॥

मन्त्रविकल्पोऽयम् । पश्वर्थेन समिष्टयजुषां त्रित्वमभिहितम् । अग्नीषोमीयस्य च दक्षिणाग्निहोमान्तता वाचनिकी । अतश्च त्रित्वमितरपश्वर्थं, मा भूत्त्रित्वस्याविधानादर्थवत्त्वमिति ॥ ३६ ॥

एकं वा वैश्वदेवे ॥ ३७ ॥

वचनाद्धूयते ॥ ३७ ॥

पर्वसꣳस्थासु वपनं वा प्रागन्त्यात् ॥ ३८ ॥

पर्वसंस्थासु वपनं वा भवति, सर्वेषामागन्त्वाद्भवति । न द्विरावृत्ताद्विहितमिति ॥ ३८ ॥

१अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति ॥ ३९ ॥

गर्वर्द्दीयत इति पृथिव्यां दीयत इति शयनकाले । उन्दयति क्लेदयति निम्मयतीत्यर्थः ॥ ३९ ॥

त्रेण्याशलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति ॥ ४० ॥

त्रेणी शलली प्रसिद्धा । तया केशविनयनं कृत्वा त्रीणि कुशतरुणान्यन्तर्दधात्योषध इत्यनेन मन्त्रेण ॥ ४० ॥

त्र्यायुषमिति यजमानो जपति ॥ ४१ ॥

त्र्यायुषमित्यमुं मन्त्रं यजमानो जपति ॥ ४१ ॥

शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति वपति ॥ ४२ ॥

लोहशब्देन ताम्रमभिधीयते । लोहित इव ह्यग्निरित्यर्थवादात् ॥ ४२ ॥

एवं पश्चादुत्तरश्च ॥ ४३ ॥

उन्दनादि कर्त्तव्यम् । क्षुरादानं तु कृतत्वान्न भवति जपश्च ॥ ४३ ॥

गृहेषु पौर्णमासः, समारूढनिर्मंथि तयोस्तथा चेत् ॥ ४४ ॥

---

१ दक्षिणाग्नेरपरस्यां दिशि प्राङ्मुखोपविष्टस्य यजमानस्य दक्षिणां गोदानं दक्षिणकर्णसमीपवर्तिनं शिरःप्रदेशमद्भिः क्लेदयतीत्यर्थः ।

गृहेषु पौर्णमासं कर्त्तव्यम् समारूढनिर्मथितयो रग्न्योस्तथा चेदिति । यदि समारोपनिमर्थनेस्तः । न च वैश्वदेवे समारोपनिर्मन्थने विहिते । इस्माश्चेच्छब्दो यत्रार्थः । यत्र समारोपनिर्मन्थने विहिते । ते च वरुणप्रघासेषु साकमेधेषु च । अथ केशश्मश्रून्वा समारोह्याग्नी उदवसायैव ह्येतेन यजते इति ॥ ४४ ॥

प्रजाकामस्यापि वैश्वदेवम् ॥ ४५ ॥

भवतीति वाक्यशेषः ॥ ४५ ॥

एकेऽधः प्राङ्शायी मध्वाश्यृतुजायोपायी मांसस्त्र्यनृतानि वर्जयेदुदकाभ्यवायं च प्रागवभृथात् ॥ ४६ ॥

विकल्पमिच्छन्ति । एके मांसादीनि नियोगतो वर्जयेत् । अधः शयनादीनां सर्वेषामेव विकल्प इति सम्प्रदायः ॥ ४६ ॥

आषाढ्यामयन्ते योनिरिति समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः ॥ ४७ ॥

आषाढीशब्देन च चतुर्मासोपलक्षितकालविधानम् । अथ यदेव एतैश्चतुर्थे मासि यजत इति श्रुतत्वात् । तथा च सहकारिविधानम् । पञ्चम्यां पौर्णमास्यां वरुणप्रघासा इति । अयन्ते योनिरित्यनेन मन्त्रेण समारोह्याग्नी । कुत एतत् । अन्यत्र दर्शनात् । समारोह्याग्नीशालास्तम्भमिति । क्व समारोह्य अरण्योस्तत्कुतः अन्यत्र दर्शनादेव । समारोपणं हि प्रकृतयोच्यते ग्रामे वा विवत्सन्नरण्योरिति । तेन सूत्रत्रयसिद्धः समारोपः । क्वचिन्मन्त्रः क्वचिद्ग्नी क्वचिदारणी इति । इह च गार्हपत्य एव समारोपः । तत्र ह्याहवनीयोऽप्यन्तरा गर्भिणी न्यायेनास्तीति द्विवचनमग्नी इति । अपरे तु भेदेन कुर्वन्ति । उत्पूर्वो वसतिः प्रदेशान्तरगमने वर्त्तते । निर्मथ्य वरुणप्रघासाः कर्त्तव्या इति वाक्यशेषः । वरुणप्रघासा इति बहुवचनमवयवभेदापेक्षया ॥ ४७ ॥

पूर्वेद्युर्दक्षिणाग्नौ निस्तुषामभ्रष्टयवानां करम्भपात्रकरणम् ॥ ४८ ॥

पूर्वस्मिन्नहनि चतुर्दश्यां दक्षिणाग्नौ आमभ्रष्टयवानां करम्भपात्राणि कर्त्तव्यानि । दक्षिणाग्निग्रहणं च गार्हपत्यव्युदासार्थम् । निस्तुषग्रहणं च फलीकरणव्युदासार्थम् । एवं हि श्रूयते अथ पूर्वेद्युरन्वाहार्यपचने निस्तुषानि यवान्कृत्वा तानीषद्विचोपलभ्य तेषां करम्भपात्राणि कुर्वन्तीति । अपक्वामात्रमेव च दक्षिणाग्नौ पर्यग्निकरणं तु गार्हपत्यादेव । गार्हपत्ये संस्कारा इति वचनात् ॥४८॥

यावन्तो यजमानगृह्या एकाधिकानि ॥ ४९ ॥

यावन्तो गृह्याः स्युरिति वचनात् । एकाधिकानि वर्णनातिरिक्तानि भवन्तीति वचनात् ॥ ४९

प्रजायां वा जातश्रुतेः ॥ ५० ॥

प्रजायां वा सम्माय कर्त्तव्यानीति । प्रजासम्मितानि कर्त्तव्यानीत्यर्थः । कुत एतत् । जातश्रुतेः । तद्यार्श्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता उभयीव वरुणपाशात्प्रमुञ्चतीति । पूर्वं गृह्यशब्दाविशेषादभिहितम् । तद्यार्श्चैवास्य प्रजा जाता आसन्याश्चा जातास्ता उभयीर्वरुण इति विशेषावगतिः । तस्मात्प्रजा सम्मितान्यथ कर्त्तव्यानीति ॥ ५० ॥

अप्रजस्याकरणे प्राप्ते द्विप्रजस्यैकप्रजस्य च प्रजासंख्यायां प्राप्तायामिदमाह—

त्रीणि वा नित्यत्वात् ॥ ५१ ॥

द्विप्रजैकप्रजानां त्रीणि कर्त्तव्यानि । बहुत्वविशिष्टं हि श्रवणम् करम्भपात्राणि कुर्वन्तीति । नित्यं च त्रिषु बहुवचनम् । न चैव प्रजा सम्भार । अतस्त्रीणि हीनानि क्रतु प्रवृत्त्यामावान्तं । अतश्च द्विप्रजैकप्रजाप्रजानां त्रीण्येकाधिकानि कर्त्तव्यानि ॥ ५१ ॥

मेषमिथुनं च ॥ ५२ ॥

तत्रापि मेषं च मेषीं च कुर्वन्तीति वचनात् । पूर्वैधुरेव कुर्वन्तीति केचित् । तदयुक्तम् । तत्रापित्ययमेकः शब्दः स कालविषयो वा भवति द्रव्यविषयो वा । यदि कालविषयो न यवमयता प्राप्नोति द्रव्यविषये न कालनियम इति । तत्र द्रव्यविषयता युक्ता । कालविषये हि सत्यङ्गानां प्रधानकालता बाध । तथाचानुवदन्ति यवमयौ भवत इति । तस्मादुत्तरेद्युरेव मेषमिथुनकरणम् । तत्रापीति शब्दस्य द्रव्यविषयत्वात् । अधिकृतत्वादिदमुच्यते ॥ ५२ ॥

## अनैडकीरूर्णाः प्रक्षाल्याश्लेषयेत्तयोः ॥ ५३ ॥

द्विप्रकाराद्यूर्णा भवन्ति ऐडक्यः अनैडक्यश्च । तत्र नियमार्थमिदमुक्तम् ॥ ५३ ॥

## कुशोर्णा वाभावे ॥ ५४ ॥

कुशोर्णा वा भवन्ति । ताश्चानैडकीनामभावे । एवं हि श्रूयते । यद्यनैडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु अनैडकीर्न विन्देद्यो अपि कुशोर्णा एव स्युरिति ॥ ५४ ॥

## आहवनीयस्य पुरस्ताद्वेदी करोति ॥ ५५ ॥

आहवनीयदेशस्य पुरस्तादित्येके । तदयुक्तम् । अनियतदेशत्वादाहवनीयस्य । आहवनीयमुद्धृत्य तस्य पुरस्तादित्यपरे । एतदप्यनुपपन्नम् । न ह्याहवनीयोद्धरणमत्र कृतम् । वरुणप्रघासस्साधनभूतस्याहवनीयस्योत्तरवेदावग्निनिधानमुक्तम् । उत्तरवेदावग्निर्निधीयत इति । आचार्येणाप्युक्तम् । तस्यामग्निं निदधातीति । अथोत्तरवेदिकरणात्पूर्वं समुद्धियते तथा सत्यदृष्टार्थता स्यात् । तस्मादाहवनीयस्य पुरस्तादिति । यावदाहवनीयो न भवति गार्हपत्याच्च पृथग्भूतस्याहवनीयव्यपदेशात्तस्मादाहवनीयोद्धरणस्य पुरस्तादिति सूत्रार्थः । तद्वै द्वे वेदी ह्यायम्नी भवत इति वचनाद्वेदी करोतीत्युक्तम् ॥ ५५ ॥

## प्रादेशोन्तरा पृथो वा ॥ ५६ ॥

प्रादेशः प्रसिद्धः। प्रसृतांगुलिपाणिरामणिबन्धात्पृष्ठ उच्यते। तथा च कथनम्। न पृथेन न मुष्टिनेति ॥ ५६ ॥

रथमात्र्युत्तरा ॥ ५७ ॥

रथप्रमाणं चाभिहितं परिशिष्टकारेण। तत्राष्टाशीतिशतमीषेत्येवमादि ॥ ५७ ॥

चतुररत्निर्वा पश्चात्सप्तप्राची षड्वा त्रयः पुरस्तात् ॥ ५८ ॥

इदमपरं वैकल्पिकं प्रमाणम् ॥ ५८ ॥

तेषां मध्ये शंकुः ॥ ५९ ॥

त्रयाणां मध्ये शङ्कुनिखननं कर्त्तव्यम्। तेषामिति चानेन पुरस्तात्प्रमाणमुपलक्ष्यते। तत्र हि शंकुना कार्यमस्ति पुरीषनिवपनाय ॥ ५९ ॥

अपरिमिता वा ॥ ६० ॥

उक्तप्रमाणयोर्बहुतरा वा कार्या ॥ ६० ॥

स्फ्याद्यासम्मर्शनात्करोति ॥ ६१ ॥

स्फ्यश्च प्रोक्षितोद्भमावं प्रकृतौ प्रतिपन्नः। प्रोक्षणं च प्रणीतोदकेन। प्रणीता अपि ब्रह्मणा विना न भवन्ति। अतः सर्वमपकृष्यते। स्फ्यादीनां च पात्राणामासादनादि कर्त्तव्यम्। तत्र केचित् पद्कमासादयन्ति। तत्पुनर्विचारणीयम्। न ह्यत्र खननमपकृष्यते। अतः स्वकाल एवास्यासादनमिति। अथ वेदिरपकृष्यमाणा सर्वसाधनान्यपकर्षयति। तदान्यंरवच्छादनान्यपकृष्येरन्। न चैतद्युक्तरूपमिव सर्वम्। सम्मर्शनान्ते च ज्योतिष्टोमे उत्तरवेदिरेषा इदापि सम्मर्शनान्त एव कर्त्तव्या। ज्योतिष्टोमविहिताया एवं वाक्येन विनियोग। अतः स्फ्याद्यासम्मर्शनात्करोतीत्युक्तम् ॥ ६१ ॥

उभयोरेक उत्करः ॥ ६२ ॥

उभयोरपि वेद्योरेक उत्करो भवति ॥ ६२ ॥

अपरेण वेदिं प्रतिस्थातुः सञ्चरः ॥ ६३ ॥

स्तम्बयजुर्हरणाय सञ्चरनियमः ॥ ६३ ॥

. उत्तरवेदिं निवपत्युत्तरस्याम् ॥ ६४ ॥

स उत्तरस्यामेव वेदावुत्तरवेदिमुपकिरतीति वचनात् ॥६४॥

शम्यामादाय चात्वालं मितीते पूर्वेणोत्करं सञ्चरं परिहाप्य ॥ ६५ ॥

इह च शम्यादानमप्राकृतकार्यार्थम् । अतस्तस्य आसादनादि न भवति । उत्करं पूर्वेण सञ्चरमुक्त्वा चात्वालमानम् । चात्वालश्च मानाद्यभिनिर्वर्त्यते आह ॥ ६५ ॥

शम्यामुदीचीं निदधाति पुरस्ताच्च ॥ ६६ ॥

उदीचीमेव ॥ ६६ ॥

दक्षिणतः प्राचीमुत्तरतश्च ॥ ६७ ॥

प्राचीमेव ॥ ६७ ॥

स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रम् ॥ ६८ ॥

शम्या निधानानन्तरमेव परिलेख कर्तव्यः । लाघविकेन सता सर्वतः शम्या निधानमुक्तम् ॥ ६८ ॥

विदेदग्निरिति चात्वाले प्रहरति स्फ्येनान्वारब्धे ॥ ६९ ॥

विदेदग्निरित्यनेन मन्त्रेण । चात्वाले प्रहरत्यन्वारब्धे यजमाने ॥ ६९ ॥

अग्ने अङ्गिर इति पुरीषं हरति ॥ ७० ॥

पुरीषं पशुत्खातं तदग्ने आङ्गिर इति हरति ॥ ७० ॥

हस्तेन च ॥ ७१ ॥

च शब्दात्स्फ्येन च ॥ ७१ ॥

योस्यामिति निवपति पूर्वार्द्धे शंकुसहितम् ॥ ७२ ॥

योस्यामित्यनेन मन्त्रेण शङ्कुसंलग्नं पुरीषं निवपति ॥ ७२ ॥

अग्नीदुत्करवच्चूर्णीं हृतम् ॥ ७३ ॥

तमग्नीदभिनिदधाति उत्करवत्पाणिद्वयेन मन्त्ररहितम् ॥ ७३ ॥

एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेषः ॥ ७४ ॥

एवं द्विरपरं प्रहरणादि कर्त्तव्यम् । यो द्वितीयस्यां तृतीयस्यामिति निवपने विशेषः । अन्वारम्भस्तु प्रहरणमात्र एव । तत्रैव श्रुतत्वात् ॥ ७४ ॥

अनुत्वेति चतुर्थं यथार्थमाहृत्य सिंहसीति व्यूहत्युत्तरवेदिम् ॥ ७५ ॥

अनुत्वेत्यनेन मन्त्रेण यथार्थंपुरीषमाहृत्य यथार्थो निर्वर्त्यते तथा पुरीषमाहृत्य सिंहासीत्युत्तरवेदिं व्यूहति ॥ ७५ ॥

शम्यामात्रीं त्रितृतीयामपरिमितां युगमात्रीं यजमानदशपद्यां वा ॥ ७६ ॥

द्वात्रिंशदङ्गुला शम्या । त्रितृतीयामिति वेदेस्त्रिभागसमितामपरिमितां वा प्रमाणद्वयस्यैव । तत्र हि श्रूयते त्रितृतीयां परिमितां चेति । युगमात्रीं यजमानदशपदां वोत्तरवेदिं व्यूहति ॥ ७६ ॥

सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च ॥ ७७ ॥

सोम एवोत्तरे द्वे प्रमाणे । अन्यान्यपि तत्र भवन्त्येव । तत्राविशेषश्रवणात् । सोम एवोत्तरे इति । कुत एतत् । व्यपस्फुरणश्रुतेः । व्यपस्फुरेते ह वा एते वेदिश्चोत्तरवेदिश्च । व्यपस्फुरणं च स्पर्द्धोच्यते । सा चातिमहत्त्वादुत्तरवेदेः स्पर्द्धोपजायते । असम्भवाच्च ॥ ७७ ॥

मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ॥ ७८ ॥

उत्तरवेदिं मध्ये प्रादेशपरिमाणां चतुःस्रक्तिं नाभिं करोति ॥ ७८ ॥

प्रोक्षत्युत्तरवेदिं, सिकताश्च प्रकिरति सिं, ह्यसीति प्रतिमन्त्रम् ॥ ७९ ॥

आनन्तर्याभावेऽपि प्रोक्षणं मा भूदित्युत्तरवेदि ग्रहणम् ॥ ७९ ॥

छन्ना वसति ॥ ८० ॥

अथैनां च्छादयति सा छन्नैतां रात्रिं वसतीति श्रुतत्वात् । छादनमुत्तरवेदिसंस्कारः सोऽत्र प्रवर्त्ततेऽवसत्यर्थस्तु ज्योतिष्टोम एव । ननु ज्योतिष्टोम उत्तरवेदिरुत्पन्ना । स चेह वचनेन विनियुक्ता । स उत्तरस्यामेव वेदा उत्तरवेदिमुपकिरतीति तेन वसत्यर्थोऽपि प्राप्नोति । उच्यते । सद्यःकालत्वाद्दिष्टीनां वसत्यर्थस्यात्राप्राप्तिः । छादनं तु संस्कारत्वात्प्राप्नोत्येव ॥ ८० ॥

वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ ८९ ॥

छायोष्णन्यायेन च वेद्युत्तरवेद्योरन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोष इत्येभिर्मन्त्रैः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ ८९ ॥

दक्षिणांससहितं बहिर्वेदिशेषं निषिञ्चतीदमहं तप्तं वारित्यमुमित्यभिचरन् ॥ ९० ॥

दक्षिणांसलग्नं प्रोक्षणीशेषं निषिञ्चति बहिर्वेदि इदमहं तप्तमित्यनेन मन्त्रेण । अमुमित्यभिचरन्नामादिशेत् । स च बाह्यांसस्थावित्यतः पूर्वो भवति ॥ ९० ॥

नाभ्याः श्रोण्यंसेषु पञ्च गृहीतं जुहोत्यक्षया दक्षिणेंऽसे श्रोण्यामंसे मध्ये च हिरण्यं पश्यन्सिंह्यसीति प्रतिमन्त्रम् ॥ ९१ ॥

उत्तरवेदिनाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोति अक्षया दक्षिणे अंसे प्रथमं तत उत्तरस्यां श्रोण्यां पुनर्दक्षिणस्यां तत उत्तरे अंसे पुनर्मध्ये च हिरण्यं पश्यन् सिंह्यसीत्येभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ९१ ॥

भूतेभ्यस्त्वेति स्रुचमुद्यच्छति ॥ ९२ ॥

स्रुक्च पैतुदारवी भवति होमसम्बन्धात् ॥ ९२ ॥

नाभिं पैतुदारवैः परिदधाति पूर्ववद्ध्रुवोसीति प्रतिमन्त्रम् ॥ ९३ ॥

पूर्ववदिति मध्यमदक्षिणोत्तरैः ध्रुवोसीत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ९३ ॥

अग्नेः पुरीषमिति निवपति [1]गुग्गुलुः सुगन्धितेजनवृष्णेस्तुकाश्चोपरिशीर्षण्या अभावेऽन्याः ॥ १४ ॥

अग्नेः पुरीषमित्यनेन मन्त्रेण । गुग्गुल्वादीनि नाड्यां निवपति वृष्णेस्तुका उपरि शीर्षण्याः । तदभावेऽन्याः ॥ १४ ॥

तेष्वग्निं निदधाति ॥ १५ ॥

तेषु सम्भारेषु अग्निं मुञ्चति ॥ १५ ॥

उद्धतावोक्षिते दक्षिणम् ॥ १६ ॥

अग्निं निदधातीति वाक्यशेषः । पैतुदारवादि च सम्भाग्निप्रणयनान्तमत्र न भवति । उत्तरवेदिमात्रविधानात् । पैतुदारवादीनां चाग्न्यर्थत्वात् । एते हि ज्योतिष्टोमिकस्याग्नेरङ्गम् । शारीरे हैयास्य पीतुदार्विति विधायाह तथदेवात्राग्नेर्यत् तदिहाप्यस्यादिति । न चह ज्योतिष्टोमिकोऽग्निः । उत्तरवेदिमात्रविधानात् । किमिति तर्हि पैतुदारवादय उपन्यस्ताः । लाघवाय अतिदेशार्थम् । ज्योतिष्टोम ह्यग्निं प्रणयत्यौपतिवपनान्तमित्यनेन कथं नामतिदेशः स्यादिति । तथाचेमं सूत्रं निराकृत्योपयमनीरुपनिवपतीत्युक्तमाचार्येण ॥ १६ ॥

[2]उपयमनीरुपनिवपति ॥ १७ ॥

प्रणीताद्यतः ॥ १८ ॥

---

१ गुग्गुलु प्रसिद्धं, सुगन्धितेजनं रोहीतः, वृष्णेः स्तुका शिरो रोमाणि, ताश्च शीर्षण्या. शीर्षे भवा, शृङ्गयोरन्तराले भवानि मेषरोमाणि, अन्याः अन्यस्मिन्मेषस्य शरीरप्रदेशे जाता इति देवः ।

२ अग्निप्रणयने उपयुक्ता मृत्तिका. सिकता वा उप समीपे अग्नेर्नीचैः प्रक्षिपतीत्यर्थः ।

प्रणीताप्रणयनस्यापकृष्टत्वात् प्रणीताप्रणयनादि न भवति। एवं चेत्प्रणीताप्रणयनं यस्यादौ तदादि भवति। तत्र परिस्तरणम्। एतदप्यनुपपन्नम्। अवसराभावात्। अद्याप्यग्न्यन्वाधानमकृतमास्ते तेन परिस्तरणस्यानवसरः। अतः प्रणीताग्रहणेन प्रणीतानामग्रहणम्। कथं तर्हि तत्। प्रणीत आहवनीयो यस्य कर्मण आदौ तदादि भवति। किं च तदग्न्यन्वाधानम् उद्धृत्य ह्याहवनीयमग्न्यन्वाधानस्यावसरः। तेन प्रणीताद्य इति अग्न्यन्वाधानमित्येतदेवोक्तं भवति। अथ वैकस्यादिशब्दस्य लोपेनोष्ट्रमुखन्यायेन प्रणीतादिमादौ कृत्वा भवतीत्यर्थः। एवं कृत्वा यत् कृतं तत्कृतमेव ब्रह्मवरणादि शेषमग्न्यन्वाधानादि प्रतिप्रसूयते ॥९८॥

व्रतोपायनं वा कृतं चेत् ॥ ९९ ॥

अग्न्यन्वाधानसमनन्तरं व्रतोपायनीयस्य कालः। तदप्यन्न वा भवति। यदि न कृतं पूर्वम्। ननु च व्रतोपायनस्यायमेव प्रथमः कालः, कथमिदमुक्तमकृतं चेदिति। उच्यते। व्रतोपायनं पदार्थाङ्गं तेषां चापकर्षात्तस्यापि पक्षे अपकर्षः प्राप्नोति। तेनाकृतं चेदित्युच्यते। यद्येवं वा न भवत्येव व्रतोपायनम्। अथ किं कारणम्। वैकल्पिकानामादावेवाधारणं कर्तव्यम्, यथास्मिन्काले व्रतोपायनं कर्तव्यमिति। तदग्न्यन्वाधानोत्तरकालता यथार्थते तदा ब्रह्मवरणादीनामङ्गमिति व्रतपकर्षादपकृष्यते। एवं च कृत्वा नायं व्रतोपायनस्य काल इति। नन्वेवं सति अग्न्यन्वाधानोत्तरकालतापैति। किं क्रियताम्। ब्रह्मवरणादिष्वपकृष्यमाणेषु तदङ्गस्यापकर्ष एव। ब्रह्मवरणादयो पि हि अग्न्यन्वाधानादुत्तरकालीना एवासन्। तस्मादपरिचोदना एषा ॥ ९९ ॥

निर्लेभ्योधिकान्यैन्द्राग्नः पयस्ये वारुणी मारुती काय एककपालः ॥ १०० ॥

आग्नेयादिभ्यो निर्लेभ्योधिकान्येतानि हवींषि भवन्ति ॥१००॥

नानाज्यनिर्वपणम् ॥ १०१ ॥

साधारण्याद्गार्हपत्यस्य निर्वापाधिश्रयणयोः सह प्राप्ताविदमुच्यते ॥ १०१ ॥

दक्षिणं प्रतिप्रस्थातुः ॥ १०२ ॥

अपरकालत्वादुत्तरं मा भूदिति ॥ १०२ ॥

ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन ॥ १०३ ॥

ध्रौवादाज्यात्पूर्वं पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं गृह्यते । ज्योतिरसीत्यनेन मन्त्रेण । विश्वरूपमित्यत्र समाम्नातस्याद्यस्य समिदन्तेनेत्युच्यते । न ह्यत्र परादिना पूर्वान्तन्यायः । प्रकरणान्तरपाठात् । मन्त्रस्यापूर्वोऽपि सन् सकृद्विधिः प्राप्नोति । अनुयाजार्थस्य हि द्रव्यस्य प्रकृतौ एवमेव दृष्टत्वात् ॥ १०३ ॥

अनुयाजार्थं सर्वत्र ॥ १०४ ॥

यत्र पृषदाज्यग्रहणमुच्यते तत्रानुयाजार्थमेवोच्यते । एवं चासंसर्गात् पृथक्पात्रतास्य भवति । तथोपकल्पनीयम् । न ह्युपभृत्कार्यप्राप्तिरस्य । उपभृत उपभरणार्थत्वात् । तेनोपभृद्धर्माः स्वरूपप्रयुक्ताः । नानुयाजार्थद्रव्यधारणप्रयुक्ता इति ॥ १०४ ॥

औपभृतासादनम् ॥ १०५ ॥

औपभृतमासादनं पृषदाज्यस्य भवति । अनुयाजार्थस्य ह्येवमेव दृष्टत्वात् ॥ १०५ ॥

प्रियेण धाम्नेति चाविशेषोपदेशात् ॥ १०६ ॥

अविशेषेण हि प्रियेण धाम्नेत्येतत्सर्वमुद्दिश्य विहितम् । न च प्रकृतावनुयाजार्थस्य द्रव्यस्य तत्रासादनम् । उपभृत एव तदिति ॥ १०६ ॥

उत्तरं वापरकालत्वात् ॥ १०७ ॥

उत्तरं वा गृह्यते । कुत एतत् । अपरकालत्वात् । अपरकालो हि तस्य विनियोग इति । एवं प्राप्ते पुनर्वा शब्देन व्यावर्त्यते । वा पूर्वं गृह्यते । उपभोगत्वात् । प्रकृतावपि ह्यपरकालीनेन सता पूर्वकालतैव उपभुक्ता । अतः प्रकृतवत्पूर्वकालतैवेति ॥ १०७ ॥

प्रतिप्रस्थाता च ॥ १०८ ॥

पृषदाज्यं गृह्णाति ॥ १०८ ॥

न वा ॥ १०९ ॥

अथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवतीति विकल्पेन श्रवणात् ॥ १०९ ॥

प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रैषयजमानवाचनहोतृपदनवरणप्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाभागापराग्न्यवभृथान्न प्रतिप्रस्थाता ॥ ११० ॥

प्रतिप्रस्थाता न करोति प्रणीतादीन् । प्रणीताप्रस्तावद्विभयात् । भवन्ति ह्यध्वर्युणा कृताः प्रतिप्रस्थातुरपि । पत्नीसन्नहनं कृतत्वात् । अग्निमन्थनं तु शास्त्रात्, आश्रुतप्रत्याश्रुते च । प्रैषाः यजेत्येवमादयः । वाचनं यजमानस्य । वाचनस्य का प्राप्तिः । पृषदाज्यस्कन्दने चतुस्त्रिंशद्धोम इति केचित् । तत्र हि व्याहृतिहोमे वाचनं विहितम् । नेत्यपरे । पर्वैकस्या यत्र हाते नाविहितमिति । पर्वैका यथाकालं कुर्यात् यज्ञस्य दोह इति वाचयतीत्युक्तत्वात् । कर्मार्थश्च समाधिः । सर्वानुकेषु यजमानवाचनं विहितम् । तदनुकरणात्प्रतिप्रस्थातुरपि मा भूदिति प्रतिषिध्यते । प्राशित्रं वचनात् । अङ्गुलिपर्वाञ्जनं कृतत्वात् । अवान्तरेडाभागांश्च कृतत्वादेव । अपराग्निहोमा वचनात् । अथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयत्युपांशु एव प्रतिप्रस्थाता इति वचनात् । अवभृथोऽपि वचनादेव न भवतीति ॥ ११० ॥

कृतानुकरोन्यत्र दक्षिणस्याम् ॥ १११ ॥

कृतानुकर एवं प्रतिप्रस्थातेति वचनात् ॥ १११ ॥

वाजिने निषिच्योभयोः करीराण्यावपति

शमीपलाशमिश्राणि ॥ ११२ ॥

तयोरुभयोरेव करीराण्यावपति । तथा तयोरुभयोरेव शमीपलाशान्यावपति । उभयोस्तुल्यत्वात् । न मिश्रण फलानाम् । प्रयोजनं अन्तरायेपि तृप्यन्त एव । तत्रस्याभिघाराश्च पूर्वमावापः । वाजिनं निषिच्य करीराण्यावपति । एतानि च संस्कारकाणि न प्रदेयानि । अत प्रदेयधर्मा न भवन्ति ॥ ११२ ॥

मेषमिथुनं च ॥ ११३ ॥

आवपतीत्यनुवर्तते । यश्चायमावापस्तनुछासनं पात्र्यां प्राप्तं वचनात्पयस्ययोः क्रियते ॥ ११३ ॥

मारुत्यां मेषम् ॥ ११४ ॥

पारिशेष्याद्वारुण्यां मेषीम् । अस्य च मेषमिथुनस्य पौरोडाशिकविध्यन्तेन केचित्कपालेषु श्रपणमिच्छन्ति । तदयुक्तम् । पिष्टकृतानां हि उन्डेरकादीनां कुम्भ्यां श्रपण प्रसिद्धम् । यथा पुरोडाशानां कपालेषु चरूणां च स्थाल्यामिति । यथा प्रसिद्धे च श्रपणादौ मन्त्रवर्जितमादि विधानम् । अतश्च कुम्भ्योर्मेषमिथुनश्रपणम् । तयोश्चाकपालकार्यापत्तेश्चरीरियोपकल्पनमिति । उदकमपि तत्रोपसर्जनी कार्यस्य निर्वृत्तत्वादन्यदेव भवति । प्रदेयधर्मास्तु प्रदेयत्वान्मेषमिथुनस्य सन्त्यवस्त्येव । कथं प्रदेयनेति चेत् । सोऽन्यतरेणावदानेन सह मेषमवद्यतीति । प्रदानायैव चावदीयते । तथा च लिङ्गम् । एतद्वै प्रत्यक्षं वरुणस्य पशुर्यन्मेष इति । वारुणस्य पशुत्वान्मेषस्य प्रदेयतेति ॥ ११४ ॥

सर्वाणि हवींष्युत्तरस्यामासादयति मारुतीः

सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ॥ ११५ ॥

सर्वग्रहणं करम्भपात्रार्थमिति केचित् । तदनुपपन्नम् । दक्षिणेऽग्नौ नेषां होमः । तत्रैवासादनं युक्तरूपमिति । सर्वग्रहणं किमर्थमिति चेत्, सह विधाने सति विभागार्थम् । मारुतीव्यतिरेकेण सर्वाण्युत्तरस्यां वेद्याम् मारुती तु सहाज्या दक्षिणस्यामासाद्यत इति । एवं च सति मारुत्याः पयस्यायाः प्रतिप्रस्थातुरेव कर्तृत्वं सिध्यति । एवं च सति यथा स्वं प्राणदानमिति ॥ ११५ ॥

सम्मार्जनाय प्रेषिते संमृष्टे प्रतिप्रस्थाता

पत्नीमानेष्यन्नाह केन चरसीति ॥ ११६ ॥

असंमृष्टमेव भवति स प्रेषितमथ प्रतिप्रस्थाता प्रतिपरैति स पत्नीमुदानेष्यन्पृच्छति केन चरसीति ॥ ११६ ॥

स॒ंस्तुतानाचष्टे ॥ ११७ ॥

ये संस्तुताः सङ्गता भर्तृव्यतिरेकेण तानाचष्टे ॥ ११७ ॥

तृणानि वोद्गृह्णाति प्रतिस॒ंस्तुतम् ॥ ११८ ॥

अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः ॥ ११९ ॥

आख्याते प्रघासिन इत्येनां वाचयति

नयन् ॥ १२० ॥

आख्यातोत्तरकालं प्रघासिन इत्यमुं मन्त्रं वाचयति पत्नीम् । अत एव मन्त्रवर्णात्करम्भपात्रेषु मरुतां देवतात्वं गम्यते । प्रघासिनो हवामहे मरुतश्चरिशादस इति वाक्यशेषात् । यथा पुरानुवाचयैव मंत्रयैवैनानेतेभ्यः पात्रेभ्यो नयति ॥ १२० ॥

करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि

कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जाया

पती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिम-

परेण वा यद्ग्राम इति ॥ १२१ ॥

करम्भपात्राणि शूर्पेण पत्नी जुहोति। दक्षिणेऽग्नौ प्रत्यङ्मुखी यद्ग्राम इत्यनेन मन्त्रेण। मूर्द्धनि कृत्वा गच्छति। दक्षिणेनाहरणं पत्नीयजमानयोरग्नेश्चान्तरेण तीर्थेन प्रविश्य पूर्वेण वेदिमपरेण वेदिं यथोक्तं जुहोति। जायापती वा जुहुतः। तदा च यजमानोऽन्वारम्भं करोति[1] ॥ १२१ ॥

मोषूण इति यजमानो जपति ॥ १२२ ॥

अकन्कर्मेत्येनां वाचयति प्रतिनयन् ॥ १२३ ॥

प्रतिशब्दप्रयोगात्तेनैव मार्गेण पत्नीं नयन्नकन्कर्मेति वाचयति ॥ १२३ ॥

आगते सम्मार्जनाद्याज्यभागाभ्याम् ॥ १२४ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह। आगते प्रतिप्रस्थातरि संमार्जनाद्याज्यभागान्तं कर्म क्रियते ॥ १२४ ॥

स्फ्यपाणिरास्ते प्रतिप्रस्थाता ॥ १२५ ॥

तत ऊर्ध्वं स्फ्यपाणिरास्ते प्रतिप्रस्थाता ॥ १२५ ॥

हविर्भिश्चरति ॥ १२६ ॥

अध्वर्युः ॥ १२६ ॥

---

१ अत्रापस्तम्बः 'अन्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण वोत्तरां वेदिमर्धेके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणाग्नौ शूर्पेण जुहोति मोषूण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्यामकन्कर्म कर्मकृत इति परायतोऽपि वाऽध्वर्युः प्रतिप्रस्थाता वा जुहुयाद्दक्षिणेन दक्षिणमग्निं पुरस्तात्प्रत्यङ्ङवस्थितः शूर्पं शिरस्यधाय मोषूण इन्द्रेति यजमान उत्तरतस्तिष्ठन् यद्ग्रामे यदरण्य इति जुहुतः शूर्पेण करम्भपात्राण्यकन्कर्म कर्मकृत इति व्युत्क्रामत' इति।

पयस्याप्रचरणकाले मेषौ व्यतिहरतः ॥ १२७ ॥

स यो मेषो भवति मारुत्यास्तं वारुण्यामवद्धाति या मेषी भवति वारुण्यास्तां मारुत्यामवद्धातीति वचनात् ॥ १२७ ॥

अन्यतरेणावदानेन सह मेषम् ॥ १२८ ॥

अन्यतरेण पयस्यावदानेन सह मेषमवद्धातीति ॥ १२८ ॥

सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योनुवाचयति ॥ १२९ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह मरुद्भ्योनुब्रूहीति श्रुतत्वात् ॥ १२९ ॥

वारुणीवदवदानम् ॥ १३० ॥

मारुत्याः पयस्यायाः प्रतिप्रस्थाता करोति ॥ १३० ॥

हविर्भिश्चरित उभौ स्विष्टकृत्प्रभृति ॥ १३१ ॥

हविर्भिश्चरित इति कायेन प्रचर्येत्येतदुक्तं भवति । उभावेव स्विष्टकृत्प्रभृति कुर्वाते सर्वम् ॥ १३१ ॥

इडामवदाय प्रतिप्रस्थात्रे प्रयच्छति ॥ १३२ ॥

तत्र प्रतिप्रस्थाता मारुत्याः ॥ १३३ ॥

द्विरवद्यति ॥ १३३ ॥

स्रुचौ व्यूहत्तोध्वर्यू ॥ १३४ ॥

अध्वर्युग्रहणं यजमानव्युदासार्थम् ॥ १३४ ॥

समासिच्य वाजिनभक्षः ॥ १३५ ॥

समासिच्य वाजिनशेषो भक्षः कर्तव्यः[१] ॥ १३५ ॥

---

१ तथा चापस्तम्बः ' उभौ वाजिनाभ्यां प्रचरतः शेषौ समवनीयोत्तरे विहारे पूर्ववद्भक्षयन्ति ' इति ।

अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु ॥ १३६ ॥

अध्वर्युकर्मकुर्वन्नध्वर्युविकार इत्युच्यते । अतश्च कर्मनिमित्तत्वाद्भक्षेष्वपि भवति ॥ १३६ ॥

मैत्रावरुणश्च होत्रध्वर्युविकारात् ॥ १३७ ॥

यत्र मैत्रावरुणो विद्यते तत्र तस्यापि भक्षो भवति । कुत एतत् । होत्रध्वर्यू विकरोति । होतारं हि पुरोनुवाक्यानुवचनेन विकरोति प्रैषेण वा ऽध्वर्युम् । मैत्रावरुणः प्रेष्येति चानुचाहेति वचनात् । अतः सोऽपि तन्निमित्तैर्भक्षैर्युज्यत इति ॥ १३७ ॥

समिष्टयजूंषि तूष्णीं दक्षिणस्याम् ॥ १३८ ॥

येषां भवन्तीति ॥ १३८ ॥

वारुणीनिष्कासेनावभृथम् ॥ १३९ ॥

कर्तुं अपः प्रतियन्तीति वाक्यशेषः । [1]निष्कासस्य करणत्वेन निर्देशात्पुरोडाशो निवर्त्तते ॥ १३९ ॥

तूष्णीमित्याभ्यवेत्य मज्जयत्यवभृथेति ॥ १४० ॥

तूष्णीमेत्येति सामगानप्रतिषेधः । अभ्यवेत्य च तूष्णीमिति । अपोवक्रमणयाचनप्रतिषेधः । मज्जयति निष्कासस्थालीमवभृथेत्यमेन मन्त्रेण ॥ १४० ॥

---

१ पयस्यापाचनकाले तापवशादध' स्थालीतललग्नं पयस्यावशेषः निष्कास उच्यते । अथास्यै वारुण्यै पयस्यायै क्षामकर्षमथमादाय [1] इति श्रुते । पात्रे संसक्तः कृष्यते विदलष्यते इति कर्षः, क्षामश्चासौ कर्षश्चेति क्षामकर्षं, स्थालीतललग्न· पयस्यावशेष इति तदर्थः । अत्र च नाम्ना सौमिकादवभृथादमंप्रासिरतः सोमवदत्र सर्वं कर्तव्यम् । ततो प्रथमं चात्वालसमीप पयोऽदहीनि पाचनम् । ततो निष्कासाज्यस्थालीस्रुक्समिद्बर्हिःस्तताप्रदानस्यपरिभाजनस्थालीपयोऽस्यमानमादाय चात्वालोत्करान्तरेण निष्क्रम्योदकसमीपं गच्छन्ति ।

जायापती स्नातोऽमज्जन्तौ ॥ १४१ ॥

अमज्जन्तावेव स्नानमाचरतः ॥ १४१ ॥

अन्योन्यस्य पृष्ठे धावतः ॥ १४२ ॥

धावुगतिशुध्योः । शोधयतः प्रक्षालयत इत्यर्थः ॥ १४२ ॥

अन्ये वाससी परिदधाते ॥ १४३ ॥

जायापती ॥ १४३ ॥

पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् ॥ १४४ ॥

पूर्वे वाससी दद्यादधिकृतेभ्य ऋत्विग्भ्यो यस्मा यदेच्छा भवति । स यस्मै कामयेत तस्मै दद्यादिति वचनात् ॥ १४४ ॥

१यथेतमेत्याहवनीये समिदाधानं देवानाᳲ समिदसीति ॥ १४५ ॥

यथेतमिति तूष्णीमेवेयेतवुक्तं भवति । तथा चामहीया जपप्रतिषेधः । आहवनीये समिदाधानं देवानाᳲ समिदसीत्यनेन मन्त्रेण ॥ १४५ ॥

पत्नी च गार्हपत्ये तूष्णीम् ॥ १४६ ॥

समिधमादधातीति वाक्यशेषः ॥ १४६ ॥

धेनुर्दक्षिणाश्वः षड्वा दश वा ॥ १४७ ॥

धेन्वादीनां विकल्पः ॥ १४७ ॥

कार्त्तिक्याᳲ साकमेधाद्व्यहम् ॥ १४८ ॥

---

१ यथागतमेत्य चात्वालोत्करावन्तरेण तूष्णीमेव पत्न्य गृहमागत्याहवनीये 'देवानाᳲ समित्' इति मन्त्रेण समिधमादधातीति सूत्रार्थः ।

कार्त्तिकीति कार्त्तिकपौर्णमास्युच्यते । स च चतुर्मासोपलक्षितः कालोऽभिधीयते । अथ यदेव पतैश्चतुर्थे मासि यजत इति । तथा च सूत्रकारान्तरम् । पञ्चम्यां पौर्णमास्यां साकमेधा इति । साकमेधा इति च कर्मणो नामधेयम् । तदवयवभेदापेक्षया बहुवचनम् । नाम च व्यवहारार्थम् । मासं साकमेधैरिति । द्व्यहमित्यवाच्यम् । उत्तरसूत्रादेव तत्प्राप्तेः । प्रातर्दुग्धा ऽदुग्धा वेति । पाक्यं वा । पूर्वेद्युः कर्त्तव्यस्यापि साकमेधसंज्ञा यथा स्यात् । इतरथा हि पौर्णमास्यामेव कर्त्तव्यस्य साकमेधसंज्ञा स्यात् । तत्प्रभृतिरिति द्व्यहग्रहणम् ॥ १४८ ॥

पूर्वेद्युः पूर्वाह्णेऽग्नये नीकवते पुरोडाशः ॥१४९॥

पूर्वेस्मिन्नहनि चतुर्दश्यां अनीकवद्गुणविशिष्टायाग्नये पुरोडाशः । पुरोडाशग्रहणं च यजति प्रतिपत्त्यर्थम् । इतरथा ह्याहुतिरप्याशङ्क्येत ॥ १४९ ॥

मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः ॥१५०॥

अवपाघाव कालस्य प्रधानमात्रं तत्र[1] ॥ १५० ॥

समिष्टयजुरन्तं भवति ॥ १५१ ॥

सान्तपनीयं कर्म । कुत एतत् । नैव स्तीर्णावेदिर्भवति या मरुद्भ्यः सान्तपनेभ्य इति वचनात् । गृहमेधीये ॥ १५१ ॥

बर्हिरनुप्रहरणवर्जं वा ॥ १५२ ॥

अथ वा बर्हिर्मात्रमेव न प्रह्रियते । येन प्रतिपत्त्युत्कर्षे पदार्थानामुत्कर्षो न स्यात्त्वः । तस्माद्बर्हिर्मात्रमेवोत्कृष्यते । एवमपि सति गृहमेध्यन्ते संस्रावयुक्तपदार्थविधानात् । सान्तपनीयां संस्थाप्येति ब्राह्मणतर्पणं विधीयते । तेनैव च कर्मापवर्गः । एवं च सति बर्हिर्ब्राह्मणतर्पणयोः ब्राह्मणतर्पणं कर्मापवर्गो च पदार्थ-

---

१ अत्र मध्यन्दिनशब्देन त्रिमुहूर्तात्मककालस्योक्तत्वात् सकलस्यानुष्ठानम् ।

चतुष्टयमेवोत्कृष्यते इति सम्प्रदायः। अपरे तु सैव स्तीर्णावेदि-र्भवतीत्यनेन सर्वमेवोत्कर्षयन्ति । तथा सान्तपनीयां संस्थाप्येति-तदनुरूपतरं भवतीति । अन्ये च पुनर्वचनसामर्थ्याद्बर्हिर्मात्रमे-वोत्कर्षयन्ति सान्तपनीयासंस्था च बर्हिः प्रहरणेनैवाभिधीयत इति। स चायं पक्षः श्रेयस्करतर इवाभाति ॥ १५२ ॥

## इध्मस्थाने शकलपरिधिनिधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि ॥ १५३ ॥

स्थानशब्दः कार्यवाची। कार्यं हि दृश्यते। शकलानां क्षालनम्। स्थाने निधायेति च प्रकृतिलिङ्गसंयोगात्प्राकृतमेव निधानम्। अस्ति हि प्रकृतावपरेण प्रणीतास्फ्यं निदधातीध्माबर्हिश्चेति प्रकृ-तिलिङ्गम् । एवं च स्थानमपि लभ्यते। तत्र निधानं पक्षे प्रेषिते-न कर्तव्यम्। तत्र यजुः प्रोक्षितोऽङ्गमात्रमुपयाति । तत्प्रोक्षणेन च सह प्रणीताद्यपकृष्यत इति। गृहमेधिगुणविशिष्टेभ्यो मरुद्भ्यः सा-यमपराह्णे चरुः कर्तव्यः । सायंशब्देन चापराह्णो लक्ष्यते। एवं हि श्रूयते। अथ मरुद्भ्यो गृहमेधिभ्यो ऽपराह्णे चरुरिति। स च पयसि श्रप्यते ॥ १५३ ॥

## सान्नाय्यवत् ॥ १५४ ॥

तत्र पयः सान्नाय्यधर्मवद्भवति । कुत एतत्। श्रुतेः। शा-खया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुं श्रपयतीति । अपि च मेधो वै पयो मेधास्तण्डुला इति तण्डुलैस्समुच्चारणात्प्रा-धान्यमवगम्यते । तथा चरुं प्रकृत्य श्रूयते तस्य द्वय्यावृदिति। द्विप्रकारा क्रिया ओषधक्रिया सान्नाय्यक्रिया चेति ॥ १५४ ॥
एवं प्राप्त इदमाह—

## तूष्णीं वैकचोदनात् ॥ १५५ ॥

वा शब्दः पक्षं व्यावर्त्तयति । अथ वा न सान्नाय्यधर्म-वर्त्तपयो भवति। किं कारणम् । अप्रदेयत्वात्। कथमप्रदेयत्वम्। उपसर्जनभावात् । उपसर्जनत्वं च अधिकरणविभक्त्या निर्देशात्। पयसि श्रपयतीति ॥ १५५ ॥

## एकचोदनात् ॥ १५६ ॥

एकाहीयं चोदना मरुद्भ्यो गृहमेधिभ्यश्चरुरिति । एका च चोदना नोभे विकर्तुमर्हतीति । अतश्चासान्नाय्ये सन्नाय्यधर्मा याचनिकाः । शाखया वत्सानपाकुरुतेत्येवमादयः । अत एव च मन्त्रोऽपि न प्रवर्त्तते । वत्सापाकरणमात्रस्य चोदितत्वात् । तथा च शाखान्तरे दर्शनम् । अयजुषा वत्सानपाकुरुतेति । दर्शनं चैतन्न वचनम् । अप्रधानत्वात् । वत्सानपाकुरुतेति बहुवचनोपदेशात् । केचिद्यावत्सन्दोहमिच्छन्ति । तथा च यदि बहु ओदनः स्यादित्युपपद्यते । गो बहुत्वे हि ओदनस्य बहुत्वं भवतीति । तत्पुनरयुक्तम् । बहुवचनोपदेशात्रय एवापाक्रियन्ते । ओदनबहुत्वं च तिसृणामपि गवां सम्भवत्येव । पयसो बहुत्वात् । तस्मात्त्रयाणामपाकरणम् । न च पयसोऽधिश्रयणमत्र । पवित्रवति सन्दोहोऽयेतावन्मात्र श्रवणात् ॥ १५६ ॥

## श्रपयित्वाभिघार्योद्वास्य शरावयोरुद्धरति पात्र्योर्वा ॥ १५७ ॥

श्रपणाभिघारणे अनूद्येते १पिशीलकविधानार्थम् । केचित्पिशीलकोपस्तरणविधानार्थमाहुः । तदनुपपन्नम् । न ह्यस्यान्वयप्राप्तस्य निषेधकं वचनमस्ति । शरावयोरुद्धरति पात्र्योर्वेति विकल्पः । अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजतीति वचनात् निर्णेजनं श्रुतावनूद्यते । सूत्रकारेणान्वयप्राप्तत्वान्नोपनिबद्धम् । निर्णेजनं च सम्मार्ग उच्यते । प्रकृतौ हि दृष्टं सम्मार्गं प्रकृत्य पात्राणि निर्णेनिजतीति । तच्च गृहमेधिपिशीलीकस्यैव भवति न सौविष्टकृतस्य । शेषकार्यार्थत्वादप्रयोजकत्वं हि तस्य । एवं च सति पश्चादपि प्र्यङ्गानामभिघारणासादनालम्भा न भवन्ति ॥ १५७ ॥

## आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ॥ १५८ ॥

१ पिशीलिकः शराव उच्यते ।

ओदनस्य मध्ये सर्पिरासिञ्चत्याज्यकार्याय। आज्यकार्यं च आज्यभागाभिनिर्वृत्तिः ॥ १५८ ॥

यावदुक्तमतः ॥ १५९ ॥

अत ऊर्ध्वं यावदुक्तमधस्तादयावदुक्तमिति केचित्। तदयुक्तम्। प्रमाणाभावात्। तस्मादतः शब्दो हेत्वर्थे। अतो 'यावदुक्तम' येनान्वयप्राप्तावप्याज्यभागौ विधीयेते अत आज्यभागविधानेन यावदाराादुपकारकं तत्सर्वमत्र न भवति॥ १५९॥

स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्परिधिपरिधानम् ॥ १६० ॥

पुनः संस्कारशङ्कया स्तरणयजुषेत्युच्यते। अत इदमाह तूष्णीं वा कृतत्वादिति। कृतत्वात्संस्कारस्य तूष्णीमेवाभिमर्शनं कर्त्तव्यम्। ततः परिधिपरिधानं भवति। पूर्वतरं चान्वयोक्त्याहवनीयकल्पनमिति ॥ १६० ॥

शकलान्याधाय मत्योद्धृतावासादयति ॥ १६१ ॥

प्रतिग्रहणाद् इध्मसंख्या न भवति। उद्धृताचोदनायासादयति। तत्र गृहमेध्योदने आज्यमोदनश्च द्वयमपि प्रयोजकम्। आसादनमन्यथातो विपरिणम्यते प्रियाभ्यां धामभ्यामिति। सौविष्टकृते त्वाज्यमेव प्रयोजकम्। ओदनस्य च ध्रुवस्थानत्वात्। घृताङ्क्योदनो नास्तेति प्रयोगः। आलम्भश्चाज्ययोर्दक्षिणस्य चोदनस्य ॥ १६१ ॥

स्रुक्स्रुवं च सम्मार्ष्टयनुद्वास्य वा सम्मार्जनम् ॥ १६२ ॥

चोदनाव्यावृत्तेरनुद्वास्यैव सम्मार्जनम् ॥ १६२ ॥

आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात् सौम्यमुत्तरात् ॥ १६३ ॥

गृहमेधिस्विष्टकृतौ चाज्यभागवत्समावदानौ ॥१६४॥

आज्यभागवदिति दक्षिणादेकः अपर उत्तराद् । समावदानाविति उभयोर्द्विवदानं नैकप्रत्ययार्थं स्विष्टकृत इति ॥ १६४ ॥

अप्रत्यभिघारणं च ॥ १६५ ॥

प्रत्यभिघारणं च क्षताभ्यङ्गो न भवति । सौविष्टकृते तु द्विरभिघारणमिति सम्प्रदायः । यथोक्तमुपरिष्टादाज्यस्याभिघारयतीति सोऽनुवादो यथाप्राप्तस्य ॥ १६५ ॥

अनुद्धृत्य वा सहितमाज्यमधिश्रयति ॥ १६६ ॥

वाशब्दो विकल्पार्थः । अनुद्धृत्य पिठीलकयोः स्थालीपक्षोयमुच्यते । सहितमाज्यमधिश्रयतीति आहवनीयआज्यपर्युच्यते । तत्रैव प्रतिवेशमाज्यमधिश्रयतीति वचनात् । अत्र च स्थालीध्रुवार्थे वर्त्तते । तेनाज्यनिर्वापकाले तत्सम्मार्गः क्रियते ॥ १६६ ॥

उद्वास्योभयमासादयति ॥ १६७ ॥

स्थालीमोदनं च तस्मिन्नेवायतन इति ॥ १६७ ॥

न प्राशित्रमिडान्तं भवति ॥ १६८ ॥

अथेडामेवावद्यति न प्राशित्रमिति वचनात् ॥ १६८ ॥

पूर्वे मार्जनमुपहूय ॥ १६९ ॥

पूर्वे पक्षे उपहूय मार्जनं ततो भक्षणम् ॥ १६९ ॥

प्राश्नन्ति युक्ताः ॥ १७० ॥

युक्तग्रहणं यजमानव्युदासार्थम् ॥ १७० ॥

यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत् ॥ १७१ ॥

यद्दुग्धेदोहनो हविरुच्छिष्टाशा उपनीताः ॥ १७१ ॥

अरिक्तां स्थालीं निदधाति ॥ १७२ ॥

अथैतामनिरशितां कुम्भीमपिधाय निदधातीति वचनात् । अपिधानं च सामर्थ्यप्राप्तत्वान्नोपनिबद्धम् ॥ १७२ ॥

सान्तपनीयां संस्थाप्य ॥ १७३ ॥

संस्था च सम्प्रदाये पदार्थचतुष्टयेन । केषांचिद् दर्विहोममात्रेणैवेति । यद्दिश्च सान्तपनीयासक्तं तत्प्रतिपत्त्या च समाप्तिमेवसेवेति ॥ १७३ ॥

प्रातर्वा शेषभावात् ॥ १७४ ॥

प्रातरेव वा परिसमाप्तिः कर्त्तव्या न इदानीम् । कुत एतत् । शेषभावात् । गृहमेधीयाच्छेषो हि विद्यते दर्विहोमः । तस्मात्प्रातः परिसमाप्तिः ॥ १७४ ॥

मातृभिर्वत्सान्संसृज्य [१]निवान्या वत्सं बध्नाति ॥ १७५ ॥

तस्यां रात्रौ ॥ १७५ ॥

यावाग्वाग्निहोत्रहोमः ॥ १७६ ॥

प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्यादत्ते पूर्णादर्वीति ॥ १७७ ॥

अग्निहोत्रं च हुत्वा अहुत्वा वा दर्विहोमः कर्त्तव्यः । तत्र गृहमेध्याज्यभागपूर्वस्य विद्यमानत्वात् । आज्यभागयोरननुष्ठानम् ॥ १७७ ॥

---

१ स्वयं मृतवत्सा परकीयेण वत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते ।

ऋषभमाह्वयितवै ब्रूयात् ॥ १७८ ॥

ऋषभो यथा रौति तथाह्वानं कुरुतेत्येतदुक्तं भवति ॥ १७८ ॥

रुते जुहोति ॥ १७९ ॥

ऋषभस्य ॥ १७९ ॥

अन्वाहरति ब्रह्मा जुहुधीत्याह ॥ १८० ॥

ऋषभे ॥ १८० ॥

देहि म इति जुहोत्यृषभो दक्षिणा ॥ १८१ ॥

गृहमेधिशेषपर्वेपि याचनिकी दक्षिणा । ज्योतिष्टोमोदवसानीयावत् । यस्य रुते जुहोति तमेव ऋषभं पूर्णवयाय दक्षिणां ददातीति वचनात् ॥ १८१ ॥

मरुद्भ्यः क्रीडिभ्यः सप्तकपालः ॥ १८२ ॥

अदित्यै चरुरन्यत्रापि ॥ १८३ ॥

यत्रादितिर्देवता श्रूयते तत्र चरुर्भवति । यथा राजसूये अदित्यै मह्ष्या इति । यद्येवं अदित्यै चरुस्तृतीयेति चरुग्रहणं न कर्तव्यम् । अतोन्यथा व्याख्यायते । यत्रादित्य इति चरुः श्रूयते तत्र न ज्ञायते किमदितिर्देवता उतादित्य इति । तत्रादितिर्देवतात्वमुच्यते । यथा सौत्रामण्यामादित्यश्चरुरन्ते चेति । यत्र चेत् अदित्यै मह्ष्या इति चरुर्न लभ्यते वाक्योपलक्षणार्थतया । अथ श्वोभूते मह्ष्यै गृहान्परेत्यादित्यं चरुं निर्वपतीति । अयमेवाथा ब्राह्मण आदित्योदितिरिति पृथगङ्गसस्तुत्यादित्योदितिरिति च व्यपदेशात्पृथक् ॥ १८३ ॥

तन्त्रत्वे प्राप्त आह—

समानबर्हिषी वा कालकर्मैकत्वात् ॥ १८४ ॥

समानतन्त्रे भवतः । कुतः । कालकर्मैकत्वात् । नात्र कालो

भेदको न च कर्मभेद इति । अतः समानतन्त्रे भवति इति ॥ १८४ ॥

१महाहविरुदवसाय निमर्थ्य ॥ १८५ ॥

कर्त्तव्यमिति वाक्यशेषः । उदवसायेष्ट्या तेन यजत इति वचनात् । एतेनेति पर्वणा पर्वव्युपदेशाश्च महाहविषयः ॥ १८५ ॥

पूर्वेद्युर्वा ॥ १८६ ॥

न चैतदेवम् । पूर्वेद्युरेवोदवसानमयने कर्त्तव्ये । किं कारणम् । अनीकवत्यादि हि प्रैयम्बकान्तं साकमेधाख्यमेकं पर्वेति । तथोच्यते उदवसायैव ह्येतेन यजत इति । तस्मात्पूर्वेद्युरेव२ ॥ १८६ ॥

३निर्लेभ्योधिकान्यैन्द्राग्नो माहेन्द्रश्चरुर्वैश्वकर्मण एककपालः ॥ १८७ ॥

निर्लेभ्यः पञ्चभ्योधिकान्यैन्द्राग्नादीनि भवन्ति ॥ १८७ ॥

उत्तरवेद्यग्निप्रणयनमन्थनपृषदाज्यं च वरुणप्रघासवत् ॥ १८८ ॥

उत्तरवेद्यग्निप्रणयनपृषदाज्यानि वरुणप्रघासवदिति युक्तम् । मन्थनं तु तत्रापि वैश्वदेविकं नोदकेनेहापि । तत्किमिति वरुणप्रघासवदित्युच्यते । उभयत्राधिकहविः सम्बन्धविधानार्थतयेत्यदोषः । अन्तरायेपि ह्यधिकानां मन्थनं यथा स्यादिति ॥ १८८ ॥

---

१ अथ महाहविराह—

२ अस्मिन्पक्षे केचिदेवमाहुः—समारोह्योदवसाय गार्हपत्यं निमथ्यं साकमेधार्थमेव साधारणावग्नी विहृत्यानीकवतीयादतिप्रणयनम् । ततश्च पित्र्यादिषु पूर्वो मध्याहवनीय पर्योपस्थानादौ तस्य साधारणत्वात् । अयमपि पक्षो युक्ततर इव दृश्यते । अन्ते ऽग्न्योः समारोपविधानात् । 'अग्नी समारोह्य' इति ।

३ अथ महाहविषि हवींष्याह—

ऋषभो दक्षिणा ॥ १८९ ॥

पितृयज्ञ उपांशु चरणम् ॥ १९० ॥

पितृयज्ञ इति कर्मणो नामधेयम् । पितृसम्बद्धो यज्ञः । पितरो वै न आसंस्तस्मात्पितृयज्ञो नामेति । तत्रोपांशु चरणशब्दात्सर्वमुपांशु भवति न देवतामात्रम् ॥ १९० ॥

पुरस्तादुपचारः ॥ १९१ ॥

अन्वयादुत्तरोपचारत्वे प्राप्ते यदनियतत्वात् तस्य पुरस्तादुपचारः । अनेन च दिग्विपर्ययो ज्ञायते । पित्र्यत्वात् दक्षिणामुखे कर्मणि प्राची उत्तरावदिति पुरस्तादुपचार इत्युक्तम् ॥ १९१ ॥

ब्रह्मयजमानयोश्च ॥ १९२ ॥

इदमन्वयप्राप्तमेवोच्यते । ब्रह्मयजमानयोश्च पुरस्तादुपचारः ॥ १९२ ॥

पूर्ववद्वा ॥ १९३ ॥

वाशब्दो विकल्पार्थः । पूर्ववच्छब्देन च दिग्विपर्ययवशादपरादिक् गृह्यते । न दक्षिणा । तथाचोपरिष्टाद्वक्ष्यति पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीदिति इत्याधजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीदिति श्रुतेः । तथा हविर्भिश्चरिष्यन्तः प्रतिविपर्यन्तीति । तथा पत्नैर्हविर्भिः प्रचरिष्यन्त इत्याधजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीदिति । अतः पूर्ववच्छब्देनापरादिक्परिगृह्यते ॥ १९३ ॥

अपत्नीकः ॥ १९४ ॥

पत्नीपदैकपदार्थनिवृत्तिरित्येके । यत्पत्न्या कर्तव्यं तदत्र न भवति आज्यावेक्षणादि । पत्नीप्रतिषेधात्प्रतिनिधिः करोतीत्यपरे । पदार्थः प्रधानभूतः कर्त्ता गुणभूतः । पदार्थप्राधान्याच्च कर्त्रन्तरमाक्षिप्यते । तस्मात्प्रतिनिधिना कर्त्तव्यम् । तत्पुनर्विधारयित-

स्यात् । प्रतिनिधिरभावे प्रवर्त्तते । यत्र पुनः शास्त्रतः पर्युदासस्तत्र कथं प्रतिनिधिरभावे प्रवर्त्तते । यं प्रतिनिधीयते स एव पर्युदस्त इति ॥ १९४ ॥

दक्षिणाग्निराहवनीयवत् ॥ १९५ ॥

वत्युपदेशात्स्वकार्यापरित्यागेन दक्षिणाग्निराहवनीयकार्ये विधीयते ॥ १९५ ॥

पूर्वेणाहवनीयं प्रणीताः परिहरत्यर्थवच्च ॥ १९६ ॥

न्यायसूत्रे एव गार्हपत्याहवनीययोरन्तरा गमनप्रतिषेधात् ॥ १९६ ॥

पितृभ्य सोमवद्भ्यः षट्कपालः ॥ १९७ ॥

सोमवद्गुणविशिष्टेभ्य पितृभ्यः षट्कपालो भवति ॥ १९७ ॥

सोमाय वा पितृमते ॥ १९८ ॥

विकल्पेन श्रवणात् ॥ १९८ ॥

पितृभ्यो बर्हिषद्भ्यो धानाः ॥ १९९ ॥

भवन्ति ॥ १९९ ॥

पितृभ्योऽग्निष्वात्तेभ्यो मन्थः ॥ २०० ॥

भवतीति वाक्यशेषः ॥ २०० ॥

चतुर्वा ग्रहणम् ॥ २०१ ॥

पितृभ्यस्त्वात्सकृद्ग्रहणे प्राप्ते अन्वयाच्चतुर्ग्रहणम् ॥ २०१ ॥

गार्हपत्यस्य पुरस्तादवहननपेषणे ॥ २०२ ॥

उत्तरेणान्वाहार्यपचनं दक्षिणातिष्ठन्नवहन्तीति वचनात् ॥२०२॥

दक्षिणार्द्धे कपालोपधानम् ॥ २०३ ॥

दक्षिणार्द्धे गार्हपत्यस्य षट्कपालान्युपदधातीति वचनात् ॥ २०३ ॥

धानाभर्जनम् दक्षिणाग्नौ ॥ २०४ ॥

अन्वाहार्यपचने धानाः कुर्वन्तीति वचनात् ॥ २०४ ॥

श्रपणपेषणविपर्यासेऽपि धर्माः ॥ २०५ ॥

धानानां श्रपणपेषणयोर्विपर्यासः । तस्मिंश्च सति तद्धर्मा न भवन्तीत्याशङ्कानिवृत्त्यर्थं सूत्रम् ॥ २०५ ॥

अभिमृश्यार्धाः पिष्ट्वा निवान्या दुग्धे

सकृन्मथित एकशलाकया [१]मन्थः ॥ २०६ ॥

अभिमर्शनं शृताशृतसविस्यर्थं प्रकृतावुक्तम् । तत्राभिमृशति शृतं वेदानीति च । धानाभिमर्शनं न शक्यते कर्तुमित्यतोऽभिमर्शनं पुरोडाशविषयं द्रष्टव्यम् । अभिमृश्य पुरोडाशमर्धाः धानाः पिष्ट्वा निवान्या दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति ॥ २०६ ॥

अग्रहणं मन्थस्य ततोऽर्द्धाः पि;

पन्तीति श्रुतेः ॥ २०७ ॥

अथपितृभ्यो बर्हिषद्भ्योऽन्वाहार्यपचने धानाः कुर्वन्ति ततोऽर्धाः पिंषन्तीति श्रुतत्वात् ॥ २०७ ॥

ग्रहणं वा चोदितत्वात् ॥ २०८ ॥

वा शब्दः पक्षव्यावृत्तौ । ग्रहणं वा मन्थस्य भवति । चोद्यते हि अथ पितृभ्योऽग्निष्वात्तेभ्यो निवान्यायै दुग्धे सकृदुप-

१ मन्थ भृष्टयवपिष्टाः सक्तव उच्यन्ते ।

मथित एकशलाकया मन्थो भवतीति । चोदितत्वात् अवहननमथ-
नयोः सहसंयोगात् ॥ २०८ ॥

दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं तन्मध्ये वेदिं करोत्यवान्तरादिक्-स्रक्तिमाप्त्यान्ते ॥ २०९ ॥

दक्षिणाग्नेर्दक्षिणत उदग्द्वारं परिवृतमध्ये वेदिं करोति अवान्तरदिक्स्रक्तिम् । दिक्स्रक्तिर्हि चतुरस्रं पित्र्ये कर्मणि स्मर्यते । अत उच्यते अवान्तरदिक् स्रक्तिमिति ॥ २०९ ॥

दक्षिणाग्निं मध्येऽस्याः करोति ॥ २१० ॥

ततोऽन्वाहार्यश्रपणम् । मध्यशब्दो गर्भवाची ॥ २१० ॥

प्रणीतानुहरणं ब्रह्मयजमानौ चानुगच्छतः ॥ २११ ॥

न्यायसूत्रमेतत् । अतोऽन्यत्राप्यग्निप्रणयने प्रणीतानुहरणादि भवत्येव । वैकृतावसरे प्राकृतानुवृत्त्यर्थमिदमुच्यते ॥ २११ ॥

स्फ्यादानादि करोति ॥ २१२ ॥

यज्ञोपवीत्याज्यग्रहणे ॥ २१३ ॥

पित्र्यत्वात्प्राचीनावीतिप्राप्ताविदमुच्यते ॥ २१३ ॥

द्विर्वोपभृति ॥ २१४ ॥

ग्रहीतव्यम् । द्विरुपभृति गृह्णीयादिति विधाय प्रतिप्रसव उच्यते । तद्वदेवैव कृत्वा उपभृति गृह्णीयादिति । अतो विकल्प ॥२१४॥

प्रागग्रन्थि बर्हिः ॥ २१५ ॥

कर्त्तव्यमिति वाक्यशेषः ॥ २१५ ॥

बर्हिर्विस्र॒ꣳस्य यूनं चाग्रे गृहीत्वा त्रिस्तृणन्नग्निं पर्येति ॥ २१६ ॥

बर्हिर्विस्रꣳस्य यूनं चोभयमग्रे गृहीत्वा वेदिं स्तृणन् त्रिः पर्येति । तया च स्तरणं कर्त्तव्यम् यथोत्तरतोऽपवर्गो भवति ॥ २१६ ॥

प्रस्तरमात्रꣳ शिष्ट्वा तावत्प्रतिपर्येति ॥ २१७ ॥

प्रस्तरमात्रं परिशिष्य त्रिरेव पर्येति ॥ २१७ ॥

तꣳ स्तृणात्यविधृतिम् ॥ २१८ ॥

तमिति प्रस्तरनिर्देशः ॥ २१८ ॥

प्राक्सꣳस्थꣳ हविरासादनम् ॥ २१९ ॥

अपरोक्तमिति प्राप्तौ दिग्विपर्ययप्रसक्तये प्राक्सꣳस्थतोच्यते ॥ २१९ ॥

सामिधेनी प्रैषाद्याज्यभागाभ्यां यज्ञोपवीतिनः सर्वे ॥ २२० ॥

भवन्तीति वाक्यशेषः ॥ २२० ॥

पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत् ॥ २२१ ॥

यदि पुरस्तादुपविष्टो नोचेत् स्थितावेवेति ॥ २२१ ॥

आश्राव्य सीद होतरित्येव ब्रूयात् ॥ २२२ ॥

पयस्कारकरणाच्च होतृवरणम् । पितृयज्ञे न होतारं वृणीते नार्षेयमिति वचनात् ॥ २२२ ॥

अपबर्हिषः प्रयाजा अनुयाजाश्च ॥ २२३ ॥

प्रजा वै बर्हिः प्रजाः पितृषु दध्यादिति निषेधात् ॥ २२३ ॥

## असमानयनं वा बर्हिः संयोगात् ॥ २२४ ॥

समानयनं चात्र न भवति। बर्हिः संयोगात्। चतुर्थे प्रयाजे समानयति बर्हिषीति। वा समानयनं भवति। चतुर्थसंयोगात्। चतुर्थे प्रयाजे समानयतीति। बर्हिषीत्यनुवाद एव। बर्हिः प्रयाजस्य चतुर्थत्वात्। तथान्यत्रापि चतुर्थे चतुर्थे समानयतीत्युक्तम् ॥ २२४ ॥

## प्रत्यगतीत्य जुहोति ॥ २२५ ॥

एवमेव हि प्रयाजेषु श्रूयते। प्रसृतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह समिधो यजेति। सोपबर्हिषश्चतुरः प्रयाजान्यजति। तथानुयाजेष्वपि स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह देवान्यजेति सोपबर्हिषौ द्वावनुयाजौ जयति। एवं चोभयत्र चोदकानुग्रह एव भवति। प्रकृतौ हि दक्षिणां दिशं गत्वा होमः कृत इहापि दिग्विपर्ययेण प्रतीच्येव दक्षिणेति। प्रधाने तु चोदकप्राप्तस्य प्रत्यग्गमनस्य प्रत्यक्षः प्रतिषेधः। प्रत्यनक्त्यवदानानि नातिक्रामतीति ॥ २२५ ॥

## हविर्भिश्चरिष्यन्तः प्रतिविपर्यन्ति ॥ २२६ ॥

प्रतिपद्प्रयोगाद्यादि सामिधेनिप्रैषादादौ विपर्ययकृतः। अथ पश्चादुपविष्टो ततो व्यवस्थितावेति ॥ २२६ ॥

## सर्वेभ्योऽवद्यति यथा पूर्वं सोमवद्भ्यो मध्यास्सकृत्सकृत्सहावदधाति ॥ २२७ ॥

एवं हि श्रूयते। स उपस्तृणीत आज्यमथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधातीति ॥ २२७ ॥

## द्विरभिघारणमनतिक्रमणं च ॥ २२८ ॥

वाचनिकम् ॥ २२८ ॥

सोमयज्ञ्य एवायं प्रकारो माभूदित्यत आह—

सोमाय वा पितृमत इति ॥ २२९ ॥

एवं बर्हिषद्भ्य उत्तरतो धानामन्थपुरोडाशानाम् ॥ २३० ॥

एवं शब्देन सर्वमतिदिश्यते ॥ २३० ॥

अग्निष्वात्तेभ्यो दक्षिणतो मन्थपुरोडाशधानानाम् ॥ २३१ ॥

अत्रैवं शब्दोनुवर्त्तते ॥ २३१ ॥

पुरस्तादग्नये कव्यवाहनाय यथापूर्वं स स्विष्टकृत् ॥ २३२ ॥

कव्यवाहनगुणविधानेन गुणान्तरस्य निवृत्तिर्मा भूदिति स स्विष्टकृदित्युच्यते । अस्तु तथेति चेत् । नादृष्टार्थत्वात् । हविरासादनप्रदेशविधानं शाखान्तरात् । अत्र सोमयागे धानामन्थयोरवदानग्रहणं तद्गुणमात्रं न हि तयोस्तत्र देवता सम्बन्धः । अवदानमात्रश्रवणात् । उत्पत्तौ हि षट्कपालादयः सोमयागउत्पन्नाः । तेन धानानां मन्थस्य च न समुच्चयः शक्यते वक्तुम् । न हि विकल्पो न वैपरीत्येन बाध्यबाधकभावः । एवमेव गुणभावेन श्रवणमिति । प्रयोजनं तद्ग्रहणे यागस्यानावृत्तिरिति । एवं बर्हिषदां अग्निष्वात्तयागे च ॥ २३२ ॥

ओं स्वधेत्यस्तु स्वधेति वा श्रुतप्रत्याश्रुते स्वधा नम इति वषट्कारः ॥ २३३ ॥

एतच्च प्रधानेषु कव्यवाहने च विकल्पेन श्रूयते । एनैर्हविर्भिः प्रचरिष्यते इति प्रक्रम्य तदुपाधायवन्त्यो स्वधेत्यस्तु स्वधेति प्रत्याश्रावयति स्वधा नम इति वषट्कार इत्याह । तस्माच्च सर्वत्रैतत् ॥ २३३ ॥

मन्थमुपहूय होताध्वर्युर्ब्रह्माग्नीदवघ्रायं निदधाति ॥ २३४ ॥

एवमेव हि श्रूयते । तदेते प्रयच्छन्तीति नोपनिवद्धं सामर्थ्यपरिप्राप्तत्वात् ॥ २३४ ॥

प्राशित्रमवदायेडां वा सर्वे प्राश्नन्ति वा ॥२३५॥

प्राशित्रेडादि मन्थोपहवेन सह विकल्प्यते । इडां च सर्वे प्राश्नन्ति वा । अवजिघ्रन्ति वा। एवमेव हि श्रूयते । यथात्वेवेतरस्य यज्ञस्येडाप्राशित्रे समवद्यन्त्येवमेवैतस्यापि समवद्येयुस्तामुपह्-यावैवजिघ्रन्ति न प्राश्नन्ति इति प्रतिषिध्य प्रति प्रसवः प्राशितव्यं त्वेव वयं मन्यामह इति ॥ २३५ ॥

वेदिं त्रिः परिषिञ्चत्युदपात्रेणाध्वर्युर्यजमानो वा ॥ २३६ ॥

वेति विकल्पः ॥ २३६ ॥

स्रक्तिषु पित्र्यवनेजनं परिषिच्य परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् ॥ २३७ ॥

स्रक्तिषु कोणेषु पितृसम्बद्धमवनेजनम् । पूर्ववदित्यसाववनेनिक्ष्वेति उत्तरापरस्यां स्रक्त्यां प्रथमम । तच्च परिषिच्य परिषिच्य क्रियते ॥ २३७ ॥

सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान्ददात्यसावेतत्त इति ॥ २३८ ॥

सव्ये पाणौ कृत्वा सर्वेभ्यो हविर्भ्यः समवदाय येषु प्रदेशेष्ववनेजनं कृतं तत्र पिण्डान्ददात्यसावेतत्त इत्यनेन मन्त्रेण ॥ २३८ ॥

उत्तरपूर्वस्यां पाणी निमृष्टे ऽत्र पितर इति ॥२३९॥

उत्तरपूर्वस्यां स्रक्त्यां पाणिनिमार्जनं करोत्यत्र पितर इत्यनेन मन्त्रेण ॥ २३९ ॥

यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोक्षन्नमीमद-न्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्याम् ॥ २४० ॥

ते सर्व एव यज्ञोपवीतिनो भूत्वेति श्रुतत्वात् । उदङ्ङ्गारत्वात् परिवृतस्य उदञ्च इत्यवाच्यम् । प्रासत्वादेव पृषतोनपलोकनार्थमुच्यते । अथ वानुपस्थानसम्बन्धः । उदञ्च उपतिष्ठन्त इति । द्वाभ्यामिति न वक्तव्यं परादिना पूर्वान्तप्राप्तेः । वक्तव्यं वा प्रकरणाभावात् । प्रकरणस्थानां हि स न्यायः ॥ २४० ॥

मनोन्वाह्वामह इति गार्हपत्यं तिसृभिः ॥२४१॥

उपतिष्ठन्त इत्यनुवर्त्तते ॥ २४१ ॥

प्राचीनावीती प्रविश्यामीमदन्तेति दाता जपति ॥ २४२ ॥

अथ यतरो ददाति स पुनः प्राचीनावीती भूत्वाभिप्रपद्य जपतीति श्रुतत्वात् । दातुः प्राचीनावीतिग्रहणे न सर्वे प्राचीनावीतिनो भवन्ति । येनोपरिष्टाद्यज्ञोपवीति विधानम् । ते सर्व एव यज्ञोपवीतिनो भूत्वानुयाजाभ्यां प्रचरिष्यन्त इति ॥ २४२ ॥

अवनेज्य पूर्ववत्प्रदक्षिणम् ॥ २४३ ॥

परिषेकः प्रदक्षिणम् ॥ २४३ ॥

नीवीं विसृज्यास्य नमो व इत्यञ्जलिं करोति षड्ढा नमस्कारान् ॥ २४४ ॥

प्रत्यञ्जलिकरणं षट्कृत्वो नमस्करोतीति वचनात् ॥ २४४ ॥

गृहान्नः पितरो दत्तेति च ॥ २४५ ॥

जपति ॥ २४५ ॥

ब्रह्मामन्त्रणादि प्राक्स्रुग्व्यूहनात्प्रया-

जवत् ॥ २४६ ॥

ब्रह्मन्प्रस्थास्यामीति ब्रह्मामन्त्रणम् । तस्य यदादौ तदादि । उल्मुकसमासादित्यर्थः । उल्मुकसमासस्य ह्यनुयाजाङ्गत्वात् । प्रयाजवदिति च यज्ञोपवीतं देशगमनं च ब्रह्मयजमानयोर्वर्तिनातिदिश्यते प्राक्स्रुग्व्यूहनात् ॥ २४६ ॥

यज्ञोपवीतिविपर्ययम् ॥ २४७ ॥

स्रुग्व्यूहनादारभ्य पित्र्यस्यास्कर्मणः प्राचीनावीतित्वमेव भवति । न देशविपर्ययः अविहितत्वात् ॥ २४७ ॥

न प्रस्तरमादत्ते ॥ २४८ ॥

नाध्वर्युः प्रस्तरं समुल्लुम्पतीति ॥ २४८ ॥

अनुप्रहरेत्युक्ते न किञ्चनानुप्रहरति ॥ २४९ ॥

अथाग्नीदाहानुप्रहरेति स न किञ्चनानुप्रहरतीति वचनात् ॥ २४९ ॥

तूष्णीमात्मानं सं स्पृशति ॥ २५० ॥

उपस्पृश्य परिधीन्नानुप्रहरति ॥ २५१ ॥

उपस्पर्शनं च केचिन्मन्त्रेण कुर्वन्ति तत्पुनर्न, वचनाभावात् । अपूर्वत्वाच्च ॥ २५१ ॥

शंय्वन्तं भवति ॥ २५२ ॥

पितृयज्ञकर्म शंय्वन्तं भवतीति वचनात् ॥ २५२ ॥

बर्हिः परिध्यग्नौ प्रास्यति ॥ २५३ ॥

अथैतद्बर्हिरनुसमस्यति परिधींश्चेति श्रवणात् ॥ २५३ ॥

हविरुच्छिष्टं च ॥ २५४ ॥

अनुसमस्यति ॥ २५४ ॥

अप्सु प्राश्यं वा ॥ २५५ ॥

अप्सु प्राश्यं वेति विकल्पः । अस्य चागन्तुत्वादन्ते निवेशः ॥ २५५ ॥

त्रैयम्बकान्निर्वपति रौद्रानेककपालान् यावन्तो यजमानगृह्या एकाधिकान् ॥ २५६ ॥

त्रैयम्बकानिति नामधेयम् । तस्मात्त्रैयम्बकानामेति । रुद्रदेवत्यान् एककपालान् यावन्तो यजमानगृह्या एकाधिकान् । गृह्यशब्दोऽत्र प्रजाविषयः । कल्पमपावतुल्यश्रुतित्वात् । एकातिरिक्ता भवन्त्येकाधिकान् ॥ २५६ ॥

चतुरो वा ॥ २५७ ॥

चतुःसंख्या वा द्विप्रजैकप्रजानाम् ॥ २५७ ॥

उदङ्मुखः सर्वम् ॥ २५८ ॥

उदङ्ङासीन एतान् गृह्णातीत्युक्त्या अथोक्तम् स तत एवोपोत्थायोदङ्ङभिप्रव्रजन्नुदीच्यौ दृषदुपले उपदधात्युत्तरार्धे गार्हपत्यस्य कपालान्युपदधातीति ॥ २५८ ॥

देशांश्च ॥ २५९ ॥

आरादुपरचतुष्पथश्मशानवृक्षांश्च यावीन् उदङ्प्रतिपद्यते ॥२५९॥

जुहोतयो वषट्कारान् ॥ २६० ॥

जुहोतय इति कुत इमन्ते स्वाहाकाराम्नानात् । अन्वाहार्यपचनादुल्मुकमादायोदङ्पर्येत्य जुहोतीति च श्रवणात् । तथा पलाशस्य पलाशेन मध्यमेन जुहोतीति श्रवणात् । चतुष्पथे जुहोतीति च । अतो जुहोतय इत्युक्तम । यद्येवमवषट्कारानिति किमुच्यते । यत्र्यम्बकैरयजन्तेति च यजत्याशङ्कानिवृत्त्यर्थम् । जुहोति शब्दश्च वषट्काराधिकेऽपि दृश्यते । उभयतो यूपं प्रत्यङ्मुखो जुहुत इति । होममन्त्रश्च । अस्तुनयेति चेत् । न, तत्राहुत्य विधानात् । तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयंत इति । तस्मादवषट्कारानित्युच्यते ॥ २६० ॥

अक्तान्वा ॥ २६१ ॥

ते वा अक्ताः स्युरित्युक्त्वा त उ वा अनक्ता एव स्युरिति विकल्पः ॥ २६१ ॥

पात्र्यां कृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः ॥ २६२ ॥

सांन्सार्द्धं पात्र्यां समुद्वास्येति वचनात् । एकपात्र्यां दक्षिणाग्न्युल्मुकम् । आदानस्य दृष्टार्थत्वात् । तत्रैव होमो भवति । यद्येवं चतुष्पथे जुहोतीति कथम् । तत्रैवोल्मुक स्थापयित्वा हूयमाने चतुष्पथे हुतमेव भवति । द्व्यधिकरणा हि क्रियेयं श्रूयत इति । पलाशपत्राणां यन्मध्यमं तत्पलाशपत्रमध्यमम् । यद्वा पलाशपत्रं च तन्मध्यमं चेति पलाशपत्रमध्यमं तेन होमः ॥ २६२ ॥

सर्वेषामवदानं सकृत्सकृदतिरिक्तवर्जम् ॥ २६३ ॥

एककपालानां वाचनिकं सकृदवदानम् । स सर्वेषामेवावद्यत्येकस्यैव नावद्यति य एषोऽतिरिक्तो भवतीत्यतिरिक्तवर्जमित्युक्तम् ॥ २६३ ॥

अक्तेषु मिश्रणम् ॥ २६४ ॥

शष्कलीति सूत्रशेषः ॥ २६४ ॥

एष त इति जुहोति ॥ २६५ ॥

अतिरिक्तमाखूत्कर उपकिरत्येष त इति ॥२६६॥

उपकिरणं च तिरः करणम् । तिर इव वै गर्भास्तिर इवैत-द्यदुपकीर्णं इति। आखूत्करस्य केचिदाहवनीयधर्मान् कुर्वन्ति। तथा-युक्तं होमश्रवणात् । उपकिरणं त्वत्र विहितमिति ॥ २६६ ॥

आगम्याव रुद्र मदीमहीति जपन्ति ॥ २६७ ॥

अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना-स्त्र्यम्बकमिति ॥ २६८ ॥

बहुवचनोपदेशात्सर्वेषां परिगमनम् । पितृवदिति वचना-दपसव्यम् ॥ २६८ ॥

देववच्चेति प्रदक्षिणम् ॥ २६९ ॥

एतेनैव दक्षिणानाघ्नानाः ॥ २७० ॥

एतेनैव मन्त्रेण दक्षिणानाघ्नानाः परियन्ति ॥ २७० ॥

कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगका-मा वा ॥ २७१ ॥

उत्तरेण मन्त्रेणोभयत्र देववत्पितृवच्च पतिं कामयमानाः । सौभाग्यं चेति ॥ २७१ ॥

रौद्रान्यजमानोऽञ्जलिं नोदस्यत्यगोः प्रापणम् ॥ २७२ ॥

रौद्राः पुरोडाशा,' तान्रौद्रान् पुरोडाशान् यजमानोऽञ्जलिनोत्क्षिपति । अग्नेः प्रापणम् । यथा गौर्नोदाप्नुयादिति ॥ २७२ ॥

पततः प्रतिगृह्णात्यैनानशक्य उपस्पर्शनम् ॥२७३॥

अशक्ये ग्रहणे पतितानामुपस्पर्शनम् ॥ २७३ ॥

मूतयोः कृत्वा वेणुयष्ट्यां कुपे वा सज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासजत्येतत्त इति ॥ २७४ ॥

१मूतयो कृत्वा वेणुयष्ट्या वा २कुपे वासज्योभयत स्थाण्वादीनामन्यतमस्मिन्नुत्क्षेपणवद्गोः प्रापण एतत्त इत्यनेन मन्त्रेणा सजति । आसञ्जन चावलगनम् । आसजत्यवलगयति ॥ १७४ ॥

कृत्तिवासा इति च ॥ २७५ ॥

मन्त्रमात्रोपदेशात् क्रियाया अनिर्दिष्टत्वात्तत्सिद्धलीकरण मात्र क्रियात्र द्रष्टव्या । तथानिष्वापयत्येवैनमेतत्स्वपन्न हि कश्चन हिनस्तीति वाक्यशेष ॥ २७५ ॥

अनपेक्षमेत्योपस्पृशन्त्यपः ॥ २७६ ॥

पृष्ठतोनवलोकयन्त प्रत्यापामुपस्पर्शन कुर्वन्ति बहुवचनोपदेशात् । अत्र च वाशब्दोयदर्थं ।अग्निपरिगमनादि यर्मोपवर्गसमिदाधानान्ते कर्त्तव्यम् । आगन्तुत्वात् । तथा च वाक्यशेष । ते प्रतीक्षं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति । अनपेक्षमेत्याप उपस्पृशन्नित्यतो रुद्रियेयौव वा एतद्चारिषुरिति भूतकालनिर्देशात् निवृत्त रुद्रिय कर्मेति गम्यते । अथ वा पाठानु

---

१ यत्र तृणमय आवपने धान्यं बध्यते तन्मूतम् ।

२ वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्याय. कुप ।

पूर्वा अथ यद् मदीमहीति जयसमनन्तरं क्रियेत ततश्चाचारिपुरिस्तेतदनुपपन्नार्थं स्यादिति ॥ २७६ ॥

## शुनासीरीयमतः ॥ २७७ ॥

स यत्रैव सकामैधैर्यजते तच्छुनासीर्येण यजेतेति वचनात् ॥ २७७ ॥

## यदेच्छेत् ॥ २७८ ॥

यदा वा इच्छा भवति । तस्माद्यदैव कदाचैतेन यजेतेति श्रुतेः । उत्तरेषु वा ज्योत्स्नेष्विति च शाखान्तरात् ॥ २७८ ॥

## पौर्णमासधर्मा बर्हिर्वर्जम् ॥ २७९ ॥

अथैतान्येव पञ्च हवींषि भवन्तीत्यनेन प्राप्तानां निवृत्त्यर्थमुच्यते । पौर्णमासधर्मा बर्हिर्वर्जमिति । तच्चैतच्छाखान्तरवचनाद्द्रष्टव्यम् । अपरे तु वर्णयन्ति तस्याग्नेःपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यम् मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा एका समिष्टयजुरिति । उत्तरवेदिपृषदाज्ययोः प्राप्त्यभावादनुवादः । एवं चेह निषिद्धानां वैश्वानरः मरुतादीनां प्राप्तिर्भवत्येव । सूत्रकारेण च बर्हिर्वर्जं सर्वेषां निषेधः कृतः । तच्च शाखान्तरवचनादेवोपपद्यते ॥ २७९ ॥

## नित्येभ्योधिकानि शुनासीराभ्यां द्वादशकपालः ॥ २८० ॥

इन्द्राय वा शुनासीरायेति देवताविकल्पः ॥ २८० ॥

## वायव्यं पयः ॥ २८१ ॥

अथ वायव्यं पयो भवतीति वचनात् ॥ २८१ ॥

## लौकिकम् ॥ २८२ ॥

तच लौकिकं भवति धर्मरहितम् ॥ २८२ ॥

इत एतत्—

ओष्टारौ वा ॥ २८९ ॥

घोढारौ महान्तौ बलीवर्दौ वेति विकल्पः ॥ २८९ ॥

श्वेतोऽश्वः सौर्यस्य ॥ २९० ॥

दक्षिणा । सौर्ये महत्वात् तस्याश्वः श्वेतो दक्षिणेति ॥ २९० ॥

अभावो गौः ॥ २९१ ॥

अश्वाभावे गौर्भवति । यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः स्यादिति ॥ २९१ ॥

साकमेधसमनन्तरमुत्तरेषु वा ज्योत्स्नेष्विति शुनासीरीयमुक्तम् । अन्यदपि पक्षान्तरमस्ति तदर्थमाह—

संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीये-
णेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत
पौर्णमास्याम् ॥ २९२ ॥

यो नाम चातुर्मास्ययागैरहोरात्रद्वारेण संवत्सरं व्याप्तुमिच्छति स संवत्सरेप्सुः । तथा चोक्तम् । तद्वैषं रात्रीरापिपयिषन्तीति । तस्य संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयम् । फाल्गुनापौर्णमास्याः पूर्वं यदुद्दृष्टं चन्द्रमसः शास्त्रतः प्रथममुद्दर्शनं तत्फाल्गुन्युद्दृष्टम् । फाल्गुनापरतःप्रतिपदित्यर्थः । तत्र शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा पौर्णमास्यां यजेत । सोमोऽग्निष्टोमः । पशुरग्नीषोमीयः । इष्टिराग्नेयीति विकल्पः ॥ २९२ ॥

आवृत्तिरनीजानस्य ॥ २९३ ॥

सोमे पभिरिष्टिभिरनीजानस्यावृत्तिर्भवति । एतदुक्तं भवति । उत्सर्गपक्ष एवैतैर्यजनेति ॥ २९३ ॥

आवृत्तौ धर्मविवेचनायाह—

फाल्गुन्युपवसथे शुनासीरीयं प्रातर्वै-

श्वदेवम् ॥ २९४ ॥

फाल्गुन्या उपवसथ. फाल्गुन्युपवसथ.। उपवसथशब्देन प्राक्कालीनमहरुच्यते। चतुर्दशीति पतदुक्तं भवति। तत्र शुनासीरीयं प्रातः पौर्णमास्यां वैश्वदेवमिति ॥ २९४ ॥

सपशुकान्यपि चातुर्मास्यानि सन्ति तदर्थमाह—

सपशुषु पशुतन्त्रं प्राधान्यात् ॥ २९५ ॥

सपशुषु चातुर्मास्येषु पकतन्त्राभ्युपगमन्यायात्पशुतन्त्रमभ्युपेयम्। कुत पतत्। प्राधान्यात्। प्रधानशब्दो महत्त्ववाची, महत्त्वात्पशुतन्त्रस्येत्यर्थ.। न ह्यत्र गुणप्रधानभाव। चातुर्मास्यैर्यजन्तेति यागाविशेषात्। तस्मात्प्रधानशब्दो महत्त्ववाचकः। महति च तन्त्रे लघुप्रसङ्गेन्तु शक्यते। न लघुनि महदिति ॥ २९५ ॥

पूर्वेद्युर्वैश्वदेवे पाशुकम् ॥ २९६ ॥

कर्म भवतीति। एवमेव ह्यग्नीषोमीये दृष्टम्। उत्तरवेदिश्चात्रा वसतीति। सापि ह्याहवनीयवदङ्गप्रधानार्था। तत्प्रकृतित्वे ह्यत्रापि तथैव भवितव्यम् ॥ २९६ ॥

सद्यो वा ॥ २९७ ॥

वाशब्दः पक्षव्यावृत्तौ। सद्यो वा भवति। न व्र्यहकालतया। सद्यस्त्वं विकृतीनामित्येतदुक्तमेव। यत्तु पूर्वेद्युरुत्तरवेदिस्त्वादनान्तमुक्त स सौमिको विप्रकर्षो न पाशुक इति। पशु पदार्थमात्र च गृह्णाति सद्यस्त्वविधानाच्च सौमिक विप्रकर्षमिति ॥ २९७ ॥

वैश्वदेवः पशुः ॥ २९८ ॥

वैश्वदेवे भवति ॥ २९८ ॥

पशुपुरोडाशमनुहवींऽपि निर्वपति ॥ २९९ ॥

वचनसामर्थ्यात् ॥ २९९ ॥

तेषां स्विष्टकृद् भूयस्त्वात् ॥ ३०० ॥

तेषां हविषां सम्बन्धी यजत्रैव स्विष्टकृद्यागो भवति । भूयस्त्वाद् बहुत्वादित्यर्थः । बहूनां ह्यनुग्रहो युक्तो नैकस्येति ॥ ३०० ॥

यथोक्तमविरुद्धम् ॥ ३०१ ॥

यदविरुद्धं तद्यथोक्तं च कर्तव्यम् । यथाऽश्ववालप्रस्तरस्य प्रसूनता ॥ ३०१ ॥

हृदयशूलान्ते वपनम् ॥ ३०२ ॥

पुरार्धचनसामर्थ्यान्नियोगतः कर्तव्यम् ॥ ३०२ ॥

वरुणप्रघासेषु वारुणः ॥ ३०३ ॥

पशुः ॥ ३०३ ॥

महाहविषि माहेन्द्रः ॥ ३०४ ॥

पशुः ॥ ३०४ ॥

शुनासीराभ्यां चतुर्थः ॥ ३०५ ॥

कृतानुकरणतया प्रतिप्रस्थातुरपि पशुर्मा भूदिति चतुर्थग्रहणम् ॥ ३०५ ॥

पुरस्ताद्वा पर्वणः पर्वणेति वा ॥ ३०६ ॥

पशुर्भवति । महाहविषि माहेन्द्र इति वचनात् । तस्यैव पुरस्तात्पशुरन्ते वा न साकमेधानामिति भेदेन पश्वनुष्ठाने पशुरपि पर्वशब्दवाच्य पर्वेति । अतस्तस्यापि पर्वेदक्षिणेति सम्प्रदाय । तेऽस्यपरे। पशोर्हि स्वदक्षिणापरिप्राप्ते । समानतन्त्रत्वे तु पर्व एव ताद्गिति पर्वदक्षिणैव भवति ॥ ३०६ ॥

भूयस्त्वनुसारेणाचार्येण चातुर्मास्यान्यनुविहितानि इदानीं श्रुतिमन्त्रपाठानुसारेण ज्योतिष्टोम प्राप्त । स प्रोत्सार्य हविर्यज्ञत्रय-सामान्यान्मित्रविन्दानुविधीयते—

मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्य ॥ ३०७ ॥

मित्रविन्देति कर्मणो नामधेयम् । अभिधायकत्वात् । श्रीराष्ट्रमित्रायुष्कामस्य । पर्यायेण च योगसिद्धिः ॥ ३०७ ॥

दशहविः ॥ ३०८ ॥

सैना दशहविषमिष्टिमपश्यत् इति वचनात् । उपकमादेव तत्सिद्धेरवाच्यमेतदिति चेत् । उपहोमेष्वपि मित्रविन्दाशब्दो मा भूदिति दशग्रहणम् ॥ ३०८ ॥

आग्नेयः सौम्यश्चरुर्वारुणो दशकपालश्चरुर्वायवो मैत्रश्चरुरैन्द्र एकादशकपालो बार्हस्पत्यश्चरुः सावित्रो द्वादशकपालोऽष्टाकपालो वा सारस्वतश्चरुः पौष्णश्चरुस्त्वाष्ट्रो दशकपाल एकं प्रदानम् ॥ ३०९ ॥

वचनादेकं प्रदानम् । याज्यानुवाक्ययोश्च । सच देवताभिधानात् ॥ ३०९ ॥

समस्यानुवाचनम् ॥ ३१० ॥

अत्र चाविभक्तिलोपेन समासः । एवं हि पूर्वमभिहितं अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहीति । अमुष्मा इति चतुर्थ्यन्तेनाक्तः । अपि च लुप्तसमासे सति द्वन्द्वे अजाद्यदन्तम् अल्पाच्तरमिति च पूर्वं निपतति । तत्र पाठक्रमो बाध्यते । तस्मादविभक्तिलोपेन समासः ॥ ३१० ॥

यजेति च ॥ ३११ ॥

अविभक्तिलोपेनैव समस्यते ॥ ३११ ॥

प्रैषाश्च ॥ ३१२ ॥

असमासेन भवन्ति । अत्र च प्रैषशब्देन स्विष्टकृन्निगदाभिधानम् । निगदश्चाद्यः स्विष्टकृति दृष्टः । स्विष्टकृति निगदं ब्रूयादिति । निगदः प्रैष इति चानर्थान्तरम् । तस्मात्प्रैषार्थेति सौविष्टकृतनिगदाभिधानम् । प्रैषार्थेति बहुवचनं देवताभेदात् । अपरेऽन्यथा व्याचक्षते । याज्यादौ देवताभिधाने तल्लक्षणया प्रैषशब्देनोच्यते ॥ ३१२ ॥

उत्तरे निगमा यथेष्टं जोषणाश्रुतेः ॥ ३१३ ॥

उत्तरेऽपि यानि सूक्तवाके निगमनानि यथेष्टं कर्तव्यानि । कुत एतत् । जोषणा श्रुते । एवं या इह देवता भवन्ति ताः स्वपस्यस्यसौ हविरजुषन्तेति । इतरथा प्रातिलोम्येन याज्यायामभिधानात् । त्वष्टा रूपाणि दधती सरस्वतीति ॥ ३१३ ॥

अनुलोमा वा चोदना गुणत्वात् ॥ ३१४ ॥

अनुलोमा वा निगमा भवन्ति । न प्रातिलोम्येन । येन सर्वेषैव निगमेष्वपूर्वप्रवृत्तिश्चोदनानुसारतया । तन्मूलत्वात् । इतरथा निगमनान्येव सम्भवतीति । तस्माच्चोदनापाठक्रमस्यैव सर्वत्र गुणभावः ॥ ३१४ ॥

हौत्रस्यप्रत्यभिहितं समुच्यते—

पञ्चदशसामिधेन्यः ॥ ३१५ ॥

भवन्ति ॥ ३१५ ॥

नो गोभिरवसा सरस्वती त्वष्टा रूपाणि स-
मनक्तु यज्ञैरिति ॥ ३१७ ॥

याज्या त्वष्टा रूपाणि ददती सरस्वती पूषा भ-
ग॑सविता मे ददातु बृहस्पतिर्ददादिन्द्रो बलंमे
मित्रावरुणः सोमो ऽग्निरिति ॥ ३१८ ॥

हुत्वा स्थाल्याः स्रुवेणोपहुजोत्यग्निरन्नादो-
ऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वा-
हा सोमो राजा राजपती राज्यमस्मिन्यज्ञे
मयि दधातु स्वाहा वरुणः सम्राट् सम्रा-
ट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु
स्वाहा मित्रः क्षत्रं क्षत्रपतिः क्षमस्मिन्यज्ञे
मयिदधातु स्वाहेन्द्रो बलं बलपतिर्बलमस्मि-
न्यज्ञे मयि दधातु स्वाहा सविता राष्ट्र॑ रा-
ष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा
पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि द-
धातु स्वाहा सरस्वती पुष्टिं पुष्टिपतिः पुष्टि-
मस्मिन्यज्ञे मयि दधातु स्वाहा त्वष्टा रू-
पाणा॑ रूपकृद्रूपपती रूपेण पशूनस्मिन्यज्ञे
मयि दधातु स्वाहेति ३१९ ॥

एवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ३१९ ॥

विराजौ संयाज्ये ॥ ३२० ॥

संयाज्याशब्देन च स्विष्टकृद्यागस्य याज्यानुवाक्ये भिधी-येते प्रेद्धो अग्न इमो अग्न इति ॥ ३२० ॥

सहस्रवत्यौ वा नू नो रास्व सहस्रवत्तोकवत्पु-
ष्टिवद्वसु द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम्
उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः शं नः
शोचा मरुद्वृधोऽग्ने सहस्रसातम इति ॥ ३२१ ॥

नूनो रास्व सहस्रवदित्येवमादि ॥ ३२१ ॥

दशदक्षिणा सहस्रं वा ॥ ३२२ ॥

सहस्रं वेति विकल्पः ॥ ३२२ ॥

इति कात्यायनसूत्रे कर्कोपाध्यायविरचिते
पञ्चमोऽध्यायः समाप्तः ।



# षष्ठोऽध्यायः ।

श्रुत्यनुक्रमानुसारिणाऽऽचार्येण चातुर्मास्यान्यनुविहितानि इदानीं श्रुतिमन्त्रपाठावसरे ज्योतिष्टोमस्य तन्त्रस्थं प्रोत्सार्य हविर्यज्ञत्वसामान्यान्मित्रविन्दाऽनुविहिता । हविर्यज्ञत्वसामान्यादेव च इदानीं निरूढपशुबन्धोऽनुविधेयः । हविर्यज्ञत्वसामान्यं च हविर्यज्ञविधो ह वा अन्यः पशुबन्धः सचविधोऽन्य इति श्रुतत्वात् । अस्य च प्राणिसाधनकत्वसामान्यादग्नीषोमीयविध्यन्तग्राहकत्वम् । अग्नीषोमीये हि धर्माणां विशसनादीनां विहितत्वात् । इह चाविधानात् । तथा च विशसनादीनग्नीषोमीयात्प्राप्ताननुवदति । तस्मादुपांशु संज्ञप्तं ब्रूयाच्छेतान्नुमुहूर्त्तमिति । तथा च तत एव यूपपरिप्राप्तौ सत्यां जात्यन्तरविधानम् तस्मात्पालाशमेव यूपं कुर्वीतेति । तेन निरूढपशुबन्धमूरीकृत्य अग्नीषोमीयधर्मानुकथनं क्रियते । अग्नीषोमीयधर्माणां हि सौमिकैर्धर्मैरत्यन्तव्यतिषङ्गादिह धर्मानुकथनं युक्तरूपम् । तत्रातिदेशेन धर्मान्वक्ष्यति । अत्र च कैश्चित्सौत्रामणी पशुषु निरूढप्रकृतित्वमिष्यते । तत्पुनर्नातीव युक्तरूपम् । येन न हि निरूढः प्रकृतिभूतः । तेनापि ह्यग्नीषोमीयादेव धर्मा गृहीताः । न च भिक्षुको भिक्षुकाद्याचत इति । अतस्तेऽप्यग्नीषोमीयविध्यन्तग्राहका एव । न हि तेष्वानुमानिकवचनापवादत्वेन प्रत्यक्षशिष्टं वचनं नाम वा विद्यते । यथा वैश्वदेवधर्माश्चातुर्मास्येषु सोमाद्यावभृथ इति च । तस्मादग्नीषोमीयप्रकृतित्वमेव तेषामपीति । अग्नीषोमीयप्रकृतित्वे च सति आरम्भणीया न भवति । आरम्भनिमित्ता हि सा । न चाग्नीषोमीयस्यारम्भोऽस्ति । तेन पैतृकारिकवन्यायेन अग्नीषोमीयाभावादिहापीति न भवति । ननु च दर्शपूर्णमासप्रकृतित्वे चारम्भणीया प्राप्ता, तत्र पृथगारम्भाभावान्न क्रियते । निरूढादिषु तु पृथगारम्भस्य विद्यमानत्वादस्त्वेवारम्भणीयेति । यथान्वाहार्यो दर्शपौर्णमासप्रकृतित्वेनाग्नीषोमीये प्राप्तः सौमिक्या दक्षिणया निवर्त्तते । अतस्तद्विकारेषु यत्र दक्षिणास्थानं नास्ति तत्र प्रवर्त्तते, एवमारम्भणी-

यापीति। नैनद्युक्तम्। अग्नीषोमीये हि आनत्यशेन प्रवृत्तो-वाह्यो गवा शतेन निरस्यते। तद्विकारेषु तु वर्त्तमान केन निवार्यते। आरम्भणीया पुनर्नैकेन चिन्निवर्त्यते। आरम्भनिमित्तत्वात्। तद्भावाद्याग्नीषोमीयस्यानङ्गमारम्भणीया। अतस्तद्विकारेष्वप्रवृत्तिरिष्यते। इत्यलमतिप्रसङ्गेन, प्रकृतमिदानीमभिधीयते।

## पश्विज्या त्सवत्सरे संवत्सरे प्रावृषि ॥ १ ॥

कर्त्तव्येति सूत्रशेष। पशुना इज्या पशिवज्या। सा च प्रतिसर सर कर्त्तव्येति। तेन सवत्सर सवत्सर इत्युक्तम। नित्यत्व हि परिभाषायामुक्तमेव। दाक्षायणपशुषु प्रवृत्तिरिति। अपि चाह। त वै सवत्सरो नानीजानोतीयादिति। सा च प्रावृषि। प्रावृट्छब्देन वर्षा उच्यते। तेन सुयवसे यजेतेति श्रुते। सुयवसाश्च वर्षा १ ॥ १ ॥

## आवृत्तिमुखयोर्वा ॥ २ ॥

पश्विज्या भवति, वा प्रावृषि। आवृत्तिशब्देन उदगयनदक्षिणायने उच्यते। तयोर्मुखमावृत्तिमुखम। प्रथममहस्तत्र कर्त्तव्यम्। न पौर्णमास्यमावास्ये अपक्ष्येते। सवत्सरे सवत्सरे इति चोक्तत्वादेकत्रक्रिया। नोभयोरपीति ॥ २ ॥

## गृहेषु ॥ ३ ॥

देवयजनागारेऽग्नीषोमीयस्य इष्टत्वादिहापि तस्मा भूदिति गृहेष्वित्युच्यत। तेन गृहेषु यजेतेति वचनात्। अपरे त्वयमनुवाद इति मन्यन्ते। न ह्युद्वसानमग्नीषोमीयार्थम्। ज्योतिष्टोमप्रकरणे विधानात्। तादर्थ्याद्य प्रासङ्गिकाग्नीषोमीयस्य। एव च सति न्यायसूत्रमेवैतद्गृहेष्विति। यद्येव समारोपोपि प्रकरणसमर्थो

---

१ सचर्तु सर्वत्र चान्द्रमानेन गृहीतव्य तदभावे सौर। तथा च स्मरणम्—"श्रौतस्मार्तक्रिया सर्वा कुर्याच्चान्द्रेषु चर्तुषु, तदलाभ तु सौरेषु" इति।

त्वात् ज्योतिष्टोमार्थ एव । प्रासङ्गिकोऽग्नीषोमीये इति पश्वन्तरेषु न प्रवर्त्तते । नैतदेवम् । समारोपो ह्यग्निसंस्कारः । अप्रधाङ्गप्रधानार्थता । यदाहवनीये जुहोतीति वचनात् । तस्मात्प्रवर्त्तत एव समारोपः । अत एव चोत्तरवेदिसम्भाराश्च प्रवर्त्तन्ते ॥ ३ ॥

यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति ॥ ४ ॥

स यदि स्रुचा जुहोति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति, यदि स्रुवेण स्रुवेणैवोपहत्य जुहोतीति वचनाद्विकल्पः । इयं च यूपाहुतिरग्नीषोमीये यूपार्था इष्टा[1] । यूपं प्रक्षपन्नैष्णव्यर्चा जुहोतीति । तत्र च प्रहाणा कृताकृतप्रत्यवेक्षया कृतमिहापि प्रक्षयरणोत्तरकालतैव गम्यते ॥ ४ ॥

आज्यशेषमादाय सतक्षा गच्छति यूपम् ॥ ५ ॥

यदाज्यं परिशिष्टं भवतीति वचनात् । वक्ष्यत्युपरिष्टात् यूपान्ते वाग्निं मथित्वेति । अतश्च विकल्पोऽयम् ॥ ५ ॥

अभिमृशत्यत्यन्यानिति ॥ ६ ॥

यूपमभिमृशत्यनेन मन्त्रेण ॥ ६ ॥

प्राङ्तिष्ठन्नभिमन्त्रयते वा ॥ ७ ॥

अनेनैव मन्त्रेणेति । स चायं तुल्यशाखत्वाद्विकल्पः ॥ ७ ॥

पालाशं बहुलपर्णमशुष्काग्रमूर्द्ध्वसकलशाखं मध्याग्रोपनतमव्रणम् ॥ ८ ॥

---

१ तेन 'खादिरो वाल्वो यूपो भवति' इत्यत्र न भवति, समार्थत्वात् । यूप च्छेत्स्यता होतव्यमिति च्छेदनार्थो होम, न च खादिरवाल्वयोश्छेदनमस्तीति ।

निरूढे हि श्रूयते । तस्मात्पालाशमेव यूपं कुर्वीतेति । मध्यमोपनतत्वं च निरूढ एव तत्रैव पाठात् । अथ य एव आनतुः परिष्टादुपनतो मध्य इति । अन्यत्रानियमः ॥ ८ ॥

अभावे खदिरबिल्वरौहीतकान् ॥ ९ ॥

पलाशाभावे खदिरादयो भवन्ति ॥ ९ ॥

खदिराभावे सौम इतरान् ॥ १० ॥

ज्योतिष्टोमे खदिराभावे बैल्वान्रौहीतकान्वा कुर्यात्पालाशस्तु निरूढ एवेति सम्प्रदायः । खदिराभावे इतरानिति बहुवचनमुच्चारणार्थम् । यूपव्यक्तिभेदापेक्षं वा ॥ १० ॥

स्रुवेणोपस्पृशति विष्णवे त्वेति ॥ ११ ॥

दृष्टार्थत्वादस्मिन्प्रदेशे च्छेदनं तत्रोपस्पर्शनम् ॥ ११ ॥

ओषध इति कुशतरुणं तिरस्कृत्य स्वधित इति परशुना प्रहरति ॥ १२ ॥

ओषध इत्यनेन मन्त्रेण तृणमन्तर्धाय स्वधित इत्यनेन मन्त्रेण परशुना प्रहरति ॥ १२ ॥

प्रथमशकलं निदधाति ॥ १३ ॥

कार्यार्थम् ॥ १३ ॥

अनक्षस्तम्भं वृश्चति ॥ १४ ॥

यथाक्षस्योपस्तम्भनं स्थाणुर्न भवति तथा छिद्यते ॥ १४ ॥

एकजम् ॥ १५ ॥

एक एव यो जातः ॥ १५ ॥

द्यां मालेखीरिति पतन्तमभिमन्त्रयते ॥ १६ ॥

यूपम् ॥ १६ ॥

स च—

न दक्षिणा पतेत् ॥ १७ ॥

अयं हि त्वेति शोधनम् ॥ १८ ॥

कुत एतत् । मन्त्रलिङ्गात् । अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनायेति ॥ १८ ॥

अभिमन्त्रणशेषो वा विशेषोपदेशात् ॥ १९ ॥

वा शब्दः पक्षव्यावृत्तौ । अयं हि त्वेत्यभिमन्त्रणशेष एव भवति न शोधने । कुत एतत् । विशेषोपदेशात् । तं प्रच्यवमानमनुमन्त्रयते द्यां मा लेखीरिति । मन्त्राणां चाविधायकत्वात् ॥ १९ ॥

अतस्त्वमित्यावृश्चने जुहोति ॥ २० ॥

आवश्चनं चापादानसाधनत्वेन स्थाणुरभिप्रेतः । आवश्चनमभिजुहोतीति श्रुतत्वात् ॥ २० ॥

यूपे वा तत्संस्कारत् ॥ २१ ॥

यूपे वा जुहोति न स्थाणौ । कुत एतत् । तत्संस्कारात् । यूपस्य हि संस्काराभिप्रवृत्तेः ॥ २१ ॥

स्थाणौ श्रुतेश्च ॥ २२ ॥

स्थाणौ वा जुहोति न यूपे । कुत एतत् । श्रुतेः । अथावश्चनमभिजुहोतीति यदाह नेदतो नाष्ट्रा रक्षांस्यनूत्तिष्ठानिति । यूपं छिन्नमनु नेदतो नाष्ट्रा रक्षांसि अनूत्तिष्ठानिति । वज्रो वा आज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षांस्यवबाधत इति श्रुतेः । चशब्दान्मन्त्रवर्णाच्च । अतस्त्वं देव वनस्पते शतवल्शो विरोहेति । यस्त्वं मघोः पृक्तः स शतशाखो विरोहेति मन्त्रवर्णेन स्थाणुरेवाभिधीयत इति । स्थाणावपि च होमे क्रियमाणे यूपीयस्थाणुरिति भवत्येवादृष्टो यूपसंस्कारः । अतः स्थाणावेव होम इति ॥ २२ ॥

परिवास्योच्छेदनं पुनः ॥ २३ ॥

परिपूर्वोवसिश्छेदनार्थः । परिवास्य च्छित्वा यूपाग्रं पुनश्छेदनं न कर्त्तव्यम् ॥ २३ ॥

त्र्यरत्निश्चतुररत्निर्वा ॥ २४ ॥

परिवास्यते । स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवतीति वचनात् ॥ २४ ॥

एकारत्निप्रभृतीनेके ॥ २५ ॥

एवमपि हि श्रूयते । स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुत इममेव तेन लोकं जयत्यथ यद्व्यरत्निमन्तरिक्षलोकमेव तेन जयतीति । एके तमेच्छन्ति । न ह्येतौ विधीयेते किं तर्हि अवयुत्यवादेन संस्तवोयं, यो नापसंहरति स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयुपो भवतीति[1] ॥ २५ ॥

अष्टाश्रं करोत्युपरवर्जम् ॥ २६ ॥

अत ऊर्ध्वन्तक्ष्णो व्यापारः । एव हि तक्ष्णा आनयनं दृष्टार्थं भवति । उपरवर्जमिति । उपरशब्देन उपरार्द्धः प्रदेशोभिधीयत । उपरार्द्धप्रदेशवर्जमष्टाश्रिं करोति ॥ २६ ॥

अग्राच्चषालं पृथमात्रमष्टाश्रं मध्यसंगृहीतम् ॥२७॥

करोतीत्यनुषङ्गः । पृथशब्देन सङ्कुचिताङ्गुलिः पाणिराम णिबन्धादुच्यते ॥ २७ ॥

ऊर्ध्वमग्रे प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तद्रूमातिक्रान्तं यूपस्य ॥ २८ ॥

---

[1] तथा चापस्तम्बः—“ त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातो ऽन्यः सौम्यस्याध्वरस्येति वाजसनेयिन ” इति ।

स चायमुपदेशः । प्रतिमोकस्यचानोत्तरकाल एव ॥ २८ ॥

पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा ॥ २९ ॥

भवति यूपः । एवमपि हि श्रूयत इति ॥ २९ ॥

सप्तदश वाजपेये ॥ ३० ॥

एकविꣳशतिरश्वमेधे ॥ ३१ ॥

यथाकायꣳ स्थविमा ॥ ३२ ॥

स्थौल्यं च यथाकायमेव भवति । न च तक्षणेन अग्रतुल्यप्रमाणात् ॥ ३२ ॥

वेदिं करिष्यन् पड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीꣳ शरीरैः वाचस्पते ऽच्छिद्रया वाचा छिद्रया जुह्वा दिवि देवतावृधꣳ होत्रामैरयन्स्वाहेति ॥ ३३ ॥

प्राग्वेदिकरणात् । पड्ढोतारं मन्त्रं मनसानुद्रुत्य पञ्चगृहीतं जुहोति । पशुभिर्वा विग्रहे । स चायं होमो निरुढ एव भवति । तत्रैव पाठात् । नाग्निषोमीय इति ॥ ३३ ॥

वेदिं करोति ॥ ३४ ॥

किमर्थमनवसरे वेदिकरणमुक्तम् । परिस्तरणादीनुपरिष्टाद्वक्ष्यत्याचार्य इति । उच्यते । ज्योतिष्टोमे ह्युत्तरवेदिर्विहिता । तत्र चाहवनीयनिधानमुक्तम् । अग्निं वा अस्यामाधास्यन् भवतीत्यनेन । स चायमग्निसंस्कारः । अङ्गप्रधानार्थत्वाच्चाग्नेरग्निषोमीये प्राप्नोति अग्नीषोमीयाश्च पश्वन्तरेषु । न च वेद्या विनोत्तरवेदिर्भवति । अतः स्वावसराद्वेदिरपकृष्यते । तेन वेदिं करोतीत्युक्तम् ॥ ३४ ॥

वरुणप्रघासवत्स्फ्याद्याग्निनिधानात् ॥ ३५ ॥

वारुणप्रघासिकोपदेशोऽयम् न धर्मपरिप्राप्तिः ॥ ३५ ॥

एकमिध्मेन प्रणयति ॥ ३६ ॥

तत्र हि कर्परप्रणयनं द्वयोश्च । इह एकमिध्मेनोच्यते । तत्कुतः । ज्योतिष्टोमे हीध्मेन प्रणयनं दृष्टम् । स चाहवनीयसंस्कारः । अङ्गप्रधानार्थत्वाच्च तस्याग्नीषोमीये प्राप्तिः । तत्प्रकृतित्वाच्च पश्वन्तरेषु । तेनैकमिध्मेनेत्युच्यते । एवं च कृत्वा समारोपोऽप्यत्र भवत्येव ॥ ३६ ॥

व्रतोपायनप्रणीताज्यभागावदानपूर्णपात्रविष्णु-
क्रमान्कुर्याद्धविर्यज्ञविधे ॥ ३७ ॥

व्रतोपायनप्रणीताज्यभागानामन्वयप्राप्तानां सवविधे प्रतिषेधार्थं निरूढे च प्रतिप्रसवार्थं वचनम्। भागावदानानि तु क्रोमं ब्रह्मणे प्लीहं यजमानाय पुरीततमध्वर्यवे इत्येवमादीनि अग्नीषोमीयमाम्नातानि ।तत्र शास्त्रान्तरे प्रतिषेधात् विकारपशुष्वनुपाच्छेत्स्यतीत्येनेह विधानमग्नीषोमीयनिषेधार्थम्। तत्र च निषेधात् पश्वन्तरे प्रवृत्तौ निरूढे विकल्पं वक्ष्यति क्लोमप्लीहाध्यूध्नीपुरीततश्चेच्छन्निति । अतो भागावदानानामग्नीषोमीये अभाव एव निरूढे विकल्पोऽन्यत्र नियम इति। पूर्णपात्रविष्णुक्रमयोस्त्वस्मिन्निरूढ एव विधानम् । दक्षिणाग्निहोमान्तत्वादग्नीषोमीयस्यान्यत्राप्रवृत्तिरेव। तथा चाह हविर्यज्ञविधो ह्यन्यः पशुबन्ध इति स हैष हविर्यज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्त इति ॥ ३७ ॥

परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याज्यासादनात् ॥ ३८ ॥

परिस्तरणादीनामुपादानं वैकृतपदार्थोक्तिमनन्तरं प्राकृतानुसम्बन्धनार्थम् । स्तननावसरविधानार्थं च । उत्तरपरिग्रहादि करोत्यनेन च उत्तरपरिग्रहस्य यदादौ तदादि करोत्याज्यासादनादिति ॥ ३८ ॥

अत्र विशेषः—

सपृषदाज्यमाज्यग्रहणम् ॥ ३९ ॥

तस्य चानुयाजार्थतेत्युक्तमेव ॥ ३९ ॥

बर्हिषि प्लक्षशाखास्तृणाति ॥ ४० ॥

अवसरान्तरविधानाच्च स्तरणाधिकारात् बर्हिस्तरणसमनन्तरमेव प्लक्षशाखास्तरणम् ॥ ४० ॥

देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्द्धम् ॥ ४१ ॥

अन्तर्वेदिश्च न यूपार्द्धस्याङ्गत्वेनोच्यते किं तर्हि देशलक्षणेयम् । यूपमान प्रकृत्य वचन हि भवति अर्द्धमन्तर्वेद्यर्द्धं बहिर्वेदीति । तत्र यूपार्द्धस्याङ्गत्वेन वेदिविधाने अर्द्धं बहिर्वेदीत्येतदपि विधेयम् । तथा च वाक्यभेद प्रसङ्गः । देशलक्षणायां त्वेषदोषो न भवति । न चैकवाक्यत्वे सत्यनेकवाक्यतायुक्तरूपा। अनेकादृष्टपरिकल्पनाप्रसङ्गात् । चिन्तायाः प्रयोजनन्तीयसुति प्राची यदिनं कर्त्तव्येति अनङ्गत्वात् ॥ ४१ ॥

उपरसम्मितं खनति ॥ ४२ ॥

उपरशब्देन चोपरार्द्धः प्रदेशो लक्ष्यते । उपरार्द्धप्रदेशसम्मितं खनतीत्यर्थः ॥ ४२ ॥

प्राचः पांसूनुद्वपति ॥ ४३ ॥

तदग्रेण यूपं प्राञ्चं निदधाति ॥ ४४ ॥

तच्छब्देनावट. परामृश्यते ॥ ४४ ॥

कुशमुष्टिमुपरि तस्मिन् ॥ ४५ ॥

यूपे ॥ ४५ ॥

प्रथमशकलं च ॥ ४६ ॥

चशब्दादुपर्येव ॥ ४६ ॥

अग्रमुत्तरेण चपालम् ॥ ४७ ॥

निदधातीत्यनुवर्त्तते ॥ ४७ ॥

यवोसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूला-
नि दिवे त्वेति प्रतिमन्त्रम् ॥ ४८ ॥

आपश्च सतीष्वेव प्रणीतासु लौकिका एव गृह्यन्ते । सा-
म्राज्ये ह्यङ्गार्थाः प्रणीता. तद्विकारे च पशावङ्गार्थानामेव प्रतिप्रसवः ।
तेनापूर्वत्वाद्यूपकर्मादावप्रवृत्तिरिति ॥ ४८ ॥

प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥ ४९ ॥

प्रयोग. ॥ ४९ ॥

अवटे शेषमासिञ्चति शुन्धन्तामिति ॥ ५० ॥

शेषप्रतिपत्तिरवटसंस्कारश्चायम । अतः यूपैकादशिन्यां स-
र्वावटसंस्कार' कर्त्तव्यः ॥ ५० ॥

बर्हीऽपि प्राञ्च्युदञ्चि च प्रास्यति पितृषद-
नमसीति ॥ ५१ ॥

अवटे बर्हींषि प्रागग्राण्युदगग्राणि च प्रास्यति पितृषदनम-
सीत्यनेन मन्त्रेण ॥ ५१ ॥

प्रथमशकलं चाग्रेणीरसीति ॥ ५२ ॥

आस्यतीत्यनुवर्तते ॥ ५२ ॥

स्रुवेणावदं जुहोति तूष्णीम् ॥ ५३ ॥

तूष्णीमित्युक्तत्वात् स्वाहाकारोऽपि न भवति ॥ ५३ ॥

पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमन-क्त्युदङ्ङुपविश्य ॥ ५४ ॥

परिक्रमणं च यजमानस्योच्यते । मा भूत्सान्निधामात् अपरि-क्रमणमिति ॥ ५४ ॥

यूपायाज्यमानायानुवाचयति ॥ ५५ ॥

अज्यमानस्य यूपस्यानुवाचनं कारयतीत्यर्थः । तथैवं यूपा-याज्यमानायानुब्रूहीति ॥ ५५ ॥

देवस्त्वेत्यनक्ति ॥ ५६ ॥

यूपम ॥ ५६ ॥

चषालमुभयतः ॥ ५७ ॥

अनक्तीति वर्तते । देशभेदाद्योभयश्रमन्त्र इत्युक्तमग्निसं-मार्गे ॥ ५७ ॥

अक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति ॥ ५८ ॥

अक्त एव पुनरक्तवचनं चषालनिर्देशार्थम् । चषालं प्रतिमुञ्च-तीत्यर्थः । प्रतिमुञ्चामीति चात्र मन्त्रशेषः ॥ ५८ ॥

सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशात् समन्तं परिमृश्याध्वर्युर्नोत्सृजेदापरिव्य-यणात् ॥ ५९ ॥

सहोपरेणाग्निष्ठादेशं पुनरपत्या परिव्ययणदेशं समन्तं परिमृ-श्य यूपमध्वर्युर्नोत्सृजेदापरिव्ययणात् । सोपराग्निष्ठादेशाञ्जनं च

त्काप्रत्ययापदेशादध्वर्योरिति केचित् । अभिप्रवृत्तत्वाद्यजमानस्येति सम्प्रदाय. ॥ ५९ ॥

उच्छ्रीयमाणायानुवाचयति ॥ ६० ॥

यूपायेत्यत्रानुवर्त्तते ॥ ६० ॥

द्यामग्रेणेत्युच्छ्रयति ॥ ६१ ॥

यूपम् ॥ ६१ ॥

यात इति मिनोत्यग्निष्ठासम्प्रत्याहवनीयम् ॥६२॥

यात इत्यनेन मन्त्रेण अवटे प्रक्षिपति यथाग्निष्ठासम्प्रत्याहवनीयं भवति। एवं च सति यूपैकादशिन्यां सर्वाग्निष्ठाः सम्प्रत्याहवनीयं कर्त्तव्याः ॥ ६२ ॥

ब्रह्मवनित्वेति पांसुभिः पर्यूहति ॥ ६३ ॥

पांशुभिः पूरयति गर्त्तम् ॥ ६३ ॥

ब्रह्म दृंहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्य्यूषति ॥ ६४ ॥

मैत्रावरुणदण्डेन दृढीकरोति ॥ ६४ ॥

समं भूमिङ्कृत्वाद्भिरुपसिच्य विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम् ॥ ६५ ॥

समं भूमिकृत्वाद्भिरुपसिच्य गर्त्तम् विष्णोः कर्माणीति वाचयति यजमानम् यूपमन्वारब्धम् । सचायमुभयसंस्कार इति सम्प्रदायः। यूपसंस्कार एवेत्यपरे । उभयसंस्कारपक्षे च बहुयजमानके सर्वेषां वाचनमेकस्यान्वारम्भः ॥ ६५ ॥

तद्विष्णोरिति चषालमीक्षमाणम् ॥ ६६ ॥

वाचयतीत्यनुवर्त्तते ॥ ६६ ॥

परिवीयमाणायानुवाचयति त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति ॥ ६७ ॥

त्रिगुणया त्रिव्यामया कौश्या रशनया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति । नाभिमात्रं च प्रमाणत्वाद्यजमानाविषयम् ॥ ६७ ॥

स॰सृज्यान्यतरस्यामन्ते प्रवेशयति ॥ ६८ ॥

स॰सृज्य रशनामन्यतरस्यां रशनायां अन्तं गोपायति ॥ ६८ ॥

यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति ॥ ६९ ॥

यूपशकलमस्यां रशनायामवगूहत्युत्तरेणाग्निष्ठां ऊर्ध्वगूहति दिवः सूनुरसीति ॥ ६९ ॥

बहुषु यथास्वम् ॥ ७० ॥

बहुषु यूपेषु यथास्वमवगूहनम् ॥ ७० ॥

उपविरिसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति ॥ ७१ ॥

पशुमात्रमात्ताविहमुच्यते—

छागं मन्त्राम्नानात् ॥ ७२ ॥

स च पशुश्छागो ग्रहीतव्यः । कुत एतत् । मन्त्राम्नानात् । अग्नीषोमौ च्छागस्य हविष आत्तमिति । तेन पशुशब्दश्छागविषय इति गम्यते ॥ ७२ ॥

पञ्चदमन्यङ्गम् ॥ ७३ ॥

द्वारे त्ववैदिकत्वात्स्मार्त्तमिति । यज्ञपतिशब्दश्च अनेकयजमानके विपरिणंस्यते । यूपाहुत्यां परिव्ययणे ऽग्निमन्थने च ॥ ८५ ॥

प्रवृत्य होतारमाश्राव्याहाग्निर्ह दैवीनां विशां पुर एतायं यजमानो मनुष्याणा॒ सुन्वन्निति सुत्ये तयोरस्थूरि गार्हपत्यं दीदयच्छत॒ हिमा द्वा यू राधा॒सीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति ॥ ८६ ॥

आश्रावणं च मैत्रावरुणार्थम् । स मैत्रावरुणायाद्दैवाश्रावयतीति वचनात्। अग्निर्ह दैवीनां विशां पुर एत इति । यजमानस्य चानेकयजमानके यथार्थं विपरिणामः । सुन्वन्निति सुत्ये इत्यृतुयाज्यावरणसुन्वन्यजमान इति प्रयोगः ॥ ८६ ॥

मैत्रावरुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीत्यौदुम्बरं यजमानमुखमात्रम् ॥ ८७ ॥

मैत्रावरुणसन्निधानात्तस्यैव मुखमात्रो मा भूदिति यजमानमुखमात्रमित्युक्तम् ॥ ८७ ॥

दीक्षितदण्ड॒ सोमे ॥ ८८ ॥

दीक्षितदण्ड समर्पयति ॥ ८८ ॥

क्रीते वा ॥ ८९ ॥

अस्मिन्वावसर इति ॥ ८९ ॥

एकादशप्रयाजा अनुयाजाश्च ॥ ९० ॥

इयं चैकादशसंख्योत्पन्नसंयोगिनी । चोदकप्राप्तेषु प्रयाजेषु संख्या श्रूयते साऽभ्यासेन पूर्यते । या पुनरुत्पत्तौ संख्या श्रूयते

त्सा पृथक्त्वनिवेशाद्भेदश्च भवति । यथा प्रकृतौ पञ्चप्रयाजान्यजति । अभ्यासे च सति अन्त्यस्यैवाभ्यासो न्याय्यः । एवं च सति अभ्यासविनाशे अन्त्य एवावर्त्तत इति । अनेकदेवताको ऽनेकयाज्याश्च पञ्चम एवायमिति । एवं यत्र यत्रोत्पन्नसंयोगिनी संख्या तत्र तत्राभ्यासेन पूर्यते । यथा त्रीणि समिद्वत्जुहोति जुहोतीति कर्माभ्यासः । तिस्रोनूचन्त्यग्य एकविंशतिरग्नीषोमीयाः पशव इति द्रव्याभ्यासः । कार्ये तु सर्वत्रैककर्मवेति ॥ ९० ॥

समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ॥९१॥

समैत्रावरुणे कर्मणि यजेत्यस्य स्थाने प्रेष्येति वक्तव्यम् । यत्र मैत्रावरुणस्य प्रैषवचनमस्ति । एवं च सति पशौ पत्नीसंयाजेषु प्रैषवचनाभावाद्यजेत्येव वक्तव्यम् ॥ ९१ ॥

दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥ ९२ ॥

यूपशकलमाहरेति च काण्वानां पठ्यते । माध्यन्दिनीयानां तु शासमाहरेत्येव ॥ ९२ ॥

स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति ॥ ९३ ॥

स्वरुं गृहीत्वोभावपि स्वरुंशसी जुह्वाग्रे ऽक्त्वा ताभ्यामेव पशोर्ललाटमुपस्पृशति घृतेनाक्तावित्यनेन मन्त्रेण ॥ ९३ ॥

स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाताश्रिरस्त्विति ॥ ९४ ॥

स्वरुं यूपे प्रत्यवगुह्य शमित्रे ऽसिं प्रयच्छन्नाहैषा ते प्रज्ञाताश्रिरस्त्विति ॥ ९४ ॥

सादयित्वा स्रुचौ चात्वालमुत्तरेण शमितायोल्लिखति ॥ ९५ ॥

उपस्पृशतीति। पन्नद्धो निगमेषु जातदर्शन उक्तः। अन्यङ्गश्चानूनाङ्गः ॥ ७३ ॥

यथामन्त्रवर्णं प्रोक्षणे ॥ ७४ ॥

प्रोक्षणमन्त्रे यादृशोभिहितः अनुत्वा माता मन्यतामनु पितानु भ्राता इत्येवमादि। मातृमान्भ्रातृमानिति च मन्त्राभिधानसामर्थ्यात् ॥ ७४ ॥

नाचोदितत्वात् ॥ ७५ ॥

नैतदेवम्। न ह्येवं विधा चोदनेति। मन्त्राणां चाविधायकत्वात् ॥ ७५ ॥

अग्निं मन्थत्याहोमात्करोति ॥ ७६ ॥

गुणविधित्वाच्चास्य धर्माभावे धर्मपरिप्राप्त्यर्थमाहोमादित्युच्यते ॥ ७६ ॥

उपाकरणमन्थने वा ॥ ७७ ॥

उपाकरणं तृणेनोपस्पर्शनमुक्तम्। तस्य पुनरुच्चारणं मन्थनसन्नियोगार्थमर्थम्। सन्नियुक्तेर्विकल्पोयथास्यादिति ॥ ७७ ॥

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वा ऽन्तराशृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति ॥ ७८ ॥

पाशं कृत्वा प्रतिमुञ्चतीति वचनात् ॥ ७८ ॥

देवस्य त्वेति यूपे ॥ ७९ ॥

बध्नातीत्यनुवर्त्तते ॥ ७९ ॥

ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत् ॥ ८० ॥

त्रयोपि हि देवता विशेषा विकल्पेन श्रूयन्ते। याज्ञवल्क्य-

त्वापरिमाणौ यमिच्छेदित्यादिविकल्पार्थमुक्तम । यमिच्छेत्तं सर्वे दैव कुर्यात् ॥ ८० ॥

अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति ॥८१॥

प्रोक्षणीशब्दश्च यौगिकोऽपि संस्कृतप्रोक्षणीविषयः प्रोक्षण्यु पादानसामर्थ्यात् ॥ ८१ ॥

अपां पेरुरित्यास्य उपगृह्णाति ॥ ८२ ॥

आस्योपग्रहणं च पानाय । नादृष्टार्थम् । दृष्टार्थत्वात् । तथा चाश्वमेधे श्रूयते तर्पयित्वाश्वं पुनः संस्कृत्य प्रोक्षणीभीरितरा-न्पशून्प्रोक्षतीति ॥ ८२ ॥

आपो देवीरित्यधस्तादुपोक्षति ॥ ८३ ॥

अथाधस्तादुपोक्षतीति वचनात् ॥ ८३ ॥

इध्मप्रैषादि करोत्याप्रयाजेभ्यः ॥ ८४ ॥

मैत्रमसमनन्तर प्राकृतानुवृत्यर्थमिदमुक्तम । आदिग्रहणान च होतृषदनादिद्रष्टव्यम । तदेव हि पूर्वं न कृतमिति ॥ ८४ ॥

उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटांसश्रोणीषु सन्त इति प्रति मन्त्रम् ॥ ८५ ॥

मन्त्रो हि उत्तराघारसमनन्तर धुवासमञ्जनमुक्तम । तेने-होच्यते । पशु पूर्वं समनक्तीति । अनेन च ज्ञापकेन यत्र प्राकृतयोः समावेशस्तत्र पूर्वं प्राकृतमिति । यथासाध हवींषि सम्मृज्यत्यासाद्य हवींष्यभि मन्थतीति । यथा च प्रहृत्य तृणमात्मानमालभते । प्र-हृत्य तृणं याजिनेन चरतीति । समङ्गानि यजत्रैरित्यत्र गच्छन्ताः मित्यध्याहारो नानुषङ्गः । एकवाक्यताभावात् । एवं च सति स-यजपतिरानिपेत्यत्रापि गच्छतामित्यध्याहार एव नानुषङ्गः । पूर्वेण विपरीतत्वात् । अतश्चोभयत्र सहितावत्प्रयोगो न भवति । प्राय-श्चित्तगणश्च विशेष । अनुषङ्गविनाशे श्रौत प्रायश्चित्तम् । अध्या-

स्रुक्सादनं च वचनात् । उल्लेखनोपलक्षिताश्च परिसमूहनादयः सर्वे भवन्तीति सम्प्रदायः ॥ ९५ ॥

पर्यग्नयेऽनुवाचयति ॥ ९६ ॥

पर्यग्निकरणे क्रियमाणे यदनुवचनं तत्कारयति । कथं च तत्कारयति । पर्यग्नये नुब्रूहीत्येवम् । तथाच श्रुतिरप्याह पर्यग्नये नुब्रूहीति । पर्यग्निकरणं चाग्नीत्कर्तृकं प्रैषश्च तदङ्गत्वादग्नीध एवेति सम्प्रदायः । तथा च श्रूयते यदेवास्य कर्म करोति स एव तस्योपचारं वेदेति । अपरे त्वध्वर्योरेव प्रैषदानमिच्छन्ति । पर्यग्निकरणमात्र एव वचनमिति ॥ ९६ ॥

आहवनीयोल्मुकमादायाग्नीत्त्रिः समन्तं पर्येति पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान् ॥ ९७ ॥

आहवनीयोल्मुकं गृहीत्वापश्वादीनग्नीत्त्रिः पर्येति ॥ ९७ ॥

आज्यपशुशामित्रान्वा ॥ ९८ ॥

पर्येति न सर्वानिति । वाशब्दो विकल्पार्थः ॥ ९८ ॥

प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥ ९९ ॥

आहवनीये प्रक्षिप्योल्मुकं त्रिरेव प्रतिपद्वप्रयोगाद्याप्रदक्षिणम् ॥ ९९ ॥

पुनरादायोदङ्प्रतिपद्यते ॥ १०० ॥

पुनरग्नीदाहवनीयोल्मुकमादायोदङ्प्रतिपद्यते ॥ १०० ॥

पशुश्चान्वक् ॥ १०१ ॥

पशुश्च उल्मुकमनुनीयते । एवं हि श्रूयते शामित्रं कण्ठे बध्वा नयति ॥ १०१ ॥

प्रतिप्रस्थातान्वारभत एनं वपाश्रपणीभ्यां काश्मर्यमयीभ्यां विशाखाविशाखाभ्याम् ॥ १०२॥

तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभत इति वचनात् ॥१०२॥

तमध्वर्युर्यजमानोऽध्वर्युम् ॥ १०३ ॥

अन्वारभत इत्यनुवर्त्तते ॥ १०३ ॥

वेदितृणे ऽध्वर्युरादायाश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति ॥ १०४ ॥

अनन्तरं यजमानस्याभिहितत्वादध्वर्युग्रहणम् ॥ १०४ ॥

रेवति यजमान इति वाचयति ॥ १०५ ॥

रेवति यजमान इत्यनुमन्त्रं यजमानं वाचयति ॥ १०५ ॥

शामित्रं नातीयात् ॥ १०६ ॥

शामित्रमतीत्य न गच्छेत ॥ १०६ ॥

शामित्रेऽग्निं निदधाति ॥ १०७ ॥

यतो गृहीतोऽग्निस्तत्र निधानं मा भूदिति पुनः शामित्रग्रहणम् ॥ १०७ ॥

निर्मन्थ्यमेके ॥ १०८ ॥

अग्निं निदधाति । तुल्यश्रुतत्वाद्विकल्पः ॥ १०८ ॥

पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति ॥ १०९ ॥

शामित्रस्य पश्चात् । मन्त्रस्यानेकयजमानके विपरिणामः ॥१०९॥

तस्मिंस्तेनशिम्नन्ति प्रत्यक्शिरसमुदक्-

पादम् ॥ ११० ॥

तस्मिन् स्तृणे पशुं प्रत्यक्शिरसमुदक्पादं निघ्नन्ति ॥ ११० ॥

प्राक्शिरसं वा ॥ १११ ॥

उदक्पादमिति वर्त्तत एव । शिरसोदिङ्नियमेपि सति पुरुषस्योदक्पादता वाचनिकत्वात्कर्त्तव्या । चोदकानुग्रहाय ॥ १११ ॥

संगृह्य मुखं तमयन्त्यवाश्यमानम् ॥ ११२ ॥

मुखग्रहणपूर्वकं तमनं यथा शब्दं न करोति ॥ ११२ ॥

वेष्केण वा ॥ ११३ ॥

तमयन्ति । वेष्कश्चावलक उच्यते ॥ ११३ ॥

एत्याहवनीयमावृत्यासते ॥ ११४ ॥

अध्वर्य्वादयः ॥ ११४ ॥

संज्ञपयान्वगन्नित्येव ब्रूयात् ॥ ११५ ॥

अनेन मन्त्रेण शमितोच्यते संज्ञपनं कुरु । अन्वगन्निति देवान्प्रत्यनुगच्छत्वित्यर्थः । तथा च श्रुतिः । स यदाहान्वगन्निते-तर्हि ह्येष देवाननुगच्छति इति । एवं च कृत्वाऽनेकपाशुकेऽस्य पदस्य विपरिणामः ॥ ११५ ॥

स्वाहा देवेभ्य इति जुहोति ॥ ११६ ॥

पूर्णाहुतिविकारत्वात्सकृद्गृहीतेन तद्धर्मवत् ॥ ११६ ॥

संज्ञप्तः पशुरिति प्रोक्ते शेतान्नुमुहूर्त्तमित्याहासोमे ॥ ११७ ॥

संज्ञप्तः पशुरिति प्रोक्ते शेतान्नुमुहूर्त्तमित्याहासोमे । सोमग्रहणेन च निरूढोभिधीयते । तमेव हि प्रकृत्य तत्पठ्यते । तस्मानुपाह्नु संज्ञप्तं ब्रूयाच्छेतान्नुमुहूर्त्तमिति ॥ ११७ ॥

देवेभ्यः स्वाहेति जुहोति ॥ ११८ ॥

पूर्णाहुतिसंस्कृतेनैवाज्येन ॥ ११८ ॥

न वैते जुहुयात् ॥ ११९ ॥

वाशब्दो विकल्पार्थः । एवं हि श्रूयते ते वा एते परिपशव्ये इत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेतेति ॥ ११९ ॥

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माहिर्भूरिति ॥ १२० ॥

रशनाद्यहुत्वेऽपि विकारे अहिपृदाकुशब्दौ उपमानार्थत्वान्न विपरिणस्येते । उपमायाश्चानङ्गत्वादविपरिणामः । अङ्गभूतं हि प्रकाशयितव्यम् । न चोपमाङ्गभूतेति । भूरिति तु पदं रशनापरत्वाद्विपरिणस्यत एव ॥ १२० ॥

प्रतिप्रस्थातः पत्नीमुदानयेत्याह नेष्टरिति सोमे ॥ १२१ ॥

सोमग्रहणं च सोमविषयमेव । तत्र हि नेष्टा विद्यते । एवं च सति सोमयागेषु पशुषु प्रतिप्रस्थातरिति वक्तव्यम् ॥ १२१ ॥

पान्नेजनहस्तां वाचयति नयन्नमस्त आतानेति ॥ १२२ ॥

पान्नेजनहस्तां पत्नीं नयन् वाचयति नमस्त आतानेति । पत्नीबहुत्वे च क्रत्वर्थत्वादेकैव पान्नेजनहस्ता । संस्कारार्थत्वात्सर्वासां वाचनमिति ॥ १२२ ॥

पशोः प्राणाञ्छुन्धति पत्नी ॥ १२३ ॥

प्राणशब्देन प्राणायतनान्यभिधीयन्ते । तानि पान्नेजनीभिः पत्नी शोधयतीत्यर्थः ॥ १२३ ॥

तानीदानीमाह—

मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रम् ॥ १२४ ॥

मेढ्रं प्रजननमुच्यते । शेषं प्रसिद्धमेव ॥ १२४ ॥

शेषेण यजमानश्च शिरः प्रभृत्यनुषिञ्चतो मनस्त इति शिरः ॥ १२५ ॥

पान्नेजनीशेषेण यजमानश्च शब्दादध्वर्युश्च । अध्वर्युः का-ण्वीयायां पठ्यते । अध्वर्युश्च यजमानश्चेति विलिङ्गत्वादभिधीयते । मनस्त इति शिरः शेषमन्त्रा यथार्थं विनियुज्यन्ते ॥ १२५ ॥

यत्ते क्रूरमित्यङ्गानि ॥ १२६ ॥

अनुषिञ्चत इत्यनुवर्त्तते ॥ १२६ ॥

शमहोभ्य इति पश्चात्पशोर्निषिञ्चतः ॥१२७॥

संस्कारत्वाच्चाव्यतिरिक्ते । निषिञ्चामीति च मन्त्रेऽध्याहारः ॥ १२७ ॥

उत्तानं पशुं कृत्वाग्रेण नाभिं तृणं निदधात्योषध इति ॥ १२८ ॥

नाभ्यग्रे हि पशोः स्थानम् ॥ १२८ ॥

स्वधित इति प्रज्ञातयाभिनिधाय च्छित्वाग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोनक्ति लोहितेन रक्षसामिति ॥ १२९ ॥

प्रज्ञाता च घृताक्ता प्रदेशोऽच्यते । यया पशुसमञ्जनं कृतम् । छित्त्वा सतृणं चर्म तृणाग्रं सव्ये पाणौ कृत्वा दक्षिणेन मूलं द्विगुणीकृत्योभयतोनक्ति लोहितेन रक्षसामित्यनेन मन्त्रेण ॥१२९॥

निरस्तमित्यपास्यति ॥ १३० ॥

अक्तं मूलम् ॥ १३० ॥

इदमहमित्यभितिष्ठति यजमानः ॥ १३१ ॥

रक्षोभिध्यायकत्वात्पुरस्कोपस्पर्शनम् । अत्र च पशुयजमानके पक्ष एवाभितिष्ठति क्रत्वर्थत्वात् ॥ १३१ ॥

वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी इति ॥ १३२ ॥

प्रोर्णोति वपाया वेष्टयति । वपाश्रपण्योश्च उक्ताकार्योपस्या तन्मन्त्रेणोहितेनादानं द्यौरसि पृथिव्यसि इति ॥ १३२ ॥

परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति ॥ १३३ ॥

परिवासनं च च्छेदनमुच्यते ॥ १३३ ॥

शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥ १३४ ॥

तच्च पुनरुल्मुकमग्नीदादत्त इति पुनःशब्दोपादानान्निर्मन्थ्यपक्षे शामित्रैकदेशस्य न प्रासनमिति । कण्वानामपि च तत्पुनरप्यजैतीति पठ्यते । पुनःशब्दस्य कृतार्थत्वात् ॥ १३४ ॥

तृणाग्रं चाध्वर्युर्वायो वेरिति ॥ १३५ ॥

तृणाग्रमाहवनीये प्रास्यतीत्यनुवर्तते । अधस्तनपदार्थेऽग्नीत्सुकश्चशब्देन तस्यानुकर्षणं मा भूदित्यध्वर्युग्रहणम् । एवं चानेनैव ज्ञापकेन ज्योतिष्टोमे नेष्टा पत्नीं इत्येनां वाचयतीत्युक्त्वा सोमक-

यथया च समीक्षमाणाभिरयश्च च शब्देन नेष्टुरेवानुरूप्येणं युक्तम् । तथा च ब्राह्मणम् । तं नेष्टा वाचयतीति प्रकृत्यायैनां सोमक्रयण्या संख्यापयतीत्याह ॥ १३५ ॥

उत्तरतस्तिष्ठन्प्रतप्य वपामन्तरायूपाग्नी
हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति
परीत्य ॥ १३६ ॥

उत्तरतस्तिष्ठन्नाहवनीये प्रतप्य वपामन्तरेण यूपाग्नी हृत्वा पूर्वेण यूपं परीत्य दक्षिणतो व्यवस्थितः प्रतिप्रस्थाता श्रपयतीति । सम्प्रदाये तु चात्वालाद्यसंकादि प्रतिप्रस्थाता चात्वालेऽवसिच्य शामित्रे प्रतपतीति । प्रतपनं च श्रपणैकदेशः । तां पशुश्रपणे प्रतपति तथोह्यास्यात्रापि स्मृता भवतीति हि श्रूयते । श्रपणं च प्रतिप्रस्थातुर्कर्तृकमिति सम्प्रदायः ॥ १३६ ॥

वपा्ँ स्रुवेणाभिघारयत्यग्निराज्यस्येति ॥ १३७ ॥

अभिघारणं तु प्रकृतमेव । प्रकृतिलिङ्गसंयोगात् । अतश्च स्वाज्यमाज्यमिति ॥ १३७ ॥

स्तोकेभ्योनुवाचयति शृताया्ँ शृताप्रचरेत्याह प्रतिप्रस्थाता स्वाहाकृतिभ्यः प्रेष्येति ॥ १३८ ॥

स्वाहाकृतिशब्देनोत्तमः प्रयाज उच्यते ॥ १३८ ॥

हुत्वावपामभिघारयति पृषदाज्यं ध्रुवां प्रथममाज्यभागौ चेत् ॥ १३९ ॥

चेच्छब्दो यद्यर्थः । यद्याज्यभागावत्र क्रियते इति । निरूढे ह्याज्यभागयोर्विकल्पः ॥ १३९ ॥

तेनोच्यते—

अत्राज्यभागौ कुर्वन् ॥ १४० ॥

आज्यभागौ कुर्वन्नत्रावसरे करोति । अग्नीषोमीये पुनराज्यभागौ नस्त इत्युक्तमेव ॥ १४० ॥

वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति ॥ १४१ ॥

उपस्तीर्य जुह्वामाज्यं हिरण्यशकलमवद्धाति । अवद्यन्नाहेति च सहानुवाचनार्थम् । इन्द्राग्निभ्यां च्छागस्येति च प्रयोगोपप्रदर्शनार्थम् । न सौर्यादि व्युदासार्थम् । विकल्पेन ह्यत्र देवताः श्रूयन्त इति ॥ १४१ ॥

हिरण्यमवधाय द्विरभिघारण; सोमे ॥ १४२ ॥

निरूढे तु सकृदभिघारणम् । सा वा एषा पञ्चावत्ता वपा भवतीति वचनात् । सोमशब्देन चाग्नीषोमीयोपलक्षणम् । अतस्तद्विकारेषु निरूढवर्जं सर्वत्र द्विरभिघारणमिति ॥ १४२ ॥

आश्राव्याहेन्द्राग्निभ्यां च्छागस्य वपां मेदः प्रेष्येति ॥ १४३ ॥

एतदपि प्रयोगोपप्रदर्शनार्थमेव ॥ १४३ ॥

प्रस्थितमिति च प्रसुते ॥ १४४ ॥

प्रसुतशब्देन सवनीयोऽभिधीयते । तद्विकारेषु च प्रस्थितशब्दे प्राप्ते सौत्रामण्यामुपसंहारादन्यत्र न भवतीति । उपसंहृतो हि प्रस्थितशब्दः सौत्रामण्यां प्रस्थितमिति च विपशोः सर्वमिति ॥१४४॥

हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरा; स्वाहाकृते इति ॥१४५॥

यथाश्रपणीयश्रुत्ये मन्त्रस्य विपरिणामः ॥ १४५ ॥

चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति ॥ १४६ ॥

मन्त्रलिङ्गाद्ध्यद्भिर्मार्जनमिति ॥ १४६ ॥

विशास्ति पशुमन्यः ॥ १४७ ॥

शसुर्हिंसायाम् । अन्यः पशुं हिनस्ति मारयतीत्यर्थः । कुत एतदन्य इति । संज्ञाभेदात् । अन्या हि संज्ञा शमितेति । संज्ञाभेदाच्च संज्ञान्तरे प्रतीतिर्भवति देवदत्तो यज्ञदत्त इति यथा ॥ १४७ ॥

एवं प्राप्त उच्यते—

ऋत्विजां वैको ऽप्रकॢप्तत्वाच्छामित्रे ॥ १४८ ॥

ऋत्विजां वैकः करोति संज्ञपनं नान्यः कुत एतत् । अप्रक्लृप्तत्वाच्छामित्रे । शमनकर्मणि संज्ञपने नैव कश्चित्प्रकल्पितो दृश्यते येदेनानु शमितेनं कण्ठे बध्वा नयतीत्यस्ति प्रकल्पनम् । उच्यते । ऋत्विजामेवैकः शमनक्रियायोगाच्छमितेति । तस्मादृत्विजामेवैकः करोति ॥ १४८ ॥

किं च—

उपगादर्शनाच्च ॥ १४९ ॥

दृश्यते चायमर्थो यथा ऋत्विग्व्यतिरिक्तस्याप्रकल्पने ऋत्विजामेव कर्तृत्वमिति । हो इत्यृत्विऽज उपगायन्त्येमिति यजमान ऋत्विजमुपगानं दर्शयति । विधिरिति चेत् । नैवम् । हो इत्येव परत्वाद्वाक्यस्य । न्यायप्राप्तात् ऋत्विजोऽनुवदिति । तद्विधाने हि वाक्यभेदप्रसङ्गः । तथा नाध्वर्युरुपगायतीति अध्वर्योः प्रतिषेधं ब्रुवन्नृत्विजामुपगानं दर्शयति । एवं तावत्केषां चिदयमेव सिद्धान्तः । अत्रोच्यते । यदुक्तमप्रक्लृप्तत्वाच्छामित्र इति । तत्रैवं येन ऋत्विग्व्यतिरिक्तस्य शमितुः प्रकल्पनं च दृश्यते । शमितेनं कण्ठे बध्वानयतीति । तथाऽसृन्तु हविः शमितरिति । तत्र शमितारं दर्शयति । ननु च ऋत्विजामेवैकः शमनं कुर्वन् शमिता भविष्यति । तस्यैतद्दर्शनमिति ।

मेत्युच्यते । व्यापृतेषु ऋत्विक्षु शमितृशब्दश्रवणादन्य इति गम्यते।प्रतिप्रस्थाता पशुमन्वारभते तमध्वर्युर्मैत्रावरुणो ऽग्निर्मुप्रेषे अग्निणौ होता ऽग्नीदुल्मुकमादायाग्रतो गच्छति । ब्रह्मा कृताकृतप्रत्यवेक्षणे । एवं सर्वर्त्विक्षु व्यापृतेषु शमिता श्रूयते । अतस्तेभ्यो ऽन्य इति गम्यते । यश्चोपगादर्शनमुक्तम् । तदप्रकल्पितविषयम्।अपि च संज्ञपने ऋत्विक् कर्तृके समाख्ययाध्वर्युः प्राप्नोति । तत्राध्वर्युशमितृसंवादे इदमनुपपन्नार्थं भवति । अनेनाध्वर्युर्भवति शमितरित्वेनो भवतीति । तस्मादन्यः शमितेति।अथवानेन सूत्रेण विकर्त्तनमेव चिन्त्यते विशास्तिपशुमन्यः । अन्यः पशुविकर्त्तनं करोति ।न ऋत्विगिति।कुत एतदभिप्रवृत्तत्वात् । मारणे हि शमितुरभिप्रवृत्तत्वाद्विकर्त्तनेऽपि स एवेति । एवं प्राप्त उच्यते । ऋत्विजां चैकोऽप्रक्लृप्तत्वाच्छामित्रे । ऋत्विजामेवैकः पशुविकर्त्तनं करोति । कुत एतत् । अप्रक्लृप्तत्वाच्छामित्रे । शामित्रशब्देन विकर्त्तनमभिधीयते । तत्र नान्यः प्रकल्पितः । यत्र नाम नान्य प्रकल्प्यते तत्रर्त्विजां कर्तृत्वम् । उपगादर्शनाच्चेति व्याख्यानम् ॥ १४९ ॥

विक्रयी त्वन्यः शूद्रसंयोगात् ॥ १५० ॥

विक्रयी पुनरन्यो भवति । कुतः । शूद्रसंयोगात् ॥ १५० ॥

अङ्गान्यनघत्यभञ्जन् ॥ १५१ ॥

अनवखण्डयन् ॥ १५१ ॥

हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि ॥ १५२ ॥

क्रोडशब्देन वक्षोऽभिधीयते । यकृच्छब्देन च कालेयम् । गुदः पक्वाशयावस्थानं तन्मध्यम् । दक्षिणा च श्रोणिः । एतानि जौहवानि जुह्वामवदेयानि ॥ १५२ ॥

दक्षिणासक्थिपूर्वनडकम् ॥ १५३ ॥

एविय सच्चेतरासक्तोस्मिन्काय इति याचकोऽभिधीयते। तस्य च पूर्वं अधमो नड्क सोमदेव ॥ १५३ ॥

गुदतृतीयाणिष्ठम् ॥ १५४ ॥

गुदतृतीयस्य कृशतरम् ॥ १५४ ॥

सव्या च श्रोणिरित्यौपभृतानि ॥ १५५ ॥

उपभृत्यवदेयानि ॥ १५५ ॥

वर्षिष्ठमुपयड्भ्यः ॥ १५६ ॥

यद्वर्षिष्ठं महत्तरं गुदतृतीयं तदुपयड्होमार्थम्। एतमेव हि विभागश्रवणात् ॥ १५६ ॥

अवदानकाले प्रभागः ॥ १५७ ॥

औदयौपभृद्विवेकार्थं हैतद्वचनम् ॥ १५७ ॥

वनिष्ठुजाघनी चावद्यति ॥ १५८ ॥

वनिष्ठुस्थूलान्त्रम्। जघनमेवैषे यथा जाघनी प्रसिद्ध एव ॥ १५८ ॥

क्लोमप्लीहाभ्यृक्नीपुरीततं चेच्छन् ॥ १५९ ॥

अवद्येत। क्लोमो गलकनाडीह्लीह प्रसिद्ध। अभ्यृक्नी ऊधप्रदेशस्योपरि भवति। पुरीतच्छब्देन हृदयमवच्छादितं येन तदुच्यते। पुरीतत्पुरीप हृदय तत्पुरीतता प्रच्छादयतीति श्रुतत्वात्। एतानि भागावदानानि। एषामत्र विकल्पः। अन्यत्र नियमः। अग्नीषोमीये स्वभाव एवेत्युक्तमेव ॥ १५९ ॥

उदरमेदोवाशिष्टं गुदे प्रास्यति कृशाश्चेत् ॥ १६० ॥

उदरे यन्मेद अङ्गमध्येनागृहीतं तदवशिष्टं गुदे प्रास्येदादि पशुर्भवति। कृशो दुर्बल उच्यते ॥ १६० ॥

# विज्ञप्तिः ।

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते । काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैः

| | | | |
|---|---|---|---|
| देयं वार्षिकमग्रिमं | मूल्यम् मुद्राः ७ | आणकाः ८ | |
| कालान्तरे प्रतिस्तबक | " " १ | " ० | |

प्रापणव्ययः पृथग् नास्ति ।

| साम्प्रतं मुद्र्यमाणा ग्रन्थाः- | | मुद्रिताः स्तबकाः |
|---|---|---|
| संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| शब्दकौस्तुभः । भट्टोजिदीक्षितकृत | ( व्याकरणम् ) | १० |
| श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाश सहितम् । सम्पूर्णः । | ( वेदान्तः ) | २ |
| करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्ण । | ( मीमांसा ) | २ |
| ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | ( वेदान्तः ) | ६ |

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णम् । (जैनदर्शनम्) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणापरम्–श्रीभाष्यकृता परमगुरुभि श्री यामुनमुनिभिर्विरचितम् । सम्पूर्ण (वेदान्त) ३

(११) न्यायमकरन्द । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीत आचार्यचित्सुखमुनिविरचितव्याख्योपते (वेदान्त) २

(१२) विभक्त्यर्थनिर्णय न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप म० म० श्रीगिरिधरोपाध्यायरचित । सम्पूर्ण (न्याय) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (वेदान्त) १३

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । (वेदान्त) २

(१६) मीमांसाबालप्रकाश (जैमिनीयद्वादशाध्यायार्थसंग्रह) श्रीमदूपदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीमट्टनारायणात्मजभट्टशङ्करविरचित । (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम् । (मीमांसा)

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । (वेदान्त)

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्त)

पत्रादिप्रेषणस्थानम् } हरिदास गुप्त, चौखम्बा संस्कृतपुस्तकालय बनारस सिटी ।



No 75.] [Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY ŚRI KARKÂCHÂRYA.

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mimâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthashâlâ,

*Central Hindu College*, *Benares*.

FASCICULUS V.

*PUBLISHED AND SOLD BY THE SECRETARY.*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT,

BENARES

AGENTS —OTTO HARRASSOWITZ, LEIPZIG

PANDIT JYESHTARAMA MUKUNDJI, BOMBAY.

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1904.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—७५

अवभ्र उवध्यमवधाय तस्मिंल्लोहितं रक्षसा-
मिति ॥ १६१ ॥

अवभ्रे गर्त्ते उवध्यमवधाय तस्मिंल्लोहितं रक्षसामित्यनेन मन्त्रेणावदधाति । प्रतिपत्तिश्चेयं, अतश्च बहुषु पशुषु सर्वेषां प्रतिपत्तिः ॥ १६१ ॥

शूले हृदयं प्रवृह्य शामित्रे श्रपयति ॥ १६२ ॥

साधाय्यविकारावुखायां श्रपणे प्राप्ते वचनात् शूले प्रवृह्य श्रपणम् । शूलस्य चोखाकार्यपरया तन्मन्त्रेणादानम् ॥ १६२ ॥

पशुं चोखायाम् ॥ १६३ ॥

चशब्दाच्छामित्र एव श्रपयति । अत्र हि वचनं भवति । अथ यमेतमुदश्च पशुश्रपणायाहरन्तीति ॥ १६३ ॥

पशुदेवतायै पुरोडाश एकादशकपालः ॥ १६४ ॥

अग्नीषोमीयोऽत्र पशुस्तद्देवत्यः पशुपुरोडाश इति तद्देवत्यता विहिता । इह कपालार्थमारम्भः । अग्नीषोमीये एकादशकपालः पशुपुरोडाशोऽन्वयप्राप्त्या तदन्वयाच्चेहैकादशकपालता भवतीत्युक्तम् ॥ १६४ ॥

अग्नीषोमीयो वा विशेषोपदेशात् ॥ १६५ ॥

वाशब्दः पक्षव्यावृत्तौ । न चैकादशकपालता कर्त्तव्या । किं कारणम् । येनाग्नीषोमीये देवताद्वित्वसामान्यविशेषणैकादशकपालता भवति । तथा चाभिषेचनीये श्रूयते । अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तदनु देवस्त्वा ह्वयीरपि निरुप्यन्ते इति । न चाग्नीषोमीयपशुपुरोडाशविकारः पश्वन्तरेषु पशुपुरोडाशविकारः एवायम् । तस्मादेकद्विशब्दपरिमाणाविभिरिह कपालसंख्या । नैकादशकपाल इति ॥ १६५ ॥

अत्रैव हविष्कृदाह्वानमिज्यैकत्वात् ॥ १६६ ॥

हविष्कृदाह्वानाहननयोरेककालत्वमुक्तम् । स यत्रैव हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति इति । हविष्कृदाह्वानं च हन्त्यर्थम् । हविष्करोतीति हविः कृत् । तेनौषधे प्राप्नोति । आह्वानकालत्वाच्चाहननमपि अत्रैवाशङ्क्यते । तेनोच्यते हविष्कृदाह्वानमेवात्र भवति । आहननं तु पशुपाशप्रमोक्षणोत्तरकालमेव । नत्र हि पश्विज्यया सहैकवाक्यत्वमाह्वानस्य च पुरोडाशेज्ययेति ॥ १६६ ॥

अवद्यन्नाहेन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति ॥ १६७ ॥

सहानुवाचनं द्वयोश्चारणवचनात् । इन्द्राग्निग्रहणं तु प्रयोगप्रदर्शनार्थम् । सूर्यप्रजापत्योरपि पक्षे प्राप्तत् ॥ १६७ ॥

उपभृति चावद्यति स्विष्टकृद्वत् ॥ १६८ ॥

च शब्दादनन्तरमेव । स्विष्टकृदर्थस्यैव स्विष्टकृद्वदित्युच्यते । स्विष्टकृदवदानस्याकालत्वात् । अपि च स्विष्टकृदवदानं जुह्वां प्राप्तं तदिहोपभृतीति परकरणम् ॥ १६८ ॥

इन्द्राग्निभ्यां पुरोडाशमिति प्रेष्यति ॥ १६९ ॥

प्रयोगप्रदर्शनार्थमेवेदमुक्तम् ॥ १६९ ॥

हुत्वा समानीयाग्नये प्रदाय ॥ १७० ॥

हुत्वा औपभृतमुपस्तृत समानीय अग्नये प्रदानं करोति ॥ १७० ॥

सगुणस्थाने ऽगुणः ॥ १७१ ॥

स्विष्टकृद्गुणरहितायाग्नये ॥ १७१ ॥

कुत एतत्—

सर्वविकार एकत्वात् ॥ १७२ ॥

सर्वस्मिन्विकारे एकार्थं निर्गुणाभिधायकत्वं दृश्यते । अनुयाज्यायामित्ताग्न इति निर्गुणमभिधानम् । तथा मैत्रावरुणप्रैषे होता

यक्षदर्शि पुरोडाशस्य जुषतामिति । याज्यायामपि च स्वदस्व हव्या- समिषो दिदीहि इति । एवं सर्वत्र निर्गुणमभिधानम् । यदि चाध्वर्यु- रपि अनुवाचनप्रैषयोर्निर्गुणमभिधानमस्त्विदकृच्छब्दकं करोति तदा याज्यानुवाक्यप्रैषैः सहैकवाक्यता भवतीतरथा क्वचित्सगुणं क्वचि- न्निर्गुणमभिधानमित्यसामञ्जस्यं स्यात् ॥ १७२ ॥

## यथाम्नातं वा वचिभेदात् ॥ १७३ ॥

यत्र यथाम्नातं तत्र तथैव कर्त्तव्यम् । भिन्नैर्वाक्यैर्याज्यापुरो- नुवाक्याप्रैषविकाराणां विधानम् । यथा वचनं सर्वत्र कर्त्तव्यता युक्ता । तेन वाशब्दात्पक्षो विपरिवर्त्तते१ ॥ १७३ ॥

## इडामत्रघत्यक्रियान्यस्य समानार्थत्वात् ॥१७४॥

इडाग्रहणं शेषकार्योपप्रदर्शनार्थं न्यायस्य तुल्यत्वात् । न त- द्रशुदासार्थम् । इडादीन्येवावद्यति । पशुपुरोडाशे चोदकप्राप्तस्या- ग्न्यान्वाधानादेरदृष्टोपकारकस्याक्रिया । कुत एतत्समानार्थत्वात् । यमेवोपकारं पशौ प्रयाजादीनि कुर्वन्ति पशुपुरोडाशेपि तमेव । अतः पश्वर्थमनुष्ठितानां पुरोडाशेप्युपकारप्रसङ्ग इति ॥ १७४ ॥

## न चोदनाभेदात् ॥ १७५ ॥

नैतदस्ति यदुक्तम् । किं कारणम् । चोदनाभेदात् । भिन्ने ह्येते चोदने । अग्नीषोमीयमजमालभेत । अग्नीषोमीयस्य वपाया प्रचर्या- ग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपतीति । यत्र ह्येकेन शब्दे- नोपादाय फले विधानम् यथा वैश्वदेवेन प्रजाकाम याजयेदिति । तत्रोपादेयत्वेन विधानात् साहित्यविवक्षायाम् युगपदङ्गोपकारा- पेक्षा । तेनागृह्यमाणविशेषात्सन्निधानाविशेषाच्च तन्त्रेणाङ्गोपकार-

---

१ अपरे त्वेवमाहु – अत्र शाखान्तरे श्रूयते अग्निं यजतीति, तेन याग एव निर्गुणोऽग्निर्विहितः, अतो यो यागे निर्गुणोऽग्निर्विहितः स सर्वविकारो भवति, सर्वेषां होतृणामध्वर्यूणां च विकारो भवति, कुतः, एकत्वात्, यतोऽनुवाचनप्रैषयाज्यादिष्वेक एवायमग्निर्न भिन्नः । एकश्च क्वचित्सगुणः क्वचिद्गुण इति न विरुद्धरूपतामर्ह- ति, तस्मात्सर्वत्र निर्गुण एवेति सिद्धान्तः ।

सम्बन्धः। इह पुनश्चोदनाभेदादेतन्न सम्भवति ॥ १७५ ॥

## कालगुणभेदाच्च ॥ १७६ ॥

अन्यस्मिन्काले पशोः प्रयाजाः कृता अन्यकालीनस्य कथं पुरोडाशस्योपकुर्युरिति। तथा गुणभेदाच्च। पञ्चादशसंख्यागुणका हि प्रयाजाः पशोः पञ्चसंख्यागुणकाः पुरोडाशस्य। अतोपि न तन्त्रेणो पकारसम्बन्धः। एवमाचार्येण पक्षद्वयोपन्यासः कृत.। अत्र य एव न्याय्यतरः स एवाङ्गीकर्त्तव्यः। कश्चासौ। अक्रियान्यस्य समानार्थत्वादिति। अङ्गोपकारस्य हि आसन्नसामर्थ्यादन्त्येव यावत्सम्बन्ध इष्यते। इतरथाङ्गप्रधानयोरसम्बन्ध एव भवति। यदाङ्गानि न तदा प्रधानानि प्रधानकाले च नाङ्गानीति। एवं च सति यद्यप्यत्र चोदनाभेदस्तथापि प्रयाजकृतापूर्वस्य विद्यमानत्वात् पशुपुरोडाशेपि प्रसज्यत एव। चोदनाभेदोऽकारणमिति। तथा कालभेदो गुणभेदश्च। तस्मात्साध्वभिहितमिडामयद्दस्यक्रियान्यस्य समानार्थत्वादिति ॥ १७६ ॥

## पशुर्दक्षिणा धेनुर्वरो वा मार्जिते ॥ १७७ ॥

पशुरेव पशोर्दक्षिणेति पुंपशुर्गृह्यते। वरशब्देन स्वाधीनं द्रव्यमभिरुचितमुच्यते। मार्जितग्रहणाच्च सन्निधानात्पशुपुरोडाशेडामार्जनं गृह्यते। तथा च श्रुतिः। पशुपुरोडाशेडायामेवोपहूतायां दक्षिणा नयेदिति। आचार्येण संज्ञपनं वपोद्धरणप्रसङ्गेन पशुविकर्त्तनाद्युम्याप्रक्षेपणान्तमभिहितम्। अवसरः पुनरयम्। येनैवं श्रूयते। अथ यद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरतीति प्रकृत्य तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येवमस्यैवैतस्य मध्यतः कवेव पशुं पुरोडाशोनुनिष्पद्यतेथ पशुं विशास्तीति। तथा शाखान्तरे अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति। अतोत्रैव पशुविकर्त्तनाद्युम्याप्रक्षेपणान्तम् ॥ १७७ ॥

## [1]ततः शमितारं शास्ति त्रिः प्रच्यावयता-

---

१ अयमर्थः— हे शमितस्त्वं पशुं त्रिः प्रच्यावयतात् प्रच्याव्य उत्थाल्य त्रिःप्रच्युतस्य ऊर्ध्वमावृत्तस्य हृदयमुपरि स्थापयेति।

त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतादित्वा पृच्छा शृतꣳ हविः शमिता३रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति ॥ १७८ ॥

हृदयमुत्तमं कुरुतादित्यनेकपाशुके विपरिणमयते । यत्वा पृच्छादित्येवमादि द्वितीयमनुशासनमतस्तृतीयसवने शामित्रनुशासनप्रभृतीनि यदुक्तं तदेवमादिप्रत्येतव्यम् । पूर्वानुशासनस्य त्वर्थो निर्वृत्त एव ॥ १७८ ॥

त्रिःप्रच्युते हृदयं प्रवृह्योत्तमं करोति ॥ १७९ ॥

प्रच्यावनं चोत्सेचनमुच्यते । वृहन्निष्कर्षं शूलान्निष्कृष्य हृदयमुत्तममवदानोत्तमं मांसानां करोति ॥ १७९ ॥

शूलं चाभूमौ ॥ १८० ॥

करोतीति वर्त्तते ॥ १८० ॥

जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति-शृतꣳ हविः शमिता३रिति त्रिरभिक्रामम् ॥ १८१ ॥

जुह्वा पृषदाज्यं गृहीत्वा चात्वालोत्करावन्तरेणोपनिष्क्रम्य त्रिः कृत्व पृच्छति । शृत हवि॰ शमिता३रित्यभिक्रम्याभिक्रम्य ॥ १८१ ॥

प्रोक्ते तद्देवानामित्याहोपाꣳशु ॥ १८२ ॥

शृतमिति प्रोक्ते शमिता प्रतिप्रश्ने तद्देवानामित्याहाध्वर्युरुपांशु ॥ १८२ ॥

---

यत यदा त्वां कश्चित्पृच्छात्पृच्छेत् कथम् शृतꣳहवि शमिता३रिति तदा त्वं शृतमित्येव ब्रूतात् ब्रूहि । नहि पुनरेवं ब्रूतात् कथं शृतं भगव इति । तथा एवमपि न ब्रूतात् कथ शृतꣳहीति । तदुक्तं भवति, शृतमित्येतावदेव प्रतिवक्तव्यम्, भगवच्छब्दो वा हिशब्दो वा न परन्तु उच्चारणीय इति ।

सन्ते मन इति हृदयमभिघार्य सर्वम् ॥ १८३ ॥

पशुमभिघारयतीति सूत्रशेषः । पृथक् च हृदयग्रहणात् पृषदाज्येनाभिघारणम् । इतरस्येतरेणाज्येन तूष्णीमेव । प्रकृतत्वादभिघारणस्य । मन्त्रस्तु वचनात्तस्यैव हृदय एव ॥ १८३ ॥

पश्वसी वपावद्भृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ॥ १८४ ॥

वपावदित्यन्तरायूपाग्न्योर्हृत्वा दक्षिणतो वेद्यामासादयति । उत्तरत आसादने प्राप्ते वचनाद्दक्षिणत इत्युच्यते । उत्करस्य साधारण्यविकारात्सादने प्राप्ते वचनाद्वेद्यामित्युच्यते प्रतिप्रस्थाता तु प्लक्षशाखास्ववद्यति वचनात् । आलम्भनान्तमध्वर्योरेव ॥ १८४ ॥

जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र्यां च मनोतायै हविषेऽवदीयमानस्यानुगृहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः ॥ १८५ ॥

यथोक्तग्रहणाज्जौहवानि जुह्वामौपभृतान्युपभृति । द्विरवदाने वचनात् तानि द्विर्द्विरवद्यतीति ॥ १८५ ॥

अशेषे गुदतृतीये ॥ १८६ ॥

गुदतृतीये पुनरशेषे गृह्णते ॥ १८६ ॥

वपावद्धिरण्यम् ॥ १८७ ॥

अधस्तादुपरिष्टाच्च । मनोतायैवस्तु प्रतिप्रस्थातुरेवेति सम्प्रदायः ॥ १८७ ॥

रेडसीति वपां गृहीत्वा द्विरभिघार्य प्रयुतमिति पार्श्वेन स्वधितिना वा ॥ १८८ ॥

रेडसीत्यनेन मन्त्रेण वसाहोमहवन्यां वसां गृहीत्वा द्विरभिघार्य प्रयुतमित्यनेन मन्त्रेण पार्श्वेनासिना वाऽऽस्फालयति ॥ १८८ ॥

शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ॥ १८९ ॥

चोदकपरिप्राप्त्या चातः पूर्वं प्राशित्रग्रहणम् । तत आसेचनादि ॥ १८९ ॥

जाघनींगुदन्निधायाहेन्द्राग्निभ्यां च्छागस्य हविषो ऽनुब्रूहीति ॥ १९० ॥

जाघनीगुदनिधानमुच्यते पशुसम्मर्शनाभावप्रदर्शनार्थम् । प्रतिपत्तिर्हि पशुसम्मर्शनम् । न चैते प्रतिपाद्ये कार्यार्थत्वात् । इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीति प्रयोगप्रदर्शनार्थमुक्तमेव ॥ १९० ॥

आश्राव्याहेन्द्राग्निभ्यां च्छागस्य हविः प्रेष्येति ॥ १९१ ॥

एतदपि प्रयोगोपप्रदर्शनार्थमेव ॥ १९१ ॥

प्रस्थितमिति च प्रसुते ॥ १९२ ॥

प्रसुतशब्देन सवनीयो लक्ष्यते नानुबन्ध्योपि । येन सवनीयविकारे त्रिपशौ प्रस्थितवद्भमुपसंहरति । प्रस्थितमिति च त्रिपशोः सर्वमिति ॥ १९२ ॥

अर्धर्चान्तरे याज्यायै वसैकदेशं जुहोति घृतं घृतपावान इति ॥ १९३ ॥

याज्याया इति षष्ठ्यर्थे चतुर्थी ॥ १९३ ॥

दैवतं हुत्वा प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह वनस्पतये ऽनुब्रूहीति ॥१९४॥

प्रदक्षिणग्रहणमितरथाद्यावृत्त्युदासार्थम् । उपपूर्वो हन्तिश्च

प्रहणार्थोऽन्यत्रापि दृष्टः । अथ स्रुवेणोपहत्याज्यमिति । समिधाज्य-स्योपहत्येति च ॥ १९४ ॥

आश्राव्याह वनस्पतये प्रेष्येति ॥ १९५ ॥

अस्य च स्विष्टकृद्विकारत्वं सद्रूपं उक्तम् । देवतासङ्कीर्तनानि चात्र स्विष्टकृद्वदुपलभ्यन्ते । प्रयोजनम् नोपांशुयाजविध्यन्तः स्वरश्च सौविष्टकृत इति ॥ १९५ ॥

हुत्वा समानीय सौविष्टकृतम् ॥ १९६ ॥

हुत्वा वानस्पत्यं समानीय सौविष्टकृतं द्रव्यमौपभृतं स्विष्टकृद्यागं करोतीति सूत्रार्थः । समानयमाने च स्विष्टकृदनुवाचनं कर्तव्यम् । अथ यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आहेति वचनात् ॥ १९६ ॥

प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् ॥ १९७ ॥

व्याघारणप्रसक्तस्यैव व्याघारणे प्राप्ते वाशब्देन पक्षं व्यावर्त्य जुहोतित्वात् जुहोतिस्थानमुच्यते । वाजिनवत् व्याघारयति ॥ १९७ ॥

इयांस्तु विशेषः—

सर्वं जुहोति ॥ १९८ ॥

ऐन्द्रः प्राण इति पशुं सम्मृशति ॥ १९९ ॥

पशु पदस्य मांसोपलक्षणार्थः । तानि चोपयुक्तव्यतिरिक्तानि प्रदातव्यानि । तत्संस्कारार्थमिमाथाशङ्कादर्शनाच्च । विमाथाशङ्का हि तत्रैव भवति नोपयुक्तेषु । अथ पशुं संमृशतीति प्रकृत्याह्वाय यत्पुरा संमृशति य इम उपतिष्ठन्ते विमथिष्यन्त इति शङ्कमान इति । तस्मात्प्राशित्रेडाजाघनीगुदव्यतिरिक्तानां सम्मर्शनम् ॥ १९९ ॥

अवदाय वेडां प्राक् प्रदानात् ॥ २०० ॥

पशुसम्मर्शनम् । वाशब्दो विकल्पार्थः । तत्र जाघनी गुदनिधानोत्तरकालं प्राक्प्रदानादित्युक्तत्वात् ॥ २०० ॥

इडामादधाति ॥ २०१ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थम् । अतश्च प्राशित्रप्रदानं पूर्वम् ॥ २०१ ॥

उपहूतायां वनिष्ठुमग्नीधे ॥ २०२ ॥

प्रयच्छति ॥ २०२ ॥

अध्यूध्नीं होत्रे ॥ २०३ ॥

समर्पयति ॥ २०३ ॥

अवान्तरेडा वा ॥ २०४ ॥

अध्यूध्नी भवति । अवान्तरेडाकार्येऽध्यूध्नी भवतीत्यर्थः । अस्मिंश्च पक्षेऽवान्तरेडा न दीयते । क्लोमादीनामप्यस्मिन्नेवावसरे समर्पणम् । शाखान्तरात् । क्लोम ब्रह्मणे प्लीहं यजमानाय पुरीततमध्वर्यव इति । एवं चात्र विकल्प इत्युक्तमेव ॥ २०४ ॥

मार्जिते प्रेष्यत्यग्नीदौपयजानङ्गारानाहरोप-

यष्टरुपसीद ब्रह्मन्प्रस्थास्यामि समिधमाधा-

याग्निमग्नीत्सम्मृड्ढीति ॥ २०५ ॥

मार्जितग्रहणं च पवित्रप्रतिपत्त्युल्मुकसमासोपलक्षणार्थमपि । येन वैकृतप्रैषसमनन्तरं ब्रह्मन्प्रस्थास्यामीति प्राकृतमाह ॥ २०५ ॥

शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवप-

त्युत्तरस्याम् ॥ २०६ ॥

अग्नीदुपयड्ढोमार्थम् ॥ २०६ ॥

आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये ॥ २०७ ॥

आग्नीध्रीयाद्वा अङ्गारानाहरति । सोमे शामित्राद्वेति विकल्पः । इयांस्तु विशेषो होतृधिष्ण्ये निवापः ॥ २०७ ॥

प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेद-
मनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रम् ॥ २०८ ॥

प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छिद्य प्रच्छिद्य समुद्रं गच्छेति प्रतिमन्त्रम् । अङ्गाराहरणस्य दृष्टार्थत्वात् । अङ्गारेषु जुहोति हस्तेनैव हस्तेन गुदकाण्डं जुहोतीति वचनात् ॥ २०८ ॥

प्रतिवषट्कारं हुत्वा मनो म इति
मुखोपस्पर्शनम् ॥ २०९ ॥

प्रतिप्रस्थाता करोतीति वाक्यशेषः ॥ २०९ ॥

अनुयाजान्ते स्वरुं जुहोति दिवं ते
धूम इति ॥ २१० ॥

अन्तग्रहणाच्च धारानुयाजान्ते स्वरुहोमः । चोदितार्थाभिधानाच्च मन्त्रस्य स्वरुबहुत्वे विपरिणामः ॥ २१० ॥

पशुदेवतावनस्पतिभ्यां स्रुग्व्यूहनम् ॥ २११ ॥

स्विष्टकृद्विकारत्वात् वनस्पतेरप्राप्तं सङ्कीर्तनं वचनादभिधीयते । पशुदेवतायाश्च गुणार्थमुच्चारणम् ॥ २११ ॥

जाघन्या पत्नी संयाजनम् ॥ २१२ ॥

आज्यकार्यापत्तेश्च आसादनालम्भने अस्याः क्रियेते । जाघनी बहुत्वे आसादनमन्त्रे विपरिणामः ॥ २१२ ॥

उत्तानाया देवानां पत्नीभ्यो ऽवद्यति ॥ २१३ ॥

वचनात् ॥ २१३ ॥

इडां च ॥ २१४ ॥

उत्तानाया एव ॥ २१४ ॥

परिवर्त्याग्नये गृहपतये ग्रीवे च ॥ २१५ ॥

अवघाति वचनादेव ॥ २१५ ॥

आज्येन पूर्वे ॥ २१६ ॥

के कर्मणी कर्त्तव्ये। पत्नीसाधनक एव हि यागे जाघनी विहिता अथ जाघन्या. पत्नीः संयाजयन्तीति ॥ २१६ ॥

सर्वा वा जाघन्याविशेषात् ॥ २१७ ॥

सर्वा एव वा जाघन्या कर्त्तव्याः । कुत एतत् । पत्नीसंयाजत्वाविशेषात् । ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्तीति प्रकृत्य चतस्रो देवता यजन्तीति ॥ २१७ ॥

बर्हिर्हुत्वापो गच्छन्ति हृदयशूलमादाय ॥२१८॥

अथ हृदयशूलेनावभृथं यन्तीति श्रुतेः । अवभृथशब्दश्चात्रौपचारिक अपांगमनसम्बन्धात् । अतश्च यागो न भवति । तथाच सूत्रकारः । बर्हिर्हुत्वापो गच्छन्ति हृदयशूलमादायेति । शूलस्यादानमात्रं न शूलेनावभृथमिति । प्रतिपत्तित्वाच्चानेकशूले सर्वेषां प्रतिपत्तिः ॥ २१८ ॥

आहवनीयं वोपस्थाय वृतादीनि चेत् ॥ २१९ ॥

वाशब्दो विकल्पार्थः । यत्र व्रतादीनि तानि च हविर्यज्ञविध इति ॥ २१९ ॥

अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति श्रुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति च ॥ २२० ॥

अभ्यवेत्येत्यवतीर्योदकं श्रुगसीत्यनेन मन्त्रेण । उदितार्थाभिधानाच्चास्यानेकशूले विपरिणामः ॥ २२० ॥

ग्लायन्नुदपातं निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ॥ २२१ ॥

ग्लैहर्षक्षये। ग्लायन्तिति उदर्कं प्रतिगमनमनुत्सहत्त्रंग्रेण यूपमुरषातं निरिच्य शुष्कार्द्रसन्धौ यथोक्तं शूलमुपगूहते ॥ २२१ ॥

धाम्नो धाम्नः सुमित्रिया न इत्युपस्पृश-
न्त्यपः ॥ २२२ ॥

मन्त्राभिधानसामर्थ्यात्। घरुणशब्देन ह्यापोमिधीयते ॥ २२२॥

उपगूहनशेषो वा पूर्वः ॥ २२३ ॥

पूर्वो मन्त्र उपगूहनशेष एव भवति। विशेषेणोपगूहन एव पठ्यते इति ॥ २२३ ॥

अभिमन्त्रणं वोत्तरेण ॥ २२४ ॥

सुमित्रयान इत्यनेनाभिमन्त्रणं वा भवत्यपामुपस्पर्शनं वा। माध्यन्दिनायायां ह्यभिमन्त्रयां पठ्यते अथाभिमन्त्रयन्ते सुमित्रिया न इति। काण्वीयायां चोपस्पर्शनम् अथाप उपस्पृशन्ति सुमित्रियां न इति। अतो विकल्पः ॥ २२४ ॥

न सोमेनूबन्ध्या वर्जम् ॥ २२५ ॥

स चायं शूलावभृथः सोमे नूबन्ध्यावर्जं न भवति। एव हि श्रूयते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्यवशाया एवानूबन्ध्याया इति। तत्रश्चात्र न प्रतिषेधार्थता। अतुल्यप्रमाणविषयत्वात्प्रकरणेन ह्यग्नीषोमीयस्य प्राप्नोति वाक्येन प्रतिषेधः। विकल्पस्य चान्याय्यत्वात्। अन्याय्यो हि विकल्पः। पक्षे बाधात्। अतः पर्युदासरूपेण नाग्नीषोमीयस्य करोति नाग्नेयस्येति। अग्नीषोमीयसवनीयव्यतिरिक्तेषु शूलावभृथ इति वशाया एवानूबन्ध्याया इति नित्यानुवादः ॥ २२५ ॥

वरुणप्रघासवत्समिदाधानम् ॥ २२६ ॥

भवतीति सूत्रशेषः ॥ २२६ ॥

व्रतं विसृज्यापराग्नीनां पूर्वे चतुर्गृहीतं यूपा-

हुतिवत् ॥ २२७ ॥

व्रतविसर्गोपदेशाच्च यत्रैव व्रत तत्रैव भवति नाग्नीषोमीय इति ॥ २२७ ॥

सविहारोतः ॥ २२८ ॥

अतः परमयं विहारः । अत्र कर्मापवर्गो दीयन्त इति केचित् । तदयुक्तम् । अतिप्रणीतस्य पश्वङ्गाभिनिवृत्त्यर्थत्वात् । तदङ्गत्वाच्च कर्मापवर्गाया । नित्याधार्यार्थमित्यपरे । अतिप्रणीतो हि पश्वर्थमुद्धृतस्तदपवर्गे च स एव विहारो न्याय्य इति । सम्प्रदाये तु स विहार इत्यग्निहोत्रार्थमुच्यते । अग्निषोमीयविकारत्वाद्स्तमिते परिसमाप्तिरस्य । तन्त्रे चाग्निहोत्रविहारस्य धारकमतः सविहार इत्यग्निहोत्रार्थमुक्तम् । गतार्थेयः पक्षस्तत्र न्याय्यतर इवाभाति । अग्निहोत्रार्थत्वं हि विहारस्यासम्भव एव । इदमग्निहोत्रं पशुयागान्ते वा हुयेत तन्त्रमध्ये वा । यदि तन्त्रमध्ये प्रसङ्गादतिप्रणीत एव प्राप्नोति । अथान्ते तत्रोपवृत्तकर्मा लौकिक इति पुनरुद्धरणं प्रयोजयति । यत्पुनरुच्यते अग्निहोत्रं विहारस्य 'धारकमिति । तदनुपपन्नमन्यार्थे विहारे तत्परिसमाप्तौ कर्मान्तरं विहारस्य धारकमिति दुःवाक्यं वक्तुम् ॥ १२८ ॥

समारूढनिर्मथिते वा ॥ २२९ ॥

अपराग्नीनां पूर्वे इयमाहुतिर्भवति ॥ २२९ ॥

यथोत्साहं दद्यादस्याम् ॥ २३० ॥

ततो यच्छक्नुयात्तद्दद्यादिति वचनात् ॥ २३० ॥

अग्निं प्रणीय सदो हविर्द्धानाग्नीध्रहोतृधिष्ण्यान्यथोक्तं गृहीत्वाज्यान्यग्नीध्रप्रणयनमग्नीषोमीयदर्शनात् ॥ २३१ ॥

सद आदीनि ह्यग्नीषोमीये दृश्यन्ते । सदसि स्थितेन होत्रा वषट्कारः कृतः । उत यत्सुन्वन्ति तत्सामिधेनीरन्वाहेति हविर्द्धाने

सामिधेन्यनुवचनम् । अग्नीधे प्रत्याश्रावणम् । होतृविष्ण्य उपयट्होमः । गृहीत्वाज्यान्याग्नीध्रप्रणयनम् । आग्नीध्रीयादङ्गाराहरणम् । एतानि ह्यग्नीषोमीये दृष्टानि तद्विकाराद्यत्रापि भवन्तीति ॥ २३१ ॥

न सोमार्थत्वात् ॥ २३२ ॥

सोमार्थानि हि सद आदीनि । सोमं प्रकृत्य श्रूयते । तदुदरमेवास्य सदः शिर एवास्य हविर्धाने बाहुव आग्नीध्रीयश्च मार्जालीयश्चेत्येवमादि ॥ २३२ ॥

प्रसङ्गाद्दर्शनम् ॥ २३३ ॥

सोमप्रयुक्तानामेषां प्रासङ्गिकमग्नीषोमीये दर्शनम् ॥ २३३ ॥

दर्विहोमेष्विदानीं चिन्त्यते । किमपूर्वा दर्विहोमाः उत पूर्ववन्त इति । तत्रेदमुच्यते—

दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात् ॥ २३४ ॥

दर्विहोमास्त्र्यैयम्बकादयः । ते पौर्णमासधर्मा भवन्ति । पौर्णमासशब्देन दर्शस्याप्युपलक्षणम् । पयः साधनकेषु हि द्रव्यसामान्यात् सान्नाय्यधर्मा इष्यन्ते । कुत एतत् पौर्णमासधर्मा इति । जुहोत्यविशेषात् । जुहोति यजत्योर्यनो ऽविशेषः । उभयत्र हि द्रव्यदेवतास्यम् । त्रैयम्बकान्निर्वपति रौद्रानिति । निर्वपतिशब्देनोपधमवगम्यते । सौर्यादिषु दृष्टत्वात् । तथान्यत्र धानाभिर्जुहोति सक्तुभिर्जुहोति लाजैर्जुहोतीति द्रव्यविधानम् । मान्त्रवर्णिक्यो देवता । ततोभयत्र द्रव्यदेवतापरत्वाद्यजतिजुहोत्योरविशेषः । अधर्मकाश्च दर्विहोमाः । धर्मापेक्षायां च सत्यां द्रव्यदेवतापरत्वसामान्यात्पौर्णमासधर्मा इति युक्तरूपता ॥ २३४ ॥

किं च—

जुहूदर्शनाच्च ॥ २३५ ॥

मारुतानि प्रकृत्य श्रूयते । कायमस्यैते पुरोनुवाक्यवन्तो याज्यवन्तः पदकृते स्रुचा हुत्वा भवन्तीति प्रश्नपूर्वकमाह एतेषां वै

सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव कपुन्सलमयं दण्ड इति स्फगनुग्रह । एतेषां च पौर्णमासदृष्टानामनुग्रह एव-पौर्णमासधर्मित्वं दर्शयति ॥ २३५ ॥

एवं सर्वधर्मपरिप्रापाविदमाह—

तूष्णीमनर्थलुप्ताः ॥ २३६ ॥

वचनान्मन्त्रनिवृत्तिः । अनर्थलुप्ता इति । दृष्टेनार्थेनालुप्ता इत्यनर्थलुप्ता । यथैकाग्नित्वेपि गार्हपत्यश्रपणादिनीति ॥ २३६ ॥

एकाग्नयः ॥ २३७ ॥

एकाग्निसाध्या एव पदार्था भवन्ति ॥ २३७ ॥

अप्रयाजा अननुयाजा असामिधेनीकाः ॥ २३८ ॥

तूष्णीमित्युक्तत्वात्सामिधेनी सहचरितकाष्ठनिवृत्तिः ॥२३८॥

अनिगदाः ॥ २३९ ॥

निगदशब्देन स्विष्टकृदुच्यते । अस्विष्टकृत इत्यर्थः ॥ २३९ ॥

प्रतिनिगद्य होमाः ॥ २४० ॥

तूष्णीमित्युक्तत्वाद्देवतां प्रतिनिगद्य होम उच्यते । वषट्कारनिवृत्त्यर्थमुच्यत ॥ २४० ॥

स्वाहाकारप्रदानाः ॥ २४१ ॥

परतन्त्रोत्पत्तयो जुहोतिमात्राः ॥ २४२ ॥

परतन्त्रोत्पत्तयः । यथा वाजपेये ऽश्वहोमे सर्वमेधे च तन्त्रस्य विद्यमानत्वादिति न्यायसूत्रमेतत् ॥ २४२ ॥

पाकयज्ञपशुष्वाग्नीषोमीयविध्यन्त इष्यते तत्प्रसङ्गेन पाकयज्ञविषयमिदमाह—

पाकयज्ञेष्ववत्तस्यासर्वहोमः ॥ २४३ ॥

पाकयज्ञशब्देन च स्मार्ता होमा उच्यन्ते । तत्र होमाय यदवत्त तस्य असर्वस्य होमः कर्तव्यः ॥ २४३ ॥

सामिधेन्यनुवचनम् । आग्नीध्रे प्रत्याश्रावणम् । होतृधिष्ण्य उपयष्टुगः । गृहीत्वाज्यान्याग्नीध्रप्रणयनम् । आग्नीध्रीयादङ्गाराहरणम् । एतानि ह्यग्नीषोमीये दृष्टानि तद्विकाराद्यत्रापि भवन्तीति ॥ २३१ ॥

## न सोमार्थत्वात् ॥ २३२ ॥

सोमार्थानि हि सद आदीनि । सोमं प्रकृत्य श्रूयते । तदुदरमेवास्य सदः शिर एवास्य हविर्धानं बाहव आग्नीध्रीयश्च मार्जालीयश्चेत्येवमादि ॥ २३२ ॥

## प्रसङ्गाद्दर्शनम् ॥ २३३ ॥

सोमप्रयुक्तानामेषां प्रासङ्गिकमग्नीषोमीये दर्शनम् ॥ २३३ ॥

दर्विहोमेष्विदानीं चिन्त्यते । किमपूर्वा दर्विहोमाः उत पूर्ववन्त इति । तत्रेदमुच्यते—

## दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात् ॥ २३४ ॥

दर्विहोमास्त्रैयम्बकादयः । ते पौर्णमासधर्मा भवन्ति । पौर्णमासशब्देन दर्शस्याप्युपलक्षणम् । पयः साधनकेषु हि द्रव्यसामान्यात् सान्नाय्यधर्मा दृश्यन्ते । कुत एतत् पौर्णमासधर्मा इति । जुहोत्यविशेषात् । जुहोति यजत्योर्यतो ऽविशेषः । उभयत्र हि द्रव्यदेवतायम् । त्रैयम्बकान्निर्वपति रौद्रानिति । निर्वपतिशब्देनोपधमवगम्यते । सौर्यादिषु दृष्टत्वात् । तथान्यत्र धानाभिर्जुहोति सक्तुभिर्जुहोति लाजैर्जुहोतीति द्रव्यविधानम् । मान्त्रवर्णिक्यो देवता । ततोभयत्र द्रव्यदेवतायत्वाद्यजतिजुहोत्योरविशेषः । अधर्मकाश्च दर्विहोमाः । धर्माविधायां च सत्यां द्रव्यदेवतात्वसामान्यात्पौर्णमासधर्मा इति युक्तरूपता ॥ २३४ ॥

किं च—

## जुहूदर्शनाच्च ॥ २३५ ॥

मारुतानि प्रकृत्य श्रूयते । षाणमस्यैते पुरोनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीति प्रश्नपूर्वकमाह एतेषां वै

# सप्तमोऽध्यायः ।

## सोमयागनिरूपणम् ।

श्रुत्यर्थमनुचिद्घता ऽर्थार्थेण हविर्यज्ञा अनुविहिता इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो ज्योतिष्टोमो ऽनुविधयः । श्रुतिपाठो हि देवयजन जोपयन्त इति । मन्त्रपाठश्च पदमगन्म देवयजनम् । अत्र च क्रम निरूपणायाधिकरणमारब्धवानाचार्यः ।

दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति श्रुतेः ॥१॥

फलवत्सु कर्म प्रत्यनियमोभिहितो ऽनियमः फलसंयुक्तेष्विति । इह पुनर्वाचनिकः क्रम इष्यते । दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेत नानिष्ट्वेति । एवं हि श्रुतिर्भवति देवरथो वा एतौ यज्ञस्य यद्दर्शपूर्णमासौ स य एताभ्यामिष्ट्वाथान्येन यजते यथा ह वा रथस्पष्टप्रवावसाने देवानामवस्यतीत्यनेन दर्शपूर्णमासपूर्विकान्यत्र प्रवृत्तिरुच्यते । अपरे तु वर्णयन्ति । दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति श्रुतेरितीयमेवेति करणपरिच्छिन्ना श्रुतिः । अस्या एव च देवरथो वा एतौ यज्ञस्य यद्दर्शपूर्णमासाविस्ययमर्थवाद इति । अन्यशब्देन च यजतेरेवाभिधान न जुहोतेरपि । अन्येन यजेतेति वचनात् । तथा च प्रागप्यग्निहोत्रं न निवार्यते । न्यायप्राप्तानियमव्युदासार्थं च श्रुतिग्रहणम् ॥ १ ॥

किमेष एवोत्सर्गः नेत्युच्यते—

सोमेन वोपक्लृप्तसोमः ॥ २ ॥

सोमेन वा इष्ट्वान्येन यजेत य उपक्लृप्तसोमोऽग्निमाधत्ते । उपकल्पितं द्रव्यं येन सोमयागाय स उपक्लृप्तसोमः तस्याधानसमनन्तरमेव सोमे प्रवृत्तिः ॥ २ ॥

कुत एतत्—

हुत्वा च शेषप्राशनम् ॥ २४४ ॥

कुत एतत्—

अग्निहोत्रे तदस्य पाकयज्ञस्येवेति श्रुतेः ॥२४५॥

अग्निहोत्रे हि शेषप्राशनं विहितम्। अथैतदग्नौ हुत्वोत्स-
र्पाचामति निर्लेढि तदसौ पाकयज्ञेन संस्तवं करोति तदस्य
पाकयज्ञस्य रूप पशव्यो हि पाकयज्ञ इति । यदि पाकयज्ञे प्राशन-
मुचितम् तत एतदुपपद्यते नान्यथेति ॥ २४५ ॥

अग्नीषोमीयात्पशुषु ॥ २४६ ॥

प्राशित्रसाधनकत्वसामान्याद्विच्छिन्नप्रवृत्ताविदमाह ॥ २४६ ॥

शाखानियोजनम् ॥ २४७ ॥

शाखायां पशुनियोगः कर्त्तव्यो न यूपे ॥ २४७ ॥

वपां हुत्वा त्रीणि पञ्च सर्वाणि वाऽवद्यति
न सर्वाण्येवेति ॥ २४८ ॥

सर्वाभावे शेषात्स्विष्टकृतः ॥ २४९ ॥

प्रधानावदानशेषात्स्विष्टकृदर्थं ग्रहीतव्यम् ॥ २४९ ॥

स्थालीपाकेन सह प्रदानम् ॥ २५० ॥

सहयुक्ते प्रधाने तृतीयाविभक्तिर्भवतीति । तथा च सह-
त्वमात्रं स्थालीपाकस्य नावदानैस्तुल्यता । प्रयाजनमन्तरायं प्रयो-
क्तृत्वमिति ॥ २५० ॥

पूर्णपात्रो दक्षिणा वरो वा वरो वा ॥ २५१ ॥

आयथस्य मानपात्रं पूर्णं पूर्णपात्र । स्वाधीन द्रव्यमभिद-
चिनं च वरशब्दवाच्यमिति ॥ २५१ ॥

इति षष्ठोऽध्यायः समाप्तः ।

# सप्तमोऽध्यायः ।

## सोमयागनिरूपणम् ।

श्रुत्यर्थमनुविदधता ऽऽचार्येण हविर्यज्ञा अनुविहिताः इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो ज्योतिष्टोमो ऽनुविधेयः । श्रुतिपाठो हि देवयजनं जोषयन्त इति । मन्त्रपाठश्च एदमगन्म देवयजनम् । अत्र च क्रम निरूपणायाधिकरणमारभ्यतानाचार्यः ।

दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति श्रुतेः ॥१॥

फलवत्सु कर्म मत्स्वनियमोऽभिहितो ऽनियमः फलसंयुक्तेष्विति । इह पुनर्वाचनिकः क्रम इष्यते । दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेत नानिष्ट्वेति । एवं हि श्रुतिर्भवति देवरथो वा एतौ यज्ञस्य यद्दर्शपूर्णमासौ स य एताभ्यामिष्ट्वाथान्येन यजते यथा इ वा रथस्पष्टएवावसाने देवानामवस्यतीत्यनेन दर्शपूर्णमासपूर्विकान्यत्र प्रवृत्तिरुच्यते । अपरे तु वर्णयन्ति । दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेतेति श्रुतेरितीयमेवेति करणपरिच्छिन्ना श्रुतिः । अस्या एव च देवरथौ वा एतौ यज्ञस्य यद्दर्शपूर्णमासावित्ययमर्थवाद इति । अन्यशब्देन च यजतेरेवाभिधानं न जुहोतेरपि । अन्येन यजेतेति वचनात् । तथा च प्रागप्यग्निहोत्रं न निवार्यते । न्यायप्राप्तानियमव्युदासार्थं च श्रुतिग्रहणम् ॥ १ ॥

किमेष एवोत्सर्गः नेत्युच्यते—

सोमेन वोपक्लृप्तसोमः ॥ २ ॥

सोमेन वा इष्ट्वान्येन यजेत् य उपक्लृप्तसोमोऽग्निमाधत्ते । उपकल्पितं द्रव्यं येन सोमयागाय स उपक्लृप्तसोमः तस्याधानसमनन्तरमेव सोमे प्रवृत्तिः ॥ २ ॥

कुत एतत्—

## आधानस्य सोमप्राधान्यात् ॥ ३ ॥

सोमप्रधानं ह्याधानं सोमप्रयुक्तम् । एवं हि श्रूयते सोमेन यक्ष्यमाणो नर्तुमृच्छेन्न नक्षत्रमिति । यक्ष्यमाण इत्यनद्यतने लृट् विभक्तिर्भविष्यत्यनद्यतने लृट् स्मर्यते । यक्ष्यमाण इति च विशेषणोपादानसामर्थ्यादपि चायमर्थोऽवगम्यते । न हि कश्चिदयक्ष्यमाणः सर्वस्य विहितत्वात् । तेनानन्तरं यक्ष्यमाण इतिगम्यते । चशब्दश्च व्यवस्थितविभाषार्थः । उपक्लृप्तसोमस्य सोमपूर्वत्वम् इतरस्येष्टिपूर्वत्वमिति । सोमपूर्वत्वेपि चान्येषां यागानां दर्शपूर्णमासपूर्वत्वैव चाप्तिरिति ॥ ३ ॥

यक्ष्यमाण आदधीतेति सोमप्रयुक्त आधाने सोमापवर्गेऽस्याप्यपवर्ग इति परिचोदित उत्तरसूत्रम्—

## नाविशेषात् ॥ ४ ॥

नैतदेवम्, सोमापवर्गेऽप्यपवृज्यत इति । कुत एतदविशेषात् । सर्वकर्मार्थो ह्ययः । आधानं चाग्न्यर्थम् । सोमेन यक्ष्यमाण इत्यनेनाधानस्य कालान्तरतोच्यते न सर्वार्थेनापनीयत इति ॥ ४ ॥

## वसन्तेऽग्निष्टोमः ॥ ५ ॥

अग्निष्टोमग्रहणं ज्योतिष्टोमोपलक्षणार्थं सोक्थ्यादिनिवृत्त्यर्थम् । वसन्ते ज्योतिष्टोम इत्येतदेवोक्तं भवति । यद्वा वसन्ते वसन्ते ज्योतिषा यजेतेति तदग्निष्टोमसंस्थेन । प्राथम्यान्नित्यत्वाच्च । चतुःसंस्थेपि ज्योतिष्टोम उक्थ्यादीनामनित्यत्वं श्रूयते । पशुकाम उक्थ्यं गृह्णीयात् षोडशिना वीर्यकामस्तुवीतातिरात्रेण प्रजाकामं याजयेदिति । प्रकृतिभूताग्निष्टोमसंस्थत्वं हि प्रकृतधर्माम्नानम् । नित्यानित्यसंयोगविरोधाद्वितरासु तद्धर्मप्रसव इति[१] । तस्मात्साधूक्तं वसन्ते·

---

१ अत एव हरिस्वामिभिरप्युक्तम् ' संस्कारमप्यपाठात्त्वग्निष्टोमाद्याः सप्तसंस्थाः निष्कामैरपि कार्या ' इति । ' चतुः सप्तस्वपि ज्योतिष्टोमत्वात् अविशेषाच्च येन केनापीष्ट्वा प्रतियज्ञं ज्योतिष्टोमेनेष्टमेव भवतीति नाग्निष्टोम एवेत्ययं नियम ' इत्यपरे । युक्तं चैतत्,

ग्निष्टोम इति ॥ ५ ॥

ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासो-
मपीथिनः ॥ ६ ॥

पुनरुत्सृष्टो गौर्गृह्यते । तस्य हि वाहनेन दौर्बल्यादुत्सर्गः सम्भवति । क्वचिच्च दृश्यते । पुनरुत्सृष्टो गौरग्नीषोमीय इति । छागो वा स्यादन्वयात् । तस्यापि हि हिमवत्प्रदेशे वाह्यमानस्योत्सर्गः सम्भवति । अतश्चोदकानुग्रहाय छाग एवेति सम्प्रदायः । यत्तु श्रूयते । पुनरुत्सृष्टो गौरिति तत्र गोग्रहणादन्यत्रागौरिति भवति । द्विपुरुषा सोमपीथिन इति यस्य पित्रा पितामहेन वा सोमो न पीतः तस्यैन्द्राग्नो भवति । एवं श्रूयते यस्य पितामहः सोमं न पिबेद्यं स पिपासेत्स ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेति । अत्र च निमित्तवाक्यत्वात्प्रत्येकं वाक्यपरिसमाप्तिः । तथा चान्यतरस्याऽपि सोमापाने भवत्येवैन्द्राग्न इति । अयं चान्वारम्भणीयावत् आरम्भे श्रूयते न च दीक्षणीयावत्तन्त्रमध्ये । अतः पुरुषसंस्कारकत्वात्पूर्वेतरं यजनीयेऽहनि कर्त्तव्यः । पुरुषसंस्कारता चास्य यस्यपिता पितामहः सोमं न पिबेत्स पुण्योहाया इति श्रवणात् । दौर्बल्यापनयनिरासार्थं च श्रुत्या विधानमस्यातः पुरुषसंस्कारांयमिति सत्क्रिया ॥ ६ ॥

षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणा-
च्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्र-
तिहर्त्रच्छावाकनेष्टृग्नीत्सुब्रह्मण्यग्रावस्तुदुन्ने-

---

वचनं विना सङ्कोचस्यायुक्तत्वादिति । अथवाग्निष्टोमसंस्थस्योक्थ्यादीन्प्रति प्रकृतित्वज्ञापनार्थमग्निष्टोम इत्युक्तम् । यतोऽग्निष्टोमसंस्थाप्रकृतिभूता तामेव प्रकृत्य धर्माणामाम्नानात्, इतरेषु च सप्तासु ततो धर्मप्राप्तिरिति ।

तृन्वृणीते१ ॥ ७ ॥

उपक्रमादेव तत्सिद्धे षोडशग्रहणं न कर्त्तव्यम् । वा कर्त्तव्यम् । चमसाध्वर्य्युव्युदासार्थम् । तेषामपि हि श्रुतौ यजतामृत्विगाख्या मा भूदिति । अस्त्विति चेत् । न, सख्यानन्त्यात् । ज्योतिष्टोमस्य यज्ञक्रतो षोडशर्त्विज इति । अतश्च तेषामृत्विक् निबन्धनं कार्यं न भवति ॥ ७ ॥

चतुरोर वाद्यांस्तत्पुरुषा इतरे यथा वेदम् ॥ ८ ॥

आद्यांश्चतुराश्चर्त्विजो वृणीते तस्मात्तत्पुरुषा इतरे यथावेदम् । ये च यद्वेदविहितस्य कर्त्तारः ते तेषामाद्यर्त्विजां पुरुषाः । प्रधानपुरुषवरणेन च तेपि वृता एव भवन्तीत्यभिप्रायः । तथा च लिङ्गमश्वमेधे यन्महर्त्विजो ब्रह्मौदनं प्राश्नन्ति तदेव होतृकाऽन्वाभक्ता इति । वा सर्वान्वृणीते । न चतुर एव । वरणं ह्यानत्यर्थम् । भृतिश्च न चान्यस्मिन्वृते भृते वान्यो वृतो वा भृतो वा भवति । दर्शयति च वृषभृति दक्षिणादानं प्रकृत्य अथ पोत्रेथ नेष्ट्रीयाच्छावाकायाग्नी- ध्रेत इत्येवमादि ॥ ८ ॥

---

१ वरणं नाम करिष्यमाणकर्मस्वरूपदक्षिणाद्रव्यतत्परिमाणश्रावणपूर्वकं स्वयमप्रवृत्तानां ब्रह्मत्वादिषु कर्मसु कर्तृत्वेनाऽभ्यर्थना । तथा हिरण्यवताग्नदक्षिणेन वामाऽश्वदक्षिणेन च रथन्तरपृष्ठेन चतुष्टोमेनाग्निष्टोमसंस्थज्योतिष्टोमेनाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति । अतोऽपि पूर्वं षड्विंशब्राह्मणोक्तं दैवर्त्विग्वरणम् । तद्यथा अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाता आपो मे होत्राशंसिन इति । होत्राभिप्रदेशेन च ब्राह्मणाच्छंसि प्रभृतिग्राद्यर्त्विग्ग्रहणम् । ततो रश्मयो मे चमसाध्वर्यव इति च ।

२ आपस्तम्ब 'आमन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यून स्थविरान्वानूचानानूर्ध्वंवाचो ऽनङ्गहीनानिति प्रकृत्य तान् वृणीत चतुरः सर्वान्वैकेषामध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणो होतारं

ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ॥ ९ ॥

समासलक्षणेन पूर्वं पोतुरग्नीध उच्चारणम् ॥ ९ ॥

देवयजनं जोषयन्ते ॥ १० ॥

शुषिरीक्षणार्थं । तद्धि देवयजनमीक्षन्त इति वचनात् ॥ १० ॥

उच्चतमं सममविभ्रंशि ॥ ११ ॥

तद्वर्ष्म स्यात्समं स्यादिति वचनात् । अविभ्रंशीति अविनश्वर भ्रश्यते हि भूमिर्गर्तैः । यत्रौषधयो न भ्रश्यन्त इत्यपर ॥ ११ ॥

अभितो देवयजनमात्रदेशं पुरस्ताद्वर्जम् ॥ १२ ॥

न पुरस्ताद्देवयजनमात्रमतिरिच्येतेति वचनात् ॥ १२ ॥

प्राक्प्रवणमुदक्प्रवणं यत्किंचानूचानर्त्विज.१ ॥ १३ ॥

अनूचाना अनुवचनसमर्था ऋत्विजो यद्देवाध्यवस्यन्ति तदेव शोभनम् देवयजनमिति ॥ १३ ॥

उद्धतौषधिमूले परेन्ते विमितं कुर्वन्ति ॥ १४ ॥

उद्धता ओषधयो मूलानि च यस्मिंस्तदुद्धतौषधिमूलं देवयजन

---

मैत्रावरुणमच्छावाक ग्रावस्तुतमिति होतॄन् उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् सदस्यं सप्तदशं कौषीतकिन समामनन्ति स सर्वकर्मणामुपद्रष्टा भवति ' इति ।

१ आपस्तम्ब दक्षिणत उन्नतमुदीचीनावनत प्राक्प्रवणमुदक्प्रवण वा देवयजनं यत्र वा बहवो ब्राह्मणा स. स्वाध्यायपुरस्यात् यत्र देवयजन यत्र क्वचनाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते दक्षिणा वाव देवयजन दक्षिणाध्वरकल्याणीददाति देवयजन एव यजत इत्येके ।

तस्यापरेते विमितं कुर्वन्ति । विमितशब्दः समचतुरस्रवाची[1] ॥१४॥

तच्च—

प्राग्वꣳशम् ॥ १५ ॥

यस्य पूर्वापरायतः पृष्ठवंशः ॥ १५ ॥

पुरस्तादुच्चम् ॥ १६ ॥

वचनात् ॥ १६ ॥

प्रतिदिग्द्वारम् ॥ १७ ॥

दिश्यतीकाशान् करोतीति वचनात् ॥ १७ ॥

उदग्वर्जं वा ॥ १८ ॥

वाशब्दः पक्षव्यावृत्तौ । न ह्युदग्द्वारविधायकं वाक्यमस्ति । पूर्वापरद्वारे तु विहिते उभयतो द्वारे अनुविहिते । तथा उभयतो द्वारं हविर्धानं भवति उभयतो द्वारं सदः । तथा शालाया दक्षिणमपि द्वारमवगम्यते । धर्मवुधां हि प्रकृत्याह यथेनां होताभिपर्यन्परापद्येदिति । होतुर्हि नियतं स्थानं, न च दक्षिणद्वारमन्तरेण तत्सन्दर्शनं भवति । तथा च सूत्रकारः दक्षिणतो निघ्नाति होतुः सन्दर्शन इति । अतो द्वारत्रयमेव सप्रमाणमित्युदग्वर्जमेवेत्युक्तम् । यत्तु दिश्यतीकाशान्करोतीति तद्दिक्त्रित्वेऽप्युपपद्यत एव ॥ १८ ॥

शाला[2] वा ॥ १९ ॥

---

१ 'विमितं चतुरस्रं स्याद्दशारत्निप्रमाणतः' इति परिशिष्टकारप्रामाण्यात् ।

२ शालाप्रमाणं चोक्तं परिशिष्टे 'विंशत्यरत्निः शाला स्यात्तदर्धेन तु विस्तृता' इति । तत्साधनं च 'प्रमाणार्थे पाश्यस्यार्ध्यासयष्टं लक्षणं करोति सन्निरञ्छनम्' इति शुल्बोक्तम् । अत्र विंशत्यरत्निमुं रज्जुः दशारत्निरपरा रज्जुः तस्याः प्रथमे षष्ठे भागे निरञ्छनम् तस्या अर्धे षडरत्निमिते ओपपन्ताद्भुजायामिति ।

कर्णेति विमितं चेति विकल्प । शालादीर्घचतुरस्रा ॥ १९ ॥

परिवृते[1] चोत्तरापरे ॥ २० ॥

क्रियेते इति वाक्यशेष ॥ २० ॥

दीक्षाप्रभृतिशुक्लपक्षे पञ्चमीं सप्तमीं वा प्रसुतः ॥ २१ ॥

शुक्लपक्षे दीक्षेतेति वचनात् । तत्प्रभृति पञ्चमीं सप्तमीं वा प्रसुता भवन्ति सौम्यमहर्भवतीति । एका दीक्षा तिस्रो दीक्षा इति वाक्यद्वयमुपनिषदम । दीक्षितत्वं पञ्चमीं प्रसुतः शिवे च सप्तमीमिति । एका दीक्षा तिस्रो दीक्षा इति वक्तव्य यत्पञ्चमीं सप्तमीं वा प्रसुत इत्युक्त तद्दीक्षा शब्दवाच्यार्थव्याचिख्यासया । दीक्षाशब्दो ह्यलौकिकत्वस्य किं वाच्यमित्यत उक्त पञ्चमीं सप्तमीं वा प्रसुत इति । कृष्णाजिनादिभिर्दीक्षितः सन्यावन्त्यहानि प्राकप्रायणीयाया. दीक्षितधर्मैरास्ते तानि दीक्षाशब्दवाच्यानि तेषामिय सख्या एका दीक्षा तिस्र इत्येवमादि । तथा चाहीनेषु मासापवर्गतामभिधाय दीक्षाः सुत्योपसच्छेषेणेत्युक्तम । तथा दीक्षाणामुत्तमे ऽहनि वेद्यग्निमातमिति । अह' शब्देन रात्रिरप्युपलक्ष्यते । तेनाहोरात्रपरिच्छिन्ना दीक्षेति ज्ञापयति । तासु दीक्षासु तेष्वहोरात्रेषु यूपच्छेदनमहावीरकरणघर्मोद्वाहनानि ॥ २१ ॥

कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् ॥ २२ ॥

मानुषादिप्रतिबलाःकालव्यतिक्रमे नित्यानि कर्तव्यानि । प्राप्तो हि तेषां काल इति ॥ २२ ॥

न समत्वात् ॥ २३ ॥

सम इत्र कारणम । दीक्षितस्य सतो नित्यानामक्रिया । सोऽयापि दीक्षित एवेति ॥ २३ ॥

---

१ परि समन्तात् कटादिना वृत परिवृत, तस्मिन् ।

द्वादशदीक्षा अपरिमिता वा[1] ॥ २४ ॥

भवन्तीति वाक्यशेष. ॥ २४ ॥

पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् ॥२५॥

शिष्टानुस्मरणात् ॥ २५ ॥

प्रक्रमोत्थाने विरोधे ॥ २६ ॥

प्रक्रमोत्थाने वा पुण्येऽहनि भवतः । इतरत्र तु श्रुतिविरोधो नियतकालत्वात् ॥ २६ ॥

न वाऽचोदितत्वात् ॥ २७ ॥

न चैतदह्नीकर्तव्यम् । कुत. । अचोदितत्वात् । न ह्यत्र चोदना । स्मृतिस्त्वियम् । तेन यत्र श्रुतिविरोधो नास्ति तत्रास्याः प्रामाण्यमेव । विरोधे त्वप्रामाण्यमिति ॥ २७ ॥

दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्धुत्वा यूपान्ते वाऽग्निं मथित्वा दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः ॥ २८ ॥ [1]

दीक्षासु यूपच्छेदनं कर्तव्यम् । दीक्षाणामेव पूर्वं यूपाहुतिं हुत्वा यूपान्ते वाऽग्निं मथित्वा । कुत एतत् । दीक्षितस्याग्निहोत्रहोमप्रतिषेधश्रुतेः । न दीक्षितस्यापार्थंतामाहुतिं जुहोत्याज्यं चारणी चादाय यूपान्तेऽग्निं मथित्वा यूपाहुतिं जुहोतीति सम्प्रदाये विकल्प. । दीक्षा-

---

१ अत्र चत्वारो दीक्षापक्षाः । एका दीक्षा तिस्रो दीक्षा द्वादशदीक्षा अपरिमिता वा दीक्षेति । अत्रापस्तम्बः 'दशाहमवरार्ध्यं दीक्षितो भवति मासं संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदास्य त्वचास्थि सन्धीयतेऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदास्याङ्गानां हीयते जुहोत्येव तदिति विज्ञायत इति'

सु यूपच्छेदनमित्यस्य सूत्रस्यापराव्याख्या । यूपच्छेदात्प्राग्यूपाहुतिं हुत्वा यूपं ब्रक्ष्यन्वैष्णव्यर्चा जुहोतीति श्रुतत्वात् । यूपान्तिके वाग्निं मथित्वेति वाशब्दो विकल्पार्थः । यत्पुनरुक्तम् हि दीक्षितस्याप्रावेतामाहुतिं जुहोतीति स यूपान्तिकमन्थनविधिशेषभूतोऽर्थवादो न प्रतिषेधविधिरिति । अपि च यूपाहुतिसमनन्तरमेव श्रूयते यदाज्यं परिशिष्टं भवति तदादत्ते यत्तक्षणः शल्कं भवति तत्तक्षादत्ते त आयन्ति स यं यूपं जोषयन्त इति । अतश्च दीक्षाणां प्राग्यूपाहुतिं हुत्वेत्यपव्याख्या ॥ २८ ॥

उच्छ्रयणकाले वोभय; होमच्छेदने सन्निधेः ॥ २९ ॥

उच्छ्रयणकाले वा होम च्छेदने भवतः । कुतः । तत्सन्निधौ हि शिष्येते । यूपं म्रक्ष्यन्वैष्णव्यर्चा जुहोतीति । दीक्षास्वेव वा । दीक्षासु यूपं छिनत्तीति वचनात् । सन्निधिर्वचनेन बाध्यते ॥ २९ ॥

समारोह्याग्नी शालास्तम्भं पूर्वार्द्धे गृहीत्वारणिपाणिराह्वेदमगन्मेति ॥ ३० ॥

समारोपः सूत्रत्रयसिद्ध इत्युक्तम् । स च नित्यधारिपक्षे सर्वार्थत्वान्न भवति सर्वार्थे हि धारणमिति । सोमाधानेपि अग्निनित्यधारीति न समारोप इति सम्प्रदायः । अत्र पुनः शक्यते वक्तुम् । पुरुषधर्मोऽग्निनित्यधारिता । क्रतुधर्मश्च समारोपः । तदकरणे च क्रतोर्वैगुण्यमितरत्र पुरुषस्य । क्रतोश्च साद्गुण्यं कर्त्तव्यं विरोधे न पुरुषस्य । गतश्रियः पक्षेपि तथैवेति चेत् । न । सर्वकर्मार्थत्वाद्धारणस्य । अरण्योरभावात् । अरण्यभावेपि च न भवति । तथा च मन्त्रलिङ्गम् । अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा इति । ये पुनरत्रापि समारोपमिच्छन्ति त एव प्रष्टव्याः । अरण्योरभावे च शालास्तम्भप्रपादने लौकिकारणिपाणिर्भवत्येव यजमानसंस्कारात् । अथारणी पाणौ कृत्वा शालामध्यवस्यतीति । तस्यैवयाजमानम् । सर्वे न सर्वेणेव संवदेतेति यजमानं हि प्रकृत्याहारणीपाणौ कृत्वेति । द्वादशाहे च सर्वे अरणिपाणयो गृहपतिमन्वारभन्ते

द्वादशदीक्षा अपरिमिता वा[1] ॥ २४ ॥

भवन्तीति वाक्यशेषः ॥ २४ ॥

पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् ॥२५॥

शिष्टानुस्मरणात् ॥ २५ ॥

प्रक्रमोत्थाने विरोधे ॥ २६ ॥

प्रक्रमोत्थाने वा पुण्येऽहनि भवतः । इतरत्र तु श्रुतिविरोधो नियतकालत्वात् ॥ २६ ॥

न वाऽचोदितत्वात् ॥ २७ ॥

न चैतदङ्गीकर्तव्यम् । कुतः । अचोदितत्वात् । न ह्यत्र चोदना । स्मृतिस्त्वियम् । तेन यत्र श्रुतिविरोधो नास्ति तत्रास्याः प्रामाण्यमेव । विरोधे त्वप्रामाण्यमिति ॥ २७ ॥

दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्धुत्वा
यूपान्ते वाग्निं मथित्वा दीक्षितस्याग्नि-
होमप्रतिषेधश्रुतेः ॥ २८ ॥

दीक्षासु यूपच्छेदनं कर्तव्यम् । दीक्षाणामेव पूर्वं यूपाहुतिं हुत्वा यूपान्ते वाग्निं मथित्वा । कुत एतत् । दीक्षितस्याग्निहोत्रहोमप्रतिषेधश्रुतेः । न दीक्षितस्याप्रायत्यमाहुतिं जुहोत्याज्यं चारणीं चादाय यूपान्तेऽग्निं मथित्वा यूपाहुतिं जुहोतीति सम्प्रदाये विकल्पः । दीक्षा-

---

१ अत्र चत्वारो दीक्षापक्षाः । एका दीक्षा तिस्रो दीक्षा द्वादशदीक्षा अपरिमिता वा दीक्षेति । अथापस्तम्बः 'दशाहमवरार्ध्यं दीक्षितो भवति मासं संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदास्य त्वचास्थ्यभिसंधीयतेऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदस्याङ्गानां हीयते जुहोत्येव तदिति विज्ञायत इति '

नापित उपतिष्ठते नखानि निकृन्तत्यङ्गुष्ठ-
प्रभृतीनि दक्षिणहस्तस्य प्रथमम् ॥ ३६ ॥

स वै नखान्येवाग्रे निकृन्तत इति प्रकृत्य सर्वं श्रूयत इति॥३६॥

दक्षिणं गोदानं वितार्योनत्तीमा आप इति ॥३७॥

वितारणं च केशोन्मोचनं कफतादिना । उनत्ति । उन्दी क्लेदने । उनत्ति क्लेदयति तिम्मयतीति । इमा आप इत्यनेन मन्त्रेण । गोदानं च दक्षिण शिरसः पार्श्वे गवि पृथिव्यां दीयत इति गोदानम् ॥ ३७ ॥

यूपवत्कुशतरुणम् ॥ ३८ ॥

अन्तर्दधाति ॥ ३८ ॥

क्षुरेण चाभिनिधाय ॥ ३९ ॥

यूपवदेव ॥ ३९ ॥

छित्त्वोदपात्रे प्रास्यति ॥ ४० ॥

छित्त्वा केशानुदपात्रे प्रास्यति ॥ ४० ॥

एवमुत्तरं तूष्णीम् ॥ ४१ ॥

उन्दनादि सर्वं गोदानं करोति ॥ ४१ ॥

नापिताय क्षुरं प्रयच्छति ॥ ४२ ॥

तेन केशश्मश्रु वपति ॥ ४३ ॥

---

श्नीत ' इति । आपस्तम्बसूत्रे च अन्नमश्नाति सर्पिर्मधुमिश्रं दधि मधु वा यद्दस्य मनसः प्रियं तदश्नाति तद्देवास्यामुष्मिँल्लोके भवतीति विज्ञायते तथादित स्वाचथा ततो दीक्षासु पर्णीय पर्णीया प्रतमुपेयाद्पुरस्ताद्य केशपक्षनात्सासो वा परिधानान्नाजनमके समामनन्ति ' इति ।

इमश्रुणश्च क्षुरान्यत्वं प्रसिद्धम् । अतस्तेनेत्युच्यते ॥ ४३ ॥

आपो अस्मानिति स्नात्वोदिदाभ्य इत्युत्का-
मत्युत्तरपूर्वार्द्धम् ॥ ४४ ॥

यथार्थं त्वाच्चोदकुम्भोदकेनैव[1] स्नानम् । उदिदाभ्य इत्यनेन मन्त्रेण उत्क्रामत्युत्तरपूर्वार्द्धम् ॥ ४४ ॥

क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतम् ॥ ४५ ॥

क्षौममातसमहतमधौतम् । निष्पेष्टवै ब्रूयादिति प्रैषपूर्वकं प्रक्षालनं कृत्वा परिधत्ते ॥ ४५ ॥

चेदद्भिरभ्युक्ष्य ॥ ४६ ॥

अद्भिरभ्युक्ष्य वा परिधत्ते ॥ ४६ ॥

स्नातवस्त्रं वामौतधौतं विचितकेशं प्रसारि-
तदशं दीक्षातपसोरिति ॥ ४७ ॥

स्नातवस्त्रं वा अरजकशौचीकृत विचितकेशप्रसारितदशमित्यहतमपि । दीक्षातपसोरित्यनेन मन्त्रेण ॥ ४७ ॥

न नीविं कुरुते ॥ ४८ ॥

अनीविकं परिधत्ते । समाचारपरिप्राप्तमुत्तरीयम्[2] ॥ ४८ ॥

एवं प्रतिप्रस्थातापरस्मिन्परिवृते पत्नीं
तूष्णीम् ॥ ४९ ॥

---

१ तडागादिष्वित्यन्ये । अत्र 'यथायत्तस्त्वप्सु स्नाति' इत्याद्यः सूत्रकारोक्तः पाठः ।

२ 'तत उत्तरीयं न धारयति' इति भाष्यपाठात् । एवमेवेति हरिस्वामी, सर्वत्र तथैव दर्शनादेकवस्त्रविषयकाणां प्रमाणाभावात् । सत्याषाढे 'नाग्न्ये वासनी' इत्याद्या ध्रुवो मूलम् । एकः व्याघो वासो नीविदर्शनात् ।

दीक्षयतीति वाक्यशेषः ॥ ४९ ॥

वपनं वा ॥ ५० ॥

वपनं च वा भवति वा न भवति । वपनाभावे च वितारणोन्दनादि न भवति, वपनार्थत्वात् ॥ ५० ॥

धेन्वनडुह्योर्नाश्नीयात् ॥ ५१ ॥

धेन्वनडुन्मांसं नाशितव्यम् । स धेन्वै चानडुहश्च नाश्नीयादिति वचनात् ॥ ५१ ॥

क्रतुमध्ये समाम्नानात् क्रतुधर्मोऽयमिति प्राप्त आह—

पुरुषधर्मो वासम्भवात् ॥ ५२ ॥

पुरुषधर्मं एवायं क्रत्वसम्भवात् । प्राप्तिपूर्वको हि प्रतिषेधो भवति । न चेह प्राप्तिरस्ति । कथं, येन दीक्षितस्य पयो व्रतो विहितो निवृत्ते च पयसि हविः शेषभक्षणोक्ता । अतः प्रतिषेधस्यासम्भवात् पुरुषधर्मं एवायमिति सम्प्रदायः । इदाशनविषयोऽयं प्रतिषेध इत्यपरे । तथा च प्रकरणस्याबाध इति ॥ ५२ ॥

अंसलभोजनं वा ॥ ५३ ॥

अंसलः पाघा स्थूल उच्यते । तस्य वा भोजनं भवति । अन्नाम्येषाद्यमंसलं चेद्भवतीति ॥ ५३ ॥

प्रपाद्याग्नावैष्णव एकादशकपालः ॥ ५४ ॥

प्रपाद्य वाहुगृहीतं विमिते प्रवेश्याग्नावैष्णव एकादशकपालः कर्त्तव्यः । एकादशकपाल इति श्रुतिरनुक्त्वा एकद्विशब्दपरिमाणादिभिः प्राप्नोति कपालसंख्येति ज्ञापनाय ॥ ५४ ॥

आदित्येभ्यो वा चरुः ॥ ५५ ॥

सा चेयं स्वपदगनविभागात्तदैव आदित्येभ्यश्चरुं निर्वपन्तीति वचनात् ॥ ५५ ॥

प्राक्समिष्टयजुषः करोति ॥ ५६ ॥

दीक्षणीयां हि प्रकृत्य श्रूयते तस्मात्तस्य यज्ञस्य समिष्टयजुष्यन्नं जुह्वति ॥ ५६ ॥

समिष्टयजुर्वर्जं वा ॥ ५७ ॥

समिष्टयजुरेव वा न जुहोति । सर्वेत्वायैव समिष्टयजुरेव न जुहोतीति वचनात् । अतश्च बर्हिर्होमादयः प्रवर्तन्त एव । ध्रौवाज्यस्यौद्ग्रहणेषु विनियोगउक्तः पञ्चमं जुह्वां ध्रौवमासिच्येति । तद्विनियोगोत्तरं बर्हिर्होमादय इति न्याय्यम् ॥ ५७ ॥

उपांशु चरन्ति प्रागग्नीषोमीयात् ॥ ५८ ॥

तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति वचनात् ॥ ५८ ॥

वागन्तेन वा दक्षिणीयां नीचैस्तरां नीचैस्तरामितरे ॥ ५९ ॥

यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् मन्द्रं प्रायणीयायाम् मन्द्रतरमातिथ्यायाम् ॥ ५९ ॥

उपांशूपसदः[१] ॥ ६० ॥

उपांशूपसत्स्वित्युपांशूपसदो भवन्ति । उपसदामुपांशुत्वविधानात्प्रागग्नीषोमीयादुपांशुपक्षादिदमन्यत्पक्षान्तरं तत्रैव दीक्षणीयादिषु स्वरविकल्प इति । तथा च वागन्तपक्ष एव तत्रो महेन्द्र-

---

१ 'धारयति ध्रौवमाज्यं यत्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्त्येकेषां यावत्यस्य वाग्भवति तावतीं दीक्षणीयायामन्वाह ततो नीचैस्तरां प्रायणीयां ततो नीचैस्तरमातिथ्यायामुपांशूपसत्सु चैवाग्नीषोमीये, मन्द्रेण वा दीक्षणीयायां मन्द्रतरेण प्रायणीयायां मन्द्रतमेनातिथ्यायामुपांशूपसत्सु चैवाग्नीषोमीय, उपांशु वा दीक्षणीयायामुपांशुतरं प्रायणीयायामुपांशुतममातिथ्यायामुपांशूपसत्सु चैवाग्नीषोमीय' इत्यापस्तम्बसूत्रमप्यत्र गमकम् ।

ध्वर्युरुपांशिवत्युपांशुत्वमुच्यते प्रागग्नीषोमीयादुपांशुपक्षे च दीक्षितायं ब्राह्मण इत्याह त्रिरुच्चैरित्युच्चैष्ट्वमुच्यते ॥ ६० ॥

शालां पूर्वेण तिष्ठन्नभ्यंक्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादको महीनां पयो- सीति ॥ ६१ ॥

शालायाः पुरस्तात्कुशेषु व्यवस्थितं यजमानमध्वर्युरभ्यङ्क्ते । तमभ्यनक्तीति वचनात् । नवनीतेन शिरस आरभ्य अनुलोमं महीनां पयोसीत्यनेन मन्त्रेण सपादकश्चाभ्यङ्क्त इति ॥ ६१ ॥

वृत्रस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेन ॥ ६२ ॥

वृत्रस्येत्यनेन मन्त्रेणाक्षी अनक्ति । त्रिककुत्पर्वतः । तदीयमञ्जनं त्रैककुदाञ्जनम् यत्सौवीरकमिति प्रसिद्धं तेनाञ्जनेन स्वयमेव यजमानः ॥ ६२ ॥

अभावे ऽन्यत् ॥ ६३ ॥

त्रैककुदाभावेऽन्येनाञ्जनेन ॥ ६३ ॥

द्विर्दक्षिणं त्रिरुत्तरं पराक् ॥ ६४ ॥

परागुपानक्तीति वचनात् । पराग्ज्यते नैतश्चामुतश्च ॥ ६४ ॥

सकृत्सकृन्मन्त्रः ॥ ६५ ॥

द्रव्यान्तरत्वाच्च । प्रत्यञ्जनं मन्त्रपरिप्राप्तौ वचनात् सकृत्मन्त्रवचनम् ॥ ६५ ॥

शरेषीकया साग्रया ॥ ६६ ॥

सतूलयाक्ष्यावनक्तीति ॥ ६६ ॥

कुशपवित्रैश्चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र हिर-

परि नाभ्युन्मृज्य प्रदक्षिणं सकृदवाङ् ॥६७॥

कुशा एव पवित्राणि कुशपवित्राणि । तैर्यजमानं पावयति सप्तभिः सप्तभिश्चित्पतिर्मेति प्रतिमन्त्रम् । अच्छिद्रेणेति सर्वत्र अनुषङ्गः । त्रिरुपरि नाभ्युन्मार्जनम् । प्रदक्षिणं सप्तभिः सप्तभिः । सकृच्चावाङ्नाभेः सप्तभिरेव च । एवं च सप्तभिः सप्तभिः पावयतीत्युपक्रम्य एकविंशतिरेव सर्वादस्युपपद्यते ॥ ६७ ॥

एकेन त्रिभिः सप्तभिर्वा ॥ ६८ ॥

एवमपि हि श्रूयते पवित्रं प्रकृत्य तद्वा एकं स्यात् अथो अपि त्रीणिस्युः अथो अपि सप्तस्युरिति एता एवोभयत्र पवित्रत्रयस्यापावाङ्नाभेरुपरिष्टाच्चेति । काण्वीयायां तु नवकृत्वः पावयति इति श्रूयते । तत्कथमुपपद्यते । चित्पतिर्मेत्येवमादिभिर्मन्त्रैः साभ्यासमेकं पावनमुपरि नाभि, तथा द्वितीयम् । एवमेव सकृदर्वागिति । एवं चाभ्यासापेक्षया नवकृत्वः पावयतीत्युपपन्नार्थं भवति । अभ्याससमुदायापेक्षया च त्रिरुपरि नाभि सकृदर्वागिति च सूत्रं नेयम् ॥ ६८ ॥

एकशतेन वा राजसूये ॥ ६९ ॥

पावयति वाशब्दो विकल्पार्थः ॥ ६९ ॥

आवोदेवास इति वाचयति ॥ ७० ॥

यद्व यजमानकं सर्वेषां वाचनम् । प्रतेति च प्रयोगः ॥ ७० ॥

स्वाहा यज्ञमित्यङ्गुली अचते नाना हस्तयोः ॥ ७१ ॥

नाना पृथक् हस्तयोः । द्वे अपि कनिष्ठिके सङ्कोचयति स्वाहा यज्ञमित्यनेन मन्त्रेण ॥ ७१ ॥

एवं शेषं प्रतिमन्त्रम् ॥ ७२ ॥

एवमेवाङ्गुल्यचनं शेषं प्रतिमन्त्रम् ॥ ७२ ॥

उत्तमेन मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतः ॥ ७३ ॥

उत्तमेन मन्त्रेण मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतो भवति ॥ ७३ ॥

अङ्गुष्ठौ तत्सहिते चोत्सृजति ॥ ७४ ॥

अङ्गुली उत्सृजति ॥ ७४ ॥

वाग्यतं प्रवेशयत्याहवनीयगार्हपत्या-न्तरेण ॥ ७५ ॥

वाग्विसर्गकालस्यानुक्तत्वादेवमन्त एव वाग्यम इति । एवं मुष्टिकरणवाग्यमनोत्कर्षे प्रवेशने न वाग्यम इति । वचनाच्चाहवनीयगार्हपत्यावन्तरेण प्रवेशनम् ॥ ७५ ॥

सोस्य सञ्चर आ प्रसवात् ॥ ७६ ॥

सोस्य यजमानस्य सञ्चरो गमनमार्गः । आङ्प्रयोगसामर्थ्याच्च मर्यादा द्रष्टव्या नाभिविधिरिति ॥ ७६ ॥

एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम् ॥ ७७ ॥

दीक्षयतीति वाक्यशेषः ॥ ७७ ॥

अपरेण वा प्रवेशयति ॥ ७८ ॥

प्रकृतत्वाद्गार्हपत्याहवनीयौ वा अन्तरेणेति विकल्पः । यजमानके अभ्यञ्जनादि वाङ्गृहीतप्रपादनान्तं पत्न्याः संस्कारः स्यात् । अप्सु दीक्षायामपि प्रपादनान्तमेकैकस्यैव ॥ ७८ ॥

औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रम् ॥ ७९ ॥

औद्ग्रभणानीति वैदिकी संज्ञा । तथा हि संव्यवहारो दृश्यते । प्राकृतान्यौद्ग्रभणानि जुहोतीति । स्थाल्याः सकाशात् स्रुवेण आकूत्या इति प्रतिमन्त्रम् ॥ ७९ ॥

तृतीयं जपत्येव ॥ ८० ॥

तृतीयं मन्त्रं जपत्येव न जुहोति। एवकारकरणाच्च स्रुवस्यानाय-स्थितस्यैव जपः ॥ ८० ॥

पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयꣳ स्रुवमभिपूरयति विश्वो-देवस्येति ॥ ८१ ॥

पञ्चमं होमं प्रति ध्रौवमाज्यं जुह्वामासिच्य द्विश्च स्थाल्या स्रु-वेणासिच्य तृतीयꣳ स्रुवमभिपूरयति। अधिकारात् स्थालीत एव। अ-भिपूरणस्य दृष्टार्थत्वात् । जुह्वामासिच्य ॥ ८१ ॥

एतामेव वा पूर्णां जुहुयात् ॥ ८२ ॥

तमेवैकामाहुतिं पूर्णां जुहुयात् । तं वै यथेमां जुहुयात्पूर्णां जुहुयादिति श्रुतेः । दीक्षणीयाद्यन्तोपसत्साध्यत्वाद्दीक्षणीयाग्रमौद्ग्र-भणानि। एवं सति दीक्षणीयामाये अस्थिपक्षे न भवन्ति । अत ऊर्ध्वं यदि होमाद्य इति ॥ ८२ ॥

आहवनीयं दक्षिणेन कृष्णाजिने माꣳसस-हिते स्यूतान्ते तद्गर्मसु पश्चादासज्जनवर्ती निदधाति ॥ ८३ ॥

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणातीति व-चनात् । माꣳससहिते मांसोपलक्षितप्रदेशसम्बद्धे । स्यूतान्ते सिवु तन्तुसन्ताने । तस्य क्तप्रत्ययसम्प्रसारणस्यैतद्रूपं स्यूतान्त इति । परिवी-विता अन्तावयोर्यत्र स्यूतान्ते । तद्वर्मसु पश्चात् चर्मणोऽपि विकर्षण-काल एव कीलकैर्वितनन क्रियते । तेन पश्चार्धात्कर्षणाच्छिद्रेषु परिसं-

चनम् अन्यथानियमः । आसञ्जनवती नागदन्तिका येनासज्यते तदासञ्जनं अवलगनमित्यर्थः । उक्तलक्षणे कृष्णाजिने निदधाति ॥ ८३ ॥

एकं चेत्पश्चात्पादाद्द्विगुणम् ॥ ८४ ॥

एकं चेन्निदधाति पश्चात्पादौ गृहीत्वा द्विगुणं क्रियते तत्पश्चार्धं प्रत्यस्यतीति वचनात् ॥ ८४ ॥

दक्षिणं जान्वाच्यास्ते पश्चादेनयोः ॥ ८५ ॥

यजमानः । स हि दीक्षते इति । जान्वाच्य भूमिं गमयित्वास्ते । प्राङ्जान्वक्त उपविशतीति श्रुते ॥ ८५ ॥

शुक्लसन्धिमालभते ऋक्सामयोरिति ॥ ८६ ॥

कृष्णाजिनयो. ॥ ८६ ॥

दक्षिणजानुनारोहति शर्मासीति तेनास्तेऽपरेन्ते ॥ ८७ ॥

तेनैव दक्षिणजानूपलक्षितप्रदेशेन अपरेन्ते कृष्णाजिनस्यास्ते ॥ ८७ ॥

मेखलां बध्नीते वेणिं त्रिवृतां शणमुञ्जमिश्रामन्तरां वाससः ऊर्गसीति ॥ ८८ ॥

मेखलां बध्नीते ऊर्गसीत्यनेन मन्त्रेण । वेणिं ग्रथितां न रज्जुवद्वलिताम् । त्रिवृताम् त्रिग्रथितां सा वै त्रिवृद्भवतीति । शणमुञ्जमिश्रां शार्णा भवति । मुञ्जवलयनां नस्याभवतीति वचनात् । अन्तरां वाससः । तस्मादन्तरं वाससो भवतीति । मेखलाबन्धनमप्ययौमेखलया यजमानं दीक्षयती श्रुते ॥ ८८ ॥

नीविं कुरुते सोमस्य नीविरिति ॥ ८९ ॥

नीविरपर्यासिकोच्यते ॥ ८९ ॥

शिरः प्रोर्णुते ॥ ९० ॥

विष्णोः शर्म्मेति ॥ ९० ॥

कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते ॥ ९१ ॥

सामर्थ्यपरिप्रापितस्याप्युत्तरे सिचि बध्नीत इति नोक्तम् । स्वयमध्वर्युर्बध्नाति । कृष्णविषाणया यजमानं दीक्षयतीति वचनात् ॥ ९१ ॥

तया कण्डूयनम् ॥ ९२ ॥

क्रियते ॥ ९२ ॥

उपस्पृशत्येनया दक्षिणस्य भ्रुव उपरीन्द्रस्य योनिरिति ॥ ९३ ॥

एनया कृष्णविषाणया । स च कृष्णविषाणा संस्कार इति सम्प्रदायः । मन्त्रलिङ्गादिन्द्रस्य योनिरसीति । एष च नार्थोऽन्यापि संस्कर्त्तव्येति । नेत्यपरे । दीक्षितसंस्काराभिप्रवृत्तत्संस्कारोऽयमिति गम्यते । मन्त्रस्य च क्रियासाधनभूतद्रव्याभिधानमुचितमेव क्रिया च यजमानार्थेति ॥ ९३ ॥

भूमौ चोल्लिखति सुसस्या इति ॥ ९४ ॥

सस्योपकाराय ॥ ९४ ॥

मुखसम्मितमौदुम्बरं दण्डं प्रयच्छति ॥ ९५ ॥

अध्वर्युर्यजमानाय ॥ ९५ ॥

उच्छ्रयस्वेत्येनमुच्छ्रयति ॥ ९६ ॥

तमुच्छ्रयतीति वचनात् ॥ ९६ ॥

तं दक्षिणत उपधत्ते ॥ ९७ ॥

तन्निर्देशाद्यार्थलक्षणमुपधानम न पदार्थतया ॥ ९७ ॥

अत्र वा मुष्टिकरणवाग्यमने ॥ ९८ ॥

अत्र ह्येकेऽङ्गुलीरन्यच्छन्ति वाचं च यच्छन्तीति वचनात् । वाशब्दो विकल्पार्थः ॥ ९८ ॥

एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि ॥ ९९ ॥

दीक्षयतीति वाक्यशेषः ॥ ९९ ॥

योक्त्रेण वा ॥ १००॥

सन्नह्यति । वा न सन्नह्यति । योक्त्रेण पत्नीं दीक्षयतीति वचनात् । दीक्षार्थमेतत् । प्रसङ्गात्पत्नीसन्नहनं च । स योक्त्रकाया इति योक्त्रनिवृत्तिरुक्ता । एवं यत्कैश्चिद्दैष्टिकयोक्त्रधर्माः क्रियन्ते इति तदयुक्तम ॥ १०० ॥

जालं वा शिरसि त्रिपर्यायम् ॥ १०१ ॥

जालं शिरसि पत्न्या भवति । त्रिपर्यायमेकरज्जुं वा ॥ १०१ ॥

पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने ओल्लेखनात्करोति मेखलादि चेत् ॥ १०२ ॥

कर्म भवति । तत उल्लेखनात्करोतीत्यर्थः ॥ १०२ ॥

कृष्णाजिनादि चेद्दण्डान्तम् ॥ १०३ ॥

अथ कृष्णाजिनादि दण्डान्तम । इदं श्रूयते आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः । तथा कृष्णाजिनेन दीक्षयति मेखलया दीक्षयति कृष्णविषाणया दीक्षयति दण्डेन दीक्षयति । तत्रैतत्सन्दिह्यते । किमाग्नावैष्णवेन दीक्षासंस्कारः क्रियते उत कृष्णाजिनादिभिः । अथ वा सर्वैरिति । किं तावत्प्राप्तम् आग्नावैष्णवेनेति । कुत एतत् । एवं हि श्रूयते । आग्नावैष्णवमेकाद-

शकपालान्निर्वपेद्दीक्षिष्यमाण इति । दीक्षासंस्कारेण व्याप्यमानो गृह्यमाण आग्नावैष्णवं निर्वपतीति । एतच्चैवमुपपद्यते यद्यनेन दीक्षा संस्कार उपजन्यत इति । एवं च सति कृष्णाजिनादीनां सम्पत्त्यर्थता भवति । कृष्णाजिनेन दीक्षयति । कृष्णाजिनमस्य सम्पादयति । कृष्णाजिनवन्तं करोतीत्यर्थः । तथा कृष्णविषाणया सम्पन्नं करोति, दण्डेन चेति । अथ प्रयोजनमेषां कृष्णाजिनस्यासनम् । कृष्णविषाणया कण्डूयनम् । दण्डस्य गवादिनिवारणम् । किं चिदर्थात् किञ्चिद्वाक्यादतः सम्पत्त्यर्थतैषामित्येवं प्राप्त उच्यते । नैतदेवम् । न हि दीक्षिष्यमाण आग्नावैष्णवं निर्वपतीत्यनेन दीक्षासंस्कारः क्रियत इत्युच्यते । किं तर्हि भविष्यन्ती दीक्षा आग्नावैष्णवानुष्ठानाय निर्दिश्यते । अयं हि लृडन्तः शब्द लृड्विभक्तिश्चानद्यतने भविष्यति भवति । भविष्यत्यद्य कृष्णाजिनादिभिर्दीक्षेत्याग्नावैष्णवं निर्वपेदित्यस्यार्थः । नाग्नावैष्णवेन दीक्षा क्रियत इति । यथा भोक्ष्यमाण आचामेदिति भविष्यन्ती भुजिक्रिया आचमनविधानाय निर्दिश्यते । नाचमनेन भुजिर्निष्पाद्यते । एवमिहापि दीक्षिष्यमाण आग्नावैष्णवं निर्वपेन्न तेन दीक्षितः क्रियत इत्युच्यते । यथा सोमेन यक्ष्यमाण आदधीतेत्यनया लृड्विभक्त्या सामयाग आधानं प्रतिनिर्दिश्यते । एवमिहापीति । अपि च कृष्णाजिनादीना साक्षात्कारेण दीक्षासंस्कारः प्रतिविधीयते । कृष्णाजिनेन दीक्षयतीत्येवमादिना । तेषां सम्पत्त्यर्थत्वे लक्षणाश्रिता भवति श्रुतिश्च बाधितेति । अतश्च कृष्णाजिनादीन्येव दीक्षाकरणानि नाग्नावैष्णवं इति । यद्येवमेककार्यत्वाद्विकल्पः कस्मान्न भवति । नात्र विकल्प अदृष्टसंस्कारोपजनकत्वात् । अदृष्टो हि दीक्षासंस्कार एभिरुपजन्यते । अत एककार्यत्वेपि न विकल्पः । यथाधारे स्रुवादीनामिति । तथा च पाके कर्त्रादीनाम् । कर्तृनावत्करणानि समाधत्ते । स्थालीसंपचनसम्प्रधारणम् करोति, काष्ठानि ज्वलनमभिनिर्वर्तयन्ति, दर्वी च घट्टनमिति, एकप्रयोजनत्वेप्यवान्तरकार्यभेदान्न विकल्पः । एवमिहाप्याम्नानसामर्थ्यादवान्तरकार्याणि कृष्णाजिनादीनां कल्प्यन्ते । तस्मान्न विकल्पः । ननु च कृष्णविषाणया कण्डूयतीति कण्डूयनार्थता कृष्णविषाणाया इति । सत्यमेवम्, तत्परिग्रहकाले निर्दिष्टकार्यं तु न निवार्यते । तस्माद्दीक्षार्थमेवोत्पन्नायाः कण्डूयनार्थतापीति । अपि च भगवतः कात्यायनाचार्यस्यायमेवाभिप्रायो येनाश्रियते दीक्षणीया पुरुषसंस्कारार्थीयमिति

सूत्रितम् । यदि हि दीक्षणीया पुरुषसंस्कारार्था स्यात् भेदेनोपादानं नाकरिष्यत् । करोति च । तस्मात्पुरुषसंस्कारार्थताग्नावैष्णवस्य क्रतूपकाराय शास्त्रानस्येति । स च देवतापरिग्रहद्वारेणेत्युक्तमेवाचार्येण । अभ्युपगम्यापि ब्रूमः । यद्यपि चाग्नावैष्णवस्य दीक्षार्थता भवेत् दण्डान्तेरेव दीक्षितो भवति न तावन्मन्त्रेणेति । चिन्तायाः प्रयोजनं यदि नाम मानुपादेः प्रतिपालात्प्राग्दण्डप्रदानादग्निहोत्रकाल आपतेत् प्राप्तनिमित्तत्वाददीक्षितत्वाच्च होतव्यमेवाग्निहोत्रमिति । एवं तावदग्नावैष्णवस्य दीक्षासंस्कारकरणे ऽनुप्रवेशो नास्तीत्युक्तम् । यथानुप्रवेशो भवति तथोच्यते । लड्विभक्तिः क्रियार्थेष्वपि स्मर्यते । तुमुण्ण्वुलौ क्रियायां क्रियार्थायामित्यनुवर्त्तमाने लृट् चेति सूत्रितं चशब्दात् क्रियायां क्रियार्थायामिति । अत्रोदाहरणं करिष्यामीति व्रजति हरिष्यामीति व्रजतीति । एवमिहापि दीक्षिष्यमाणो निर्वपेदित्याग्नावैष्णवस्य दीक्षासंस्कारकरणे नुप्रवेशः शक्योवक्तुम् । एवमपि हि दण्डान्तेरेव दीक्षितो भवति । नाग्नावैष्णवेनेति ॥ १०३ ॥

अन्यो दीक्षितोयं ब्राह्मण इत्याह त्रिरुच्चैः॥१०४॥

अन्यशब्देन चाध्वर्युसन्निकर्षात्प्रतिप्रस्थाता गृह्यते । स ह्यन्य श्च भवति । समाख्यानुग्रहश्च । उच्चैरिति चोपांशु पक्ष उच्यते॥ १०४॥

ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ॥ १०५॥

तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयादिति वचनात् ॥ १०५ ॥

आस्तमयाद्वाचं यच्छति ॥ १०६ ॥

स वाचं यम आस्त आस्तमयात् इति ॥ १०६ ॥

अस्तमिते दीक्षितवाचं विसृजस्व पत्नि वाचं विसृजस्वेति त्रिराह ॥ १०७ ॥

दीक्षित वाचं विसृजस्वेति त्रिरुक्ता पत्नि वाचं विसृजस्वेति त्रिरुच्यते । त्राय आय समासेनोक्तम् । अनेकयजमानके विपरिणामः॥१०७॥

अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं
तिरुक्त्वाग्निर्ब्रह्मेति च सकृत् ॥ १०८ ॥

व्रतं कृणुतेत्यस्य व्रतकरणार्थेना सामर्थ्यात् । अग्निर्ब्रह्मेति तु वाग्विसर्गार्थम् । तथोच्यते । अनेनैव वाचं विसर्जयेद्व्रतं कृणुत व्रतं कृणुतेति तद्वाग्विसर्गस्य कालोपलक्षणार्थम् ॥ १०८॥

भूर्भुवः स्वरिति वा ॥ १०९ ॥

वाचं विसृजते वा अग्निर्ब्रह्मेति विकल्पः ॥ १०९ ॥

अत ऊर्ध्वमामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति ॥ ११० ॥

पूर्ववत्रिसंध्याख्यावृत्तिः ॥ ११० ॥

यथोक्तं विसर्जनम् ॥ १११ ॥

इह वाग्विसर्जनकाल उक्तः पश्चादस्तमिते वाचं विसृजस्वेति । उदिते स्वमताचार्येण वाग्विसर्गोऽभिहितः । स यथोक्तग्रहणेन गृह्यते । तत्र स्रुक्मुखाया भस्मोद्वपनमस्तमिते पात्रे वाचं विसृज्य समिदाधानमित्युपक्रम्य पयमुदिते भस्मोद्वपनादि इत्युक्तम् ॥ १११ ॥

व्रतदुघे दोहयति ॥ ११२ ॥

कारितशब्दादन्येन गावौ धुक्षेति ॥ ११२ ॥

तत्क्षीरव्रतौ भवतः ॥ ११३ ॥

तयोः क्षीरं तत्क्षीरम् तद्व्रतौ भवतो दम्पती । तत्र पिशाङ्गैकस्य गौरैकस्य । वक्ष्यति हि दक्षिणाग्नौ पत्न्या व्रतश्रपणमिति ॥ ११२ ॥

प्रथमे व्रते व्रीहियवयोरन्यतरमात्रपत्यु-

भावेके ॥ ११४ ॥

तत्रैके प्रथमे व्रत उभौ व्रीहियवावावपन्तीति प्रकृत्य तस्मादन्यतरमेवावपेदित्युक्तम् । अतो विकल्पः ॥ ११४ ॥

तद्व्रतमदोहे ॥ ११५ ॥

अदोहे व्रतदुहः तद्व्रतं भवति । तच्च प्रथम एव । अन्यत्र प्रतिनिधिरित्युक्तमेव व्रते प्रसङ्गो न नियमशब्दादिति ॥ ११५ ॥

सर्वौषधं सर्वसुरभि चैके ॥ ११६ ॥

सर्वौषधं सर्वा ओषधयः सर्वसुरभिः पिप्पल्यादिः ॥ ११६ ॥

गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्याः ॥ ११७ ॥

दीक्षितव्रतस्य पत्नीव्रतस्य च ॥ ११७ ॥

यवागू राजन्यस्यामिक्षा वैश्यस्य[1] ॥ ११८ ॥

व्रतं भवति । ते च तद्भूते उपादेये नेह श्रप्ये इति । सम्भावधिधितस्य भक्षणप्रतिषेधात् ॥ ११८ ॥

व्रतं प्रयच्छत्युत्सिक्तमपररात्रे सायं दोहमपराह्णे प्रातर्दोहम् ॥ ११९ ॥

यथास्मै घृतं प्रयच्छतीति विहितत्वादध्वर्युः । ऊर्ध्वमंसिक्तमनुत्सिक्तम् सायं दोहमपररात्रे प्रातर्दोहमपराह्णे ॥ ११९ ॥

दैवीं धियमिति व्रतायोपस्पर्शनं स्वासने ॥ १२० ॥

---

१ तण्डुलानां शिथिलः पाको यवागू उच्यते । पयस्तप्तं तस्योपरि दध्यासिच्योदकमवस्राव्य यद्घनीभूतं दधिसदृशं द्रव्यं स्यात्यां तिष्ठति तदामिक्षोच्यते ।

उपस्पर्शनमाचमनम्[1] । कृत एतत् । लिङ्गात् । मानुषाय वा एष पुराशनायावनेनिक्तेऽथात्र दैव्यै धिये इति । यत्तत्पूर्वं मानुषाशनकालेऽवनेजनं तदेवेदमिति ज्ञापयति । तत्र च मन्त्रविधानम् । उदकोपस्पर्शनमात्रमेवेति सम्प्रदायः । आसनशब्देन च कृष्णाजिने अभिधीयेते ॥ १२० ॥

ये देवा इति व्रतयत्यमृन्मये पात्रे ॥ १२१ ॥

पत्नी लौहे ॥ १२२ ॥

ताम्रमये । तस्याश्च भक्षणमात्रमेव भवति नेतिकर्तव्यता । अविहितत्वात् ॥ १२२ ॥

श्वात्राः पीता इति नाभिमालभते ॥ १२३ ॥

यजमानः ॥ १२३ ॥

मेक्ष्य कृष्णविषाणया लोष्टं किञ्चिद्वा-
दत्त इयं त इति ॥ १२४ ॥

मिहमेचने । मूत्रपुरीषे कुर्वन्नित्यर्थः । लोष्टं किञ्चिद्वा-दत्ते । किञ्चिच्छब्देन च काष्ठपाषाणाद्यपि गृह्यते । वाशब्दो विकल्पार्थः ॥ १२४ ॥

अपो मुञ्चामीति मेहति ॥ १२५ ॥

पृथिव्या सम्भवेत्यात्तं निदधाति ॥ १२६ ॥

यद्गृहीतं तत्प्रतिमुञ्चति ॥ १२६ ॥

अग्ने त्वमित्युक्त्वास्वपित्यधः प्राङ्-

---

१ इतरस्मिन्नुपस्पर्शनपदेन स्पर्शमात्रं स्वीकुर्वन्ति । शतपथे सर्वत्रोपस्पृशतेस्तदर्थे प्रयोगात् ।

क्षिणतः ॥ १२७ ॥

दक्षिणत वितानस्य प्राक्शिराः स्वपिति ॥ १२७ ॥

अग्निमभ्यावृत्तं विबुद्धमस्वप्स्यन्तं पुनर्मन-
इति वाचयति ॥ १२८ ॥

अथ यत्र सुप्त्वा पुनर्नाविद्रास्यन् भवति तद्वाचयतीति वचनात् ॥ १२८ ॥

त्वमग्न इत्याह क्रुध्वा ऽश्लीलं वा व्याहृत्य॥१२९॥

अश्लीलं अश्लीलम ॥ १२९ ॥

लब्धमालभ्य वाचयति रास्वे यदिति ॥ १३० ॥

रास्वे यदित्यमु मन्त्रम् । आलभ्येति च कारितत्वादध्वेषणा गामालभस्वेत्येवमादि ॥ १३० ॥

अशक्येभिन्त्रणम् ॥ १३१ ॥

आलम्भनाशक्यानेनैव मन्त्रेणाभिमन्त्रणं करोति ॥ १३१ ॥

शूद्रसम्प्रवेशसम्भाषाप्रत्युत्थानाभिवादनो-
दकावायवर्षाणि वर्जयेत्प्रागवभृथात् ॥ १३२ ॥

दीक्षितधर्मा एते इति प्रागवभृथादित्युक्तम् ॥ १३२ ॥

परिह्वालं वदति ॥ १३३ ॥

परिह्वालं मृदूच्यते ॥ १३३ ॥

विचक्षणचनसितवतीं वाचम् ॥ १३४ ॥

विचक्षणा संस्कृतोच्यते । चनवती चन इत्यन्नताम । अन्नवतीं अविद्वाणां चनसितवतीं सत्यवतीं वाच वदति इति ॥१३४॥

शालासनास्वप्नौ सन्धिवेलयोः ॥ १३५ ॥

त्यनुग्रहात् । एवं बहवः प्राकृताः पदार्था अनुगृहीता भवन्ति । इ॰ ष्टी च फल भूयस्त्वं भवतीत्यभिप्रायः । अनुयाजप्रतिषेधश्च भवति । तद्विडान्तं भवति नानुयाजान्यजन्तीति । तथा तच्छंय्वन्तं भवति न पत्नीः संयाजयन्तीति । एतच्चोत्तरे शंय्वन्ते इडान्ते चोपपद्यते । न पूर्व इति ॥ १५१ ॥

एवं प्राप्त आह—

## ग्रहणादप्रवृत्तिः ॥ १५२ ॥

शंय्वन्तग्रहणादिडान्तग्रहणाच्चोत्तरत्राप्रवृत्तिः । कुतः । छत एव शास्त्रार्थ इति ॥ १५२ ॥

## संस्वराश्रुतेश्च ॥ १५३ ॥

आतिथ्यायां हविर्निरवपन्निति प्रकृत्याह तस्येडोपहूता साध्या जग्मुस्तस्मात्स एष इडान्त इति । असुरेभ्यो विश्यद्भिर्देवैः स्वरमाणैरिडान्ते एव परित्यक्तमिति । एतच्च पूर्वे एवोपपद्यते नोत्तर इति ॥ १५३ ॥

अनुयाजप्रतिषेधस्य तर्हि समाधिर्वक्तव्यः । सोभिधीयते—

## नित्यानुवादोनुयाजप्रतिषेधः ॥ १५४ ॥

अनुयाजप्रतिषेधः स इडान्तसंस्तवार्थः । एवं प्रशस्तमिडान्तं येनात्रानुयाजा अपि नेज्यन्त इति ॥ १५४ ॥

## उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति ॥ १५५ ॥

आपयति ॥ १५५ ॥

## विक्रय्येनं विचिनोति कौत्सः शूद्रो वा ॥ १५६ ॥

कुत्सितं कर्म करोति कौत्सः । विचयनं च पर्णशोधनवद्दनम् ॥ १५६ ॥

## ब्राह्मण उपास्ते ॥ १५७ ॥

स च प्रकृत एव ऋत्विग्विशेषः । ब्रह्मपुरुषो ब्राह्मणाच्छंसी । कृताकृतप्रत्यवेक्षणाय ब्रह्मा हि व्यापृतः प्रायणीये ॥ १५७ ॥

उदकुम्भश्च पुरस्तात् ॥ १५८ ॥

भवति शाखान्तरात् । स्वशाखायामपि च दृश्यते । अथ यद्वपामन्ते क्रीणातीति । क्रयार्थश्च निवाप ॥ १५८ ॥

शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ॥ १५९ ॥

उपरिष्टादुद्वारापावरणविधानाद्विधानम् । ध्रौवं जुह्वां चतुः कृत्वो विगृह्णाति ॥ १५९ ॥

तत्र च—

बर्हिस्तृणेन हिरण्यं बध्वावदधात्येषा त इति ॥ १६० ॥

अनेन मन्त्रेण । बर्हिर्ग्रहणाच्च विनियुक्तमेव ग्रहीतव्यम् ॥ १६० ॥

जूरसीति जुहोति ॥ १६१ ॥

चतुर्गृहीतम् ॥ १६१ ॥

शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणे निदधाति ॥ १६२ ॥

शुक्रमसीत्यनेन मन्त्रेण हिरण्यमुद्धृत्य वेद्यां तृणे निदधाति ॥ १६२ ॥

सूत्रबद्धं हिरण्यं कुरुते ॥ १६३ ॥

यज्जुह्वां प्राप्तं तदेव । अत्र प्रायणीयाप्रतिपत्तिः समाप्ति । तच्छेषभूतद्रव्यं हि विनियुक्तमिति । प्रायणीयाशेषभूतद्रव्यस्याप्यपि सर्वीयमाहुतिः सोमक्रयार्था । एवं हि श्रूयते । यावं सोमक्रयणी निदानेन तामेतयाहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति । एवं च

सन्धिवेलयोः शालायामासितव्यम् । न च स्वप्यात् ॥१३५॥

वेद्यां सुत्यासु ॥ १३६ ॥

सुत्यासु वर्त्तमानासु वेद्यामासितव्यम् ॥ १३६ ॥

अप्रायश्चित्तमपराधे ॥ १३७ ॥

नास्त्रप्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात् इति वचनात् ॥१३७

इतरेतरस्मिन्वोपहवमिच्छेरन् ॥ १३८ ॥

इतरेतरोपहवो वा भवति । स बहुयजमानके ॥ १३८ ॥

पत्न्यामेकदीक्षी ॥ १३९ ॥

एकदीक्षी तु पत्न्यामेवोपहवमिच्छति ॥ १३९ ॥

दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति ॥१४०॥

चरुग्रहणं न कर्त्तव्यम् । अदित्यै चरुरन्यत्रापीत्युक्तत्वात् । कर्त्तव्यं वा, चरोः प्रायणीयज्ञापनार्थम् । आदित्यं चरुं प्रायणीयं निर्वपतीति वचनात् । एवं च पथ्यादीनां तदङ्गत्वादन्तराये सत्य-प्रयोक्तृत्वम् ॥ १४० ॥

आज्यभागाविष्ट्वाज्येन देवताश्चतस्रो यजति पथ्यां स्वस्तिमग्निं सोमं सवितारं च ॥ १४१ ॥

च शब्दाददितिचोदनेनेति । पथ्यास्वस्त्योरभेदज्ञापनार्थं च तद्य इति प्रदयम ॥ १४१ ॥

चरुमेक्षणवर्हिनिदधात्युदयनीयायै ॥ १४२ ॥

उदयनीयार्थं चर्वादीनां निधानम् ॥ १४२ ॥

सलेपं चरुं प्रमृष्टं मेक्षणम् ॥ १४३ ॥

तां स्थालीं सक्षामकर्यो प्रमृज्य मेक्षणं निदधातीति वचनात् ॥ १४३ ॥

प्रक्षालयति ॥ १४४ ॥

वा चरुम् ॥ १४४ ॥

अनुप्रहरतीतरे ॥ १४५ ॥

मेक्षणवर्हिषी ॥ १४५ ॥

त एवर्त्विजः ॥ १४६ ॥

विप्रेतेष्वन्येपि ॥ १४७ ॥

प्रायश्चित्तव्युदासार्थमित्युक्तम् ॥ १४७ ॥

शंय्वन्तं भवति ॥ १४८ ॥

शंयुद्वये प्राप्ते इडाद्वये च किं पूर्वेण शंयुना शंय्वन्तं पूर्वया चे-डयेडान्तमुत्तरेणेति । किं तावत्प्राप्तम् ॥ १४८ ॥

अन्तवचने पूर्वप्राप्तेः ॥ १४९ ॥

अन्तवचने पूर्वमेव ग्रहीतव्यम् । कुत एतत् । प्राप्ताद्धीडान्तता शंय्वन्तता चेति । कृते च शास्त्रार्थे किमित्युत्तरं यावद्-व्यत इति ॥ १४९ ॥

किं च—

अविशेषश्रुतेः ॥ १५० ॥

न चात्र विशेषः श्रूयते । अतः प्राप्तत्वात्पूर्वमेव शंय्विडान्तं ग्रहीतव्यमिति ॥ १५० ॥

चरुं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधा-भ्याम् ॥ १५१ ॥

उत्तरं वा शंय्विडान्तं ग्रहीतव्यम् । न पूर्वं । कुत एतत् । प्रकृ-

सत्युद्वयनीयायां न भवति ॥ १६३ ॥

चतुर्गृहीतं गृहीत्वान्वारभस्व यजमानेत्याह ॥ १६४ ॥

अध्वर्युः । तं च यजमानोऽन्वारभते ॥ १६४ ॥

अपावृतद्वारे निष्क्रामतः ॥ १६५ ॥

अपावृतद्वारमुद्घाटितद्वारम् । द्विवचनोपदेशादध्वर्युयजमानौ निष्क्रामतः । प्रतिप्रस्थाता द्वितीय इति सम्प्रदायः ॥ १६५ ॥

दक्षिणेन द्वारं सोमक्रयणी तिष्ठत्यलक्षिताव्यङ्गा प्रवीता रज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाभावेरुणारुणाभावे रोहिण्यदर्येताक्षी ॥ १६६ ॥

अलक्षिता अनङ्किता अव्यङ्गा अनङ्गहीना अप्रवीता अप्रामिता । अयस्थैवारज्जुबद्धा । बभ्रुः पिङ्गला बभ्रुवर्णा पिङ्गाक्षी तदभावेरुणा तस्या अभावे रोहिण्यदर्येताक्षी रोहिणी रक्तवर्णा अदर्येताक्षी अरक्ताक्षी दक्षिणेन द्वारं तिष्ठति ॥ १६६ ॥

चिदसीत्येनामभिमन्त्रयते ॥ १६७ ॥

सोमक्रयणीम् मन्त्रेण स्पाण्डे विपरिणमयते ॥ १६७ ॥

उदीचीन्नीयमानामनुगच्छतो वत्स्यसीति ॥ १६८ ॥

द्विवचनोपदेशात् द्वयोरपि मन्त्रः । चोदितार्थाभिधानाच्च स्पाण्डे विपरिणामः ॥ १६८ ॥

षट्पदान्यतीत्य सप्तमं पर्युपविशन्ति ॥ १६९ ॥

सोमक्रयण्याः । अथ सप्तमं पदं पर्युपविशन्तीति वचनात् । पर्युपवेशनं च प्रत्यग्यजमानाध्वर्युप्रतिप्रस्थातॄणाम् ॥ १६९ ॥

हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेति ॥ १७० ॥

हिरण्यमस्मिन्सप्तमे पदे निधायाभिजुहोत्यादित्यास्त्वेत्यनेन मन्त्रेण ॥ १७० ॥

स्फ्येन पदन्त्रिः परिलिखत्यस्मे रमस्वेति ॥ १७१ ॥

अनेन मन्त्रेण ॥ १७१ ॥

समुद्धृत्य पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति ॥ १७२ ॥

उद्धरणं हिरण्यस्य समुद्धृत्यहिरण्यमिति वचनात्पदं स्थाल्यामावपत्यस्मे ते बन्धुरिति ॥ १७२ ॥

अप स्थाने निषिच्य यजमानाय पदं प्रयच्छति त्वे राय इति ॥ १७३ ॥

बहुयजमानकेस्य मन्त्रस्य विपरिणामः ॥ १७३ ॥

मेराय इति यजमानः प्रतिगृह्णाति पदम् ॥ १७४ ॥

अयमपि अनेकयजमानके विपरिणम्यते। मन्त्रद्वयेप्यध्याहारैः साकाङ्क्षत्वात् । रैशब्दस्य पशुविषयत्वाद्बहुवचनान्तता। त्वे राय इति त्वयि पशव इत्येवैतदाह मे राय इति मयि पशव इति श्रुतत्वात् ॥ १७४ ॥

मात्रयमित्यध्वर्युरात्मानं संस्पृशति ॥ १७५ ॥

आनन्तर्याद्यजमानो मा भूदित्यध्वर्युग्रहणम् ॥ १७५ ॥

हुत्वा पत्न्यै पदं प्रयच्छति ॥ १७६ ॥

हुत्वेत्युक्तत्वादध्वर्युः प्रयच्छति ॥ १७६ ॥

नेष्टा तोत इत्येनां वाचयति ॥ १७७ ॥

पत्नीम् ॥ १७७ ॥

सोमक्रयण्या च समीक्षमाणाः समख्य इति ॥ १७८ ॥

चशब्दाद्यजमानश्च पत्नीं वाचयति ॥ १७८ ॥

प्रक्षाल्य पाणी हिरण्यं बध्नीते ऽनामिकायाम् ॥ १७९ ॥

हिरण्यबन्धनस्य क्रयार्थता येनाग्निरेतसं वै हिरण्यमित्युपक्रम्याह सत्येनाभ्युपस्पृशानि सत्येन सोमं पराहणानीति ॥ १७९ ॥

अधिकारमुपजीव्याह—

अध्यायनाभिपवाः श्वदाभ्येषु च ॥ १८० ॥

पाणिप्रक्षालनहिरण्यबन्धने भवतः ॥ १८० ॥

प्रेष्यति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति ॥ १८१ ॥

चशब्दादध्वर्युरेव प्रेष्यति ॥ १८१ ॥

अत्र वा निर्वपनम् ॥ १८२ ॥

अस्मिन्वा अवसरे सोमनिर्वापः । तुल्यप्राकरणात् ॥ १८२ ॥

शोभनः सोमोपनहनम् ॥ १८३ ॥

भवतीति वाक्यशेषः ॥ १८३ ॥

उष्णीषाभावे सोमपर्याणहनाद्द्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति ॥ १८४ ॥

यद्युष्णीषं न विन्देत् सोमपर्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वावकृन्तेदिति वचनात् ॥ १८४ ॥

अध्वर्युर्यजमानो वा सोमोपनहनं हरत्यन्य

इतरे ॥ १८५ ॥

अध्वर्युर्यजमानो वा सोमोपनहनमाहरेत् । य एव कश्च सोमपर्याणहनमिति वचनात् । अन्यशब्देन च प्रतिप्रस्थातोच्यत इत्युक्तमेव ॥ १८५ ॥

सोमं गच्छन्त्वेपत इति वाचयति ॥ १८६ ॥

गमनाभिप्रवृत्तम् । चोदितार्थाभिधायकत्वात् । न्यग्रोधे विपरिणाम ॥ १८६ ॥

प्राङुपविश्यास्माकोसीति सोममालभते ॥१८७॥

अयमपि चोदितार्थाभिधायी । विङ्क्षियमश्च श्रौतप्रज्ञापनार्थः ॥ १८७ ॥

न विचिनोत्यतस्तृणकाष्ठापासनमेके ॥ १८८ ॥

अत्र हैके तृणं वा काष्ठं वा विपास्यन्तीति वचनात् ॥ १८८ ॥

सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति

प्राग्दशमुदग्वा ॥ १८९ ॥

एवमेव हि श्रूयते । अथवाचोद्विगुणं वाचतुर्गुणं वा प्राग्दशयोपस्तृणातीति ॥ १८९ ॥

तस्मिन्त्सोमं मिमीते दशकृत्वोभित्यमिति ॥ १९० ॥

सोमोपनहने सोम प्रक्षिपति दशकृत्वोभित्यमित्यनेन मन्त्रेण ॥ १९० ॥

सर्वाभिः प्रथमम् ॥ १९१ ॥

सर्वाभिरङ्गुलीभिः प्रथम प्रक्षेप ॥ १९१ ॥

अङ्गुष्ठप्रभृति चैकोत्सर्गम् ॥ १९२ ॥

एकैकाङ्गुलिरुत्सृज्यते प्रक्षेपे प्रक्षेपे ॥१९२॥

द्विः कनिष्ठिकया ॥ १९३ ॥

कनिष्ठिकया द्विः प्रक्षिपति ॥ १९३ ॥

एकोपचयं च ॥ १९४ ॥

एकैकाचोपचीयतेङ्गुलिः प्रक्षेपे प्रक्षेपे। एवं दशकृत्वो मितो भवति ॥ १९४ ॥

अञ्जलिना दशमम् ॥ १९५ ॥

दशमं प्रक्षेपणमञ्जलिना। दशकृत्वो मिमीत इति वचनात्। समस्ताञ्जलिनाध्यावपतीति श्रवणात् ॥ १९५ ॥

अन्यद्वाध्यावापश्रुतेः ॥ १९६ ॥

अथवान्यदेव दशममञ्जलिना कर्तव्यम्। येनैतया सर्वाभिरित्युक्त्वा समस्ताञ्जलिनाध्यावपतीत्याह। यत्पुनरुक्तं दशकृत्वोभिमिमीतेति मन्त्रेणाभिसम्बध्यते दशकृत्वोभिमिमीतेत्यनेन मन्त्रेण। तस्मादेकादशोध्यावापः ॥ १९६ ॥

अन्तान्त्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति ॥ १९७ ॥

अथ सोमोपनहनस्य समुन्मार्यान्तानुष्णीषेण विग्रध्नातीति वचनात्। बध्नामीति वाक्याहारः साकाङ्क्षत्वात् ॥ १९७ ॥

अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानुप्राणन्त्विति ॥ १९८ ॥

अथ मध्येङ्गुल्या गाढां करोति सुग०. ॥ १९८ ॥

तं विक्रयिणे प्रयच्छति ॥ १९९ ॥

सोमम् ॥ १९९ ॥

पञ्चकृत्वः सोमं पणते ॥ २०० ॥

पणाव्यवहारे । पञ्चकृत्व सव्यवहारं करोति ॥ २०० ॥

स आह सोमविक्रयिन्क्रय्यस्ते सोमो राजा इति ॥ २०१ ॥

क्रय्य इत्याह सोमविक्रयी ॥ २०२ ॥

तं वै ते क्रीणानीति ॥ २०३ ॥

मन्त्रत्रयमपि च चोदितार्थाभिधायी ॥ २०३ ॥

क्रीणीहीत्याह सोमविक्रयी ॥ २०४ ॥

कलया ते क्रीणानीति ॥ २०५ ॥

अध्वर्यु ॥ २०५ ॥

भूयो वा अतः सोमो राजार्हतीत्याह सोमविक्रयी ॥ २०६ ॥

भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति ॥ २०७ ॥

भूयो वा अत सोमो राजार्हतीति भूय एवात सोमो राजार्हतीति च चोदितार्थाभिधायिनौ ॥ २०७ ॥

भूय एवेत्यतः प्रभृतिचतुरावर्त्तयति ॥ २०८ ॥

अध्वर्युरेव ॥ २०८ ॥

एकैकेनान्ते पणते शफेन पदार्द्धेन गवा ॥२०९॥

ते क्रीणामीत्यन्ततः ॥ २१० ॥

प्रश्नान्ते प्रश्नान्ते ॥ २११ ॥

भूय एवेत्यतः प्रभृति आवर्त्तयति । प्रश्नशब्देन चाध्वर्युसोमविक्रयिणोरुक्तिप्रत्युक्ती लक्ष्येते । प्रश्नान्ते शफादीनामेकैकेन पणतेऽध्वर्युः । उक्तिप्रत्युक्त्यन्ते च भूय एवेत्यतः प्रभृत्यावृत्तिः ॥ २११ ॥

अन्त्ये च पणने गवा ते क्रीणामीत्युक्ते

क्रीतः सोमाराजेत्यन्ते त्रया॒ऽसि प्रब्रूहीत्याह सोमविक्रयी१ ॥ २१२ ॥

अयमपि चोदितार्थाभिधायी ॥ २१२ ॥

स आह चन्द्रं ते वस्त्रं ते च्छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति ॥ २१३॥

तच्छब्देनाध्वर्युरभिधीयते ॥ २१३ ॥

शुक्रं त्वेति हिरण्यमालभ्य वाचयति ॥ २१४ ॥

चोदितार्थाभिधायी ॥ २१४ ॥

सग्मे त इति सोमविक्रयिण॒ऽ हिरण्येनाभिकम्पयति ॥ २१५ ॥

अभिकम्पयत्युपप्रलोभयति सन्दर्शनेन । अथ सोमविक्रयिणमभिप्रकम्पयतीति श्रुते ॥ २१५ ॥

---

१ वैश्यराजन्ययोः सोमयागे न्यग्रोधस्य सोमवत् क्रयणादिसंस्कारकरणम् ।

अस्मे त इति यजमानसहितं निदधाति ॥ २१६ ॥

हिरण्यम् ॥ २१६ ॥

सोमविक्रय्येतदादत्ते ॥ २१७ ॥

एतद्धिरण्यम् ॥ २१७ ॥

अजां प्रत्यङ्मुखीमालभ्य वाचयति तपस-स्तनूरिति ॥ २१८ ॥

यथाजायां प्रतीचीनमुख्यां वाचयतीति वचनात् । कारितत्वादध्वर्युराह । चोदितार्थाभिधायी च मन्त्रः ॥ २१८ ॥

सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोममादायागत उत्तिष्ठति वा ॥ २१९ ॥

आगते सोमे उत्तिष्ठति वा यजमानः । न चोत्तिष्ठति । मन्त्रश्चोदितार्थाभिधायी । उपमार्थत्वान्मित्रशब्दस्याविपरिणामः ॥ २१९ ॥

दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधाती-न्द्रस्योरुमिति ॥ २२० ॥

अयमपि चोदितार्थाभिधायी ॥ २२० ॥

स्वानभ्राजेति जपति सोमविक्रयिणमीक्षमाणः ॥ २२१ ॥

अथ सोमक्रयणाननुदिशतीति वचनात् । अत एव यजमानः ॥ २२१ ॥

अपोर्णुते दीक्षितः शिरः ॥ २२२ ॥

स्वयमेव ॥ २२२ ॥

पत्नी च ॥ २२३ ॥

हिरण्यं सहसाच्छिद्य पृषता वरत्राकाण्डेना-
हन्ति वा ॥ २२४ ॥

हिरण्य इत्यनि हृत्वा सोमविक्रयिहस्ताच्छिद्य पृषता चित्रेण वरत्राकाण्डेनाहन्ति सोमक्रयिणं न वाहन्तीति विकल्प ॥ २२४ ॥

गृहीतसोमं परिमाम इति वाचयति ॥ २२५ ॥

गृहीतसोमग्रहणाद्गृहीतेनैव सोमेन वाच्यत इति ॥ २२५ ॥

उत्तरे च ॥ २२६ ॥

उत्तरे च प्रैषकर्मणी यजमानकर्तृके ॥ २२६ ॥

उदायुषेत्युत्थाय[1] शीर्ष्णि सोमं कृत्वा पा-
णिमन्तर्धाय ॥ २२७ ॥

पाणिनान्तर्हितेन शिरसि सोमं धृत्वोदायुषेत्यनेन मन्त्रेणोत्तिष्ठति ॥ २२७ ॥

प्रतिपन्थामित्यनोऽभ्येति दक्षिणतस्तिष्ठन्छन्नं
समङ्गि धीतं प्रउगाच्चोद्धृते फलके ॥ २२८ ॥

समङ्गि सर्वाङ्गोपेतं दक्षिणतो व्यवस्थितं क्रयदेशस्थानमात्मनि गच्छामि प्रतिपन्थामित्यनेन मन्त्रेण । तस्य चेषान्तरालादुद्धृते फलके भवति । उद्धृते प्रउगस्य फलके इति वचनात् ॥ २२८ ॥

कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगिति ॥ २२९ ॥

अदित्यास्त्वगित्यनेनाभिधीयते ॥ २२९ ॥

---

१ आपस्तम्बः 'अपि पन्थामगन्महीत्युद्धतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चं सोममच्छ यान्ति शीर्ष्णा गिरौ सीमं हरन्त्यपरेणाहवनीयं वा राजानं प्राङ्वीपमुरस्ताद्वा नद्युगं नाप्नुयम्' इति ।

तस्मिन्सोमं निदधात्यदित्यै सद इति ॥ २३० ॥

तस्मिन्कृष्णाजिने । मन्त्रश्चोदितार्थाभिधायी ॥ २३० ॥

अस्तभ्नाद्यामिति सोममालभ्य वाचयति ॥२३१॥

आलभ्येति कारित । कारिते चाध्येषणा । न्यग्रोधे च सो- मन्यग्रोधाविति । अस्तभ्नाद्यामिति चोदितार्थाभिधायी ॥ २३१ ॥

वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परि- तत्य कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयोरन्यतरत् ॥ २३२ ॥

वनेषु व्यन्तरिक्षमित्यनेन मन्त्रेण सोमपर्याणहनेन परितत्य कृष्णाजिनमनस पुरस्तादासजत्यवलगयति सूर्यस्य चक्षुरित्यनेन मन्त्रेण[१] ॥ २३२ ॥

एकं चेद् ग्रीवार अवकृत्य ॥ २३३ ॥

एक चेदासन कृष्णाजिन ग्रीवा अवकृत्यासजति ॥ २३३ ॥

अनड्वाहौ पुनक्त्युस्रावेतमिति[३] युगपत्त- द्वचनात् ॥ २३४ ॥

अनस्यनड्वाही युनक्त्युस्रावेतमित्यनेन मन्त्रेण युगपत् । यौगपद्याभिधायकत्वान्मन्त्रस्य ॥ २३४ ॥

---

१ अत्रानसो वाससो बन्धनमिति केचित् । तत्रोपष्टम्भकं च 'वनेषु व्यन्तरिक्षमिति वाससा पर्याणह्यन्ति' इति सूत्रान्तरम् । वस्तुतः परि समन्तादानह्यते सोमो येन तत्सोमपर्याणहनमिति व्युत्पत्त्या शब्दत एव पटपुटीकरणं प्रतीयत इति ।

२ ग्रीवाशब्दो वेदे प्रायेण बहुवचनान्त ।

३ अत्रैव विचार्यत, किं युगपदनडुहोर्योजन भेदेन वेति? तत्र सूत्रेणैव पूर्वपक्ष 'युगपत्' ।

[1]भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥ २३५ ॥

भेदेन वा योजनमशक्यत्वात् । न हि शक्यते दक्षिणेनैकेन पाशिना द्वयोर्योजनं कर्तुम् । योजनं च योक्त्रपरिहरणं न युगस्कन्धसन्निपातः । अतो भेदेन । भेदे च मन्त्रावृत्त्या भवितव्यं सन्निपतितो हि मन्त्रः क्रियाया उपकरोति । यथा च श्रुतिः स दक्षिणायुग्यमेवाग्रे युनक्त्यथ सव्यायुग्यमिति ॥ २३५ ॥

ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ॥ २३६ ॥

यत उद्यूते फलके तत्र भूमिस्थः सुब्रह्मण्यः पलाशशाखया प्राजति गमयत्यनड्वाहौ ॥ २३६ ॥

पश्चात्परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति पर्युह्यमाणायेति वा ॥ २३७ ॥

अनः परीत्य पश्चादवस्थित अपालम्बं गृहीत्वा अपालम्बशब्देन पश्चादाबद्धा रज्जुरभिधीयते[2] यथावतारेऽनः प्रवर्त्यमानं विधार्यते तं गृहीत्वा सोमाय क्रीतायानुवाचयति । पर्युह्यमाणायेति वेति विकल्पः । मन्त्रश्चोदितार्थाभिधायी । क्रयोत्तरकाले चाभिषेचनीये पदुवचनान्तेनोहः ॥ २३७ ॥

दीक्षितश्चान्वारभते ॥ २३८ ॥

सोमं पर्युह्यमाणं वै यजमानोऽन्वारभत इति वचनात् ॥ २३८ ।

तिरश्चायां प्राङ् यात्वा दक्षिणावर्त्ये

---

१ सिद्धान्तमाह ' भेदेन ' इति ।

२ पश्चाद्भागे लम्बमानं काष्ठमपालम्बशब्देनोच्यते येनोर्ध्वप्रदेशे प्रचलतः शकटस्य पर्यावर्तनं वार्यते इति हरिस्वामिना ऽन्ये च व्याख्याताः ।

शालां गच्छन्ति ॥ २३९ ॥

त्रिरुक्तायां प्रथमायां सोमपरिवहनर्चि पदार्थतया प्राङ्यात्वा प्रदक्षिणमावृत्य शालां गच्छन्ति ॥ २३९ ॥

भद्रो म इति वाचयति ॥ २४० ॥

वाचन च गमनाभिप्रवृत्तस्य । मन्त्रश्चोदितार्थाभिधायी ॥२४०॥

सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो३ं सुब्रह्म-ण्यो३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या तथाह ॥ २४१ ॥

सुब्रह्मण्यां चाह्वयति । चशब्दादध्वर्युः स्वयमेव । अध्वर्युवेदे हि विधानमस्या इति । सुब्रह्मण्योमिति त्रिरुक्त्वा इन्द्र आगच्छेति सकृन्निगदं ब्रूयात् । यावद्भिरहोभिः सौत्यमहर्भवति तावन्त्युच्चारयेत् । सुब्रह्मण्यः शकटसुब्रह्मण्यां निगदवर्जितां त्रिःकृत्वः प्राचि वर्त्तमाने अनसि षट् कृत्वः प्रतीचीति ॥ २४१ ॥

शालां पूर्वेणप्रतिप्रस्थाताग्नीषोमीयं पशुमा-दाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् ॥ २४२ ॥

शालायाः पुरस्तात् प्रतिप्रस्थाताग्नीषोमीयं पशुमादाय तिष्ठति । अन्यवर्णे कृष्णवर्णेन सहित१ मध्यं२ मेदुरम् तदभावे लोहितसारङ्गम् ॥ २४२ ॥

नमो मित्रस्येत्येनमालभ्य वाचयति ॥ २४३ ॥

एनं पशुम् ॥ २४३ ॥

---

१ कृष्णेन सारङ्ग कृष्णसारङ्गम् । अथवा कृष्णश्चासौ सारङ्गश्च कृष्णसारङ्गः तम् । सारङ्गः कर्बुरः वर्णान्तराऽनुविद्धः शुक्ल इत्यर्थः । २ मेध्यम् सत्तामिति देवभाष्ये ।

चरति पशौ वाचनमेव ॥ २४४ ॥

अटवीं गच्छति पशौ वाचनमेव भवति ॥ २४४ ॥

आहवनीयाच्चोल्मुकमाहृत्यैके ॥ २४५ ॥

वाचनं कुर्वन्ति । उल्मुकाहरणं च पशुसन्निधान एव । न चरति पशौ । एवं हि श्रूयते । तद्वैक आहवनीयादुल्मुकमाहरन्त्ययमग्निः सोमस्ताभ्यां सह सदृश्यां निष्क्रेष्यामह इति ॥ २४५ ॥

समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति ॥ २४६ ॥

शालायाः समीपेन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमित्यनेन मन्त्रेण ॥ २४६ ॥

शम्ये चोद्वृहति वरुणस्य स्कम्भसर्जनी इति ॥ २४७ ॥

अनेन मन्त्रेण ॥ २४७ ॥

औदुम्बरीमासन्दीं [१]नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति चत्वारः ॥ २४८ ॥

नाभिप्रमाणामरत्निमात्रैरङ्गैरीषेतपलादिभिः उता मुञ्जरज्जा । सौत्रामण्यां हि श्रुतौ पठ्यते मुञ्जविवयना भवतीति । तत्र चाचार्येणोक्तम् सोमासन्दीवदिति । चत्वार आहरन्त्यध्वर्यवः । अथ चत्वारो राजासन्दीमाहरन्त इति श्रुतत्वात् ॥ २४८ ॥

अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति ॥ २४९ ॥

एनामासन्दीम् ॥ २४९ ॥

---

१ नाभिदघ्नाम्, नाभिः प्रमाणं यस्याः सा नाभिदघ्नी इति प्राप्ते छान्दसष्टाप्प्रत्ययः ।

कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋत-
सदनमसीति ॥ २५० ॥

अस्यामासन्द्याम् ॥ २२० ॥

तस्मिन्सोमं निदधाति वरुणस्य ऋतसदन-
मासीदेति ॥ २५१ ॥

तस्मिन्कृष्णाजिने सोमं निदधाति वरुणस्य ऋतसदनमासीदेति । मन्त्रश्च चोदितार्थाभिधायी ॥ २५१ ॥

शालां प्रवेशयन्ति दीक्षितसञ्चरेण ॥ २५२ ॥

अधिकाराच्चत्वार एव ॥ २५२ ॥

या त इति वाचयति ॥ २५३ ॥

चोदितार्थाभिधायी मन्त्रः ॥ २५३ ॥

आहवनीयं दक्षिणेन स्थापयन्ति ॥ २५४ ॥

सह सोमेनासन्दीम् ॥ २५४ ॥

उदपात्रमुपनिनयन्त्येके ॥ २५५ ॥

अत्रैके उदपात्रमुपनिनयन्तीत्यभिधाय तस्मान्नोपनिनयेदित्युक्तं अतो विकल्प इति ॥ २५५ ॥

इति कर्कोपाध्यायविरचिते कात्यायनसूत्रभाष्ये
सप्तमोऽध्यायः ।



# अष्टमो ऽध्यायः ।

आतिथ्यं निर्वपति वैष्णवं नवकपालम् ॥ १ ॥

आतिथ्यमिति कर्मणो नामधेयम् । तस्मादातिथ्यं नामेति । शब्दस्य चाभिधायकत्वात् संव्यवहारार्थत्वम् । संव्यवहारश्चात्र दृश्यते । आतिथ्यहविः कृतः कृत्वेत्येवमादि तत्र च वैष्णवो नवकपालो भवति ॥ १ ॥

पत्न्यन्वारब्धस्तूर्णीमेकविमुक्ते वा निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रम् ॥ २ ॥

तत्पत्न्यन्वारभत इति वचनात् । स वै संत्वरमाण इव गृह्णीयादिति तूर्णीमित्युक्तम् । तद्वा अन्यतर एव विमुक्तः स्यादन्यतरोऽविमुक्तोऽथ गृह्णीयादित्येकविमुक्त इत्युक्तम् । वाशब्दो विकल्पार्थः । एवमपि श्रूयते विमुच्यैव प्रपाद्य गृह्णीयादिति । पूर्वं निर्वपतिग्रहणं कर्मोत्पत्त्यर्थम् द्वितीयं निर्वापार्थम् । अग्नेस्तनूरित्येभिर्मन्त्रैः पञ्चकृत्वः प्रतिमन्त्रं निर्वपेत् । स गृह्णात्यग्नेस्तनूरसि विष्णवे त्वेति श्रुतत्वात् ॥ २ ॥

निर्वापे चोदकेन सवितृपदोपलक्षितो मन्त्रः प्राप्नोति । अत आह—

सावित्रनिवृत्तिः श्रुतिविरोधाभ्याम् ॥ ३ ॥

सावित्रस्य सवितृपदोपलक्षितस्य मन्त्रस्य निवृत्तिः । कुत एतत् । श्रुत्या मन्त्रान्तरस्य विहितत्वात् । स गृह्णात्यग्नेस्तनूरसि विष्णवे त्वेति । उभयं च द्रव्याभिधायकत्वाच्छब्दः स विरुध्यत इति । केषाञ्चिदयमेव सिद्धान्तः१ । अपरे तु व्याचक्षते । येनात्र श्रुतिर्भे-

१ अत एव बैजवापेन सूत्रितम् ' न सावित्रमाह ' इति । आप-

यति स वा अन्येनैव ततो यजुषा गृह्णीयाद्येनोचान्यानि हवींषीति चोदकप्राप्तप्रत्यक्षशिष्टयोर्मन्त्रयोः समुच्चयो नाचोदितः । अत उभाभ्यामपि ग्रहणमिति । अपरे तु चोदकपरिप्राप्ते मन्त्रे त्वाशब्दमेवापनयन्ति । स एव विरुध्यते । अग्नेस्तनूरसि विष्णवे त्वेति त्वाशब्देन द्रव्यमभिधीयते । सावित्रेऽपि त्वाशब्दो द्रव्यपर एवातः प्रत्यक्षशिष्टेन चोदकप्राप्तस्त्वाशब्दो निवर्त्यत इति । तत्पुनर्विचारणीयम् । यदा वचनेन प्रत्यक्षशिष्टचोदकप्राप्तयोः समुच्चयो भवति तदा तदवयवभूतस्य त्वाशब्दस्यैकस्य निवृत्तिरित्यशक्यं वक्तुम् । अपि च प्रत्यक्षशिष्टेऽपि त्वाशब्दसमुच्चयो दृश्यते इयमापत्त्या सोमभूते विष्णवे त्वेति । अग्नये त्वा रायस्पोषदे विष्णवे त्वेति । अतः प्रत्यक्षशिष्टचोदकप्राप्तयोरासन्नसामर्थ्यात् समुच्चयः । पूर्वं चोदकप्राप्तः पश्चात्प्रत्यक्षशिष्ट इति । जुष्टशब्दस्तु चोदकप्राप्तोऽपि देवतादेशानुचर एव भवति । प्रकृतावेवमेव दृष्टत्वात् । सावित्रस्य तु ग्रहणत्रय एव प्रयोगः । प्रकृतौ दृष्टत्वात् । नोत्तरयोर्जुष्टशब्दस्य च ॥ ३ ॥

[1]अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानप्रावरणानि दीक्षणीयाप्रभृति प्रागवसानीयायाः सोमे कृतत्वात् ॥ ४ ॥

निवर्तन्त इति शेषः । आग्न्यन्वाधानं तावद् देवतापरिग्रहार्थम् । स च देवतापरिग्रहः सौमिकेन कृतः । आग्नावैष्णवं निर्वपतीति प्रकृत्य येनैतदाह अग्निर्वै यज्ञस्यावराद्र्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैव देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा इति । आग्नावैष्णवस्य च देवतापरिग्रहार्थतोच्यते । यद्येवं कृतत्वादित्यत्र न सम्भवतीत्यत प्रभृतिशब्दः प्रापणीयादिविषयो द्रष्टव्यः । व्रतोपाय-

स्तम्व. ' पञ्चसु मार्यिर्ल जुष्टं चानुषजति नोत्तरयोरित्येके वैष्णवो नवकपाल पुरोडाशो भवति विष्णुदेवात ऊर्ध्वं संस्कारा हविष्कृता वाचं विसृज्योत्तरमनड्वाह विमुच्य चारुणामग्नि ' इत्यादि ।

१ सोमान्तस्तत्प्रभूतासु दीक्षणीयादिष्विष्टिषु चादकेन प्राकृतेषु समस्तेष्वङ्गेषु प्राप्तेष्वाह—

नमपि सौमिकेन व्रतसत्यान्निवर्त्तते । दीक्षितस्य हि सत्यवदननियम उक्तः तस्मादपि दीक्षितमाहुः सत्यं वदेति । अत्रापि प्रभृतिशब्दो गात्रास एव दण्डाग्ने हि दीक्षितो भवतीति । अत ऊर्ध्वं व्रतोपायननिवृत्तिः स्यात्प्राकृतस्याभावात् । आरण्यभोजनमपि निवर्त्तते । सोमे द्रव्यविशेषनियमात् । निवृत्ते हि पयो व्रते हविः शेषभक्ष उच्यते । अस्ति चारण्यभोजनस्य प्राप्तिरतिरात्र आश्विने ऽतिक्रान्ते तन्निवृत्त्यर्थमिदमुक्तम् । औपवसथ्ये पुनरहनि वचनमेव । तस्मादुपवसथे नाश्नीयादिति । अथवा आरण्यभोजनप्रतिषेधः । सूत्रस्यैतन्मूलत्वम् । तस्मादुपवसथे नाश्नीयादिति । एवं चोपवसथविषय एवारण्यभोजनप्रतिषेधः । दानमपि निवर्त्तते । दीक्षणीयादिषु सौमिकेनैव दक्षिणादानेनानतेर्निर्वर्त्तितत्वात् । ब्रह्मवरणं च सौमिकेन वरणेन कृतत्वात् । उदवसानीयायां तु अग्न्यन्तरत्वादग्न्यन्वाधाने प्रवर्त्तत एव । व्रतोपायनमप्युन्मुक्तदीक्षत्वात् दानं च विहितत्वात्तस्य हिरण्यं दक्षिणेति । आनन्तर्यविधानाच्च ब्रह्मवरणम् । अतः प्रागुदवसानीयाया इति सूत्रितम् ॥ ४ ॥

पत्नीसन्नहनं च तथोक्तायाः ॥ ५ ॥

निवर्त्तते ॥ ५ ॥

यजमानभागश्च भक्षप्रतिषेधात् ॥ ६ ॥

प्रतिषेधश्च द्रव्यान्तरविधानात्[1] ॥ ६ ॥

[2]न कर्मगुणत्वात् ॥ ७ ॥

यजमानभागो न भक्ष्यत इति किं तर्हि भक्ष्यत एव । कर्मगुणो ह्यसौ पुरुषार्थे हि द्रव्यान्तरविधानमिति ॥ ७ ॥

उपसर्जनीरधिश्रयति [3]मदन्तीश्च व्रतवत् ॥ ८ ॥

---

१ एतावत्पर्यन्तं पूर्वपक्षः ।

२ सिद्धान्तमाह—

३ मदन्तीपदस्योष्णजलेशक्तिः । मदीद्धर्षग्लपनयोरित्यनुशासनात् तत्राप्रस्तुतस्य प्रयोगात् ।

उपमर्जन्यधिश्रयणं मदन्तीनामवसरविधित्सयोच्यते । प्रवर्तयदिति गार्हपत्ये दीक्षितस्य श्रपणम् दक्षिणाग्नौ पत्न्या इति ॥ ८ ॥

ओं मुष्टिविसर्गादुदकार्थस्ततः ॥ ९ ॥

कर्त्तव्यः ॥ ९ ॥

आतिथ्यायामेवापरो विशेष उच्यते—

कार्ष्मर्यमयाः परिधय आश्ववालः प्रस्तर ऐक्षव्यौ १विधृती बर्हिश्च ॥ १० ॥

विशेषाभावेपि बर्हिर्ग्रहणं चतुष्टयप्रतिपत्यर्थं वक्ष्यति हि ॥ १० ॥

एतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टयम् ॥ ११ ॥

स चायं व्यक्तिनियमः । एवकारकरणात् ॥ ११ ॥

आसाद्याग्निमन्थनमाहोमात्करोति ॥ १२ ॥

एतच्चेद विहितम् । तच्चातुर्मास्येपूपनियर्दं पुनरिहातिदिष्टमिति ॥ १२ ॥

इडान्तं भवति२ ॥ १३ ॥

तस्मात्स यत्र इडान्त इति वचनात् ॥ १३ ॥

ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति ॥ १४ ॥

ध्रौवमाज्यं व्रतप्रदानग्राजने गृह्णात्यापतय इत्यनेन मन्त्रेण ॥ १४ ॥

द्विश्चरुस्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति शक्वन ओजिष्ठायेति ॥ १५ ॥

मन्त्रद्वयेन स्थाल्याः स्रुवेण गृह्णाति ॥ १५ ॥

गृह्णामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥

गृह्णामीति च मन्त्रानुषङ्गः साकाङ्क्षत्वात् । द्विश्च स्थाल्याः स्रुवेण गृह्णातीति कुत एतत् । मन्त्रवाक्यभेदात् । आज्यानि गृह्णाना इति चाज्यबहुत्वश्रवणात् ॥ १६ ॥

पूर्वशेषौ वोत्तरौ ॥ १७ ॥

वाशब्दः पक्षव्यावृत्तौ । पूर्वशेषभूतौ चोत्तरौ मन्त्रौ । न द्विः स्थाल्याः स्रुवेण ग्रहणम् । न ह्यत्र वचनमस्ति, न पूर्वमन्त्रेण सहैकवाक्यता, नोपपाततः। अनेकविशेषणविशिष्टो हि सर्वैरेतैर्वायुरभिधीयत इति । आपतये त्वा परिपतये गृह्णामीति हि प्रकृत्याह यो वा अयं पवत एष आपपतानि परिपपतीति । तथा एव तनूनप्त्रशाक्कर इति एष वै शाक्कोऽजिष्ठ इति । एकवाक्यतायां च गम्यमानायां भिन्नवाक्यता न युक्ता । अतो यन्मन्त्रवाक्यभेदात् द्विश्च स्थाल्याः स्रुवेणेति तन्नातीव युक्तरूपम् । यत्त्वाज्यानि गृह्णाना इत्याज्यबहुत्वं तत्प्रतिपुरुषग्रहणेन परिह्रियते । तस्मादेकमेवेदं ग्रहणम् न द्विः स्थाल्याः स्रुवेणेति सम्प्रदायः । अपरे तु द्विः स्थाल्याः स्रुवेण तूष्णीं ग्रहणमिच्छन्ति । तेषां पुनर्वचनमन्वेषणीयम् । न हि वचनमन्तरेणैषोऽर्थः शक्यते वक्तुमिति ॥ १७ ॥

तानूनप्त्रमेतत् ॥ १८ ॥

अस्य तानूनप्त्रमितीयं संज्ञा वैदिकी ॥ १८ ॥

दक्षिणस्यां वेदिश्रोणौ निधायात्रमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति ॥ १९ ॥

अनेन मन्त्रेण ॥ १९ ॥

अद्रोहस्तेभ्यो न सतानूनप्त्रिणे द्रोग्धव्यमिति श्रुतेः ॥ २० ॥

यैः सह तानूनप्त्रमाज्यं स्पृशन्ते तेतानूनप्त्रिणः तेषां परस्परतो द्रोह इति ॥ २० ॥

पल्यङ्ग्य निदधात्यपिधायामृन्मयेन ॥ २१ ॥

पल्यंग्य चालयित्वा अपिधायामृन्मयेन निदधाति । प्रकृतत्वात्तानूनप्त्रम् ॥ २१ ॥

अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति ॥२२॥

अपराह्ण इत्यनुवाद एव प्राप्तत्वात् । व्रतस्य पुरुषार्थत्वाद्यद्यप्यसामर्थ्यं भवति तथापि क्रत्वर्थत्वात्तानूनप्त्रं दीयत एव ॥ २२ ॥

बहुषु गृहपतये ॥ २३ ॥

बहुषु यजमानेषु गृहपतय एव तानूनप्त्रप्रदानम् । यदि बहवो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुरिति श्रुतेः ॥ २३ ॥

अग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते ॥२४॥

अग्ने व्रतपा इत्यनेन मन्त्रेणाहवनीये समिधमभ्याधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं करोति । अथान्तरदीक्षेयमिति यजमानः करोति ॥ २४ ॥

पत्नी च गार्हपत्ये तूष्णीम् ॥ २५ ॥

चशब्दात्समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं करोति । बहुयजमानके सर्वेषामवान्तरदीक्षा ॥ २५ ॥

मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्यायन्त्यꣳशुरꣳशुरिति ॥ २६ ॥

चतुर्णामप्यायत्विजां प्रतिवेदमाप्यायनमाम्नातं पञ्चमः प्रतिप्रस्थाता । एवं यजमान षष्ठा इति सम्प्रदायः । अपरे त्वग्नीधं पञ्चमं

मन्यन्ते । आप्यायनं चालम्भमात्रम् न सोमप्रक्षेपः । नियतपरिमाणत्वात् । सर्वाग्नेयपक्षे चाग्निष्टुदादिषु मन्त्रस्य विपरिणामः ॥२६॥

आज्यमालभ्योपस्पृशेदपः सोममालिप्समान-
स्तथाविपर्यस्य प्रत्येत्य प्रस्तरे निन्हुवत
उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति ॥२७॥

तत्रसस्यापि प्रस्तरे निन्हवः सम्भवति । नम्मा भूरिति प्रत्येत्येति ग्रहणम् । निन्हवश्च प्रस्तरे पाण्योः करणम् ॥ २७ ॥

व्यूहनपरिष्यञ्जने कुर्वैके ॥ २८ ॥

तानूनप्त्रग्रहणादि कुर्वन्ति । शाखान्तरात् । तानूनप्त्रादेरवसरविधिस्तया व्यूहनपरिष्यञ्जने अनूद्येते । संस्कारकत्वाच्चेदान्तत्वेपि सत्येवमादीनां प्रवृत्तिरिष्यते । अपूर्वोत्पादकानां तु निवृत्तिर्युक्तरूपा । प्रतिपत्तित्वाच्च प्रतिपत्तीनां प्रवृत्तिरेव ॥ २८ ॥

समुल्लुप्य प्रस्तरमक्त्वा परिधींश्चादायाह्रा-
ग्नीन्मदन्त्यापा३ इति ॥ २९ ॥

प्रस्तरं गृहीत्वाक्त्वा च परिधीनादाय विधूनो चाग्नीन्मदन्त्यापा इत्याह ॥ २९ ॥

मदन्तीत्यग्नीत् ॥ ३० ॥

प्रत्याह ॥ ३० ॥

ताभिरेहीति ब्रुवन्नध्याहवनीयं हुत्वाभ्युक्ष्याग्नीधे प्रयच्छति निधानाय ॥ ३१ ॥

ताभिरेहीत्यमुं मन्त्रं ब्रुवन्नध्याहवनीयं हुत्वा अध्यधिशब्दः सामीप्य उपरि भावे च मदन्तीभिरभ्युक्ष्याग्नीध प्रयच्छति निधानार्थम् ॥ ३१ ॥

सुब्रह्मण्याश्च प्रेष्यति ॥ ३२ ॥

चशब्दात्प्रनिपत्तीश्च परिसमापयति । ताश्च पूर्वंतरन्तत सुब्रह्मण्याप्रैष । आद्यन्तत्वात् ॥ ३२ ॥

प्रवर्ग्योपसदावतः ॥ ३३ ॥

अत ऊर्ध्वं प्रवर्ग्योपसदौ भवत । अन्यत्र पठितस्यास्य विधित्सयेदमुक्त न ह्यत्र प्रवर्ग्यस्य पाठ इति ॥ ३३ ॥

उपसदेव वाप्रवर्ग्ये ॥ ३४ ॥

अप्रवर्ग्यशब्देन प्रथमयज्ञोऽभिधीयते । नत्र प्रथमयज्ञे प्रवृञ्ज्यादिति वचनात् । स च प्रथमप्रयोग । द्वितीये चैव तृतीये चेत्यनुवादात् । प्रथमयज्ञ उपसदश्च भवति । ना तत्रापि प्रवर्ग्य । शाखान्तरात् प्रथमयज्ञे व्यक्त इति ॥ ३४ ॥

प्रणीताद्युपसत् ॥ ३५ ॥

प्रणीतानां यदादौ तदादि वाचस्पतिप्रैषादीत्यर्थ । अग्न्यन्वाधानप्रह्मवरणयोरप्रसक्तत्वात् । उपसदिति च कर्मणा नामधेयम । तेषु प्रतेपूपसदो तन्वतेति हि श्रूयते ॥ ३५ ॥

[1]हविष्कृतमाहूयानाहननमपेषणे तीक्ष्णार्थत्वात् ॥ ३६ ॥

हविष्कृदाह्वानकाले यदाहनन तत्पेषणाभावे न भवति । घृतपनत् । तीक्ष्णार्थत्वात् । तीक्ष्णकरणाय हि दृषदुपले आहन्यते । तीक्ष्णीकरणाभ्या हि पेषणमभिनिवर्त्यत इति ॥ ३६ ॥

---

१ इदानीमिद विचार्यते किं पेषणाभावे चोदकप्राप्त दृषदुपलयोराहनन भवत्युत न भवतीति? किं तावत्प्राप्तम? तत्र सूत्रेणैव पूर्वपक्ष करोति—

१स्याद्वा धर्ममात्रत्वात् ॥ ३७ ॥

वाशब्दः पक्षव्यावृत्तौ । भवेद्वा पेषणाभावेप्याहननम् । नैतत् तैक्ष्ण्यार्थम् । न हि शम्यया दृषदुपलयोस्तैक्ष्ण्यमुपपादयितुं शक्यते । अतो धर्ममात्रमेतत् ॥ ३७ ॥

किं च—

श्रुतेश्च ॥ ३८ ॥

श्रुतिरप्यमुमर्थं ज्ञापयति धर्ममात्रमेतदिति । अत्र पुराकल्परूपा श्रुतिः । असुरघ्नी सपत्नघ्नी च वाक् यज्ञपात्राणि प्रविष्टासीत् यज्ञमेव यज्ञपात्राणि प्रविश्य ततो हैनां न शेकतुर्निर्हन्तुमिति प्रकृत्याह सैषासुरघ्नी सपत्नघ्नी वागुद्वदति स यत्रैव हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति इति दृषदुपलयोराहननं असुरसपत्नहननाय न तीक्ष्णीकरणाय तस्माद्धर्ममात्रमिति । नन्वेवमपि द्वितीयान्तनिर्देशाद्दृषदुपलसंस्कार एवाय स्रुक्सम्मार्गवत् । ततश्च पेषणाभावे न भवति । अत्रोच्यते । नैव दृषदुपलसंस्कारः । वागुद्वादनमात्रं चोद्यते । तस्मादेतामत्र वाचं प्रत्युद्वादयन्तीति प्रकृत्य पुनरुपसंह्रियते स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वादयन्ति पापीयांसो हैवास्य सपत्ना भवन्तीति । उपक्रमोपसंहारयोर्वाक्यस्य वागुद्वादनार्थता गम्यते न दृषदुपलसंस्कारार्थतेति । एवं च भूतभव्यसमुच्चारणन्यायानुग्रहो भूतस्य भव्यार्थता स्यात् । न भाव्यस्याहननस्य भूतार्थता । नन्वेवं सति आहननाददृष्टं कल्पनीयम् । सत्यमवं दृषदुपलसंस्कारपक्षेऽपि अदृष्टकल्पनास्त्येवेति तस्माददोषोयम् । अपरे तु व्यावर्णयन्ति । हन्तेरेकपदभूतस्य दृषदुपलस्य गुणविभक्त्या सप्तम्या निर्देशोयं दृषदुपले समाहन्तीति । स्पष्ट एव दृषदुपलस्याहननं प्रति गुणभाव इति । एवं सत्याज्यसान्नाय्येष्वपि भवत्येवाहननमिति ॥ ३८ ॥

परिस्तरणपात्रसादनप्रोक्षणाज्यनिर्वपणा-

---

१ सिद्धान्तमाह—

धिश्रयणानि कृत्वा स्फ्यादि करोति ॥ ३९ ॥

उपसदो ऽपूर्वत्वज्ञापनार्थं परिस्तरणाद्युपादानम् । कुक्कुटाद्यनननिरासार्थं च । तत्कुतः यावदुक्तं ह्युपसत्कर्म येनात्र स्रुवाघारो विधीयते तद्विधानेन च यावत्किंचिदहष्टोपकारकमविहितं तत्सर्वमेव न भवति । यथा हननं स्फ्योदश्वप्रहरणं च तथोत्तराघारप्रयाजाज्यभागादि । स्फ्यादानं त्वत्र विधीयत एव । स्तृतत्वाद्वेदेस्तम्बयजुर्हरणस्य प्राप्त्यभावात् । अतः स्फ्यादानविधेर्वाचनिकं स्तम्बयजुर्हरणमिति । अत्र च यद्यपि पर्यग्निकरणं नोद्घाटितम् । तथापि द्रव्यसंस्कारादिष्यत एव । द्रव्यं चाघारादिविधानादाक्षिप्तमेव ॥ ३९ ॥

बर्हिषः प्रच्छेदं हरति ॥ ४० ॥

स्तम्बयजुर्हरणे बर्हिषोऽवयवं प्रच्छिद्य हरतीति । एवं च स्तृतैव वेदिरिति गम्यते ॥ ४० ॥

मदन्तीरिति वा प्रेष्यति ॥ ४१ ॥

वाशब्दश्चार्थ इति सम्प्रदायः । पुनर्वचनाच्च प्रैषस्य नियमः । मदन्त्युपादानसामर्थ्याच्च मदन्तीशब्दस्य ॥ ४१ ॥

मात्रावदिध्माबर्हिः ॥ ४२ ॥

अष्टादशसंख्याक इध्मे प्राप्ते मात्रावदित्युच्यते । नवसामिधेन्यः स्पृश्यानुपस्पृश्ये च द्वे एवमेकादशभवन्ति । बर्हिषश्चैकधृत्तरणविधानान्मात्रावदित्युक्तम् ॥ ४२ ॥

स्रुवतृतीयास्रुचः सम्मार्ष्टि ॥ ४३ ॥

स्रुवसहवाभावात्स्रुवेण सह बहुवचनम् । स्रुवतृतीयानां सम्मार्गो न वाच्यो अन्वयप्राप्तत्वात् । वाच्यो वाज्यस्थाल्याः सम्मार्गो मा भूदिति । कुतः प्राप्तिरिति चेत् । वक्ष्यति ह्याज्यस्थालीभृदार्थं इति । अनेन प्राप्तिः सम्मार्गो नियम्यते । यद्येवं कार्यापत्तेः प्राप्तोऽस्येव सम्मार्गः । नैतदेवम् । ध्रुवाकार्योपपत्तिरेव ह्याज्या

न विद्यते । ध्रुवाया हि कार्यं स्थालीतो गृहीतस्य यज्ञार्थस्याज्यस्य धारणम् । तच्चेह न विद्यते । यद्येवं कथमुक्तमाचार्येणाज्यस्थालीध्रुवार्थं इति । प्रस्तराञ्जनार्थतयेत्यदोषः । न च ध्रुवायाः प्रस्तराञ्जनार्थेद्रव्यधारणं कार्यं, निर्दिष्टत्वात् कार्यस्य । अथ यच्चतुर्ध्रुवायां गृह्णाति सर्वस्मै तद्यज्ञाय गृह्णातीति । यथा जुहूपभृतोरन्यकार्ययोः प्रकृतौ प्रस्तराञ्जनं विहितमेवं ध्रुवायामपि । एतच्चाङ्गीकृत्याचार्येणोक्तमाज्यस्थालीध्रुवार्थं इति । एवं च ध्रुवाकार्याभावात् स्थाल्याः सम्मृज्यर्थो दुर्लभ इति । सम्प्रदाये तु प्रागाज्यनिर्वापात्स ग्रैष. सम्मार्गः क्रियत एव ॥ ४३ ॥

अष्टगृहीतं जुह्वां चतुरुपभृति यथा
प्रकृति वा ॥ ४४ ॥

अष्टगृहीतं जुह्वां ग्रहीतव्यम् चतुर्गृहीतमुपभृति । स वा अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृतीति वचनात् । अथवा इतरथाऽतुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व उपभृतीति श्रुतत्वात् यथाप्रकृति वेत्युक्तम् । अत्र गृह्णातीति प्रकृतिलिङ्गसंयोगात् प्रधानार्थत्वेपि सति प्रकृतिवदेव वचनात् ग्रहण वचनाद्यानेनैव प्रधानाभिनिर्वृत्तिः ॥ ४४ ॥

एकवृररतरणम् ॥ ४५ ॥

वचनादेव ॥ ४५ ॥

आज्यस्थालीध्रुवार्थे ॥ ४६ ॥

कृतत्वादग्रहणम् ॥ ४६ ॥

स्रुवाधारमावार्य सम्मृष्ट आश्राव्य सीद होतरित्येव ब्रूयात् ॥ ४७ ॥

स्रुवाघारविधानेन यावदुक्तमेतदिति गम्यते । सम्मृष्टेऽग्नौ आश्राव्य सीद होतरित्येव ब्रूयात् । अथाश्राव्य न होतारं प्रवृणीते सीद होतरित्येवाहेति वचनात् ॥ ४७ ॥

प्रसूतोतिक्राममग्नयेऽनुवाचयति ॥ ४८ ॥

स आहातिक्राममग्नये ऽनुब्रूहीति । प्रसवश्चात्र प्रयाजाश्रीणि सन् वचनाद्भवति । उपविशति होता होतृषदन उपविश्य प्रसौति प्रसूतो ध्वर्यु. स्रुचावादत्ते स आहातिक्राममग्नये ऽनुब्रूहीति ॥४८॥

अर्द्ध हुत्वा सोमाय विष्णवे समानीय१ ॥४९॥

अर्द्ध हुत्वा सोमायार्द्धं ततो विष्णवे समानीय । उपभृत्यगृहीतपक्षे सर्वमेव जौहव हुत्वा समानीय सोमाय विष्णवे च जुहोति । वचनसामर्थ्याच्च वैष्णवं समानयमानेनानुवाचनं कर्त्तव्यम । अथ यद्युपभृत्याज्यं भवति तत्समानयमान आह विष्णवे ऽनुब्रूहीति ॥ ४९ ॥

सादयित्वा स्रुचौ सोमाप्यायनाद्यासुब्रह्मण्याप्रैषात् ॥ ५० ॥

आतिथ्यावत् ॥ ५० ॥
कर्मणि विशेष उच्यते—

अक्त्वा प्रस्तरमुपसदं जुहोति स्रुवेण यात इत्ययः शयामन्वारब्धे ॥ ५१ ॥

निगदव्याख्यातम ॥ ५१ ॥

द्विरेकया चरति सायं सुपूर्वाह्णे च ॥ ५२ ॥

एकयोपसदा द्विश्चरति । साय शब्दोपराह्णवाची । पूर्वाह्णशब्द प्रसिद्ध एव ॥ ५२ ॥

एवमितरे अन्वहं रजः शयां

१ मानवे 'धृतपर्णीमध्वर्यो स्रुचमादायस्वेत्युच्यमाने स्रुचावादाय दक्षिणातिक्रम्य यथादेवतमनुवाचयति, पूर्वार्धे यजति मध्य सोमसौम्यमूल जुहवाऽ समानीय विष्णु पूर्वार्ध ' इति ।

## हरिशयां च ॥ ५३ ॥

एवमेवेतरे द्वे उपसत्कर्मणी अन्वहं कर्तव्ये । रजः शयाः हरिशयां च मन्त्रेणैवोपलक्षिते ॥ ५३ ॥

## एकाहस्त्र्युपसत्को द्वादश वा ॥ ५४ ॥

एकाहे प्रक्रान्त एव पुनरेकाहग्रहणं द्वादशोपसत्कस्यानेकाहविषयप्रक्षप्त्यर्थं इह पठितं द्वादशोपसत्कं वाक्येनोक्तत्वादहीनमुपनीतम् । तिस्र एव एकाहस्योपसदः कार्या द्वादशाहीनस्येति ॥ ५४ ॥

## त्रिस्तनं प्रथमायां दोहयति ॥ ५५ ॥

प्रथमायामुपसदि त्रिस्तनं व्रतम् ॥ ५५ ॥

## एकापचयेनोत्तरयोः ॥ ५६ ॥

उत्तरयोः पुनरुपसदोरेकस्तनापचयेन व्रतम् ॥ ५६ ॥

## विपर्यस्य वानग्निचित्ये ॥ ५७ ॥

अनग्निचित्ये अनग्निके सोमे विपर्यासो वा भवति । साग्निके तु त्रिस्तनाद्येव । एवमेव हि तत्र पठ्यते । ते त्रीन्स्तनानुपेयु. ते द्वौ त एकमिति ॥ ५७ ॥

## एवं प्रवृद्धौ समं विभजेत् ॥ ५८ ॥

उपसत्प्रवृद्धावेवमेव समो विभागः कर्तव्य. समं स्यादश्रुतत्वादिति न्यायात् ॥ ५८ ॥

## १स्वस्थानविवृद्धिः ॥ ५९ ॥

कर्तव्या । न दण्डकलितवदावृत्त्या । मन्त्राणामानुपूर्व्ययोगात् । इतरथा हरिशयां रज्याय. यथा प्राप्नोति । तत्र मन्त्रा नानुपूर्व्या युक्ता भवन्ति ॥ ५९ ॥

---

१ इदानीमिदं विचारणीयं किमुपसदां वृद्धिर्दण्डकलितवदावृत्त्योत ? स्वस्थानवृद्ध्या इति ? उभयथाप्यनियमे नियामकमाह—

औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते ॥ ६० ॥

औपवसथ्यमहश्चतुर्दशी । तस्याः पूर्वं त्रयोदशी । पौर्वाह्णिक्योपसदा प्रचर्य वेदिमानम् । वेदिशब्दश्च संस्कारनिमित्तोऽतस्तदर्थानां पात्राणां प्रयोजिका वेदिः । प्रणीतास्तु सम्प्रदाये न क्रियन्ते । युक्ता पुनः प्रणीतानामुत्पत्तिः । तत्संस्कारोऽभिनिर्वृत्यते च प्रतिपत्तिरिति ॥ ६० ॥

पूर्वार्द्धद्वारस्तम्भात्पुरस्तात्त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ॥ ६१ ॥

स्तम्भसम्मितात् द्वारमध्यात्त्रिषु प्रक्रमेषु शङ्कुनिखननम् । तस्मादयं पुरुष आस्तृ सन्तृण्ण इति श्रुतेः । स्तम्भग्रहणं द्वारमध्योपलक्षणार्थम् । तथा च काण्वीया श्रुतिः स वै शालायाः पूर्वार्द्धात् प्राक्प्रक्रामतीति । शङ्कोश्चान्तःपात्यसंज्ञा संव्यवहारार्था । शङ्कुनिखननाद्योत्तरकालं वेद्युपकरणानामासादनप्रोक्षणे ॥ ६१ ॥

तस्मात्पुरस्तात्षड्विंशति ॥ ६२ ॥

तस्मान्मध्यमाच्छङ्कोः प्राङ् षड्विंशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्तीति ॥ ६२ ॥

दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु ॥ ६३ ॥

पश्चाद्यस्मादेवान्तःपात्यात् । अथ यत्रिंशद्विक्रमा पश्चाद्भवतीति श्रुतत्वात् पञ्चदशसु पञ्चदशस्वित्युक्तम् ॥ ६३ ॥

अर्द्धसप्तदशेषु वा ॥ ६४ ॥

अथो अपि त्रयस्त्रिंशत्स्युरिति वचनात् ॥ ६४ ॥

पूर्वार्द्धाच्च द्वादशसु ॥ ६५ ॥

शङ्कुं निहन्ति । चतुर्विंशतिर्विक्रमा पुरस्ताद्भवतीति श्रुतेः ।

प्रक्रमणं च समाख्ययाध्वर्यवम् । परिमाणं तु याजमानमपि सदृगु-णत्वाद्दृश्यते । प्रधाना हि क्रिया परिमाणं गुणभूतमिति ॥६५॥

पृथुग्रामायम्य स्फ्यादि करोति खादिरेणा-

च्छादनात् ॥ ६६ ॥

पृथुग्रा सयरवण्डडम् । मध्ये पूर्वापरायतमुत्थाप्य स्फ्यादा-नादि कर्म करोति खादिरेण वज्रेणाच्छादनान्तम् । खादिरमहणं शङ्क्यमवक्तुं परिभाषितत्वात् । उच्यते च । नित्यार्थम् । समानजा-तीयत्वाच्छङ्कानिवृत्त्यर्थम् । श्रूयते हि तस्मात्खादिरो यूपो भवति खादि-रस्फ्य इति । पैल्वादिषु यूपेषु स्फ्यस्यापि मा भूत्तज्जातीयतेति वि-शेषमाह ॥ ६६ ॥

उपरवदेशात्स्तम्बयजुर्हरति ॥ ६७ ॥

उत्तरार्धात्पश्चादध्यर्द्धे पदे चात्वालम् ॥६८॥

करोतीति शेषः । प्रक्रमद्वयपरिमाणं पदं तस्मिन्नर्द्धाधिके उ-त्तरांसात्पश्चाच्चात्वालं करोति । श्रूयते हि तद्य एव पूर्वाद्धर्यं उत्तरा-र्द्धे शङ्कुर्भवति तस्मात्प्रत्यङ्प्रक्रामति त्रीन्विक्रमांस्तच्चात्वालं परि-लिखतीति ॥ ६८ ॥

यथोक्तं वा ॥ ६९ ॥

वाशब्दो विकल्पार्थः । यथोक्तमिति पूर्वेणोत्करः सशरं परिहा-प्य । एवमपि श्रूयते नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येत प्रेणो-त्करं तच्चात्वालं परिलिखेदिति ॥ ६९ ॥

१प्रातरुपसदौ समस्य पौर्वाह्णिक्या प्रचर्यार्द्ध-

व्रतं प्रयच्छति ॥ ७० ॥

---

१ अथ सुत्यायाः प्राग्दिनकृत्यमाह—

प्रातश्चतुर्दश्यामुपसत्समासः । तत्र पौर्वाह्णिक्या प्रचर्याधेयवतप्रदानम् ॥ ७० ॥

सर्वं वाग्नौ ॥ ७१ ॥

साग्निके सर्वं वा प्रयच्छतीति विकल्पः ॥ ७१ ॥

उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् ॥ ७२ ॥

उभाभ्यामुपसद्भ्यां चरिते प्रवर्ग्योत्सादानम् । यदि कृतः प्रवर्ग्यः ॥ ७२ ॥

अग्निं प्रणयत्यौपनिवपनात्कृत्वा हविर्धाने स्थापयति पृष्ठ्यामुभयतोऽक्षरत्न्यन्तरे प्रक्षालिते प्राची उभतः शालामात्रर्य्यं वर्षीयो दक्षिणम् ॥ ७३ ॥

अग्निप्रणयनमुपयमन्युपनिवपनान्तं कृत्वा अनसी स्थापयति पृष्ठ्यामुभयतोऽक्षरत्न्यन्तरं प्रक्षालिते प्राङ्मुखे शालाया उभयत आसीमाय एकं दक्षिणेन द्वितीयमुत्तरेण । यद्वर्षीयस्तद्दक्षिणमिति श्रुतेः वर्षीयो दक्षिणम् । अग्निप्रणयनमुपयमन्युपनिवपनान्तम् निरूढपशुबन्धोदितमिहाभिधीयते । तदिह समाम्नातं सदङ्गप्रधानार्थत्वादाहवनीयस्य तत्संस्काराच्चाग्नीषोमीयस्य भवति । अतस्तद्विकारे निरूढ उपदिष्टमाचार्येणेह पुनरतिदिश्यत इति ॥ ७३ ॥

तयोश्छदिरध्यस्यति ॥ ७४ ॥

तयोर्दैविरथोनयोश्छदिरारोपयति ॥ ७४ ॥

भित्तिं वाभावे ॥ ७५ ॥

छदिरभावे भित्तिम् । यदिच्छदिनं विन्देयुदञ्छदिः सम्मितां भित्तिमिति श्रुतेः । छदिश्चतुः फलकः पञ्चफलकश्च भित्तिः फलकैः ॥ ७५ ॥

अन्यत्रापि ॥ ७६ ॥

छदिषोऽभावे भित्तिरेव भवति ॥ ७६ ॥

१ रराट्यां पुरस्तादासजत्यैषीकीम् ॥ ७७ ॥

हविर्धानयोः पुरस्तात् रराट्यामिषीकामयीमवलगयति ॥ ७७ ॥

उच्छ्रायीभ्यां परिवार्य छदिः पश्चाच्च ॥ ७८ ॥

चशब्दात्पुरस्ताच्चारोपयति ॥ ७८ ॥

चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति ७९ ॥

अनेन मन्त्रेण ॥ ७९ ॥

स गार्हपत्योतः ॥ ८० ॥

अतः परं गार्हपत्यकार्यमत्र कर्त्तव्यम् । तच्च ज्योतिष्टोमे समाम्नानादेव भवति । एवं च सति कुण्डपायिनामयनेऽग्निहोत्रादिषु प्राग्वहित एव गार्हपत्य । न ह्यग्निहोत्र ज्योतिष्टोमे न ज्योतिष्टोमाङ्गमिति । अग्नीषोमीयविकारेषु निरूढादिषु तर्हि शालाद्वार्ये गार्हपत्यकार्यमस्तु तत्प्रकृतौ दृष्टत्वात् । नैतदेवम् । न हि तदग्नीषोमीयाद्यर्थतयोच्यते किं तर्हि प्रकरणे विधानात् प्रकरणिनोपसङ्गृह्यते प्रकरणिनोपसङ्गृहीतत्वाच्च गार्हपत्यकार्यमगार्हपत्ये क्रियते । एवं च नैतदग्नीषोमीयार्थम् । अतस्तद्विकारेषु प्रकरणयुपसङ्ग्राहको नास्त्यगार्हपत्ये गार्हपत्यकार्यस्य । तेन गार्हपत्य एव कार्यमिति । एवं च कृत्स्नाग्नीषोमीयोपयागेऽपि सति तद्विकारेषु वेदिस्तद्रूपा न भवति ॥ ८० ॥

१ रलयोरैक्याल्ललाटमभिधीयते, तत्र भवा रराट्या, ललाटपट्टिकेति यावत् । तामिषीकामयीं करोति । रराटी हविर्धानस्य पूर्वद्वारे उपरिष्टात् काष्ठिकेति धूर्तस्वामिनः । रराट्या हेजनीस्तनयोन्तर्मित पितृभूति ।

अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिर-
ण्यं निधायाभिजुहोतीदं विष्णुरिति ॥ ८१ ॥

अपरं चतुर्गृहीतं दक्षिणस्य हविर्धानस्य दक्षिणायां वर्त्तन्यां हिरण्यं निधायाभिजुहोतिदं विष्णुरित्यनेन मन्त्रेण। अस्य च चतुर्गृहीतस्य शालाद्वार्ये एव संस्कारः ॥ ८१ ॥

दक्षिणया द्वारानीता पत्नी पाणिभ्याᳪ शेषं
प्रतिगृह्याक्षधुरावनक्ति परागेवश्रुताविति
युगपत्त्वद्व्वचनत्वात् ॥ ८२ ॥

दक्षिणया द्वारानीता पत्नी पाणिभ्यां चतुर्गृहीतशेषं गृहीत्वाक्षधुरौ परागुपानक्ति वेनश्चामुतश्च देवश्रुतावित्यनेन मन्त्रेण। तच्च युगपदञ्जनं द्विवाभिधायकत्वान्मन्त्रस्य ॥ ८२ ॥

भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥ ८३ ॥

भेदेन चाञ्जनम्। न हि दक्षिणेनैकेन पाणिना शक्यते युगपत्कर्तुमिति। तस्माद्भेदेन, भेदे च मन्त्रावृत्तिः सान्निपातित्वादिति ॥ ८३ ॥

स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तर-
स्यैरावती इति पूर्ववत् ॥ ८४ ॥

प्रतिप्रस्थाता स्रुक्स्थाल्यौ गृहीत्वोत्तरस्य हविर्धानस्य दक्षिणायां वर्त्तन्यां हिरण्यं निधायाभिजुहोतीरावतीत्यनेन मन्त्रेण॥८४॥

पत्नी चापरेणाग्नीन्परीत्योत्तरस्यानक्ति
पूर्ववत् ॥ ८५ ॥

पश्चाद्वारानीता सती। पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी इति वचनात् ॥ ८५ ॥

हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति ॥ ८६ ॥

अनुवचनं कारयति होतारं प्रेषणेन ॥ ८६ ॥

तिरश्चीनायामुदगृह्येव वर्त्तनम् ॥ ८७ ॥

तिरश्चीनायां प्रथमायामृचि अनसोरुदगृह्येव वर्त्तनम् । समुद्गृह्येव प्रवर्त्तयेयुर्यथा नोत्सर्जेतामिति वचनात् ॥ ८७ ॥

प्राचीप्रेतमिति वाचयति ॥ ८८ ॥

यजमानम् ॥ ८८ ॥

स्वं गोष्ठमिति च खर्जति[1] ॥ ८९ ॥

चशब्दाद्वाचयति ॥ ८९ ॥

पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्यावानभ्यस्थे अभिमन्त्रयते ऽत्र रमेथामिति ॥ ९० ॥

द्वयवयवयोः पादयोः अभ्याधयवस्थयोरभिमन्त्रणम् ॥ ९० ॥

उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नुकमिति ॥ ९१ ॥

हे अध्वनसी उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नुकमित्यनेन मन्त्रेण ॥ ९१ ॥

दक्षिणतःस्थूणामुपनिहन्ति विष्णवे त्वेति ॥ ९२ ॥

उपनिहन्मीति च शेषः । दक्षिणत इति च दक्षिणपूर्वकोणोऽभिधीयते ॥ ९२ ॥

दिवो वेत्युत्तरं प्रतिप्रस्थाता ॥ ९३ ॥

---

[1] चक्रघर्षणजः शब्दः खर्जपदवाच्यः, एवं च खर्जति नाम चक्रघर्षणजं शब्दं कुर्वत्यनसीत्यर्थः ।

उपस्तम्नातीत्यनुवर्त्तते ॥ ९३ ॥

उत्तरतः स्थूणां पूर्ववत् ॥ ९४ ॥

अध्वर्युरेवोनिहन्ति । उत्तरत इत्यनेन तदुत्तरपूर्वकोणो-
भिधीयते ॥ ९४ ॥

उभे वा दक्षिणतः ॥ ९५ ॥

वर्पानिहन्येते । तथा च दक्षिणापरे कोणे द्वितीया ॥ ९५ ॥

इतरस्ततस्ततः ॥ ९६ ॥

इतरत इत्यनेनोत्तर' कोणोभिधीयते ॥ ९६ ॥

यदु च मानुष इति श्रुतेः ॥ ९७ ॥

यथ मानुषे व्यापारे स्थूणादि तथ करोति१ ॥ ९७ ॥

प्रतद्विष्णुरिति वाचयति मध्यमं छदि-
रालभ्य ॥ ९८ ॥

आलभ्येति कारितत्वाद्ध्येषणा मध्यम छदिराल-
भ्येति ॥ ९८ ॥

उत्तरे च ॥ ९९ ॥

द्वे वाचने च शब्दात्क्रियेते ॥ ९९ ॥

विष्णोरराटमिति रराट्याम् ॥ १०० ॥

आलभ्य ॥ १०० ॥

विष्णोः श्नप्त्रेस्थ इत्युच्छ्राय्यौ ॥ १०१ ॥

---

१ अर्थात्, उपरि वल्कादिनिधानबन्धनाधिकस्थूणानिखनना-
दिभिर्यथा लोके छदिर्बंदी क्रियते तथा कुर्यात् ।

आलभ्य ॥ १०१ ॥

उदगग्राणि च्छदींषि पश्चात्कृते: ॥ १०२ ॥

अथ यदिदं पश्चाच्छदिर्भवतीति श्रूयते । तथोदगग्रेषु सम्भवति ॥ १०२ ॥

द्वार्याः परिषीव्यति१लरपूजनिप्रतिहृतया

रज्वा विष्णोः स्यूरसीति ॥ १०३ ॥

सूचीगतया रज्वा द्वार्यांः परिषीव्यति विष्णोः स्यूरसीत्यनेन मन्त्रेण ॥ १०३ ॥

विष्णोर्ध्रुवोसीति ग्रन्थिं करोति ॥ १०४ ॥

उपक्रान्ते प्रमुञ्चति ॥ १०५ ॥

ग्रन्थिम् । उत्तरपूर्वद्वार्यायां परिषीवणपरिसमाप्तिरिति सम्प्रदायः ॥ १०५ ॥

प्राग्वंशं हविर्धानम् ॥ १०६ ॥

भवति ॥ १०६ ॥

निष्ठाप्य वैष्णवमसीत्यालभते ॥ १०७ ॥

हविर्धानम् ॥ १०७ ॥

भोजनभक्षणे चास्मिन्न कुर्युः ॥ १०८ ॥

पुरुषार्थरूपतया प्राप्तयोर्निषेधः ॥ १०८ ॥

अद्वारेण सदो हविर्धाने प्रेक्षमाणं ब्रूयान्मा

---

१ लप श्लेषणे; पूज पूजायाम, पूजितं शोभनं श्लेष्यते ऽनयेति पूजितश्लेषणीति प्राप्ते छान्दसत्वाल्लम्पूजनीति । स च दारुमयः सूचक इति याज्ञिकदेवाः ।

प्रेक्षथा इति ॥ १०९ ॥

तथैतत्सदसि स्तोत्रशस्त्रकाले। एवं श्रूयते तद्वा एतद्वृषा साम योषामृचः सदस्यध्येतीति प्रकृत्याह तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति। हविर्धानेपि अथैतद्वृषा सोमो योषा अपो हविर्धानेऽध्येतीति प्रकृत्य तस्माद्द्वारेण हविर्धानं प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति ॥ १०९ ॥

पृष्ठ्यामुभयतो द्वार्ये ॥ ११० ॥

भवतः ॥ ११० ॥

दक्षिणस्यानसोऽधः प्रउगं खनत्यु-

परवान् १ ॥ १११ ॥

दक्षिणस्यानसः प्रउगस्याधस्तात् उपरवान् खनति ॥१११॥

अभ्र्यादि करोत्यवटवदापरिलेखनात् ॥ ११२ ॥

अभ्र्यादानादि यूपावटवत्परिलेखनान्तम् ॥ ११२ ॥

चतुरः ॥ ११३ ॥

उपरवान्परिलिखति ॥ ११३ ॥
तांश्च—

अक्ष्णया व्याघारणवत् ॥ ११४ ॥

उत्तरापरं वा प्रथमम् ॥ ११५ ॥

अक्ष्णयेति चेयमर्थेनैवोच्यते ॥ ११५ ॥

सम्यग्वा ॥ ११६ ॥

ऋयो अपि समीच एव परिलिखेदिति वचनात् ॥ ११६ ॥

---

१ उपरवा अवटाः, श्वभ्रा इति यावत्। प्रउगम्, प्रासयुगमीषास-न्धानम्।

उत्तरपूर्वं त्वन्त्यम् ॥ ११७ ॥

सर्वपक्षेषु ॥ ११७ ॥

प्रादेशमात्रांस्तदन्तरान् ॥ ११८ ॥

परिलिखेत् ॥ ११८ ॥

बृहन्नसीति यथापरिलिखितं खनति ॥ ११९ ॥

येन क्रमेण परिलेखः कृतः ॥ ११९ ॥

इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रम् ॥ १२० ॥

पांसून् ॥ १२० ॥

उत्कृत्याङ्गिरामीति पश्चात्सर्वेभ्यः ॥ १२१ ॥

उत्किरेत्प्रदक्षिणम् ॥ १२१ ॥

बाहुमात्रान् ॥ १२२ ॥

खनेत् ॥ १२२ ॥

१अक्ष्णया सम्भिन्द्यादशक्तौ सम्यक् ॥ १२३ ॥

सम्भेदनम् । अस्मिन्पक्षे पूर्वयोरसम्भेदनमिति सम्प्रदायः । नासिकासंस्तवात् ॥ १२३ ॥

स्वराडित्यवमर्शयति यथाखातं प्रतिमन्त्रम् ॥ १२४ ॥

अवमर्शयतीति कारितत्वात् अध्वर्युणा । यजमानश्च स्वराडिति प्रतिमन्त्रमवमर्शनं करोति यथाखातम् । अपरे तु समाख्यया अध्वर्योरेव मर्शनमिच्छन्ति प्रतिप्रस्थाता चाध्वर्युण इति ॥ १२४ ॥

---

१ अक्ष्णयाशब्दोऽयं कर्णवचनः, न भुजेन कोट्या वा सम्भिन्दन्ति किं तर्हि कर्णेन दक्षिणपूर्वमुत्तरापरं च छिद्रयन्ति; तथा दक्षिणापरं पूर्वोत्तरं चेत्यर्थः ।

अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेध्वर्यु-
रपरोत्तरे यजमानः ॥ १२५ ॥

हस्तौ प्रक्षिणायटयोः परस्परतः संमृशेते ॥ १२५ ॥

अध्वर्युः पृच्छति यजमान किमत्रेति ॥ १२६ ॥

भद्रमित्याह ॥ १२७ ॥

इति प्रयुक्ते—

तन्नौ सहेत्यध्वर्युरुपांशु ॥ १२८ ॥

अयं च मन्त्रश्चोदितार्थाभिधायी। अनेकयजमानके विपरिणाम्यते। उपांशुत्वं च यागन्तपक्ष एव वक्तव्यं नोपांशु पक्ष इति ॥ १२८ ॥

पुनर्दक्षिणापरेध्वर्युः पूर्वोत्तरे यजमानो य-
जमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति
प्रोक्ते तन्म इति यजमानः ॥ १२९ ॥

आह। अयमपि मन्त्रश्चोदितार्थाभिधायी। अस्त्विति चाध्याहारः ॥ १२९ ॥

प्रोक्षत्येनान् रक्षोहण इति ॥ १३० ॥

अवटान्। भेदे न च प्रोक्षणं संस्कार्यभेदात् ॥ १३० ॥

भेदे च मन्त्रावृत्तिः सन्निपातित्वात् ॥ १३१ ॥

बहुवचनं मन्त्रे पूजार्थम् ॥ १३१ ॥

अवनयनावस्तरणे चावटवद्रक्षोहणो
रक्षोहण इति ॥ १३२ ॥

यूपावटस्यद्रनयनावस्तरणे कार्ये । इयांस्तु विशेषो रक्षोहण इत्यनेन मन्त्रेण ॥ १३२ ॥

तनूनुपरि कुशान्कृत्वा धिपवणे फलके
द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्नि
मात्रे सन्तृण्णे वोपदधाति पर्यूहति च
रक्षोहणौ रक्षोहणाविति ॥ १३३ ॥

तनून्स्थूलानग्रानानुपरि कुशान्कृत्वाधिषवणे फलके द्व्यङ्गुलान्तराले प्रक्षालिते प्रागग्रे अरत्निमात्रे सन्तृण्णे वा अन्तःशाल्ये उपदधाति रक्षोहणाविति पर्यूहति च रक्षोहणावित्यनेन मन्त्रेण ॥ १३३ ॥

तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं नि-
दधाति वैष्णवमसीति ॥ १३४ ॥

तयोः फलकयोरुपरि चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीत्यनेन मन्त्रेण ॥ १३४ ॥

तस्मिन् ग्राव्णः पञ्च वैष्णवा स्थेति ॥ १३५ ॥

तस्मिन् चर्माधिषवणे ग्राव्णः पञ्च वैष्णवा स्थेत्यनेन मन्त्रेण निदधाति ॥ १३५ ॥

खरं पुरस्तात्करोत्युद्धतावोक्षिते सिकतो-
पकीर्णे चतुरस्रम् ॥ १३६ ॥

निगदव्याख्यातम् ॥ १३६ ॥

अन्तःपात्यात्षट् प्रक्रमान्प्राङ् यात्वा दक्षि-
णा सप्तम महान्तं तत्रौदुम्बरीं मिनोति य-
जमानमात्रीम् ॥ १३७ ॥

सा च—

यूपवच्छेते ॥ १३८ ॥

अवटस्य पुरस्तात् ॥ १३८ ॥

अभ्र्यादि करोत्यावटस्तरणात् ॥ १३९ ॥

यूपावटवत् ॥ १३९ ॥

उद्दिवमित्युच्छ्रयति ॥ १४० ॥

उदुम्बरीम् ॥ १४० ॥

द्युतान इति मिनोति ॥ १४१ ॥

अवटे प्रक्षिपति ॥ १४१ ॥

पर्यूहणाद्योपसेचनात्कृत्वा ध्रुवासीति वाचयत्यौदुम्बरीमालभ्य प्रजया भूयादिति पशुभिरिति वा ॥ ॥ १४२ ॥

मन्त्रगतो विकल्पः ॥ १४२ ॥

स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहा करोति सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ॥ १४३ ॥

स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत इति ॥ १४३ ॥

अनाम्नातप्रतिषेधाच्च ॥ १४४ ॥

अनाम्नातेपि च स्वाहाकारं प्रतिषेधं ब्रुवन् कृस्वाहाकारमन्त्रतां दर्शयति । न स्वाहा करोत्यहुतादो वै देवानां मरुत इति । अमन्त्रकस्तु पूर्णाहुत्यां स्वाहाकारो विहित एव । मन्त्रविषयोयमारम्भः ॥ १४४ ॥

नाभिदघ्नं सदः ॥ १४५ ॥

तच्च कुड्यप्रमाणापेक्षया । उच्छ्रिता ह्युपसर्पन्ति ये उद्गातार आसीना एवेत्यतदन्यथा नोपपद्यते ॥ १४५ ॥

भस्त्रा वा ॥ १४६ ॥

प्रमाणा भवति । एवमपि श्रूयत एव ॥ १४६ ॥

उदग्वंशम् ॥ १४७ ॥

पृष्ठवंशेन ॥ १४७ ॥

अष्टादशारत्न्येकविंशतिश्चतुर्विंशतिर्वा ॥ १४८ ॥

आयामो भवति । आयामश्च दैर्घ्यमुच्यते ॥ १४८ ॥

नव तिर्यक् अर्धायामो वा ॥ १४९ ॥

दैर्घ्यस्य ॥ १४९ ॥

औदुम्बरीं मध्ये पृष्ठ्यामेके ॥ १५० ॥

तन्मध्य औदुम्बरीं मिनातीति औदुम्बरीं मध्य इत्युक्तम् । पृष्ठ्यामेके । एतत्कुत. । अत्र हविर्धानस्य हि पृष्ठ्यामुभयतो द्वार्ये इत्युक्तम् । तस्मादस्य पुरुष आस्तां सन्तृण्ण इति वचनात् सर्वोपि तथैव भवति । उदगायामस्य मध्ये पृष्ठ्या प्रागायामस्य च औदुम्बर्यामुभयानुग्रहात् ॥ १५० ॥

इन्द्रस्य च्छदिरिति मध्यमं च्छदिरारोप्यापरपूर्वे च ॥ १५१ ॥

छदिषी आरोपयति । चशब्दो मन्त्रानुकर्षणार्थ. ॥ १५१ ॥

त्रिवर्गो चोत्तरतः ॥ १५२ ॥

उत्तरतस्त्रीणि परस्त्रीणि इति वचनात् ॥ १५२ ॥

परिस्त्वेति परिवार्य परिषीवणं ग्रन्थ्यभिमर्श-
नान्यैन्द्रैः ॥ १५३ ॥

परित्वेत्यनेन मन्त्रेण परिधारणं कृत्वा परिषीवणग्रन्थिकरणाभिमर्शनानि हविर्धानयद्वैन्द्रैर्मन्त्रैः कर्त्तव्यानि ॥ १५३ ॥

हविर्द्धानापरान्तमुत्तरेणाग्नीध्रमगन्यागारद्वा-
रमन्तर्वेद्यर्द्धं भूयः सर्वं वा ॥ १५४ ॥

करोति । अथ हविर्धानयोर्जघनार्द्धे समन्धीकरोति प्रकृत्यैवमेव श्रुतित्वात् ॥ १५४ ॥

निष्ठाप्य वैश्वदेवमसीत्यालभते ॥ १५५ ॥

आग्नीध्रम् ॥ १५५ ॥

धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषन्निवपति
रण्येनान्वारब्ध उदङ्ङुपविश्य विभूरसीति
प्रतिमन्त्रम् ॥ १५६ ॥

धिष्ण्यान्करोति। उद्धतावोक्षितग्रहणं न च परिसमूहनादयः सर्व एव गृह्यन्ते स्मार्त्ता आन्यर्था हि गृह्योभिहिताः । तदपचारे च स्मार्त्तं प्रायश्चित्तम् । धेनेपि नेनूचन्ते उद्धते वा अवोक्षितेग्निमाइधतीति । पुरीषन्निवपति रण्येनान्वारब्ध उदङ्ङुपविश्य विभूरसीति प्रतिमन्त्रम् ॥ १५६ ॥

आग्नीध्रीयं पूर्वम् ॥ १५७ ॥

अग्नीध्रीयं धिष्ण्यं पूर्वम् ॥ १५७ ॥

सिकताश्चोपरि ॥ १५८ ॥

दीयन्ते ॥ १५८ ॥

रौद्रेणेति सर्वत्र ॥ १५९ ॥

अनुषङ्ग ॥ १५९ ॥

पट् सदसि ॥ १६० ॥

निवपति ॥ १६० ॥

प्रत्यङ्मुखो द्वारमपरेण होतुः ॥ १६१ ॥

धिष्ण्यान्निवपति ॥ १६१ ॥

दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य ॥ १६२ ॥

धिष्ण्य निवपति ॥ १६२ ॥

होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकानाम् ॥ १६३ ॥

धिष्ण्यान्निवपति ॥ १६३ ॥

आग्नीध्राद्दक्षिणं सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम् ॥ १६४ ॥

सम्प्रतिशब्द आर्जवे ॥ १६४ ॥

सदो द्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरिब्रह्मासनशालाद्वार्यप्राजहितान्त्सम्राडसीति प्रतिमन्त्रम् ॥ १६५ ॥

अनुदेशश्च सन्दर्शनमात्रम्[१] । रौद्रेणेति च सर्वत्रानुषङ्गः । यं च शाखान्तरादेकवचनान्त । स्वशाखायां हि बहुवचनान्तः ध्यते । तस्योपरिष्टाद्विनियोग इति वक्ष्याम. ॥ १६५ ॥

---

१ तथा चाह माधवाचार्यः अनुदेशो नाम विद्यमानमेव पदार्थं त्वमव भवसीति निर्देश' इति ।

उत्कर॒ समूह्योऽसि विश्ववेदा ऊनातिरि-
क्तस्य प्रतिष्ठेति ॥ १६६ ॥

अत्रापि च रौद्रेणेत्यनुषङ्ग एव शाखान्तरात् ॥ १६६ ॥

२परिस्तरणपात्रस॒सादनप्रोक्षणाज्यनिर्वपणानि
कृत्वोत्तरपरिग्रहादि करोति ॥ १६७ ॥

परिस्तरणाद्युद्घाटनं आहननव्युदासार्थमिति केचित् । तन्न । प्रतिषेधशासनाभावात् । एककर्तृकनियमार्थमित्यपरे । तदपि नैवं नियमशासनाभावात् । अतो गुणार्थमुद्घाटनम् । आज्यनिर्वपणान्ते महावेदेरुत्तरपरिग्रहादि करोतीत्ययमर्थः । उत्तरपरिग्रहादि शब्देन च खननादि ग्रहणम् सम्मर्शनान्तस्याभिनिर्वृत्तत्वात् । किं चाग्नीषोमीयस्य द्रव्यदेवता सम्बन्धो नैवाभिहितः येन परिस्तरणाद्यग्नीषोमीयार्थं सक्रियते । स कस्य हेतोः । शाखान्तरे हि अवान्तरदीक्षाविमोकोत्तरकालं अग्नीषोमीयस्य विधानम् । यथा ब्राह्मणं चात्रार्थे उपनिबध्नाति । तत्र चाचार्येणोक्तमग्नीषोमीयोत्तः पशुरित्यतोऽत्र परिस्तरणाद्यभिधानं वचनात् । सवनीयेष्वप्यवकाशवाचनान्ते तद्विधानमाग्नेयमग्निष्टोम आलभेतेति । तत्रैव सूत्रकारेणोपनिबद्धम् । ध्रुवगोपं कृत्वा परिव्ययणादि करोतीति सम्मूर्च्छिताकारं चापरत्रापि परिस्तरणाद्यभिधानं कृतमाचार्येण । इदमेव हि तस्य शैली यथा ब्राह्मणमुपनिबध्नाति ॥ १६७ ॥

अन्तःपात्यसहितम् ॥ १६८ ॥

अनुमार्जनं धर्मं भवति । एवं हि श्रूयते य एवं वेदेऽजंघना-र्थे शङ्कुस्त्वाप्रतिपीतीति ॥ १६८ ॥

बर्हिरन्तं प्रेष्यति तत्र सर्वमासादयति ॥ १६९ ॥

यथा प्रेषित सर्पग्रहणात् । रूपयज्ञ रूपकाले ॥ १६९ ॥

---

२ अथाग्नीषोमीयपशोरुपक्रममाह ।

अत्रैव प्रोक्षणम् ॥ १७० ॥

इध्मवेदिबर्हिषाम् । उपरिष्टादपीध्मप्रोक्षणमभिहितं चोदकपरिप्राप्त्या इदमन्यदपूर्वम् । एव च सत्यग्नीषोमीये हि प्रोक्षित इध्मो भवति ॥ १७० ॥

इध्म निधायाग्नीषोमीयाय वेदेस्तरणमग्रहणं प्रस्तरस्यापराह्णे ॥ १७१ ॥

यदार्थतयाग्नीषोमीयार्थमिध्म स्थापयित्वा वेदेस्तरणमपराह्णे सोपराह्णे वेदिं स्तृणीतेति वचनात् । तत्र चाग्रहण प्रस्तरस्य ॥ १७१ ॥

अर्द्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम् ॥ १७२ ॥

प्रविश्येति निष्क्रमणा लक्ष्यते । तच्च कार्यार्थम् । कार्यं चोपरिष्टाद्वक्ष्यते परिवाप्यायै दोहनमिति । परिवाप्या इति च गवामपाकृतावस्थोच्यते । अत शाखाच्छेदनार्थं निष्क्रमणम् प्रवेशनेन लक्ष्यते । शालायां प्रविश्य प्रणयनीयस्येध्मस्य शालाद्वार्ये आधानम् ॥ १७२ ॥

आज्याधिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वा शालाद्वार्यमपरेणास्ते यजमान उपस्थे सोम कृत्वा ॥ १७३ ॥

अत्र विशेष । आज्याधिश्रयणपर्यग्निकरणे कृत्वा स्रुक्सम्मार्जनाद्यर्थं खण्डप्रैष । तत स्फ्योद्फ प्रहरणम् । प्रैषोत्तरकालत्वात् । पाण्योरवनेजन तु सामर्थ्यात् पूर्वमेव क्रियते । आज्यावेक्षण च पत्नीकर्तृकमत्र । इतरत्तुपरिष्टात्करिष्यते ॥ १७३ ॥

शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ॥ १७४ ॥

यत्र स्थाल्यामोप्तम् ॥ १७४ ॥

चतुर्ह्वैकआह्वनीयस्योपयमनीष्वाग्नीध्रीयस्या-
क्षोपाञ्जने च ॥ १७५ ॥

एके चतुर्थो पदप्रक्षेपं कुर्वन्ति । आह्वनी यस्योपयमनीषु तथाग्नीध्रीयस्याक्षोपाञ्जने चशब्दादिह च । एक इति ग्रहणं विकल्पार्थम् ॥ १७५ ॥

आज्यप्रोक्षणीरन्तःपात्यदेश उत्पूय पश्चा-
ज्यग्रहणम् ॥ १७६ ॥

आज्यस्य प्रोक्षणीनां चान्तःपात्यदेशे उत्पवनं कृत्वा पश्चाज्यग्रहणं कर्त्तव्यम् । पशोरनुक्तत्वात्पश्वाज्यग्रहणमित्युक्तम् ॥१७६॥

धारयत्याज्यानि ॥ १७७ ॥

नयनाय ॥ १७७ ॥

अपिव्रताश्चान्वारभन्ते यजमानम् ॥ १७८ ॥

१अपिव्रता गोत्रजास्तेन्वारभन्ते यजमानम् ॥ १७८ ॥

वाससा छादयस्येनात् ॥ १७९ ॥

स यजमानात् ॥ १७९ ॥

चरत्सु नाद्रियेत ॥ १८० ॥

चरत्स्वपि प्रतेष्वनादर । ततश्च प्रायश्चित्तं न भवति ॥१८०॥

प्रदीप्तमिध्मं त्व्, सोमेति प्रचरण्याभि-
जुहोति ॥ १८१ ॥

१ अपिव्रतास्त उच्यन्ते येषां यजमानव्रते आपित्वमस्ति, दायाधेनाविभक्ता इति पितृभूति । अपि संसर्गे व्रतमिति कर्म नाम, संसृष्ट साधारणं कर्म येषां ते अपिव्रता अविभक्ता दायादा, ते ह्यनेनापि कृष्यादि कर्म कृतं सर्वं उपजीवन्तीति हरिस्वामिन ।

मन्दीसे प्रयणनीयमिध्मं स्वं सोमेनेत्यनेन मन्त्रेण [1]प्रचरण्याभिजुहोति ॥ १८१ ॥

जुषाणो अप्तुरिति द्वितीयाम् ॥ १८२ ॥

आहुतिं जुहोति ॥ १८२ ॥

अग्नये प्रह्रियमाणायानुब्राचयति सोमाय प्रणीयमानायेति वा ॥ १८३ ॥

वाशब्दो विकल्पार्थः ॥ १८३ ॥

आहवनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोमपात्राणीध्मचतुष्टयं च सन्नद्धं वपाश्रपण्यौ रशने शकलवृषणमरणी च ॥ १८४ ॥

ग्रावादीन्यादायाहवनीयं प्रति गच्छन्ति । [2]द्रोणकलशस्य स्वशब्दाभिधानात् । सोमपात्रशब्देन ग्रहपात्राणि गृह्यन्ते । न चमसादीनि । इध्मोऽग्नीषोमीयार्थः । चतुष्टयं च वपाश्रपण्यौ रशने च । शकलवृषणमरणी च मन्थनार्थानि । यद्यपि चात्र मन्थनं वैकल्पिकं तथापि सवनीयार्थं नयनमिति ॥ १८४ ॥

अग्ने नयेति वाचयति ॥ १८५ ॥

उत्तरेण सदो हृत्वाग्नीध्रेऽग्नि निदधाति ॥ १८६ ॥

ग्रावद्रोणकलशसोमपात्राणि च ॥ १८७ ॥

तानि च होमोत्तरकालम् । स निहिते जुहोतीत्यभिधाय तत्रैव निदधाति ग्राव्ण इत्युक्तमिति ॥ १८७ ॥

---

१ प्रचरणी नाम पालाशी स्रुक् जुहूरेव, अन्यासु व्यापृतासु तया प्रचर्यत इति प्रचरणी इति ।

२ द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः, यस्योपरि धारा ग्रहा गृह्यन्त इति ।

अयन्न इति जुहोत्यस्मिन् ॥ १८८ ॥

आहवनीये मा भूदित्यस्मिन्नित्युच्यते ॥ १८८ ॥

उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधा-
त्यन्यदाज्यं सोमवर्जम् ॥ १८९ ॥

आग्नीध्रीयमुत्तरेण परिक्रम्य आज्यसोमवर्जमाहवनीयस्यो-
त्तरतो निदधाति ॥ १८९ ॥

धिष्ण्याव्यवायोध्वर्योः ॥ १९० ॥

अध्वर्युग्रहणादन्येषामनियमः । तस्मादध्वर्युः सततया धि-
ष्ण्यग्नातीयादिति श्रुतत्वात् ॥ १९० ॥

इध्मप्रोक्षणादि करोति ॥ १९१ ॥

पेकृतावसरे अकृतानुवृत्त्यर्थमिदमुक्तम् ॥ १९१ ॥

खरोत्तरार्द्ध एकवृत्स्तरणं पश्चाद्वोत्तरवेदेः ॥१९२॥

इति विकल्पः शाखस्य तुल्यत्वात् ॥ १९२ ॥

आहवनीयेक्षणात्कृत्वोरु विष्णविति
जुहोति ॥ १९३ ॥

आहवनीयेक्षणादिनि कुत एतत् । अत्र हि परिधिपरिधान
पदार्थः परिसमाप्यत इति ॥ १९३ ॥

पुरस्ताद्वा समिधावायेति श्रुतेः ॥ १९४ ॥

पुरस्ताद्वा जुहोति । नाहवनीयेक्षणान्ते । अभ्याधाय सामि-
धायव जुहोतीति श्रुतत्वात् । अयं च मन्त्रश्चोदितार्थाभिधायी । त-
स्माभिहोमार्थोज्यसंस्कार एवेह भवतीत्याग्नीध्रीये च । वैसर्जन
होमार्थत्वात् । तस्य सर्वाणि चैतानि वैसर्जनानीति ॥ १९४ ॥

आसाद्याज्यानि दक्षिणेनसि कृष्णाजिनमा-

स्तीर्य तस्मिन्सोमं निदधाति देवसवितरिति॥ १९५॥

आज्यासादनं प्राकृतमेव तत्रालम्भनमुदकोपस्पर्शनं च कृत्वेति। एवं श्रूयते आसाद्य हवींषि सम्मृश्याप उपस्पृश्य सजानमादाय प्रतिपद्यत इति। आचार्येण चात्राज्यासादनमात्रमेवोक्तं व्यपदेशसामर्थ्यादालम्भादि लभ्यत एवेत्यभिप्रायः। एवं च सति यत्र प्राकृतवैकृतौ व्यपदेशौ तत्र प्राकृतमेव पूर्वं कर्तव्यमिति। यथासाद्य हवींष्यग्निं मन्थत्यासाद्य हवींषि सम्मृशतीति। मन्त्रश्चोदितार्थाभिधायी न्यग्रोधे विपरिणम्यते॥ १९५॥

एतत्त्वमिति विसृज्योपतिष्ठते॥ १९६॥

विसर्गोपदेशात्पूर्वमनन्वारम्भः सोमस्य। तस्य याजमानत्वात्। यजमान एवोपस्थान इति। मन्त्रश्चोदितार्थाभिधायी॥ १९६॥

स्वाहा निरिति निष्क्रम्याग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते॥ १९७॥

अत्र च यजमानस्य कर्तृत्वं अङ्गुलिविसर्गोपदेशात्। व्यपदेशसामर्थ्याच्च। तथा च मन्त्रलिङ्गं स्वाहा निर्वरुणस्य पाशान्मुच्य इति। अवान्तरदीक्षोन्मोचनाद्यानेकयजमानके प्रतियजमानं भवति॥ १९७॥

पत्नी च गार्हपत्ये तूष्णीं मदन्तीरुपस्पृश्य॥ १९८॥

गार्हपत्ये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते॥ १९८॥

चात्वाले मदन्तीः कृत्वा॥ १९९॥

प्रतिपत्तिश्चरितार्थत्वात्॥ १९९॥

नामग्रहणभोजने अस्यातः कुर्वन्ति॥ २००॥

बहुवचनोपदेशात्पुरुषमात्रधर्मं । तस्मादस्याश्चाऽऽदनन्यत्र नाम गृह्णन्तीति वचनात्पूर्वं प्रतिषेधो गम्यते । विहितश्चासौ तस्माद्दीक्षितस्य नाश्नीयादिति । अतश्च भाक्तुरेव व्यतिक्रमे प्रायश्चित्तम् ॥२००॥

व्रतनिवृत्तिः ॥ २०१ ॥

अत परं व्रतं निवर्तते ॥ २०१ ॥

हविः शेषभक्षः ॥ २०२ ॥

यद्भक्षयति तद्धवि शेषम् । तच्च प्रातः । येनाद्य निवृत्तसमाद्युपवसथ नाश्नीयादिति । प्रातः सामान् हवि शेषांश्च भक्षयन्तीति श्रुते । स चायं सवनीयशेषो न हविर्मात्रस्य । सवनीयान्हि प्रकृत्य श्रूयते अथ पशूनांपुरोडाशा भूयोहविरुच्छिष्टमसत्समाप्त्या इति बहुयजमानके नाना पुरोडाशाभिधायोच्यते । भूयो हविरुच्छिष्टम-सत्कथं नाम तच्च समाप्तिर्भविष्यति । अतः सवनीयशेषोऽयमिति गम्यते । सूत्रकारमत्यानाच्च । प्रत्यग्नि सवनीयपुरोडाशा भूया हविरु-च्छिष्टमसत्समाप्त्या इति श्रुते ॥ २०२ ॥

अग्नीषोमीयोतः पशुः ॥ २०३ ॥

किमर्थमिदमुच्यते । नास्त्येव ह्यवसरे पशोर्देवता सम्बन्ध श्रुतावभिहितः । यथा श्रुति च सूत्रकार सूत्रमारभते । परिस्तरणा-दयो हि पदार्था सोमिकैर्व्यतिषक्ता पठ्यन्ते तथैवोपनिबद्धा । उपांशु चरन्ति प्रागग्नीषोमीयादित्येवमर्थमेवोच्यते अग्नीषोमीयोत पशुरिति । सद्यस्के च श्रूयते पुरोडाशोवाग्नीषोमीयस्थान इति सोऽत्र यथा स्यादिति ॥ २०३ ॥

तद्देवत्यः पशुपुरोडाशः ॥ २०४ ॥

यद्देवत्य पशुर्भवति तद्देवत्य पुरोडाशमनुनिर्वपतीति श्रुते । अतश्च पश्वन्तरेऽपि तद्देवत्या भवति नाग्नीषोमीय इति ॥ २०४ ॥

अभ्र्यादि करोति ॥ २०५ ॥

आज्यासादनाग्नस्याभिनिर्वृत्तत्वात् अग्न्यादेरेवावसर इति॥२०५॥

दक्षिणेन हविर्द्धानं पश्चिडां हरति ॥ २०६ ॥

सदसि होतोपविष्ट, तं प्रति नीयमानायाः प्रादक्षिण्येन स्मृत्यनुग्रह इति ॥ २०६ ॥

गुदतृतीयं च ॥ २०७ ॥

दक्षिणेनैव ॥ २०७ ॥

मर्जालीयं दक्षिणेन जाघनीम् ॥ २०८ ॥

पत्नीशालां ह्यसौ नीयते । तत्र धिष्ण्यव्यवायो मा भूदिति ॥ २०८ ॥

प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात् ॥२०९॥

प्रत्याहृत्य वा यूपाहवनीयावन्तरेणैतानि नीयन्ते । कुत एतत् । सोमाहवनीययोरव्यवायात् । दक्षिणेन वा प्रत्याहृत्य वेति दक्षिणेन स्मृत्यनुग्रहः । इतरत्र चोत्तरोपचारितया श्रुत्यनुग्रहः । तस्मात्प्रत्याहृत्यैवेत्यवधार्यते ॥ २०९ ॥

यूपैकादशिनीचेद्रथाक्षमात्राण्यन्तराणि ॥ २१० ॥

चेच्छब्दोयदर्थः । यदि यूपैकादशिनी वक्ष्यमाणं सोमायनं वेति । उभयं हि विकल्पेन श्रूयत इति तत्र रथाक्षमात्राणि यूपान्तरालानि ॥ २१० ॥

पूर्वार्द्धं वा समं विभज्य ॥ २११ ॥

पूर्वार्द्धसमविभागेन वा ॥ २११ ॥

पक्षसम्मिता वाग्नौ ॥ २१२ ॥

यथोक्तं वा ॥ २१२ ॥

यूपाहुत्यभ्रयादानयत्रावपनानि सकृत् ॥ २१३ ॥

भवन्ति । असन्निपातात् ॥ २१३ ॥

भेदेनान्यत्सान्निपातित्वात् ॥ २१४ ॥

मध्यमं परिलिख्योत्तरं दक्षिणं वा व्यत्यास-
मितरान् ॥ २१५ ॥

मध्यमं यूपावटं परिलिख्य तदनन्तरमुत्तरं दक्षिणं वा परि लिखति । इतरांश्च व्यत्यासेन ॥ २१५ ॥

आवटहोमात्करोति ॥ २१६ ॥

पदार्थानुसमयेन ॥ २१६ ॥

अञ्जनाद्याचषालेक्षणात्कृत्वैकैकस्य ॥ २१७ ॥

काण्डानुसमयेन । पदार्थानुसमये प्राप्ते वाचनिकः काण्डा नुसमयः ॥ २१७ ॥

श्वो वा दक्षिणोत्तराणामवगूहनान्तमाल-
म्भनासम्भवात् ॥ २१८ ॥

श्वो वा दक्षिणोत्तराणामवगूहनान्तं कर्म करोति । कुत एतत् । आलम्भनासम्भवात् । नह्यद्य पश्वालम्भः सम्भवति । अथवा आलम्भनासम्भवादिति । न ह्यद्य क्रियमाणे चषालेक्षणा न्ते यूपालम्भः सम्भवति । उक्तं चैतदिदं वै यूपमुच्छ्रयन्त्यनुपरि व्ययणान्तमवर्जतीति । अयं च वाक्यैकदेशोपन्यासः तस्मादुत्त रेषोर्धूर्वादित्यस्य ज्ञापकभूतः । न्याय्ये हि सत्ये तस्मिन् वाचनिकी च षालेक्षणान्तता भवति । वचनं हि तत्र अपरिवीता वा एव पश्व रास्त्रि यसन्तीति । अतश्चषालेक्षणान्तता वाचनिकी । तस्मात् प्रा तरेषोऽप्यपदिश्यते नदपि वचनम् । अतो विकल्प एवायम् । अपि वा चषालेक्षणान्ता परयूपा इयोः यावगूहनान्तेनेति । पश्वालम्भा सम्भवादिति मोघंवाद्वाक्यैकदेशोपन्यासो न न्याय्य इति ॥ २१८ ॥

इयांस्तु विशेषः —

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तवके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठशालयाऽध्यापका: पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्रा ७ आणका ८

कालान्तरे प्रतिस्तबक " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति ।

| साम्प्रतं मुद्यमाणा ग्रन्थाः – | | मुद्रिता स्तवकाः |
|---|---|---|
| १ संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| २ शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| ३ श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| ४ भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| ५ करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| ६ भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| ७ न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्ण । | ( मीमांसा ) | २ |
| ८ ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | (वेदान्तः) | ६ |

स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णम् । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्णः ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) २

(१२) विभक्त्यर्थनिर्णय. न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्याय. ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( वेदान्तः ) १३

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तं ) १

(१६) मीमांसाबालप्रकाश. ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीमद्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैत साम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम् । ( मीमांसा ) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्वकृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् । ५

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्त ) १

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्त,
चौखा-सं ऽकुस्तकालय
बनारस सिटी ।



No 76. ] [ *Price Rupee One.*

THE

# CHOWKHAMBÂ SANSKṚIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY ŚRI KARKACHÂRYA.

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mimâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthashâlâ,

*Central Hindu College, Benares.*

FASCICULUS VI

*PUBLISHED AND SOLD BY THE SECRETARY.*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES

AGENTS —OTTO HARRASSOWITZ LEIPZIG
PANDIT JYESHTARAMA MUKUNDJI, BOMBAY.

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1904.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—७६

परिवीय मध्यममवगूहनान्तम् ॥ २१९ ॥

पार्श्वं यूपानामभ्यञ्जनप्रभृत्यवगूहनान्तं करोति सौम्ये-ष्टनि ॥ २१९ ॥

अग्निष्ठे चैषां रशनाः परिव्येष्टय वासयति ॥२२०॥

स चायं शेषयूपार्थो रशनासंस्कारो नाग्निष्ठार्थः । एवं हि श्रूयते । अग्निष्ठा द्वे द्वे रशने आदायेतरान्परिव्ययति तेनैतानग्नि-ष्ठान्करोति । एवं च सत्ययमर्थः वसत्यर्थासम्भवेपि अग्निष्ठे रशनाः कृत्वा परिव्ययणं कर्त्तव्यमिति ॥ २२० ॥

अभ्यञ्जनप्रभृति करोति ॥ २२१ ॥

उक्तार्थम् ॥ २२१ ॥

यथाखातमुच्छ्रयति ॥ २२२ ॥

येन क्रमेणावटखननं तेनैव यूपोच्छ्रयणमिति । प्रवृत्त्या ॥ २२२॥

वर्षिष्ठो दक्षिणोनुपूर्वा इतरे ॥ २२३ ॥

स यो वर्षिष्ठः स दक्षिणार्द्धे स्यादथ ह्र-सीयानिति श्रुतत्वात् । ह्रसीयता चारत्निवशेनैव कर्त्तव्या नाति-यमेन । तेषां ह्रास श्रवणे पञ्चारत्निं परिहासयेदित्येवमादि । एवं च कृत्वा पञ्चारत्निं पञ्चदशपर्यन्तं सोम इत्यस्य पक्षस्यैकादशि-न्यामप्रसङ्ग एव । अपरिमितपक्ष एव भवति । तथा चान्त्यः षोड-शारत्निरन्ततो भवति ॥ २२३ ॥

तीव्रसुत्यग्निष्ठः प्राची च ॥ २२४ ॥

तीव्रसुत्यग्निष्ठो वर्षिष्ठः प्राची च यूपपङ्क्तिर्भवति ॥ २२४ ॥

यथा यूपं वेदिवर्द्धनम् ॥ २२५ ॥

रथाक्षमात्रान्तरा पक्षे ॥ २२५ ॥

वर्षिष्ठाद्दक्षिणं १वितष्टं द्वादशं निदधात्येष त इति ॥ २२६ ॥

द्वादश उपशयो भवति वितष्टस्तं दक्षिणत उपनिदधातीति श्रुतेः । द्वादशग्रहणाच्च यूप एवायम् । तथा च श्रूयते उपशयो यूपो भवति द्वादश इति च श्रवणात् यूपैकादशिन्यामेव भवति न पशुपशवादाविति ॥ २२६ ॥

प्रोक्षणाद्यवगूहनात्करोत्यनर्थलुप्तम् ॥ २२७ ॥

निखननाभावादवटसम्बन्धोनर्थः सोत्र लुप्यते । केचित् यूपधर्मानत्रनेच्छन्ति कार्यप्रयुक्तत्वात्तेषाम् । यूपस्य कार्यं पशुनियोगः । स चेह नास्ति तस्मादप्रवृत्तिर्धर्माणाम् । किं च उपशयो यूपो भवतीति वर्त्तमानापदेशात् । तस्मादप्यप्रवृत्तिर्धर्माणामित्यत्रोच्यते । स्यादेतदेवं यदि कार्यप्रयुक्ताः प्रोक्षणादयो भवेयुः । न ह्येते कार्यप्रयुक्ताः । किं तर्हि स्वरूपप्रयुक्ताः । न हि निष्पन्ने यूपस्वरूपे एते विधीयन्ते यूपं प्रोक्षति यूपमनक्ति यूपं परिव्ययतीति । न च सिद्ध एव यूपोस्ति यत्रैते धर्माः क्रियेरन् । तस्मादेभिरेव यूपो भाव्यत इति । यथौदनं पचति सक्तून् पिनष्टीति च पाकेनौदनमभिनिर्वर्तयति पेषणेन च सक्तून् । यत्र पुनः स्वरूपनिष्पत्त्युत्तरकालं धर्मविधानम् यथाहवनीयस्य सतः परिधिपरिधानं सम्मार्गश्चेति तत्र कार्यप्रयुक्तता युक्ता न चेह तथा, तस्मादप्यकार्यप्रयुक्तता धर्माणाम् । यत्तूक्तं वर्त्तमानापदेशाद्य विधानमित्यत्र ब्रूमः । भवति वर्त्तमानापदेशस्यापि पञ्चमलकारपरिकल्पनया विधायकत्वम् । यथाग्नेयोष्टाकपालो भवत्यैन्द्र एकादशकपालो भवतीति । अत उपशयेपि धर्माणां प्रवृत्तिर्युक्तरूपैवेति न दुरुक्तम् ॥ २२७ ॥

अनुच्छिल्य वोत्तरम् ॥ २२८ ॥

अस्य क्रिया ॥ २२८ ॥

---

१ वितष्टमनष्टाश्रीकृतमिति पितृभूतिः ।

यथोच्छ्रितः सवनीयानालभत एकतृणेनोपा-
कृत्याग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदे-
वेन्द्रमारुतैन्द्राग्नसावित्रवारुणान् ॥ २२९ ॥

उदकस्सस्थता मा भूदिति यथोच्छ्रितग्रहणम् । विस्पष्टार्थैकतृ-
णेनेत्युक्तम् ॥ २२९ ॥

एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्यत
स्मिंस्तस्मिन्नितरानुदीचः ॥ २३० ॥

एकयूपे यदा पश्वेकादशिनी भवति तदाग्नेयं नियुज्य त-
स्मिन्पशावितरानुदीचो नीत्वा नियुनक्ति ॥ २३० ॥

आग्नेयः प्रथमो गच्छत्यन्वारब्धो
ऽनुपूर्व्या इतरे ॥ २३१ ॥

स्तोमायने तु युगपद्गमनम् ॥ २३१ ॥

दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तर-
मितरान् ॥ २३२ ॥

दक्षिणमाग्नेयं निघ्नन्ति उत्तरमितरान् पशून् ॥ २३२ ॥

समानमुपप्रैष्य परिपशव्ये संज्ञपयान्वग-
न्प्रोक्षण्युल्मुकासिशामित्रान्तर्धानप्रच्छेद-
स्तोकसम्प्रैषशमितनुशासनसंवादवनस्प-
तिस्विष्टकृदिडादिरव्याघारणः समासिच्य
प्रभूत्वात् ॥ २३३ ॥

प्रभवन्ति छिन्नानि सकृत्कृन्तानि। स्विष्टकृदिडस्यतु तद्द्रव्यभेदे गुणयोगादित्यनेनैव प्राप्तौ सत्यां ग्रहणार्थोयमारम्भ। युगपदेवैतत्सम-नन्तरमेव सौविष्टकृतानामिडानां च ग्रहणं मा भूदिति ॥ २३३ ॥

उखाशूलं वपाश्रयण्यौ च ॥ २३४ ॥

विभवात् तन्त्रेणाभिसम्बध्यत इति प्राप्त इदमाह—

न वसा सन्देहात् ॥ २३५ ॥

नैतानि तन्त्रेण गच्छन्ति। कुत एतत्। वसासन्देहात्। सन्दिह्यते हि वसा उखैकत्वे। प्रकृतौ चाग्नीषोमीये स्ववसा हुता। इहापि स्ववसैव होतव्या। सा च संसृष्टरूपत्वात् न ज्ञायत इति तस्मादुखाभेदः। तद्भेदाच्च शूलवपाश्रपण्योरपि ॥ २३५ ॥

सौत्रामणी दर्शनाच्च ॥ २३६ ॥

अपि च सौत्रामण्यां शूलभेदो दृश्यते। शूलैश्च मासरेण चावभृथमभ्यवयन्तीति ॥ २३६ ॥

एवं प्राप्त उच्यते—

नाविरोधात् ॥ २३७ ॥

नैतदेवम्। नैतानि तन्त्रभावे विरुध्यन्ते। शक्नोति ह्युखा सर्वपशूनां श्रपणं कर्तुम्। तथा शूल वपाश्रपण्यौ च। यच्चोक्तं वसासन्देहादित्यत्र ब्रूमः। न हि प्रकृतावयमर्थः स्ववसा होतव्येति। घर्मं जुहोतीति हि श्रूयते। तस्मादिहापि न विरुध्यते। यदुक्तं सौत्रामण्यां भेदो दृश्यते इति ॥ ॥ २३७ ॥

अत्र ब्रूमः —

पाकवैषम्यात्सौत्रामण्याम् ॥ २३८ ॥

उखाभेदः। विषमो हि तत्र पाकः पशूनां जातिभेदात् ॥ २३८ ॥

मनोतावसाहोमौ ॥ २३९ ॥

पृथग्भवतः ॥ २३९ ॥

कालभेदात् ॥ २४० ॥

यूपैकादशिन्यां वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥ २४१ ॥

वशावपामार्जनान्तग्रहणेऽपि सति गर्भसद्भावविरोधात्तन्निरूहणान्त एव कर्तव्यः । शालाद्वार्ये इत्युक्तत्वाच्छालाद्वार्ये आहवनीयः । पत्नीयूप इति संज्ञा । स च नाभिमात्रो भवति ॥ २४१ ॥

परिस्तरणपात्रसꣳसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥ २४२ ॥

किमर्थमिदमुच्यते । पशौ हि व्यस्तरूपाः पदार्थाः कृताः । पूर्वं स्फ्यादि ततः परिस्तरणादीनि । इह पुनर्विहितत्वादग्नीनां पौर्णमासिक एव क्रमेण स्फ्याद्दानादिः ॥ २४२ ॥

त्वाष्ट्रो बस्तः पर्यग्निकृतमुत्सृजन्ति ॥ २४३ ॥

त्वष्टृदैवत्यः त्वाष्ट्रः पशुः [१]बस्तः पूतिगन्धः पशुः त्वाष्ट्रं पात्नीवतमालभेतेति विधायोच्यते यत्पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति ॥ २४३ ॥

तत्रैतत्सन्दिह्यते । किं द्रव्योत्सर्गोऽयमुत कर्मोत्सर्गस्तदन्ताङ्गीतिविधानम् । किं तावत्प्राप्तं द्रव्योत्सर्ग इति । कुत एतत्—

आज्येन सꣳस्थापयतीति श्रुतेः ॥ २४४ ॥

आज्येन हि संस्थापनं श्रूयते उत्सृष्टे द्रव्ये द्रव्यान्तरेण परिसमापनं विधीयते । अपि च संस्थापनं प्रक्रान्तस्य भवति । प्रक्रान्तश्च त्वाष्ट्र इति ॥ २४४ ॥

---

१ बस्तो मुष्करः, प्रजनयिता । मुष्कावण्डौ, तौ विद्येते यस्य स मुष्करः 'उपशुषिमुष्कमधोर' इति पाणिनीयेनातिशये रः ।

प्रसज्यन्ति ह्येतानि सकृत्कृतानि। श्रिष्टकृदादिष्टस्यतु नद्रव्यभेदे गुणयोगादित्यनेनैव प्राप्तौ सत्यां ग्रहणार्थोयमारम्भः। युगपदेवनसमनन्तरमेव सौविष्टकृतानामिडानां च ग्रहणं मा भूदिति ॥ २३३ ॥

उखाशूलं वपाश्रयण्यौ च ॥ २३४ ॥

विभवात् तन्त्रेणाभिसम्बध्यत इति प्राप्त इदमाह—

न वसा सन्देहात् ॥ २३५ ॥

नैतानि तन्त्रेण भवन्ति। कुत एतत्। वसासन्देहात्। सन्दिह्यते हि वसा उपैकस्ये। प्रकृतौ चाग्नीषोमीये स्ववसा हुता। इहापि स्ववसैव होतव्या। सा च संसृष्टरूपत्वात् न ज्ञायत इति तस्मादुखाभेदः। तद्भेदाच्च शूलवपाश्रपण्यावपि ॥ २३५ ॥

सौत्रामणी दर्शनाच्च ॥ २३६ ॥

अपि च सौत्रामण्यां शूलभेदो दृश्यते। शूलैश्च मासरेण चावभृथमभ्यवयन्तीति ॥ २३६ ॥

एवं प्राप्त उच्यते—

नाविरोधात् ॥ २३७ ॥

नैतदेवम्। नैतानि तन्त्रभावे विरुध्यन्ते। शक्नोति ह्युखा सर्वपशूनां श्रपणं कर्तुम्। तथा शूल वपाश्रपण्यौ च। यच्चोक्तं वसासन्देहादित्यत्र ब्रूमः। न हि प्रकृतावयमर्थः स्ववसा होतव्येति। वसां जुहोतीति हि श्रूयते। तच्चेहापि न विरुध्यते। यदुक्तं सौत्रामण्यां भेदो दृश्यते इति ॥ ॥ २३७ ॥

अत्र ब्रूमः—

पाकवैषम्यात्सौत्रामण्याम् ॥ २३८ ॥

उखाभेदः। विषमो हि तत्र पाकः पशूनां जातिभेदात् ॥ २३८ ॥

मनोतावसाहोमौ ॥ २३९ ॥

पृथग्भवतः ॥ २३९ ॥

कालभेदात् ॥ २४० ॥

यूपैकादशिन्यां वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥ २४१ ॥

वशावपामार्जनान्तग्रहणेऽपि सति गर्भसद्भावविरोधात्तन्निरूपणान्त एव कर्त्तव्यः । शालाद्वार्ये इत्युक्तत्वाच्छालाद्वार्ये आहवनीयः । पत्नीयूप इति संज्ञा । स च नाभिमात्रो भवति ॥ २४१ ॥

परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥२४२॥

किमर्थमिदमुच्यते । पशौ हि व्यस्तरूपाः पदार्थाः कृताः । पूर्वं स्फ्यादि ततः परिस्तरणादीनि । इह पुनर्विहितत्वादग्नीनां पौर्णमासिक एव क्रमेण स्फ्याद्यादानादिः ॥ २४२ ॥

त्वाष्ट्रो वस्तः पर्यग्निकृतमुत्सृजन्ति ॥ २४३ ॥

त्वष्टृदैवत्यः त्वाष्ट्रः पशुः [1]वस्तः पूतिगन्धः पशुः त्वाष्ट्रं पात्नीवतमालभेति विधायोच्यते यत्पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति ॥२४३॥

तत्रैतत्सन्दिह्यते । किं द्रव्योत्सर्गोऽयमुत कर्मोत्सर्गस्तदन्ताङ्गरीतिविधानम् । किं तावत्प्राप्तं द्रव्योत्सर्ग इति । कुत एतत्—

आज्येन संस्थापयतीति श्रुतेः ॥ २४४ ॥

आज्येन हि संस्थापनं श्रूयते उत्सृष्टे द्रव्ये द्रव्यान्तरेण परिसमापनं विधीयते । अपि च संस्थापनं प्रक्रान्तस्य भवति । प्रक्रान्तश्च त्वाष्ट्र इति ॥ २४४ ॥

---

[1] वस्तो मुष्करः, प्रजनयिता । मुष्कावण्डौ, तौ विद्येते यस्य स मुष्करः ' उषशुषिमुष्कमधोर ' इति पाणिनीयेनातिशाये रः ।

## पशुपर्यग्निकरणाच्च ॥ २४५ ॥

अपि च पशोः पर्यग्निकरणं श्रुतम् । पर्यग्निकृतस्य चोत्सर्ग उच्यते । पत्पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति तस्मादपि द्रव्योत्सर्गः ॥ २४५ ॥

## तदन्तं वा कर्म नामधेयात् ॥ २४६ ॥

वाशब्दः पक्षव्यावृत्तौ । तदन्तं वा कर्म भवति । कुत एतत् । कर्मनामधेयात् । पात्नीवतमिति कर्मणा नामधेयम् । तस्य चानन्तर्यात्सर्गसम्बन्धः । व्यवधानान्न पर्यग्निकृतेनेति । तस्मात्पात्नीवतस्योत्सर्गो न द्रव्यस्य । यत्राज्येन संस्थापयतीति श्रूयते तदनेनाख्यातेन द्वितीयं कर्म प्रकृतत्वात्प्रानुवृत्त्या सदोपध्युपक्रममाज्यसाधनकं विधीयत इति । यच्च पशुपर्यग्निकरणादित्युक्तम् पर्यग्निकृतमुत्सृजन्तीति । तत्तत्कालार्थम् । पर्यग्निकरणान्ते कर्मोत्सृष्टव्यमिति ॥ २४६ ॥

## त्वष्टृवनस्पत्योश्च प्रयाजेष्विज्यादर्शनात् ॥ २४७ ॥

अपि च त्वष्टृवनस्पत्योः प्रयाजेष्विज्यां दर्शयति । यत्त्वष्टारं च वनस्पतिं चापाहृपसि क्वनौ यजसीति प्रश्नपूर्वकमाह त्वाष्ट्री नवमी प्रयाजयाज्या वानस्पत्या दशमी तावेनौ भागिनौ करोति । एतच्च कर्मोत्सर्ग उपपद्यते । द्रव्योत्सर्गे हि द्रव्यान्तरेण त्वष्टृवनस्पती अभीज्येते पशुंनि तस्मादपि तदन्तात्तूरीतिविधानमिति । समाप्तिप्रतिषेधश्च भवति । तत्र माऽस्यापर्यग्निकृतमेवोत्सृजतादिति । तच्च कर्मोत्सर्ग उपपद्यते न द्रव्योत्सर्गे ॥ २४७ ॥

## अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरी-ग्रहणं स्यन्दमानानामनस्तमिते ॥ २४८ ॥

अग्नीषोमीयग्रहणम् त्वाष्ट्रेण व्यवहितत्वात् । तद्वपामार्जनान्ते वसतीवरीणां ग्रहणम् । वसतीवरीश्च सोमार्थां अप उच्यन्ते ता वै स्यन्दमानानां गृह्णीयादिति वचनात् । स्यन्दमानानामनस्तमित इत्युक्तम् ॥ २४८ ॥

अस्तमितश्चेन्निनाह्यात्पुरे जानश्चेत् ॥ २४९ ॥

स यस्या गृहीता अभ्यस्तमियात्तत्र प्रायश्चित्तिं क्रियते यदि पुरेजानं स्यान्निनाह्याद्गृह्णीयादिति श्रुतेः । निनाह्यशब्देन च मणिकोऽभिधीयते ॥ २४९ ॥

अनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्य ॥ २५० ॥

निनाह्याद्गृह्णाति ॥ २५० ॥

उभयाभाव १उल्कुषीं हिरण्यं वोपर्युपरिधारयन्हविष्मतीरित्यनेन मन्त्रेण गृण्हाति ॥२५१॥

अग्नेर्व इति निदधाति शालाद्वार्यमपरेण ॥२५२॥

वसतीवरी ॥ २५२ ॥

सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् ॥ २५३ ॥

वसतीवरीग्रहणकाल एव ॥ २५३ ॥

आदित्या२भ्यये ऽहुतायामपि ॥ २५४ ॥

प्रागपाहोमादादित्याभ्यये अहुतायामपि गृह्णाति ॥ २५४ ॥

दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते संस्थाप्य व्युत्क्रामतेत्याह त्रिः ॥ २५५ ॥

वसतीवरीभिर्व्यवधानादग्नीषोमीयग्रहणम् । यद्याग्नीषोमीयकर्मैव दक्षिणाग्निहोमान्तमितरे पशव समिष्टयजुरन्ता । विहितानि हि तेषां समिष्टयजूंषि । त्रीणि समिष्टयजूंषि जुहोति ।

१ उल्कुषीमुल्कामित्यर्थः ।
२ अभ्ययो ऽस्तसमयस्तत्रेत्यर्थः ।

पशौ च यां आनह इति वा पयानिति । अग्नीषोमीयस्य तु प्रतिषिद्धानि तत्रूपवसथेऽग्नीषोमीयं पशुमालेभिरे इति प्रकृत्य तस्मात्तस्य पशोः समिष्टयजूंषि न जुह्वतीत्याह । अतोऽग्नीषोमीयवर्जे पश्वन्तरे त्रीणि समिष्टयजूंषि भवन्ति । दक्षिणाग्निहोमश्चाग्नीषोमीयाविकारत्वात् सर्वपशूनामस्तमित एवेति सम्प्रदायः ॥ २५५ ॥

व्युत्क्रामतेति त्रिरुक्ते—

शालाद्वार्यमपरेणास्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा ॥ २५६ ॥

आस्ते इत्यनुवर्त्तते ॥ २५६ ॥

शालाद्वार्यमपरेण वसतीवरीः परिहरति ॥२५७॥

दक्षिणेन द्वारेण ॥ २५७ ॥

निहृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योः ॥ २५८ ॥

इत्यनेन मन्त्रेण ॥ २५८ ॥

आहृत्य स्थाने निदधाति ॥ २५९ ॥

स्थानं च शालाद्वार्यमपरेण ॥ २५९ ॥

कलशं पत्न्यालभते ॥ २६० ॥

कलशशब्देन च तत्संस्कारद्रव्योपलक्षणम् ॥ २६० ॥

उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत् ॥ २६१ ॥

उत्तरेणाग्नीन्परिक्रम्योत्तरस्यामुत्तरवेदिश्रोणौ निदधाति । पूर्ववदिन्द्राग्न्योरिति ॥ २६१ ॥

मित्रावरुणयोरिति वा ॥ २६२ ॥

विश्वेषां देवानामित्याग्नीध्रे ॥ २६३ ॥

वसतीवरीर्निदधाति ॥ २६३ ॥

सोमं चासन्द्याम् ॥ २६४ ॥

चशब्दादाग्नीध्र एव ॥ २६४ ॥

दीक्षितश्च तत्र तां रात्रिं सोमं रक्षति ॥२६५॥

चशब्दान्निधानसमनन्तरमेव रक्षणम् ॥ २६५ ॥

सुब्रह्मण्यां च प्रेष्यति 'परिवाप्यायै दोहनम् ॥२६६॥

परिवाप्यशब्देन गव्यामपाकृतायस्योच्यते । या या परिवाप्या तस्यास्तस्या दोहनमित्यर्थकवचनम् । बह्वयो हि ता दृष्य-यंतया ॥ २६६ ॥

आवसथोन्मर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योरदीक्षितस्य ॥ २६७ ॥

आवसथो वसत्यर्थं गृहम् । उन्मर्दनं चन्दनादि । अलङ्करणं स्रक्मालादि दन्तप्रक्षालनं दन्तधावनम् । ताम्बूलमित्यपरे । एतान्यध्वर्योरदीक्षितस्य देयानि । अदीक्षितग्रहणाच्च नैवात्र दक्षिणासंस्कारमात्रमेतदिति तथावसथस्याधानं वसतिमात्रार्थत्वात् ॥ २६७ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये
अष्टमोऽध्यायः समाप्तः ।



# नवमोऽध्यायः ।

१अपररात्र ऋत्विजः प्रबोधयन्ति ॥ १ ॥

बहुवचनोपदेशाच्च यजमानेन सह केचनाप्रकृतास्नान् सं-
प्रबोधयन्ति ते ऽप उपस्पृश्याग्नीध्रमुपसमायन्ति त आज्यानि गृह्णत
इति श्रुतेः । आज्यग्रहणेन च परिस्तरणाद्याश्रितमन्त्राभिधीयते ॥ १ ॥

अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्र-
सादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्-
सम्मार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उ-
त्पूय पश्चाज्यग्रहणम् ॥ २ ॥

शालाद्वार्यग्रहणं च श्रपणनियमार्थम् । आहवनीये मा भूदि-
ति । पश्चाज्यग्रहणमिति । कुत एतत् । पशौ हि चादनोपरिष्टाद्दिदे-
ष कस्मात्पशुर्न चोदितः । आह्मणो ह्यादिवनान्ते विहितः आश्विनं ग्रहं
गृहीत्वा त्रिवृता यूप परिवीयाग्नेयं पशुमुपाकरोतीति तत्पश्चमेतदिति
पश्चाज्यग्रहणमित्युक्तम् ॥ २ ॥

आज्यान्यादाय सोमं चार्थश्चाहवनीय इ-
ध्मप्रोक्षणादि करोति ॥ ३ ॥

अर्थग्रहणेन च प्रायद्रोणकलशादीन्युच्यन्ते । तानि हि तत्र
निहितानि । आहवनीय एव यदिध्मप्रोक्षणं तदादि करोति । आहव-
नीयग्रहणात् । एवं च कृत्वा यदध्वननमिध्मप्रोक्षणम् तत्र भव-
ति । सकृत्प्रोक्षित एवेध्मः सवनीये तद्विकारे च ॥ ३ ॥

---

१ उक्तमौपवसथ्यं कर्म इदानीं सौत्यमुच्यते ।

अग्नीषोमीयवत्स्तरणम् ॥ ४ ॥

प्राप्त एवैतस्मिन् पुनर्वचनमुपसंहारार्थं प्रसितशब्दवत् । यथा प्रसितशब्दः सौत्रामण्यामुपसंहृत इति । ततश्चान्येषां पशूनां विद्वेषस्तरणं नैकवृद्धिरिति ॥ ४ ॥

आज्यासादनात्कृत्वेषान्तरेणार्द्धसोमम-

द्रिषु सम्मुखेषु निदधाति हृदे त्वेति ॥ ५ ॥

आज्यासादनान्तत्वेपि सत्यालमालम्भनान्ते एव सोमोपावहरणं कर्त्तव्यम् । उपवादेशसामर्थ्यादासाद्य हवींषिसम्भृत्यतीति । निपाताद्यार्द्धत्वस्य समविभक्तस्यार्द्धं द्रष्टव्यम् । अद्रीणां च सम्मुखतासहकारिणां पठ्यते स्वीयान्यस्यान्यन्तराणि तानि मुखानीति ॥ ५ ॥

विश्वास्त्वामिति विसृज्योपतिष्ठते ॥ ६ ॥

विसर्गस्यालम्भपूर्वकत्वाद्याजमानमुपस्थानम् । आलम्भस्य याजमानत्वात् ॥ ६ ॥

एतेनाहरण१ सोमार्थस्याभिषवे ॥ ७ ॥

एतेनेतीयान्तरालमभिधीयते । तेनाहरणं सोमार्थस्याभिषवे वर्त्तमाने ॥ ७ ॥

नोद्धरणं ततो बहिर्द्धाभावात् ॥ ८ ॥

तेनोद्धरणं न कर्त्तव्यम् । बहिर्द्धा मा भूदिति ॥ ८ ॥

अभिषुतस्य चानवहरणं कृतत्वात् ॥ ९ ॥

अभिषुतस्य सतः शुष्कामिषवे तेन मार्गेणावहरणं१ न कर्त्तव्यम् । कृतत्वात्संस्कारस्य ॥ ९ ॥

प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणं

१ अवहरणमधिषवणे प्रक्षेप इत्यर्थः ।

देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहीति समिधमादधत् ॥ १० ॥

वयसां वाचः प्रवदनात्पूर्वं प्रातरनुवाकस्योपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिधमादधत् ॥ १० ॥

देवेभ्य इत्येके ॥ ११ ॥

प्रातरनुवाकमुपाकुर्वन्ति ॥ ११ ॥

सुब्रह्मण्यां च प्रेष्यति ॥ १२ ॥

चशब्दादनन्तरम् ॥ १२ ॥

प्रातरनुवाकं जाग्रदुपासीताध्वर्युः ॥ १३ ॥

जाग्रदेवाध्वर्युरुपासीतेति वचनात् ॥ १३ ॥

स्वप्याद्वा ॥ १४ ॥

तस्मादु काममेव स्वप्यादिति श्रुतेः । वचनाद्विकल्पः ॥१४॥

अग्नीदैन्द्रमेकादशकपालं निर्वपति हरिभ्यां धानाः पूष्णे करम्भं सरस्वत्यै दधि मित्रावरुणाभ्यां पयस्याम् ॥ १५ ॥

इन्द्रस्य पुरोडाशो हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या इति वचनात् ॥ १५ ॥

इन्द्राय वा हरिपपूषस्वतिमित्रावरुणवते धानादीनि यथासंख्यम् ॥ १६ ॥

वाशब्दः पक्षव्यावृत्तौ । इन्द्राय चैतद्गुणविशिष्टाय धानादीनि

भवन्ति। कुत एतत्। सर्वं ऐन्द्रा भवन्तीति वचनात्। यत्तु हर्योर्धाना इति, तद्गुणेन देवताभिधानं लक्षणया। यथास्विष्टकृते समवघनीति। एवं च प्रैषवचनम् इन्द्रो हरिवान् धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान्दधि मित्रावरुणावान्पयस्यामिति। तस्मादिन्द्राय हरिवदादिविशिष्टाय धानादीनि ॥ १६ ॥

उन्नेतुः पात्रयोजनम् ॥ १७ ॥

वचनाद्भवति ॥ १७ ॥

खरोत्तरपूर्वार्द्धे उपांश्वन्तर्यामयोः ॥ १८ ॥

पात्रयोजनम् ॥ १८ ॥

तयोश्च—

दक्षिणमुपांशोः ॥ १९ ॥

पात्रं भवति ॥ १९ ॥

तदपरेण द्विदेवत्यानि प्रत्यञ्चि ॥ २० ॥

रीत्या ॥ २० ॥

तेषां च—

रास्नावमैन्द्रवायवम् ॥ २१ ॥

रास्ना च मेखलोच्यते ॥ २१ ॥

अजकावं मैत्रावरुणम् ॥ २२ ॥

अजकावशब्देन अजागलस्तनावुच्येते। अजागलस्तनाविव स्तनौ यस्य तत् आजकावम्। संज्ञायां ईदृश्यपदे। गाण्डजगारसंज्ञायामिति ॥ २२ ॥

औदुम्बरमाश्विनम् ॥ २३ ॥

औदुम्बरमित्यर्थः ॥ २३ ॥

दक्षिणपूर्वार्द्धे शुक्रामन्थिनोः ॥ २४ ॥

तयोः—

दक्षिणः शुक्रस्याग्रयणस्थाली मध्ये ॥ २५ ॥

खरस्य ॥ २५ ॥

तस्याश्च—

दक्षिणोक्थ्यस्थाली सपात्रा ॥ २६ ॥

तथादित्यस्थाल्युत्तरा ॥ २७ ॥

सपात्रा ॥ २७ ॥

तस्या एव—

ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृती उभयतो मुखे काष्मर्यमये आश्वत्थे वा ॥ २८ ॥

आग्रयणस्थाल्याः पूर्वे २८ ॥

ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसङ्गृहीतानि ॥ २९ ॥

आग्रयणादपरां [1]परिप्लवां स्रुक्पुष्करामधोधोक्षं प्रत्यञ्चं द्रोणकलशमत्युह्यो पर्युपर्यक्षं पवित्रमस्मिन्करोति ॥ ३० ॥

अधोधोक्षमित्यक्षस्याधस्तात् उपर्युपर्यक्षमित्युपरिष्टादक्षस्य नीत्वा पवित्रमस्मिन्करोति ॥ ३० ॥

शुक्लं जीर्णोर्णानाम् ॥ ३१ ॥

---

१ परि समन्तात्प्लवतं गच्छतीति परिप्लुता, चञ्चला तया च द्रोणकलशाद्ग्रहणं क्रियते । अथवा परिप्लुवेत्यस्या यौगिकी सञ्ज्ञा संव्यवहारार्थ, एषा च द्रोणकलशमध्ये निहिता सती लघुत्वात्परिप्लवत इति याज्ञिकदेव. ।

वसतीवरीश्च स᳖स्पर्शयति समाप इति ॥ ४५ ॥

मैत्रावरुणचमसस्था अपो वसतीवरीश्च संलगयति समाप इ॰ त्यनेन मन्त्रेण। प्रत्येत्येत्यवाच्यम्। अर्थप्राप्तत्वा दुच्यते च। तत् कि॰ मर्थं सर्वेष्वागतेषु नाध्वर्यावेवेति ॥ ४५ ॥

इतरे तस्मिन्व्यानयन्त्येके मैत्रावरुणचमसे प्रथमम् ॥ ४६ ॥

संस्पर्शो व्यानयनयोर्विकल्पो मन्त्रस्तु प्रवर्त्तत एव ॥ ४६ ॥

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥ ४७ ॥

ताः संज्ञा संव्यवहारार्थः। निग्राभ्यास्तु वाचयति निग्राभ्या॰ स्थासिञ्चतीति चैवमर्थाः ॥ ४७ ॥

होता पृष्टः प्रत्याहोतेव नंनमुरिति ॥ ४८ ॥

अनेरपोध्वर्यो इत्येवं होता पृष्टोध्वर्युः प्रत्याहोतेव नंन॰ मुरिति ॥ ४८ ॥

प्रचरणीस᳖स्रुवमग्निष्टोमे जुहोत्सभावे चतु- र्गृहीतं यमम इति ॥ ४९ ॥

प्रचरणीसंज्ञमग्निष्टोमसंज्ञे मतो जुहोति यमग्न इति। ॰भावे चतुर्गृहीतम्। यत्तु नाल᳖होमाय स्यादपर चतुर्गृहीतमाज्यं ॰त्या जुहोतीति ॥ ४९ ॥

उत्कृष्य प्रथमं परिधिमालभते ॥ ५० ॥

अनेनैव मन्त्रेण ॥ ५० ॥

प्रविशत्येवान्यत्र ५१ ॥

एवकारकरणादमन्त्रकं प्रवेशनम् । षोडशिन्यतिरात्रे चातावेव हि प्रकृत्योच्यते समुच्चेय तूष्णीमेत्य मपघेतेति ॥ ५१ ॥

ऐराव्यालम्भनं वा षोडशिनि ॥ ५२ ॥

अनेनैव मन्त्रेण ॥ ५२ ॥

छदिरतिरात्रे ॥ ५३ ॥

मन्त्रेण आलभ्यते । वाशब्दो विकल्पार्थः । षोडश्यतिरात्रयोः तूष्णीं वा प्रविशति ऐराव्याच्छादिषी वा मन्त्रेणालभत इति ॥५३॥

अतीत्यदक्षिणेन होतारं मैत्रावरुणचमसमाधवनीयेंवनयति वसतीवरीरतृतीयं चाग्निः प्रातः सवने पात्वस्मान्वैश्वानरो महीनां विश्वशम्भूः स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामेति ॥ ५४ ॥

अनेन मन्त्रेण ॥ ५४ ॥

तावच्चैकधनानाम् ॥ ५५ ॥

अवनीयते । अयुगपदवनयनम् कदाचयत्वात् । भेदेमेत्यपरे ॥ ५५ ॥

एकधनस्थान उभयशेषन्निधायाधिषवणे पर्युपविशन्ति ॥ ५६ ॥

वसतीवरीशेषमेकधनशेषं च एकधनस्थाने निधाय अधिषवणफलकयोः समन्तादुपविशन्ति ॥ ५६ ॥

उत्तरतोध्वर्युयजमानौ ॥ ५७ ॥

तपोम्र—

शुक्लं जीर्णानामित्यनैडिकीनामूर्णानाम् ॥ ३१ ॥

उभयतो दशं परिप्लवायाम् ॥ ३२ ॥

पवित्रं करोति । अन्यतरतो दशं द्रोणकलशे ॥ ३२ ॥

पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥ ३३ ॥

उत्तरस्यानस उपस्तम्भनस्य पुरस्तात् अनन्तर्हितं ध्रुवस्थालीं स्थापयति । तां हि प्रकृत्य श्रूयते अपीतं व्युह्य न तृणं च नान्तर्धायेति ॥ ३३ ॥

धुरि प्रचरणीम् ॥ ३४ ॥

धूःशब्दश्च शम्यान्तरालवाचक इत्युक्तम् । तत्र प्रचरणीं स्थापयति ॥ ३४ ॥

पूर्वेणाक्षमुपरि पूतभृतम् ॥ ३५ ॥

उत्तरस्यैवानसोऽक्षस्य पुरस्तादुपरि पूतभृतं करोति ॥ ३५ ॥

तस्यैव—

परेणाधवनीयम् ॥ ३६ ॥

प्रागक्षाद्दशचमसान्त्संवृत्तानधः प्रत्यगेकधनान्युग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यो भूदपा स्थस्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति ॥ ३७ ॥

भभूदुपा स्थपशुरित्यस्मिन्मन्त्रवाक्ये होत्रोच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति । स चाय कालार्थः संयोगः । चतुर्गृहीतं पृथग्वचनाच्च । साम्नाद्भिर्लक्षण इति ॥ ३७ ॥

अपरं गृहीत्वोदङ्गच्छन्नाहाय इष्य होतरिति ॥ ३८ ॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वोदङ्प्रपद्याह्वाय इध्य होतरिति श्रुतेः ॥ ३८ ॥

प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताग्नीध्रात्वा- त्ले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचम- सेन चेति ॥ ३९ ॥

अर्थभेदाच्चत्वारः प्रैषाः । प्रयोजनं सावसानमुच्चारणम् । च- शब्दात्प्रच्छन्नेव ॥ ३९ ॥

अपो गत्वा देवीराप इत्युप्सु जुहोति ॥ ४० ॥

चतुर्गृहीतम् ॥ ४० ॥

कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहति ॥ ४१ ॥

अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति कार्षिरसीति वचनात् ॥ ४१ ॥

समुद्रस्य त्वेति तेन गृह्णाति ॥ ४२ ॥

मैत्रावरुणचमसेनापः ॥ ४२ ॥

एकधनांश्चोन्नयन्ति ॥ ४३ ॥

बहुवचनोपदेशात् एकधनिन एव क्रियापदस्य स्वशब्दाभि- धानाद्बहुवचनं मन्त्रानुकर्षणार्थः ॥ ४३ ॥

पात्नेजनांश्च पत्न्यो द्वौ द्वौ ॥ ४४ ॥

चशब्दादुन्नयन्ति । तथा च मन्त्रस्यानुवृत्तिः । पत्नीशब्दे च बहुवचनमुच्चारणार्थम् । बहुपत्नीकान्ततोऽभावात् ॥ ४४ ॥

प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं

वसतीवरीश्च स॰स्पर्शयति समाप इति ॥ ४५ ॥

मैत्रावरुणचमसस्था अपो वसतीवरीश्च संलगयति समाप इत्यनेन मन्त्रेण । प्रत्येत्यव्याख्यम् । अर्थप्राप्तत्वा दुच्यते च । तद्‌ किमर्थं सर्वेष्वागतेषु नाध्वर्यावेवेति ॥ ४५ ॥

इतरे तस्मिन्व्यानयन्त्येके मैत्रावरुणचमसे प्रथमम् ॥ ४६ ॥

संस्पर्शे व्यानयनयोर्विकल्पो मन्त्रस्तु प्रवर्तत एव ॥ ४६ ॥

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥ ४७ ॥

ता संज्ञा संव्यवहारार्थः । निग्राभ्यास्तु वाचयति निग्राभ्यास्थासिध्यतीति चैवमर्थः ॥ ४७ ॥

होता पृष्टः प्रत्याहोतेव नंनमुरिति ॥ ४८ ॥

अवेरपोऽध्वर्यो इत्येवं होता पृष्टोऽध्वर्युः प्रत्याहोतेव नंनमुरिति ॥ ४८ ॥

प्रचरणीस्रुचमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति ॥ ४९ ॥

प्रचरणीस्रुचमग्निष्टोमसंस्थे क्रतौ जुहोति यमग्न इति । तदभावे चतुर्गृहीतम् । यदु काल्होमाय स्यादपर चतुर्गृहीतमाज्यं गृहीत्वा जुहोतीति ॥ ४९ ॥

उत्कृष्य प्रथमं परिधिमालभते ॥ ५० ॥

अनेनैव मन्त्रेण ॥ ५० ॥

प्रविशत्येत्रान्यत्र ५१ ॥

एवकारकरणादमन्त्रकं प्रवेशनम् । षोडशिन्यतिरात्रे चातावेव हि प्रकृत्योच्यते समुच्चय तूष्णीमेत्य प्रपद्येतेति ॥ ५१ ॥

ररराट्यालम्भनं वा षोडशिनि ॥ ५२ ॥

अनेनैव मन्त्रेण ॥ ५२ ॥

छदिरतिरात्रे ॥ ५३ ॥

मन्त्रेण आलभ्यते । वाशब्दो विकल्पार्थः । षोडश्यतिरात्रयोः तूष्णीं वा प्रविशति रराट्यां छदिषी वा मन्त्रेणालभत इति ॥५३॥

अतीत्यदक्षिणेन होतारं मैत्रावरुणचमसमाध्वर्युं नीपैवनयति वसतीवरितृतीयं चाग्निः प्रातः सवने पात्वस्मान्वैश्वानरो महीनां विश्वशम्भूः स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामेति ॥ ५४ ॥

अनेन मन्त्रेण ॥ ५४ ॥

तावच्चैकधनानाम् ॥ ५५ ॥

अवनीयते । अयुगपदवनयनम् अशक्यत्वात् । मेदेने-त्यपरे ॥ ५५ ॥

एकधनस्थान उभयशेषपिधायाधिषवणे पर्युपविशन्ति ॥ ५६ ॥

वसतीवरीशेषमेकधनशेषं च एकधनस्थाने निधाय अधिषवणफलकयोः समन्तादुपविशन्ति ॥ ५६ ॥

उत्तरतोध्वर्युयजमानौ ॥ ५७ ॥

तयोश्च—

पूर्वोऽध्वर्युरपरेण परीत्येतरे त्रयः ॥ ५८ ॥

अध्वर्युपुरुषा हविर्धानापरान्त उपविष्टानामुत्तरतृणामध्यप-
रेण प्रतिप्रस्थातृ प्रतिहर्त्तारमन्तरेण । उक्तो ह्यन्तर्बहिर्भावः ऋत्विजां
च यथापूर्वमिति ॥ ५८ ॥

देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्रा-

ग्घिङ्कारात् ॥ ५९ ॥

स उपांशुसवनः ॥ ६० ॥

तस्य उपांशुसवन इति वैदिकी संज्ञा संव्यवहारार्था, तमु-
पांशुसवनेन मेक्षयतीत्येवमाद्यर्था ॥ ६० ॥

निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्रा-

भ्यास्थेति ॥ ६१ ॥

निग्राभ्याःखिलाधिकरणासम्भवादालम्भसप्तमीयम् ॥ ६१ ॥

उपांशु सवने सोमं मिमीत इन्द्राय त्वा व-

सुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम् ॥ ६२ ॥

मिमीते प्रक्षिपति ॥ ६२ ॥

यत्त इति मितालम्भनम् ॥ ६३ ॥

यत्त इत्यनेन मन्त्रेण मितस्य सोमस्यालम्भनं करोति । अयं म-
न्त्रश्चोदितार्थाभिधायी ॥ ६३ ॥

प्रतिप्रस्थातांशून्पडादत्तेऽङ्गुल्यन्तरेषु द्वौ

द्वौ कुरुते ॥ ६४ ॥

मिताद् सोमात् । स चायमुपदेशो ग्रहणार्थः ॥ ६४ ॥

श्वात्रास्थेत्यासिञ्चति निग्राभ्याः ॥ ६५ ॥

मिते सोमे ॥ ६५ ॥

प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्य; सोमेति ॥ ६६ ॥

अथ प्रहरिष्यन्यं द्विष्यात्तं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यमिति वचनात् ॥ ६६ ॥

अभावे तृणम् ॥ ६७ ॥

मनसाध्यायेत्। यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेदिति वचनात् । स चायं पदार्थः क्रत्वर्थः. तृणाभिध्यानविधानात् ॥६७॥

मा भेरिति प्रहरति ॥ ६८ ॥

अनेन मन्त्रेण प्रहरति सोमे ॥ ६८ ॥

एवं त्रिरभिषुणात्यासेचं निग्राभ्याः ॥ ६९ ॥

एवमभिषवं त्रिःकृत्वः करोत्यासिच्यासिच्य निग्राभ्या ॥६९॥

अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः ॥ ७० ॥

प्रहारसङ्ख्येयम् ॥ ७० ॥

सर्वे पञ्चवर्गाः पशुकामस्याष्टवर्गो ब्रह्मवर्चसकामस्य ॥ ७१ ॥

गुणफलसम्बन्धोयम् ॥ ७१ ॥

प्रतिवर्गं निग्राभं वाचयति होतृचमसेल्पान्; शूनवधाय प्रागपागिति ॥ ७२ ॥

प्रतिप्रहारप्रवर्गं होतृचमसेल्पान्;शूनवधाय प्रागपागिति निग्राभं वाचयति ॥ ७२ ॥

अद्रिणा चतुर्थम् ॥ ७३ ॥

अद्रिणा होतृचमसे प्रक्षिप्ते न चतुर्थं वाचनम् ॥ ७३ ॥

तूष्णीं वा ॥ ७४ ॥

वाशब्दो विकल्पार्थः । तथा चाद्रिप्रक्षेपमात्रं भवति ॥ ७४ ॥

उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति ॥ ७५ ॥

चशब्दात्प्रतिवर्गम् ॥ ७५ ॥

प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥ ७६ ॥

प्रतिप्रस्थातोपांशु पात्रं गृह्णाति ॥ ७६ ॥

गृह्यमाणे—

आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहण-भेदात् ॥ ७७ ॥

आत्तानामंशूनां चशब्दात्प्रतिप्रस्थाताऽध्वर्युरन्तरेषु द्वौ द्वावन्तर्दधाति गृह्यमाणे ग्रहे द्वौ द्वाविति । कुत एतत् । भिन्नानि हि त्रीणि ग्रहणानि । षडंशवः । अतो द्वौ द्वावित्युक्तम् ॥ ७७ ॥

किं च—

मन्त्रलिङ्गाच्च ॥ ७८ ॥

अंशुभ्यां गभस्तिपूत इति ॥ ७८ ॥

षड्वा श्रुतिसामर्थ्यात् ॥ ७९ ॥

षडपि वान्तर्दधाति । षड्भिः पाययतीति श्रुतिसामर्थ्यात् । एवं श्रुतिः समर्था सङ्ख्यार्था भवति । एवं च पक्षद्वयोपन्यासेऽपि पूर्व एव पक्षः सम्प्रदाये अङ्गीकृतः । उक्तहेतुत्वात् । षड्भिः पाययतीत्यत्र कथम् । उच्यते ग्रहणे द्वाभ्यां द्वाभ्यामन्तर्धीय मानाभ्यां षड्भिः पूत एव भवति ॥ ७९ ॥

यत्त इत्याचान्तसोमे निदधाति ॥ ८० ॥

यत्त इत्यनेन मन्त्रेणाचान्तसंज्ञकसोमे निदधाति ॥ ८० ॥

परिमृज्यासादनमुपांश्वन्तर्यामयोः ॥ ८१ ॥

ग्रहयोरुपांश्वन्तर्यामयोः परिमृज्य सादनमुक्तम् तदिह प्रतिविधीयते ॥ ८१ ॥

अभिचरन्तसादयेदविसृजन्नमुष्य त्वा प्राणं

सादयामीत्युदानमित्यन्तर्यामम् ॥ ८२ ॥

अभिचरन्तसादयत्यधिसृजन्नमुष्य त्वा प्राणं सादयामीत्यनेन मन्त्रेण । अमुष्येति चाभिचर्यमाणस्य षष्ठ्यन्तेन नामादेश ॥ ८२ ॥

पाणिना चापिदधात्यमुष्य त्वा प्राणमपि

दधामीत्युदानमित्यन्तर्यामम् ॥ ८३ ॥

चशब्दादभिचरत्येव ॥ ८३ ॥

स्वाहेत्युक्तोर्वन्तरिक्षमिति निष्क्रमणम् ॥ ८४ ॥

हविर्धानात् ॥ ८४ ॥

अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥ ८५ ॥

यजमानोऽध्वर्युम् ॥ ८५ ॥

वरं वृत्वा ददाति च ॥ ८६ ॥

वरवरणं च यज्ञसमाप्तिप्रार्थनम् । यद्यपि च श्रूयते तेऽस्मा एवं वरं समर्धयन्ति क्षिप्रं म एष उदृचमियादिति । तथापि यागपरिसमाप्तिरेवास्मिन्ग्रहे आशंसितेति । उत्तमप्रयाजवत् । एव श्रूयते प्रातःसवन एव सर्वं यज्ञं समर्धयामि इति । वरदानं चपरम ॥ ८६ ॥

स्वां कृत इति हुत्वा पात्रमुन्मार्ष्टि ॥ ८७ ॥

स्वां कृत इति हुत्वा ग्रहं तत्पात्रमूर्ध्वमुन्मार्ष्टि ॥ ८७ ॥

प्रथमे परिधौ उत्तानं पाणिं प्रागपमार्ष्टि

देवेभ्यस्त्वेति ॥ ८८ ॥

अवस्थानग्रहणादधः परिधि भवति ॥ ८८ ॥

वासउरोबाहुषु श्लिष्टमꣳशुमभिचरन् जुहुयाद्देवाꣳशविति ॥ ८९ ॥

आग्रयणस्थाल्याꣳ शेषैकदेशमासिच्याꣳशुं प्रास्यति तृतीयसवनाय ॥ ९० ॥

उपाꣳशुपात्रशेषस्यासावेकदेशश्चेति शेषैकदेश इति सम्प्रदायः। उपाꣳश्वंतर्यामयोः शाखान्तरे शेषभक्षप्रतिषेधात् ॥ ९० ॥

प्राणाय त्वेति पात्रसादनम् ॥ ९१ ॥

प्राणाय त्वेत्युपाꣳशुपात्रासादनम। सादयामीत्यध्याहारः ॥९१॥

उपाꣳशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति साꣳस्पृष्टम् ॥ ९२ ॥

उदञ्चमुदङ्मुखम। मुखं चास्य येनाभिषव क्रियतः। उपाꣳशुपात्रसꣳस्पृष्टं सादयति व्यानाय त्वेत्यनेन मन्त्रेण ॥ ९२ ॥

उपाꣳश्वभिषवोऽभिहितः। इदानीं महाभिषवविशेषव्याचिख्यासयेदमुच्यते—

उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥ ९३ ॥

उपाꣳश्वभिषवे होतोऽभिषोता अत्रैव इत्येकाभिषुणोत्येकवचननिर्देशात्। इह चत्वारोऽभिषुण्वन्ति। कुत एतत्। अभिषवाय पर्युपविशन्तीति। एतद्वचनं सर्गर्थं सङ्ख्यार्थं भवति। परि समन्तादुपविशन्ति पर्युपविशन्तीति ॥ ९३ ॥

आप्यायनान्तोऽभिषवस्त्रिपर्यायः ॥ ९४ ॥

पर्यायप्रयान्ते आप्यायनं भवति ॥ ९४ ॥

मत्या ॥ ९५ ॥

तद्यामतिरुक्ता इदमत्या ग्रहणम् । मतिशब्दश्चेच्छा वाची । यावता रसप्रच्युतिर्भवति ॥ ९५ ॥

पर्यायादिषु निग्राभ्यासेचनम् ॥ ९६ ॥

रसप्रच्युत्यर्थं क्रियते ॥ ९६ ॥

प्रथमे वा प्रभूत्वात् ॥ ९७ ॥

वाशब्दः पक्षान्तरपरिग्रहे । प्रभवति हि प्रथमपर्याये सिक्तमुदकं रसप्रच्युत्यै । उपांशुविषये तु प्रतिपर्यायमासेको युक्तः, प्रतिपर्यायमेव हि तत्र ग्रहणमिति । इह पुनर्न तथा ॥ ९७ ॥

निग्राभान्ते सरसानंशून्त्सम्भरण्याधवनीये-

वधायात्रधूयाहरति ॥ ९८ ॥

निग्राभावाचनान्ते सम्भरण्या सरसानंशूनादायाधवनीये वधायाधूयाहरति ॥ ९८ ॥

एवं द्विरपरम् ॥ ९९ ॥

एवमेव द्विरपरमभिषवकर्म कर्तव्यम् ॥ ९९ ॥

पूर्ववन्निग्राभ्याः ॥ १०० ॥

निग्राभान्त उक्तोपि पुनर्निग्राभ्यां वचनमग्निना चतुर्थप्रतिपत्त्यर्थम् ॥ १०० ॥

इदानीं लाघवायाभिषवयोरुभयोरर्थैक्यप्रतिपादनायेदमाह—

पूर्वं चोपांशुं गृहीत्वा गृहीत्वाप्यायनसम्भरणे

कृतत्वात् ॥ १०१ ॥

पूर्वाभिहित पयोपांशयभिषव । उपांशवभिषवे उपांशुं गृही-

त्वा गृहीत्वाप्यायनसम्भरणे क्रियेते । न हि तत्र ते कृते इति । एवं चाभिषवयोर्युगपदनुष्ठाने लाघवमिति ॥ १०१ ॥

धर्ममात्रं पर्युपवेशनम् ॥ १०२ ॥

नन्वेवं सति पर्युपवेशनमसमर्थं,सोमक्रयणीपदपर्युपवेशनवद्धर्ममात्रमित्यदोषः ॥ १०२ ॥

अभिषवद्विपर्यासो वाभिमृष्टादांशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगादनात्तस्य चाभिमानसामर्थ्यात् ॥ १०३ ॥

अभिषवद्वित्वं वा भवति । द्वित्वे च सति विपर्यासोऽभिषवयोः । कुत एतत् । आनुपूर्व्ययोगात् । आनुपूर्व्येण हि क्रमेण ग्रावाभ्यासातौ । अध्वरकल्पे हि ब्राह्मणे महाभिषवो महांश्चानुपांश्वभिषव इति । मन्त्राणामप्येवमेवानुपूर्व्ययोगो भवति । उत्तरो ह्युपांशुग्रहणमन्त्रपाठः । अत एव चाभिमृष्टादंशूनपकर्षो निग्राभ्यायाश्च कर्तव्यः । न ह्यन्यथा द्वित्वानुपूर्व्ये सम्भवतः । अपि चानात्तरसे सोमे सोमाभिमानो भवति । सोमबुद्धिर्भवति तस्मादप्यपकर्षः । अथवाभिमानसामर्थ्यादिति । मीङ् हिंसायाम् । अनात्तरसे सोमे हिंसा क्रियमाणा समर्था भवति । उपांशुग्रहणोत्तरकाले हि हिंसा क्रियमाणा असमर्थिका ॥ १०३ ॥

ऋजीषभावाच्च ॥ १०४ ॥

अंशुग्रहणानन्तरमृजीषं भवति । तस्मादप्यपकर्षः । अतो विपर्यस्तत्वम् । द्वित्वं च विपर्यास इति ॥ १०४ ॥

प्रोह्य द्रोणकलशमृजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥ १०५ ॥

प्रपूर्वस्य वहेः छन्दसि सम्प्रसारणमित्येतद्रूपं प्रोह्येति । अधिषवणफलकयोरेवानुप्रोह्य । ऋजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥१०५॥

पवित्रं च वितन्वन्त्युदक् ॥ १०६ ॥

पवित्रमन्यतरतो दशामुदग्रमग्रं अवाङ्नाभि वितनुयुः । एवमेव हि छान्दोग्ये श्रूयत इति ॥ १०६ ॥

स्वयं वाकुर्वत्सु ॥ १०७ ॥

स्वयमध्वर्युः करोत्यकुर्वत्सूद्गातृषु ॥ १०७ ॥

आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानः ॥ १०८ ॥

आसिञ्चति ॥ १०८ ॥

ततो ग्रहणमाध्रुवान्माध्यन्दिने च पञ्च प्रथमान् ॥ १०९ ॥

तत एव धाराया गृह्णाति ॥ १०९ ॥

शुक्रो द्रोणकलशे ॥ ११० ॥

द्रोणकलशे यः सोम आपतति तस्य शुक्र इतीयं संज्ञा संव्यवहारार्था ॥ ११० ॥

ततोऽन्येऽनादेशे ॥ १११ ॥

ततः शुक्रादन्ये ग्रहा गृह्यन्ते । येषां योनिर्नादिष्टा ॥ १११ ॥

सावित्रपात्नीवतहारियोजनोपक्षीणानाग्रयणात् ॥ ११२ ॥

उपक्षीणांश्च गृह्णाति ॥ ११२ ॥

पूतभृतश्चमसान् ॥ ११३ ॥

गृह्णाति ॥ ११३ ॥

तृतीयसवने वैश्वदेवम् ॥ ११४ ॥

पूतभृत एव। अन्याभावादयाच्यमिति चेत्। स्यान्न्यायोपप्रद-र्शनार्थत्वात् ॥ ११४ ॥

अनादिष्टांश्चेदोन्नयनश्रुतेः ॥ ११५ ॥

अनादिष्टयोर्नांश्च पूतभृत एव गृह्णाति । अतो हि देवेभ्य उ-न्नयन्त्यतो मनुष्येभ्योतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृदिति श्रुतेः ॥ ११५ ॥

दशापवित्रेण परिमृज्य परिमृज्यैष ते यो-निरिति ग्रहसादनम् ॥ ११६ ॥

दशापवित्रमुपयतो दशं तेन परिमृज्य परिमृज्यैष ते योनि-रिति ग्रहसादनम् ॥ ११६ ॥

नायोनिकेषु ॥ ११७ ॥

येषां ग्रहाणां सन्निधौ योनिर्न पठ्यते तत्र योन्यासादनं न भवति । कुत एतत् । समाम्नायाभावात् ॥ ११७ ॥

सर्वेष्विति वात्स्यो विशेषोपदेशात् ॥ ११८ ॥

वात्स्य आचार्यः सर्वेष्वेव योन्यासादनं मेने । अविशेषेण हि ग्रहमात्रमुद्दिश्य योन्यासादनं इति पठ्यते ॥ ११८ ॥

किं च—

सावित्रर्तुग्रहप्रतिषेधाच्च ॥ ११९ ॥

सावित्रर्तुग्रहेषु च प्रतिषेधो दृश्यते । तत्र सादयत्यसन्नो होव भवतीति । ऋतुग्रहेषु च न सादयति तस्मादयमसन्नः संचरस-रः परिह्रियते तत्र योन्यासादनस्य सर्वग्रहविषयस्य उपपद्यते ॥ ११९ ॥

प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्ष-हरणम् ॥ १२० ॥

यत्रानुवषट्कारोऽस्ति तत्र प्रतिवषट्कारं होमः । हुत्वा च वषट्कर्त्रे भक्षणम् । वषट्कर्तुर्भक्षमवनयेदिति शाखान्तरात् । स्वष्टुतावपि वषट्कर्तुर्भक्ष इति ॥ १२० ॥

यथास्वं चमसान् ॥ १२१ ॥

भक्षहरणं भवति समाख्यानात् ॥ १२१ ॥

यत्रैकपात्रे वषट्कारनिमित्तः समाख्यानिमित्तश्च भक्षस्तत्र कस्य पूर्वं भक्ष इत्यनियमे प्राप्त आह—

वषट्कर्तुर्वा पूर्वः श्रुतिसामर्थ्यात् ॥ १२२ ॥

वषट्कर्त्तैव पूर्वो भक्षयेत् । श्रुतिप्रापितो ह्यसौ । इतरस्तु समाख्यानात्कल्प्यते ॥ १२२ ॥

उन्नेतोन्नयति समाख्यानात् ॥ १२३ ॥

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति ॥१२४॥

रात्रिं सन्तमन्तर्यामं तमुदिते जुहोतीति श्रुतेः ॥१२४॥

उपांशुवदनाम्नातवरशेषासेचनवर्जम् ॥१२५ ॥

उपांशुवत्क्रिया । क्रियास्तु विशेषः । अनाम्नातो यो मन्त्रः वरवरणप्रदानशेषासेचनं च न भवति । सर्वंहुतः क्रियते । भक्षस्य शाखान्तरे प्रतिषेधात् । अनाम्नातश्च मन्त्रः । स्वाहाकार उर्वन्तरिक्षमन्वेमीति च ॥ १२५ ॥

अपमार्ष्टयेत ॥ १२६ ॥

नोन्मार्ष्टि ॥ १२६ ॥

प्रथमे च न्युब्जेन पाणिना प्रत्यक् ॥ १२७ ॥

प्रथमे च परिधौ न्युब्जेन पाणिना प्रत्यगुपमार्ष्टि ॥ १२७ ॥

उपांशुसवनसंस्पृष्टस्योदानाय त्वेति

पात्रासादनम् ॥ १२८ ॥

उपांशुसवनपात्रसंस्पृष्टस्य पात्रस्योदानायत्वेत्यनेन मन्त्रेणासादनम् ॥ १२८ ॥

ऐन्द्रवायवं गृह्णात्या वायविति ॥ १२९ ॥

अनेन मन्त्रेण ॥ १२९ ॥

अपगृह्य पुनरिन्द्रवायू इति ॥ १३० ॥

गृह्णाति ॥ १३० ॥

मैत्रावरुणमयं वामिति ॥ १३१ ॥

पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति ॥ १३२ ॥

एनं ग्रहं कुशावन्तर्धाय पयसा श्रीणाति राया वयमित्यनेन मन्त्रेण। तं च पयसा श्रीणातीति द्वितीया। तन्निर्देशात् प्रधानभूतो ग्रहः। गुणविभक्तिनिर्देशात् पयसो गुणभूतता। अतो ग्रहसंस्कारत्वादप्रदेयं पयः। अतश्च प्रदेयधर्मा न प्रवर्तन्ते ॥ १३२ ॥

एवं सर्वत्र श्रयणेषु ॥ १३३ ॥

कुशान्तर्धानम् ॥ १३३ ॥

शुक्रं वैल्वेन वा तं प्रत्नथेति ॥ १३४ ॥

शुक्रं गृह्णाति वैल्वेन वा पात्रेण वैकङ्कतेन वा तं प्रत्नथेति ॥ १३४ ॥

अयं वेन इत्येके ॥ १३५ ॥

मन्थिनमयं वेन इति ॥ १३६ ॥

सक्तुभिः श्रीणात्येनं मनो न येष्विति ॥ १३७ ॥

एनं मन्थिनम् ॥ १३७ ॥

आग्रयणं द्वयोर्धारयोर्ये देवास इति ॥ १३८ ॥

आग्रयणं गृह्णाति धाराद्वयात् ये देवास इति मन्त्रेण । सा-
चैका धारोपेतृफर्तृकी अपरा याजमानेति[१] ॥ १३८ ॥

दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिंकृत्य सोमः
पवत इति सकृच्छेषम् ॥ १३९ ॥

दशापवित्रेणाग्रयणं गृहीत्वा त्रिर्हिं कृत्य सोमः पवत इति
च त्रिरुक्त्वा मन्त्रशेषं सकृदाह । मन्त्रश्चोदितार्थाभिधायी॥ १३९ ॥

प्रथमस्थानेन प्राग्देवतादेशात् ॥ १४० ॥

देवतादेशात्पूर्वं प्रथमस्थानं यजुषः उपांशुत्वापवादोऽयम् ॥१४०॥

प्रातः सवने चोच्चैःकर्माणि ॥ १४१ ॥

उच्चैः कर्माणि यान्यैष्टिकयाजुकानि । च शब्दात्तेषामपि प्र-
थमं स्थानम् ॥ १४१ ॥

मध्यमेन माध्यन्दिने ॥ १४२ ॥

माध्यन्दिने यानि नीचैर्यानि चोच्चैस्तेषां मध्यमस्थानम् ॥१४२॥

उत्तमेन तृतीयसवने ॥ १४३ ॥

यानि नीचैरिति ॥ १४३ ॥

उक्थ्यमुपयामगृहीत इति ॥ १४४ ॥

उक्थ्यं गृह्णाति उपयामगृहीत इति । तच्चैतत्प्रकल्पन-

---

१ अन्ये त्वाहुः आग्रयणस्थाल्यां च उपांशुग्रहणोपरस्तौ पात्रान्तरे
कृत्वा पृथगासेचनं तस्य कार्यम्, सा चैका धारा । द्वितीया तु प्रा-
क्स्येव यजमानो यामासिञ्चति, तदपि समूलम् इति देवभाष्ये ।

मासम् । अतो वाग्यमप्रदक्षिणावर्त्तने अत्र न भवतः । उत्कृष्यविप्र-
ष्णेषु भविष्यतः ॥ १४४ ॥

ध्रुवं मूर्धानं दिव इति ॥ १४५ ॥

गृह्णाति ॥ १४५ ॥

आहोमादस्य सुत्वन्न मूत्रपुरीषे कुर्यात् ॥ १४६ ॥

एतस्य होमाच्च सर्वेण प्रस्रावयेतेति ॥ १४६ ॥

वैश्वानरं च जानन् ॥ १४७ ॥

गृह्णाति । जानञ्छब्दो विकल्पार्थः । ज्ञानार्थं एवेत्यपरे ।
स यदि तं चरकेभ्यो वाचयतीवानुब्रुवतेति वचनात् ॥ १४७ ॥

पूर्णान् स्थालीग्रहानर्धपूर्णं द्रोणकलशं कृत्वा
सर्वमासिञ्चति सुन्वन् ॥ १४८ ॥

पूर्णान् स्थालीग्रहान् कृत्वा सम्पातसोमेनार्धपूर्णं च द्रोण-
कलशं कृत्वा सर्वं होतृचमसमासिञ्चति यजमानः ॥ १४८ ॥

अध्वर्युप्रतिप्रस्थातृप्रस्तोतृद्गातृप्रतिहर्तृसु-
न्वन्तः समन्वारब्धा निष्क्रामन्ति ॥ १४९ ॥

अध्वर्य्वादयः समन्वारब्धा निष्क्रामन्ति हविर्धानात् ।
उत्तर उत्तरः पूर्वमन्वारभते । समासोक्तानां क्रमाम्नायात् ॥ १४९ ॥

अध्वर्युः प्रथमो यथासंख्यमितरे ॥ १५० ॥

इत्युक्तम् ॥ १५० ॥

हुत्वा वा समन्वारभेरन् ॥ १५१ ॥

विप्रुड्ढोमोत्तरकालं वा समन्वारभन्ते । आद्यो वेति विक-
ल्पः । शास्त्रस्य तुल्यत्वात् ॥ १५१ ॥

यस्त इति विप्रुषां होमं जुह्वति ॥ १५२ ॥

अध्वर्य्वादयः । विप्रुड्ढोम इति संज्ञा ॥ १५२ ॥

अध्वर्युर्वा जुहोति ॥ १५३ ॥

जुहोति सर्वे वेति विकल्पः ॥ १५३ ॥

वेदितृणे अध्वर्युरादत्ते प्रह्वा उदञ्चो गच्छन्ति ॥ १५४ ॥

नीचैर्व्यवस्थिता उदञ्चो गच्छन्ति ॥ १५४ ॥

अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति ॥ १५५ ॥

उद्गातृणां पुरस्तादितरत्तूष्णीम् ॥ १५६ ॥

प्रास्यति ॥ १५६ ॥

जपत्सु सोमः पवत इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् ॥ १५७ ॥

जपत्सूद्गातृषु पवमानमुपाकरोति सोमः पवत इत्यनेन मन्त्रेण प्रस्तोत्रे तृणे प्रयच्छन् । पवमानमिति च स्तोत्रसंज्ञा ॥ १५७ ॥

सर्वेषु ॥ १५८ ॥

पवमानेष्वेवमुपाकरोति । अतिदेशात्तत्प्राप्तिरयाध्यस्येति चेत् । अतिदेशो हि भवति माध्यन्दिने समन्वारब्धनिष्क्रमणादि करोति । आग्नीध्रादीनिति प्रैषात् । तथा तृतीयसवने समन्वारब्धनिष्क्रमणादि करोति माध्यन्दिनवदिति । सत्यमेवम् ॥ १५८ ॥

अतृणो वा कुशमुष्टिं वा ॥ १५९ ॥

प्रयच्छन्नुपाकरोतीति । अनयोरप्युक्तत्र प्राप्तिर्मा भूदिति सर्व-

धियुक्तम् गदृणो वा कुशमुष्टिं वा प्रयच्छन् बहिष्पवमान पशोपाकरोति ॥ १५९ ॥

प्रत्यङ्मुखा उपविशतः पुरस्ताद्दक्षिणो यजमानः ॥ १६० ॥

प्रत्यङ्मुखा उपविशतोऽध्वर्युप्रतिप्रस्थातारौ द्वित्वोपदेशात् । पुरस्तादुद्गातॄणां तयोश्च दक्षिणो यजमान उपविशति ॥ १६० ॥

स्तूयमान उन्नेताधवनीयं पवित्रमन्तर्धाय पूतभृत्यासिञ्चति ॥ १६१ ॥

स्तूयमाने बहिष्पवमाने उन्नेता पवित्रमन्तर्धायाधवनीयस्थं सोमं पूतभृत्यासिञ्चति ॥ १६१ ॥

स्तोत्रान्ते प्रेष्यत्यग्नीदग्नीन्विहर बर्हिस्तृणीहि पुरोडाशाँ३ अलङ्कुरु प्रतिप्रस्थातः पशुनेहीति ॥ १६२ ॥

न च प्रधानार्थाभिधाने सम्भवति गुणार्थाभिधाने न सम्भवतीत्यप्रयोगो युक्तरूपस्तस्मादनेकपाशुकंप्याविकृत एव प्रयुज्यत इति ॥ १६२ ॥

यथान्युप्तं धिष्ण्येष्वाग्नीध्रादङ्गारान्निवपति ॥ १६३ ॥

अग्नीदग्नीन्विहरेत्यस्यार्थः । येन क्रमेण धिष्ण्यनिर्वापः कृतः तेनैव क्रमेणाग्नीध्रादङ्गारान्निवापं करोति ॥ १६३ ॥

अनु पृष्ठ्यां बर्हिस्तृणाति ॥ १६४ ॥

अपरत आरभ्यापूर्वान्तात् । पुरोडाशालङ्करणं तु चोदकप्राप्तत्वात् नाभिहितमाचार्येण ॥ १६४ ॥

आश्विनं गृह्णात्यन्वारब्धे वा या वामिति॥ १६५॥

आश्विनं ग्रहं गृह्णाति अन्वारब्धेनन्वारब्धे वा शुक्रास्पूतभृतो वा यावामित्यनेन मन्त्रेण ॥ १६५ ॥

ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन्प्राणाय म इति प्रतिमन्त्रम् ॥ १६६ ॥

वाचयन्नवेक्षयतीत्युभयत्र कारितत्वादध्वर्युः । वर्चोदा वर्चसे पवस्वेति ध्रुवमीक्षस्वेत्येषमिति सम्प्रदायः ॥ १६६ ॥

अग्रहत्वादुच्यते—

उपांशुसवनं द्वितीयम् ॥ १६७ ॥

यथागृहीतमित्यस्यापवादः ॥ १६७ ॥

आश्विनं षष्ठं शुक्रामन्थिनौ युगपत् पूतभृदाधवनीयौ च विभ्वाभ्यो म इति ॥ १६८ ॥

चशब्दात् युगपदेव ॥ १६८ ॥

कोऽसीति द्रोणकलशम् ॥ १६९ ॥

वाचयमो दीक्षयति ॥ १६९ ॥

भूर्भुवः स्वरिति जपति ॥ १७० ॥

यजमानः ॥ १७० ॥

ज्ञातिप्रियानूचानानावकाशयेत् ॥ १७१ ॥

स वै न सर्वमिवावकाशयेदिति प्रकृत्यैव श्रूयत इति ॥१७१॥

ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशना-

मुदुह्य पूर्वाम् ॥ १७२ ॥

ध्रुवग्रहस्य कर्पटादीनामन्यतमेनावघट्टनम् । ध्रुवगोप्तू राजपुत्रस्य निरूपणमित्यपरे । भवति हि याज्ञिकानां वचनम् । कः क्रुद्धो राजपुत्रः प्राप्नोति ध्रुवस्य गोप्तेति । न पुनरादृतमाचार्येणैतत्केनाप्यपि प्रायेण । पूर्वां रशनामुदुह्य परिव्ययणादि करोति । अस्मिन्नेव प्रस्तरे पशुचोदना शाखान्तरे आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति । माध्यन्दिनीयायामप्याग्नेयमग्निष्टोम आलभेतेति ॥ १७२ ॥

आग्नेयोऽग्निष्टोमे सवनीयः पशुरैन्द्राग्नश्चो-

क्थ्ये द्वितीयः ॥ १७३ ॥

चशब्दात्सवनीय एव ॥ १७३ ॥

ऐन्द्रो वृष्णिः षोडशिनि तृतीयः सरस्वत्यै

चतुर्थोऽतिरात्रे मेषी वा ॥ १७४ ॥

आग्नेयमग्निष्टोम आलभेतेति प्रकृतसर्वमेतच्छ्रूयत इति ॥१७४॥

एतत्स्तोमायनम् ॥ १७५ ॥

स्तोमायनमिति संज्ञा व्यवहारार्था । स्तोमायन वैकादशिनायेऽयमायपो ॥ १७५ ॥

होतृनामग्रहणान्तं कृत्वेतरांश्चाश्राव्याश्राव्य प्रवृणीते यथालिङ्गम् ॥ १७६ ॥

होतृनामग्रहणान्तं पाशुकं कृत्वा इतरांश्चाश्राव्याश्राव्य प्रवृणीते । चशब्दाद्धोतारं च यथालिङ्गमिति यो यो येन लिङ्गेन लिङ्ग्यत इति । होतुरनभिहितमपीन्द्रं होत्रादिति वरणम् । इन्द्रं हि होता ऋतुग्रहेषु यजत इति ॥ १७६ ॥

अश्विनाध्वर्यू आध्वर्यवात् ॥ १७७ ॥

अत्र आध्वर्योर्द्वितीयः प्रतिप्रस्थाता । वरणं च नेष्टा करोति ॥ १७७ ॥

मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात् ॥ १७८ ॥

अत्र द्वितीयोऽच्छावाकः ॥ १७८ ॥

इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् ॥ १७९ ॥

ब्राह्मणाच्छंसिप्रणम लिङ्गेन । भूमात् ब्रह्मणो वरणमपि ॥१७९॥

मरुतः पोत्रादग्नावो नेष्ट्रादग्निराग्नीध्रात् अग्नि-र्हैदैवीनामिति यजमानम् ॥ १८० ॥

वृणीते । अत्र चोक्तमाचार्येण सुन्त्रामिति सुत्ये । अयं च मन्त्र-श्चोदितार्थविधायी । बहुयजमानके विपरिणमयते । पाशुकमपि य-जमानवरणमन्त्रैर्वेति सम्प्रदाय । प्रवृत्तहोमानामुपरिष्टात्पाशुकं यज-मानवरणमित्यनुरूपम ॥ १८० ॥

[1]यथाप्रवृत्तं प्रवृत्तहोमौ जुह्वति जुष्टो वाचे

---

१ यथावृत्त येनक्रमेण प्रवरणा तेन होत्रादयः सर्वे द्व द्व आहुती जुह्वति सांमदाघारं कृत्वा प्रचरण्याज्यन ।

भूयासं जुष्टो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तमं जुष्टतमं तस्मिन्मा धाः स्वाहा सरस्वत्या इति ॥ १८१ ॥

पावकान इति द्वितीयाम् ॥ १८२ ॥

माहुतिं जुहोति ॥ १८२ ॥

वपामार्जनान्तं कृत्वा सयजमाना धिष्ण्यानुपतिष्ठन्ते विभूरसीति प्रतिमन्त्रम् ॥ १८३ ॥

सयजमाना ऋत्विजः ॥ १८३ ॥

उत्करान्तं कृत्वा वागसीति सदोभिमर्शनमृतस्य द्वाराविति द्वार्ये ॥ १८४ ॥

अभिमृशेते येन द्वारेण प्रवेशनम् । मन्त्रलिङ्गान्मा मा सन्ताप्तमिति ॥ १८४ ॥

अभिमन्त्रणमुत्तरैः ॥ १८५ ॥

मन्त्रैः ॥ १८५ ॥

अध्वनामध्वपत इति सूर्यम् ॥ १८६ ॥

अभिमन्त्रयते ॥ १८६ ॥

मित्रस्य मेत्यृत्विजः ॥ १८७ ॥

अभिमन्त्रयते । अतश्च याजमानमभिमन्त्रणम् ॥ १८७ ॥

अग्नयः सगरा इति धिष्ण्यान् ॥ १८८ ॥

एतत्सर्पणम् ॥ १८९ ॥

अस्य कर्मणः सर्पेणामतीर्थं सञ्ज्ञा । अभिमन्त्रणानि याजमानामीति सम्प्रदायः । एवं च सूर्याभिमन्त्रणे धिष्ण्याभिमन्त्रणे च ऊहः प्रवर्त्तते । अध्वर्युकर्तृकाणीत्यपरे । ऋत्विगभिमन्त्रणमेव याजमानमिति ॥ १८९ ॥

सदोभिमर्शनादि चोत्तरयोः सवनयोः ॥ १९० ॥

सर्पेण भवति धिष्ण्योपस्थानादि वा ॥ १९० ॥

पुरोडाशैश्चरति ॥ १९१ ॥

ये ते अलङ्कृताः पुरोडाशास्ते । तत्र चैकपुरोडाश छत्रिन्यायेन बहुवचनम् ॥ १९१ ॥

एकं प्रदानम् ॥ १९२ ॥

देवतागुणभेदेपि वचनसामर्थ्यात् ॥ १९२ ॥

एकापात्र्यामासाद्य मध्ये पुरोडाशः पुरस्ताद्धानाः प्रतिदिशमितराणि यथासंख्यं प्रदक्षिणम् ॥ १९३ ॥

येषामेव पाङ्क्तत्वं तेषामेकत्वं विधीयते दधि पयस्यायाश्च उत्तरस्यांरत्न प्रतिदिशमासादनम् । यथासमाम्नातानां च प्रदक्षिणमिति ॥ १९३ ॥

प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामनुवाचयति ॥ १९४ ॥

एवमनुवाचनं कारयति ॥ १९४ ॥

आश्राव्याह प्रातः प्रातः सवस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति ॥ १९५ ॥

प्रैषविशेषार्थमिदमुक्तम् ॥ १९५ ॥

एवं यथासवनमनुवाचनप्रैषौ ॥ १९६ ॥

माध्यन्दिनस्य सवनस्य तृतीयस्य सवनस्येति ॥ १९६ ॥

उपभृति वावद्यति पशुपुरोडाशवत् ॥ १९७ ॥

अवदानग्रहणसमनन्तरमेव वत्युपदेशात् ॥ १९७ ॥

उभयं हुत्वा होतृधिष्ण्ये पुरोडाशान्नि-

दधाति ॥ १९८ ॥

उभयमिति प्रधानं सौविष्टकृतं च हुत्वा होतृधिष्ण्ये पुरोडाशान्निदधातीति च । कुत एतत् । एवं हि श्रूयते होतृधिष्ण्यादिडामादधातीति । पुरोडाशेषु च निहितेषु होतृधिष्ण्यादिडा ऽहिता भवति ॥ १९८ ॥

निरवत्तां वेडाम् ॥ १९९ ॥

वाशब्दः पक्षव्यावृत्तौ । पुरोडाशान्निदधाति निरवत्तामेवेडाम् । निरवत्ता च प्राशित्रादिभिरपि गृहीतैर्भवति । एवं च होतृधिष्ण्यादिडामादधातीति यथाश्रुतमेतद्भवति । इतरथा दधातिना ग्रहणं लक्ष्येत तथायुक्तं, श्रुतार्थसम्भवे सति ॥ १९९ ॥

द्विदेवत्यैश्चरति ॥ २०० ॥

अथसरार्थमिदमुच्यते ॥ २०० ॥

वायव इन्द्रवायुभ्यामनुवाचयति प्रतिप्रस्था-

तादित्यपात्रेण द्रोणकलशादुपयामगृहीतो-

सीति गृहीत्वा गृहीत्वा द्विदेवत्याननु जुहो-

ति उत्तरार्धे ॥ २०१ ॥

द्विदेवत्यानतु जुहोतीति प्रथमामपि द्विदेवत्यानामनु होमः

क्रियते । ऐन्द्रवायवस्य वषट्कारद्वयम् । तत्र द्वितीयस्य वषट्कारस्य पश्चादनुशब्दोपदेशात् ॥ २०१ ॥

उत्तरार्द्धाधिकारापाजिज्ञासाविषयेदमुच्यते—

## अनुवषट्कृतेपि ॥ २०२ ॥

उत्तरार्द्धे एव जुहोति । येषां ग्रहणमनु वषट्कारोऽस्ति । द्विदेवत्यानां तु नैषामनु वषट्कार अनु वषट्कारार्थमेवेदमुच्यते ॥ २०२॥

## आश्रुतप्रत्याश्रुतप्रैषाश्च समत्वात् ॥ २०३ ॥

आश्रावणादयोऽनुवषट्कारेऽपि प्रवर्त्तन्ते । कुत एतत्समत्वात् । समो ह्ययमनुवषट्काराद्विदेवत्यानानु जुहोतीति यागेन । यावति हि सोमयागोऽभ्यासो, सोमयागादृतेन च विहिता आश्रावणादयः । तेनानुवषट्कारेऽपि प्रवर्त्तेरन्निति ॥ २०३ ॥

एवं प्राप्त उच्यते—

## नानन्तर्यात् ॥ २०४ ॥

नैतेषामनुवषट्कारे प्रवृत्तिः । कुत एतत् । आनन्तर्यात् । वषट्कृत्यानयानमनुवषट्करोतीत्यानन्तर्यं विरुध्यते ॥ २०४ ॥

## स्यादविरोधात् ॥ २०५ ॥

स्यादाश्रावणादि यदि विरोधो न स्यात् । अस्ति तु विरोध । तस्मादप्रवृत्तिरिति । अपरे त्वैन्द्रवायवावयवमेवेदमधिकरणं व्याचक्षते ॥ २०५ ॥

प्रतिप्रस्थातादित्यपात्रेण द्विदेवत्यानानुजुहोतीति प्रक्रान्तम् । तत्रेदमुच्यते—

## शेषः शेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति ॥ २०६ ॥

अग्निहोम शेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेत्यनेन मन्त्रेण । प्रतिप्रस्थातैवाधिकारात् । आसिञ्चामीति चाध्याहारः ॥ २०६ ॥

समासिच्य तेनापिदधाति विष्ण उरु गायेति ॥ २०७ ॥

समासिच्यान्ते मैत्रावरुणाश्विनाभ्यामपि कृते यागे तेनैव पात्रेणादित्यस्थालीमपिदधाति विष्णु उरु गायेत्यनेन मन्त्रेण ॥ २०७ ॥

उन्नीयमानेभ्योनुवाचयति ॥ २०८ ॥

उन्नीयमानायानुवचनं कारयत्युन्नेतैव । स हि समाचयोन्नयनं करोति तच्चैवमनुवाचनम् । अतोत्रापि तस्यैव कर्तृत्वम् । लिङ्गाच्च । यो वाव कर्म करोति स एव तस्योपचारं वेदेति ॥ २०८ ॥

चमसेषून्नयति नवस्वपरेणोत्तरवेदिं निधाय ॥२०९॥

नवस्विति द्वयमभ्युदासार्थम् । तस्य हि पश्चादुन्नयनात्स्थानमिति ॥ २०९ ॥

शुक्रादुपस्तरणाभिघारणे ॥ २१० ॥

क्रियेते । मध्यमन्तु पूतभृतश्चमसानिति पूतभृतः । एकैकश्च त्रिरवत्तः क्रियते । पदार्थस्यैतावत्त्वात् ॥ २१० ॥

होतृचमसे प्रथमम् ॥ २११ ॥

प्रथमं होतृचमस उन्नयनम् । तस्य हि प्रथमः पाठः प्रैतु होतुश्चमस इति ॥ २११ ॥

शुक्रामन्थिभ्यां चरतः ॥ २१२ ॥

द्विवचनोपदेशादध्वर्युः प्रतिप्रस्थाता च । स हि सन्निकर्षादुपात्तो ॥ २१२ ॥

विभागार्थमाह—

शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता ॥ २१३ ॥

प्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड

इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता॥२१४॥

प्रोक्षिताभ्यां शकलाभ्यामपिधाने ग्रहयोरपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता ग्रहयोरेव कुरुतः ॥ २१४ ॥

देवास्त्वेति निष्क्रामतो यथालिङ्गम् ॥ २१५ ॥

यथालिङ्गग्रहणं मन्त्रविभागार्थम् ॥ २१५ ॥

अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रो-
ण्योर्निधत्तो ऽविसृजन्तौ दक्षिणस्यामध्वर्यु-
रुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीति ॥ २१६ ॥

अध्वर्युप्रतिप्रस्थातारौ अपरेणोत्तरवेदिं परस्परतोऽरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तौ ग्रहौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टमसीत्यनेन मन्त्रेण । स चायमुत्तरवेदिसंस्कारो वाक्यशेषात् तद्धस्ताभिर्वैनदुत्तरवेदिमनाधृष्टां कुरुत इति । मन्त्रलिङ्गाच्चानाधृष्टासीति । प्रयोजनम् यत्रोत्तरवेद्यकरणं तत्रैतन्न भवति । प्रयोजनं ग्रहसंस्कार इत्यपरे । अपिधानापमार्जनसंस्कारमध्येऽभिधानात् । प्रयोजनत्वाच्च ग्रहयोः । तस्माद्ग्रहसंस्कार एवायम् । मन्त्रलिङ्गवाक्यशेषावर्थवादमात्रौ ॥ २१६ ॥

सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः
सुप्रजा इति प्रतिप्रस्थातोत्तरम् ॥ २१७ ॥

मन्त्रद्वयमपि चोदितार्थाभिधायी ॥ २१७ ॥

अपरेण यूपमरत्नी सन्धत्तः सङ्गमान इति
यथालिङ्गम् ॥ २१८ ॥

पूर्वेणाशक्तौ ॥ २१९ ॥

अप्रोक्षितौ यूपशकलौ ॥ २१९ ॥

निरस्यतो निरस्तः शण्ड इत्यध्वर्युर्निरस्तो मर्क्क इति प्रतिप्रस्थाता ॥ २२० ॥

शण्डग्रहणे मर्कग्रहणं चासुरत्वादुदकोपस्पर्शनं भवति ॥२२०॥

आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युर्मन्थिन इति प्रतिप्रस्थाता॥ २२१॥

अछिन्नस्येति जपित्वाश्राव्याह प्रातः प्रातःसवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ २२२ ॥

जपोऽध्वर्योरेव ॥ २२२ ॥

उभयतो यूप प्राङ्मुखौ जुहुतः सा प्रथमे त्वध्वर्युः प्रथमम् ॥ २२३ ॥

अहं जुहोमि ॥ २२३ ॥

तमनुप्रतिप्रस्थाता ॥ २२४ ॥

अनेनैव मन्त्रेण । जुहुत इति द्विवचनोपदेशात् ॥ २२४ ॥

चमसाध्वर्यवश्च ॥ २२५ ॥

चशब्दात्तमन्विति । मन्त्रस्तु प्रकृतिवदेव । तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयते इति ध्रुव ॥ २२५ ॥

प्रेष्यति च ॥ २२६ ॥

चशब्दादनन्तरम् ॥ २२६ ॥

प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातृणां प्रयजमानस्य प्रयन्तु सदस्यानां होत्राणां च

मसाध्वर्य्यवेत्र उपावर्त्तध्वꣳ शुक्रस्याभ्युन्नय-
ध्वमिति ॥ २२७ ॥

मैत्रु होतृश्चमस इति सर्वत्र केचिदनुपङ्गमिच्छन्ति । मादयेध्व व्यवस्थितः सर्वेषां द्योतक इति सम्प्रदायः । होत्राश्च प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रग्नीधः । तेषां चमसानामुपावर्त्तनम् । मैत्रिति शुक्रस्याभ्युन्नयध्वमिति ॥ २२७ ॥

आगम्य प्रतिप्रस्थाता शेषꣳ शुक्रपात्रेवनयति॥२२८॥

पत्न्य सुहोतिस्थानात् प्रतिप्रस्थाता मन्थिशेषं शुक्रपात्रेवनयति ॥ २२८ ॥

तꣳ स होतृचमसे ॥ २२९ ॥

अवनयति तमध्वर्युर्होतृचमसे ॥ २२९ ॥

पश्चसून्नयन्ति ॥ २३० ॥

होत्राणां, चमसाध्वर्य्यवेत्र उपावर्त्तध्वꣳ शुक्रस्याभ्युन्नयध्वमित्युक्तत्वात् ॥ २३० ॥

तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यजय-
जेति प्रशास्त्रादीन् ॥ २३१ ॥

नाम गृहीत्वा गृहीत्वा प्रेष्यत्यसौ यजेति ॥ २३१ ॥

ब्रह्मन्यजेति ब्राह्मणाच्छꣳसिनम् ॥ २३२ ॥

प्रेष्यति ॥ २३२ ॥

प्रथमं हुत्वोत्तमं वा तृपन्त्विति जपति ॥ २३३ ॥

प्रथमं चमसमुत्तमं वा हुत्वा तृपन्त्विति जपति ॥ २३३ ॥

होतारं प्रत्युपसीदत्ययाडग्नीदिति ॥ २३४ ॥

अनेन मन्त्रेण ॥ २३४ ॥

द्विदेवत्यान् भक्षयति पूर्वः पृथमचोदनाद्धो-
माभिषवकारी भक्षयेदिति श्रुतिः ॥ २३५ ॥

द्विदेवत्यशेषान् भक्षयत्यध्वर्युः । कुत एतत् । होमाभिषव-कारिणो हि भक्षः श्रूयते । हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः प्रतिपरेत्य सदसि सोमान्भक्षयन्तीति । एतदत्र विधीयते । अत्र वाक्ये हविर्धाने ग्रावभिरभिषवो वाक्यान्तरप्राप्तो ऽनूद्यते । यदाहवनीये जुहोतीति होमश्च । तथोदङ्मेवास्य सदस्तस्मात्सदसि भक्षयन्तीति सर्वमनूद्यते । होमाभिषवनिमित्तो भक्षो भवतीत्येतदत्र विधीयते । अतश्च होमाभिषवकारिणो भक्षो भवतीति । स च भ-क्षयन्पूर्वो भक्षयतीति । कुत एतत् । प्रथमचोदनात् । प्रथममक्षचोदनात् । एवं प्राथम्यमवगम्यते । अभिषुत्य हुत्वा भक्षयतीति । असन्निधानाच्च । वषट्कर्तुर्भक्षस्य ह्यसन्निहितः सो-मस्तस्माद्वषट्कारनिमित्तात्पूर्वोभिषवनिमित्तो भक्ष ॥ २३५ ॥

होता वा वचनमन्त्रवर्णकारणेभ्यः ॥ २३६ ॥

होता वा पूर्वो भक्षयेत् । कुत एतद्वचनात् । वचनं हि भवति । वषट्कर्ता प्रथमो भक्षयतीति । प्रथमश्चैवं भक्षयति यावद-न्यो न भक्षयति ॥ २३६ ॥

किञ्च—

मन्त्रवर्णाच्च ॥ २३७ ॥

एते वदन्ति शतवत्सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्य माशतेति । चिच्छ-ब्दः अप्यर्थे । ग्रावाणो वदन्ति । होतुरपि पूर्वं हविरद्यमक्षितवन्तो वयमिति । यदि च होतुः पूर्वं भक्षणमुचितम् तदेतदुपपद्यते । किं च कारणानुपूर्व्याच्च । वषट्कृते जुहोतीति पूर्वं कारणं होतुः पश्चादध्वर्योरिति । ननु च पूर्वतरमभिषवः कारणम् । नेत्युच्यते ।

न ह्यभिषव एव कारणं किं तर्हि होमश्चाभिषवश्च । कथं ज्ञायते एकवाक्यत्वात् । अभिषुत्येत्यपरिसमाप्तं वाक्यं हुत्वा भक्षयन्तीत्यत्र परिसमाप्यते । तस्मादुभयोः समुदितयोर्निमित्तभावो भक्षं प्रति नैकैकस्येति । यत्रत्वेवं विधैकवाक्यता न भवति तत्र व्यस्तयोरपि निमित्तता भवति । यथा यस्य पिता पितामहः सोमं न पिबेदिति । तस्माद्धोतुरेव पूर्वं कारणमिति ॥ २३७ ॥

एवं प्राप्ते ब्रूमः—

## नाध्वर्युः समभिव्याहाराद् ॥ २३८ ॥

नैतदेवं वषट्कर्तुः पूर्वो भक्ष इति । किं तर्हि अध्वर्योः पूर्वतरं समभिव्याहृतत्वात् भक्षस्य । तस्मात्तदभिषुत्याग्नौ जुहोति तदग्राधमूर्तं दधात्यथ भक्षयन्तीति । अभिषुत्याग्नौ हुत्वेत्यनुवादोऽयम् केवलमध्वर्योरनन्तर्यं स विधीयत इति । तस्मादध्वर्योः पूर्वतरं भक्षः ॥ २३८ ॥

यदुक्तं वषट्कर्ता प्रथमो भक्षयतीति । तत्परिह्रियते—

## मन्त्राणां चाविधायकत्वात् ॥ २३९ ॥

वषड्वाह्वचनस्य चाविधायकत्वात् । कथमविधायकत्वमिति चेत् । सौम्येक्षणविधिपरत्वाद्वाक्यस्य । सौम्यं चरुमुह्यमानं ह्रियमाणं होता पूर्वतरमपेक्षते । वषट्कर्ता हि प्रथमः सर्वभक्षान् भक्षयतीत्यनुवादोऽयम् । कुतः प्राप्तिरिति चेत् । समाख्याभक्षापेक्षया प्राप्तिः ॥ २३९ ॥

यथोक्तं कारणानुपूर्व्यादित्यत्र ब्रूमः—

## कारणस्य च समत्वात् ॥ २४० ॥

समं हि कारणमुभयोः । सह वै वषट्कारेण जुहुयात् वषट्कृते वेति । तस्मादध्वर्युरेव पूर्वो भक्षयेदिति ॥ २४० ॥

## ऐन्द्रावायवं प्रतिगृह्णात्यैतु वसुः पुरुवसुरिति होतृवद्भक्षणम् ॥ २४१ ॥

होतृचमसातिदेशोऽयम् । स चैन्द्रवायवं सुतस्य ढौकयित्वा चक्षुषोर्मैत्रावरुणं श्रोत्रयोराश्विनमिति भक्षणं च ॥ २४१ ॥

वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहे त्येवं; सर्वत्र सोमानां भक्षणम् ॥ २४२ ॥

द्विदेवत्यव्यतिरेकेणापि । मन्त्रश्चोदितार्थाभिधायी ॥ २४२ ॥

वचनादन्यत् ॥ २४३ ॥

वचनादन्यदपि भवति । यथैन्द्रश्च सच्चादिति ॥ २४३ ॥

भक्षे हि मेति वा यथालिङ्गम् ॥ २४४ ॥

भक्षे हि मेति चानुवाकेन सोमभक्षणं भवति तत्र च यथालिङ्गं मदणादि कर्त्तव्यम् । अनुवाकश्च शाखान्तरसमधीतोऽपि कथञ्चिन्नाभिहित आचार्येण ॥ २४४ ॥

एवमितरौ प्रतिमन्त्रमैतु वसुर्विदद्वसुरेतु वसुः संयद्वसुरिति ॥ २४५ ॥

मैत्रावरुणादिवतो भक्षो प्रतिपद्यत इति ॥ २४५ ॥

शेषः; शेषः; होतृचमसेवनयति ॥ २४६ ॥

प्रतिपदम् ॥ २४६ ॥

पुरोडाशमात्रामैन्द्रवायवे प्रास्यति पयस्यां मैत्रावरुण आश्विने धानाः ॥ २४७ ॥

पयस्या धाना अपि मात्रा एव । पुरोडाशमात्रा अनुवृत्ता इति बहुवचनोपदेशात् । मात्राशब्दश्चोपादानार्थी । अतश्च न सर्वप्राशनमिति ॥ २४७ ॥

तानि प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्यो-

त्तरे वर्त्मनि निदधाति ॥ २४८ ॥

तानीति हविर्धानपात्राणि ॥ २४८ ॥

इडामादधाति ॥ २४९ ॥

होतृधिष्ण्यात् ॥ २४९ ॥

चमसांश्चोद्यच्छन्ति ॥ २५० ॥

चशब्दाद्युगपत् ॥ २५० ॥

मार्जिते वाजिनेन चरन्ति सूक्तवाकसंयोर्वा-
कयोरन्यार्थत्वात् ॥ २५१ ॥

इडामादधातीतीडोपक्रान्ता ऽतस्तन्मार्जनान्ते वाजिनेन चरन्ति । अधस्ताद्विकृत्यवधिकाः । पौरोडाशिकाः पदार्थाः । प्रातरनुवाककाले निर्वापः । बहिष्पवमानोत्तरकाले ऽलङ्करणम् । सवनान्ते च प्रचारः । इडाधानोत्तरकालं च नैयायविधिविधानम् । अतः पौरोडाशिका वाजिनयागादयः सर्वे पश्चात् कर्तव्याः । वाजिनग्रहणमुपलक्षणार्थम् । ननु च सूक्तवाकोत्तरकालं वाजिनयाग प्रकृतौ कृतः । प्रहृत्य तृणन्तेन चरतीति । इहापि तथैव करिष्यते । नैतदेवम् । सूक्तवाकसंयोर्वाकयोरन्यार्थत्वात् । पश्वर्थाः सूक्तवाकादयः । ते चाग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यनुयाजोत्कर्षेणोत्कृष्टाः । निःसन्दिग्धं च पाशुकानामनुयाजानामुत्कर्षः । येनाचार्येणोक्तमाग्नीध्र उत्पूय पश्वाज्यग्रहणमिति । पाशुकान्याज्यानि तत्साध्यत्वाच्चानुयाजा अपि पाशुका एवेति प्रसङ्गेन च पाशुकान्यङ्गानि सवनीयानामुपकुर्वन्ति । न च तैरुत्कृष्यमाणैः पौरोडाशिकानामुत्कर्षो युक्तः । कुत एतदसम्बन्धात् । न हि पौरोडाशिकानां च सम्बन्धोऽस्ति तस्माद्वाजिनयागादीनामिहैवानुष्ठानं युक्तरूपमिति ॥ २५१ ॥

एवं प्राप्ते ब्रूमः—

यथोक्तं वा प्रसङ्गात् ॥ २५२ ॥

वाशब्दः पक्षव्यावृत्तौ । न हि वाजिनयागादय कर्तव्याः । किं तर्हि प्रहृत्य तृणं तेन चरतीत्यत्रैव । ननु प्रासङ्गिकत्वादनुत्कर्षे

इत्युक्तम् । अत्रोच्यते । अप्रसङ्गात् । न हि पाशुकान्यङ्गानि पुरोडाशेषु प्रसज्यन्ते । कुतः । साधारणत्वात्तन्त्रस्य । साधारणं हि तन्त्रमुभयोरपि सोमतन्त्रमध्य आम्नानात् । तत्र न ज्ञायते किं पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते पौरोडाशिकं वा पशाविति । न च परस्परतोऽनयोरङ्गाङ्गिभावः । यथा पशोः पशुपुरोडाशस्य च । उभयोरपि हि प्रकरणात्सोमाङ्गतेति । तस्मात्तत्र साधारण्यात्साधारणानामेवानुयाजानामुत्कर्ष इति । यत्तूक्तम् । पृषदाज्यग्रहणमाचार्येणा न तत्पश्वर्थतयैव सपाशुकचातुर्मास्यन्यायेन । सवनीयात्पशुतन्त्रस्य । साधारण्येऽपि सति तत्तन्त्राभ्युपगमात् पृषदाज्यग्रहणमित्युक्तम् । तस्मात्स्वकाल एव वाजिनयागादयो नेहेति । अपि च व्यूहने पशुदेवतायाः सवनीयदेवतानां च युगपदभिधानं दृश्यते । अग्नेर्वनस्पते रिन्द्रस्य वसुमते रुद्रवत इत्येवमादि । तत्र तन्त्रस्य साधारण्य उपपद्यते । इतरथा प्रति सवनं सवनीयेषु परिसमाप्यमानेषु युगपदुच्चारणं न साधारणं । भवति च तस्मादपि साधारणं तन्त्रम् । ननु वसुमदादिगुणक इन्द्रोऽभिधीयते । न च सवनीयेष्वेतद्गुणत्वमत्रोच्यते । वचनसामर्थ्यात् । सवनीयनिर्वापे हरिवदादिगुणक इन्द्रः प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामिति च निर्गुणोऽयागे । व्यूहने तु वसुमदादिगुणक इति । नास्तिवचनस्यातिभारः । व्यूहन हि प्रकृत्य वचनं भवति । अग्नेर्वनस्पतेरिन्द्रस्य वसुमत इत्येवमादि ॥ २५२ ॥

होतृचमसेन सोमं भक्षयतः ॥ २५३ ॥

त्रिवचनोपदेशात् प्रतिप्रस्थाता च ॥ २५३ ॥

हिन्व मे गात्राणि हरिवः शिवोमे सप्तर्षीनु-

पतिष्ठस्वोर्द्ध मे नाभेः सीद मा मेऽवाङ्नाभि-

मतिगा इति गात्राणि सꣳस्पृशन्ते ॥ २५४ ॥

भक्षणोत्तरकाल सर्वभक्षेषु । होतृचमसे च शुक्रशेषस्य होमाभिसर्पणमित्युभयोर्भक्षणम् । सन्निवेशस्य च प्रतिप्रस्थातुः । शुक्रामन्थिनोर्होतृचमसस्य च यदङ्गस्पर्शनमित्यत्र । होतृग्रहणेन भक्ष-

षम् । पुनर्मैत्रावरुणयजमानचमसेषु होतुर्वषट्कारनिमित्तो भक्षः । इतरेषां समाख्यानिमित्तम् । प्रशास्त्रादिष्वप्येवम् । विशेषस्त्वध्वर्युरत्र प्रष्टव्यः । स च पश्चात्पश्चात्कालीनत्वात् । पुनर्होताहोतृचमसे समाख्यानिमित्तं भक्षयत्यध्वर्युप्रतिप्रस्थातारौ पृष्ट्वा । ततः पुनरभ्युन्नीतेषु अध्वर्युर्होमाभिषवनिमित्तं भक्षयेत्प्रशास्त्रादयश्च वषट्कारसमाख्यानिमित्तं तन्त्रेण । प्रस्थितयागनिमित्तं तु होता साक्षिभूत. अत्र प्रष्टव्य एव ॥ २५४ ॥

आप्यायस्वेति द्वाभ्यां चमसानालभन्ते ॥२५५॥

चमसिनः ॥ २५५ ॥

सोमं वा सिञ्चन्ति मन्त्रेणासम्भवात् ॥२५६॥

आप्यायनस्य । वाशब्दोऽवधारणे । पूर्वमाशङ्कितमुपसत्त्वाल्लम्भमात्रेणाप्यायनस्य दृष्टत्वात् ॥ २५६ ॥

असर्वभक्षास्तान् ॥ २५७ ॥

आप्याय्य ॥ २५७ ॥

दक्षिणस्य हविर्द्धानस्य पश्चादक्षन्निदधति

चमसानधः ॥ २५८ ॥

पश्चादक्षमित्यक्षस्य पश्चात् अधश्च नोपरिष्टादिति ॥ २५८ ॥

ते नाराशंसा आ वैश्वदेवात् ॥ २५९ ॥

तेषामावैश्वदेवात् नाराशंसा इति संज्ञा संव्यवहारार्था । अथ यदि नाराशंसेषु सक्त इत्येवमादयो ॥ २५९ ॥

पुरोडाशशकलमादाय समुपहूताःस्म इत्युक्त्वोत्तिष्ठति ॥ २६० ॥

अच्छावाकायैनत्प्रयच्छन्नाहाच्छावाक वदस्व यत्ते वाद्यमिति ॥ २६१ ॥

एतदिति सकलम् ॥ २६१ ॥

उपो अस्मानिति ब्रुवति होतारमाहोपहवमयं ब्राह्मण इच्छते त्वं होतरुपह्वयस्वेति ॥ २६२ ॥

उपो अस्मानीति ब्रुवत्यच्छावाके होतारमाहोपहवमयं ब्राह्मण इच्छते त्वं होतरुपह्वयस्वेत्येवम् ॥ २६२ ॥

उपहूत उन्नीयमानायानुवाचयति ॥ २६३ ॥

उपहूत होत्रा उन्नीयमानायानुवाचनं कारयत्युन्नेता ॥ २६३ ॥

अच्छावाकचमसमुन्नयति होता चमसवत्सर्वम् ॥ २६४ ॥

होत्राः प्रशास्त्रादयः । तेषां च चमसानां यथोन्नयनं द्रोणकलशात्तथं तद्वत् । सर्वग्रहणाच्च तूष्णीत्विति जपो लभ्यते ॥ २६४ ॥

आनिधानात्कृत्वा ॥ २६५ ॥

अच्छावाकचमसम् ॥ २६५ ॥

पूर्वश्चाग्नीध्रादतः ॥ २६६ ॥

आग्नीध्र स सादयपूर्वो भवत्यतः परमच्छावाकचमसः ॥ २६६ ॥

आग्नीध्रे हविर्यज्ञर्त्विज इडां प्राश्नन्ति ॥ २६७ ॥

ऋत्विग्ग्रहणं यजमानव्युदासार्थम् । हविर्यज्ञग्रहणं च शेषर्त्विजामिति ॥ २६७ ॥

पत्नी चान्यच्छालायाम् ॥ २६८ ॥

पत्नी चान्वर्धोदनादि शालायां भक्षयति ॥ २६८ ॥

उपविष्टेऽच्छावाके ॥ २६९ ॥

ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोसि
मधवे त्वेति द्वादश प्रतिमन्त्रम् ॥ २७० ॥

चरत इति द्विवचनोपदेशात् प्रतिप्रस्थाता च । द्रोणकलशादिति नियमो वचनात् । द्वादशग्रहणाच्च द्वादशानामुत्तमयोर्योगपद्यम् न तु त्रयोदशस्य । मधवे त्वेत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् । मधवे त्वेत्येवाध्वर्युर्गृह्णाति मधवाय त्वेति प्रतिप्रस्थाता ॥ २७० ॥

अध्वर्योः पूर्वः पूर्वो मन्त्रः ॥ २७१ ॥

उत्तर उत्तरः प्रतिप्रस्थातुः ॥२७२ ॥

मन्त्रः ॥ २७२ ॥

युगपत्प्रथमौ गृह्णीत उत्तमौ च व्यत्यासं
मध्ये प्रचरणं च सर्वेषाम् ॥ २७३ ॥

व्यत्यासेन ॥ २७३ ॥

निष्क्रामत्येकः प्रविशतीतरः ॥ २७४ ॥

हविर्धानात् । अध्वर्युप्रतिप्रस्थातारौ ॥ २७४ ॥

उत्तर उत्तरः प्रतिप्रस्थातापरकालत्वात् ॥२७५॥

तयोश्चोत्तर' प्रतिप्रस्थाता भवति देशात. कालतश्चापरकालत्वात् ॥ २७५ ॥

उभयतोध्वर्यु पात्रेण परिप्रगृह्णाति ॥ २७६ ॥

प्रतिप्रस्थाता प्रविशन्त निष्क्रामन्त च ॥ २७६ ॥

सर्वहुताः प्रागुत्तमाभ्याम् ॥ २७७ ॥

उत्तमग्रहयोः पूर्वे सर्वहुताः कर्त्तव्याः ॥ २७७ ॥

ऋतुनेति पट् प्रेष्यतः ॥ २७८ ॥

ऋतुना प्रेष्येत्येवं षट्सु प्रैषः ॥ २७८ ॥

ऋतुभिरिति चतुरः पात्रमुखे विपर्यस्य ॥२७९॥

ऋतुभिः प्रेष्येत्येव चतुः प्रेष्यति । पात्रमुखविपर्यासेन च ग्रहणं होमश्च ॥ २७९ ॥

षड्वदुत्तमौ ॥ २८० ॥

उत्तमौ तु षट्स्विवाभवतः । पात्रमुखविपर्यासेन प्रेषणेन च ॥ २८० ॥

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात् ॥२८१॥

गृहपते यजेत्येवं प्रेषितो यजमानो होतरेतद्यजेति ब्रूयात् । ततश्च होतुस्तथाज्यापाठः ॥ २८१ ॥

अध्वर्यू च ॥ २८२ ॥

प्रेषितौ सन्तावेवमेवाहतुर्होतरेतद्यजेति । एक एवाहेत्यपरे । परार्थत्वात् ॥ २८२ ॥

त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोस्य;
हसस्पतये त्वेति ॥ २८३ ॥

अनेन मन्त्रेण । यदि त्रयोदशं गृह्णीयादिति विकल्पः ॥ २८३ ॥
तं च—

प्रतिप्रस्थातारमनुजुहोति ॥ २८४ ॥

अध्वर्युः ॥ २८४ ॥

अन्यतरस्मिन्च्छेपौ कृत्वा वशिनैन्द्राग्नं गृह्णाति
प्रतिप्रस्थातेन्द्राग्नी इति ॥ २८५ ॥

अन्यतरस्मिन्पात्रे ग्रहणशेषौ कृत्वा पाशिना रिक्तेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति प्रतिप्रस्थातेन्द्राग्नी इत्यनेन मन्त्रेण ॥ २८५ ॥

आहरति भक्षं होतृपोतृनेष्ट्रग्नीद्ब्राह्मणा-
च्छंसिप्रशास्तृभ्यः ॥ २८६ ॥

यो यस्य वषट्कर्ता स तेन सह भक्षयेत् । उपहवप्रार्थनं तु साधारणयाऽसर्वेभ्य. ॥ २८६ ॥

विपर्यस्य पात्रं होतृपोतृनेष्ट्रच्छावाकानाम् ॥२८७॥

भक्षाहरणम । भक्षाहरणाम्नानाधासर्वहुतग्रम । अनश्च वि-कल्पः । सर्वहुताः प्रागुत्तमाभ्यामसर्वहुतावेति ॥ २८७ ॥

होतरेतद्यजेत्यत्र चिन्त्यते । किं याज्यामात्रमपनीतम् उत वषट्कारोऽपीति । किं चातः । यदि याज्यामात्रमपनीतं यजमानस्यैव वषट्कारो भक्षश्च । अथोभयं ततो होतुरेव भक्ष । किं तावत्प्राप्तम्—

यावदुक्तं होतुर्यजमानयोगाद्वरणवत् ॥२८८॥

होतरेतद्यजेत्यनेन याज्यामात्रमपनीयते न वषट्कारः । कुत एतत् । यजमानयोगाद्वरणवत् । यथा वरणं यजमानयोगि एव व-षट्कारोऽपि । वषट्कारायैव हि वरणम् । अतो यजमानस्यैव वषट्-कार. । तन्निमित्त च भक्षणम् । अथवा वरणवदिति मतुबयम् । एवं वरणवद्वषट्करणं भवतीति ॥ २८८ ॥

एव प्राप्त उच्यते—

कारणाद्वा होतृभक्षः ॥ २८९ ॥

वाशब्द. पक्षव्यावृत्तौ । होतुर्वा भक्षो भवति । किं कारणम् । वषट्कारनिमित्तत्वाद्भक्षस्य । होतरेतद्यजेत्यनेन न याज्यामात्रमप-नीतम् किं तर्हि वषट्कारोऽपि । एवमेव हि होत्रा इदं भवति । अपि च श्रूयते याज्याया. अनवान वषट्करोतीति । तस्मादुभमप-नीयते याज्या वषट्कारश्च तन्निमित्तश्च भक्ष इति ॥ २८९ ॥

यदुक्तं वरणवदिति । अत्रोच्यते—

अप्राप्तेर्वरणम् ॥ २९० ॥

वरणं भक्षप्राप्तेर्निमित्तं भवति । वषट्कारनिमित्ता हि भक्षप्राप्तिः । विभक्तिव्यत्ययेन वा सूत्रं व्याख्येयम् । वरणाद्वषट्कारप्राप्तिर्भक्षस्य ॥ २९० ॥

विपर्यस्य पात्रे होतुर्हि भक्षणम् ॥ २९१ ॥

होतरेतद्यजेत्यनयोर्ग्रहयोः ॥ २९१ ॥

तावद्वा सर्वहुतत्वात्पूर्वेषाम् ॥ २९२ ॥

तावदेव वा भक्षणं भवति यतोऽन्ये सर्व हुता इति ॥ २९२ ॥

निर्हृत्य पात्रे होतुः पुरस्तात्प्राङासीनः ॥ २९३ ॥

मार्जालीये प्रक्षाल्य पात्रे होतुः पुरस्तात्प्राङुपविशत्यध्वर्युः ॥ २९३ ॥

अभिहुतः शोंसावेत्यावृत्योथामोदैवेति प्रतिगृणाति प्रणवावसानयोः ॥ २९४ ॥

शोंसावेत्यनेन होत्राहूताध्वर्युरावृत्योथामोदैवेति प्रतिगृणाति ऋचः प्रणवे ऽवसाने च ॥ २९४ ॥

ओमिति वा ॥ २९५ ॥

प्रतिगृणाति ॥ २९५ ॥

शस्त्रान्ते नित्यम् ॥ २९६ ॥

ओमिति प्रतिगरः ॥ २९६ ॥

वागन्तो वा पूर्वः ॥ २९७ ॥

पूर्वः प्रतिगरो वागन्तो वा भवति । वाशब्दो विकल्पार्थः ॥ २९७ ॥

ऐन्द्राग्नमादायाश्राव्याहोक्थशा यज सोमस्येति ॥ २९८ ॥

ऐन्द्राग्नं ग्रहमादायाश्राव्याहोक्थशा यजं सोमस्येति प्रेष्यति ॥ २९८ ॥

एष प्रैषः सशस्त्राणाम् ॥ २९९ ॥

ग्रहाणामेव प्रैषो भवति ॥ २९९ ॥

नाराशꣳसानां च कम्पनꣳ हूयमाने ॥ ३०० ॥

नाराशंसचमसानां च कम्पनं हूयमाने सशस्त्रे ॥ ३०० ॥

निहितेषु चेद्धोमः सशस्त्रस्य ॥ ३०१ ॥

अपरेणोत्तरवेदिं निहिता निहिता उच्यन्ते । तेषु चेत्सशस्त्रस्य होमः तदाचमसानामपि होमो भवति ॥ ३०१ ॥

भक्षप्रभृत्यानिधानात्कृत्वा वैश्वदेवं गृह्णाति ॥ ३०२ ॥

ऐन्द्राग्नस्य भक्षप्रभृत्यापात्रनिधानात्कृत्वा वैश्वदेवं गृह्णाति ॥ ३०२ ॥

शुक्रपात्रेण द्रोणकलशादन्वारब्धे वोमास इति ॥ ३०३ ॥

वैश्वदेवं ग्रहं गृह्णाति द्रोणकलशाच्छुक्रपात्रेणान्वारम्भे कृते या ओमास इत्यनेन मन्त्रेण ॥ ३०३ ॥

शुक्रं पूतभृत्यासिच्य द्रोणकशपवित्र-योजनम् ॥ ३०४ ॥

शुक्रस्य पूतभृत्यासेकं कृत्वा द्रोणकलशपवित्रयोः स्वस्थाने योजनं क्रियते ॥ ३०४ ॥

पशुपुरोडाशप्रथमान्त्सवनीयान्निर्वपति पय-स्यावर्जम् ॥ ३०५ ॥

प्रतिसवनं हि सवनीयाः पुरोडाशाः श्रूयन्त इति । पयस्या- थर्जमिति । कुत. । प्रातःसवन एवैषा मैत्रावरुणी पयस्या यथा भवति नेतरयोः सवनयोरिति ॥ ३०५ ॥

स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्यो-
पावर्त्तध्वमिति ॥ २०६ ॥

तृणाभ्यां वैश्वदेवं ग्रहमुपस्पृश्य प्रस्तोत्रे तृणे प्रयच्छन्नुपा- वर्त्तध्वमित्यनेन मन्त्रेण स्तोत्रमुपाकरोति ॥ ३०६ ॥

एवं धुर्येषु सर्वत्र ॥ २०७ ॥

धुर्याणि चाष्टपिस्तोत्राण्युच्यन्ते । पवमानेषु त्वनावृत्त्या स्तुत्यभिनिर्वृत्तिः स्तुतमनुशंसतीति । ततो वैश्वदेवस्य शस्त्रम् । पुनस्तस्यैव यागकाले नाराशंसानां कल्पनम् ॥ ३०७ ॥

सर्वभक्षाश्चमसाः ॥ २०८ ॥

मार्जालीये पात्रप्रक्षालनम् ॥ २०९ ॥

ग्रहपात्रस्य चमसानां च ॥ ३०९ ॥

उक्थ्यं विगृह्णाति त्रैधं देवेभ्यस्त्वेति
सर्वेभ्यः ॥ २१० ॥

त्रैधमुक्थ्यं विगृह्णाति देवेभ्यस्त्वेति सर्वेभ्यः प्रशा- स्त्रादिभ्यः ॥ ३१० ॥

मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रे ॥ ३११ ॥

विगृह्णाति वेति विकल्प. । तुल्यप्राकरणात् ॥ ३११ ॥

तूष्णीं सादनम् ॥ २१२ ॥

न योनौ सादयेदिति वचनात् ॥ ३१२ ॥

स्तोत्रमुपाकरोति ॥ २१३ ॥

स्तोत्रावसरविधिरस्येदमुक्तम् । विधिस्तु पूर्वमेवोक्तः ॥३१३॥

उक्थशा यज सोमानामिति प्रैषोनाराशं-
सेषु ॥ ३१४ ॥

नाराशंसेषु चमसेषु । इह चानाराशंसाश्चमसाः ॥ ३१४ ॥

यस्य त्रिग्रहस्तस्य प्रथमं चमसमुन्नयति ॥ ३१५ ॥

व्याख्यानव्यवसितमेव । इह च प्रशास्तृचिग्रह प्रथम ॥ ३१५ ॥

ग्रहशेषं चास्मिन्नासिञ्चति ॥ ३१६ ॥

हुत्वा ग्रहम् । तच्छेषं चमस आसिञ्चति । तदुह चरकाध्वर्यवो विग्रहासिञ्चतमोपचिन्वसमाचार्येण ॥ ३१६ ॥

एवं प्रतिस्थातोत्तराभ्याम् ॥ ३१७ ॥

विग्रहाभ्यां प्रचरति ॥ ३१७ ॥

क्रियांस्तु विशेष —

इन्द्राय त्वेति ब्राह्मणाच्छंसिन इन्द्राग्निभ्यां
त्वेत्यच्छावाकाय ॥ ३१८ ॥

प्रतिविग्रहं च पात्रप्रक्षालनान्त कर्म। प्रागच्छावाकविग्रहात् । केचित्पशुविशसनमिच्छन्ति । स प्रातः सवन आलब्ध आ तृतीयसवनाच्छ्रप्यमाण उपशेतेति वचनात् । तत्रेति सम्प्रदायः । प्रकृतौ हि पशुपुरोडाशान्ते विशसनमाम्नातम् । पुरोडाशेन प्रचर्याथ पशुं विशास्तीति । इह चालङ्करणादय उत्कृष्टा माध्यन्दिने हि सवने तेषामाम्नातं पुरोडाशांश्चालङ्कुर्विति । इह प्रागलङ्करणात् ये पदार्थाः तदन्ते पशुविशसनस्य युक्तरूपतेति ॥ ३१८ ॥

प्रागच्छावाकविग्रहात्सोमोपावहरणम् ॥ ३१९ ॥

कर्त्तव्यम् ॥ ३१९ ॥

वसतीवर्यर्धं चासिञ्चत्याधवनीये विश्वे

देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने
न जह्युरायुष्मन्तः प्रियमेषां वदन्तो वयं
देवाना्ँ सुमतौ स्यामेति ॥ ३२० ॥

अनेन मन्त्रेण ॥ ३२० ॥

एकधनार्धं च ॥ ३२१ ॥

चशब्दादनेनैव मन्त्रेणाधवनीय एवासिञ्चति ॥ ३२१ ॥

चरिते सर्वैः प्रशास्तः प्रसुहीति ब्रूयात् ॥ ३२२ ॥

स सर्वैर्ग्रहैश्चरितैः प्रशास्तः प्रसुहीति ब्रूयात् ॥ ३२२ ॥

प्रसृताना्ँ सर्पणम् ॥ ३२३ ॥

प्रसृताना्ँ सर्पणमिति ॥ ३२३ ॥

इति कर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये
नवमोऽध्यायः ।

# दशमोऽध्यायः ।

सर्पणादि माध्यन्दिनम् ॥ १ ॥

सर्पणमादौ कृत्वा माध्यन्दिनं सवनं प्रतिपत्तव्यम् । किमर्थमिदमुच्यते । ये माध्यन्दिनगता विशेषास्तेऽत्र यथा प्रदर्शिष्यन्त इति ॥ १ ॥

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छत्युष्णीषं ग्रावस्तुते ॥ २ ॥

उष्णीषश्च शिरोवेष्टनार्थं वासोऽभिधीयते तद्ग्रावस्तुते प्रयच्छति ॥ २ ॥

अद्र्यादानप्रभृतित्रिपर्यायानभिषवान्करोति ॥ ३ ॥

यथा प्रातःसवनेऽभिहिता. ॥ ३ ॥

अत्र विशेषमाह—

आत्तमभिमिमीते ॥ ४ ॥

य आत्तो ग्रावा तमभिसोमं मिमीते प्रक्षिपति ॥ ४ ॥

कुत एतत्—

उपांशुसवनस्यानिङ्गनश्रुतेः ॥ ५ ॥

उपांशुसवनोपांशुपात्रयोः अनिङ्गनमचालनं श्रूयते । तानि वा अनिङ्ग्यमानानि शेरे आ तृतीयसवनादिति । न चाचाल्यमाने यस्मिन्नधिषवणे सोममानं शक्यते कर्तुमिति ॥ ५ ॥

इहा३ इहा३ इति प्रथमः पर्यायः ॥ ६ ॥

अभिषवस्य ॥ ६ ॥

अविलम्बितो द्वितीयस्तूर्णस्तृतीयः ॥ ७ ॥

अविलम्बितग्रहणाच्च प्रथमा विलम्बिता । स चायं वृत्तिश्च मे । वृत्तिधर्मोद्याने विलम्बितादय । तथा चाह अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणां तु हितार्थाय कुर्याद्वृत्तिं विलम्बितामिति । प्रयोजनमविलम्बिततूर्णयोर्मात्रालोपो न भवति । इहा इहा इति च वीप्सोपदेशात् प्रतिमहारमभ्यास । अत्र च केचिन्मन्त्रान्तरोपदेशात् मा भेरित्यस्याप्रवृत्तिमिच्छन्ति । नैतदुपाध्यायपादा । येन पूर्वसन्त्रमबाधमानस्यापीद्देश्यस्य निवेशा भवत्येव ॥ ७ ॥

अविलम्बितस्थान उत्तमे बृहद्बृहदिति ॥ ८ ॥

उत्तमेऽपिपदे अविलम्बितपर्यायस्य स्थाने बृहद्बृहदिति प्रयोग शाखान्तरात् ॥ ८ ॥

अर्धं वाविशेषोपदेशात् ॥ ९ ॥

अभियगार्धे वा बृहद्बृहदित्यनेन कर्तव्यम् । कुत एतदविशेषोपदेशात् । अविशेषेण हि माध्यन्दिनानां पठ्यते इहा३ इहा३ इत्यमिपूणार्मीन्द्रमवैनदाप्यायर्यति । बृहद्बृहदितीन्द्रमघैतदाप्याययतीति । यद्यमविशेषात् विशेषा पल्यानिति विशेषाङ्गीकरणमत्र युक्तरूपम् । तस्मादविलम्बितस्थान उत्तमे बृहद्बृहदित्येव सिद्धान्त । अविशेषोपदेशस्तु यथाभासस्यानुवादक ॥ ९ ॥

शुक्रप्रभृतिचतुर्णां ग्रहणम् ॥ १० ॥

ग्रहाणाम् ॥ १० ॥

आग्रयणः स्वतृतीयाभ्यो धाराभ्यः ॥ ११ ॥

सूत्रिति । धाराद्वयमस्त्येव आग्रयण तु प्रतिप्रस्थाता चाभिर्ज्ञात ॥ ११ ॥

प्रागुक्थ्यान्मरुत्वतीयमृतुपात्रेणेन्द्रमरुत्वत इति ॥ १२ ॥

गृह्णाति ॥ १२ ॥

उत्तरमेके ॥ १३ ॥

मरुत्वतीयं गृह्णन्ति । यदा त्वन्तराग्रयणोक्थ्यौ षोडशी गृह्यते तदा मरुत्वतीयो ध्रुवग्रहः । धारां हि प्रकृत्योच्यते माध्यन्दिने च पञ्च प्रथमानिति ॥ १३ ॥

समन्वारब्धनिष्क्रमणादि करोत्यग्नीदग्नीनिति प्रैषात् ॥ १४ ॥

प्रातःसवनिकमंत्रोपदेशात् अनिर्दिष्टम् ॥ १४ ॥

सदसि पवमानोपाकरणम् ॥ १५ ॥

भवति ॥ १५ ॥

अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् ॥ १६ ॥

अहर्गणे च सदसि पवमानोपाकरणं भवति । सर्वत्र ग्रहणात् सर्वपवमानेषूपाकरणं सदसि भवति । ततश्च बहिष्पवमानमपि अहर्गणे सदस्येव भवति । प्रायणीयोदयनीयौ वर्जयित्वा ॥ १६ ॥

पशुनेडीत्यपकृष्य दधिघर्माय दध्याहर दक्षिणा उपावर्त्तयेति प्रैषोपचयः ॥ १७ ॥

अग्नीदग्नीनिति प्रैषे पशुनेडीत्येतदपकृष्य दधिघर्माय दध्याहर दक्षिणा उपावर्त्तयेति प्रैषोपचयो भवति ॥ १७ ॥

सप्रवर्ग्ये दधिघर्मः ॥ १८ ॥

ततश्चाप्रवर्ग्ये दधिघर्माय दध्याहरेति न भवति ॥ १८ ॥

उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम् ॥ १९ ॥

सदस पुरस्तादग्निहोत्रहवण्यां सपवित्रायां दधिघर्मस्य ग्रहणम् । यथोक्तग्रहणं च मन्त्रप्रवृत्त्यर्थम् । अर्थान्तरसामान्याच्च सपवित्रता सान्नाय्यपवित्रेण ॥ १९ ॥

होतर्वदस्व यत्ते वाद्यमित्याह वाद्यान्ते श्रातं हविरित्युत्तिष्ठन्नाह ॥ २० ॥

होतुर्यद्वाद्य तदन्ते श्रातं हविरित्युत्तिष्ठन्नाह ॥ २० ॥

दधिघर्मस्य यजेति प्रेष्यति ॥ २१ ॥

अत्र चोदकपरिप्राप्तेऽग्नं दधि घर्मस्य यजेति प्रैषः ॥ २१ ॥

हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्ति यथोक्तम् ॥ २२ ॥

हुतशेषग्रहणाच्च स्रुच्यः शेषः । तथा च श्रूयते अनुवषट्कृत आहरति भक्षमिति । घर्मर्त्विग्ग्रहणं चेतरर्त्विग्व्युदासार्थम् । समुपहवमित्युपहूयोपहूय भक्षणम् । यथोक्तग्रहणं च मन्त्रप्रवृत्त्यर्थम् ॥ २२ ॥

[1]प्राणभक्षं वादीक्षिताः ॥ २३ ॥

कुर्वन्ति । वाशब्दो विकल्पार्थः । दीक्षितास्तु नियोगतः प्रत्यक्षभक्षमिति ॥ २३ ॥

पशुपुरोडाशेन प्रचर्य पुरोडाशादि करोत्या-धिष्ण्यनिधानात् ॥ २४ ॥

पशुपुरोडाशेन भागपरिहरणान्तेन प्रचर्य सवनीयपुरोडाशादि करोत्या धिष्ण्यनिधानान्तम् । तत्रैव सूक्तो विशेषः ॥ २४ ॥

उन्नीयमानेभ्यश्चानुवाचनप्रभृत्या चमसानि-

[1] प्राणेन भक्षः प्राणभक्षः, आघ्राणमात्रमित्यर्थः ।

धानात् ॥ २५ ॥

चशब्दात्करोति ॥ २५ ॥

दशासून्नयति ॥ २६ ॥

चमसेषु ॥ २६ ॥

माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ २७ ॥

प्रस्थितप्रैषः ॥ २७ ॥

मन्थीवत इति वा मधुश्चुतस्थाने ॥ २८ ॥

वाशब्दो विकल्पार्थः ॥ २८ ॥

इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमः वासःप्रबद्धं हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति ॥ २९ ॥

शालाद्वार्यग्रहणमाहवनीयव्युदासार्थम् । दक्षिणा सम्बन्धश्च होमो दाक्षिणहोमः । दक्षिणा च क्रतुदक्षिणोच्यते गवादीनां । उपचारवृत्तो हि तत्र दक्षिणा शब्दः । वाससि बध्वा हिरण्यं हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति जुहोति ॥ २९ ॥

चित्रं देवानामिति द्वितीयाम् ॥ ३० ॥

आहुतिं जुहोति । द्वितीयग्रहणाच्चतुर्गृहीतं सहिरण्यता च प्राप्यते ॥ ३० ॥

आग्नीध्रीयेऽग्ने नयेति ॥ ३१ ॥

जुहोतीत्यनुवर्त्तते । अत्र हिरण्यचतुर्गृहीते न प्लोऽनुपदेशात् ॥ ३१ ॥

अयज्ञ इत्यपरामृश्य चेद्युक्तं दद्यादयुक्तं वा ॥ ३२ ॥

अथ यद्यश्वं युक्तं वायुक्तं वा दास्यन्स्यादथ द्वितीयां जुहुयाद्यथु न नाद्रियेनेति वचनात् । यद्यपि दक्षिणायोगेन न युक्तोऽश्वः अथाप्ययुक्तोऽङ्गदक्षिणा भवति तथापि होतव्या । यथा शताश्वस्य मध्ययेवे ददातीति । तत्र चाश्वाहुतेरपकर्षः दास्यन्निति वचनात् । ननु चेह श्रूयते चतस्रो वै दक्षिणा हिरण्य गौर्वासोऽश्व इत्यश्वानियमार्थेच्छब्दो यद्यर्थे । एवं चेद्विकल्पार्थो भविष्यति । यथा उत्मुक उदूहत्यनुयाजाश्चेदिति ॥ ३२ ॥

वासोहिरण्ये ददाति ॥ ३३ ॥

दक्षिणाम् ॥ ३३ ॥

सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा वहिर्वेदितिष्ठतीर्दक्षिणतो रूपेण व इति ॥ ३४ ॥

दत्तार्थत्वात्सदेयहिरण्येन यजमान शालां पूर्वेण तिष्ठन् दक्षिणतो वहिर्वेदितिष्ठतीर्दक्षिणतो रूपेण व इत्यनेन मन्त्रेण । एतच्चाभिमन्त्रण गवामृतस्य यथा प्रेतेति मन्त्रलिङ्गात् । अय च मन्त्रश्चोदितार्थोभिधायी ॥ ३४ ॥

गवां शतं द्वादशं वातिक्रामति ॥ ३५ ॥

त। एतेनैव दक्षयतीति वचनात् । द्वादशं तु साम्नाम्नात् ॥ ३५ ॥

मन्थौदनतिलमापाश्च ॥ ३६ ॥

चशब्दान्नीयन्ते । एते च पुरुषसंस्कारार्थाः न दीक्षणेति स म्प्रदायः । तथा च श्रूयते चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्व इति । दाने रेषां पुरुषसंस्काराय न दक्षिण्याय । मन्थौदनादिसंस्कृताः पुरुषाः कर्मानुष्ठास्यन्तीति । प्रयोजनं सत्त्रेषु प्रवर्त्त्यन्ते । एतेषामपि दक्षिणासम्बन्ध इत्यपरे ॥ ३६ ॥

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं तीर्थेन ॥ ३७ ॥

गवादीनामतिक्रमणम् ॥ ३७ ॥

सुब्रह्मण्यां च प्रेष्यति वा ॥ ३८ ॥

न चेति विकल्पः ॥ ३८ ॥

आग्नीध्रादनु गच्छति सुन्वन् ॥ ३९ ॥

आग्नीध्रं यावद्यजमान अनुगच्छति गवादीन् ॥ ३९ ॥

प्रागनुवाचनाच्च ॥ ४० ॥

इन्द्राय मरुत्वतेऽनुब्रूहीत्यतः प्राक्सुन्वन्नेव प्रत्येतव्यः ॥ ४० ॥

सदो गच्छति वि स्वरिति ॥ ४१ ॥

प्रेक्षते यतस्व सदस्यैरिति सदस्यान् ॥ ४२ ॥

ब्राह्मणमद्येत्याग्नीध्रगमनम् ॥ ४३ ॥

तत्र दक्षिणादानायाऽतश्च सर्वे न भवति । सदो गमनं तु भवत्येव ॥ ४३ ॥

उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इति ॥ ४४ ॥

उपविश्याग्नीध्रे हिरण्यमस्मै ददात्यस्मद्राता इत्यनेन मन्त्रेण । हिरण्यग्रहणं च दक्षिणाद्रव्योपलक्षणार्थम् । एवं हि श्रूयते तदग्नीध्रे प्रथमाद दक्षिणां नयन्तीति । समस्तानां च दक्षिणात्वं न हि-

रयवस्येवेति ॥ ४४ ॥

आत्रेयाय चाग्नीध्रवत्सदसः पुरस्तादुपवि-
ष्टाय क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा
सकुञ्छेपमहालेयमवालेयमकौद्रेयमशौभ्रेय-
मवामरथ्यमगौपवनमिति ॥ ४५ ॥

चशब्दादात्रेयाय च सदसः पुरस्तादुपविष्टाय हिरण्यं ददाति। आग्नीध्रवदिति मन्त्रा लक्ष्यन्ते। इयांस्तु विशेषः। क आत्रेयं क आत्रेयमित्युक्त्वा ततो ददाति ॥ ४५ ॥

ऋत्विग्भ्यो दक्षिणां ददाति ॥ ४६ ॥

ऋत्विग्ग्रहणं चमसाध्वर्युन्युदासार्थम् ॥ ४६ ॥

पृथक् शतानि पुरुषभेदात् ॥ ४७ ॥

प्रत्यृत्विजः शतः शतं देयम्। कुत एतत्। ऋत्विग्भेदात् ॥ ४७ ॥

प्रतिविभागो वा कर्मप्राधान्यात् ॥ ४८ ॥

प्रतिविभागेन वा दानम्। कुत एतत्। कर्मप्राधान्यात्। कर्मप्रधाना हि दक्षिणा न सम्प्रदानप्रधाना, अतश्च प्रतिविभाग इति ॥ ४८ ॥

यथारम्भं द्वादशद्वादशाद्येभ्यः षट् द्विती-
येभ्यश्चस्त्रस्तृतीयेभ्यस्तिस्र इतरेभ्यः ॥ ४९ ॥

ऋत्विजः प्रकृत्यैव हि श्रूयन्ते। अर्धिनस्तृतीयिनः पादिन इति। यथारम्भमिति ब्रह्मादिभ्यो वक्ष्यमाणक्रमेण ॥ ४९ ॥

ब्रह्मोद्गातृहोतृभ्यः ॥ ५० ॥

अध्वर्युभ्यां च ॥ ५१ ॥

हविर्धान उपविष्टाभ्यां ददाति ॥ ५२ ॥

अग्नये त्वेति हिरण्यं प्रतिगृह्णीतः ॥ ५३ ॥

द्विवचनोपदेशात् अध्वर्युप्रतिप्रस्थातारौ ॥ ५३ ॥

रुद्राय त्वेति गां बृहस्पतये त्वेति वासो यमाय त्वेत्यश्वम् ॥ ५४ ॥

प्रतिगृह्णीत इत्यनुवर्त्तते ॥ ५४ ॥

कोदादित्यन्यत् ॥ ५५ ॥

प्रतिगृह्णीतः । अन्यच्च दक्षिणाद्रव्यव्यतिरिक्तम् । एवं हि श्रूयते अथ यदन्यद्ददाति कामेनैव तद्ददातीदं मन्यमुत्तामस्तिति तस्मात्सेति कोदादिति ॥ ५५ ॥

इच्छतो मन्त्रवचनम् ॥ ५६ ॥

प्रतिग्रहमन्त्रवचनमिच्छया ॥ ५६ ॥

प्रत्येत्य प्रस्तोतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकोन्नेतृग्रावस्तुत्सुब्रह्मण्येभ्यः ॥ ५७ ॥

हविर्धानात्प्रत्येत्य सदसि व्यवस्थितेभ्यो ददाति ॥ ५७ ॥

प्रसृप्तेभ्यश्चान्यत् ॥ ५८ ॥

प्रासर्पकेभ्यश्चान्यद्ददाति ॥ ५८ ॥

कण्वकश्यपयाचमानवर्जम् ॥ ५९ ॥

कण्वकश्यपौ गोत्रतः । याचमानः प्रार्थयिता । एतेभ्यो न देयम् ॥ ५९ ॥

ज्ञातये चाश्रोत्रियाय ॥ ६० ॥

न देयम् । श्रोत्रियाय तु ज्ञातयेऽपि दीयत एव ॥ ६० ॥

न रजतं दद्याद्बर्हिषि पुरास्य संवत्सराद्गृहे रुदन्तीति श्रुतेः ॥ ६१ ॥

बर्हिःशब्देन कर्मोपलक्ष्यते । तत्र रजतं न देयम् निन्दार्थवादात् ॥ ६१ ॥

पत्नी च ददाति ॥ ६२ ॥

दीयमानमनुजानाति । द्रव्यासाधारण्यात् ॥ ६२ ॥

सर्वेभ्यो दत्त्वा प्रतिहर्त्रे पश्चात् ॥ ६३ ॥

सर्वेभ्यः प्रतिषिद्धेभ्य इति केचित् । तन्न, प्रतिषेधवैयर्थ्यप्रसङ्गात् । तस्मात्सर्वेभ्यो येभ्य एव दानमप्रतिषिद्धमिति । पश्चात्प्रतिहर्त्रे ददाति । प्रतिहर्त्रे उत्तमाय ददातीति वचनात् ॥ ६३ ॥

इन्द्राय मरुत्वते ऽनु वाचयति ॥ ६४ ॥

अथाहेन्द्राय मरुत्वते ऽनु ब्रूहीति इति वचनात् ॥ ६४ ॥

अदानमतः ॥ ६५ ॥

अतः परमदानम् । पूर्वं तु यावदिच्छं दानम् ॥ ६५ ॥

ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोसि मरुत्वतां त्वौजस इति ॥ ६६ ॥

अनेन मन्त्रेण ॥ ६६ ॥

अध्वर्युमनु जुहोति ॥ ६७ ॥

एनं ग्रहं प्रतिप्रस्थाता ॥ ६७ ॥

सशस्त्रे स्यानुपूर्व्ययोगात् ॥ ६८ ॥

तु शब्दः पक्षव्यावृत्तौ । सशस्त्रे मरुत्वतीये ऽध्वर्युमनु हूयते

न प्रथमे, एवं मन्त्राणामानुपूर्व्ययोग कृतो भवति ॥ ६८ ॥

## तृतीयश्रुतेश्च ॥ ६९ ॥

तेभ्य एवं तृतीयं ग्रहमगृह्णीतुपयामगृहीतोसि मरुत्वतां त्वौ-जस इति । पूर्वं तु मुख्यत्वात्प्रव्यवसितं तथोक्तेन न्यायेनानुपपन्न-मिति ॥ ६९ ॥

## वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति ॥ ७० ॥

वशिना रिक्तेन पात्रेण मरुत्वतीयं गृह्णाति मरुत्वन्तमित्यनेन मन्त्रेण । तथ ऋतुपात्रेण मरुत्वतीयं गृह्णातीति वचनात् ॥ ७० ॥

## निर्हृते पात्रे होता शंसति ॥ ७१ ॥

पूर्वमरुत्वतीयस्य भक्षोत्तरकालं पात्रनिर्हरणे कृत इत्यर्थः । होता शंसतीति यदुक्तं भवति । होतु पुरस्तात्प्राङ्ङासत इति । गतस्तोत्रो ह्ययं माध्यन्दिनेन पवमानेन ॥ ७१ ॥

## जनिष्ठा उग्र इत्येतस्यां मदामोदैवेति प्रति गरः सकृत् ॥ ७२ ॥

जनिष्ठा उग्र इत्यस्यामृचि पादशः शस्यमानायां यत्र क्वचन प्रदेशे मदामोदवेति सकृत्प्रतिगरः ॥ ७२ ॥

## तत्स्थाने विकृतौ ॥ ७३ ॥

तस्याः स्थाने विकृतौ या भविष्यति तस्यामपि मदामोदैवेति सकृत्प्रतिगरः ॥ ७३ ॥

## आ निधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववन्महां इन्द्र इति ॥ ७४ ॥

महामरुत्वतीयस्य पात्रनिधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववदिति यदुक्तं भवति । शुक्रपात्रेण द्रोणकलशादन्वारम्भे वेति

च । महां इन्द्र इत्यनेन मन्त्रेण ॥ ७४ ॥

शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्य-
भिपोतारोभिपुणुतौलूखलानुद्वादयताग्नीदा-
शिरं विनय सौम्यस्य वित्तादिति ॥ ७५ ॥

पूतभृति शुक्रासेकं कृत्वा पृष्ठस्तोत्रमुपाकृत्य प्रेष्यत्यभिपो-
तारो ऽभिपुणुतेति । चत्वारः प्रैषार्थाः ॥ ७५ ॥

ऋजीषमिश्रमंशुमभिपुण्वन्ति यथाकथाचा
नुदकम् ॥ ७६ ॥

उदकस्यानाम्नानात् ॥ ७६ ॥

आधवनीये करोति ॥ ७७ ॥

तत्र एव हि पावनं भूयत इति ॥ ७७ ॥

त्रिपर्यायान्वाभिषवोपदेशात् ॥ ७८ ॥

पाशाय्य. पक्षव्यावृत्तौ । त्रिपर्यायान्वाभिषवान्करोति न यथा
कथा च । अभिपोतारो ऽभिपुणुतेति ह्यभिषवोपदेशो भवति । स च
यथा भूना इत्यत्रथा भूत एव कर्तव्य इति । उदकस्य त्वनाम्ना-
तत्वादेवाभावः ॥ ७८ ॥

मानाभिमर्शनवर्जं कृतत्वात् ॥ ७९ ॥

मानाभिमर्शने तु कृतत्वादेव न क्रियेते ॥ ७९ ॥

पूतभृतिपावनं शुक्राभावात् ॥ ८० ॥

सोमस्य पावनं पूतभृति कर्तव्यम् । न ह्यत्र शुक्रो विद्यते ।
अथैतस्मिन्निति शुक्र यत्तृतीयसवनमिति ॥ ८० ॥

स्तूयमाने कुम्भे चर्जीपस्यावधानम् ॥ ८१ ॥

चशब्दात्पूतभृति च पात्रगम् ॥ ८१ ॥

सवनीया अपयस्याः ॥ ८२ ॥

प्रातः सवन एवैषामैत्रावरुणीपयस्यावत्कृप्ता भवति नेतरयोः सवनयोरिति ॥ ८२ ॥

सौम्यश्चरुर्वारुणाश्चैककपालोऽधिकौ ॥ ८३ ॥

अधिकग्रहणात्सवनीयैः सहत्वं गम्यते । ततश्चाग्नीध्र एव कर्तव्यम् ॥ ८३ ॥

आ पात्रप्रक्षालनात्कृत्वोक्थ्यं विगृह्णाति पूर्ववदिन्द्राय त्वेति सर्वेभ्यः ॥ ८४ ॥

माहेन्द्रस्तोत्रादिपात्रप्रक्षालनान्तं कृत्वोक्थ्यं विगृह्णाति । पूर्ववदिति त्रेधम् । इन्द्रायत्वेति सर्वेभ्यः । इन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऐन्द्रं हि माध्यन्दिनं सवनमिति ॥ ८४ ॥

वसतीवरीश्चासिञ्चतीदं तृतीयं सवनं कवीनामृते न ये चमसमैरयन्त ते सौधन्वनाः स्वरानशानाः स्विष्टिं नोभि वसीयो नयन्त्विति ॥ ८५ ॥

अनेन मन्त्रेण । चशब्दात्प्रागच्छावाकविग्रहात् ॥ ८५ ॥

एकधनशेषं च ॥ ८६ ॥

चशब्दादनेनैव मन्त्रेणासिञ्चति ॥ ८६ ॥

प्रसूतान्तं भवति ॥ ८७ ॥

सर्पणस्योत्तरत्राभिधानात् ॥ ८७ ॥

एहि यजमानेत्याह हविर्धानं प्रविशन्त्यध्वर्यु-

शेषश्च महहोमः ॥ ९७ ॥

अत्र सर्पणमादित्यग्रहस्य प्राक्तृतीयसवन-
श्रुतेः ॥ ९८ ॥

अस्मिन्नवसरे सर्पणं भवति । तस्मादादित्यग्रहः प्राक्तृतीयसवनात् श्रूयते संस्थित एव माध्यन्दिने सवने पुरातृतीयसवनादेतमजुहवुरिति । सर्पणं च तृतीयसवनादि । ततोपि पुरास्य होमः । पुराशब्दश्चात्र प्राथम्यवाची माध्यन्दिनसवनस्य संस्थार्थं । संस्थित एव माध्यन्दिने सवन इति । न चान्यत्सवनान्तरमस्ति । तस्मात्पुरा तृतीयसवनात् प्रथमं तृतीयसवनादिति द्रष्टव्यम् । यच्च तृतीयादित्यसवनमिति तत्प्राक् सर्पणात् क्रियमाणस्योपचारवृत्त्या द्रष्टव्यम् । प्रयोजनं तृतीयसवनधर्मं एवास्येति ॥ ९८ ॥

आग्रयणमादायासिञ्चति पवित्रेधिपूतभृतम्॥९९॥

आग्रयणं गृहीत्वा पूतभृत उपरिष्टात् पवित्रे आसिञ्चति नेष्टा ॥ ९९ ॥

प्रतिप्रस्थाता च संस्रवौ ॥ १०० ॥

चशब्दादासिञ्चति ॥ १०० ॥

आधवनीयादुन्नेतोदञ्चनेन चमसेन वा ॥ १०१॥

आसिञ्चति । ततो धाराचतुष्टयम् ॥ १०१ ॥

तत आग्रयणं गृह्णाति ॥ १०२ ॥

स चतसृणा धाराणामाग्रयणं गृह्णातीति वचनात् ॥ १०२ ॥

उक्थ्यं चोत्तरेष्वेकया ॥ १०३ ॥

चशब्दादुक्थ्यं च गृह्णात्युत्तरेषु संस्थाविशेषेषु एकया धारया । सा चाधवनीयादुन्नेतृकर्तृका । निग्राभ्यादित्यासां धा-

पूतभृत्या शिरमासिञ्चत्याशीर्मे ऊर्जमुत सु-
प्रजास्त्वमिषं दधातु द्रविणं सुवर्चसम् स-
ञ्जयन् क्षेत्राणि सहसाहमिन्द्र कृण्वानो
ऽन्यानधरान्त्सपत्नानिति ॥ १०४ ॥

दधि विनीतं यत्तदा शिरम् ॥ १०४ ॥

श्रदस्मै नर इत्येनमवेक्षते पत्नी ॥ १०५ ॥

पूतभृतम् ॥ १०५ ॥

समन्वारब्धनिष्क्रमणादि करोति माध्य-
न्दिनवत् ॥ १०६ ॥

इयांस्तु विशेषः । प्रतिप्रस्थाता ॥ १०६ ॥

पशौ संवदस्वेत्युपचयस्थाने ॥ १०७ ॥

प्रातः सवनप्रभृत्या संवादाच्छ्रुतेः ॥ १०८ ॥

श्रुतिग्रहणात्प्रतिप्रस्थात्रे प्रेष्यते । स प्रातः सवन आलभ्य आ तृ-
तीयसवनात् श्रप्यमाणा उपशेत इति ॥ १०८ ॥

शमितनुशासनप्रभृतीडान्तं कृत्वा पुरोडा-
शादि चेडाभक्षात् ॥ १०९ ॥

शामित्रानुशासन त्रिः प्रच्यावयतादित्येकम् । यथा पृच्छा-
दिति द्वितीयम् । तत्प्रथममर्थात्प्रातःसवन एव गतम् । इदं तु द्वि-
तीयशामित्रनुशासनप्रभृति द्रष्टव्यम् । शामित्रानुशासनप्रभृतिपश्विडा-
न्तं कृत्वा यथाप्रादुरोडाशादि करोति आ इडाभक्षात् ॥ १०९ ॥

अत्रविशेषः—

चमसैरेव ॥ ११० ॥

यजमानप्रतिप्रस्थात्रग्नीदुन्नेतारः ॥ ८८ ॥

वचनसामर्थ्यात्। ते सम्प्राप्यन्ते ऽन्तर्युश्च यजमानश्चेत्येवमादि ८८ ॥

पत्नी चापरेण ॥ ८९ ॥

द्वारेण। चशब्दात्प्रविशति ॥ ८९ ॥

अपिहितद्वार आदित्यपात्रमादाय संस्रवांश्चोपरिपूतभृतस्तत आदित्यग्रहं गृह्णाति संस्रवेभ्यः कदा चनेति ॥ ९० ॥

अपिहितद्वारे हविर्धाने आदित्यपात्रं गृहीत्वा संस्रवांश्च आदित्यस्योदयामासिक्ता। उपरि पूतभृता। संस्रवेभ्य आदित्यग्रहं गृह्णाति कदा चनेत्यनेन मन्त्रेण। अपगृह्य पुनः कदा चनेति द्वितीयग्रहणम् ॥ ९० ॥

दध्ना श्रीणात्येनं पश्चिमेन्ते मध्ये वा यज्ञो देवानामिति ॥ ९१ ॥

एनं आदित्यग्रहं दध्ना श्रीणाति मध्ये पश्चिमे प्रान्ते यज्ञो देवानामित्यनेन मन्त्रेण ॥ ९१ ॥

उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति॥९२॥

उपांशुसवनेन मिश्रयति ग्रहं विवस्वन्नादित्येति ॥ ९२ ॥

उपांशुसवनमुन्नेत्रे प्रयच्छत्यासृजग्राव्ण इति चाह ॥ ९३ ॥

चशब्दात्प्रयच्छनायज माप्या इत्याह ॥ ९३ ॥

आधवनीये चमसे वा सोमवति ग्राव्णो-
वधाय स्थाने निदधाति ॥ १४ ॥

तामाधवनीये वा सृजति चमसे वा राजानमुन्नीयेति वचना-
त् । तत्स्थानं चाधिषवणयोरुपरि ॥ १४ ॥

अपावृतद्वारे निष्कामतो ग्रहमपिधाय पाणि-
ना स्थाल्या वा ॥ १५ ॥

अर्थप्राप्तत्वादपावरणमवाच्यमिति चेत् । वाच्यं च द्वयोरपि
यथा स्यात् । अथ प्राप्त्या ह्येकस्यापावरणं निष्क्रामत इति वचनो
पदर्शात् । प्रतिप्रस्थाता द्वितीयः ॥ १५ ॥

अन्वारब्ध आदित्येभ्योऽनु ब्रूहीत्याह
प्रैषानुवाचनयोरन्यतरस्मिन्नाह प्रियेभ्यः
प्रियधामभ्यः प्रियव्रतेभ्यो मह स्वसरस्य
पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति ॥ १६ ॥

अथाहादित्येभ्योऽनु ब्रूहीत्यत्र सम्पदयेद्यदि कामयेताभ्यत्वे-
न सम्पदयेदादित्येभ्य प्रेष्येत्येतन्मात्रं । अत्र कचित् ब्रूहीति प्रेष्येति
च क्रियापदयोरनन्तरमेव विशेषणपदोच्चारणं कुर्वन्ति । एवमेव
हि ब्राह्मणपाठ आदित्येभ्य प्रेष्यति प्रियेभ्य. प्रियधामभ्य इति ।
नैतदेवमिति सम्प्रदाय । येन प्रियेभ्यः प्रियधामभ्य. प्रियव्रतेभ्य
इत्येवमादीनि दैवताविशेषणानि । विशिष्टदेवतापदोत्तरकालं चानु
ब्रूहि प्रेष्येति च युक्तम् । इन्द्राय मरुत्वतेऽनु ब्रूहीति यथा, यथा च
देवाय सवित्रेऽनु ब्रूहीति । तस्मादुत्तरकालीनमेव क्रियापदमिति ।
यस्तु ब्राह्मणपाठ स विशेषेण पदविधानार्थो न क्रमार्थ. ॥ १६ ॥

हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ ॥ १७ ॥

ग्रहशेषं स्थालीशेषं च । अत एव स्थालीत स्र शेषग्रहणं स-

अतिदेशसूत्रेण पुरोडाशादि सर्वं प्राप्तम् । तत्र शुक्रामन्थिप्रचारनिवृत्त्यर्थं चमसैरेवेत्येवकारकरणम् ॥ ११० ॥

होतृचमसं गृहीत्वाश्राव्याह तृतीयस्य सवनस्य ऋभुमतो विभुवतो वाजमतो बृहस्पतिमतो विश्वदेव्यावतस्तीव्राँ३ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येत्याशीर्वत इति शुक्रस्थाने ॥ १११ ॥

यत्र शुक्रस्याभ्युन्नयध्वमिति तत्राशीर्वतोऽभ्युन्नयध्वमिति प्रयोग ॥ १११ ॥

प्रागिडाभक्षाद्धविर्धाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृतिप्रागवघ्राणात् ॥ ११२ ॥

इडाभक्षात् पूर्वं हविर्धाने यथास्वं चमसेषु पुरोडाशमात्रा उपक्षिपन्ति उदकवर्जं पिण्डपितृयज्ञवत् प्रागवघ्राणात् ॥ ११२ ॥

पितृशब्दस्य सम्बन्धिशब्दत्वात् स्वपितृभ्यो दानप्राप्तौ इदमाह—

यजमानपितृभ्यो वा तस्य फलाधिकारात् ॥ ११३ ॥

वाशब्दः पक्षव्यावृत्तौ । यजमानपितृभ्य एव दद्युर्नर्त्विग्भ्यः । तदीय एव द्रव्यमत्र त्यज्यते यागावशिष्टं अतस्तत्पितृभ्य एव प्राप्नोति । यतो चरित्विजो चमसा न विद्यन्ते । यथा तत्रचमसेषु कुर्युर्यथा नेष्टृचमसे ऽप्ययंपा[1] इति ॥ ११३ ॥

भक्षयित्वेडामुपाংश्वन्तर्यामपात्रयोरन्यतरेण

---

१ अप्ययंपचमसादपर्यंप इत्यर्थः ।

सावित्रग्रहणं वाममद्येति काले पात्नीव-
तमितरेण ॥ ११४ ॥

एवमेव हि श्रूयते । पात्नीवतं प्रकृत्य यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपांशुपात्रेणैतमिति ॥ ११४ ॥

देवाय सवित्रेऽनुवाचयति ॥ ११५ ॥

अथाह देवाय सवित्रेऽनुब्रूहीति वचनात् ॥ ११५ ॥

अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतो-
सि सुशर्मासीति ॥ ११६ ॥

अभक्षितेनेति । तेनैव पात्रेण भक्षश्चात्र न भवति अभक्षितेनेति तत्प्रतिषेधात् ॥ ११६ ॥

होताशंसति ॥ ११७ ॥

किमर्थमिदमुच्यते होतुः पुरस्तात्प्राङ्गुड्डास्त इति यदुक्तं भवति गतस्तोत्रोपमिति च ज्ञापनाय ॥ ११७ ॥

एकया च दशभिश्चेति शस्यमाने द्विदेव-
त्यानि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति॥११८॥

एकया च दशभिश्चेत्यस्मिन्मन्त्रवाक्ये शस्यमाने द्विदेवत्यपात्राणि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति ॥ ११८ ॥

प्रधाता यज्ञैरित्येतासु मदामोदैवेति त्रिः
प्रतिगरः ॥ ११९ ॥

प्रधाता यज्ञैरित्येतासु यत्र क्वचन प्रदेशे शस्यमानासु मदामोदैवेत्यव्यवहितः त्रिः प्रतिगरो भवति । अव्यवहिते संख्या प्रवर्तते ॥ ११९ ॥

१स्वादुष्किलीयासु चेच्छन् ॥ १२० ॥

त्रिः प्रतिगृणाति ॥ १२० ॥

आ पात्रप्रक्षालनात्कृत्वा सौम्येन चरति ॥ १२१ ॥

महावैश्वदेवस्य आ पात्रप्रक्षालनान्तं कृत्वा सौम्येन चरुणा प्रचरति ॥ १२१ ॥

आज्येनोभयतः परियजति ॥ १२२ ॥

अधस्ताच्चोपरिष्टाच्च ॥ १२२ ॥

अन्यतरतो वा ॥ १२३ ॥

चेति विकल्पः ॥ १२३ ॥

घृतस्य यजेत्याह घृतशब्द उपांशु ॥ १२४ ॥

वचनादुपांशुद्रव्योच्चारणम् मन्त्रलिङ्गाच्चाग्नेर्देवतात्वम् घृताहवनो घृतपृष्ठो अग्निरिति । तस्य चोपांशुयाजविध्यन्तेनोपांशुत्वम् ॥ १२४ ॥

सौम्यस्य यजेति सौम्येन चरन् ॥ १२५ ॥

वचनाद्द्रव्योच्चारणम् । देवतापदोच्चारणं तु चोदकेनैव । उपरिष्टादपि च वैष्णवो घृतयागः । मन्त्रलिङ्गादेवोरु विष्णो विक्रमस्वेति । अन्यतरश्चेति घृतयागो मन्त्रलिङ्गादेवात्र वैष्णवो भवति ॥ १२५ ॥

यावदुक्तं सौम्यस्य पुनर्ग्रहणात् ॥ १२६ ॥

सौम्यचरोर्यावदुक्तं भवति । शेषकार्याण्यपि न प्रवर्तन्ते । पुनर्ग्रहणे हि भवति । स आज्यस्योपस्तीर्य द्विश्चरोरवदायथोपरिष्टादाज्यस्याभिघार्याश्राव्याह सौम्यस्य यजेति वषट्कृते जुहोतीति । एवं च व्यूहने वचनात् सोमस्योच्चारणम् ॥ १२६ ॥

---

१ आग्निमारुतशस्त्रमध्ये स्वादुष्किलीयानामिकाः काश्चन ऋचः सन्तीत्यर्थः ।

आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति चतुर्गृहीतं प्रचरण्याधिष्ण्येषु जुहोति यथान्युप्तं प्रभाग्रयञ्छलाकाप्रदीप्य प्रदीप्य विभूरसीति प्रतिमन्त्रम् ॥ १२७ ॥

चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहुयात् येन क्रमेण न्युप्ताः प्रभावयं जुहोति न पुनर्गृह्णाति शलाकाप्रदीप्य धिष्ण्येषु जुहोति विभूरसीत्येभिर्मन्त्रैः प्रतिमन्त्रम् । त्रिभिः शलाकाभिः शलाको भवेति । ते च प्रतिधिष्ण्यं प्रयत्नयो भवन्ति ॥ १२७ ॥

आग्नीध्रीये पुनः पश्चादिच्छन् ॥ १२८ ॥

जुहोति । तत्र तूष्णीं काण्वशाखापाठात् ॥ १२८ ॥

उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥ १२९ ॥

उपयामगृहीतोसि बृहस्पतिसुतस्येत्यनेन मन्त्रेण प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥ १२९ ॥

प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति ॥ १३० ॥

अथ यः प्रचरण्याः स्रुग्वयः परिशिष्टो भवति तेनैनः श्रीणातीति ॥ १३० ॥

अग्नीत्पात्नीवतस्य यजेत्याह ॥ १३१ ॥

एतावानेव प्रैष इति सम्प्रदायः ॥ १३१ ॥

अग्ना३इ पत्नीवन्नित्युत्तरार्धे जुहोति ॥ १३२ ॥

आहवनीयस्य ॥ १३२ ॥

प्रेष्यति चाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नी-

मुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिच इति ॥ १३३ ॥

प्रेष्यति चेति चशब्दादाग्नीध्रे भक्षमाहृत्योपहवमत्युपहवौ करोति ततः प्रेष्यति । एवं हि श्रूयते आहरध्वर्युरग्नीध्रे भक्षं स आहाध्वर्य उपमाह्वयस्वेति तन्न मत्युपह्वयेत को हि स्तस्य निरष्टस्य मत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्मै वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेताथ सम्प्रेष्यति तं होतुश्चमसमनून्नयेति। होतृचमसग्रहणं सर्वचमसोपलक्षणार्थम् । सोमं मातिरीरिच इत्यतिरेकप्रतिषेधार्थम् ॥ १३३ ॥

प्रभावयेत्युक्थ्यादिषु ॥ १३४ ॥

प्रैषः तत्र हि सोमेनार्थः ॥ १३४ ॥

आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम् ॥ १३५ ॥

आग्नीध्रे पात्नीवतस्य भक्षणम् । तत्र स्थितेन हि वषट्कारः कृतः उपहवप्रत्युपहवौ च ॥ १३५ ॥

सपात्र आसीदति नेष्टुरुपस्थम् ॥ १३६ ॥

सह पात्रेणाग्नीन्नेष्टुरुपस्थमासीदति स विश्वदेवैतत्पात्रमग्नीधे पुरुपस्थमासीदेति वचनात् ॥ १३६ ॥

अत्र वा भक्षणं पात्रहरणसामर्थ्यात् ॥ १३७ ॥

अत्र वा भक्षणम्भवति यत्र नेष्टोपविष्टः । कुत एतत् । पात्रहरणं ह्येवमर्थवद्भवति । इतरथा व्यर्थता स्यात् । न च दृष्टेसत्यदृष्टार्थता युक्ता ॥ १३७ ॥

अग्नीत्प्रक्षाल्य पात्रं खरे करोति ॥ १३८ ॥

पात्नीवतसम्बन्धि ॥ १३८ ॥

यज्ञायज्ञियं स्तोत्रमुपाकरोति होतृचमस-
मुपस्पृश्य ॥ १३९ ॥

होतृचमसोपस्पर्शनं वाक्यान्तरात् ॥ १३९ ॥

प्रोर्णुते चेच्छन्नुद्गातृवत् ॥ १४० ॥

लोकवत्सकर्णकं उद्गातृवदकर्णकम् ॥ १४० ॥

पत्नीं सदः प्रवेश्यापरेणोत्तरत उपविष्टा-
मुद्गाता समीक्षयति प्रजापतिर्वृषासीति ॥ १४१॥

नेष्टा पत्नीं सदः प्रवेश्य अपरेण द्वारेण उद्गातॄणामुत्तरत उपविष्टामुद्गात्रा सह समीक्षणं कारयति । कारिते चाध्येषणा। पत्युद्गातारमीक्षस्वेति । प्रजापतिर्वृषासीत्यनेन मन्त्रेण समीक्षते पत्नी॥ १४१॥

पान्नेजनीभिरभिषिञ्चति विवृत्य दक्षिणो-
रुम् ॥ १४२ ॥

विपरावृत्य दक्षिणमूरुं पान्नेजनीभिरभिषिञ्चति पत्नी । अत्र छान्दोग्ये वचनं प्रतिहिङ्कारमीक्षणम् प्रतिनिधन चोर्वासेकः ॥१४२॥

उद्गातानुज्ञाता गच्छति ईक्षिता वा त्रिः ॥१४३॥

पत्नी । त्रिः उद्गात्रीक्षणोर्वासेकौ भवतः ॥ १४३ ॥

एवान इन्द्रो मघवेति शस्यमाने ध्रुवं हो-
तृचमसेऽवनयति ध्रुवं ध्रुवेणेति ॥ १४४॥

एवान इत्यस्मिन्मन्त्रवाक्ये शस्यमाने ध्रुवं होतृचमसेऽवनयति ध्रुव ध्रुवेणेत्यनेन मन्त्रेण ॥ १४४ ॥

अवनयामि-स्थाने गृह्णामीति वा ॥ १४५ ॥

अवनयामीत्यस्य स्थाने गृह्णामीति वाक्यशेषः ॥ १४५ ॥

वैश्वानरं यजमानस्य गृहीतश्चेत् ॥ १४६ ॥

गृहीतश्चेद्वैश्वानरो यजमानचमसेऽवनयेत् ॥ १४६ ॥

पात्रप्रक्षालनान्तेऽनुयाजाः समिदादि ॥ १४७ ॥

आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति वचनात् । समिदादी-
नि च समिद्ग्रहणस्य यदादी तदादि उल्मुकसमासादीत्यर्थः। अनुया-
जार्थोल्मुकसमास इति ॥ १४७ ॥

उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिन्द्रा-

बृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति ॥ १४८ ॥

उत्तरेषु संस्थाविशेषेषूक्थ्यविग्रहणमिन्द्रावरुणाभ्यामित्येवमा-
दिभिर्मन्त्रैः ॥ १४८ ॥

स्तुतशस्त्रे अधिके षोडशी चेत् ॥ १४९ ॥

अषोडशिन्यपि षोडशिनो ग्रहणं विहितम् अप्याग्निष्टोमे ग्र-
हीतव्य अप्युक्थ्ये ग्रहीतव्य इति । अग्निष्टोमसंस्था च यज्ञायज्ञिया-
ग्निमारुतान्ता उक्थसंस्था चोक्थ्यविग्रहणान्ता । तदन्ते षोडशियागो
विकल्पेन । तत्र च स्तोत्रशस्त्रमात्रमेवाधिकं भवति । न यथा 'षोड-
शिसंस्थे सुवर्णहिरण्यकृष्णोश्व इत्येवमादि । एवमेव शाखान्तरेऽस्य वि-
धानमिति ॥ १४९ ॥

तृतीयसवने प्रसवः ॥ १५० ॥

अप्रसव इति केचित् । तदनुपपन्नं प्राप्तिपूर्वकत्वात्प्रतिषेध-
स्य । न चास्य प्राप्तिरुक्ता । तस्मात्तृतीयसवने ऽत्र प्रसव इति सूत्रं
व्याख्येयम् । विहितं च शाखान्तरेषु । सवनीये सर्पन्तीति । यत्स-
वनान्ते सर्पणं तदत्र भवतीति सूत्रार्थः ॥ १५० ॥

स्रुग्व्यूहनमग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रु-

द्रवत आदित्यवत ऋभुमतो विभुमतो वा-

जवतो बृहस्पतिमतो विश्वदेव्यावतः सोमस्योज्जितिमित्यग्निर्वनस्पतिरिन्द्रो वसुमान्रुद्रवानादित्यवानृभुमान्विभुमान्वाजवान् बृहस्पतिमान्विश्वदेव्यावान्त्सोमस्तमपनुदन्त्विति ॥ १५१ ॥

शाखान्तरोपदेशात् ॥ १५१ ॥

पशुदेवतावनस्पतिभ्यां वा सोमोपदेशादितरासाम् ॥ १५२ ॥

पशुदेवतावनस्पतिभ्यामेव वा स्रुग्व्यूहनमभिसम्बध्यते न वसुमदादिदेवताभिः । कुत एतत् । सोमोपदेशादितरासाम् । सोमे हि वा उपदिश्यते इन्द्रायत्वा वसुमते रुद्रवत इन्द्राय त्वादित्यवत इत्येवमादिनेति ॥ १५२ ॥

एवं प्राप्त उच्यते—

सर्वा वा सवनीयसौम्यभावात् ॥ १५३ ॥

सर्वा वा वसुमदाद्या अपि व्यूहनेनाभिसम्बध्यन्ते । कुत एतत् । सवनीयेषु सौम्ये च भावात्तासाम् । कथं कृत्वा । सर्वत्र हीन्द्रोऽभीज्यते । सवनीयान्प्रकृत्य हि श्रूयते सर्वे ऐन्द्रा भवन्तीति । ननु च गुणभेदोऽत्र । किं क्रियतां वचनमत्र । निर्वापे हि हरिवदादिविशिष्ट इन्द्रो यागेच निर्गुणो व्यूहने च वसुमदादिविशिष्ट इति वचनेन हि विधानम् । नास्ति वचनस्यातिभारस्तस्मात्साधूक्तं सर्वा वा सवनीयसौम्यभावादिति । सौम्ये निःसन्दिग्ध एव सद्भावः ॥ १५३ ॥

विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोसि हरिरसीति ॥ १५४ ॥

चोद्दकपरस्परयापरिप्राप्त स्रुग्विमोकं कृत्वा द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोसि हरिरसीत्यनेन मन्त्रेण ॥ १५४ ॥

धानाश्रावयति हर्योर्धाना इति ॥ १५५ ॥

चशब्दादनन्तरम् । श्रयणं चैतत् । शाखान्तरश्रवणात् । धानाभिर्हारियोजनं श्रीणानीति । प्रयोजनं श्रयणधर्मोत्र भवति ॥१५५॥

उन्नेतानुवाचयति मूर्धनि कृत्वा धाना सोमेभ्यो ऽनुब्रूहीति ॥ १५६ ॥

एतावदेव प्रैष इति सम्प्रदायः । इन्द्राय धाना सोमेभ्य इत्यपरे । तत्पुनर्युक्तमयुक्त वेति विचारणीयम् । न ह्यत्र चोदकप्राप्तिरस्ति । अनुवाचनप्रैषो यथा देवतमित्येतद्दर्शपूर्णमासविषयम् । अतोत्र दुर्लभा प्राप्तिर्देवतापदोच्चारणस्य । एवं च कृत्वेन्द्राय मघवतेनुब्रूहीति वचनात् देवाय सवित्रेनुवाचयतीति वचनाद्देवता पदोच्चारणम् । आश्राव्याहर्दधिघर्मस्य यजेति तत्र चोदकपरिप्राप्ता देवतापदोच्चारणम् । इह पुनर्न तथा धर्म इत्येति सम्प्रदायः ॥ १५६ ॥

आश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति ॥१५७॥

उन्नेतैवाभिप्रवृत्तत्वात्तथा च लिङ्गाद्वद्वौ चोन्नेतारौ कुर्वते तयोर्यतरो नाश्रावयेदित्युन्नेतुराश्रवणं दर्शयति ॥ १५७ ॥

भक्षान् हरेदिच्छन् ॥ १५८ ॥

इच्छन्सर्वहुतं करोति धानावर्जम् ॥ १५८ ॥

उत्तरवेदौ वा निधाय विलाभम् ॥ १५९ ॥

उत्तर वेदौ वा निधाय द्रोणकलशं विलाश्यधानाः । वा सदसि विलाभः ॥ १५९ ॥

यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥ १६० ॥

धानाः । उत्तरवेदावपि विलाभे सदस्येव प्राणभक्षः । तत्र

हि सर्वभक्षाणां विधानमुद्दरेणावति .सस्स्वसमानसदति भक्षयन्तीति । धानाभक्षणं सर्वेषाम् । अथैतस्य द्वारयोजनस्य सर्वं एव लिप्सन्त इति ॥ १६० ॥

शाकलाधानं देवकृतस्येति प्रतिमन्त्रम् ॥ १६१॥

तच सर्वेषां सहकारिणामपि विधानसामर्थ्यात् ॥ १६१ ॥

अपरेण चात्वालं यथास्वं चमसान्पूर्णपात्रान्नवमृशन्ति हरितकुशानवधाय संवर्चसेति ॥ १६२ ॥

चात्वालमपरेण चमसान्पूर्णपात्रान्कृत्वा हरितकुशानवधाय यथास्वमवमृशन्ति संवर्चसेति । बहुवचनोपदेशात् अधिकाराच्च सहकारिवचनाच्च सर्वर्त्विजः । येषामपि चमसा न सन्ति तेऽपि यथावयवा सन्निहितानां चमसानवमृशन्ति ॥ १६२ ॥

मुखान्यालभन्ते दधिक्राव्ण इत्याग्नीध्रे दधिभक्षणम् ॥ १६३ ॥

सर्वे कुर्युरधिकारात् सहकारित्वयपाच्च ॥ १६३ ॥

पत्नीसंयाजाः पशुवत् ॥ १६४ ॥

पशुवदिति किमर्थमुच्यते । यद्यपो ह्यत्र सवनीयाः पुरोडाशाः समानतन्त्राः । भूयसां सधर्मत्वन्यायात्तद्वाया मा भूयन्निति । यथेयमस्तु तथेति । नैतदेवम् । पशुतन्त्रं ह्यत्र महत् लघु पौरोडाशिकम् । तेन बृहद्योपकटकन्यायेन पाशुकतन्त्राभ्युपगम एव युक्तरूप इति साधूच्यते पशुवदिति ॥ १६४ ॥

समिन्द्र ण इति नव समिष्टयजूंषि जुहोति प्रतिमन्त्रम् ॥ १६५ ॥

साभ्यासमिदमेकं कर्मेत्युक्तमेव । मन्त्रसंख्या तु पाशुकी । त-

त्वन्त्राद्युपगमात् । तथा च पशुगणे सवनीयपशुविकारत्वात्प्रयैष भवन्ति ॥ १६५ ॥

आसन्द्युदुम्बर्यौ चात्वाल्ॱ हरति
सोमालिसं च ॥ १६६ ॥

हरन्ति ॥ १६६ ॥

कृष्णविषाणा मेखले चात्वाले प्रास्यति मा
हिंर्भूरिति ॥ १६७ ॥

अहिपृदाकुशब्दयोरुपमानार्थत्वात् बहुत्वेप्यनूहः ॥ १६७ ॥

प्रतिप्रस्थाता च शङ्कुयोक्त्रे तूष्णीम् ॥ १६८ ॥

चशब्दाच्चात्वाले प्रास्यति ॥ १६८ ॥

उरुॱहीति वाचयति यजमानम् ॥ १६९ ॥

साम प्रेष्यति गाय ब्रूहीति वा ॥ १७० ॥

वेति विकल्प ॥ १७० ॥

व्यध्वोदकान्तयोश्च ॥ १७१ ॥

सामप्रेष्यति । व्यध्वशब्देनार्धपथ उच्यते ॥ १७१ ॥

सर्वे निधनमुपयन्ति ॥ १७२ ॥

सर्वशब्दो निरवग्रह सर्वर्त्विग्विषय ॥ १७२ ॥

आहृतमादायावभृथ गच्छन्ति स्यन्दमाना-
नाॱ स्थावराः ॥ १७३ ॥

यच्चात्वालमाहृतमासन्द्यौदुम्बर्यादि तदादायावभृथं कर्तुं यान्ति स्यन्दमानानामपां या स्थावरा आप । स य स्यन्दमानानाॱ स्थावरो ह्रद स्यादिति वचनात् ॥ १७३ ॥

तदभावेऽन्याः ॥ १७४ ॥

यधु तान्न विन्देदपि या एव काश्चापोऽभ्यवेयादिति ॥ १७४ ॥

नमो वरुणायेति वाचयत्यपोऽवक्रमयन् ॥१७५॥

नमो वरुणायेत्यमुं मन्त्रं वाचयति । बाहुगृहीतं यजमानमपोऽवतारयन् ॥ १७५ ॥

प्रास्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति ॥ १७६ ॥

समिधमप्सु प्रास्य चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमित्यनेन मन्त्रेण ॥ १७६ ॥

अपरेण प्रयाजान्बर्हिर्वर्जम् ॥ १७७ ॥

अपरेण चतुर्गृहीतेन बर्हिर्वर्जं प्रयाजान्करोति । अपरग्रहणं पूर्वं चतुर्गृहीतहोमस्यावसरप्रदर्शनार्थम् । न हि तस्यावसरोऽभिहित इति । किं च समानयनव्युदासार्थं च ॥ १७७ ॥

अप्सु जुहोति ॥ १७८ ॥

आहवनीयकार्ये विधानम् । अतश्च तद्धर्मसम्बन्धो भवति ॥ १७८ ॥

एककपालेनावदायं चरतीति ॥ १७९ ॥

वारुणैककपालेनावभृथमभ्यवयन्तीति वचनात् । स च पूर्वमेवाभिहितः सौम्यश्चरुर्वारुणश्चैककपालोऽधिकाविति । एककपालानां हि सर्वहुतत्वमुक्तमाचार्येण तेनोच्यतेऽवदायावदाय चरतीति ॥ १७९ ॥

ऋजीषस्येच्छन्नवधेदग्नीवरुणाभ्याꣳ सर्वहुतꣳ

शेषम् ॥ १८० ॥

करोति ॥ १८० ॥

ऋजीषस्य च सकृत्पर्वं चेत् ॥ १८१ ॥

स यद्यपुनर्जीषस्य द्विरवद्येदत्र सकृदिति वचनात् ॥१८१॥

वश एतत्कुर्यात् ॥ १८२ ॥

वशशब्दो हीच्छावचनः। इच्छयैतत्पशाहुतिकं करोति । इ-च्छयान्यत्प्रकारान्तरम् ॥ १८२ ॥

तथाह—

यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ ॥ १८३॥

इच्छयैतद्दशाहुतिकं करोति यजमानोक्ताविति । सहकारि-वचनाद्यावा यजमानो ब्रूयादिति ॥ १८३ ॥

अन्यतरत्कृत्वा समुद्रे त इत्यृजीषकुम्भं

प्लावयति ॥ १८४ ॥

अत्र पक्षद्वयस्याप्यन्यतरदेकं कर्तव्यम् । नान्ये पदार्थाः । येन प्रयाजाज्यभागानुयाजानामेव पुनर्विधानम् । अतो यावदुक्तास्य । प्रतिपत्तयस्तु क्रियन्ते । समुद्रे त इत्यनेन मन्त्रेण ऋजीषकुम्भं प्लावयत्युदके ॥ १८४ ॥

देवीराप इति विसृज्योपतिष्ठते ॥ १८५ ॥

विसृज्यर्जीषकुम्भमुपतिष्ठते देवीराप इति ॥ १८५ ॥

अवभृथेति मज्जयति ॥ १८६ ॥

ऋजीषकुम्भं प्लावयतीत्यर्थः ॥ १८६ ॥

कृष्णाजिनान्तं च मा मैत्र्यं ज्यैष्ठ्यं श्रैष्ठ्यं

व्यौपीरिति ॥ १८७ ॥

चशब्दान्मन्त्रयति कृष्णाजिनान्तं च प्रकृतत्वादासनकृष्णाजिनम् ॥ १८७ ॥

पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्या समिदाधानात्॥ १८८ ॥

एनदिति कृष्णाजिनम् । वारुणप्रघासिकावभृथवत्स्नानं कृत्वा समिदाधानात्करोति । भदीयोपदेशस्यातिदेशोयम् । न हि तद्धर्मप्रवृत्तिरत्रेति । इत एव हि तत्र धर्माः प्रवृत्ता· ॥ १८८ ॥

सोमलिप्तं प्रास्यति ॥ १८९ ॥

चरितार्थत्वात्प्रतिपत्तिः ॥ १८९ ॥

अदानं पूर्वयोः ॥ १९० ॥

वाससोः । अतिदेशापवादोयम् ॥ १९० ॥

उद्वयमित्युन्नेत्रोन्नीता आमहीयां जपन्तो गच्छन्त्यपाम सोमममृता अभूमागन्मज्योतिरविदाम देवान् किं नूनमस्मान्कृणवदरातिः किमुधूर्तिरमृत मर्त्यस्येति ॥ १९१ ॥

जपश्च सर्वेषां बहुवचनोपदेशात् । सहकारिणामपि विधानसामर्थ्यात् । अस्मिश्चावसरे व्रतग्रहणं भवत्युन्मुक्तदीक्षत्वात् । ततो यर्हिहोमादि ॥ १९१ ॥

शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा स्रुवाहुतिं जुहोति मैद्रयं ज्यैष्ठ्य॒ श्रैष्ठ्यमग्निर्दधातु स्वाहेति ॥ १९२ ॥

स्रुवाहुतिं जुहोति अध्वर्युः आहवनीये मैत्रं ज्यैष्ठ्यः श्रैष्ठ्यमग्निर्दधातु स्वाहेत्यनेन मन्त्रेण ॥ १९२ ॥

कृष्णाजिनं निधायोदयनीयाप्रायणीयावत् ॥१९३॥

यतिः प्रायणीयधर्मातिदेशार्थः । तथा चाह ॥ १९३ ॥

पथ्यास्वस्तिश्च चतुर्थीति ॥ १९४ ॥

शालामुखीये उदयनीयया चरन्तीति च शाखान्तराच्छालाद्वार्ये कर्त्तव्या ॥ १९४ ॥

पात्रप्रोक्षणाद्याज्यासादनात्सवनीयवत्परिव्ययणादि मैत्रावरुणीवशानूबन्ध्या ॥ १९५ ॥

पात्रप्रोक्षणग्रहणं शालाद्वार्ये श्रपणनियमव्युदासार्थम् । सवनीये हि पात्रासादनविधानेन शालाद्वार्ये श्रपणनियमो ज्ञापितः । तद्वदत्रापि मा भूदिति पात्रप्रोक्षणादीत्युक्तम् । सा च सवनीयवदिति यदुक्तं भवति सकृत्प्रोक्षित इध्ममाग्नीध्र उत्पवनं एकवृत्स्तरणमिति । परिव्ययणस्य पश्वङ्गत्वेन विधानात्तदपवर्गे चापवर्ग्यमाशङ्क्य परिव्ययणादीत्युक्तम् । मैत्रावरुणदेवत्या वशा रिक्ता सा च गौर्भवति । गौरनुबन्ध्येति वचनात् ॥ १९५ ॥

स्वर्यैवगूहनादि वा कृतत्वात् ॥ १९६ ॥

स्वरगैवगूहनादि वा कर्त्तव्यं न परिव्ययणादीति । कुत एतत् । कृतत्वात्परिव्ययणसंस्कारस्य । यूपसंस्कारो ह्ययम् । स च यूपः सर्वपश्वर्थः । संस्कारोपि तद्वदेवेति । अत एव स्वर्गैवगूहनादीत्युत्तरपदप्रधानो बहुव्रीहिः । स्वर्यैवगूहनं यस्यादौ तदादि । तच्चोपाकरणम् । एवं सत्युपाकरणमन्थनयोरत्र नियम इति ॥ १९६ ॥

वशाभाव उक्षा ॥ १९७ ॥

यदि वशां न विन्देदप्युक्षवश एव स्यादिति ॥ १९७ ॥

उभयाभावे पयस्या ॥ १९८ ॥

कर्त्तव्या ॥ १९८ ॥

असाद्यैतामाज्यभागप्रभृतीडान्तामेके ॥ १९९ ॥

एके आदितो आज्यभागप्रभृतीडान्ताम् । विकल्प एवायम् ॥१९९॥

उदवसानीयाग्नेयः पञ्चकपालः समारूढनिर्मथिते ॥ २०० ॥

उदवसानीयेष्टिरुच्यते । तत्र चाग्नेयः पञ्चकपालो भवति । समारोपश्च प्राजहिते कर्त्तव्यः । गार्हपत्यो हि स इति ॥ २०० ॥

हिरण्यं दक्षिणाऽनड्वान्वा ॥ २०१ ॥

वेति विकल्पः ॥ २०१ ॥

पशुवद्धाहुतिः ॥ २०२ ॥

अथो चतुर्गृहीतमेवाज्यं गृहीत्वेति श्रुतेः ॥ २०२ ॥

तदन्ते सायमाहुतिः ॥ २०३ ॥

सोमाङ्गं सन्निधिविरोधाभ्याम् ॥ २०४ ॥

सा च सोमाङ्गं भवति । सोमसन्निधौ विधानात् । अथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोतीति । अपि च नित्यत्वे सति कालो विरुध्यते ॥ २०४ ॥

नित्या वा प्रातराहुति श्रुतेः ॥ २०५ ॥

अथ वा नित्यैषा न सोमाङ्गम् । कुत एतत् । प्रातराहुतिश्रवणात् । काल एव प्रातराहुतिमिति । सोमयागनिमित्तः सायमाहुतेरपकर्ष इति ॥ २०५ ॥

नियतक्रियातः ॥ २०६ ॥

अतः परं नित्यानां क्रिया न प्रागतः । उन्मुक्तदीक्षत्वेऽप्यवभृथादूर्ध्वमिति ॥ २०६ ॥

एष प्रथमः सोमः ॥ २०७ ॥

एष वा व प्रथमो यज्ञानां यज्ज्योतिष्टोम इति। सर्वविकाराणामयं प्रथमः सोमः ॥ २०७ ॥

आदीप्य प्रविशन्ति ॥ २०८ ॥

आदीपनं च वर्हिषः। तद्धि प्रकृत्य श्रूयते यदनुप्राप्य प्रयायात् ग्रीवायसूमेनं यजमानं स्वर्गल्लोकमभिप्रेरयतीति निन्दार्थवादोयमनुपोपस्य ॥ २०८ ॥

षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोतिरात्रोप्तोर्यामः ॥ २०९ ॥

अत्रात्यग्निष्टोमवाजपेयाप्तोर्यामाणां ज्योतिष्टोमप्राथम्यविधानेनोत्तरकालता सिद्धा। उक्थ्यषोडश्यतिरात्राणामप्याचार्येणैव ज्ञापितोत्तरकालता। उक्थ्यं चोत्तरेष्वेकयेति। उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिति च। तेनात्र विकारप्रज्ञप्त्यर्थं षडुत्तर इत्युच्यते न क्रमार्थम्। षडुत्तरे षड् विकारा इत्यर्थः। उत्तरो हि विकारो भवति प्रकृत्यपेक्षया प्रकृतिश्च पूर्वेति। ननु चात्यग्निष्टोमवाजपेयाप्तोर्यामाणां ज्योतिष्टोमधर्मा एकाहग्रहणादहर्गणयोरित्यनेनैव विकारत्वं ज्ञापितम्। ज्योतिष्टोमप्रकरणसमधीतानामपि चोक्थ्यादीनामसमानविधानता। नित्यानित्यसंयोगविरोधात्। अतस्तेपि विकारा एव। तेन क्रतुविकारत्वस्याज्ञातत्वात्तस्य विकारार्थोऽयमारम्भः। षडुत्तरे षट् सप्त विकारा इति। तत्रोक्थ्यषोडश्यतिरात्राणामग्निष्टोमविकारत्वम्। अत्यग्निष्टोमस्याप्यग्निष्टोमसंशब्दनात् अग्निष्टोमविकारत्वम्। वाजपेयस्य षोडशिविकारत्वं कथं ज्ञायते। येन क्रतुपशूंस्तत्र दर्शयति। आग्नेयमग्निष्टोम आलभते अग्निर्वा अग्निष्टोमोऽग्निष्टोममेवैतेनो जयत्यैन्द्राग्नमुक्थ्यस्य आलभत ऐन्द्राग्नानि वा उक्थ्यान्युक्थ्यान्येवैतेनो जयत्यैन्द्रं षोडशिन आलभते इन्द्रो वै षोडशिनमेवैतेनो जयतीत्येवमभिधाय सारस्वतं सप्तदशाय स्तोत्रायालभते तदेतद्नतिरात्रे सति रात्रे रूप क्रियत इति षोडशिक्रतुपशूनामिह दर्शनं भवति। अतिरात्रेप्येते भवन्तीति चेत्। नानतिरात्रे सति रात्रे रूपं क्रियत इति श्रुतेः। तस्मात्षोडशिविकारो

वाजपेय इति । आप्तोर्यामेऽपि निरोह्णी येभ्यो रात्रिपर्याय उत्तम इति निरोह्णानां दर्शनं भवति । तेनातिरात्रविकारोऽप्तोर्याम इति गम्यते । षडुत्तरे षोडशिविकारा इति विकारत्वज्ञापनस्य प्रयोजनं किमिति चेत् । स्वप्रकृत्यपेक्षया क्रतुकरणं यथा स्यादिति। तेनात्यग्निष्टोमे आग्निष्टोमिकं क्रतुकरणं वाजपेये षोडशिनि आप्तोर्यामे च आतिरात्रिकं उक्थ्यादिषु तूक्तमेवेति । अत एव च सूत्रकारेण अत्यग्निष्टोमोऽग्निष्टोमानन्तरं पठितः । षोडश्यनन्तरं वाजपेयोऽतिरात्रमनन्तरमप्तोर्याम इति।तथा च धर्मसूत्रकारेण गोतमेनाप्युक्तम् अग्निष्टोमोऽत्यग्निष्टोम इत्येवमाद्यभिधाय सप्तसोमसंस्था इति । तस्मात्षडुत्तरेऽष्टसंस्था विकारा इति सूत्रार्थः । अत्यग्निष्टोमादयो विकृताभिः सप्ताभिः संस्थिता इति ॥ २०९ ॥

तेषामुक्थ्योच्छावाकभि सन्तिष्ठते हो-

तारमितरे ॥ २१० ॥

तेषां संस्थाविशेषाणां उक्थ्योच्छावाकमभि सन्तिष्ठते होतारं चेतरेऽभि सन्तिष्ठन्ते।किमर्थमिदमुच्यते । वाजपेयेहि श्रूयते षोडश्यन्ते स्तोत्रशस्त्रैरेवेति । स्तुतमनुशंसतीति यत्तच्छस्त्रं होतुर्यथा स्यादिति। तथा सोमातिरेके क्वचिदुक्तमैन्द्रावैष्णवं होता शंसतीति तथा पूर्ववच्चेनेति । क्वचिच्च नोक्तमाचार्येण यथातिरात्रार्पेषु बृहन्महाव्रतमेके यथोक्तमिति । अत्रापि स्तुतमनुशंसतीति होतु. शस्त्रं यथा स्यादिति। अनुक्तसङ्ग्रहार्थं होतारमितर इत्युक्तम् ॥ २१० ॥

वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपर्ने-

ह्यच्छन् भक्षाय क्रयणप्रभृत्यनुसोममावृता

समानमासादनं प्रागभिषवात् ॥ १११ ॥

सोमयागे कर्त्तव्ये [१]न्यग्रोधस्तिभीनुपतद्येच्छं भक्षाय इच्छं हो-

---

१ तथाच शाखान्तरं ' यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दध्यनुन्मृद्य तस्मै भक्षं प्रयच्छेन्न सोमम् ' इति । ' स्तिभिन्यो ङ्कुराः फलानि वा, इति तद्भाष्यकारः ।

माया पि । भक्षो हि हुतशेषस्यैव भवति । तस्माद्धोमायापीत्येव होमदर्शनं च भवति । यदाग्नींध्रमसालुन्नयन्त्यथैनमुन्नयन्ति यदैतां जुहोत्यथैनं कुशतरुणेनोपहत्य जुहोतीति । क्रयणप्रभृति सह सोमेन सोमाहृता समानमासादनादि कर्त्तव्यम् । सोमद्रव्यविकाराच्च प्रकृतावप्यूहः प्रवर्त्तत एव ॥ १११ ॥

चमसोन्नयनकाले वाहृत्य दध्नोन्मृध त-
च्चमसमनून्नयेत् ॥ ११२ ॥

विकल्प एवायम् । तुल्यशाखात्वात् ॥ ११२ ॥

हूयमानेषु कुशतरुणेन जुहोत्यहं
त्वदस्मीति ॥ ११३ ॥

इति कर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये
दशमो ऽध्यायः ।

# एकादशोऽध्यायः ।

---

ब्रह्मत्वमतः ॥ १ ॥

आध्वर्यवमनुविहितम् । अतः परं ब्रह्मत्वं व्याख्यायत इति ॥ १ ॥

वाग्यतः कर्मणि वर्त्तमाने ॥ २ ॥

तच्च सौमिके । पैष्टिकपाशुकेषु तूक्तमेव ॥ २ ॥

हिरण्यवत्या; हुतायां दक्षिणानुगच्छत्या-
क्रयात् ॥ ३ ॥

हिरण्यवत्यामाहुतौ हुतायां दक्षिणतो व्यवस्थितो ऽनुगच्छत्याक्रयात् ॥ ३ ॥

क्रीते प्राङ्नतीत्य पूर्वेणानः परीत्यापरेण वा
दक्षिणतो ऽनुगच्छत्यानिधानात् ॥ ४ ॥

क्रीते सोमे पदार्थतया प्राङ्गत्वाद्दक्षिणतो व्यवस्थितमनः पूर्वेणापरेण वा गत्वा अनुगच्छत्यासोमनिधानात् ॥ ४ ॥

दक्षिणाग्निं वा परेण घर्मे ॥ ५ ॥

दक्षिणाग्निमपरेण वा प्रवर्ग्ये । वा दक्षिणेनेति सम्प्रदायः । अन्ये त्वाहवनीय दक्षिणेनेति विकल्पमिच्छन्ति । दर्शपूर्णमासयोर्दृष्टत्वात् । तत्पुनर्नातीव युक्तरूपम् । न ह्यत्र दर्शपूर्णमासिकी धर्मप्रवृत्तिरपूर्वत्वात् ॥ ५ ॥

स्तम्बयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते

वेदिसहितः ॥ ६ ॥

सम्बध्यजुर्हविष्यत्यध्वर्यो आहवनीयदेशे दक्षिणेनास्ते वेदि-संलग्न॰ ॥ ६ ॥

एवं सर्वत्र प्रागग्नीषोमप्रणयनात् ॥ ७ ॥

आहवनीयदेशे दक्षिणेनास्ते । सर्वत्र ग्रहणात्पूर्वेषु स्व-पूर्वेषु च ॥ ७ ॥

कर्मणः कर्मणो वा सहितस्तत्तदेवान्वेत्य ॥ ८ ॥

दक्षिणत आस्ते । अत्र चैके तत्वादेवान्वेति बहिर्वेदावेवेच्छन्ति । अपरेत्वन्तर्वेदावपीति विप्रतिपत्तिः ॥ ८ ॥

आहवनीये प्रणीयमाने ऽप्रतिरथस्य द्वादश-ब्रुवन्नग्नौ ॥ ९ ॥

अनुगच्छति ॥ ९ ॥

सर्वत्रैके ॥ १० ॥

प्रणयनोद्देशेन विधानात् । तत्पुनरयुक्तम् । प्रणयनविशेषे विहितत्वात् । तस्मादग्नावेव ॥ १० ॥

स्तीर्णायां यथार्थमेत्य ॥ ११ ॥

आस्ते दक्षिणतः । नियमार्थमिदमुक्तम् ॥ ११ ॥

अग्नीषोमप्रणयनायोत्तरेण धिष्ण्याञ्छाला-द्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥ १२ ॥

शालाद्वार्यस्यैव ॥ १२ ॥

हुते च सोममादायाग्निमन्वेति ॥ १३ ॥

हुते च वैसर्जिते सोमं गृहीत्वा चशब्दात् शालाद्वार्यं पूर्वेणाग्निमन्वाते ॥ १३ ॥

यजमानो वा सोमं हरेत् ॥ १४ ॥

तुल्यशास्त्रत्वात् ॥ १४ ॥

अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥ १५ ॥

अन्यस्मै प्रदाय सोम अनिहित आग्नीध्रे अग्नौ उत्तरेण धिष्ण्यानेत्यास्ते तस्यैव दक्षिणत ॥ १५ ॥

हुते च सोममादायाहवनीयं चातीत्य ॥ १६ ॥

हुते वैसर्जने सोममादाय चशब्दादन्यस्मै प्रदाय सोममाहवनीयमतीत्य चशब्दादास्ते दक्षिणतः ॥ १६ ॥

अपररात्रेऽग्नीषोमप्रणयनवदिच्छन् ॥ १७ ॥

यदुक्तं भवति उत्तरेण धिष्ण्याञ्छालाद्वार्यं च पूर्वेणेत्य तस्यैव दक्षिणत आस्त। इच्छन्नाहवनीयस्य दक्षिणतः ॥ १७ ॥

विप्रुषां होमं हुत्वा प्रतिहर्तारमन्वारभेत वादीक्षितः ॥ १८ ॥

विप्रुड्ढोमकाले अदीक्षितः प्रतिहर्तारमन्वारभेत न। वा न वेति विकल्पः। दीक्षितस्य तु नियमतो विहितोऽन्वारम्भः ॥ १८ ॥

प्रस्तोत्रामन्त्रित एतं ते देवसवितःस्तुत सवितुः प्रसव इत्युक्त्वा प्रसौति ॥ १९ ॥

प्रस्तोत्रामन्त्रितो ब्रह्मा प्रसौति। ब्रह्मन् स्तोष्याम इत्येवं प्रस्तोत्रामन्त्रित एत ते देवसवितरित्युक्त्वा स्तुतसवितुः प्रसव इति प्रसौ-

ति । अस्य प्रसवार्थत्वात् ॥ १९ ॥

देवसवितरेतत् बृहस्पते इति वा ॥ २० ॥

उक्त्वा स्तुतसवितुः प्रसव इति प्रस्तौति ॥ २० ॥

रश्मिना सत्यायेति वा प्रतिमन्त्रम् ॥ २१ ॥

प्रतिस्तोत्रं प्रतिमन्त्रं स्तुतसवितुः प्रसव इत्यनेनैव प्रस्तौति । अस्मिंश्च पक्षे अप्तोर्यामिन्यसैषावृत्तिः । मन्त्रान्तराभावात् ॥ २१ ॥

येन प्रवेशनं तस्मिन्त्सर्पणम् ॥ २२ ॥

सदसि येन द्वारेण प्रवेशनमङ्गीकृतं तस्मिन्नेव सर्पणम् । यदुक्तं भवति द्वार्ययोरभिमर्शनम् ॥ २२ ॥

पूर्वेण यूपं परीत्यापरेण चेत् ॥ २३ ॥

अपरेण प्रवेष्टुमिच्छति तत. पूर्वेण यूपमेति । पूर्वेण चेद्-परेण ॥ २३ ॥

प्रशास्तुर्दक्षिणत आस्ते ॥ २४ ॥

अपरेण धिष्ण्यानितरे ॥ २५ ॥

अधिकारद्ब्रह्मपुरुषा आसते ॥ २५ ॥

नेष्टा च ॥ २६ ॥

पत्नस्य्द्दादपरेण धिष्ण्यमास्ते । अध्वर्युपुरुषत्वात् पृथगवचनं ॥ २६ ॥

विसृ;स्थितसञ्चरः प्रशास्तृधिष्ण्यं वोत्तरेणा-

पवमाने ॥ २७ ॥

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै, र्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देय वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणका ८

६ कालान्तरे प्रतिस्तबक " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रत मुद्यमाणा ग्रन्था - मुद्रिता स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृत. | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्यभाव प्रकाश सहितम् । सम्पूर्णः । | (वेदान्त) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्ण । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्ण. । | (वेदान्तः) | ६ |

स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णम् । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्णः ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) २

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( वेदान्तः ) १३

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्त ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीमदुपदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम् । ( मीमांसा ) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् । ६

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्त )

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालय,
बनारस सिटी ।



No 77.] [ *Price Rupee One.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

## महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY SRI KARKACHARYA

EDITED BY

VYAKARNACHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mimâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthashâlâ,

*Central Hindu College, Benares*

FASCICULUS VII

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT

BENARES

AGENTS – OTTO HARRASSOWITZ LEIPZIG
PANDIT JYESHTHARAMA MUKUNDJI, BOMBAY

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1904.

स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णम्। ( जैनदर्शनम् ) २

(१०)सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णः ( वेदान्तः ) १

(११)न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेत. ( वेदान्तः ) २

(१२)विभक्त्यर्थनिर्णय.न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप. म० म० श्रीगिरिधरोपाध्यायरचित. । सम्पूर्णः ( न्याय. ) ५

(१३)विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४)न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता। ( वेदान्तः ) १३

(१५)शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। ( वेदान्त ) २

(१६)मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरधर्मभट्टनारायणात्मजभट्टशङ्करविरचित.। ( मीमांसा ) २

(१७)प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम्। ( मीमांसा ) २

(१८)अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९)कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्। ६

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्त ) १





No 77.] [Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्।

## KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY ŚRI KARKACHARYA

EDITED BY

VYAKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mîmâmsâ and Dharmashâstra,

Ranabir Sanskrit Pâthashâlâ,

*Central Hindu College, Benares*

FASCICULUS VII

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT

BENARES

AGENTS —OTTO HARRASSOWITZ LEIPZIG

PANDIT JYESHTHARAMA MUKUNDJI, BOMBAY

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1904.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—७७

विसंस्थितसञ्चर । अपरिसमाप्तसञ्चर. । अपवमाने प्रशास्तृधिष्ण्य थोत्तरेणेति वा दक्षिणेन। पवमानार्थं स्वपरिसमाप्ते च सवने दक्षिणेनैवेति ॥ २७ ॥

स्वं स्वमितरे ॥ २८ ॥

॥ स्वधिष्ण्यानेवमेव गच्छन्ति ॥ २८ ॥

कर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये
एकादशो ऽध्यायः समाप्तः ।



॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितमव्याभरतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—७७

# द्वादशोऽध्यायः ।

श्रुत्यर्थमनुविधित्सताऽऽचार्येण ज्योतिष्टोमोऽनु विहितः इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो द्वादशाहोऽनु विधीयते । तत्र श्रुतिपाठः सर्वे ह वै देवा अग्रे सदृशा आसुरित्यतिग्राह्यग्रहविधानं द्वादशाहे तान्वै पृष्ठ्ये षडहे गृह्णीयात्पूर्वेऽग्रह इत्येवमादि । मन्त्रपाठोऽपि च अग्ने पवस्व स्वपा उत्तिष्ठन्नोजसेत्येवमाद्यतिग्राह्यग्रहमन्त्राः । ततो द्वादशाहस्य श्रुतिमन्त्रपाठावसर इति । तत्र तद्धर्मप्राप्त्यर्थमधिकरणमारभ्यते—

ज्योतिष्टोमधर्मा एकाहद्वादशाहयोस्तद्गुणदर्शनात् ॥ १ ॥

ज्योतिष्टोमस्य धर्मा ज्योतिष्टोमधर्माः ज्योतिष्टोमशब्देन उपांश्वादिहारियोजनपर्यन्तो ग्रहयागाभ्यासोऽभिधीयते । ज्योतींषि यस्य स्तोमाः स ज्योतिष्टोमः । स्तोमैर्होमो द्योत्यत इति । ते च सोमयागस्य स्तोमाः ग्रहं गृहीत्वा चमसांश्चोन्नीय स्तोत्रमुपाकरोतीति । तस्माज्ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते । नन्वेवं सति ऐन्द्रवायवादीनामप्रवृत्तिर्विकारेषु भवति । नैष दोषः । उद्भिदा यजेत बलभिदा यजेतेति चाऽव्यक्तत्वसामान्यात् ज्योतिष्टोमिको विध्यन्तः प्रवर्तते । उद्भिदादिषु च यागमात्रं श्रूयते । न च द्रव्यदेवतमन्तरेण यागः सम्भवति । अतो द्रव्यदेवतस्यापि प्रवृत्तिरिति । यत्र पुनर्द्रव्यदेवता सहितस्य यागस्य विधानम् । यथैन्द्राग्नमेकादशकपालं निर्वपेदिति तत्र तद्व्यतिरिक्तस्य प्रवृत्तिर्युक्ता । इह पुनर्न तथा । इह हि यागमात्रमेव श्रूयते । तच्च द्रव्यदेवतमन्तरेण न भवति । द्रव्यदेवतमपि साधनत्वाद्धर्मो भवति । तेन तस्यापि प्रवृत्तिर्युक्तरूपेति । तस्य च धर्मा एकाहेषु द्वादशाहे च प्रवर्तन्ते । एकाहजात्यपेक्षया च द्विवचनम् । य एवैकस्मिन्नेकाहे धर्मप्रवृत्तिहेतुः स एव सर्वेष्वेकाहेष्वपि । कः असौ । धर्माणामनाम्नानम् । अव्यक्तसामान्येन च ग्रहणम् । द्वाद-

याह । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो-ह्येतेन यजतेति । एतस्यैवेति सर्वनामशब्देन स एवाग्निष्टुत्कार्यान्तरे विधीयते । तस्मादेक एवाग्निष्टुदिति ॥ ३ ॥

एवं प्राप्त आह—

एके ॥ ४ ॥

तन्नेच्छन्ति । प्राप्तकर्मानुवादेनानेकगुणविधानासम्भवात् । न हि पूर्वस्याग्निष्टुतो रेवत्यः सन्ति । ता विधातव्याः । तासु च वारवन्तीयम् तथाग्निष्टोमसाम्नः कार्ये । पशुकामो वेति वाक्यभेदः । कर्मान्तरपक्षे तु सगुणकर्मविधानान्नैषदोषो भवति । तस्माप्त-तिफलमग्निष्टुतां चतुष्टयम् ॥ ४ ॥

प्रकृतमिदानीमभिधीयते—

१द्वादशाहः सत्त्रमहीनश्च ॥ ५ ॥

अत्र विशेषमाह—

आसत उपयन्तीति सत्त्रलिङ्गं यजत

इत्यहीनस्य ॥ ६ ॥

द्वादशाहमृद्धिकामा उपेयुरिति । तथा त्रयोदशरात्रमासीर-न्निति सत्त्रलिङ्गम् । द्वादशाहेन प्रजाकामं याजयेदित्यहीनलिङ्गम् । अस्यानुकथनप्रयोजनम् सत्त्रे सत्त्रारम्भको धर्म दातृत्वेन प्रवर्त्तते अ-हीने चाहीनात्मकः ॥ ६ ॥

२उभयतोतिरात्रं सत्त्रमुपरिष्टादहीनस्य ॥ ७ ॥

यजमानाः सर्वे सत्त्रेषु ॥ ८ ॥

यजमाना एव सर्वे सत्त्रेषु कर्त्तारो भवन्ति । ये ऋत्विजस्ते

---

१ द्वादशाहयागः संत्रात्मकः अहीनात्मकश्चेति सूत्रार्थः ।

२ सत्रद्वादशाहे चाऽतिरात्रो भवति अहीनद्वादशाहे पश्चेति सूत्रार्थः ।

स्याहे त्वेकस्मिन्नेव ज्योतिष्टोमिकधर्मप्रवृत्तिः। ततोन्यस्याहर्गणेषु धर्मप्रवृत्तिं वक्ष्यति। तद्गुणाश्चात्र दृश्यन्ते। वाजपेयेऽगृहीते माहेन्द्रे रथावहरणादिकरोति रथावहरणावसरविधिपरे वाक्ये माहेन्द्रं दर्शयति। तथा तं वै प्रातः सवने गृह्णीयादाग्रयणं गृहीत्वेति षोडशिनोवसरविधानपरे आग्रयणं दर्शयति। तथा माध्यंदिने वैनान्त्सवने गृह्णीयादुक्थ्यं गृहीत्वेति अतिग्राह्यावसरविधिपरे वाक्ये उक्थ्यं दर्शयति। एकत्र चाचरितं लिङ्गं स्थालीपुलाकन्यायेन सर्वत्र गमकम्। न्यायस्य तुल्यत्वात्। तुल्यो हि न्यायो धर्माणामनाम्नानमपेक्ष्या चाव्यक्तत्वसामान्येन ग्रहणमिति। न्यायस्तु पूर्वाभिहित एव। सामर्थ्यादिति एवमेताश्चोदना वैकृत्यः समर्था भवन्ति। इतरथा सापेक्षाः सत्योऽनर्थका एव स्युरिति॥ १॥

आनुमानिकस्याप्यतिदेशस्यापवादत्वेनेदमधुनोच्यते—

## प्रथमस्य व्रात्यस्तोमसाद्यःक्रेषु वचनात्॥ २॥

व्रात्यस्तोमादिषु प्रथमस्य धर्मा उत्तरेषु प्रवर्तन्ते। न ज्योतिष्टोमिकाः। कुतः। वचनात्। उच्यतेऽनेनेति वचनं, नामधेयं, नामधेयादित्यर्थः। तुल्यनामत्वात्तस्यैव प्रवृत्तिर्भवति। प्रतीत्या च धर्मसम्बन्धी भवति नान्यश्चेति। साद्यःक्र सोमक्रयणं त्रिवृत्सं साण्डमभिधाय साद्यःक्रान्तरे स्त्रीगौः सोमक्रयणीत्याह। तत्रैवचनमेवोपपद्यते। वचनातिदेशं तु वक्ष्यति। इषुदृश्येनवादिति। नन्वेतत्पूर्वमभिहितमेव दर्शपूर्णमासधर्मा इष्टिपशुषु सामार्थ्यादित्यत्रानुमानिकवचनातिदेशः। वैश्वदेवधर्माश्चातुर्मास्येष्विति प्रत्यक्षवचनातिदेशः। सोमापावभृथ इति नामातिदेशः। त्रिः प्रकारोऽप्यतिदेश उक्तः। किमर्थं पुनरिहोच्यते। सत्यमेतदेवम्। तत्र व्यक्तचोदनाविषयम्। इहाव्यक्तचोदनाविषयं लिङ्गोपन्यासार्थमारम्भः। न हि व्यक्तचोदनालिङ्गोक्तिरिह गमिका भवति। तस्मादपुनरुक्तता॥ २॥

## अग्निष्टुत्सु च॥ ३॥

चशब्दात्प्रथमस्य धर्मा प्रवर्तन्ते नामधेयादेव। न त्वग्निष्टुद्बहुत्वमेव नास्ति। एक एवाग्निष्टुत् तत्रदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेत्यभिधा-

मन्थत्यर्द्धेश इतरे दक्षिणोत्तराः ॥ १६ ॥

ते यद्यपि चेष्यमाणा भवन्तीति वचनाच्चेष्यमाणा इत्युक्तम् । समाराह्येति च पूर्वकालता मात्रे वचनादेशा न समानकर्तृकतायां चोदको मा बाधीति । गृहपतिमध्य मन्थन करोति । अर्द्धेश इतरे दक्षिणोत्तरा मन्थन्ति ॥ १६ ॥

१गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥ १७ ॥

तत्र प्रजापत्यः पशुः ॥ १८ ॥

तत्र विहारे प्राजापत्य पशुर्भवति । पुनर्ग्रहणाच्चाहर्गणे प्राजापत्यस्य नियमः । तथा चाश्वमधे नियमदर्शन भवति । प्राजापत्यमालभ्योत्सीदन्तीत्येव इति ॥ १८ ॥

आज्येन पत्नीसंयाजा गृहपतिवर्जम् ॥ १९ ॥

गृहपतेरेव गार्हपत्ये जाघन्या पत्नी सयाजयन्त्याज्येनेतरे प्रतियजन्त आसत इति वचनात् ॥ १९ ॥

तदहर्दीक्षा ॥ २० ॥

दीक्षायाः पशोश्चैककालतोच्यते । तत्र दीक्षकाले पशु कर्त्तव्यः । न पशुकाले दीक्षा । एव सोमकालावरोधो न भवति इतरस्याविरोधात् ॥ २० ॥

अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र ॥ २१ ॥

पशुदीक्षयोरेककालता ऽशक्तौ स्वकालेपशुं कृत्वा समारोपनिर्मथनपूर्विका नियतानां क्रियाः । सर्वत्रग्रहणाच्च त्रिष्वपि मन्थपक्षेषु ॥ २१ ॥

दीक्षाकालउदगवाशायां पूर्ववमन्थनम् ॥ २२ ॥

---

१ आहवनीयेग्नौ गृहतिरङ्गारान् क्षिपतीत्यर्थः ।

यजमाना इत्यनेनार्त्विजीनान्पदार्थाल्लक्षणयाऽनूद्य यजमानाः कर्तृत्वेन विधीयन्ते ॥ ८ ॥

अदक्षिणानि च स्वामियोगात् ॥ ९ ॥

तानि च सत्राण्यदक्षिणानि भवन्ति। न हि कश्चिदात्मनैवात्मानं परिक्रीणाति ॥ ९ ॥

गृहपतिर्याजमानमयुक्तत्वात् ॥ १० ॥

याजमानं यत्कर्म तद्गृहपति करोति कर्मान्तरे तस्यायुक्तत्वात्। इतरेषां चाध्वर्य्वादिषु योगात् ॥ १० ॥

दर्शनाच्च ॥ ११ ॥

दृश्यते चायमर्थो यथा गृहपतेर्याजमानं कर्मेति। तस्माद्यदि षड्चो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुरिति ॥११॥

सर्वे संस्कारात् ॥ १२ ॥

हेतुश्चायमुपदेशश्च। यत्संस्कारकं कर्म तत्सर्वैरभ्युपेयम्। कस्य चित्संस्कारपरिलोपो मा भूदिति ॥ १२ ॥

दर्शने वचनात् ॥ १३ ॥

यत्तु दर्शनमुक्तं तद्वचनम् ॥ १३ ॥

अविभवति गृहपत्यन्वारम्भः ॥ १४ ॥

यत्र पुनः पदार्थबहुत्वस्याविभवः पुरुषार्थरूपतापि गम्यते। यथाऽन्वाधाने समासे वर्षो विहवेष्वस्त्विवत्येवमादि। तत्र गृहपतेः कुर्वतोऽन्वारम्भः कर्तव्यः। सर्वैरेव हि तत्कृतो भवतीति ॥ १४ ॥

परार्थेष्वेकः कृतत्वात् ॥ १५ ॥

यत्पुनः कर्त्रभिनिर्वृत्त्यर्थमेव कर्म। यथा पात्रासादनमाज्यावेक्षणं वा तत्रैकस्यैव कर्तृत्वम्। कृतत्वात्पदार्थस्य ॥ १५ ॥

अग्निं चेष्यमाणः समारोह्य गृहपतिर्मध्ये

मन्थत्यर्द्धश इतरे दक्षिणोत्तराः ॥ १६ ॥

ते यद्यपि चप्यमाणा भवन्तीति वचनाच्चप्यमाणा इत्युक्तम । समारोह्येति च पूर्वकालता मात्रे व्यपदेशो न समानकर्तृकतायां चोदको मा बाधीति । गृहपतिर्मथ्य मन्थनं करोति । अर्द्धश इतरे दक्षिणोत्तरा मन्थन्ति ॥ १६ ॥

१ गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥ १७ ॥

तत्र प्रजापत्यः पशुः ॥ १८ ॥

तत्र विहारे प्राजापत्यः पशुर्भवति । पुनर्ग्रहणाच्चाहर्गणे प्राजापत्यस्य नियमः । तथा चाश्वमधे नियमदर्शनं भवति । प्राजापत्यमालभ्योत्सीदन्तीत्यपि इति ॥ १८ ॥

आज्येन पत्नीसंयाजा गृहपतिवर्जम् ॥ १९ ॥

गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्त आसत इति वचनात् ॥ १९ ॥

तदहर्दीक्षा ॥ २० ॥

दीक्षायाः पशोश्चैककालतोच्यते । तत्र दीक्षकाले पशुः कर्त्तव्यः । न पशुकाले दीक्षा । एवं सोमकालाविरोधो न भवति इतरस्याविरोधात् ॥ २० ॥

अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र ॥ २१ ॥

पशुदीक्षयोरेककालता ऽशक्तौ स्वकालेपशुं कृत्वा समारोपनिर्मथनपूर्विका नियतानां क्रियाः । सर्वत्रग्रहणाच्च त्रिष्वपि मन्थपक्षेषु ॥ २१ ॥

दीक्षाकालउदगवशायां पूर्ववमन्थनम् ॥ २२ ॥

---

१ आहवनीयेऽग्नौ गृहपतिरङ्गारान् क्षिपतीत्यर्थः ।

उदग्वंशायामिति नियमः। पूर्ववदिति यथा पत्नीशालम् ॥ २२ ॥

गार्हपत्ये प्रासनमन्न ॥ २३ ॥

अङ्गारस्य भवति ॥ २३ ॥

आहवनीयस्ततः ॥ २४ ॥

उद्धियते दक्षिणाग्निश्च तुल्यन्यायत्वात् ॥ २४ ॥

तत्र दीक्षा ॥ २५ ॥

भवति ॥ २५ ॥

उपवसथप्रभृति प्रागग्नीषोमप्रणयनादुपशम-
य्य चिनोत्येनाञ्छालाद्वार्यादक्षिणोत्तरान्धि-
ष्ण्यवत् ॥ २६ ॥

अग्नीषोमप्रणयनात् प्राग्दक्षिणोत्तरान् गार्हपत्यादुपशमय्य शालाद्वार्याद्दक्षिणोत्तरांश्चिनोति गार्हपत्यान्धिष्ण्यवत् ॥ २६ ॥

श्रुतेः ॥ २७ ॥

अथेतरेऽग्नय उपवसथे धिष्ण्यानिति । धिष्ण्यानित्यसत्यपि वतिप्रत्यये वत्यर्थो गम्यते । अतस्मिंस्तच्छब्दस्य तद्वदतिदेशार्थत्वात् ॥ २७ ॥

वा यथोक्तं गृहपतेः ॥ २८ ॥

वाशब्दात्पक्षो विपरिवर्तते । न धिष्ण्यवच्चिनोति । किं तर्हि-यथोक्तं गृहपतेः गार्हपत्यस्य चयनं तथेतरेषामपि । गार्हपत्याविशेषात् । धिष्ण्यशब्दस्तर्हि कथम् । संख्यावचन इत्यदोषः ॥ २८ ॥

आग्नीध्रीय उद्यतेऽङ्गारमेकैकं हरन्ति प्रतिचि-
ति शालाद्वार्यात् ॥ २९ ॥

यदा पदैव आग्नीध्रीयोऽग्निर्भवत्यथैतं पक्षैकमेवोद्धु-

कमावाय यथा धिष्ण्यं विपरायन्तीति । तच्च यजमाना एव ॥२९॥

प्रत्यग्नी सवनीयपुरोडाशा भूयो हविरुच्छि-
ष्टमसत्समाप्त्या इति श्रुतेः ॥ ३० ॥

नाना पुरोडाशता च द्वादशाहिको धर्मः सुत्राम्नानात् । प्रयोज-
नं विकारेष्वैकाहिकेषु न भवति ॥ ३० ॥

पत्नीसंयाजाश्च पूर्ववत् ॥ ३१ ॥

भवन्ति ॥ ३१ ॥

गृहपतिं वा पर्युपविश्य मन्थन्ते ॥ ३२ ॥

वाशब्दो विकल्पार्थः[1] ॥ ३२ ॥

गृहपतिः प्रथमः प्रथमः सर्वत्र ॥ ३३ ॥

सर्वपक्षेषु ॥ ३३ ॥

जातं जातं गृहपतिगार्हपत्ये प्रास्यन्त्युभयत्र ॥३४॥

पर्युपवेशनपक्षे पश्चौ दीक्षायां चोभयत्र ग्रहणात् ॥ ३४ ॥

उपवसथप्रभृति तुल्यं सर्वेषु ॥ ३५ ॥

उपवसथप्रभृति यदुक्तं तत्पक्षत्रयेऽपि तुल्यं भवति नाना गा-
र्हपत्या इति यदुक्तं भवति ॥ ३५ ॥

तृतीयं पक्षान्तरमुच्यते—

अरण्योर्बाहुगृहपतेर्य इतोऽग्निर्जनिष्यते स नः
सह यदनेन यज्ञेन जेष्यामो ऽनेन पशुव-

---

[1] इतरे सत्रिणो गृहपतिं सर्वतो वेष्टयित्वा पर्युपविश्य मन्थ-
न्त इत्यर्थः ।

न्धेन तन्नः सह सह नः साधुकृत्या नाना पापकृत्या य एव पापं करवत्तस्यैव तदित्युक्त्वा गृहपतिः समारोहयते स्वौ प्रथमम् ॥ ३६॥

अथेदं तृतीयं गृहपतेरेवारण्योः स्वसंवदन्त इति वचनात् । गृहपतिः समारोहयते स्वावग्नी प्रथमम् ॥ ३६ ॥

यथास्वं वेतरे ॥ ३७ ॥

गृहपतिर्वेति विकल्पः । गृहपतिं हि प्रकृत्य श्रूयते । अथेतरेऽपः समारोहयति स्वयैव समारोहयन्ति ॥ ३७ ॥

अस्मिन्नेव पक्षे अयमपरो विशेषः—

दीक्षाकाले संवादप्रभृति पशुबन्धस्थाने सत्त्रेणेति ॥ ३८ ॥

पशौ अरण्योर्बाहुः गृहपतिरित्येतस्मिन्पशुबन्धेनेति पशुस्थाने सत्त्रेणेति प्रयोग. ॥ ३८ ॥

एकाहवद्वोत्तमे शालागार्हपत्यपुरोडाशपत्नीसंयाजाः ॥ ३९ ॥

एकाहवदिति उत्तमे पक्षे वा प्राग्वंशा शाला भवति वोदवसंवेति विकल्पः । उपवसथप्रभृति नानागार्हपत्येषु प्राप्तेषु विकल्पेन गार्हपत्यैकत्वमुच्यते । पुरोडाशपत्नीसंयाजानामप्येवमेव ॥ ३९ ॥

एकपुरोडाशेषु व्रत्यासम्भवादैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा यथोदनीयन्ति यवपूपीयन्तीति श्रुतेः ॥ ४० ॥

एकपुरोडाशपक्षे कथं नाम व्रतस्य सम्भवः स्यादिति ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा । यथोदनीयन्ति विकल्पेनो-

दनमिच्छन्ति । यद्यपूपियन्त्यपूपमिच्छन्ति । तस्य चास्य यागशेषस्य पुरुषार्थता । न पुरुषार्थस्य यागार्थता । अदृष्टार्थत्वात् ॥ ४० ॥

बार्हस्पत्यमेके ॥ ४१ ॥

कुर्वन्ति नैन्द्रम् ॥ ४१ ॥

दीक्षा द्वादशोपसदश्च ॥ ४२ ॥

भवन्ति ॥ ४२ ॥

अध्वर्युर्गृहपतिं दिक्षयति ब्रह्माणं दीक्षित्वाध्वर्युः उद्गातारं ब्रह्मा दीक्षयति ... 

अध्वर्युर्गृहपतिं दिक्षयति ब्रह्मादींश्चाध्वर्योदीन्प्रतिप्रस्थाता प्रतिप्रस्थातादीन्नेष्टा नेष्ट्रादीनुन्नेता उन्नेतारं ब्रह्मचारी स्नातको ऽन्यो वा ब्राह्मणो न पूतः पात्रयेदिति श्रुतेः ॥ ४३ ॥

[1]अनुपति पत्नीरुत्तर उत्तरः ॥ ४४ ॥

त एवोन्ने तुः ॥ ४५ ॥

ब्रह्मचर्यादयः पत्नीं दीक्षयन्ति ॥ ४५ ॥

दक्षिणाकाले कृष्णाजिनानि धून्वाना दक्षिणापथेन जयन्तो गच्छन्ति यन्मे गदायुपः परागितो ऽगाचां तेऽगद दक्षिणां नयामीतीदमहममुमामुष्यायणममुष्यपुत्रममुष्याः पुत्रं कामाय दक्षिणां नयामीति ॥ ४६ ॥

अमुमामुष्यायणममुष्यपुत्रममुष्याः पुत्रमिति यथास्वमुच्चार-

---

१ उत्तर उत्तरो दीक्षाकर्ता पतिसमीपे तत्पत्नीर्दीक्षयतीत्यर्थः ।

णम् । स चायं सत्रधर्म्मः । अतश्चाहीने न भवति ऐकाहिकेषु च न भविष्यति ॥ ४६ ॥

पृष्ठ्यः षडहः प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्यु-
क्थ्या इतरे ॥ ४७ ॥

षण्णामह्नां पृष्ठ्य इतीयं संज्ञा । सा च वैदिकी दृश्यते च तथा संव्यवहारः । अभिप्लवं पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरमित्येवमादि ॥ ४७ ॥

तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्ति-
ष्ठन्नदश्नमित्यन्वहमेवैकम् ॥ ४८ ॥

अतिग्राह्यान्हि मध्यस्य ब्रूयात् तान्वै पृष्ठ्ये षडहे गृह्णीयात्पूर्वे त्र्यह आग्नेयमेव प्रथमेऽहन्यैन्द्रं द्वितीये सौर्यं तृतीय इति ॥ ४८ ॥

उत्तरे वा ॥ ४९ ॥

अतिग्राह्यग्रहणमेवमेवान्वहम् । तान्तु हैक उत्तरे त्र्यहे गृह्णन्तीति श्रुतेः ॥ ४९ ॥

उभयोर्वा ॥ ५० ॥

त्र्यहयोर्ग्रहणम् । एवमपि हि श्रूयते । पूर्वं एवैनांस्त्र्यहे गृहीत्वाथोत्तरे त्र्यहे गृह्णीयादिति । पक्षत्रयं विकल्पेन । सम्प्रदाये तु पक्षद्वयम् । पूर्वे वा त्र्यहे उभयोर्वेति ॥ ५० ॥

माहेन्द्रमनुहोमः ॥ ५१ ॥

अतिग्राह्याणाम् ॥ ५१ ॥

अग्ने वर्च्चस्विन्निन्द्रौजिष्ठ सूर्यभ्राजिष्ठेति भ-
क्षणं यजमानैः ॥ ५२ ॥

सह होमाभिषवकर्तृयजमानानामपूर्वभक्षविधानम् । न हि तत्रत्याम्नायः ॥ ५२ ॥

पृष्ठकाले रथसंसारणं प्रथमे दक्षिणेन वेदिम् ॥५३॥

माहेन्द्रग्रहयाज्याऽऽख्यास्तोत्रं पृष्ठम् । तत्काले दक्षिणेन वेदिं रथसंसारणं पृष्ठ्यस्य प्रथमेऽहनि ॥ ५३ ॥

द्वितीये दुन्दुभिशब्देनोपाकरणम् ॥ ५४ ॥

द्वितीयेऽहनि दुन्दुभिशब्देन पृष्ठयोपाकरणम् ॥ ५४ ॥

तृतीय औपवाजनैः ॥ ५५ ॥

उपवाजना व्यजनका उच्यन्ते[१] ॥ ५५ ॥

चतुर्थेऽरणिभ्यां मन्थनं चोद्गातुरूरौ होमश्च ॥५६॥

चतुर्थेऽहनि अरणिभ्यां मन्थनं चोद्गातुरूरौ होमश्चा-हवनीये ॥ ५६ ॥

पञ्चमे [२]सावकयोदपात्र्या ॥ ५७ ॥

उपाकरणम् ॥ ५७ ॥

षष्ठे सांवाशिनेन ॥ ५८ ॥

सांवाशिनशब्दार्थोऽप्रसिद्ध इत्यत आह—

मार्तृभिर्वत्सान्त्संसृज्य सदः पूर्वेण व्या-वर्त्तयन्ति ॥ ५९ ॥

स्वयमृतुयाजेज्याऽर्वाश्चमद्य यव्यं नृवा-हरणं रथं युञ्जाथामिह वां विमोचनं पृ-ङ्क्तं हवींषि मधुना हि कं गतमथा

---

१ तैस्तृतीयेऽहनिपृष्ठ्योपाकरणमिति शेषः ।

२ शैवालसंयुक्तया पात्र्येत्यर्थः ।

सोमं पिबतं वाजिनीवसू इति ॥ ६० ॥

सा चाध्वर्युप्रतिप्रस्थात्रोः । ताभ्यां हि प्रेषिताभ्यां प्रकृतावुक्तं होतरेतद्यजेति । तेन चाश्विनाविष्टौ इयमपि द्विवचनान्तत्वात् आश्विनयाग एवेति गम्यते ॥ ६० ॥

होतृप्रत्ययः प्रतिगरः[1] ॥ ६१ ॥

माहेन्द्रग्रहप्रसङ्गे ॥ ६१ ॥

प्राकृतं चान्यार्थत्वादितरेषाम् ॥ ६२ ॥

प्राकृतं च प्रतिगरपदं प्रवर्त्तते । अन्यार्थत्वादितरेषां होतृकाणां प्रतिगरपदानामदृष्टार्थत्वात् । एवं च कृत्वा स्तोत्रोपाकरणमपि प्राकृतं प्रवर्त्तते । अदृष्टार्थत्वाद्ग्रहसंसारणादीनाम् ॥ ६२ ॥

षडहान्ते न बहु वदेत् नान्यं पृच्छेत् नान्यस्मै प्रब्रूयात् ॥ ६३ ॥

तत्र क्रत्वर्थस्वाध्यायविषयमिति सम्प्रदायः । तत्र हि प्रश्नप्रत्याख्यानानि सम्भवन्ति । षडहान्तग्रहणाच्च तदन्त एव भवति न विकृते षडहे ॥ ६३ ॥

मधोः प्राशनं घृतस्य वा ॥ ६४ ॥

तद्वैतद्धर्ममात्रं दृष्टार्थासम्भवात् ॥ ६४ ॥

उक्थ्याश्छन्दोमास्त्रय उत्तरे ॥ ६५ ॥

उत्तरे छन्दोमास्त्रय उक्थ्याः ॥ ६५ ॥

अत्यग्निष्टोमोऽविवाक्यं दशमम् ॥ ६६ ॥

अत्यग्निष्टोमसंस्थमविवाक्यसंज्ञं दशममहर्भवति ॥ ६६ ॥

---

१ अस्मिन् पृष्ठ्ये षडहे होतृवेदे यत्र यत्र यादृशो विहितः प्रतिगरस्तत्र तत्र तथा भवतीत्यर्थः ।

पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् ॥ ६७ ॥

तथैतत्पदार्थपर्यवसानं न तदङ्गाङ्गरीतिविधानम् । अवभृथस्य दीक्षोन्मोचनार्थत्वात्सर्वान्ते ऽवभृथः । तत्र समिष्टयजुरन्तपर्यवसाने प्राप्ते पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इति वचनादिह पर्यवसानम् । द्वादशाहमृत्विक्कामा उपेयुरिति युगपत्परिसमाप्तिरिष्यत इदमुच्यते अन्त्यवर्जमिति ॥ ६७ ॥

एकैको वाग्यतः सोमं रक्षत्या बोधनात् ॥ ६८ ॥

तेषामेकैक एव वाचं यम आस्ते वाचमाप्याययं स्तया पीनया यातयाम्न्योत्तरमहस्तन्वत इतदुत्तराहः शेषमेव दर्शयति ॥ ६८ ॥

वसतीवरिपरिहरणादि वा ॥ ६९ ॥

अतवाक्यं भवति उत्तराहः शेषभूतत्वात् ॥ ६९ ॥

इतरे विसृज्यन्ते स्वाध्यायाय समिद्भ्यो वा ॥ ७० ॥

इतरे दीक्षिताः स्वाध्यायार्थं समिदर्थं च गच्छन्ति । अथेतरे विसृज्यन्ते समिद्द्वारा वा स्वाध्यायाय वा । स्वाध्यायश्चोत्तराहः शेषभूतो नित्य. प्रतिषेधात् । वाशब्दश्चार्थे द्रष्टव्य. । सोमरक्षिताधिद्दस एव स्वाध्याय करोति । समिधश्चाप्यानीयन्ते । कार्यार्थत्वादुभयोः ॥ ७० ॥

तत्राप्यशनम् ॥ ७१ ॥

अशनमपि तत्र गतानां भवति तत्राप्यश्नन्तीति वचनात् ॥ ७१ ॥

दशमे वा सन्निधेः ॥ ७२ ॥

दशमेव वा ऽहनि समित्स्वाध्यायोपगमो भवति । तत्सन्निधौ हि विध्यते सर्वत्र प्रकरणात् सन्निधिः क्रमः स प्रकरणेन बाध्यते । तस्मात्सर्वत्रैव ॥ ७२ ॥

अस्तमिते समिदाधानं सर्वेषु ॥ ७३ ॥

सर्वेष्वहःसु यजमानेषु अग्निषु च प्रतिपत्त्यम्याआन्तरात् ॥ ७३ ॥

दशमे ऽपराह्णे ऽप उपस्पृश्य शालाप्रवेशनम् ॥७४॥

दीक्षितानाम ॥ ७४ ॥

शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोति ॥७५॥

तेषु समन्वारब्धेष्वेते आहुती जुहोतीति श्रुतेः ॥ ७५ ॥

अपरामुपसृजन्निति ॥ ७६ ॥

आहुतिं जुहोति ॥ ७६ ॥

उत्तरेण परिक्रम्यापरेण हविर्धानं प्रविश्यो-त्तरस्यं हविर्धानस्यापरकूबरीमालभ्य सत्रस्य-र्द्धिगायन्ति सत्रस्य ऋद्धिरिति ॥ ७७ ॥

शालाद्वार्यादुत्तरेणपरिक्रम्यापरेण द्वारेण हविर्धानम्प्रविश्य उत्तरस्य हविर्धानस्य दक्षिणामपरकूबरीमालभ्य सत्रस्यर्धिं गायन्ति सत्रस्यर्द्धिरित्याद्य सर्व एव दीक्षिताः ॥ ७७ ॥

उत्तरवेदिश्रोण्यां वोत्तरस्याम् ॥ ७८ ॥

सत्रस्यर्धिगानं कुर्वन्ति । पाक्षद्वाविकल्पः । वा शब्दस्य तुल्यत्वात् ॥ ७८ ॥

युवं तमिति दक्षिणस्याधोक्ष प्राञ्चो नि-ष्क्रामन्ति ॥ ७९ ॥

युवं तमित्यनेन मन्त्रेण दक्षिणस्य हविर्धानस्य अधोऽक्षं प्राञ्चो निष्क्रामन्ति । सदः प्रविश्य पूर्वेण स्वासनेषूपविशन्ति । पूर्वेण द्वारेण सदः प्रविश्य धिष्ण्याऽव्यवायेन स्वासनेषूपविशन्ति ॥ ७९ ॥

ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रे-ण ग्रहणसादनस्तोत्रोपाकरणहोमभक्षाहरण-

भक्षणानि मनसा ॥ ८० ॥

कर्त्तव्यानि ॥ ८० ॥

चतुर्होतृव्याख्यानं हेतुः ॥ ८१ ॥

शस्त्रं भवति ॥ ८१ ॥

गृहपतिरजानति ॥ ८२ ॥

होतर्यजानति गृहपतिर्व्याचक्षीत ॥ ८२ ॥

प्रतिगृणात्परात्सुरिमे यजमाना भद्रमेभ्यो
यजमानेभ्यो ऽभूदिति ॥ ८३ ॥

चतुर्होतृव्याख्याने प्रतिगरः ॥ ८३ ॥

ब्रह्मोद्यं वदन्ति ॥ ८४ ॥

तत्र ज्ञायते किमिवत आह—

प्रजापतेरगुणाख्यानम् ॥ ८५ ॥

तत्कुतो ऽर्थवादात् प्रजापतिमेव तत्परिवदन्ते ॥ ८५ ॥

अप्रतिभायां वा तद्वादः ॥ ८६ ॥

प्रजापतिं परिवदितुं प्रतिभैव नास्ति तस्य विधिप्रतिषेधाभावात् । तस्मादसदेतत् ॥ ८६ ॥

आश्वमेधिकं वा नामधेयात् ॥ ८७ ॥

आश्वमेधिकं वा ब्रह्मोद्यम् । कुत एतत् । नामधेयात् । नामधेयं हि ब्रह्मोद्यमिति । तदेव प्रतीतिं जनयति ॥ ८७ ॥

अनस्तमिते गृहीत्वौदुम्बरीं वाचं यच्छन्ति ॥ ८८ ॥

तत्र प्रतिपत्तिपरिसमाप्त्युत्तरकालम् पत्नीसंयाजान्ते हि सम्प्रोत्थानम् । इयमेहनि सम्प्रोत्थानं क्रियत इति ॥ ८८ ॥

अस्तमिते निष्क्रम्यापरेणोत्तरवेदिमासते प्रतिप्रस्थाता वसतीवरीः परिहरति ॥ ८९ ॥

वचनात् ॥ ८९ ॥

वाग्विसर्जनं सत्त्रकामेन ॥ ९० ॥

येन कामेन सत्त्रमारब्धं तेन वाग्विसर्जनं असौ मे कामः समृध्यतामिति ॥ ९० ॥

पृथक्कामेषु भूर्भुव इति ॥ ९१ ॥

वाग्विसर्जनम् । यत्र अनेककामाः स्युर्लोककामा वा प्रजाकामा वा पशुकामा वा ऽत्रैव वाचं विसृजेरन् भूर्भुवः स्वरिति ॥ ९१ ॥

१सुब्रह्मण्याह्वानं गृहपतेर्यं वाह सुब्रह्मण्य उपा मा ह्वयस्वेत्युक्त्वा समिदाधानम् ॥ ९२ ॥

यस्य यस्य सुब्रह्मण्याह्वानं स सुब्रह्मण्य उप मा ह्वयस्वेत्युक्त्वा समिदाधानं करोति ॥ ९२ ॥

अप उपस्पर्शनाद्येतत्सत्त्रोत्थानम् ॥ ९३ ॥

सत्त्रोत्थानमिति नामधेयम् । तत्र संव्यवहारार्थम् । दशरात्रो ऽसत्त्रोत्थान इति ॥ ९३ ॥

अतिग्राह्यग्रहणप्रसङ्गेनेदमुच्यते—

अन्तराग्रयणोक्थ्यौ वागन्तुरथानं ग्रहाणाम् ॥ ९४ ॥

आग्रयणोक्थ्यावन्तरेणागन्तवो ग्रहा ग्राह्याः ॥ ९४ ॥

प्रातःसवनेऽतिग्राह्यान्गृहीत्वा षोडशिनं खा-

१ अथवा गृहपतिर्यं ब्रह्मादिकं सन्निधत्तं मन्यते स करोतीत्यर्थः ।

दिरेण चतुस्स्रक्तिनातिष्ठ युक्ष्वा हीति वा ॥९५॥

तं धे प्रातः सवने गृह्णीयादाग्रयणं गृहीत्वेति वचनात् । ततः षोडशिनं गृह्णाति । खादिरेण चतुःस्रक्तिना तिष्ठ युक्ष्वा हीति वा मन्त्रविकल्पः । अतिग्राह्यबहुत्वस्याभावाच्च बहुवचनमुच्चारणार्थम् । अतिग्राह्यषोडशिनोः पौर्वापर्यं शाखान्तरात् । अस्यापि हि ग्रहणमाग्रयणादुत्तरमेव तं धे प्रातःसवने गृह्णीयादाग्रयणं गृहीत्वेति ॥ ९५ ॥

माध्यन्दिने वाग्रयणादुत्तराः ॥ ९६ ॥

षोडशी गृह्यते । परमपि हि श्रूयते । माध्यन्दिनेवैनं सवने गृह्णीयादाग्रयणं गृहीत्वेति ॥ ९६ ॥

धाराग्रहान्ते वाऽतिग्राह्यान् ॥ ९७ ॥

माध्यन्दिने वैनान्त्सवने गृह्णीयादुक्थ्यं गृहीत्वेति श्रुतेः ॥९७॥

पूतभृतो वोपाकरिष्यन्पृष्ठम् ॥ ९८ ॥

षोडशिनं गृह्णाति । पृष्ठमुपाकरिष्यन्नतिग्राह्यान्गृह्णातीति योगविभाग । एवं चातिग्राह्याणां कालत्रयम् । षोडशिग्रहस्य तु चत्वारः कालाः । अन्तराग्रयणयोक्थ्यौ तृतीयसवने कण्वपाठाच्चतुर्थः कालः ॥ ९८ ॥

अपो निधायांश्वदाभ्यग्रहणमौदुम्बरेण चतुःस्रक्तिना ॥ ९९ ॥

अंशुग्रहणे वाच्ये ऽदाभ्यग्रहणोक्तिः सन्नियोगशिष्टार्था ॥९९॥

अंशोस्तूष्णीं सर्वम् ॥ १०० ॥

वक्ष्यमाणं पदार्थजातम् ॥ १०० ॥

अनुच्छ्वसंश्चेच्छन् ॥ १०१ ॥

वक्ष्यमाणमेव ॥ १०१ ॥

अग्र्यादानाꣳशुनिवपनोपमार्जनसकृत्प्रहरण-
ग्रहणहोमाद्धिरण्यं चोपजिघ्रति ॥ १०२ ॥

अथ हिरण्यमभिव्यनक्तीति वचनात् ॥ १०२ ॥

उद्यम्य वा प्रहरणम् ॥ १०३ ॥

स चायं विकल्पः । पात्रस्य तुल्यत्वात् ॥ १०३ ॥

सत्त्रसहस्रसर्ववेदसवाजपेयराजसूयविश्वजि-
त्सर्वपृष्ठेषु ग्रहणमवकाशश्चेत् ॥ १०४ ॥

यजमान ॥ १०४ ॥

द्वादशवत्सतर्यो गर्भिण्यो दक्षिणाऽसत्त्रे ॥ १०५ ॥

अदक्षिणत्वात्सत्त्राणामसत्त्र इत्युक्तम् ॥ १०५ ॥

बुभूषतोऽदाभ्यं गृह्णाति ॥ १०६ ॥

सन्नियोगशिष्टत्वाददाभ्यस्य भूतिरिच्छयेभ्यो ॥ १०६ ॥

आसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्री-
नꣳशूनवधायाग्नये त्वा गायत्रच्छन्दसमि-
ति प्रतिमन्त्रम् ॥ १०७ ॥

अन्युपात्रे निग्राभ्यास्तूष्णीमासिच्य त्रीनꣳशूनग्नये त्वा गायत्रच्छन्दसमिति प्रतिमन्त्रम् । मन्त्राभावात् तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः ॥ १०७ ॥

उपयामः सर्वत्राविशेषात् ॥ १०८ ॥

सर्वेष्वेवांश्वदाभ्येषूपयामो भवति । श्रुत एतत् । सर्वेऽपि गोविशिष्ट । यथा च तयोपरितनयोरपि । तस्मादुपयामस्याप्रसङ्गः ॥ १०८ ॥

किं च—

विग्रहादित्यग्रहप्रतिषेधाच्च ॥ १०९ ॥

विग्रहादित्यग्रहेषु च प्रतिषेधो भवति । तं वै नोपयामेन गृह्णीयान्न योनौ सादयेदिति । तथा आदित्यग्रहे तं वै नोपयामेन गृह्णीयादग्रे ह्येष उपयामेन गृहीतो भवतीति । तस्मादंश्ववधानं प्रत्युपयाम इति । अन्ये पुनरन्यथा वर्णयन्ति । उपयामः सर्वग्रहेष्वेव भवति यत्राप्यनाम्नातः । कुत एतत् । अविशेषेण हि श्रूयते । तद उपयामेन ग्रहा गृह्यन्त इति । विग्रहादित्यग्रहप्रतिषेधाच्च । एवं च सति वाजपेये सप्तदशसु सोमग्रहेषु उपयामः सिद्धो भवति । सम्प्रदाये पुनर्यत्रैवोपयामाम्नानं तत्रैव भवति नान्यत्र । नन्वनेनैव सर्वविषयता भवतु । नेत्युच्यते । न ह्येष विधिः यच्छब्दादिभिरुपन्यास्यानुवादोयम् । अंश्ववधाने तु विद्यमानत्वादनुपङ्गो ऽनुमन्यते । विग्रहादित्यग्रहे अनुपङ्गस्य प्रतिषेधः तत्रोपयामो विद्यत एवेत्यभिप्रायः । उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वत इत्युच्यते । आदित्यग्रहेष्वपि उपयामगृहीतोसीति गृहीत्वा गृहीत्वा 'द्विदेवत्यानजु जुहोति इति सर्वविषयो ऽयमुपयाम इत्ययमेवोत्तरः पक्षः । न हि विग्रहादित्यग्रहेष्वनुपङ्गप्रतिषेधो युज्यत इति । तस्मात्सर्वविषयतोपयामस्येत्येवं बोध्यमेव ॥ १०९ ॥

अनुष्टुप इत्युक्त्वा धूनोत्यंशुभिर्वेशीनां त्वेति गच्छन्नाहवनीयं तस्मै त इति जुहोति ॥११०॥

तस्मै त इत्यनेन मन्त्रेण जुहोत्युदकम् ॥ ११० ॥

अंशून्सोमे निदधात्युशिक्त्वमिति प्रतिमन्त्रम् ॥ १११ ॥

ईषान्तरेणाधूहनार्द्धसोमे ततो हि गृहीतो इति ॥ १११ ॥

अंशुवद्दक्षिणा ॥ ११२ ॥

भवति ॥ ११२ ॥

उक्थ्यान्ते षोडशिचरणमुपस्थायैनं यस्मान्न

जात इति चमसानुख्याय ॥ ११२ ॥

उक्थ्यप्रचारान्ते षोडशिचरणम् । यस्मान्न जात इत्युपस्थाय्यैमं चमसानुख्याय पूर्ववत्स्म ॥ ११३ ॥

तृणाहिरण्यैः स्तोत्रोपाकरणमुपास्तमये; सो-
मोऽस्त्यरेच्युपावर्चध्वमिति कृष्णेऽश्व उप-
तिष्ठति ॥ ११४ ॥

तृणहिरण्यैः षोडशिनस्तोत्रोपाकरणम् । अस्तमनसमये सोमोऽस्त्यरेच्युपावर्त्तध्वमित्यनेन मन्त्रेण कृष्णेऽश्व उपतिष्ठति ॥ ११४ ॥

इन्द्रश्च सम्राडिति भक्षणम् ॥ ११५ ॥

भवति ॥ ११५ ॥

आ पात्रप्रक्षालनात्कृत्वा ऽतिरात्रश्चेत्सौम्येन
सहाश्विनो द्विकपालः सर्वत्र ॥ ११६ ॥

आ पात्रप्रक्षालनात्कृत्वा षोडशिनः । अत्रैव च षोडशिसंस्था परिसमाप्तिः । उत्तर अतिरात्रे विशेष उच्यते । सौम्येन सहाश्विनो द्विकपालः कर्त्तव्यः । सर्वत्र महयाख्यातो ऽप्यसाध्याश्विनो द्विकपाल एव भवति ॥ ११६ ॥

अतिरात्र एवापरो विशेष उच्यते—

त्रयः पर्यायाश्चमसैश्चतुस्तोत्रः पर्यायः ॥ ११७ ॥

चमसैर्गणपर्यायास्त्रयः चतुःस्तोत्रपर्यैकः पर्यायः ॥ ११७ ॥

तत्र च—

होतुः प्रथमं प्रथममुक्थ्यवदितरेषु ॥ ११८ ॥

याज्याकर्त्तारः ॥ ११८ ॥

तदन्ते चमसानुख्याय स्तोत्रोपाकरणम्;

सन्धेः ॥ ११९ ॥

तेषां पर्यायाणामन्ते चमसानुन्नीय सन्धिस्तोत्रोपाकरणम्॥११९॥

होता श॒सत्याश्विनम् ॥ १२० ॥

पर्यायान्तेष्वप्रवृत्त्याऽच्छावाकां माऽभूदिति होतेत्युच्यते॥१२०॥

शास्त्रान्त आश्विनेन सर्वहुतेन चरति ॥१२१॥

एकप्रदानश्चमसैः ॥ १२२ ॥

आश्विनो भवति वचनसामर्थ्यात्सर्वहुतश्च ॥ १२२ ॥

अश्विभ्यान्तिरोन्ह्यानां॒ सोमानामनुवाच-

नप्रैषौ ॥ १२३ ॥

अत्र भवतः । ज्योतिष्टोमे षोडश्यतिरात्रयोः क्रतुपशवः क्रतुकरणं चोक्तम् । शेष संस्थायेयो ऽत्राभिहित इति ॥ १२३ ॥

ऐन्द्राग्नः सवनीयोऽन्वहम् ॥ १२४ ॥

भवति । स चायमन्हां गणधर्मः । तथा च विकृतावैकाहिकेष्वपि भवति ॥ १२४ ॥

स्तोमायनं वा ॥ १२५ ॥

यथार्थं भवति ॥ १२५ ॥

एकादशिना वा विहृताः ॥ १२६ ॥

भवन्ति ॥ १२६ ॥

अस्मिंश्च पक्षे—

द्वादश आद्यः ॥ १२७ ॥

भवति ॥ १२७ ॥

सर्वसमासो वैन्द्राग्नो वा ॥ १२८ ॥

वेति विकल्पः ॥ १२८ ॥

यावच्छेपमुत्तरेषु ॥ १२९ ॥

उत्तरेष्वहर्गणेषु एकादशीनि यावच्छेपमालब्धव्यम् ॥ १२९ ॥

काम्यः सत्रम् ॥ १३० ॥

नित्यवचनाभावात् । काम्यत्वे प्राप्ते काम्यग्रहणं पृथक्कामानामप्यधिकारप्रज्ञानार्थम् ॥ १३० ॥

अहीने व्यूढच्छन्दसि दशरात्रस्य चतुर्थनवमयोरन्ह्योराग्रयणग्रहणं प्रथमम् ॥ १३१ ॥

तत्रैतद्दूह्राव्याहेन व्यूढच्छन्दसा यजत इति । व्यूढच्छन्दश्चाहीनोस्ति यमङ्गीकृत्य तद्गतानुदोंनुच्छन्दसां व्यूहनमाम्नातम् । तत्र विशेषवचनाविषयासयेदमाह । दशरात्रस्य चतुर्थनवमयोराग्रयणग्रहणं प्रथमम् ॥ १३१ ॥

शुक्रस्य पष्ठसप्तमयोः ॥ १३२ ॥

प्रथमं ग्रहणं भवति । प्राथम्यं चैन्द्रवायवापेक्षया नोपांश्वन्तर्यामापेक्षया । येनैवमाह । अथैनःप्रज्ञातमेव पञ्चमग्रहर्भवति तदैन्द्रवायवाग्रान् गृह्णातीति प्रज्ञात यथाहन्यैन्द्रवायवाग्रतान् दर्शयति १३२ ॥

असादनमा पर्वेषां ग्रहणात् ॥ १३३ ॥

पूर्वेषां ग्रहणादर्वागासादनं तस्य ॥ १३३ ॥

परिमार्जनभृति काले हिङ्कृत्य सादनम् ॥ १३४ ॥

यस्य हिङ्कारो विहितः । इतरस्य त्वहिङ्कृत्यैव ॥ १३४ ॥

अव्यूढो वा ॥ १३५ ॥

छन्दसां व्यूहनपक्षेपि वाव्यूढो भवति ग्रहग्राहः । एवमपि व्यूपत इति ॥ १३५ ॥

उभयतोऽतिरात्रः ॥ १३६ ॥

अयं द्वादशाहो भवति । यास्वन्यतरतोऽतिरात्रतोक्ता सा विकृतिविषया ॥ १३६ ॥

अतिप्रेषितेऽग्नीदाह श्वः सुत्यामिन्द्राग्निभ्यां प्रब्रवीमि विश्वेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छेति ॥ १३७ ॥

सर्वान्प्रैषानतीत्य वर्तेत इत्यतिप्रेषितो हारियोजनोत्तरकाल इत्यर्थः । तत्राग्नीदाह श्वः सुत्यामिन्द्राग्निभ्यां प्रब्रवीमीत्येवमादि । अयं च श्वस्तनाऽहः शेषभूतः ब्रह्मन्वाचं यच्छेत्ययं त्वऽग्रतनस्यैव । प्रयोजनमैकाहिकेषु विकारेषु द्वादशाहिकेषु च यथार्थं प्रयोगः ॥१३७॥

प्रायणीयेऽद्य सुत्यामेके प्राप्तकालत्वात् ॥१३८॥

प्रायणीयोतिरात्रो द्वितीयेऽहनि परिसमाप्यते । तत्रपार्ष्टिकं प्रथममहर्भवति । तेनैतदुच्यते ऽद्य सुत्यामिति वक्तव्यम् । प्राप्त एव हि काल इति ॥ १३८ ॥

एवं प्राप्त आह—

न पूर्वशेषात् ॥ १३९ ॥

पूर्वस्यैवाह्नः शेषभूतोऽयमतिप्रेषितः । ततश्च श्वःशब्देन कर्मान्तरमुच्यते नाऽहरन्तरम् ॥ १३९ ॥

तस्माच्च श्वोभावात् ॥ १४० ॥

तस्माच्च कर्मणः । श्वःशब्देन कर्मान्तरमुच्यते ॥ १४० ॥

अचोदितत्वाच्च १४१ ॥

न चैवं विधा चोदना विद्यते प्रायणीयेऽद्य सुत्यामिति वक्तव्यमिति ॥ १४१ ॥

अग्निमद्येति च लिङ्गात् ॥ १४२ ॥

अथशब्दः कर्मविषयः । अग्निमद्य होतारमवृणीतायं यजमान इति । अन्यस्मिन्नेवाऽहरन्तरं वृतो होता ऽद्यशब्देनोच्यते । तथा कर्मविषये ऽद्यशब्द उपपद्यते नान्यथेति ॥ १४२ ॥

इदमेव तावद्विचार्यते । किं प्रायणीयात् उत्तरमहस्तस्मिन्नेवाहन्यारब्धव्यमुत द्वितीय इति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः —

प्रायणीयादुत्तरमहः श्वः कालाभावात् ॥ १४३ ॥

प्रायणीयादवसितादुत्तरमहः उत्तरङ्कर्म इत्र आरब्धव्यं न तस्मिन्नेवाहनि । कुत एतत् । कालो हि न सम्भवेत् । अत्र प्रा-तराच प्रातरनात्प्रातरनुवाककाल । तथोपांश्वन्तर्यामयोस्तयोरुदिते ऽन्यतरं जुहोत्यनुदितेऽन्यतरमिति कालो न सम्भाव्यते । श्व पुनः क्रियमाणे सम्भवति ॥ १४३ ॥

एवं प्राप्त आह—

न सम्पच्छ्रुतेः ॥ १४४ ॥

नैतदेवं श्व आरब्धव्यमिति अद्यैवारभ्यते । कुत एतत् । सम्पच्छ्रुतिर्हि भवति । षट्त्रिंशदहो वा एष यद् द्वादशाहः षट्त्रिं-शदक्षरा वै बृहती तद् बृहतीमभिसम्पद्यत इति । तथैवमुपपद्यते । इतरथा ह्यन्यारम्भे न षट्त्रिंशद्भिर्व्यवतिष्ठेत । तत्र सम्पच्छ्रुतिर्विरोध ॥ १४४ ॥

कालो वचनात् ॥ १४५ ॥

य पुनः कालबाधः स वचनादिति ॥ १४५ ॥

इति श्रीकर्कोपाध्यायकृते कात्यायनसूत्रभाष्ये द्वादशाहो द्वादशाध्यायश्च समाप्तः ।

---

# त्रयोदशोऽध्यायः ।

उक्तो द्वादशाहः । तत्सन्निधावेव गवामयनस्य परामर्शोऽस्ति । सौर्यं द्वितीयं पशुमालभते वैपुषते इन्द्राजापत्यं महाव्रत इति गवामयनमेव तावदारभ्यते । पूर्वं धर्मप्राप्त्यर्थमधिकरणम् ।

द्वादशाहधर्माः सत्त्रेषु तद्गुणदर्शनात् ॥ १ ॥

द्वादशाहिका धर्माः सत्त्रेषु प्रवर्त्तन्ते । सत्त्रात्मकात्सत्त्रेषु तद्गुणा ह्यत्र दृश्यन्ते । अभिप्लव पूर्वं पुरस्ताद्विषुवत उपयन्ति पृष्ठ्यमुत्तरमिति । तथा पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपन्तीति चेति । पौर्वापर्यविधिपरे वाक्ये द्वादशाहिकं पृष्ठ्यं दर्शयति । न्यायस्तु पूर्वमुक्त एव सामर्थ्यात् गुण एव गुणमनुग्रहीतु समर्थो नान्य. ॥ १ ॥

गवामयनायैकाष्टकायां दीक्षा ॥ २ ॥

एकाष्टकायां दीक्षेतेति वचनात् ॥ २ ॥

फाल्गुनीपौर्णमासे ॥ ३ ॥

अत्रापि हि वचनम् । फाल्गुनीपौर्णमासे दीक्षेतेति ॥ ३ ॥

चैत्र्याम् ॥ ४ ॥

पौर्णमासे दीक्षेतेति वचनादेव ॥ ४ ॥

चतुरहे वा पुरस्तात्प्राक्पौर्णमास्याः ॥ ५ ॥

पौर्णमासी च फाल्गुनी सा ह्यत्र पूर्वमभिहिता । तस्याः पुरस्ताच्चतुरहे दीक्षेत । एव मपि हि श्रूयते । प्राक्पौर्णमास्याश्चतुरहे दीक्षेतेति ॥ ५ ॥

चैत्र्यानन्तर्यात् ॥ ६ ॥

चैत्री वा चतुरहविशेषणत्वेन प्रतिपत्तव्या सा ह्यनन्तरमेव श्रूयते ॥ ६ ॥

सर्वा वाविशेषात् ॥ ७ ॥

सर्वाः पौर्णमास्यश्चतुरहविशेषणत्वेन प्रतिपत्तव्याः विशेषानवगमात् । एवं च पौर्णमासीशब्दः सर्वत्र प्रवर्त्तमानो न सङ्कोचितः स्यात् ॥ ७ ॥

माघी वा क्रयश्रुतेः ॥ ८ ॥

वाशब्दः पक्षान्तरपरिग्रहे । माघी वा चतुरहविशेषणम् न पौर्णमासीमात्रम् । एवं हि श्रूयते । प्राक्पौर्णमास्याश्चतुरहे दीक्षितानामेकाष्टकायां क्रयः सम्पद्यत इति । एकाष्टकानाम माघकृष्णाष्टमी ॥ ८ ॥

कुत एतत्—

लोकप्रत्ययात् ॥ ९ ॥

यथा हि लोके एकाष्टकेति प्रसिद्धा ॥ ९ ॥

किं च—

अर्थवादाच्च ॥ १० ॥

अर्थवादश्च भवति । ता उत्तिष्ठन्त ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति । तान्दीक्षितानुत्तिष्ठन्त ओषधिवनस्पतीनां प्ररोहो भवति । तच्चैत्रमुपपद्यते । तथा तद्यपोभिनन्दमाना अभ्युत्तिष्ठन्ति । एतदप्येवमेव घटते । वनस्पतिप्ररोहोऽपामभिगच्छन् चैत्रोद्देश एव भवति । तस्मान्माघीचतुरहविशेषणम् ॥ १० ॥

पवमानेपदुद्गातारमन्वारभेरञ्श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा ऋभुरसि जगच्छन्दा इतीतरयोः सवनान्तेषु जयन्ति मयि भर्गो

मयि महो मयि यशो मयि सर्वमिति ॥ ११ ॥

बहुवचनोपदेशात्सर्वे यजमानाः उद्गात्रालम्भसवनान्तजपान् कुर्वन्ति ॥ ११ ॥

सर्वत्रैके ॥ १२ ॥

सर्वत्रैवैक एतदिच्छन्ति ॥ १२ ॥

कुत एतत्—

जयतिशब्दात् ॥ १३ ॥

पुरुषं ह नारायणं प्रजापतिं ह वा च यजस्व यजस्वेत्येवमुक्त्वैतत्सर्वमभिहितमिति ॥ १३ ॥

न प्रकरणात् ॥ १४ ॥

नैतदेवं सर्वत्रैतदिति । येन गवामयनं प्रकृत्यैतच्छ्रूयते । यजतिशब्दोऽप्यत्र गृह्यते प्रकरणमपि । तस्माच्च सर्वत्रैतदुद्गात्रालम्भः सवनान्तजपश्च । गवामयनधर्मत्वादेकाहिकेष्वपि प्रवर्त्तते ॥ १४ ॥

अभिप्लवः षडहोऽग्निष्टोमौ प्रथमान्त्या उक्थ्या इतरे ॥ १५ ॥

षण्णामन्हामभिप्लव इतीयं वैदिकी संज्ञा। संख्यामात्रनिर्देशश्चाऽत्र संस्थास्त्वैकाहिका । एवं ह्याहाऽभिप्लवस्त्र्यह इत्यागृद्धिज्योतिर्गौरायुरिति । ज्योतिरादय एव प्रतिलोमानुलोमाः । तथा चाग्निष्टोमौ प्रथमान्त्यौ भवतः उक्थ्या इतरे । एवं चात्र नाम्ना धर्मा एकाहिका भवन्ति न द्वादशाहिकाः । सत्रगणधर्मास्तु प्रवर्त्तन्त एव ॥ १५ ॥

अतिरात्राच्चतुर्विंशमहरग्निष्टोम उक्थ्यो वा ॥१६॥

अतिरात्रादवसिनाच्चतुर्विंशमहः संज्ञको ऽग्निष्टोम उक्थ्यो वा भवति । गवामयनिकश्चायम । ततश्च द्वादशाहिका अपि धर्माः प्रवर्त्तन्ते ॥ १६ ॥

चत्वारोभिप्लवाः पृष्ठ्यश्च मासः ॥ १७ ॥

एवं चत्वार उत्तरे ॥ १८ ॥

मासा भवन्ति ॥ १८ ॥

षष्ठे त्रयोभिप्लवाः पृष्ठ्यः ॥ १९ ॥

षष्ठे मासेऽभिप्लवाः त्रयः पृष्ठ्यश्च ॥ १९ ॥

अभिजिदग्निष्टोमः ॥ २० ॥

ननु चायमग्निष्टोमसंस्थ एवाभिजित् किमुच्यते अग्निष्टोम इति। उच्यते। अग्निष्टोमग्रहणादभिजिदन्तरं तत्सञ्ज्ञक गवामयनिकमेतत्। अतश्चात्र द्वादशाहिका अपि धर्माः प्रवर्तन्ते ॥ २० ॥

त्रयः स्वरसामानो ऽग्निष्टोमा उक्थ्या वा ॥ २१ ॥

स्वरसामसंज्ञकास्त्रयो भवन्ति अग्निष्टोमा उक्थ्या वा ॥ २१ ॥

अग्निष्टोमो विषुवान् ॥ २२ ॥

विषुवत्संज्ञको ऽग्निष्टोमो भवति ॥ २२ ॥

प्रातरनुवाकः सन्धिवेलायामुदितं यथोक्तं वा ॥ २३ ॥

दिवाकीर्त्यमेतदहर्भवतीति श्रूयते तेनैतदुच्यते सन्धिवेलायामिति। यथेयम नेयता चोदकपरिप्राप्तकालबाधः शक्योऽप्येतुम्। दिवाकीर्त्यता हि ब्राह्मणविषया। अस्य ब्राह्मणं दिवा कीर्त्यत इति। दिवा कीर्त्यत इति दिवा कीर्त्यम्। कीर्तनशब्दश्चोच्चारणार्थो नानुष्ठानार्थः। एवं चेयथोक्तमेवेत्यवधार्यते ॥ २३ ॥

सौर्य उपालम्भ्यः ॥ २४ ॥

सौर्यं द्वितीयं पशुमालभते वैषुवतेऽहनिति वचनात् ॥ २४ ॥

उदुत्यमिति ग्रहग्रहणमतिग्राह्यवद्भक्षवर्जम् ॥ २५ ॥

अतिग्राह्यवच्च विधिर्भवति भक्षवर्जमस्य ॥ २५ ॥

पूर्वपक्षं प्रतिलोमम् ॥ २६ ॥

पूर्वपक्ष प्रातिलोम्येनोत्तरो भवति ॥ २६ ॥
अत्र विशेषमाह—

अभिजित्स्थाने विश्वजिदग्निष्टोमः ॥ २७ ॥

स च—

सर्वपृष्ठश्चेत्सर्वेऽतिग्राह्याः ॥ २८ ॥

भवन्ति । यत्तदपि चाग्निष्टोमग्रहणाद्विश्वजिदन्तरं नैकाहिक इति । एकाहिकत्वे हि अग्निष्टोमग्रहणं न करोत्याचार्यः कृत च । तस्माद्विश्वजिदन्तरं गवामयनिकमेतत् । अतश्च द्वादशाहिका अप्यत्र धर्म्मा भवन्ति ॥ २८ ॥

षष्ठे मासे त्रयोऽभिप्लवा गोऽआयुषी दशरात्रो महाव्रतमग्निष्टोमः ॥ २९ ॥

अत्र दशरात्रे द्वादशाहिको महाव्रतं गवामयनिकं शेषा एकाहिकाः ॥ २९ ॥

महाव्रते विशेषमाह—

प्राजापत्य उपालम्भ्यः ॥ ३० ॥

भवति । प्राजापत्यं महाव्रत इति वचनात् ॥ ३० ॥

ग्रहं गृह्णाति वि न इन्द्र वाचस्पतिं विश्वकर्म्मन्निति वाऽतिग्राह्यवत् ॥ ३१ ॥

गृहीतस्य विधिर्भवति ॥ ३१ ॥

उप मा यन्तु मज्जयस्सनीडा उप मा जुक्षरुप मा मनीषा प्रियामहं तन्वं पश्यमानो मयि रमो देवानां तेजसे ब्रह्मवर्चसायेति भक्षणं यज-

मानैः, पृष्ठ्योपाकरणं [1]वाणेन शततन्तुना॥३२॥

[2]मौञ्जास्तन्तवो वैतसं वादनम् ॥ ३३ ॥

वशीपूपनिशन्ति प्रेङ्खे होता फलके ऽध्वर्युः प्रतिगृणाति ॥ ३४ ॥

प्रेङ्खशब्देन दोलोच्यते ॥ ३४ ॥

उद्गातासन्द्यां प्रादेशपाद्यां सोमासन्दीवत्॥३५॥

अन्यदन्तर्वेदि ॥ ३६ ॥

वक्ष्यमाणं कर्म भवति ॥ ३६ ॥

अभिगराऽपगरौ ॥ ३७ ॥

अभिगरो दीक्षितस्तुतिः । अपगरश्च निन्दा ॥ ३७ ॥
तदेवमुक्तम्—

[3]आक्रोशत्येकः प्रशंसत्यपरः ॥ ३८ ॥

पुंश्चलूब्रह्मचारिणावन्योन्यमाक्रोशतः ॥ ३९ ॥

पुंश्चलूर्जघनचपला स्त्री[4] ॥ ३९ ॥

शूद्रार्यौ चर्म्मणि परिमण्डले व्यायच्छेते ॥४०॥

---

१ वाणो महती वीणा शतं तन्तवो यस्यासौ शततन्तुः, तेनो-पाकरणम् ।

२ अस्मिन् याणे मौञ्जास्तन्तवो वेतसवृक्षसम्बन्धि वादन-मित्यर्थः ।

३ एकः सत्रिणो निन्दामपरश्च स्तुतिं करोतीत्यर्थः ।

४ पुमांसं पुमांसं प्रति चलतीति पुंश्चलू वेश्या, सा च ब्रह्म-चारी च परस्परं निन्दां कुरुतः ।

निमित्तसप्तमीयम् । चर्म्मणि निमित्तभूते१ ॥ ४० ॥

२जयत्यार्यः ॥ ४१ ॥

३मार्जालीयं दक्षिणेन परिवृत्ते मिथुनं सम्भवति ॥ ४२ ॥

क्षत्रियं सन्नाहयति दक्षिणां वेदिश्रोणिमपरेण ॥ ४३ ॥

सन्नहनक्रियां कारयति । कारिते चाध्वर्युणा क्षत्रियं सन्नाहयेति ॥ ४३ ॥

मर्माणि त इति कवचं प्रयच्छति ॥ ४४ ॥

क्षत्रियाय ॥ ४४ ॥

तूष्णीमन्येभ्यः ॥ ४५ ॥

बहुवचनोपदेशात्त्रिभ्य । अन्यशब्दस्य समानजातीयव्यापारक्षत्रियेभ्यः ॥ ४५ ॥

त्रिः समन्तं परियन्ति शालामपरेण चात्वालं वशाचर्मकटे विशाल्यां वा स्तीर्णमुच्छ्रितां वा विध्यन्त्यनिष्पतम् ॥ ४६ ॥

कटे आस्तीर्णं विशाल्यां वा अनिष्पतन्त विध्यन्ति क्षत्रियाः ॥ ४६ ॥

---

१ शूद्रत्रैवर्णिकौ वर्तुले चर्मणि व्यायच्छेते विपरस्मात्मामभिमुखं आकर्षणं कुर्वात, मदीयमिदं मदीयमिदमिति स्पर्धया स्वाभिमुखं बलादाकर्षणं कुर्वात इति यावत् ।

२ तयोस्त्रैवर्णिको जयतीत्यर्थः ।

३ वर्तुले चर्मणि मार्जालीय दक्षिणेन स्त्रीपुमांसावित्यर्थः ।

दक्षिणेन चर्मयन्ति तिर्विद्ध्वा पुरस्ता-

द्विमोचनम् ॥ ४७ ॥

वितानस्य ॥ ४७ ॥

१सदः सूक्तिषु दुन्दुभीन्वादयन्ति ॥ ४८ ॥

२अग्नीध्रमपरेण श्वभ्रं सवालधानेन चर्मणा

ऽवनह्य वालधानेनाहन्ति ॥ ४९ ॥

वालधानं पुच्छमुच्यते ॥ ४९ ॥

३गोधावीणाकाः काण्डवीणाश्च पत्न्यो वा-

दयन्ति ॥ ५० ॥

उपगायन्ति ॥ ५१ ॥

स्तोत्रस्योपगानं कुर्वन्ति ॥ ५१ ॥

अन्यांश्च शब्दान् कुर्वन्ति ॥ ५२ ॥

ये केचन गानप्रसिद्धा मूर्च्छनाद्यय.४ ॥ ५२ ॥

उदकुम्भान् शिरस्सु कृत्वा मार्जालीयं दास्यः

---

१ चतुः स्रक्तिषु ये केचन पुरुषाः सन्ति ते दुन्दुभीन्वा-दयन्तीत्यर्थः ।

२ आग्नीध्रस्थानस्यापरेण गर्तं खात्वा सपुच्छेन चर्मणा छ-न्नं कृत्वा पुच्छेनाहन्तीत्यर्थः ।

३ गोधाचर्मणा नद्धा वीणा गोधावीणाकाः, काण्डः शर इत्यु-च्यते, तन्मय्यो वीणाः, ता उभयविधावीणाः सर्वाः पत्न्यो वादय-न्ति, स्तुतिः सन्निपुणस्ता उपगायन्तीत्यर्थः ।

४ मर्दलभेरीपटहादिअन्यानन्यानपि शब्दान् लोकाः कुर्वन्ती-तिभावः ।

परियन्ति ॥ ५३ ॥

वाचयत्येनाः पर्यायादिषु ॥ ५४ ॥

एतादास्यः पर्यायादिषु वाचयति ॥ ५४ ॥

हैमहा३ हैमहा३ इति ॥ ५५ ॥

पर्यायानिदानीमाह—

गावो हारे सुरभय इदं मधु गावो गुल्गुलुगन्धय इदं मधु गावो घृतस्य मातर इदं मधु ता इह सन्तु भूयसीरिदं मधु तकावयं प्लवामय इदं मधु शम्या प्रतरतामि वेदं मधु न वै गावो मन्दारस्य गङ्गाया उदकं पपुः पपुः सरस्वतीनदीं ताः प्राच्य उज्जिगाहीर इदं मधु निगीर्य सर्वा आधीरिदं मधु मध्वित्याकर्षैः कुशैर्यथेदं मध्विति ॥ ५६ ॥

एवं मध्वित्याकर्षैः कुशैरिति सर्वत्रानुषङ्गः ॥ ५६ ॥

अपसव्यं प्रदक्षिणं चारतोऽन्तात् ॥ ५७ ॥

दास्यः परियन्ति१ ॥ ५७ ॥

त्रिस्त्रिर्वा ॥ ५८ ॥

अपसव्यं प्रदक्षिणं च परिगमनम् ॥ ५८ ॥

---

१ अप्रदक्षिणं सकृत्परियन्ति ततः प्रदक्षिणं सकृत्परियन्ति, महाव्रतस्य स्तोत्रस्य समाप्ति यावत् ।

निषिच्य मार्जालीये पूर्णां निदधाति ॥ ५९ ॥

निषिच्य यत्र क्वचन प्रदेशे मार्जालीये पूर्णां निदधाति दास्यः ॥ ५९ ॥

अभिगरादिस्तूयमाने सर्वं क्रियते ॥ ६० ॥

स्तूयमाने महाव्रतस्तोत्रे । महाव्रतशब्दश्च एकः क्रतुप्रतिपादकः महाव्रतमग्निष्टोम इति । अपरः स्तोत्रपर्यायः महाव्रतेन स्तुवीतेति अत्र च श्रूयत इति । स एव संवत्सरस्त्रिमहाव्रतश्चतुर्विंशे महाव्रतं विषुवति महाव्रतं महाव्रत एव महाव्रतमिति । त्रिष्वपि क्रतुषु महाव्रतस्तोत्रं भवतीति संप्रदायः । महाव्रत एव महाव्रतमित्यपरे । एवं हि श्रूयते । त्रिमहाव्रतं प्रकृत्य ते तेजस्विन आसुः सत्यवादिनः संशितव्रताः यैस्तु त्रिमहाव्रतत्वमनुष्ठितमन्ये आचार्या इति । अथ य उ हैनमप्येतर्हि तथापेयुर्यथा तैरनुष्ठितम् । एषां दोषमाह । यथा अपात्रमुदकं आसिक्तं विमृत्येदेवं हैव ते विमृत्येयुः । अतश्च उपर्युपयन्ति महाव्रतक्रतौ महाव्रत स्तोत्रमिति अमहाव्रते दोषमुद्भाव्य महाव्रते महाव्रतस्तोत्रं विदधाति । अतश्च विकल्पो न महाव्रत एव महाव्रतमिति ॥ ६० ॥

अतिरात्रः श्वः ॥ ६१ ॥

प्रातरनुवाकाच्च्यमिति चेत् । उच्यते । संवत्सरसत्त्रस्यापवर्गे संवत्सरेऽतिरात्राभावो मा भूदित्यतिरात्रग्रहणम् । यद्येवमतिरात्रः किमिति भवति । अथैतदहरस्येति पर्यायुर्वाचामिति वचनात् ॥ ६१ ॥

तिस्रोऽनूबन्ध्या मैत्रावरुणी वैश्वदेवी बार्हस्पत्याः ॥ ६२ ॥

अत्र च द्रव्याभ्यासो न कर्मभेदप्रत्ययः । अभ्यस्तरूपमेव कर्म प्रकृतापेक्षत्वात् ॥ ६२ ॥

संवत्सरावरेषु सत्त्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च ॥ ६३ ॥

क्रतुषु तिस्रोऽनूबन्ध्या भवन्ति । एवं श्रूयते स यः सहस्रं वा भूयो वा दद्यात्स एताः सर्वा आलभेतेति । तथा अथो ये दीर्घसत्त्र-

मासीरं संवत्सरं वा भूयो वा त पनाः सर्वा आलभेरन्निति ॥६३॥

अनूबन्ध्यावपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ ६४ ॥

भवतीति सूत्रशेषः ॥ ६४ ॥

पत्न्यश्च ॥ ६५ ॥

वपने नाभिसंवपन्ते ॥ ६५ ॥

त्रैधातव्युदवसानीया सर्वत्र ॥ ६६ ॥

सर्वत्र ग्रहणेन संवत्सराणि असारस्वतानि सहस्रदक्षिणाश्च क्रतवो गृह्यन्ते । तुल्यं हि ब्राह्मणमत्रानूबन्ध्या विधायकं त्रैधातवीया विधायकं च ॥ ६६ ॥

अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठ्यशमनीयः ॥ ६७ ॥

अवभृथग्रहणं समाप्त्युपलक्षणार्थम । ननु चाग्निष्टोम एव भवति संस्थान्तरस्यानुक्तत्वात् व्यर्थमग्निष्टोमग्रहणम् । उच्यते । गुणकामानां प्रवृत्तिज्ञानार्थमित्यदोषः । पृष्ठ्यशमनीय इति च संज्ञा ॥ ६७ ॥

सहस्रदक्षिणो वा ॥ ६८ ॥

वा प्राकृतदक्षिणः ॥ ६८ ॥

एकाहमेके ॥ ६९ ॥

इच्छन्ति ॥ ६९ ॥

सत्त्राङ्गं प्रकरणात् ॥ ७० ॥

स च पृष्ठ्यशमनीयः सत्रस्याङ्गं भवति । तद्धि प्रकृत्य श्रूयते

अवभृथादुदेत्य ज्योतिष्टोमाऽग्निष्टोमः पृष्ठ्यशमनीय इति ॥ ७० ॥
किं च—

फलाऽश्रुतेश्च ॥ ७१ ॥

न चात्र फलं श्रूयते । तस्मादपि सत्त्राङ्गम ॥ ७१ ॥

न फलं न्यायात् ॥ ७२ ॥

नैतदेवं सत्त्राङ्गमिति । न्यायेन हि फलमत्र परिकल्पते ॥७२॥

कालप्राधान्याच्च ॥ ७३ ॥

अपि चाऽस्य कालः प्रधानः शब्दः सत्त्रादुदयसायेति । एवं प्राप्ते पुनर्व्यावर्त्तते । सत्त्राङ्गमेव प्रकरणात् । फलवत्सत्त्रसंनिधौ तदङ्गतैव न्याय्या एव च फलं न फलयितव्यं भवति । पृष्ठशमनीय इति चार्थानुगता संज्ञा । पृष्ठानां सत्र नियुक्तानामुपशान्तश्रमाणां शमनं करोतीति पृष्ठशमनीयः । सारस्वतेषु च प्रतिषेधात् । अपृष्ठशमनीयानि सारस्वतानीति ॥ ७३ ॥

सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन्रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति त्रिरूपां वा ॥ ७४ ॥

अहीनः सहस्रदक्षिणस्त्रिरात्रस्तत्र प्रतिविभागेन प्रत्यहं दक्षिणापर्यन्त दक्षिणानयप्ररोहिणीं पर्यायान्तरोपध्वस्तां अप्रवीतामतिरेचयति । त्रिरूपां वेति विकल्पः । एवमेव हि श्रूयत इति ॥ ७४ ॥

आद्येहन् प्रथमां नयेदन्त्ये वा पश्चात् ॥ ७५ ॥

आद्येऽहनि पक्षे गवां प्रथमां नयेत् । अन्त्ये वाऽहनि पश्चादिति ॥ ७५ ॥

हविर्धानाग्नीध्रान्तरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति ॥ ७६ ॥

हविर्धानाग्नीध्रान्तरऽवस्थितामेतां रोहिणीं द्रोणकलशमाघ्रापयत्याजिघ्रेत्यनेन मन्त्रेण ॥ ७६ ॥

इडे रन्त इति दक्षिणेऽस्याः कर्णे यजमानो जपति ॥ ७७ ॥

प्रत्यगागीयोगेपि सति यजमानग्रहणं क्रियते । रोहिणीसंस्कारोऽप मिति मध्वर्युर्मा भूदि ॥ ७७ ॥

वोचेरिति वान्ते ॥ ७८ ॥

मन्त्रस्य सूत्रादिति विकल्पः ॥ ७८ ॥

सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् ॥ ७९ ॥

त्रिस्त्रोथ होतृभ्यस्तिस्रस्तिस्र उपादाय रोहिणीं दशमीं कृत्वा होत्रे दद्यात् ॥ ७९ ॥

उन्नेतारौ वाकृत्वानाश्रावयते ॥ ८० ॥

द्वौ चोन्नेतारौ, कुर्यातेति वचनात् । तयोश्च यतरोऽनाश्रावयेत् तस्मा एनां दशमीं दद्यात्, होत्रे वेति विकल्पः । उन्नयनन्तु विभागेन कुर्यात ॥ ८० ॥

दशादशाऽभेदन दक्षिणा दद्यात् ॥ ८१ ॥

अन्यूना दशातो नयेदिति वचनात् । अत्र च चोदकापाधेन दद्यतीनां दानमनुष्ठेयम् ॥ ८१ ॥

. अनूबन्ध्यवपाहोमान्ते दद्यादेनाम् ॥ ८२ ॥

दशमीमिति सूत्रशेषः ॥ ८२ ॥

उदवसानीयायां वा ॥ ८३ ॥

वेतिविकल्पः ॥ ८३ ॥

अन्यदिच्छन् ॥ ८४ ॥

विकल्पः ॥ ८४ ॥

अहर्गणे व्युत्क्रामतायन्वहम् ॥ ८५ ॥

कर्त्तव्यमिति सूत्रशेषः ॥ ८५ ॥

वसतीवरिग्रहणं च ॥ ८६ ॥

अन्वहमेव कर्त्तव्यम् ॥ ८६ ॥

एके माध्यन्दिने ऽवनीय ॥ ८७ ॥

वसतीवरिग्रहणं च अन्वहमेवं कर्त्तव्यम् । एके माध्यन्दिनेऽवनीय वसतीवरिग्रहणं कुर्वन्ति । एके परिहारकाल एवेति विकल्पः । माध्यन्दिनेऽवनीय ॥ ८७ ॥

इति श्रीउपाध्यायकर्ककृतौ कात्यायनभाष्ये
त्रयोदशो ऽध्यायः समाप्तः ॥



# चतुर्दशोऽध्यायः ।

वाजपेयः शरद्यवैश्यस्य ॥ १ ॥

गवामयनमभिहितमिदानीमवसरप्राप्तो वाजपेयोऽनुविधेय । वाजपेय इति कर्मनामधेयम् न हि द्रव्ये गुणे वा प्रसिद्धिरस्य । स च शरदि भवति । शरदि वाजपेयेन यजेतेति वचनात् । अवैश्यस्येति शाखान्तरात् । लिङ्गाच्च । अथ यदि ब्राह्मणो यजत यदि वा राजन्यो यजेतेति विशेषविधानम् ॥ १ ॥

उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजते ॥ २ ॥

वायुत्तरौ शुक्लपक्षौ तयोर्बृहस्पतिसव ॥ २ ॥

ज्योतिष्टोमेन वा ॥ ३ ॥

यजतेति विकल्पः ॥ ३ ॥

द्वादशवा ॥ ४ ॥

उभयतः शुक्लपक्षान्यजते ॥ ४ ॥

तत्र च—

१पुरस्तादयुक्षु ज्योतिष्टोमः पार्ष्ठिकानीतरेषु ॥५॥

अयुक्षु पक्षेषु पार्ष्ठिकानीति ॥ ५ ॥

प्रतिलोमं पार्ष्ठिकान्युपरि ॥ ६ ॥

उपरिष्टात्प्रातिलोम्येन । अयुक्षु पार्ष्ठिकानि। युक्षु च ज्योतिष्टो-

---

१ शुक्ले पक्षे ऽयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमैकादशेषु पञ्चसु दिनेषु ज्योतिष्टोम , युग्मेषु द्वितीयचतुर्थषष्ठाष्टदशमद्वादशेषु च, पृष्ठ्यषडहानि भवन्तीत्यर्थः ।

मः । पार्ष्टिकान्यपि प्रातिलोम्येन त्रयस्त्रिंशदारम्भणानि भवन्ति ॥ ६ ॥

१सर्वाग्निष्टोमैर्वा राजसूयसोमैः ॥ ७ ॥

उभयतो यजते, तेषां च संस्थामात्रापनयः ॥ ७ ॥

प्रतिलोममुपरि ॥ ८ ॥

उपरिष्टात्प्रातिलोम्येन ज्योतिष्टोमादारभ्येति । अत्राश्वदाभ्यग्रहणं राजसूयसोमोपदेशाद्भवति । पार्ष्टिकेष्वसत्त्वान्न भवति । अतिग्राह्यग्रहणमपि त्र्यहसंयोगान्न भवतीति सम्प्रदायः ॥ ८ ॥

२नानादीक्षाः परियज्ञाः कालभेदात् ॥ ९ ॥

पार्ष्टिकानां तन्त्रेण दीक्षाः कृताः । इहापि तथैव मा भूवन्निति नानादीक्षात्वमुच्यते । तत्कुतः । कालभेदात् । भिन्नो ह्यत्र काल इति ॥ ९ ॥

सप्तदशदीक्षाः ॥ १० ॥

परियज्ञानां दीक्षाः प्राप्ता एव । एतास्तु वाजपेयस्य ॥ १० ॥

देवसवितरिति जुहोति यजत्यादिषु ॥ ११ ॥

स कर्मणः कर्मणः पुरस्तादेतां सावित्रीमाहुतिं जुहोतीति वचनात् । कर्मशब्दः प्रायशो यजतिष्वेव वर्तत इत्यभिप्रायः । तेन यजत्यादिष्वित्युक्तम् ॥ ११ ॥

सकृद्दीक्षारम्भे कर्मैकत्वात् ॥ १२ ॥

अप्सु दीक्षाद्यारम्भे सकृदेव होतव्या । कुत एतत् । कर्मैकत्वात् । कार्यैकत्वादित्यर्थः । एकं हि कार्यं दीक्षाणां पुरुषसंस्का-

---

१ अथ योभयतो राजसूयान्तर्वर्तिभिः पवित्राभिषेचनीयादिभिः सप्तभिर्नवभिर्वा सोमयागैर्यजेताग्निष्टोमसंस्थैरित्यर्थः ।

२ उभयतो विहिताः परियज्ञा बृहस्पतिसवादयः पृथग्दीक्षा भवन्तीत्यर्थः ।

र इति । यजस्यादिषु पुनर्ये वाजपेयाङ्गभूता यजतयो दीक्षणीयाद्य तेऽन्येव न तदङ्गष्वपि प्रजादिषु । न हि त साक्षाद्वाजपेयस्य ॥ १२ ॥

क्रयणवेद्यारम्भणप्रवर्ग्योत्सादनाग्निप्रणयन-
हविर्धानाग्नीषोमाणाः सदआग्नीध्रधिष्ण्य-
निवपनवसतीवरिग्रहणपरिहरणेषु च कर्मा-
न्तरत्वात्प्राक्सुत्यायाः ॥ १३ ॥

क्रयणादीनि प्रागेव सुत्याया भवन्ति । यजतिविशेषणमेतत् प्राक्सुत्याया इति । यथाग्नीषोमीयेण पशुना चरित्वैतामाहुतिमुत्सृजन्तीति वचनात् ॥ १३ ॥

सोमात्क्रीयमाणात्सहित दाक्षिणतः सीसेन
परिस्रुतः क्रयण केशवात् ॥ १४ ॥

भवतीति सूत्रशेषः । क्रयणो दीर्घकेशः पण्ढ इति केचित् । परिस्रुत्सुरोच्यते ॥ १४ ॥

तद्द्रव्याणां वा ॥ १५ ॥

परिस्रुद्द्रव्याणा[1] वा क्रयणं परिस्रुतो वेति विकल्पः ॥ १५ ॥

पर्युह्यमाणेऽनुहरणम् ॥ १६ ॥

पर्युह्यमाणे सोमे परिस्रुतस्तद्द्रव्याणां वाऽनुप्रहरणम् ॥ १६ ॥

दक्षिणेन प्रवेश्य दक्षिणाग्नौ पक्त्वाऽपरेन्ते नेष्टा
सुरां करोति ॥ १७ ॥

दक्षिणेन द्वारेण विमिते प्रवेश्य दक्षिणाग्नौ पक्त्वा सुरामपरेन्त नेष्टा करोति । यदि न पक्वा तत पच्यते ॥ १७ ॥

---

१ तानि च 'शष्पतोक्मलाजानग्नहु' सञ्ज्ञानि ।

खरं कृत्वा नाराशंसस्थाने ऽपरम् ॥ १८ ॥

१करोतीति वाक्यशेषः ॥ १८ ॥

दक्षिणतः सन्धि करोति ॥ १९ ॥

दक्षिणतो हविर्धानस्य कुद्वारं करोतीत्यर्थः ॥ १९ ॥

यूपवेष्टनं सप्तदशभिर्वासोभिर्व्युदग्रन्थनं वा परिव्ययणकाले ॥ २० ॥

सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवतीति वचनात्। व्युद्ग्रन्थनं च अवचूलकरणम्। तच्च परिव्ययणकाले परिव्ययणादूर्ध्वं परत, आगन्तुकत्वात् ॥ २० ॥

श्वो वा सवनीयेषु ॥ २१ ॥

यूपवेष्टनं भवति। तत्र हि वाजपेयशब्दो वर्त्तते। वा अग्नीषोमीय एव व्युद्ग्रन्थनं कर्त्तव्यम्। यूपसंस्कारत्वात्तस्य तदुद्देशेन विहितत्वात् ॥ २१ ॥

उत्कीर्णसमाग्रो गौधूमचषालः ॥ २२ ॥

यूपो भवतीति वाक्यशेषः। गर्त्तस्याग्रूपो तीक्ष्णाग्रो भवतीति।तथा गौधूमं चषालं भवतीति श्रुतेः। गौधूमं गोधूमविकारमयं चषालं भवति ॥ २२ ॥

सुत्यादौ हिरण्यस्रजोऽपिनह्यन्ते ऽधिकृता यजमानः पत्नी च सुत्यस्य तच्छन्दात् ॥ २३ ॥

हिरण्यमालिनो वाजपेयेन चरन्तीति श्रूयते। सुत्या च वाजपेयशब्दस्य वाच्या ॥ २३ ॥

---

१ मदमादनार्थं प्राकृतं खरं कृत्वा ऽवपर्युदेव नाराशंससंज्ञानां चमसानां निधाने द्वितीय खरमिति, करोतीत्यस्य पूर्वे विष्यते।

सर्वत्राविशेषात् ॥ २४ ॥

सर्वत्र वा हिरण्यमालित्वं सर्वो ह्ययं वाजपेय इति ॥ २४ ॥

एकधनप्रवेशनकाले सुरां नेष्टाऽपरेण प्रवेश्य खरे करोति सन्धिना पात्राण्याहृत्य पात्रे वालेन पुनाति ॥ २५ ॥

नेष्टैवाभिप्रवृत्तत्वात् ॥ २५ ॥

प्रातःसवनेतिग्राह्यान्गृहीत्वा षोडशिनं पञ्च चैन्द्रान् ॥ २६ ॥

ग्रहान् गृह्णाति ॥ २६ ॥

ध्रुवसदमिति प्रतिमन्त्रमतिग्राह्यवद्धोमः ॥२७॥

पञ्चानामैन्द्राणाम् ॥ २७ ॥

सप्तदशापरान् ॥ २८ ॥

सोमग्रहान् गृह्णाति ॥ २८ ॥

नेष्टा च तावतः सौरान् ॥ २९ ॥

चशब्दात् गृह्णाति ॥ २९ ॥

व्यत्यासं ग्रहणम् ॥ ३० ॥

सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टैवमेवैनान्व्यत्यासं गृह्णीत इति वचनात् ॥ ३० ॥

१अक्षानतिक्रमणं ग्रहाणाम् ॥ ३१ ॥

---

१ सोमग्रहाणां सुराग्रहाणां च अक्षाणमुल्लङ्घनं न कर्त्तव्यमित्यर्थः ।

कर्त्तव्यमिति शेषः ॥ ३१ ॥

उपर्युपर्यक्षमध्वर्युर्धारयत्यधोधो नेष्टा सम्पृचाविति ॥ ३२ ॥

अनेन मन्त्रेण ॥ ३२ ॥

विपृचाविसाहरतः ॥ ३३ ॥

अध्वर्युर्नेष्टा च ॥ ३३ ॥

ततः—

हिरण्येन मधुग्रहं गृहीत्वा खरमध्ये सादयति उक्थ्यादि ॥ ३४ ॥

अतिरात्रपशूनुपाकृत्य वशापृश्नि मरुद्भ्य उज्जेषेभ्यः ॥ ३५ ॥

उपाकरोति । वशारिक्ता । पृश्निश्चित्रा ॥ ३५ ॥

तदभावे ऽपृश्निम् ॥ ३६ ॥

पृश्न्यभावे अपृश्निमुपाकरोति ॥ ३६ ॥

प्राजापत्यांश्च सप्तदश १ श्यामतूपरान् वस्तान् ॥ ३७ ॥

उपाकरोति ॥ ३७ ॥

तद्गुणाभावे सर्वेषामेकदेशोऽपि ॥ ३८ ॥

तद्गुणः स्यात् । एवं हि श्रूयते । यद्यवः समृद्धान्न विन्देदपि कतिपया एवैवः समृद्धाः स्युरिति ॥ ३८ ॥

---

१ श्यामश्चासौ तूपरश्चेति विग्रहः । तूपरः शृङ्गरहितो, वस्तः साण्डः प्रजनयितेति यावत् ।

## वाच उत्तममेके ॥ ३९ ॥

तद्धैके वाच उत्तममालभन्त इति वचनात् । सप्तदशं पशुमेके वाच आलभन्ते । एके प्राजापत्यमिति विकल्पः । तस्य च नोपांशुत्वमप्राजापत्यत्वात् । अत्रैतच्चिन्त्यते । किं सप्तदशपशुगणसाधनकमेकं कर्म, उत सप्तदशैतानि कर्माणीति । कुतः सन्देहः । यदि कृतैकशेषाणां तद्धितः अयं चायश्चेत्यकशेषीकृत्य तद्धितोत्पत्तिस्तदैकं कर्म । अथ तद्धितोत्तरकालमेकशेषः प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या इति । तदा सप्तदशकर्माणि । अत्र च चोदकावाधेन वाक्यव्यावर्णनं कर्त्तव्यम् । प्रकृतावेकपशुनिष्पन्नेन हृदयादिगणेन यागाभिनिर्वृत्तिः कृता । इहापि तथैव क्रियेत चेत् । षोडशानामालम्भवैयर्थ्यम् । अथैकैकमवदानं गृहीत्वा एकादशसंख्या पूर्यते । तथा सति षण्णामालम्भवैयर्थ्यंप्रसङ्गः । न च चोदकानुग्रह इति । तस्मादेकशेषीकृतानां तद्धितोत्पत्तिर्युक्तरूपा । कृततद्धितानां त्वेकशेषे नैष दोषो भवति । तस्मात्सप्तदशैतानि कर्माणीति । तेषां च सम्प्रतिपन्नदेवतैकत्वात्सकृत्प्रक्षेपः । नन्वेवमपि अवदानप्रदानान्तता न सम्भवति । तत्र चोदकाबाध एव । नैष दोषः । अवदानस्य प्रदानान्ततानुग्रहे सति प्रधानस्यावृत्तिः प्राप्नोति । न चैषा गुणानुरोधेनेष्टेति । तस्मात्सकृत्प्रक्षेप इति । सकृत्प्रक्षेपं च दर्शयति प्रजापतय इत्युपांशूक्त्वा छागानांऽहविषोऽनुब्रूहीति प्रजापतय इत्येवोपांशूक्त्वा छागानांऽहविः प्रस्थितं प्रेष्येति वषट्कृते जुहोतीति । एतदाचार्येणापि प्रदर्शितमेव । न द्रव्यभेदे गुणयोगादिति वात्स्य इति ॥३९॥

## माहेन्द्रान्ते वशावपाचरणम् ॥ ४० ॥

माहेन्द्रग्रहयाज्याभ्यासान्ते वशाया वपाप्रचारः ॥ ४० ॥

## अवदानैश्च द्वैधंऽ शृतैः ॥ ४१ ॥

वशावदानैश्च द्वैधंऽ शृतै प्रचारः । द्वेधावदानानि श्रपयन्तीति वचनात् । वशाब्दाद्वपाप्रचारोत्कर्षे द्वेधा श्रपणम् । स्वकाल एव प्रधानयागः ॥ ४१ ॥

पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यत्युत्तराणि त्रिशे ददाति ॥ ४२ ॥

पूर्वाणि हृदयादीनि । उत्तराणि त्र्यङ्गानि ॥ ४२ ॥

वामदेव्यग्रहान्ते प्राजापत्यानाम् ॥ ४३ ॥

वपाप्रचार ॥ ४३ ॥

स्रुग्व्यूहनात्प्राग्वविपा ॥ ४४ ॥

प्राजापत्यानां प्रचार ॥ ४४ ॥

यथान्यायं वोभयोः ॥ ४५ ॥

यथान्यायं वा उभयो. वपाहविषो प्रचारो भवति । यथान्यायशब्देन चोदकानुसरणमुच्यते ॥ ४५ ॥

वशायाश्च ॥ ४६ ॥

चोदकानुसार एव नोत्कर्ष इति । वाशब्दो विकल्पार्थः । विकल्पेन द्योतच्छ्रूयत इति ॥ ४६ ॥

ऐकध्यं च श्रपणम् ॥ ४७ ॥

ऐकध्येन श्रपणमवदानानामस्मिन्पक्षे ॥ ४७ ॥

अदानं च त्रिशे ॥ ४८ ॥

त्र्यङ्गानाम् । त्रिइ शब्देन प्रजोच्यते ॥ ४८ ॥

माध्यन्दिनीयैः सह नैवारश्चरुः सप्तदशशरावपरिमाणो बार्हस्पत्यः कर्त्तव्यः ॥ ४९ ॥

माध्यन्दिनीयै. सवनीयै सह नैवारश्चरुर्बार्हस्पत्य. सप्तदशशराव. ॥ ४९ ॥

अत्र चोदकप्राप्तेन चतुर्मुष्टिना निर्वापेन सप्तदशशरावो न भवतीति अवश्यं भवति संख्यामुष्टिबाध इदमाह—

संख्यामुष्टिनिवृत्तिः सामान्यात् ॥ ५० ॥

संख्यासामान्येन सप्तदशसंख्यया चतुः संख्यानिवर्त्यते शरावैश्चमुष्टयः । कुत एतत् । सामान्यं हि समानस्य निवर्त्तकं भवति । यथा तैलं घृतस्येति ॥ ५० ॥

एवं प्राप्त आह—

न यजतिशब्दात् ॥ ५१ ॥

नैतदेवं संख्यामुष्ट्योरुभयोरपि निवृत्तिरिति । किं कारणम् । यजतिशब्दात् । यागे हि सप्तदशसंख्यशरावाणि श्रूयन्ते । चतुःसंख्यामुष्टयश्च निर्वापे । न चान्यत्र श्रुतं सत्यपि सामान्येऽन्यस्य निवर्त्तकं भवति । न हि शिरोऽभ्यङ्गे श्रुतं तैलं भोजने घृतस्य निवर्त्तकं भवति । कथं तर्हि चतुर्मुष्टिके निर्वापे सति सप्तदशशराव ओदनो भवति । उच्यते । अर्थादन्यतरस्य निवृत्त्या भवितव्यम् । संख्याया मुष्टीनां वा तत्रानिवृत्त्या सप्तदशशरावो भवति । तत्रापि संख्याया मुष्टीनां वा निवृत्तिर्नोभयोः । तत्र मुख्यत्वात्संख्यानुग्रहः जघन्यत्वान्मुष्टिलोप इति । सपादचतुःशरावपरिमाणेन पात्रेण निर्वापे क्रियमाणे सप्तदशशराव ओदनो भवति । एवं मुष्टीनां लोपः संख्यानुग्रहश्च भवति । ननु च मुष्टयः प्रधानभूता, संख्या गुणभूता तदवश्यं कर्त्तव्ये बाधे वरं गुणो बाधितो न प्रधानमिति । अत्रोच्यते । न हि संख्यामुष्ट्योरत्र गुणप्रधानभावः । उभयोरपि हि निर्वापसम्बन्धः । संख्याया मुष्टिसम्बन्धविधाने मुष्टीनां च निर्वापसम्बन्धविधौ वैरूप्यलक्षणो वाक्यभेदः प्राप्नोति । तस्मादुभयोर्निर्वापसम्बन्धः । यश्च गुणयोः परस्परतो व्यवच्छेद्यव्यवच्छेदकभावः सोऽर्थाच्च शब्दादिति । न हि व्यवच्छेद्यमन्तरेण संख्याया निर्वापसम्बन्धो भवति । तस्मात्संख्यानुग्रहो मुष्टिलोपश्चेति सिद्धम् ॥ ५१ ॥

सप्तदशसप्तदश शतानि ददाति गोत्वाजावीनाम् ॥५२॥

प्रत्येकम् ॥ ५२ ॥

सप्तदशावृपल्यो निकण्ठ्यः ॥ ५३ ॥

चतु सौवर्णिको निष्क. कण्ठ यासां ता निष्ककण्ठ्य ॥५३॥

हस्तिवत्सकमहानसानाम्[1] ॥ ५४ ॥

सप्तदशसंख्याविशिष्टानां दानम ॥ ५४ ॥

[2]जातेर्जातेश्चा सप्तदशगणपूरणात् ॥ ५५ ॥

कुत एतत् । सप्तदशानि ददातीति श्रुते. । भिन्नजातीयत्वे चैतद्भवतीत्यभिप्राय. ॥ ५५ ॥

द्रव्येषु वा सप्तदशता सप्तदशसप्तदशानि ददातीति ॥ ५६ ॥

न भिन्नजातीयेषु । एव श्रूयते सप्तदशसप्तदशानि ददातीति । गोदान एव दक्षिणा सूचित महाभागा हि गाव इति तस्माद्द्रव्येषु सप्तदशता ॥ ५६ ॥

मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणम् ॥ ५७ ॥

तत्र रथावहरणात् तस्य प्रदेशान्तरे स्थापितत्वात् रथावहरण करोतीति । अवपूर्वश्च हरतिरवतारणे प्रवर्त्तते ॥ ५७ ॥

दक्षिणेन चात्वालमावर्त्तयति वाजस्येति धूर्गृहीतम् ॥ ५८ ॥

दक्षिणेन चात्वालमावर्त्तयति वाजस्येति धूर्गृहीतम् । रथमावर्त्तयति चात्वालस्य दक्षिणतो. वाजस्येत्यनेन मन्त्रेण ॥ ५८ ॥

---

१ महानसोऽरथ उच्यते ।

२ यावद्रथाश्वाजाविजातीयसप्तदशगणा पूर्यन्ते तावद्ददातीति भाव

अश्वान्प्रोक्षत्यपोवनीयमानान्त्स्नातान्वागता-
नप्स्वन्तरिति ॥ ५९ ॥

अनेन मन्त्रेण । देवीराप इति वा ॥ ५९ ॥

समुच्चयो वा ॥ ६० ॥

मन्त्रयोर्भवतिं । एवमपि हि श्रूयते ॥ ६० ॥

दक्षिणं युनक्ति वा तो वेति ॥ ६१ ॥

अनेन मन्त्रेण रथं ॥ ६१ ॥

उत्तरं वा तरᳫहा इति ॥ ६२ ॥

युनक्तीति वर्तते ॥ ६२ ॥

दक्षिणाप्रष्टिं १ जवो यस्त इति ॥ ६३ ॥

दक्षिणाप्रष्टिं दक्षिणस्य द्वितीय उच्यते ॥ ६३ ॥

२अयुक्तश्चतुर्थोऽनुगच्छति सर्वयन्ती ॥ ६४ ॥

यन्त्रीति कविकापर्याणाद्युपेतः ॥ ६४ ॥

बार्हस्पत्यमेनानाघ्रापयति वाजिन इति ॥ ६५ ॥

अनेन मन्त्रेणाबार्हस्पत्योनैवारचरुस्तम् । अश्वानवघ्राणं चाश्वसंस्कारो वाक्यशेषात् । तद्यदश्वानवघ्रापयति वीर्यमेवैष्वेतद्दधातीति । स चाश्वमाजिधावनार्थं संस्कार । ततश्च विस्मरणे तदुत्तरकालं न भवति ॥ ६५ ॥

---

१ धुर्यापेक्षया प्रकृष्टे देशमश्नातीति पृष्टिर्वाह्यो युग्य इत्यर्थः ।

२ मुखरीवल्गाचतुःकटपल्याणादिसर्वयन्त्रोपेतः सर्वयन्त्रीत्युच्यते ।

चतुर्युजो युनक्त्यपरांस्तूष्णीं बहिर्वेदि षोडश ॥६६॥

रथान् । योजनक्रियाशेषत्वात् मन्त्रप्राप्तिमो भूदिति तूष्णीमि-
त्युच्यते ॥ ६६ ॥

देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे
नाभिमात्रे स्थाणौ स्थितम् ॥ ६७ ॥

स्थाणुःशङ्कुरुच्यते ॥ ६७ ॥

ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः ॥ ६८ ॥

क्षत्रियस्य चक्रारोहणदुन्दुभिवादमन्त्रा ऐन्द्रा भवन्ति ॥६८॥

सप्तदश दुन्दुभीनासजत्यनुवेदि पश्चादाग्नीध्रात् ॥ ६९॥

आग्नीध्रमपरेण सप्तदशदुन्दुभीनवगलयन्ति अनुवेदि ॥६९॥

बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति तू-
ष्णीमितरान् ॥ ७० ॥

आहन्तीति वर्तते । तत्र च तूष्णीमिति मन्त्रनिवृत्त्यर्थमाह॥७०॥

क्षत्रियः सप्तदशेषुप्रव्याधानस्यति तीर्था-
दुदीचः ॥ ७१ ॥

इषुप्रव्याध इषुप्रक्षेप उच्यते । तीर्थादारभ्य सप्तदशेषुप्रक्षे-
पान्प्रक्षिपतीत्यर्थं ॥ ७१ ॥

अन्त्ये मिनोत्यौदुम्बरीं शाखाम् ॥ ७२ ॥

* अन्त्ये प्रक्षेपे शाखामौदुम्बरीं निखनति ॥ ७२ ॥

देवस्याहमिति यजुर्युक्तमारोहति यजमानः ॥७३॥

यजुर्युक्तं रथं यजमानो देवस्याहमित्यनेन मन्त्रेण आरोहति ॥७३॥

अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय ॥ ७४ ॥

चशब्दाद्यजुर्युक्तं रथन्तरमध्वर्योर्ब्रह्मचारी अध्वर्युणा य उपनीतः तस्य यान्ते वासी शिष्यो यजमानवाचनायारोहति ॥ ७४ ॥

इतरेषामेकस्मिन्राजन्यो वैश्यो वा सौरप्रतिग्रहाय ॥ ७५ ॥

आरोहतीति वर्त्तते । इतरेषां रथानां राजन्यवैश्ययोरन्यतर एकस्मिन्नारोहति सौरग्रहणाय ॥ ७५ ॥

आजिं शीघ्रं यन्ति ॥ ७६ ॥

आजिशब्देन स्पर्धोच्यते । स्पर्धया अहमहमिकया शीघ्रं धावन्ति ॥ ७६ ॥

वाजिन इति वाचयति ॥ ७७ ॥

ब्रह्मचार्यन्तेवासी वा यजमानम् ॥ ७७ ॥

ब्रह्मा त्रिः साम गायति ॥ ७८ ॥

त्रिस्सामगानं करोतीत्यर्थः ॥ ७८ ॥

दुन्दुभीन्वादयन्ति ॥ ७९ ॥

बहुवचनोपदेशात् प्रकृता अप्रकृताश्च ॥ ७९ ॥

एष स्य इति प्रत्यृचं जुहोति ॥ ८० ॥

धावत्स्वेवैष स्य इति प्रत्यृचमाहुतीर्जुहुयात् ॥ ८० ॥

अनुमन्त्रयते वा ॥ ८१ ॥

धावतोऽश्वान् ॥ ८१ ॥

उत्तरणे च त्रिचेन ॥ ८२ ॥

चशब्दाज्जुहोति अनुमन्त्रयते वा। अथोत्तरेण त्रिचेन जुहो-
ति वानुवामन्त्रयत इति वचनात्। भसन्नियोगार्थे पृथग्यो-
गकरणम् ॥ ८२ ॥

सुन्वन् जपति ॥ ८३ ॥

सुन्वन्यजमानो जितातीतरान् रथान् ॥ ८३ ॥

शाखां प्रदक्षिणं कृत्वा यन्ति ॥ ८४ ॥

औदुम्बरीं शाखाम्प्रदक्षिणा कृत्वा आगच्छन्ति रथै ॥ ८४ ॥

आगतेषु ब्रह्मावरोहति देवस्याहमिति ॥ ८५ ॥

सर्वेष्वागतेषु रथचक्रात् ब्रह्मावरोहति देवस्याहमित्यनेन
मन्त्रेण ॥ ८५ ॥

एषाह व इति मन्त्राहृतमवहरते ॥ ८६ ॥

दुन्दुभिम् ॥ ८६ ॥

तूष्णीमितरान् ॥ ८७ ॥

यजमानो अवरुह्य रथात् ॥ ८७ ॥

अवरुह्य नैवारमालभते तीर्थे स्थितमा मा
वाजस्येति ॥ ८८ ॥

चात्वालोत्करावन्तरेण स्थितं नैवारं चरुं आमावाजस्येत्यनेन
मन्त्रेणालभते ॥ ८८ ॥

यजुर्युक्तानाघ्रापयति वाजिन इति ॥ ८९ ॥

यजुर्युक्तांस्त्रीनश्वानेवारमाभ्रापयति वाजिन इत्यनेन मन्त्रेण ॥ ८९ ॥

चतुर्थं युक्त्वा ऽध्वर्यवे ददाति ॥ ९० ॥

चतुर्थमश्वं युक्त्वा ऽध्वर्यवे रथं ददाति ॥ ९० ॥

सर्वेभ्यः षोडश ॥ ९१ ॥

सर्वेभ्य ऋत्विग्भ्यः षोडशरथान् ददाति ॥ ९१ ॥

अध्वर्युयजमानौ मधुग्रह९ं सौरप्रतिग्रहाय प्रयच्छत उत्तरस्यां वेदिश्रोणा उपविष्टाय ॥९२॥

सौरप्रतिग्रहीता च राजन्यो वैश्यो वा योसौ रथमारूढः ॥९२॥

नेष्टा च सौरान्पश्चिमेन निर्हृत्य शालामपरेण हृत्वैकं सौरप्रतिग्रहाय प्रयच्छन्नाह्वानेन त इमं निष्क्रीणामीति ॥ ९३ ॥

ततः सर्वानेव सौरान्प्रयच्छति मधुग्रहं चादत्ते ॥ ९३ ॥

ब्रह्मणे मधुग्रहं ददाति सपात्रम् ॥ ९४ ॥

ग्रहशब्दस्य द्रव्यविषयत्वात् सपात्रमित्युच्यते ॥ ९४ ॥

त९ं स यथेष्टं कुरुते ॥ ९५ ॥

ददातीति वाऽग्न्यगारेऽश्नाति वा पिबति वेति ॥ ९५ ॥

द्वादश स्रुवाहुतीर्जुहोत्याप्ये स्वाहेति प्रतिमन्त्रं वाचयति वा ॥ ९६ ॥

वाचनपक्षेऽपि द्वादशसंख्या यथा स्यादिति द्वादशग्रहणम् । यद्वोत्तरां जुहोति वाचयति वा । अथ कल्पीर्जुहोति वा वाचयति वेति श्रूयते ॥ ९६ ॥

नेष्टा पत्नीमानेष्यन्कौशं वासः परिधापयति चण्डातकं दहरं वा ॥ ९७ ॥

परिधापयतीति कारितत्वादध्येषणात्र भवति। चण्डातकं चलनक उच्यते। एष ह्यभियुक्तोपदेशः। अर्धोरुकं विलासिन्या वासश्चण्डातकं विदुः। दहरं तु कौपीनं दहरशब्दस्य अल्पवाचकत्वात् ॥ ९७ ॥

अन्तरं दीक्षितवसनात् ॥ ९८ ॥

परिधापयति कौशम् ॥ ९८ ॥

निश्रयणीं यूप उच्छ्रयत्युत्तरां दक्षिणां वा ॥९९॥

स दक्षिणत उदङ्रोहेदुत्तरतो वा दक्षिणेति वचनात् ॥९९॥

आरोक्ष्यन् जायामामन्त्रयते जाय एहि स्वो रोहावेति रोहावेति प्रत्याह प्रजापतेरित्या रोहतः ॥ १०० ॥

जायापती ॥ १०० ॥

स्वरीति गौधूममालभते ॥ १०१ ॥

चषालम् ॥ १०१ ॥

शिरसा यूपमुज्जिहीते ऽमृता इति ॥ १०२ ॥

अनेन मन्त्रेण यूपोच्छ्रयमुज्जिहीते ॥ १०२ ॥

अस्मे व इति दिशो वीक्षते ॥ १०३ ॥

यजमान. ॥ १०३ ॥

१ सप्तदशाश्वत्थपत्रोपनद्धानूषपुटानुदस्यन्त्य-

---

१ यजमानपुत्रादयो यजमानाय क्षारमृत्तिकायाः पुटान् सप्तदशाश्वत्थपत्रैर्बद्धानूर्ध्वं क्षिपन्तीत्यर्थः।

स्मै विशः ॥ १०४ ॥

प्रजाः ॥ १०४ ॥

प्रतिगृह्णात्येनान् ॥ १०५ ॥

तांश्च यजमानः प्रतिगृह्णाति ॥ १०५ ॥

नमो मात्र इति भूमिमवेक्षते, सरुक्मे बस्त-
चर्मण्यवरोहति, भूमौ वा ॥ १०६ ॥

भूमिग्रहणं सरुक्मार्थमेव न ह्यन्यथाऽऽधारत्वमर्थप्राप्तत्वात् ॥ १०६ ॥

उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्म-
णा स्तृणातीयं त इति ॥ १०७ ॥

अनेन मन्त्रेण ॥ १०७ ॥

सुन्वन्तमस्यामुपवेशयति यन्तासीति ॥ १०८ ॥

बाहुगृहीतं यजमानमासन्द्यामुपवेशयति यन्तासीत्यनेन मन्त्रेण ॥ १०८ ॥

निवारेण प्रचरति ॥ १०९ ॥

अस्मिन्नवसरे ॥ १०९ ॥

प्राक्स्विष्टकृत औदुम्बरे पात्रेऽप आसिच्य
पयश्च ॥ ११० ॥

सप्तानां षड्वर्गाणां पयोऽप्यासिच्यते ॥ ११० ॥

सप्तदशान्नान्यावपति ॥ १११ ॥

यावत्स्मृति वा ॥ ११२ ॥

तच्च—

एकवर्जम् ॥ ११३ ॥

एकमन्नं वर्जयित्वा ॥ ११३ ॥

अभोजनं तस्योच्छ्वासात् ॥ ११४ ॥

तस्य चाभोजनं उच्छ्वासात्, यावज्जीवमित्यर्थः ॥ ११४ ॥

स्रुवेण सम्भृताज्जुहोति वाजस्येममिति प्रतिमन्त्रम् ॥ ११५ ॥

सप्तैतानि जुहोतिकर्माणि तानि च सप्तानां चरुद्रव्याणां पयोऽभिषिच्यते । सप्त च सौवर्णचतुर्मुष्टिकानि भवन्ति । चोदकानुग्रहाय भपां चाज्यधर्मो भवति वर्णसामान्यात् ॥ ११५ ॥

शेषेणाभिषिञ्चति यजमानं देवस्य त्वेति ॥ ११६ ॥

मन्त्रेण । शेषश्च हुतशेषः ॥ ११६ ॥

सरस्वत्यै वाचस्थाने विश्वेषां त्वा देवानाम् ॥ ११७ ॥

प्रयोगः ॥ ११७ ॥

सरस्वत्यै त्वेति वा ॥ ११८ ॥

सम्राडयमसाविलाह नामग्रहं त्रिरुच्चैः ॥ ११९ ॥

त्रिरुच्चैः ॥ ११९ ॥

अग्निरेकाक्षरेणेत्यनुवाकं द्वादशावरकृत्वा नैवारस्विष्टकृदिडं करोति माहेन्द्रादि च ॥ १२० ॥

द्वादशावरादिति जुहोति वा वाचयति वा । अत्रापि हि श्रूयते । यथोज्जितीर्जुहोति वाचयति वा ॥ १२० ॥

अवरुह्य गच्छति स्तोत्राय प्रहितः ॥ १२१ ॥

तां स्तोत्राय प्रमीवति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्येति ॥ १२१ ॥

उज्जितिभ्यो वोचरो माहेन्द्रः ॥ १२२ ॥

भवति । ततः स्विष्टकृदिडम् ॥ १२२ ॥

षोडश्यन्ते स्तोत्रं चमसैरेव ॥ १२३ ॥

षोडशिग्रहयागान्ते स्तोत्रं चमसैरेव भवति । ग्रहो न भवत्येवकारकरणात् ॥ १२३ ॥

ऋत्विक्चमसेषु सप्तदशावनयति द्वौ द्वौ ॥ १२४ ॥

सप्तदशसोमग्रहान् ऋत्विक्चमसेष्ववनयति । तांस्तु विशेषः द्वौ द्वौ अवनयति ॥ १२४ ॥

एकन्नेष्टुः ॥ १२५ ॥

चमसेऽवनयति ॥ १२५ ॥

उदवसानीयान्ते यूपवेष्टनानध्वर्यवे ददाति ॥ १२६ ॥

वासांसि ॥ १२६ ॥

यथोपयुक्ताः हिरण्यस्रजः ॥ १२७ ॥

दीयते । या यस्य हिरण्यस्रक् उपयुक्ता ॥ १२७ ॥

इति श्रीउपाध्यायकर्कविवरणे कात्यायनसूत्रभाष्ये
चतुर्दशोऽध्यायो वाजपेयश्च समाप्तः ।



# पञ्चदशोऽध्यायः ।

श्रुतिमन्त्रपाठानुसारिणा ऽऽचार्येण वाजपेयो ऽनुविहित इदानीमवसरप्राप्तो राजसूयो ऽनुविधेयः तदर्थं सूत्रम् ।

राज्ञो राजसूयः ॥ १ ॥

भवतीति सूत्रशेषः । स चायं राजशब्दः क्षत्रियजातिनिमित्तः प्रदेशान्तरे दृश्यते । तस्य यत्कर्म स्मृतिविहितं तद्राज्यमित्युच्यते । किं च तत् । जनपदपुरपरिपालनादि । ननु च राज्ययोगाद्राजशब्दप्रयोगः सार्वभौमः । तद्युक्ते ह्यक्षत्रियेऽपि राजशब्दं प्रयुञ्जते जना इति । राज्यं यः करोति स राजेति । एवं च कृत्वा राजसूय एवावेष्ट्यां दर्शनं भवति । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति त्रयाणामपि वर्णानामधिकारं दर्शयति । तत्कथम् । यदि राज्यस्य कर्ता राजा तदैवमुपपद्यते । अत्रोच्यते । न राज्यकर्ता राजेति शक्यते वक्तुम् । न ह्यत्र प्रत्ययलोपः प्रातिपदिकस्य प्रत्यापत्तिर्वा स्मर्यते । राजशब्दात्तु कर्मणि ष्यञ्प्रत्ययो विधीयते । तेन राज्ञः कर्म राज्यमिति शक्यते वक्तुं न तु राज्यस्य कर्ता राजेति । यत्त्ववेष्ट्यां ब्राह्मणादीनां दर्शनमुक्तं तद्राजसूयाद्बहिरन्नाद्यकामस्यावेष्टिर्विहिता तद्विषयमिति । यत्त्वेकदेशे जातौ राजशब्दप्रयोगो योगात्सार्वभौम इत्यत्र ब्रूमः । एकदेशेऽपि शब्दशक्तिमन्तरेण प्रयोगोऽनुपपन्न एव । सार्वभौमस्तु प्रयोगः स उपचारवृत्त्या राज्ञः कर्म कुर्वन् राजेव राजेत्युच्यत इति । तथा च समानचोदनायां दृश्यते तस्माद्राष्ट्रमश्वमेधेन यजेत क्षत्रिययज्ञ उ वा एष यदश्वमेध इति । तथा तस्माद्ब्राह्मणक्षत्रियमधस्तादुपास्ते राजसूये यजमानं सन्तमृरिचकावेनेति क्षत्रियस्य राजसूयं दर्शयति ॥ १ ॥

अनिष्टिनो वाजपेयेन ॥ २ ॥

तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेतेति श्रुतेः ॥ २ ॥

इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात् ॥ ३ ॥

अनुमत्याद्य इष्टयः पवित्रादयः सोमाः अग्न्यादयश्च पशव एते भिन्नतन्त्रा भवन्ति । कुत एतत् । कालभेदात् । भिन्नकालीनं ह्येषां विधानमिति । ननु च कालभेदाद् भेद उक्त एव । किमुच्यते कालभेदादिति । सत्यमेव, फलैक्यप्रज्ञापनार्थमिदमुच्यते कालभेदाद्भेदो न फलभेदेनेति । तत्कुतः । राजसूयेन स्वाराज्यकामो यजेतेति राजसूयस्य कालसम्बन्धः । राजसूयशब्दश्च यजतिशब्दसामानाधिकरण्याद्यजातिषु वर्तते । तेन च सर्वयजतीनामेकं फलमिति ॥ ३ ॥

पवित्रश्चतुर्दीक्षः ॥ ४ ॥

स च सोमयागो दीक्षासम्बन्धात् ॥ ४ ॥

सहस्रदक्षिणः ॥ ५ ॥

एवं चाश्वदाश्यमदनं तिस्रोऽनूबन्ध्याश्चैयासवी चात्र भवन्ति ॥ ५ ॥

माघीपक्षयजनीये दीक्षा ॥ ६ ॥

माघपौर्णमास्या उपरिष्टात्पक्षे गते यद्यजनीयं तत्र दीक्षा । फाल्गुनप्रतिपदीत्यर्थः ॥ ६ ॥

तदन्ते पूर्णाहुतिर्गृहेष्विच्छतो वरदक्षिणा ॥७॥

स यदि कामयेत जुहुयादेतां यद्यु कामयेतानाद्रियेतेति वचनादिच्छत इत्युक्तम् ॥ ७ ॥

श्वः प्रभृत्यन्वहं पञ्चोत्तराणि हवींषि ॥ ८ ॥

भवन्तीति शेषः । अथ श्वो भूत इति वचनात् । अन्वहमेकैकम् ॥ ८ ॥

तान्याह—

अष्टाकपालो ऽनुमत्यै ॥ ९ ॥

पुरोडाशो भवतीति शेषः ॥ ९ ॥

शम्यायाः पश्चाद्धविष्यशन्न् स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे चाग्नौ जुहोत्येष ते नि-र्ऋत इति ॥ १० ॥

शम्यायाः पश्चाद्धविष्येषु यदवसीयन्ते तण्डुला वा पिष्टं वा तत् स्रुवे कृत्वा दक्षिणाग्न्युल्मुकं गृहीत्वा दक्षिणां दिशं गत्वा स्वयं प्रदीर्णे कुत्सिते इरिणे घोषरे अग्नौ जुहोत्येष ते निर्ऋत इति मन्त्रेण। अग्निग्रहणाच्चेतिकर्तव्यताव्युदासः ॥ १० ॥

अनपेक्षमेत्यानुमतस्य संवपनादि करोति ॥ ११ ॥

संवपनादिग्रहणाच्च ईक्षणान्त एतद्भवति ॥ ११ ॥

वासो देयम् ॥ १२ ॥

आनुमतस्य दक्षिणा ॥ १२ ॥

हिरण्यमाग्नावैष्णवे ॥ १३ ॥

पुनरुत्सृष्टो गौरग्नीषोमीये ॥ १४ ॥

अनड्वान् साण्ड ऐन्द्राग्ने ॥ १५ ॥

देयः ॥ १५ ॥

गौराग्रयणे ॥ १६ ॥

देयः । गौरेवाग्रयणे भवति । अनश्च गवाग्रयणं यवाग्रयणं व्री-ह्याग्रयणं विशेष्यते न सौम्याग्रयणमिति ॥ १६ ॥

चातुर्मास्यप्रयोगः फाल्गुन्यां : ॥ १७ ॥

भवतीति शेषः । चातुर्मास्यशब्दो धर्मातिदेशार्थो नैतानि चातुर्मास्यानि । चातुर्मास्यवद्राजसूययागा एते । अतश्च नित्यानाम॰ पि क्रिया भवति । नैतैः कृतत्वमचातुर्मास्यत्वात् ॥ १७ ॥

पौर्णमासेन कृष्णपक्षानेत्यामावास्येन शुक्ला-

ना शुनासीरीयात् ॥ १८ ॥

अत्रापि दर्शपौर्णमासवद्राजसूये यथार्थं न दर्शपौर्णमासा॰ विति ॥ १८ ॥

पवित्रदीक्षास्थाने शुनासीरीयम् ॥ १९ ॥

भवतीति सूत्रशेषः ॥ १९ ॥

१पञ्चवातीयमाहवनीयं प्रतिदिशं व्युह्य मध्ये

च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्र-

तिमन्त्रम् ॥ १९ ॥

पञ्चवातीयमिति कर्मणो नामधेयम् । होममन्त्राणां लिङ्गेन व्यवस्था ॥ १९ ॥

२उत्तराः समस्य ये देवा इति प्रतिमन्त्रम् ॥ २० ॥

जुहोतीति शेषः । समस्य चाग्नीनिति ॥ २० ॥

---

१ फाल्गुनशुक्लप्रतिपदोर पञ्चवातीयसंज्ञकं यक्ष्यमाणं कर्म भवति । खरमध्यस्य हस्तप्रेरित एव खरतश्च पत्रप्राच्यादिदिक्षु स्थाप- यित्वा मध्ये चावशिष्य पञ्चस्वग्निषु जुहोतीत्यर्थः ।

२ प्रतिदिशं व्यूढमाहवनीयमेकत्र कृत्वा उत्तराः पञ्चाहुतीर्जुहो- तीत्यर्थः ।

नियुक्तोऽश्वरथो दक्षिणा ॥ २१ ॥

त्रिभिरश्वैर्युक्तो रथो दक्षिणा ॥ २१ ॥

व्याधितस्याप्येवम् ॥ २२ ॥

व्याधिगृहीतस्यापि पञ्चवातीयं भवति ॥ २२ ॥

इन्द्रतुरीयम् ॥ २३ ॥

व्याख्यास्यत इति शेषः । एतच्च काण्वानां श्वो भूतेषु पठ्यते ॥ २३ ॥

आग्नेयः ॥ २४ ॥

वारुणो यवमयश्चरुः ॥ २५ ॥

अन्यत्रापि ॥ २६ ॥

वारुणो यवमय एव भवति ॥ २६ ॥

रौद्रश्च गावेधुकः ॥ २७ ॥

चशब्दादन्यत्रापि रौद्रो गावेधुको भवति ॥ २७ ॥

वहिनि दध्यैन्द्रम् ॥ २८ ॥

या गौर्वहति स्कन्धेन सा वहिनीत्युच्यते । तदीयं दध्यैन्द्रं भवति ॥ २८ ॥

अपामार्गहोमः ॥ २९ ॥

व्याख्यास्यत इति सूत्रशेषः । इन्द्रतुरीयाद्य श्वो भूते काण्वानां पठ्यते ॥ २९ ॥

स्रुवे पालाशे वैकङ्कते वापामार्गतन्दुलान् कृत्वा ॥ ३० ॥

तेनैव सर्वहोमः कर्तव्यः ॥ ३० ॥

त्र्यम्बकवद्दिगग्नी ॥ ३१ ॥

अग्निर्दक्षिणाग्निर्दिगुदीची ॥ ३१ ॥

प्राची वा ॥ ३२ ॥

स यदि प्राङित्वा जुहोति प्राञ्चं स्रुवमस्यति यद्युदङित्वा जुहोत्युदञ्चं स्रुवमस्यतीति श्रूयते। अत्र च गमनमात्र विकल्प। वितान तु प्राङ्मुखमव ॥ ३२ ॥

अग्ने सहस्वेत्युल्मुकादानम् ॥ ३३ ॥

अन्वाहार्यपचनात् ॥ ३३ ॥

देवस्य त्वेति जुहोति ॥ ३४ ॥

प्राङुदङ्वा गत्वा ॥ ३४ ॥

रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्ययधिष्म रक्ष इत्यायन्त्यनपेक्षम् ॥ ३५ ॥

अभिचर्यमाणाय तान्दिश गत्वाभिचरतो ग्रामादिदिशोद्धोम स्रुवप्रासनागमनम्। स चाय ग्रामादेशो रक्ष शब्दस्य स्थाने भवति। अमुमसाविति च ॥ ३५ ॥

त्रिष्वयुक्तेषु ॥ ३६ ॥

कर्मोच्यते ॥ ३६ ॥

आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा ॥ ३७ ॥

लिङ्गग्रहणे गौः सर्वत्र॥ ३८ ॥

भवति ॥ ३८ ॥

आग्नापौष्ण ऐन्द्रापौष्णः पौष्णः श्यामौ दक्षिणा ॥ ३९ ॥

अस्यापि श्वो भूते काण्वपाठात् ॥ ३९ ॥

अग्नीषोमीय ऐन्द्रासौम्यः सौम्यो बभ्रुर्दक्षिणा ॥ ४० ॥

अस्यापि श्वो भूत एव कात्यायीयायां पठ्यते ॥ ४० ॥

एकादशकपालः प्रथमः प्रथमश्चरव इतरे ॥ ४१ ॥

भवन्ति ॥ ४१ ॥

वैष्णवस्त्रिकपालो वा ॥ ४२ ॥

भवति चरुर्वा ॥ ४२ ॥

श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे ॥ ४३ ॥

भवत इति शेषः ॥ ४३ ॥

श्वो वैकः ॥ ४४ ॥

भवतीति विकल्प ॥ ४४ ॥

ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्याभावे ऽकृष्णम् ॥ ४५ ॥

तन्त्रभेदे चैतद्भवति । एकतन्त्ये तु चोदकपरिप्राप्त्याम्वाहार्यं इति ॥ ४५ ॥

द्वादशोत्तराणि रत्नहवींष्यपि ॥ ४६ ॥

भवन्ति । द्वादशग्रहणं क्रियते । चतुर्गृहीतस्यापि श्वो भूतेऽनुष्ठानं यथा स्यादिति ॥ ४६ ॥

प्रतिगृहमेकैकः श्वः श्वः ॥ ४७ ॥

कर्त्तव्यम ॥ ४७ ॥

समारूढनिर्मथिते ऽग्नये नीकवते सेनान्यः ॥ ४८ ॥

गृहे ॥ ४८ ॥

बार्हस्पत्यश्चरुः पुरोहितस्य॥ ४९ ॥

गृह इति सर्वत्रानुवर्त्तते ॥ ४९ ॥

ऐन्द्रो यजमानस्य ॥ ५० ॥

एकादशकपालो यजमानस्य ॥ ५० ॥

अदित्यै महिष्याः ॥ ५१ ॥

अदित्यै चरुर्महिष्याः ॥ ५१ ॥

वारुणः सूतस्य ॥ ५२ ॥

सूतश्चाश्वसारथिः ॥ ५२ ॥

मारुतो ग्रामण्यः ॥ ५३ ॥

सप्तकपालः । ग्रामणीर्महत्तर ॥ ५३ ॥

सावित्रः क्षत्तुः ॥ ५४ ॥

अष्टाकपालो द्वादशकपालो वा । क्षत्ता प्रतीहारो दूतो वा ॥५४॥

आश्विनः सङ्ग्रहीतुः ॥ ५५ ॥

सङ्ग्रहीता रथयोजयिता ॥ ५५ ॥

पौष्णो भागदुघस्य ॥ ५६ ॥

भागदुघो भोजयिता ॥ ५६ ॥

रौद्रो यजमानस्याक्षावागोविकर्त्तगृहेभ्यो

गवेधुकानाम् ॥ ५७ ॥

माहर्यां कृत्या । अक्षावापोऽक्षक्षेप्ता । अक्षगोऽस्त्यपरे । गोविकर्त्ती हालिकः ॥ ५७ ॥

चतुर्गृहीतं जुषाणोऽध्वाज्यस्य वेत्विति दूतस्य ॥५८॥

निर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोमे एष ते निर्ऋत इति जुहोति वषट्कृते वा ॥ ५९ ॥

ततश्च विकल्पोयम ॥ ५९ ॥

यथासंख्यं दक्षिणा हिरण्य, शितिपृष्ठर्षभो धेनुरश्वः पृपञ्छ्येतोनड्वान्यमात्रभावेनुपूर्वजौ श्यामस्त्रिदक्षिणो रौद्रः शितिबाहुशितिवालयोरन्यतरः ॥ ६० ॥

सितीबाहुः श्वेतसक्थिस्थः सितवालः श्वेतपुच्छः तयोरन्यतरः ॥ ६० ॥

असिर्नखरः ॥ ६१ ॥

नखरोपरिचारः ॥ ६१ ॥

वालदामबद्धमक्षावपणम् ॥ ६२ ॥

अक्षा उप्यन्ते यस्मिंस्तदक्षावपणम ॥ ६२ ॥

उत्तरस्याऽभ्युक्ष्णवेष्टितं धनुः ॥ ६३ ॥

अभ्युक्षणशब्देन स्नाय्वभिधीयते। अजगरचर्मेत्यपरे ॥ ६३ ॥

चर्मतूण्य :सेषुकाः ॥ ६४ ॥

सर्वेषुभिः। चर्मतूण्यश्चर्ममय्यो भस्त्रा उच्यन्ते ॥६४॥

लोहित उष्णीषः ॥ ६५ ॥

कृष्णापरिमूर्ण्यपहतोत्तमस्य ॥ ६६ ॥

जीर्णा अपहता अपस्तरी कृष्णा गौरुत्तमस्य दक्षिणा ॥ ६६ ॥

परिवृत्तीं चाह माऽमेधे शायां वात्सीदिति ॥६७॥

मत्स्वाम्ये मा वात्सीरित्येतदुक्तं भवति। ततश्चासौ ब्राह्मणगृहं प्रविशति। तत्र राज्ञो न स्वाम्यमिति ॥ ६७ ॥

सौमारौद्रोतश्चरुः शुक्लापयसि शुक्ल-

वत्सायाः ॥ ६८ ॥

सैव दक्षिणा ॥ ६९ ॥

अनूचानोप्ययशा यजेत ॥ ७० ॥

यशेन ॥ ७० ॥

किलासावाधन्तु ॥ ७१ ॥

किलासशब्देन व्याधिविशेष उच्यते। तद्बाधमिच्छंश्च यजते। तुशब्दश्चार्थः ॥ ७१ ॥

मित्रावार्हस्पत्यश्चरुः ॥ ७२ ॥

द्यो भूने भवतीति शेषः ॥ ७२ ॥

बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयं भग्ना प्रा-

च्युदीची वा शाखा तत्पात्रेणापिदधाति ॥ ७३ ॥

बार्हस्पत्यं चरुम् ॥ ७३ ॥

विनाटाद्रथपर्यूढां नवनीत्ं स्वयं जातमाज्यमासिच्य पात्रे तस्मिन्रथविष्ठांस्तण्डुलानिन्नायान्नपति ॥ ७४ ॥

विनाटो दृतिरुच्यते । ततो रथपर्यूढात् स्वयं जातं नवनीतमाज्यं भवति । अत्र च तण्डुलेष्वाज्यमासिच्यते । नाज्ये तण्डुलांश्चोदकानुग्रहाय । तण्डुलानां चाध्वर्यूपायेन तक्रादिना स्पन्दनं पक्वपर्यंततया कार्यम् ॥ ७४ ॥

उष्मणा शृतो भवति ॥ ७५ ॥

मैत्रः ॥ ७५ ॥

अणिष्ठानितरस्मिन्नेकं प्रदानम् ॥ ७६ ॥

इतरस्मिन्बार्हस्पत्ये चरौ । स चायमेक एव यागः । मैत्राबार्हस्पत्य इति समुदायात्तद्धितोत्पत्तेः । अतश्च एकं प्रदानम् । अर्धांशिकया चावदानग्रहणम् ॥ ७६ ॥

गौर्दक्षिणा ॥ ७७ ॥

अभिषेचनीयदशपेययोर्दक्षिणोत्तरे देवयजने ॥७८॥

अयन. ॥७८॥

दक्षिणमभिषेचनीयस्य ॥ ७९ ॥

तयोश्च दक्षिणमभिषेचनीयस्य भवति ॥ ७९ ॥

फाल्गुनीपक्षयजनीये भिषेचनीयाय दीक्षते ॥८०॥

फाल्गुन्योः पक्षेभीने यजनीयं तत्र दीक्षा । चैत्रशुक्लप्रतिपद्दीक्षार्थं. ॥ ८० ॥

भार्गवो होता ॥ ८१ ॥

भृगुगोत्रो होता भवति अभिषेचनीयदशपेययोरेव न सर्वत्र। तत्रैव हि श्रूयत इति ॥ ८१ ॥

पञ्चापवर्गः ॥ ८२ ॥

पञ्चभिरहोभिरपवर्गश्च। यदुक्त भवत्येकाहीक्षेति ॥ ८२ ॥

सोमं क्रीत्वा द्वैधमुपनह्य पर्युह्यैकं ब्रह्मागारे निदधाति ॥ ८३ ॥

स च दशपेयार्थः ॥ ८३ ॥

अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवीꣳषि निर्वपति यजप्रैषाणि ॥ ८४ ॥

देवसूहवीꣳषीति नामधेयम्। यज प्रैषाणीति कुतः। चोदकेन। यद्येवं किमर्थमिदमुच्यते यजप्रैषाणीति । मुख्यत्वात्पशुपुरोडाशधर्मोपदेशनिवृत्त्यर्थम् ॥ ८४ ॥

प्लाशुकानाꣳ सवित्रे सत्यप्रसवाय ॥ ८५ ॥

प्लाशुकाः पुनः प्ररूढा व्रीहयः ॥ ८५ ॥

आशूनामग्नये गृहपतये ॥ ८६ ॥

आशवः पक्षमयपाकिनो व्रीहयः ॥ ८६ ॥

उत्तरे चरवः ॥ ८७ ॥

श्यामाकः सोमाय वनस्पतये ॥ ८८ ॥

नैवारो बृहस्पतये वाचे ॥ ८९ ॥

हायनानामिन्द्राय ज्येष्ठाय ॥ ९० ॥

हायनारक्तशालयः ॥ ९० ॥

रुद्राय पशुपतये ॥ ९१ ॥

नाम्बो मित्राय सत्याय ॥ ९२ ॥

स्वयं जाता व्रीहयो नाम्बाः ॥ ९२ ॥

वरुणाय धर्मपतय इति ॥ ९३ ॥

अद्भ्यो ॥ ९३ ॥

उत्तमेन चरित्वा सविता त्वेत्याह यजमान-
बाहुं दक्षिणं गृहीत्वा नामास्य गृह्णाति मन्त्रे
यथास्थानम् ॥ ९४ ॥

यस्मिन्स्थाने अमुमिति सर्वनाम तत्र नामग्रहणम् । तत्सं-
स्कारात् ॥ ९४ ॥

मातापित्रोश्च ॥ ९५ ॥

यथास्थानं नामग्रहणम् ॥ ९५ ॥

काण्वानां पठ्यते । एष च कुरवो राजा पाञ्चालो राजेति च । तदुच्चारणार्थमेव मा भूदत आह—

यस्याश्च जाते राजा भवति ॥ ९६ ॥

जातिग्रहणं जनपदोपलक्षणार्थम् । यस्मिञ्जनपदे राजा भवति तस्य च नामगृह्णातीत्यर्थः ॥ ९६ ॥

कुत एतत्—

देशस्यानवस्थितत्वात् ॥ ९७ ॥

न हि शास्त्रे देशव्यवस्था कुरुपञ्चालजातीयैरेव राजसूयः कर्तव्य इति । सर्वस्य विहितत्वात् । कुरुपञ्चालग्रहणमत्र देशोपलक्षणार्थम् । अङ्गावङ्गास्सुह्मा इति चैवमादीनाम् ॥ ९७ ॥

पशुपुरोडाशतन्त्रं प्राधान्यात् ॥ ९८ ॥

देवसूहविषां पशुपौरोडाशिकं तन्त्रं भवति । कुत एतत् । प्राधान्यात् मुख्यत्वादित्यर्थः । न हि पशुपुरोडाशः प्रधानभूत इति ध्यानित्वात्प्राधान्यमुक्तम् ॥ ९८ ॥

इतरेषां वा भूयस्त्वात् ॥ ९९ ॥

इतरेषां वा तन्त्रं भवति । न पशुपुरोडाशिकम् । कुत एतत् । भूयस्त्वात् । बहूनि ह्येतानि देवसूहवींषि । एवं च विकल्प एवायम् । मुख्यत्वाद्वापौरोडाशिकम् । भूयस्त्वेन चेतरेषामिति ॥ ९९ ॥

किं च—

स्विष्टकृच्छ्रुतेश्च ॥ १०० ॥

उभयरूपा हि स्विष्टकृच्छ्रुतिः काण्वानां यजप्रैष स्विष्टकृन्माध्यन्दिनानां प्रेष्यप्रैष इति । तत्रात्र विकल्प एवानुरूपतर इति ॥ १०० ॥

इडान्तेऽपो गृह्णाति ॥ १०१ ॥

इडान्तग्रहणेन देवसूहविषां शेषकार्योपलक्षणम् । ततश्च तन्त्रागपरिहरणान्ते ग्रहणम् । श्रुतौ तु तत्स्विष्टकृत्समनन्तरमपां ग्रहणं पठ्यते । तत्रापि स्विष्टकृता शेषकार्योपलक्षणम् ॥ १०१ ॥

यूपमुत्तरेण नैमित्तिकीरसम्भवात् ॥ १०२ ॥

या आपो निमित्तेन प्राप्यन्ते यथा गोऋजीषा आतपवर्ष्यास्तासामस्मिन्काले ग्रहणासम्भवादतः पूर्वं गृहीत्वा यूपमुत्तरेण पुनर्ग्रहणं तत्र वचनात् ॥ १०२ ॥

गत्वेतराः पृथक्पात्रेष्वौदुम्बरेषु सारस्वतीः ॥ १०३ ॥

अपो गृण्हाति ॥ १०३ ॥

अनगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मीः ॥ १०४ ॥

अवतीर्यापतीर्णात्पशोः पुरुषाद्वा पूर्वापरी ऊर्मीं गृह्णाति ॥ १०४ ॥

स्यन्दमानाः ॥ १०५ ॥

गृह्णाति ॥ १०५ ॥

प्रतिलोमाः ॥ १०६ ॥

गृह्णाति ॥ १०६ ॥

अपयतीः ॥ १०७ ॥

याः स्यन्दन्त्य पथापयन्ति ता अपयतीः ॥ १०७ ॥

नदीपतिः सूघाः ॥ १०८ ॥

नदीपतिः समुद्रः । तत्रापि याः सुपूयन्तिताः सूघाः वीचिस्या इत्यर्थः । ता गृह्णाति ॥ १०८ ॥

काष्ठं वोच्छ्रितोदम् ॥ १०९ ॥

अथवा समुद्रामिरयाद्भिः काष्ठमुच्छ्रितमुदं याभिस्ता गृह्णाति ॥ १०९ ॥

निवेष्येन ॥ ११० ॥

गृह्णाति । निवेष्य आवर्तः ॥ ११० ॥

स्यन्दमानाः स्थावराः प्रलातापे ॥ १११ ॥

पत्रोपरिष्टादित आदित्यस्तपति ता गृह्णाति ॥ १११ ॥

अन्तरिक्षात्प्रतिगृह्या आतपवर्ष्याः ॥ ११२ ॥

अन्तरिक्षात्प्रतिग्रहीतव्याः आतपवर्षेण : ॥ ११२ ॥

सरस्याः कूप्याः प्रप्या मधुगौरुल्व्याः
पयो घृतम् ॥ ११३ ॥

उक्ता आपस्तासां ग्रहणमाह—

सरस्वतीर्गृह्णात्यपो देवा इति ॥ ११४ ॥

जुहोत्युत्तरासु चतुर्गृहीतानि वृष्ण ऊर्म्या-
दिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिम-
न्त्रमुत्तरैरुत्तरैर्गृह्णाति ॥ ११५ ॥

काण्वानां च यथाश्रुति विनियोगक्रमेण च आपो ग्रही-
तव्याः ॥ ११५ ॥

आपः स्वराज इति मरीचीर्गृहीत्वा गृही-
त्वाञ्जलिना सर्वासु सꣳसृजति ॥ ११६ ॥

सारस्वतीषु च मरीचिषु च न होम. प्रतिषेधात् ॥ ११६ ॥

औदुम्बरे पात्रे समासिञ्चत्येना मधुम-
तीरिति ॥ ११७ ॥

अनेन मन्त्रेण ॥ ११७ ॥

मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अना-
धृष्टाः सीदतेति पात्राणि च तूष्णीं पालाशौदु-
म्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय ॥ ११८ ॥

चशब्दात्पुरस्तान्निदधाति ॥ ११८ ॥

उक्थ्यः श्वः ॥ ११९ ॥

भवति ॥ ११९ ॥

पयस्या मैत्रावरुणी माध्यन्दिनीयैः सह ॥ १२० ॥

भवति ॥ १२० ॥

शतं सहस्राणि दक्षिणा ॥ १२१ ॥

मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्म-
स्तृणाति सोमस्य त्विषिरिति ॥ १२२ ॥

अनेन मन्त्रेण । अगृहीते माहेन्द्र इति वचनात् सर्वमरुत्वतीयानामन्ते ॥ १२२ ॥

अपरेन्ते सीसं निदधाति ॥ १२३ ॥

व्याघ्रचर्मणः ॥ १२३ ॥

पार्थानामग्नये स्वाहेति षड्जुहोति प्रति
मन्त्रम् ॥ १२४ ॥

पार्थानि हि प्रकृत्याह षट् पुरस्तादभिषेकस्य जुहोतीति ॥१२४॥

पवित्रे कृत्वा हिरण्यमेनयोः प्रवयति ता-
भ्यामुत्पुनात्यपः सवितुर्व इति ॥ १२५ ॥

ताभ्यां पवित्राभ्यामभिषेचनीया अप उत्पुनाति सवितुर्व इत्यनेन मन्त्रेण। पौर्णमासिकेन विधिना पवित्रकरणम् । तुल्यं हि शास्त्रमत्र ॥ १२५ ॥

अभिषेचनीयेष्वेना व्यानयति सधमाद इति ॥१२६॥

अभिषेचनीयानि च पालाशौदुम्बरादीनि ॥ १२६ ॥

तार्प्यं परिधापयति ॥ १२७ ॥

तत्र—

क्षौमम् ॥ १२८ ॥

तार्प्यमुच्यते ॥ १२८ ॥

त्रिपाणं वा ॥ १२९ ॥

त्रि कृत्व. पायितम् । वा सकृदिति विकल्प ॥ १२९ ॥

घृतोन्नमेके ॥ १३० ॥

एके आचार्या घृतोन्नन्तार्प्यमभिवदन्ति । घृतोन्न घृतशौचितम् ॥ १३० ॥

यज्ञरूपस्यूतम् ॥ १३१ ॥

*तस्मिन्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्तीति* वचनात् । यज्ञरूपाणि च स्रुक्चमसादीनि ॥ १३१ ॥

पाण्ड्वं च निवस्ते ॥ १३२ ॥

पाण्ड्व कम्बल । तं च निवस्ते उपरि तार्प्यस्य ॥ १३२ ॥

अधीवासं प्रतिमुच्योष्णीषं संवेष्ट्य निवीतेऽवगूहते नाभिदशे परिहरते वा ॥ १३३ ॥

अधीवास कञ्चुक प्रतिमोकवचनाद्गम्यते । उष्णीष शिरो वेष्टनं तत्संवेष्ट्य निवीते निवीत च कण्ठेऽसक्तन ततोऽवगूहते नाभिदेशे परिहरते वा ॥ १३३ ॥

तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम् १३४ ॥

परिधत्ते ॥ १३४ ॥

दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ॥ १३५ ॥

तार्प्यादीनि ॥ १३५ ॥

इन्द्रस्य वार्त्रघ्नमिति धनुरातनोति ॥ १३६ ॥

आरोपयति ॥ १३६ ॥

मित्रस्य त्ररुणस्येत्यस्य बाहू विमार्ष्टि ॥ १३७ ॥

बाहू धनुःकोट्यावुच्येते । मन्त्र इयोपदेशात् प्रतिमन्त्रमिति गम्यते ॥ १३७ ॥

धनुः प्रयच्छति त्वयायमिति ॥ १३८ ॥

अनेन मन्त्रेण यजमानाय ॥ १३८ ॥

हवासीति प्रतिमन्त्रमादाय तिस्र इषूः प्र-
यच्छति पातैनमिति प्रतिमन्त्रम् ॥ १३९ ॥

यजमानायैव ॥ १३९ ॥

आविर्मया इति वाचयति ॥ १४० ॥

केषां चित्प्रतिमन्त्रं नेति सम्प्रदायः ॥ १४० ॥

अवेष्टा इति लोहाय समाविध्यति केशवा-
स्ये सदोन्त उपविष्टाय ॥ १४१ ॥

लोहाग सत्यमुं लिङ्गात् । अथ यल्लोहाय सम्भवाति लोहिता इव हि दन्दशूका इति ॥ १४१ ॥

सुन्वन्तमाक्रमयं दिशः प्राचीमारोहति वाच-
यति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ १४२ ॥

सुन्वन्तं यजमानं बाहुर्गृहीनमाक्रमयन् । दिशां चाक्रमणमाभिमुख्यगमनमात्रेणेव । न ह्यन्यथा सम्भवः । आक्रमयंश्च वाचयति ॥ १४२ ॥

आक्रम्य पादेन सीसं निरस्यति प्रत्यस्त-
मिति ॥ १४३ ॥

यच्छार्दूलचर्मणो जघनार्धे सीसं निहितं तत्पदा प्रतिक्षि-

पति प्रत्यस्तमिति मन्त्रेण ॥ १४३ ॥

व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति ॥ १४४ ॥

यजमानमारोहयति बाहुगृहीतम् । मन्त्रस्तु यजमानस्यैव ॥१४४॥

रुक्ममधः पदं कुरुते मृत्योरिति ॥ १४५ ॥

रुक्म आभरणविशेषः तं पदस्याधस्तात्कुरुते मृत्योरिति मन्त्रेण ॥ १४५ ॥

शिरसि च नवतदर्मं शततदर्मं वौजोसीति ॥१४६॥

चशब्दाद्रुक्ममेव ॥ १४६ ॥

बाहू उद्गृह्णाति हिरण्यरूपाविति ॥ १४७ ॥

यजमान ॥ १४७ ॥

मित्रोसि वरुणोसीति वा ॥ १४८ ॥

बाह्वोरुद्ग्रहणम् ॥ १४८ ॥

स्थितं प्राञ्चमभिषिञ्चति पुरोहितोध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥ १४९ ॥

स्थितं प्राञ्चमभिषिञ्चति पुरस्ताद्व्यवस्थित । पुरोहितोध्वर्युर्वा पालाशेन पात्रेण पश्चादितरे व्यवस्थिता । द्वितीयेनौदुम्बरेण भ्रातास्भिषिञ्चति । तृतीयेन नैयग्रोधपादेन राजन्यो यो मित्रत्वेनागत । वैश्यश्चतुर्थपात्रेण । सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् ॥१४९॥

अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥ १५० ॥

क्षत्राणां क्षत्रपतिरेधीरिति च ॥ १५१ ॥

सर्वत्रैव शेष ॥ १५१ ॥

इमममुष्येति च प्रथमो देवसूवत् ॥ १५२ ॥

अभिषिञ्चति ॥ १५२ ॥

पार्थानामिन्द्राय स्वाहेति षड्जुहोति प्रतिमन्त्रम् ॥ १५३ ॥

शौनःशेपञ्च प्रेष्यति ॥ १५४ ॥

शौनः शेपः शंसत्येषम । च शब्दादनन्तरपदार्थसमनन्तरमेव ॥ १५४ ॥

घूतां ते वा ॥ १५५ ॥

प्रेष्यति । तदा तत्रैव चास्यते ॥ १५५ ॥

ओ३मित्यृचां प्रतिगरस्तथेति गाथानाम् ॥१५६॥

ऋचो ह्यायन्त एव गाथा छन्दो विशेषेण ॥१५६॥

होताध्वर्यू हिरण्मय्योः कशिपुनोरुपविष्टौ ॥१५७॥

१कशिपुनस्तरकौ ॥ १५७ ॥

शौनःशेपान्ते पृथक् शते ददाति ॥ १५८ ॥

पृथग्वचनाच्छतं शतं गवामेकैकस्य ददाति ॥ १५८ ॥

सहस्रे वा ॥ १५९ ॥

विकल्पः ॥ १५९ ॥

आसने च ॥ १६० ॥

ददाति यो यत्रोपविष्टः ॥ १६० ॥

---

१ मसूरकाविति यावत् ।

कण्डूयन्याभिषेण प्रलिम्पते प्रपर्वतस्येति ॥१६१॥

कण्डूयनी कृष्णविषाणा तया शरीरसंलग्नोदकाभिषेकेण प्रलिम्पते प्रपर्वतस्येति ॥ १६१ ॥

चर्मणि विविक्रमयति विष्णोरिति प्रतिमन्त्रम् ॥ १६२ ॥

विक्रमणं कारयत्यध्वर्युर्मन्त्रस्तु यजमानस्यैव क्रमणशेषत्वात् ॥ १६२ ॥

पालाशे शेपानासिच्य पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रो ऽनुसन्तनोत्विति ॥ १६३ ॥

शेपा अभिषेकशेषाः ॥ १६३ ॥

शालाद्वार्ये जुहोति पुत्रेन्वारब्धे प्रजापत इति पुत्रयजमानयोर्नामगृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात् ॥ १६४ ॥

अयमभिमन्युरर्जुनस्य पितेत्येवं पितृशब्दः पुत्रे कृतो भवति । यथायथं पश्चादिति । अर्जुनोऽभिमन्योः पितेत्येवम् । अयममुष्य पिता सावस्य पितेति मन्त्रे पाठः। ब्राह्मणेपि च यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रमिति ॥ १६४ ॥

आग्नीध्रीये पालाशेन शेपान् जुहोति रुद्र यत्त इत्युत्तरार्धे ॥ १६५ ॥

अभिषेकशेषान् ॥ १६५ ॥

गवां शतमधिकं वा स्वस्याहवनीयस्योत्त-

रत स्थापयति ॥ १६६ ॥

स्वशब्देनात्र भ्रातोच्यते ॥ १६६ ॥

पूर्वाग्निवहनं च साग्निम् ॥ १६७ ॥

शान्तिकपौष्टिकार्थोऽग्निर्येनानसोह्यते तच्च साग्निस्था-
पयति ॥ १६७ ॥

वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ

युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिः॥१६८॥

वाजपेयवदिति रथाद्रथावहरणम् धूर्गृहीतस्य चावर्त्तनं
कृत्वा दक्षिणस्यां वेदिश्रोणौ व्यवस्थितं युनक्ति पूर्ववन्मित्रावरुण-
योरित्यनेन मन्त्रेण । चतुर्भिरश्वैरथैरुत्तरा पृष्टिश्चतुर्थः ॥ १६८ ॥

दक्षिणापथेन यात्वापरेण चात्वालं स्था-

पयति ॥ १६९ ॥

रथम् ॥ १६९ ॥

अव्यथायै त्वेति सव्यन्नारोहति ॥ १७० ॥

तमेव रथम् ॥ १७० ॥

मरुतामिति दक्षिणधुर्यं प्राजति ॥ १७१ ॥

यन्ता ॥ १७१ ॥

गवां मध्ये स्थापयत्यायामेति ॥ १७२ ॥

अनेन मन्त्रेण रथं यन्तैव ॥ १७२ ॥

धनुरार्त्न्योपस्पृशति गां यजमानः स-

मिन्द्रियेणेति ॥ १७३ ॥

अनेन मन्त्रेण ॥ १७३ ॥

जिनामीमाः कुर्व इमा इति चाह ॥ १७४ ॥

यथाब्दायजमानः ॥ १७४ ॥

तावद्भूयो वा गो स्वामिने दत्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मात इति ॥ १७५ ॥

अनेन मन्त्रेण ॥ १७५ ॥

अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रं पशूना॒ रसोसीति वराहोपानहा उपमुञ्चते ॥ १७६ ॥

यजमानः ॥ १७६ ॥

भूमिमवेक्षते पृथिवि मातरिति ॥ १७७ ॥

अनेन मन्त्रेण यजमान एव ॥ १७७ ॥

अवरोहति ह॒ंसः शुचिषदिति ॥ १७८ ॥

रथाद्यजमानः ॥ १७८ ॥

विमुच्यसयन्तृक॒ रथवाहणे करोत्यनस्तत्कर्म शालाया दक्षिणतः ॥ १७९ ॥

विमुच्य रथं सह यन्तारं रथवाहने करोति। तस्य चानसत्तदेव कर्म रथवाहणम् ॥ १७९ ॥

अथप्रवते यन्ता ॥ १८० ॥

रथाश्वयतर्यति ॥ १८० ॥

रथवाहणस्य दक्षिणेन्ते शतमानाववास-
जति वृची ॥ १८१ ॥

वृत्ताकारो दक्षिणाशतमानो ॥ १८१ ॥

अनुवर्त्ममौदुम्बरीं शाखामुपगूह्त्युपस्पृश-
ति शतमानावियदसीति ॥ १८२ ॥

इयदसीत्येकं युङ्क्ष्वसीति चापरम ॥ १८२ ॥

तौ ब्रह्मणे दत्त्वोर्गसीति शाखामुपस्पृशति ॥ १८३ ॥

ताविति शतमानौ ॥ १८३ ॥

इन्द्रस्य वामित्यवहरते बाहू पयस्यायां
व्याघ्रचर्मदेशे स्थितायाम् ॥ १८४ ॥

इन्द्रस्य वां इत्यनेन मन्त्रेण पयस्यायामवहरति बाहू यजमानो
व्याघ्रचर्मदेशे स्थितायाम ॥ १८४ ॥

सेपुकं धनुःप्रयच्छति ॥ १८५ ॥

धनुर्धराय ॥ १८५ ॥

उत्तरवेदिं हृत्वा पयस्यया प्रचरति प्राक्
स्विष्टकृतः ॥ १८६ ॥

खादिरीमासन्दीं रज्जूतां व्याघ्रदेशे नि-
दधाति स्योनासीति ॥ १८७ ॥

अनेन मन्त्रेण ॥ १८७ ॥

अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति ॥१८८॥

अस्यामित्यासन्धाम् वास आस्तृणाति क्षत्रस्य योनिरिति॥१८८॥

सुन्वन्तमस्यामुपवेशयति स्योनामासीदेति ॥१८९॥

याहुगृहीतं यजमानमासन्द्यामुपवेशयति । मन्त्रभाग्धर्यैव ॥ १८९ ॥

निषसादेत्युरोस्यालभते ॥ १९० ॥

यजमानस्य हृदयम्॥ १९० ॥

अभिभूरित्यस्मै पञ्चाक्षान्पाणावाधाय पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति ॥ १९१ ॥

अभिभूरित्यनेन मन्त्रेण पञ्चाक्षान्यजमानस्य पाणावाधाय पश्चादेनं यजमानस्य यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्त्यध्वर्य्वादयो बहुवचनोपादानात् ॥ १९१ ॥

पाप्मानं तेऽपहन्मोति त्वा वधं नयामीति वा ॥१९२॥

अनेन मन्त्रेण घ्नन्ति । तूष्णीं वेति विकल्पः ॥ १९२ ॥

वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः ॥ १९३ ॥

यजमानः ॥ १९३ ॥

प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति त्वं ब्रह्मासीत्यादिभिः ॥ १९४ ॥

त्वं ब्रह्मासीत्यादि सविता वरुण इत्येवमादि व्यत्यासेन ब्रह्मा प्रवचनं ददाति यजमानाय ॥ १९४ ॥

आदिनैवान्त्यम् ॥ १९५ ॥

त्वं ब्रह्मासीत्यनेनैवान्त्यं पञ्चमं प्रतिवचनम् ॥ १९५ ॥

बहुकारेति च व्हयत्येवं नामानम् ॥ १९६ ॥

यजमानम्दा यजमानं । स हि पूर्वामन्त्रणाभिहितः । बहुकारेत्येवं-नामानं वह्वयति । एवमपि हि श्रूयते एवं नामा भवति कल्याण-मेवैतन्मानुष्य वाचो वदतीति ॥ १९६ ॥

स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति ॥ १९७ ॥

अनेन मन्त्रेण यजमानाय ॥ १९७ ॥

राजा राजभ्राता सतस्थपत्योरन्यतरो ग्राम-णीः सजातश्चैवं पूर्वः पूर्वउत्तरस्मै ॥ १९८ ॥

स्फ्यम्प्रयच्छति सजातश्च ग्रामणीः सजातः ॥ १९८ ॥

प्रचेन सजातः प्रतिप्रस्थाता च पूर्वाग्निस-हिताः शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥१९९॥

प्रसेन वज्रेण सजातः प्रतिप्रस्थातारौ पूर्वाग्निवहनसकाशां शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥ १९९ ॥

मन्थिनो विमितम् ॥ २०० ॥

पुरोरुचा विमितं कुरुत इति वर्त्तते ॥ २०० ॥

द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृ-हीतेनाग्निः पृथुरिति ॥ २०१ ॥

अनेन मन्त्रेण हिरण्यमभिजुहोति ॥ २०१ ॥

अक्षान्निवपति स्वाहाकृता इति ॥ २०२ ॥

द्यूतभूमावक्षान्निवपति स्वाहाकृता इत्यनेन मन्त्रेण ॥ २०२ ॥

गां दीव्यध्वमित्याह ॥ २०३ ॥

घृतप्रकरणे प्रैषोयम् ॥ २०३ ॥

कृतादि वा विदध्याद्राजप्रभृतिभ्यः ॥ २०४ ॥

कृतादिभिर्वा द्यूतं भवति राजप्रभृतिर्वा द्यूतान्तरम् ॥२०४॥

सजाताय कलिङ्गाम् ॥ २०५ ॥

अस्य सजातस्य सम्बन्धिनी या तां घ्नन्ति । हन्तिश्च आहनन-मात्रे न मारणार्थः ॥ २०५ ॥

पूर्वाग्निवाहो दक्षिणा ॥ २०६ ॥

सा च द्यूतस्य यागाङ्गमभिधानात् ॥ २०६ ॥

पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च॥२०७॥

करोतीत्यनुवर्त्तते । मरुत्वतीयान्ते पैकृतं कर्मविहितमत प्राकृतानुवृत्त्यर्थं माहेन्द्रादीत्युक्तम् ॥ २०७ ॥

अवरुह्य गच्छति स्तोत्राय प्रहितः॥ २०८ ॥

आसन्द्या अवरुह्य प्रहितः सन् स्तोत्राय गच्छति । यजमानस्य सोन्वे स्तोत्रस्य भवत्यन्ते शस्त्रस्येति वचनात् ॥ २०८ ॥

अवभृथमेकेन ताप्यादीनि चेत् ॥ २०९ ॥

यदि माहेन्द्रादौ दीक्षितवसने न परिहिते तदा ताप्यादीना-मेकेनावभृथमभ्यवतरन्ति ॥ २०९ ॥

उदैत्येकेन ॥ २१० ॥

उत्तरत्येकेनो देति अन्येनोदेतीतिपाठः । अथ माहेन्द्रादौ दीक्षितवसने परिहिते ततस्तेनैवावतरणमुत्तरणं च ॥ २१० ॥

दीक्षितवसनं च प्रास्यति॥ २११ ॥

ताप्यावतरणपक्षे ॥ २११ ॥

अनूबन्ध्यवपाहोमान्ते दद्यादेनानि॥ २१२ ॥

ताप्यादीनि ॥ २१२॥

उदवसानीयायां वा ॥ २१३ ॥

दद्यात् आगन्तुत्वात्तदन्ते निवेशः ॥ २१३ ॥

त्रैधातव्युदवसानीया ऐन्द्रावैष्णवो द्वादशकपालो व्रीहियवाणाम् ॥ २१४ ॥

तमुभयेषां व्रीहियवानां गृह्णातीति वचनात् ॥ २१४ ॥

तृतीयं यवानां मध्ये ॥ २१५ ॥

तृतीयभागो यवानां मध्ये ॥ २१५ ॥

अधिश्रयणं च ॥ २१६ ॥

एवमेव । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति । अथ यवमयमथ व्रीहिमयमिति वचनात् । अवदानं तु धातुत्रयादपि ग्राह्यम् ॥ २१६ ॥

तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गामग्नीधे ॥ २१७ ॥

तिस्रस्तिस्र इत्यवाच्य बहुवचनोपदेशात् । आदिसामर्थ्याच्च तत्प्राप्ते । वाच्य वा । अग्नीधोपि गावस्तिस्र एव यथा स्युरिति । ता वा एता द्वादश वा त्रयोदश वा दक्षिणा भवन्तीति श्रुते । ननु चैवं द्वादशैव भवन्ति न त्रयोदशाउच्यते । काण्वपाठाङ्गीकरणेन त्रयोदश भविष्यन्ति । तत्राध्वर्यो पठ्यते त्रीणि वासांसि त्रयस्त्रातद्वाहो गां वाज वाग्नीध इति च त्रयोदश भवन्तीतिवचनात्त्रैधातवी उदवसानीया कार्येभिषेचनीयस्य भवति । प्रकृतौ चोदवसानीया समारूढनिर्मथिते दृष्टा इह च तथा न सम्भवति येनाभिषेचनीयदशपेययोश्च प्राक्क्रयादेकतन्त्रतां वक्ष्यति । तेनात्र भवति सन्देह किमतिप्रणीते क्रियतामुतापराग्न्याहवनीय इति । तत्र केचिदाहुरभिषेचनीयस्यैवेष्टिरिति तदाहवनीय एवातिप्रणीते प्राप्नोति । अपराग्नयो दाशपेयिका इति । अतोतिप्रणीत इति । नेच्छन्त्येतदपरे । न हीय प्रकृतावतिप्रणीते दृष्टति । ननु चापराग्न्याहवनी-

घृतप्रकरणे प्रैयोयम् ॥ २०३ ॥

कृतादि वा विदध्याद्राजप्रभृतिभ्यः ॥ २०४ ॥

कृतादिभिर्वा घृतं भवति राजप्रभृतिर्वा घृतान्तरम् ॥२०४॥

सजाताय कलिङ्गाम् ॥ २०५ ॥

अस्य सजातस्य सम्बन्धिनी या तां घ्नन्ति । हन्तिश्च आहनन-मात्रे न मारणार्थः ॥ २०५ ॥

पूर्वाग्निवाहो दक्षिणा ॥ २०६ ॥

सा च घृतस्य यागाङ्गमभिधानात् ॥ २०६ ॥

पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च॥२०७॥

करोतीत्यनुवर्त्तते । मरुत्वतीयान्ते चैकृत कर्मविहितमत प्राकृतानुवृत्त्यर्थं माहेन्द्रादीत्युक्तम् ॥ २०७ ॥

अवरुह्य गच्छति स्तोत्राय प्रहितः॥ २०८ ॥

आसन्द्या अवरुह्य प्रहितः सन् स्तोत्राय गच्छति । यजमानस्य स्तोत्रे स्तोत्रस्य मध्यन्ते आरुरुक्ष्यति वचनात् ॥ २०८ ॥

अवभृथमेकेन ताप्यादीनि चेत् ॥ २०९ ॥

यदि माहेन्द्रादौ दीक्षितवसने न परिहिते तदा ताप्यादीना-मेकेनावभृथमभ्यवतरन्ति ॥ २०९ ॥

उदेत्येकेन ॥ २१० ॥

उत्तरत्येकेनो देति मन्येनोदेतीतिपाठः । अथ माहेन्द्रादौ दीक्षितवसन परिहित तत्तेनैवावतरणमुत्तरण च ॥ २१० ॥

दीक्षितवसनं च प्रास्यति ॥ २११ ॥

ताप्यावतरणपक्षे ॥ २११ ॥

अनूबन्ध्यवपाहोमान्ते दद्यादेनानि ॥ २१२ ॥

ताप्यादीनि ॥ २१२॥

हिरण्मयानि वा ॥ २२४ ॥

पुण्डरीकाणि । स चायं विकल्पः ॥ २२४ ॥

उत्तमासु तिसृषु पञ्च ॥ २२५ ॥

द्वे द्वे द्वयोरन्त्यायामेकम् ॥ २२५ ॥

तेषां स्रजं प्रतिमुञ्चते ॥ २२६ ॥

तेषां पुण्डरीकाणां स्रजं मालां कृत्वा प्रतिमुञ्चते यजमानः ॥ २२६ ॥

तद्दीक्षो भवति ॥ २२७ ॥

सास्य दीक्षेति वचनात् ॥ २२७ ॥

एकतन्त्रौ क्रय्यैकत्वात् ॥ २२८ ॥

इदं विचार्यते । किमेतानि हवींषि दशपेयाङ्गभूतानि उत पृथगर्थत्वमिति । पृथगर्थत्वमिति ब्रूमः । एवं ह्यत्र श्रूयते । एभिर्मे पीष्टमसदेभिरपि सुया इति । तेन त्रियुक्तादिवत् पृथगर्थत्वमिति केचित् । नैवमित्यपरे । एतैर्हि दशपयार्थाना-मग्नीनां तद्देवयजनप्रतिनयनं क्रियते । अतस्तदर्थमिति गम्यते । तथा च मन्त्रलिङ्गं सवित्रा प्रसवित्रेत्युपक्रम्य विष्णुना दशम्या देवतया प्रसूतः प्रसर्पामीति सर्पणार्थतां दर्शयति । एभिर्मेपीष्टमसदेभिरपि सुया इत्यर्थवादमात्रम् । प्रयोजनं दशपेयाङ्गत्वेऽग्न्याधानाभावः । वाजपेये च सर्पणाभावादप्रवृत्तिः ॥ २२८ ॥

इदं विचार्यते । किमभिषेचनीयदशपेयौ एकतन्त्रावुत पृथक्तन्त्राविति । एकतन्त्राविति ब्रूमः । कुत एतत् । क्रय्यमतिकर्षात् । एवं ह्यत्र श्रूयते सह सोमौ क्रीणाति । तत्प्रतिकर्षोऽभ्यस्तनस्यापि प्रतिकर्ष इति । एवं प्राप्त आह—

नाना वाऽवभृथदीक्षाश्रुतिभ्याम् ॥ २२९ ॥

नाना तन्त्रौ वा भवतः । कुत एतत् । अवभृथदीक्षाश्रुतिभ्याम् । अभिषेचनीयस्य ह्यवभृथः श्रूयते । स यत्रावभृथम-

भ्यवेति तदेतदप्यभ्यवहरन्तीति दीक्षितवसनप्रासनविधिपरे वाक्ये अवभृथं दर्शयति। तथा च दीक्षा श्रूयते। पुण्डरीकस्रज प्रतिमुञ्चते सोऽस्य दीक्षेति। यदि ह्येकतन्त्रौ स्यातांनावभृथ श्रूयेत। तथा दीक्षा इति ॥ २२९ ॥

एवं प्राप्त आह—

एकं त्वानुपूर्व्ययोगात् ॥ २३० ॥

तु शब्दः पक्षव्यावृत्तौ। एकमेव तन्त्रम् भिन्नतन्त्रता। कुत एतत्। एवं हि पदार्था आनुपूर्व्येण युज्यन्ते। क्रयमात्रे पुनः प्रतिक्रियमाणे दीक्षणीयादीनां पश्चादनुष्ठानानुपूर्व्यं स्यात्। तत्र चोदकबाधः। दीक्षावभृथग्रहणं तद्वचनेनेत्यदोषः ॥ २३० ॥

तदुक्तम्—

अवभृथदीक्षाभ्यासो वचनादिति ॥ २३१ ॥

यथाश्वमेधे ऽवभृथदीक्षाभ्यास ॥ २३१ ॥

सप्तम्यां ब्रह्मागारात्सोममाहृत्यासन्द्यभिमर्शनादि करोत्युपसद्देवताहवींषि निर्वपत्युपसदन्त इष्टिरन्यथोक्तम् ॥ २३२ ॥

एवमेव हि श्रवणमिति ॥ २३२ ॥

पितामहदशगणाः सोमपानाः संख्यासर्पणम् ॥ २३३ ॥

यजमानस्य पितामहदशगणं सोमपानामुद्दिश्य[१] सर्पणं कर्तव्यम् ॥ २३३ ॥

सवित्रेति वानुवाकमुक्त्वा ॥ २३४ ॥

सर्पणं भवतीति विकल्प. ॥ २३४ ॥

दश दशैकैकं चमसमनु भक्षयन्ति ॥ २३५ ॥

---

१ अमुक प्रथमः सोमपः असौ द्वितीय. असौ तृतीय एव दशमपर्यन्त सोमपान् गणयित्वेत्यर्थ.।

दश दशैकैकं चमसमनु प्रसृप्ता भवन्तीति वचनात् ॥ २३५ ॥

यजमानस्य राजन्यः ॥ २३६ ॥

तत्र च राजन्यचमसे राजन्या भक्षयन्ति। संख्या हि समानजातीयेषु भवति। ननु च शतं ब्राह्मणास्सोमं भक्षयन्तीत्यत्र श्रूयते। तत्र कथं राजन्या भवेयुः। उच्यते। भूयस्त्वात्। ब्राह्मणेषु चाब्राह्मणेषु शतसंख्येत्यदोषः। एवं च सह पानविरोधो न भवति ॥ २३६ ॥

एवं प्राप्त आह—

ब्राह्मणा वा श्रुतेः ॥ २३७ ॥

वाशब्दः पक्षव्यावृत्तौ। ब्राह्मणा एव भवन्ति न क्षत्रियाः। शतं ब्राह्मणा इति हि श्रूयते। ननु च ब्राह्मणेषु च भूयस्त्वाच्छतशब्द इत्युक्तम्। नैतदेवम्। शतं ब्राह्मणाः सोमं भक्षयन्तीति विधिरयं विधौ च न परः शब्दार्थो भवति। एवं कृत्वा दश दशैकैकं चमसमनु भक्षयन्तीति विभागविधानम् ॥ २३७ ॥

तुल्याः संख्यायोगात् ॥ २३८ ॥

शतसंख्या च तुल्येषूपपद्यते नातुल्येषु। अतो यजमानचमसेऽपि ब्राह्मणा एवेति। सहपानाविरोधस्तु वचनात् ॥ २३८ ॥

ब्रह्मणे दद्यात्॥ शुनदक्षिणा ॥ २३९ ॥

अ॥शुनदिति तुल्यशास्त्रत्वात् ॥ २३९ ॥

हिरण्मयीः॥ स्रजमुद्गात्रे रुक्मः॥ होत्रे हिरण्मयौ प्राकाशौ[१] अध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छ॥सिने वाससी

१ प्राकाशौ दर्पणौ। कर्णवेष्टकाविदयपरे।

नेष्टापोतृभ्यामन्यतरतो[1] युक्तं यवाचितम-

च्छावाकाय ग्रामणीधे ॥ २४० ॥

ददातीति सर्वत्रानुषङ्गः । गौश्चानडुह्वति काण्वपाठात् ॥२४०॥

अभिषेचनीयान्ते केशवपनार्थे निवर्त्तनः

संवत्सरम् ॥ २४१ ॥

अभिषेचनीयान्तग्रहणेन दशपेयान्तो लक्ष्यते । अभिषेचनीयेनेष्ट्वा केशान्न वपत इति श्रुतेः । तच्च संवत्सरं न वपन इति श्रुतेः । वपनं मुण्डनं केशानामखण्डनम् । येनैवमाह स वैन्यव वर्त्तयते केशान्न वपत इति ॥ २४१ ॥

भूम्यनभिष्ठानं च ॥ २४२ ॥

चशब्दात्संवत्सरमेव ॥ २४२ ॥

अनुपानत्कस्य यावज्जीवम् ॥ २४३ ॥

पुनर्यावज्जीवमेव भूम्यनभिष्ठानम् । संवत्सरं तु सोपानत्कस्यापि भूम्यनभिष्ठानमिति ॥ २४३ ॥

उत्तरे शुक्ले पञ्चबिलः ॥ २४४ ॥

पञ्चबिल इति नामधेयम् । तस्माच्चरुः पञ्चबिलो नामेति । उत्तरग्रहणमनन्तरव्युदासार्थं उत्तरानन्तरार्थं च । वैशाखशुक्ल इत्यर्थः ॥ २४४ ॥

आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः

पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः ॥ २४५ ॥

तेषां च—

---

[1] दक्षिणस्मिन् पार्श्वे यवीयवैर्न युक्तं, यवैराचितं पूर्णं शकटमि-

प्रतिदिशमासादनमाग्नेयं पुरस्तात्प्रदक्षिणमि-
तराणि मध्येऽन्त्यम् ॥ २४६ ॥

हविर्भवति ॥ २४६ ॥

पूर्वैश्चरित्वा चरित्वा मध्यमे सप्तसूवासे-
चनम् ॥ २४७ ॥

स च तत्संस्कारः अतश्च सप्तचाभावेऽप्यन्येन कार्यं ॥२४७॥

आग्नेयो हिरण्यदक्षिणोऽग्नीधे दद्यादैन्द्रस्य ऋषभः सौम्यस्य बभ्रुर्ब्रह्मणे वैश्वदेवस्य पृषन्होत्रे पयस्याया वशाभावेऽप्रवीताध्वर्युभ्यां बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे ॥ २४८ ॥

दद्यादित्यनुवर्तते । वशा वन्ध्या । अप्रवीता अकामिका । अध्वर्युभ्यामिति । द्वितीयोऽग्नीत् ॥ २४८ ॥

अन्नाद्यकामस्याप्येषा ॥ २४९ ॥

राजसूयादूर्ध्वमिष्टिरियं भवति ॥ २४९ ॥

द्वादशोत्तराणि प्रयुग्घवींषि ॥ २५० ॥

निर्वपति ॥ २५० ॥

मासान्तराणि ॥ २५१ ॥

प्रयुग्घवींषीति नामधेयम् । स वै प्रयुजां हविर्भिर्यजत इति श्रुतेः । द्वादशग्रहणं वा मासान्तरपक्षे एकस्मिन्नेवाहनि क्रियेतेत्येवमर्थं । तथा च काण्वानां षट् षट् श्वो भूत इति पठ्यते । यद्वा द्वादशानामथ प्रयुग्घविष्ट्वमुत्तरेषां नेति द्वादशग्रहणम् ॥ २५१ ॥

आहवनीयाद्वा पुरस्ताच्छम्याप्रासे शम्याप्रा-

स आग्नेयसौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानरा यथोक्तम् ॥ २५२ ॥

यथा प्रदेशान्तर उक्तम ॥ २५२ ॥

एवमावृत्तस्य चरवः सारस्वतमैत्रक्षैत्रपत्यवारुणादित्याः ॥ २५३ ॥

एवमेव प्रत्यावृत्तस्य यम्याप्रासे भवति ॥ २५३ ॥

षट् षड्वैकतन्त्रे ॥ २५४ ॥

भवन्तीति सूत्रशेषः ॥ २५४ ॥

पूर्वाग्निवाहौ द्वौ द्वौ पण्णां पण्णां दक्षिणा ॥२५५॥

इतरत्र तु चोदकेनान्वाहार्यः ॥ २५५ ॥

अष्टापदीवत्पशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ ॥ २५६ ॥

अष्टापदीशब्देनानूबन्ध्योच्यते । लक्षणया तद्वत्पशुबन्धौ । तावेतौ गर्भिणीभ्यां भवत. स्वगुणदक्षिणौ । तद्गुणदक्षिणाविसर्पः ॥ २५६ ॥

श्येन्यादित्येभ्योदित्यै वा ॥ २५७ ॥

भवति ॥ २५७ ॥

वैश्वदेवीपृषती मारुती वा ॥ २५८ ॥

भवति ॥ २५८ ॥

तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः ॥२५९॥

तदन्तमहयाग्यानन्तरपौर्णमास्यां केशवपनीयो भवति॥२५९॥

उत्तरे च मासान्तराः ॥ २६० ॥

उत्तरे च क्रतवो मासान्तराः । चशब्दात्पौर्णमासी सुत्याश्च भवन्ति ॥ २६० ॥

व्युष्टिर्द्विरात्रः ॥ २६१ ॥

अग्निष्टोमातिरात्रौ ॥ २६२ ॥

अग्निष्टोमग्रहणमपार्ष्ठिकत्वज्ञापनार्थम् ॥ २६२ ॥

क्षत्रधृतिः ॥ २६३ ॥

अपरः क्रतुर्भवति ॥ २६३ ॥

तमुभयत एके त्रिष्टोमज्योतिष्टोमौ ॥ २६४ ॥

कुर्वन्त्येके उपरिष्टात् । अत्र च वैशाख्याममावास्यायां पशुबन्धौ । ज्येष्ठपौर्णमास्यां केशवपनीयः । आषाढ्यां व्युष्टिर्द्विरात्रः । श्रावण्यां क्षत्रधृतिः । भाद्रपदाश्वयुजयोस्त्रिष्टोमज्योतिष्टोमौ कार्त्तिक्यां सौत्रामणीति ॥ २६४ ॥

अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ॥ २६५ ॥

सोमापवर्ग इति सोमानामपवर्गो भवति । या तदपवर्गे सोमा. ॥ २६५ ॥

उत्तरे शुक्ले सौत्रामणी ॥ २६६ ॥

सोमानन्तरे शुक्ले सौत्रामणी भवति ॥ २६६ ॥

व्रीहीन्विरूढाविरूढान्क्षौम उपनह्य क्रीणाति क्लीबात्सीसेन ॥ २६७ ॥

ऋजुः ॥ २६७ ॥

पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति संसृजति ॥ २६८ ॥

ओदनपाको विरूढैः स चतुर्मुष्टिकग्रहणपूर्वकश्चोदकानुग्र-हाय। तस्य च विरूढचूर्णैरश्विभ्यां पच्यस्वेति संसर्गः ॥ २६८ ॥

सिंहवृकव्याघ्रलोमानि चात्रपति ॥ २६९ ॥

चशब्दात्तत्रैव ॥ २६९ ॥

पशुषु वा ॥ २७० ॥

आवपति तुल्यशास्त्रत्वात् ॥ २७० ॥

पुरोडाशधर्मा द्रव्यसामान्यात् ॥ २७१ ॥

अत्र च सुरायां पुरोडाशधर्माः प्रवर्त्तन्ते। द्रव्यं हि तेषां पर्युपस्थापकमिति। ननु च ग्रहग्रहणपुरोरुगुपयामादीनां दर्शना-त्सौमिका भवन्तीति गम्यते। नेत्याह ॥ २७१ ॥

यावदुक्तं सौमिका गुणत्वात् ॥ २७२ ॥

यावदुक्तं ते भवन्ति। न हि सौमिकधर्मप्रवृत्तिरत्र व्यक्तत्वात्। न च गुणप्रवृत्त्या गुणान्तरप्रवृत्तिर्युक्ता। गुणत्वाद्वेव ॥ २७२ ॥

त्रिपशुः पशुबन्धश्चश्चतुर्थ्याम् ॥ २७३ ॥

चतुर्थे चाहनि ॥ २७३ ॥

पक्वायाम् ॥ २७४ ॥

सुरायाम् ॥ २७४ ॥

आश्विनोजः श्येतः ॥ २७५ ॥

श्वेत आरक्तगौरः[१] ॥ २७५ ॥

मल्हाविः सारस्वती ॥ २७६ ॥

रजा मलं हन्तीति मल्हाविः सा सारस्वती ॥ २७६ ॥

---

१ आलोहितोङ्ग इति हरिस्वामी। गुरुवर्ण इति माधवाचार्याः।

ऋषममिन्द्राय सुत्राम्णे तद्गुणाभावेऽजाः ॥ २७७ ॥

तद्गुणानामभावे अजा भवन्ति ॥ २७७ ॥

प्रथमो लोहितः ॥ २७८ ॥

तदा च लोहितः प्रथमो भवति ॥ २७८ ॥

त्रियूपो वैकादशिनि लिङ्गात् ॥ २७९ ॥

त्रियूपो वा भवति एकयूपो वा एकादशिनि लिङ्गात् । एकादश्यां ह्युभय दृष्टम् । एकयूपतानेकयूपत्वं च । एकादशिनि लिङ्गं वात्र गणत्वमिति । अत्रोच्यते । सौत्रामणीसंवर्द्धनादेकयूपतैव नित्युं युज्यते । तत्र हि श्रूयते । तद्यदेतद् सौत्रामणिक यूपमेतौ पार्श्वभितो भवत इति । अपि च सुत्रारम्भसामर्थ्यादयमर्थोऽवगम्यते सूत्रारम्भमन्तरेणापि विकल्पः सिध्यत्येव । तस्मादेकयूपता नियम इति ॥ २७९ ॥

अग्नी वरुणप्रघासवत् ॥ २८० ॥

अवेदिर्दक्षिणः ॥ २८१ ॥

भवति ॥ २८१ ॥

वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति ॥ २८२ ॥

अनेन मन्त्रेण ॥ २८२ ॥

कुवलकर्कन्धुबदरचूर्णानि चावपति ॥ २८३ ॥

१कुवलादयो बदरजातिविशेषाः । वयोवस्थाविशेषा इत्यपरे ॥ २८३ ॥

---

१ बदराणि निरुपपदबदराणि चणकबदराणि च कुवलादिवाच्यानीति याज्ञिकाः । सूक्ष्मतरस्थूलमध्यमपरिणामानि बदरजातिफलानीति माधवाचार्याः ।

ग्रहं गृह्णाति, कुविदङ्गेति त्रीन्वा प्रतिदे-
वतमेतयैव ॥ २८४ ॥

पुरोरुचा। स श्राय विकल्पः एकं वा त्रीन्वेति श्रुतत्वात् ॥२८४॥

समस्यानुवाचनं प्रजेति च ॥ २८५ ॥

समासश्चैतुर्थ्यन्ताग्रामेव पदानां न विभक्तिलोपेन ॥ २८५ ॥

प्रथमस्यानुहोमभितरौ ॥ २८६ ॥

ग्रहौ ॥ २८६ ॥

परिस्रुद्धोमो दक्षिणेऽग्नौ ॥ २८७ ॥

तत्र चाहवनीयसंस्काराः कर्त्तव्याः चौदकपरिग्रासयो॥२८७॥

भक्षमाहृत्य परिस्रुच्छेषमासिच्य रुक्मव-
च्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धार-
यन्त्सून्नन्तमुपतिष्ठते त्रिचैः सोमवतां बर्हिष-
दामग्निष्वात्तानामिति ॥ २८८ ॥

भक्षाहरणमात्रोपदेशाद्विशेषानुपदेशाच्च यथान्यत्र भक्षण
तथेहापीति ॥ २८८ ॥

हवींषि निर्वपति सावित्रवारुणैन्द्राणि यथो-
क्तं पशुपुरोडाशार्थे ॥ २८९ ॥

देवतान्यत्वात्पशुपुरोडाशार्थे इत्युक्तम् ॥ २८९ ॥

नपुंसको दक्षिणा, रथवाही वा वडवा ॥२९०॥

विकल्पः ॥ २९० ॥

सोमातिपूतस्याप्येषा ॥ २९१ ॥

सौत्रामणी भवतीति शेषः ॥ २९१ ॥

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमास पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तवके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैः,ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैः देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तवकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः—

| | | मुद्रिताः स्तवकाः |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्यभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपाद. | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | (वेदान्तः) | ६ |

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णम्। ( जैनदर्शनम् ) २'

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणा-परम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णः } ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः } ( वेदान्तः ) २

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः } ( न्यायः ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता। } ( वेदान्तः ) १३

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। } ( वेदान्त ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीमदुपदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैत साम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। } ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम्। ( मीमांसा ) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्। ७

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्त ) १

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालय
बनारस सिटी।



No 78.] [Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम्

## महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्।

## KÂTYÂYANA ŚRAUTASUTRA,

WITH A COMMENTARY BY ŚRI KARKÂCHÂRYA

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,

Professor of Mîmâmsâ and Dharmashâstra,

Ranabîr Sanskrit Pâthashâlâ,

*Central Hindu College, Benares.*

FASCICULUS VIII

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT

BENARES

AGENTS --OTTO HARRASSOWITZ LEIPZIG

PANDIT JYESHTHARAMA MUKUNDJI BOMBAY

*Printed By Hari Das Gupta Proprietor*

AT THE VIDYA-VILASA PRESS

BENARES

1904.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोदितम् ॥ २ ॥

स्तबकः—७८

अनुयाजान्ते पशुपुरोडाशार्थेश्चरत्याश्विनेन प्रागवदानेभ्यः ॥ २९२ ॥

आश्विनस्य चानेनोत्पत्तिः पूर्वमनभिधानात् ॥ २९२॥

हविर्भिर्वा ॥ २९३ ॥

प्रागवदानेऽभ्यश्चरति । अस्मिंश्च पक्षे ॥ २९३ ॥

आश्विनाभावस्तु ॥ २९४ ॥

सौत्रामणीं त्रैधातवीं च प्रकृत्य श्रूयते। सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीति अत कर्मार्थमिदमाह—

राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी ॥२९५॥

त्रैधातवी चेति विकल्पमाशङ्क्याह—

त्रैधातव्यानुपूर्व्ययोगात् ॥ २९६ ॥

त्रैधातव्येवान्ते भवति । आनुपूर्व्ययोगात् । त्रैधातव्येवान्ते पठ्यत इति । न चानयोर्विकल्प । आम्नानसामर्थ्यात् । तेन सौत्रामण्यां उदवसानीयत्वमुच्यते । उदवसानीयासन्निधौ पाठात् । उदवसानीयेवोदवसानीयेति उपचारस्तस्मात्तया च पाठ अनया मऽपीदमसदतमपि सूया इति ॥ २९६ ॥

इति श्रीउपाध्यायकर्ककृतौ कात्यायनविवरणे पञ्चदशोऽध्याय समाप्तः।

# षोडशोऽध्यायः ।

राजसूयोनु विहितः इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो अग्निश्चनुविधेयः । सोनुविधीयते ।

## अग्निः सोमाङ्गं तद्गुणव्यतिषङ्गात् ॥ १ ॥

अग्निशब्दो ज्वलनवचनः संस्तदधिकरणभूतस्थलाभिधायको द्रष्टव्यः इष्टकाभिरग्निं चिनोतीति हि श्रूयते । तथाग्निमारोहन्ति अग्निं प्रोक्षन्तीति च आरोहणप्रोक्षणे स्थलस्योच्यते । तस्य चानारभ्य विधानात्प्रकृतिसव्यपेक्षत्वे सोमस्याङ्गमित्युच्यते । सोमशब्देन लक्षणया तत्साध्यक्रत्वभिधानम् । सोमाङ्गमिति कुत एतत् । तद्गुणव्यतिषङ्गात् । तद्गुणानां हि व्यतिषङ्गोत्र दृश्यते । अन्तरोपसदौ चिनोति । प्रायणीयेन प्रचर्य सीरं युनक्ति । चितो गार्हपत्यो भवत्यचित आहवनीयः । अथ राजा राजानं क्रीणातीत्येवमादि।फलवता च गुणव्यतिषङ्गे सति अफलस्य तदङ्गता ॥ १ ॥

## इच्छतः समहाव्रते नियमः ॥ २ ॥

अङ्गमपि सदिच्छया भवति । कथमवगम्यते । येन समहाव्रते नियमो दृश्यते । तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतमिति । ननु चाग्नौ महाव्रतनियमः कस्मान्न भवति । उच्यते अग्निप्रकरणे पाठात् । यस्यैव प्रकरणे तद्धर्मनियमो युक्तः । तस्मात्साध्वभिहितं समहाव्रते नियम इति । अत एवोक्तमिच्छत इति। नियमविधानादन्यत्रेच्छैव भवति ॥ २ ॥

## न प्रथमाहारे ॥ ३ ॥

प्रथमाह्रियत इति प्रथमाहारः । प्रथमप्रयोग इत्यर्थः ॥ ३ ॥

कुत एतत् प्रथमे प्रयोगे न भवतीति—

## उत्तरवेद्यग्निनिधानात् ॥ ४ ॥

उत्तरवेद्यां ह्यग्नेर्निधानं विहितम् । सयद्धार्यमाणेऽग्नौ उत्तरवेदिं व्याघारयतीति । अग्निधारणं च निधानार्थम् । अग्नौ च स्थलेऽग्निनिधानं विहितम् । यदि च प्रथमाहारेष्वग्निः स्यादुत्तरवेद्यामग्निनिधानमनर्थकं स्यात् । अथ पुन. प्रथमाहारेऽर्थवत्त्वे संदृष्टे द्वितीयादिष्वग्नावग्निनिधानमविरुद्धमिति सम्प्रदाय. । ननु चानारभ्यवादप्राकृतस्थधानयोर्विकल्पः कस्मान्न भवति । नेत्युच्यते । प्राकृतं विधानमुत्पत्तिशिष्टत्वादनारभ्यवादादुबलीयोऽतो न विकल्प इति।अत्र वदामः । यदि प्राकृते प्रत्यर्थिन्यनारभ्यवादस्यानवकाशः द्वितीयादिष्वपि प्रयोगेनारभ्यवादविहितेऽग्निर्न प्राप्नोति । तत्रापि हि प्रकृतिविहितमुत्तरवेद्यावग्निनिधानमस्त्येव । तस्मादपवादस्यैषा प्रथमाहारशब्देन प्रथमः प्रयोग उच्यत इति। कथं तर्ह्येतत् । उच्यते प्रथमाहारशब्देन ज्योतिष्टोमसंस्था उच्यते तस्य हि प्रथममाहरणमनुष्ठानम् । एवं हि श्रूयते । एष वा व प्रथमो यज्ञानां यज्ज्योतिष्टोम इति । आचार्येणाप्युक्तम् । एष प्रथमसोम इति । तेन प्रथमाहारे ज्योतिष्टोमे ऽग्निष्टोमसंस्थे नाग्निर्भवति । न हि प्राकृतं विधानमनारभ्यविधिना पक्षेऽपि बाधितुं शक्यते । अतोऽनारभ्यविहितस्याग्नेरन्यत्रावकाशः। यथा सात्तदश्यं प्रकृत्याम्नातेन पाञ्चदश्येन बाधितम् । यद्येवं पुनर्यत्रैव भवन नत्रैवाग्निः प्राप्नोति यथा साग्निचित्यावग्नेस्तोमायति यथाश्वमेधे एकविंशोऽग्निर्भवतीति सर्वमेधे चाग्निरुत्तम इति । नैव दोषः । अस्ति ह्यत्रान्यदपि विधानम् । अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन तमतिरात्रेण तमेकरात्रेण तं द्विरात्रेणेत्येवमादि समानविधानार्थानि वचनानि तै. सर्वत्र प्राप्तिः । तथा च तस्मादु समविधमेव प्रथमं विदधीतार्थकोत्तरमेकशतविधादिति । अतः सर्वत्र प्राप्तिः । साप्तदश्यं तु विशेषवचनमिति॥ ४ ॥

चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासे नेष्ट्वा पञ्चपशूनालभते दक्षिणान् ॥ ५ ॥

चिकीर्षमाण इत्यवाच्यमुपक्रमादेव तत्सिद्धेः । वाच्यंवा स्वयमातृण्णाद्युपधानेऽपि मा भूदालम्भ इत्येवमत्र प्रदर्शं चाभिजिद्विश्वजितोरपि पशवैव यथा स्युरिति ॥ ५ ॥

ब्रह्मणे वा दद्यात् ॥ ६ ॥

दक्षिणाम् । विकल्पेन हि श्रवणमत्र ॥ ६ ॥

अमावास्यायामेके ॥ ७ ॥

पशु पशूनालभन्ते । अमावास्यायामालभेतेत्यु हैक आहुरिति सा च माघामावास्या सन्निधानादूगृह्यते ॥ ७ ॥

अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् ॥ ८ ॥

आलभते । यस्तु वैश्वकर्मणं पुरुषं चारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजमिति सोऽर्थवादो इत्यनेनाग्निभ्यः कामायालभा इत्यस्य ॥ ८ ॥

वर्षिष्ठरशनः पुरुषोऽनुपूर्व्या इतरेषाम् ॥ ९ ॥

रशना भवन्ति पुरुषस्य । वर्षिष्ठाय ह्सीयस्यथ ह्सीति श्रुतेः । वर्षिष्ठता चायामापेक्षाया न स्थौल्यापेक्षया । प्रकृतौ ह्यायामः श्रूयते । द्विव्यामया रशनयेति ॥ ९ ॥

सर्वेषां वा तुल्याः ॥ १० ॥

रशना भवन्ति ॥ १० ॥

समिध्यमानसमिद्धवत्यन्तरे समास्त्वाग्न

इति नव दधाति ॥ ११ ॥

तेषां चतुर्विंशति सामिधेन्य इति प्रकृत्याह । समास्त्वाग्न ऋतवो वर्धयन्त्विति ॥ ११ ॥

आप्रियो द्वादशोर्ध्वा अस्येति ॥ १२ ॥

आप्रिय प्रयाजयाज्या, द्वादश भवन्ति । ता एता ऊर्ध्वा अस्य समिधो भवन्तीति श्रुते. ॥ १२ ॥

एकादशान्ते शासप्रैषादि करोति ॥ १३ ॥

प्रकृतौ दशान्तेमिहितम् इह यचनादेकादशान्त उच्यते ॥ १३ ॥

परिवृते पुरुषसंज्ञपनम् ॥ १४ ॥

वचनाद्भवति ॥ १४ ॥

अजस्य शुन्धति प्रचरणयोगात् ॥ १५ ॥

इतरेषां पशूनामप्सु कायप्रासनमुक्तम् अजेन चरतीति च। तेनाजस्य शुन्धतीत्युच्यते। स हि प्रचरणेन युज्यते ॥ १५ ॥

सर्वेषां वाविशेषात् ॥ १६ ॥

सर्वेषां वा शोधनं कर्तव्यम्। सर्वेषामेव ह्यविशेषेण देवतासम्बन्ध उपदिष्टः। तेन सर्वे पशवो यागाः। यागार्थद्रव्यस्य च यो धर्मः स सर्वेषां भवति। अप्सु कायप्रासनं तु वचनात् ॥ १६ ॥

वैश्यः पुरुषो राजन्यो वा ॥ १७ ॥

वचनाद्भवति ॥ १७ ॥

कण्ठेषु तृणमन्तर्धाय शिरा॑ःस्यादत्ते ॥ १८ ॥

तृणाधिकाराद्वपातृणकाल एव शिरसामादानं जिह्वावर्जम्। सा ह्यवदाने सह गृह्यते ॥ १८ ॥

चतुर्णामप्सु कायप्रासनम् ॥ १९ ॥

शिरो ग्रहणसमनन्तरमेव। येनाजं प्रक्रम्याह सꣳस्थिते तस्य शेषप्रासनमिति ॥ १९ ॥

ततो मृदिष्टकार्थापश्च ॥ २० ॥

तत एवोदकमध्याद् मृद्गृह्यते इष्टकार्थम्। आपश्च तत एव ॥ २० ॥

अजेन चरति ॥ २१ ॥

अजेन यज्ञꣳ सꣳस्थापयन्तीति वचनात् ॥ २१ ॥

सꣳस्थिते तस्य शेषप्रासनम् ॥ २२ ॥

सहं स्थिते च कर्मणि तच्चेवस्याप्सु प्रासनम् ॥ २२ ॥

सर्वैरेके ॥ २३ ॥

एके आचार्याः सर्वैः पशुभिः प्रचारमिच्छन्ति । तद्धैक आहुरत्रैवैतैः सर्वैः पशुभिर्यजेतेति हि श्रूयते । ननु चैवं सति सम्भरणार्थता विरुध्यते । सम्भरणार्थं हि अप्सु कुसिन्धानां प्रासनम् । कुसिन्धै कुथितया मृदा अद्भिश्चैकानां दार्ढ्यमुपजायत इति । अतः सर्वप्रचारे सम्भरणानुपपत्तिरिति ॥ २३ ॥

एवमाशङ्कित आह—

एकस्यापि किं ततः सम्भरेदिति श्रुतेः ॥ २४ ॥

तद्धैक आहुरत्रैवैतैः सर्वैः पशुभिर्यजेतेति प्रकृत्याह । यद्वा एनैरत्र सर्वैर्यजेत तद्देवाश्रेयन्तं परियादिति सर्वैर्योगमभिधाय निषेधति न तथा कुर्याद्देवानां तद्दिताविधादधो पथस्तदिधादयो किं तत सम्भरेदिति । सर्वयागपक्षे सम्भरणाभावे दोष प्रसङ्गात् । तस्मान्न सर्वैर्याग इति । एवमाशङ्कित उत्तरम् । एकस्यापि किं ततः सम्भरेदिति श्रुतेः । एकस्यापि पशोरालम्भे किं ततः सम्भरेदित्येतत्तुल्यमेव । तस्माद्विकल्पः सर्वैर्वा यागोऽनेन वेति । सम्भरणाभावः सर्वयागपक्षार्थवादः ॥ २४ ॥

वैश्वानरः पशुपुरोडाश उपांशु ॥ २५ ॥

भवति ॥ २५ ॥

पशुदेवता च ॥ २६ ॥

उपांश्वेव ॥ २६ ॥

आग्नेय्यो याज्यानुवाक्याः कामवत्यः ॥ २७ ॥

भवन्ति ॥ २७ ॥

मैथुनं वर्जयेदा पयस्यायाः ॥ २८ ॥

पयस्या अन्ते विहिता आ तत इति ॥ २८ ॥

मा॰ꣳसोपर्यसिने चेच्छन् ॥ २९ ॥

मासꣳसोपर्यासने चेच्छया वर्जयेत् ॥ २९ ॥

त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिरा-
ꣳसि निदधाति ॥ ३० ॥

त्वक्त्वगेव मस्तिष्कशब्देन शिरः कपालगतो मज्जाभिधीयते। ते च उद्धृत्य घृताक्तानि शिराꣳसि स्थापयति ॥ ३० ॥

सकलानि वा ॥ ३१ ॥

वेति विकल्पः ॥ ३१ ॥

अन्यानिवा हिरण्मयानि वामृन्मयानि वा-
नालभ्यैतान् ॥ ३२ ॥

पशून्। अन्यानि वा सद्यामहतानि गृह्णाति हिरण्मयानि वा मृन्मयानीति वा विकल्पः ॥ ३२ ॥

श्यामतूपरो वा प्राजापत्यः ॥ ३३ ॥

पशुरालभ्यते। पञ्च पशवो वेति विकल्पः। प्राजापत्यस्य चा-र्गणेषु नियमः ॥ ३३ ॥

षड्दध्यात् ॥ ३४ ॥

धाय्याः। प्राजापत्ये हि प्रकृत्योच्यते तस्यैकविꣳशतिः सा-मिधेन्य इति ॥ ३४ ॥

हिरण्यगर्भ इत्यृचाः स्रुवाघारः ॥ ३५ ॥

हिरण्यगर्भयत्याघारमाघारयतीति वचनात्। स च पूर्वं एव भवति नापूर्वः। प्रकृतिलिङ्गसंयोगात्। प्रकृतिलिङ्गसंयोगोऽत्र भव-ति। आघारमाघारयतीति। पूर्वत्वेऽपि सन्देहः किं पूर्वाघारे मन्त्रवि-धानमुतोत्तराघार इति ॥ ३५ ॥

किं तावत्प्राप्तम्—

## पूर्वो देवतासामान्यात् ॥ ३६ ॥

स्रुवाघारो हिरण्यगर्भवत्या कर्त्तव्यः। कुत एतत्। देवतासामान्यात्। स्रुवाघारे हि प्रजापतिर्देवता हिरण्यगर्भवत्यामपि प्रजापतेरेव देवतात्वं कस्मै देवाय हविषा विधेमेति। कश्च प्रजापतिः। मन्त्रश्च स्रुवाघार एव देवताभिधानसमर्थः। तस्मात्तत्रैव विनियुज्यत इति ॥ ३६ ॥

एवं प्राप्त आह—

## उत्तरे तु सामान्योपदेशाभ्याम् ॥ ३७ ॥

तुशब्दः पक्षव्यावृत्तौ न पूर्वस्मिन्नाघारे मन्त्रप्रयोगः। किं तर्ह्युत्तराघारे। कुत एतत्। मन्त्रवत्त्वसामान्यात्। यस्यैव च प्रकृतौ मन्त्रो दृष्टस्तस्यैव मन्त्रान्तरविधानमनुरूपतरम्। इतरत्र तु मन्त्रवत्ता च विधेया तद्विशेषश्चेति स्यात्। तेनोत्तराघारे मन्त्रो विधीयमानः शब्दवत्त्वसामान्यात् मन्त्रान्तरस्य निवर्त्तको भवति। यथा स्नेहेन सामान्यात् तैलं घृतस्य। यत्पुनरुक्तं कशब्देन प्रजापतिरभिधीयत इति। इन्द्रस्यापि तच्छब्दाभिधानमविरुद्धम्। तस्मान्मन्त्रोपदेशादुत्तराघारे एव तद्विनियोग इति ॥ ३७ ॥

## वायवे वा नियुत्वते श्वेतलप्सुदी द्वे दध्यात् ॥ ३८ ॥

अथवा नियुत्वगुणविशिष्टाय वायवे शुक्लपशुरालभ्यते न प्राजापत्यः पश्च पशवः एवमपि हि श्रूयत एव। श्वेतगे वर्णतः लप्सुदी कूर्चलः। तूपरशब्दोऽत्रानुवर्त्तते। अथैतं वायवे नियुत्वते शुक्लं तूपरमालभेत इति श्रुतेः। तत्र च द्वे धाय्ये दध्यात् तस्य सप्तदशसामिधेन्यो भवन्तीति वचनात् ॥ ३८ ॥

## प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः ॥ ३९ ॥

उभयोरपि प्राजापत्यवाय्वयोः प्राजापत्य एव द्वादशकपालः पुरोडाशो भवति ॥ ३९ ॥

प्रजापत्यस्य कद्रुवो याज्यानुवाक्याः ॥ ४० ॥

भवन्ति ॥ ४० ॥

शुक्लवत्यौ वायव्यस्य ॥ ४१ ॥

वपाया वा ॥ ४२ ॥

वा अवधारणे शुक्लवत्यौ भवतः । वपाया एव शुक्लवत्यौ स्यातामिति वचनात् ॥ ४२ ॥

तुल्यमन्यत्सर्वेषु ॥ ४३ ॥

उखासम्भरणमष्टम्याम् ॥ ४४ ॥

*उखायाः सम्भरणमुखासम्भरणम् तदष्टम्यां भवति । अष्टकायामुखां सम्भरतीति वचनात् । उखा चोपलक्षणम् । अषाढाद्यप्यत्र सम्भ्रियंत एव । ततश्चान्तराये तस्या अपि प्रयोक्तव्यम् ॥ ४४ ॥

आहवनीयस्य पुरस्तान्मत्या चतुरश्रे श्वभ्रे मृत्पिण्डमवदधाति भूमिसमम् ॥ ४५ ॥

भूमिसमं अन्यूनमनतिरिक्तम् ॥ ४५ ॥

पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति ॥ ४६ ॥

पिण्डाहवनीययोर्व्यध्वे मध्यपथे ॥ ४६ ॥

आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपञ्चाङ्गीबद्धास्तिष्ठन्ति प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः ॥ ४७ ॥

आहवनीयस्य दक्षिणतस्त्रिवृद्भिर्मुञ्जमयीभिः पञ्चाङ्गीभिः पु-

आञ्जयो मुखरिकाः ताभिर्यज्ञास्तिष्ठन्ति प्राङ्मुखाः मध्यगर्दभाजाः पूर्वापरयोस्य। रासभो मध्येऽश्वपूर्वाः ॥ ४७ ॥

उत्तरत आहवनीयस्यारत्निमात्र उभयतस्ती-
क्ष्णा वैणवी सुषिराभ्रिः कल्माष्यभावे ऽक-
ल्मापी प्रादेशमात्र्यरत्निमात्री वा ॥ ४८ ॥

आनन्तर्यात्पशूनामुत्तरतो मा भूदित्याहवनीयग्रहणम् ॥४८॥

हिरण्मयीमेके ॥ ४९ ॥

आचार्या इच्छन्ति । अतश्च विकल्पः ॥ ४९ ॥

अष्टगृहीतं जुहोति सन्ततमुद्गृह्णन्युञ्जान
इति ॥ ५० ॥

अष्टगृहीतमाज्यमूर्ध्वं सन्ततं जुहोत्युद्गृह्णन्युञ्जान इति । अत्रे-
दं चिन्त्यते । किमिदमेकं कर्म उताष्टावेतानीति । एकमिति ब्रूमः । तां वा एतामेकां सतीमष्टगृहीतामष्टाभिर्यजुर्भिर्जुहोतीति । अष्टौ वा कर्माणि नैकमिति । तान्येतान्यष्टौ सावित्राणीति । किं च वैश्वकर्म-
ण्येष्वेकवाक्यत्वात् । अष्टौ सावित्राण्यष्टौ वैश्वकर्मणानीति च । निः-
सन्दिग्धं वैश्वकर्मणान्यष्टौ । अतः सङ्ख्याविशेषात्सावित्राण्यष्टा-
विति गम्यते । तां वा एतामेकां सतीमित्येतस्मिन्वाक्ये सति अष्टौ सावित्राण्येव । तस्मिंश्च सति कथमेकान्ततोऽवधार्यते अष्टावेतानि क-
र्माणीति। उच्यते। उत्पत्तौ यजुर्विशिष्टानां श्रवणम् । एवं हि श्रूय-
ते । तेषां चेतयमानानां सवितैतानि सावित्राण्यपश्यत्तस्सवितारप-
श्यत्तस्मात्सावित्राणीति । यत्पुनरेकत्वश्रवणं तत्प्रक्षेपापेक्षया । प्रयो-
जनं यत्तदनन्तरं तत्प्रयुज्यते ॥ ५० ॥

देवस्य त्वेत्यभ्रिमादाय हस्त आधायैतेना-
भिमन्त्रयते ॥ ५१ ॥

हिरण्मयीपक्षे मन्त्रः स्यात् । विप्रदर्शनाद् हिरण्मयीमिति म-

न्त्रलिङ्गात् । न वा संस्तवार्थत्वात् । हिरण्मयीशब्देन संस्तवः क्रियते। तथा चाह । यद्वा एषा छन्दाꣳसि तेनैवा हिरण्यमिति । तस्माद्वैण- वी पक्षे पि मन्त्रप्रयोगः ॥ ५१ ॥

अश्वप्रभृतींश्च प्रतूर्तं युञ्जाथां योगे योग इति ॥ ५२ ॥

अभिमन्त्रयत इत्यनुवर्त्तते ॥ ५२ ॥

अनुपस्पृशन्नुत्क्रमयत्येनान्प्राचः प्रतिमन्त्रं प्रतूर्वन्नुर्वन्तरिक्षं पृथिव्या सधस्थादिति ॥ ५३ ॥

एभिर्मन्त्रैः ॥ ५३ ॥

अग्निषु ज्वलत्सु पिण्डं गच्छत्यग्निं पुरीष्यम् ॥५४॥

ज्वलत्स्वग्निषु पिण्डं प्रतिगच्छन्त्यग्निं पुरीष्यमित्यनेन म- न्त्रेण । प्रदीप्ता पतेऽप्रयो भवन्त्यथे मृदमच्छयन्तीति वचनात् ॥५४॥

दक्षिणतश्च पशवो युगपत् ॥ ५५ ॥

गच्छतां च दक्षिणतः पशवः उत्तरतश्च पुरुषाः युगपद्ग- मनम् ॥ ५५ ॥

अनद्धा पुरुषमीक्षते देवपितृमनुष्यानर्थक- मग्निं पुरीष्यमिति ॥ ५६ ॥

यो देवादीन्प्राप्नोति स देवपितृमनुष्यानर्थकः ॥ ५६ ॥

वल्मीकवपामादाय छिद्रेण पिण्डमीक्षते ऽन्व- ग्निरिति ॥ ५७ ॥

अनेन मन्त्रेण ॥ ५७ ॥

दृष्ट्वा निदधात्येनाम् ॥ ५८ ॥

वल्मीकवपाम् ॥ ५८ ॥

आगेत्येत्यभिमन्त्रयतेऽश्वम् ॥ ५९ ॥

आक्रम्येत्येनेन पिण्डमधिष्ठापयति ॥ ६० ॥

एतेनेत्यश्वोऽभिधीयते ॥ ६० ॥

द्यौस्त इति पृष्ठस्योपरिपाणिंधारयन्ननुपस्पृशन्नुत्क्रामेत्युत्क्रमयति ॥ ६१ ॥

अश्वम् ॥ ६१ ॥

उदक्रमीदित्यभिमन्त्रयते ॥ ६२ ॥

अश्वमेव ॥ ६२ ॥

आहवनीयवत् स्थापयति पिण्डस्य ॥ ६३ ॥

पश्चात् ॥ ६३ ॥

उपविश्य मृदमभिजुहोत्या त्वा जिघर्मीति व्यतिषक्ताभ्यामृग्भ्यामाहुती स्रुवेणाश्वपदे ॥ ६४ ॥

मृत्संस्कारत्वादुपविश्येत्युच्यते । व्यतिषक्तस्य एकस्याः पूर्वार्धं इतरस्या उत्तरार्धः । इतरयोरप्येवमेव ॥ ६४ ॥

अभ्रयापिण्डं त्रिः परिलिखति परिवाजपतिरिति वहिर्वहिरुत्तरयोत्तरयाऽभ्रया पिण्डं खनति देवस्य त्वेति ॥ ६५ ॥

अभ्रिग्रहणमभ्यन्तरनिवृत्त्यर्थम् । तथा चाह सा येनाभ्रिरासीदिति ॥ ६५ ॥

कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन्पुष्करपर्णमयां पृष्ठमिति ॥ ६६ ॥

तस्मिन्निति कृष्णाजिने ॥ ६६ ॥

विमाटर्येनदिव इति ॥ ६७ ॥

पुष्करपर्णम् ॥ ६७ ॥

आलभत उभे शर्म च स्थ इति ॥ ६८ ॥

उभे कृष्णाजिनपुष्करपर्णे। शक्यत्वाच्च युगपदालम्भनम्॥६८॥

पिण्डं पुरीष्योसीति ॥ ६९ ॥

आलभते ॥ ६९ ॥

पाणिभ्यां परिगृण्हात्येनं दक्षिणोत्तराभ्यां दक्षिणः साभ्रिस्त्वामग्न इति षड्भिः सर्वैः स्वकृद्धृत्वा पुष्करपर्णे निदधाति ॥ ७० ॥

ग्रहणे मन्त्रः अथैनं परिगृह्णातीति वचनात् ॥ ७० ॥

अपः श्वभ्रेऽवनयत्यपो देवीरिति ॥ ७१ ॥

अनेन मन्त्रेण। श्वभ्रः पिण्डावटः ॥ ७१ ॥

स इति वातमपक्षिपतीति ॥ ७२ ॥

श्वभ्र एव ॥ ७२ ॥

अनामिकया सम्वपति पुरस्तात्पश्चाद्दक्षिण-त उत्तरतश्च ॥ ७३ ॥

संवापश्चावटे पुरीषस्य ॥ ७३ ॥

आस्तीर्णयोरन्तानुदगृह्णाति सुजात इति ॥७४॥

आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोरन्तानुदगृह्णाति सुजात इत्यनेन मन्त्रेण ॥ ७४ ॥

तिवृता मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इति ॥७५॥

उद्गृह्यतानन्तान्मुञ्जयोक्त्रेणोपनह्यति वासो अग्न इत्यनेन मन्त्रेण ॥ ७५ ॥

उत्तिष्ठति पिण्डमादायोदु तिष्ठति ॥ ७६ ॥

ऊर्द्ध्वबाहुः प्राञ्चं प्रगृह्यात्यूर्द्ध्वं ऊ पु ण इति ॥७७॥

प्रसारितबाहु प्राञ्चं पिण्डं गृह्णाति ऊर्द्ध्व ऊ पु ण इत्यनेन मन्त्रेण ॥ ७७ ॥

अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जातस्थिरो भव शिवो भवेति ॥ ७८ ॥

प्रतिमन्त्रम् ॥ ७८ ॥

धारयन्नेषामुपरि पिण्डमनुपस्पृशन्प्रैतु वाजी वृषाग्निमित्यश्वखरयोः ॥ ७९ ॥

एषां पशूनामुपरि पिण्डमनुपस्पृशन् धारयति प्रैतु वाजीत्यश्वस्य वृषाग्निमिति खरस्य ॥ ७९ ॥

अग्न आयाहीत्याहृत्य खराच्छागस्य्र्तं ऋतं सत्यमित्या निधानात् ॥ ८० ॥

धारयत्यनुपस्पृशन्नेव ॥ ८० ॥

आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये ॥ ८१ ॥

स्वस्थानास्थितानामेवावृत्तिः ॥ ८१ ॥

अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति ॥ ८२ ॥

अनन्यार्थत्वात्पूर्वयच्छब्देनाग्निपु प्रज्वलादित्वयुच्यते ॥ ८२ ॥

उत्तरत आहवनीयस्योद्धृतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति ॥ ८३ ॥

अनेन मन्त्रेण ॥ ८३ ॥

विपाजसेति प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति ॥ ८४ ॥

विपाजसेत्यनेन मन्त्रेण प्रतिमुच्य पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशम्प्रति पशूनुत्सृजति ॥ ८४ ॥

आपोहिष्ठेति पर्णकषायपक्वमुदकमासिञ्चति पिण्डे॥ ८५॥

पर्णकषायं पलाशकषायं तत्पक्वमुदकम् ॥ ८५ ॥

फेनं च तूष्णीं ततः कृत्वा ॥ ८६ ॥

तत पयोदकात्पूर्वतरं फेनं कृत्वोदकमासिञ्चति । व्यपास्तफेनम् ॥ ८६ ॥

अजलोमभिः सꣳसृजति मित्रस्त्वः सꣳसृज्येति ॥ ८७ ॥

अजलोमिः सꣳसृजति पिण्डं मित्रः सꣳसृज्येत्यनेन मन्त्रेण ॥ ८७ ॥

शर्करायोरसाश्मचूर्णैश्च रुद्राः सꣳसृज्येति ॥८८॥

शर्करा प्रसिद्धा । अयोरसा लोहमिश्राणः कीर इति यः प्रसिद्धः । अश्मचूर्णः पाषाणचूर्णः । चशब्दादेतैः पिण्डं संसृजति ॥ ८८ ॥

सꣳसृष्टामिति संयौति ॥ ८९ ॥

पिण्डं मिश्रयत्याड्वालयतीत्यर्थः ॥ ८९ ॥

अपाढां करोति महिषी प्रथमविचा तदाख्या ॥९०॥

अषाढाख्यामिष्टकां महिषी करोति।महिषीशब्दस्यान्यत्राप्रसिद्धत्वादाह । प्रथमवित्ता तदाख्या । तथैव प्रथमवित्ता सा महिषीति ॥ ९० ॥

यजमानपादमात्रीं त्र्यालिखिताम् । ९१ ॥

महिषीपादमात्री मा भूदिति यजमानग्रहणम् ॥ ९१ ॥

यजमान उखां करोति मृदमादाय मखस्य शिर इति ॥ ९२ ॥

मृदादाने मन्त्रः । एवं हि श्रूयते । अथ मृत्पिण्डमपादत्ते यावन्तं निर्धेलं मन्यते मखस्य शिरोसीति ॥ ९२ ॥

प्रादेशमात्रीं तिर्यगूर्ध्वा च ॥ ९३ ॥

चशब्दात्प्रादेशमात्रीमेव ॥ ९३ ॥

पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपशौ ॥९४॥

ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपशावपि ॥ ९४ ॥

वसवस्त्वेति प्रथयति ॥ ९५ ॥

मार्द्रं पिण्डं ॥ ९५ ॥

अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति ॥ ९६ ॥

अनेन मन्त्रेण। धातुशब्दात्प्रक्षेप एव ॥ ९६ ॥

संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति ॥९७॥

ता॑ संलिप्य सा॑श्लक्ष्णायोत्तरत शुद्धिमादधातीति वचनात् ॥ ९७ ॥

विश्वेत्वेति समीकरोति ॥ ९८ ॥

सा यदि वर्षीयसी प्रादेशात्स्यादेतेन यजुषा ह्रसीयसीं कुर्याद्यदि ह्रसीयस्येतेन वर्षीयसीमिति वचनात् ॥ ९८ ॥

त्रितृतीय उत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति ९९ ॥

अनेन मन्त्रेण ॥ ९९ ॥

ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरावर्तिप्रासाः ॥ १०० ॥

वर्तीः करोति । उखाशब्दस्याकृतिवचनत्वादूर्ध्वत्वे गौणा भवति ॥ १०० ॥

स्तनानिवाग्रेपून्नयति ॥ १०१ ॥

ऊर्ध्ववर्तीनामेकैकस्याः ॥ १०१ ॥

द्विस्तनामष्टस्तनामेके ॥ १०२ ॥

तां हैके द्विस्तनां कुर्वन्त्यथो अष्टस्तनामिति श्रुतेः । द्विस्तनपक्षे पर्वाश्रिष्वेव पार्श्वेषु क्रियते । अष्टस्तनपक्षे द्वौ द्वाविति ॥ १०२ ॥

बिलं गृह्णात्यदितिष्ट इति ॥ १०३ ॥

मुखे गृह्णातीत्यर्थः ॥ १०३ ॥

कृत्वायेति निदधाति ॥ १०४ ॥

उखाम ॥ १०४ ॥

तिस्र एके ॥ १०५ ॥

उखाः कुर्वन्ति । ता हैके तिस्रः कुर्वन्तीति श्रुतेः । तदा च मृत्पिण्डग्रहणादेकैका निधानान्ता क्रियते ॥ १०५ ॥

इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणा-

स्त्र्यालिखिताः ॥ १०६ ॥

तुशब्दश्चशब्दस्यार्थे । चशब्दाद्यजमान एवेति । तिस्र इष्टका विश्वज्योतिः सञ्ज्ञकाः त्र्यालिखिताः पृथग्लक्षणाः करोति । लक्षणकरणं च प्रथमा द्वितीया तृतीया प्रशस्तयर्थमेषोपधानम् यथा स्यादिति ॥ १०६ ॥

मृदमुपशयां निदधाति ॥ १०७ ॥

उखां क्रियमाणामुपशेत इत्युपशया ताम् । मृदमतिरिच्यमानां निदधाति कार्यार्थम् ॥ १०७ ॥

सप्तभिरश्वशकृत्पिण्डैरुखां धूपयति दक्षिणाग्न्या-

दीप्तैरेकैकेन वसवस्त्वेति प्रति मन्त्रम् ॥ १०८ ॥

अभ्रया श्वभ्रं चतुरश्रं खनत्यदितिष्ट्वेति ॥ १०९ ॥

गर्तश्च पूर्वोक्त एव प्रकृतत्वात् । अत्र सा येनाग्निरवसीदितीति वचनात् ॥ १०९ ॥

श्रपणमास्तीर्य यथाकृतमवदधाति ॥ ११० ॥

श्वभ्रे येनैव क्रमेण कृता अषाढायाः ॥ ११० ॥

उखायां तु विशेषः—

देवानां त्वेत्युखां न्युब्जाम् ॥ १११ ॥

अवदधाति ॥ १११ ॥

श्रपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति

धिषणास्त्वेति ॥ ११२ ॥

अनेन मन्त्रेण ॥ ११२ ॥

निर्मन्थ्येन वा धूपनश्रपणे ॥ ११३ ॥

कर्त्तव्ये ॥ ११३ ॥

वरूत्रीष्ट्वेतीक्षमाणो जपति ॥ ११४ ॥

उखामीक्षमाणः ॥ ११४ ॥

आचरति मित्रस्येति ॥ ११५ ॥

आचरणं च श्रपणप्रक्षेपः ॥ ११५ ॥

यावद्धाचरेत् ॥ ११६ ॥

तावदपि मन्त्रः ॥ ११६ ॥

दिवैव प्रदहनोद्धरणे ॥ ११७ ॥

कर्त्तव्ये । तां दिवैवोपधयेदिति वचनात् ॥ ११७ ॥

उद्वपति श्रपणम् ॥ ११८ ॥

पदार्थतया ॥ ११८ ॥

देवस्त्वेत्युखाम् ॥ ११९ ॥

उद्वपति ॥ ११९ ॥

उत्तानां करोत्यव्यथमानेति ॥ १२० ॥

उत्ताम् ॥ १२० ॥

उद्यच्छत्युत्थायेति ॥ १२१ ॥

ऊर्ध्वं यच्छन्त्युद्यच्छति । उत्थायेत्यनेन मन्त्रेण ॥ १२१ ।

परिगृह्य पात्रे करोति मित्रैतां त इति ॥ १२२ ॥

अनेन मन्त्रेण ॥ १२२ ॥

अजापयसावसिञ्चति वसत्रस्त्वेति प्रतिमन्त्रम् ॥ १२३ ॥

उखाम् । नित्यपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्त्तव्या ॥ १२३ ॥

इष्टकाक्रियातस्त्र्यालिखितानाम् ॥ १२४ ॥

अत ऊर्द्ध्वमिष्टकास्त्र्यालिखिता क्रियन्ते ॥ १२४ ॥

अपरमितालिखिता वोत्तरयोः ॥ १२५ ॥

द्वितीयचतुर्थ्यो । कुत एतत् । तेहि प्रशस्याम्नायते रसो हैते चिती अपरमित उ वै रस इति । अतश्च विकल्पोयम् ॥ १२५ ॥

पूर्ववदग्निः पाके ॥ १२६ ॥

इष्टकाना पाके पूर्ववदग्निर्भवति निर्मन्थ्यो दक्षिणाग्निर्वा ॥ १२६ ॥

दीक्षामावास्यायामामावास्येनेष्ट्वा ॥ १२७ ॥

फाल्गुन्यमावास्यायां दीक्षा भवति । सा चामावास्येनेष्ट्वा पूर्णमासोपक्रमात् ॥ १२७ ॥

आग्नावैष्णववैश्वानरौ ॥ १२८ ॥

दीक्षणीयाया कर्त्तव्यौ ॥ १२८ ॥

घृते चरुरादित्येभ्यः ॥ १२९ ॥

घृतस्य प्रणयन कार्यम् कार्यपरत्वा ॥ १२९ ॥

प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम् ॥ १३० ॥

प्राकृतान्याध्वरिकाणि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रं जुहोति । अत्र च विप्रा द्वैधयत्यत्र तद्विधा विभज्यते । सप्तपूर्णामित्येनदाग्निके ऽत्र भोप द्वेधा विभज्यते द्विध आख्या. दरपर्वेत्यतदप्याग्निके भवति ॥ १३० ॥

दण्डोच्छ्रयाणान्तं कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायावस्तीर्णामन्तरे शणा मा सु भित्था इति तिष्ठन्नुदङ् प्राङ् ॥ १३१ ॥

दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मा सु भित्था इत्यनेन मन्त्रेण । सा च मुञ्जकुलायशाणकुलायावस्तीर्णा भवत्यन्तरे च शणा. । प्रागुदीचीं दिशमभिमुख ॥ १३१ ॥

अधिकारमुपजीवन्नाह—

रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च ॥ १३२ ॥

प्रागुदीचीं दिशमभिमुखो भवति ॥ १३२ ॥

अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति ॥ १३३ ॥

उखायामग्नावारूढ त्रयोदशसमिध आदधाति । प्रादेशमात्रीग्रहणं शिष्यानुस्मरणप्रसप्त्यर्थम् ॥ १३३ ॥

अनारोहत्यङ्गारानोप्यैके ॥ १३४ ॥

अनारोहत्यग्नावुखायामङ्गारानोप्यैके समिदाधानं कुर्वन्ति ॥१३४॥

ता इदानीमाह—

घृतोन्नां कार्मुकींहृत्त इति ॥ १३५ ॥

अनेन मन्त्रेणादधाति । क्रमुको धमन इत्युच्यते तदीया कार्मुकी ॥ १३५ ॥

वैकङ्कतीं परस्या इति ॥ १३६ ॥

अनेन मन्त्रेणादधाति ॥ १३६ ॥

औदुम्बरीं परमस्या इति ॥ १३७ ॥

आदधाति ॥ १३७ ॥

अपरशुवृक्णां यदग्न इति ॥ १३८ ॥

आदधाति । या परशुनाऽच्छिन्ना सापरशुवृक्णा ॥ १३८ ॥

अधः शयां यदत्तीति ॥ १३९ ॥

अनेन मन्त्रेण । अधः शया च भूमिसंलग्ना प्राह्या ॥ १३९ ॥

पालाशीः प्रत्यृचमहरहरिति ॥ १४० ॥

आदधाति । अथैता उत्तराः पालाश्यो भवन्तीति वचनात् । एवं चापरशुवृक्णा अधःशया औदुम्बर्यो वैव भवतः आरण्यन्तराविधानात् ॥ १४० ॥

उपोत्तमां क्षत्रियस्येच्छन् ॥ १४१ ॥

उत्तमायाः समीपे उपोत्तमा द्वादशी तां क्षत्रियस्य यजमानस्येच्छयादधाति । अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्तमोत्तमे इच्छयाधीयेते । एवं हि श्रूयते ता एता एकादशादधाति अक्षत्रियस्य वाऽपुरोहितस्य वेति ॥ १४१ ॥

एवं च सति—

उत्तमां पुरोहितस्य ॥ १४२ ॥

इच्छयादधाति ॥ १४२ ॥

अन्यस्योभे ॥ १४३ ॥

अन्यस्याक्षत्रियस्यापुरोहितस्य च एकादश भवन्ति त्रयोदश वा । क्षत्रियपुरोहितयोस्तु द्वादश त्रयोदश वा ॥ १४३ ॥

स्वाहाकारः सर्वासूखायाम् ॥ १४४ ॥

उखायामाधीयमानासु समित्सु । अतोऽन्यत्रापि स्वाहाकारो भवति । सर्वासामस्याभिधानात् ॥ १४४ ॥

औद्ग्रभणादि दण्डान्तमत्रैके ॥ १४५ ॥

एवं सति प्रागौद्ग्रभणहोमादुखाधिश्रयणादि तान्यु हैक उखायामेवैतान्यौद्ग्रभणानि जुह्वतीति वचनात् ॥ १४५ ॥

यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरिनाभि बहिष्पिण्डं दृशानो रुक्म इति ॥ १४६ ॥

रुक्मं हि प्रकृत्य सर्वमेवैतच्छ्रूयते । यजमानग्रहणाच्च स्वयमेव यजमानः प्रतिमुञ्चते । द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयुः । अत ऊर्ध्वं दण्डवाद्यन्वारम्भः । एवं हि सर्वं कृतं भवति ॥ १४६ ॥

इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः ॥ १४७ ॥

उखा याभ्यां गृह्यते तौ इण्ड्वौ । शिक्यं प्रसिद्धमासन्दी च । अनुक्ता रज्जवो मृद्दिग्धा भवन्ति ॥ १४७ ॥

परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति नक्तोषासेति ॥ १४८ ॥

अनेन मन्त्रेण ॥ १४८ ॥

हरति द्यावाक्षामेति ॥ १४९ ॥

तामेवोखाम् ॥ १४९ ॥

आहवनीयस्य पुरस्तादुदग्गात्रासन्दीवदासन्द्यां चतुरश्राङ्ग्याम् शिक्यवत्यां निदधाति देवाअग्निमिति ॥ १५० ॥

उद्वाथासन्दीवदिति प्रादेशमात्री गम्यते । सा च चतुरश्राङ्गी सह पादैः तस्यां शिक्यवत्यामासन्द्यां च निदधाति उखां देवा अग्निमित्यनेन मन्त्रेण ॥ १५० ॥

शिक्यपाशं प्रतिमुञ्चते षडुद्यामं त्रिभ्या-
रूपाणीति ॥ १५१ ॥

ग्रीवायाम् ॥ १५१ ॥

सशिक्यं प्राञ्चं प्रगृण्हाति सुपर्णोसीति
पिण्डवत् ॥ १५२ ॥

सह शिक्येन प्राञ्चमग्निं प्रगृह्णाति सुपर्णोसीत्यनेन मन्त्रेण । पिण्डवदित्यूर्ध्वबाहुः ॥ १५२ ॥

धारणं च ॥ १५३ ॥

पिण्डवदेव उपरिनाभि ॥ १५३ ॥

एतया विकृत्याभिमन्त्र्यैकेऽन्याचितिं चिन्वन्ति
द्रोणचिद्रथचक्रचित्कंकचित्प्रउगचिदुभयतः
प्रउगः समुह्यपुरीप इति ॥ १५४ ॥

एतेऽग्निविशेषाः । तदाकारांश्चिन्वन्त्येके । एके सुपर्णचितम् । चिलिङ्गत्वादस्याविकृतेरन्यन्तरेण प्राप्तिमां भूदित्युच्यते । एवं हि श्रूयते । तं हैक एतया विकृत्याभिमन्त्र्यान्यां चितिं चिन्वन्तीति ॥ १५४ ॥

समुह्यपुरीपे प्रतिदिशं पुरीषाहरणम् ॥ १५५ ॥

प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम् ॥ १५५ ॥

विष्णुक्रमान्क्रमते विष्णोरिति प्रतिमन्त्र-
मग्न्युद्ग्रहणं च तस्मिन् ॥ १५६ ॥

तस्मिन् क्रमणे ॥ १५६ ॥

अक्रमश्चतुर्थे ॥ १५७ ॥

उद्धरणं तु भवत्येव ॥ १५७ ॥

दिशो वीक्षते दिशो ऽनुविक्रमस्वेति ॥१५८॥

प्रतिदिशं मन्त्रः ॥ १५८ ॥

पिण्डवत्प्रागुदञ्चं प्रगृह्यात्यक्रन्ददग्निरिति॥१५९॥

पिण्डवदित्यूर्ध्वबाहुः ॥ १५९ ॥

अवहरत्यग्नेऽभ्यावर्त्तिन्निति ॥ १६० ॥

प्रत्यवरोहत्यग्निमग्नेऽभ्यावर्त्तिन्निति । यावत्कृत्व ऊर्ध्वो रोह-ति तावत्कृत्वः प्रत्यवरोहतीति श्रुतेस्तद्वत्प्रत्यवरोहणम् ॥ १६० ॥

उपरिनाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते ॥१६१॥

उपरिनाभि धारयन्नग्निमा त्वाहार्षमित्यभिमन्त्रयते ॥ १६१ ॥

पाशा उन्मुच्योदुत्तममिति पिण्डवत्प्राग्दक्षि-णा प्रगृह्णात्यग्ने बृहन्निति ॥ १६२ ॥

मन्त्रेण ॥ १६२ ॥

अवहरति हꣳसः शुचिषदिति ॥ १६३ ॥

अनेन मन्त्रेण ॥ १६३ ॥

आसन्द्यां करोति बृहदिति ॥ १६४ ॥

उपतिष्ठते सीद त्वामिति ॥ १६५ ॥

वात्सप्रेण च दिवस्परीत्येकादशभिः ॥ १६६ ॥

उपतिष्ठते ॥ १६६ ॥

अनुवाकेनैके ॥ १६७ ॥

उपतिष्ठन्ते ॥ १६७ ॥

अत्र दीक्षितोऽयमिति ॥ १६८ ॥

अस्मिन्नवसरे दीक्षितोऽयमित्याह । दण्डान्ते सुत्याधिश्रयणा-
द्युक्तम् । अत. प्राकृतानुवृत्त्यर्थमिदमुच्यते ॥ १६८ ॥

आवृत्तिरतः संवत्सरम् ॥ १६९ ॥

अत ऊर्ध्वं यदुच्यते तत्संवत्सरं यावदावर्त्तते ॥१६९॥

उखाया भस्मोद्वपनमस्तमिते पात्रे ॥ १७० ॥

तच्च प्राग्वाग्विसर्गात् । भस्मोदुप्य वाचं विसृजत इती
श्रुते ॥ १७० ॥

वाचं विसृज्य समिदाधानं रात्रीं रात्रीम-
प्रयावमिति ॥ १७१ ॥

तच्च यजमानस्य स्यात् । व्यपदेशसामर्थ्यात् । वाचं विसृ-
ज्येति । लिङ्गाच्च । अथ ये दीक्षितः समिधावादधाति ते अग्निहोता-
हुती इति । अथ वा नैतदेवं समाख्यानुग्रहादध्वर्यो. पदार्थः प्राप्नो-
ति । न च समाख्या बाधितव्या । किं च । याजमाना. पदार्था । परि-
भाषिताः । प्रधानं स्वामी फलयोगात्पुरुषयोगिमन्त्रसंस्कारयोस्त्या-
गे सामर्थ्याद्वचनादन्यदिति । नन्वत्रापि वचनं वाचं विसृज्य समि-
दाधानमिति । नैतदेवमन्यार्थं ह्येतत् । कोऽन्योऽर्थः । अनिर्ज्ञात-
कालस्य समिदाधानस्य काल लक्षयितुं वाचं विसृज्येत्युच्यते । यत्र
पुनर्व्यपदेशस्यानन्यार्थता भवति तत्र समानकर्तृकता भवति स-
माख्यामपि बाधित्वेति । अतः कालार्थोऽत्र व्यपदेशः । यथान्यत्र निरु-
प्याज्य प्रातर्दोहनमन्यस्मिन्निति । यत्पुनर्लिङ्गमुक्तम् । अथ ये दीक्षि-
तः समिधावादधातीति । तदध्वर्युकर्तृकत्वेपि न विरुध्यते । यजमान
एव हि समिदाधानं कारयन्नादधातीत्युच्यते ॥ १७१ ॥

एवमुदिते भस्मोद्वपनादि ॥ १७२ ॥

कर्त्तव्यम् ॥ १७२ ॥

अयं तु विशेषः—

अहरहरित्याधानम् ॥ १७३ ॥

विष्णुक्रमवात्सप्रे चाहर्व्यत्यासमुदिते समिधमाधाय ॥ १७४ ॥

विष्णुक्रमवात्सप्रे प्रत्यहं व्यत्यासेन कर्त्तव्ये ॥ १७४ ॥

तयोर्विभागमाह—

रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः ॥ १७५ ॥

साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः संवत्सरभृतं चिन्वीतेति । पवित्रे चतस्रो दीक्षा आम्नाताः पवित्रश्चतुर्दीक्ष इति । तत्राग्नौ सति चिन्त्यते । किमग्निनिमित्ता दीक्षा भवन्तु उत सौमिक्य इति । उभयं चैतद्चरितार्थम् । पवित्रादुपहिताग्निकयश्चरितार्थाः । अनग्निके च पवित्रे सौमिक्य इति । तेन साग्निमति पवित्रे कथं भवन्त्विति ॥ १७५ ॥

नियमकारणाभावादनियमे प्राप्त आह—

सोमाविरोधेन वा तत्प्राधान्यात् ॥ १७६ ॥

सोमाविरोधेन वा दीक्षा भवन्ति । कुत एतत् । तत्प्राधान्यात् । सोमस्य प्रधानभूतत्वात्तदीया एव दीक्षा भवन्तीति । ननु चैतदपि सोमस्यैव दीक्षाः अग्नेर्निमित्तभावमात्रमिति । सत्यमेवम् । एका सोमनिमित्ता अपरा अग्निनिमित्ता । तत्र राजाश्रितद्वारपालाश्रितन्यायेन राजाश्रितबलीयस्त्वात्सौमिक्य एव दीक्षा भवन्ति । वस्तुतः राजसूयेऽग्निप्रतिषेधः शाखान्तरे तदेतदूर्ध्वादाहरणम् समानन्यायार्थम् । अथ वा सर्वो भृतविषयता सूत्रस्यास्तु । अग्नौ फाल्गुनामावास्यायां दीक्षा । किं सर्वो भृतेऽपि त-

वैध भवन्तु । उभयथा प्राप्तमिति नियमकारणाभावादनियमे प्राप्त आह । सोमाविरोधेन वा तत्प्राधान्यादिति । अथ वा चयमास्यमन्तम चिन्वीतेत्यु हैक आहुरित्यत्र किं वसन्तं आरभ्य शरदि तुल्या उत शरदारभ्य वसन्त इति । तत्रैतदुच्यते । सोमाविरोधेन वा तत्प्राधान्यादिति । एवं सति शरदि तथारम्भ. कर्त्तव्यो यथा वसन्तयजनीये तुल्या भवन्तीति ॥ १७६ ॥

न्यञ्य समिधं व्रते व्रत्ते व्रत्ते ऽन्नपत

इत्याधानम् ॥ १७७ ॥

स चायं समित्संस्कारो व्रतसंस्कारश्चेति सम्प्रदायः । ततश्च समिधोयवाः सर्वव्रतेषु त्यज्यन्ते । नेत्यपरे । न ह्यत्र व्रतसंस्कारत्वे प्रमाणमस्ति । समिधस्त्वाधीयमानत्वात्संस्कार एवेति गम्यते । एष च इत्येकस्मिन्नेव व्रते न्यञ्जन व्रतबहुत्वेपि न सर्वेष्विति ॥ १७७ ॥

संवत्सरभृतिनोऽसंवत्सरभृतेऽपि ॥ १७८ ॥

अग्नौ चयनं भवति । कामश्चैवैनत् सञ्चिन्वीत येन पुरा सम्वत्सरं भृत. स्यादिति ॥ १७८ ॥

संवत्सरः सोप्यतः ॥ १७९ ॥

संवत्सरमभियवं करिष्यत असंवत्सर भृतेपि चयनं भवति । कामश्चैवैनं सञ्चिन्वीत य. सवत्सरमभिपवियिष्यन्स्यादिति वचनात् ॥ १७९ ॥

संवत्सराहिताग्नेः ॥ १८० ॥

असंवत्सरभृतेपि चयनमिष्यते । एतच्च सोमाधानिकस्य भवति नान्यस्य । एवं ह्यत्र श्रूयते । यः संवत्सरमग्निहोत्रं जुहुयादिति । तच्च सोमाधानिकस्यैव घटते नान्यस्य । कथमेकस्मिन्वसन्ते हि आधाने द्वितीयेग्नेस्सम्भवो भवति । नचाऽनिष्टप्रथमसोमस्याग्ने. सम्भवः । तस्मात्संवत्सराहिताग्निः सोमाधानिकस्यापि

च नोर्ध्वं संवत्सरात्सद्यो मृतः स्यात् । एवं हि श्रूयते । परसंवत्सरमग्निहोत्रं जुहुयादिति ॥ १८० ॥

जातस्य च ॥ १८१ ॥

संवत्सरे जातस्य च असंवत्सरभृतेपि चयनं भवति । एवं हि वचनं कामस्त्वेवैनं संश्चिन्वीत यः संवत्सरं जातः स्यादिति ॥१८१॥

षण्मास्यमन्त्यम् ॥ १८२ ॥

अन्त्यं जघन्यमिदं पक्षान्तरं षण्मासानुख्यभरणं कृत्वाग्निश्चीयत इति । षण्मास्यमन्तमं चिन्वीतेत्याहुरिति ॥ १८२ ॥

अचयनं वा परस्मै ॥ १८३ ॥

चयनं वेति विकल्पः । एवं हि श्रूयते । अथो ह वै समुद्रा अग्निर्यजुर्गं महायज्ञं साम्नां महदुक्थमृचामिति प्रकृत्याह । एतान्ह स समुद्रान्छोपयते य एतानि परस्मै करोतीति निन्दार्थवादः प्रतिषेधार्थः । तथाह । तस्मादप्येवं विरकामं परस्मा अग्निं चिनुयादिति प्रतिप्रसवः । प्रतिषेधप्रतिप्रसववाक्याभ्यां विकल्पः । अन्यत्वाहुरयमित्यस्माद्विकल्पो न वाच्यः । तेन चयनप्रतिषेधप्रतिप्रसवौ अन्यार्थौ । कोन्योऽर्थ इति चेत् । दक्षिणासंवादप्रतिषेधः । अथो ह वै समुद्रा इत्यत आरभ्यैतदेकं वाक्यं यावद्दक्षिणासु त्वेव न संवदितव्यमिति ॥ १८३ ॥

प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानं समिधाग्निमिति ॥ १८४ ॥

उख्यस्योत्तरतः प्राङ्मुखमनः कृत्वोख्य एव समिदाधानं समिधाग्निमिति ॥ १८४ ॥

सासन्दीकमुधम्योदु त्वेति दक्षिणतोऽनसि करोति ॥ १८५ ॥

सासन्दीकमुख्यमुदु स्वेत्युत्क्षिप्यानसो दक्षिणतोऽध्यवसितोऽनसिकरोति ॥ १८५ ॥

स्थाल्यां गार्हपत्यं पश्चात् ॥ १८६ ॥

अनसि करोति दक्षिणाग्निं च विवृतीये करोति ॥ १८६ ॥

अनड्वाहौ युक्त्वा प्रेदग्न इति प्राङ्याल्वा यथार्थम् ॥ १८७ ॥

गच्छेत् ॥ १८७ ॥

आरोहेत्पार्श्वतो वा गच्छेत् ॥ १८८ ॥

यजमानः मस्कारात् ॥ १८८ ॥

अक्षे खर्जत्यक्रन्ददग्निरिति जपति ॥ १८९ ॥

खर्जनं च शब्दकरणम् ॥ १८९ ॥

वासेऽवहत्युद्धतावोक्षित उत्तरतः समिदाधानं प्रप्रेति ॥ १९० ॥

यत्र वासमन्नेवावहरण न प्राग्वसतेः । वयं स्याद् । स यदि पुरा वसत्यै विमुञ्चेतानस्येवाग्नि. स्यादिति । वसत्यां तु उत्तरतोऽग्निमयनार्थं समिदाधान प्रप्रेति । उद्धतावोक्षितग्रहणं च परिसमूहनाद्यर्थमाप । स्मार्तं होतदनूधने । उद्धने वा अवोक्षितेऽग्निमादधातीति । एवं च सति तदपचारेऽस्मार्तं प्रायश्चित्तम् ॥ १९० ॥

वनीवाहनमेतद्दीक्षासु यदीच्छेत ॥ १९१ ॥

वनीवाहनमहाम्य कर्मणः सा च संव्यवहारायां ऊर्ध्वं वनीवाहनादिति नच्च दीक्षासु कर्तव्यम यदेच्छोपजायते । महावीरकरणयूपच्छेदनवनीवाहनानि दीक्षासु क्रियन्ते । क्रमस्तु नैषां पाठाभावात् ॥ १९१ ॥

अप्सूख्यभस्मावपनं क्रयणीयादौ ॥ १९२ ॥

उख्यभस्मावपनमप्सु कर्त्तव्यम् आदौ क्रयणीस्यान्ह. ॥१९

अन्यत्र चेच्छन् ॥ १९३ ॥

करोति ॥ १९३ ॥

ऊर्ध्वं वनीवाहनात्क्रमयोगात् ॥ १९४ ॥

अन्यत्रेच्छया कुर्वन्वनीवाहनादूर्ध्वं करोति मन्त्राणां प ठक्रमयोगात् ॥ १९४ ॥

पलाशपुटेनापो देवीरित्येकया ॥ १९५ ॥

पलाशपुटेन भस्म गृहीत्वाप्स्वावपति आपो देवीरित्ये कयर्चा ॥ १९५ ॥

ततो द्वाभ्याम् ॥ १९६ ॥

पुनश्चावपति द्वाभ्यामृग्भ्याम् ॥ १९६ ॥

आद्याभ्यां वा पूर्वम् ॥ १९७ ॥

पूर्वमावपनं द्वाभ्यामृग्भ्याम् तत एकयर्चा । वाशब्दो विक ल्पार्थः । तुल्यश्रुतित्वात् ॥ १९७ ॥

अनामिकया प्रास्तादादत्ते प्रसवेति ॥ १९८ ॥

प्रास्ताद्भस्मनः कियदप्यनामिकयादत्ते प्रसवेत्येभिर्मन्त्रैः । च तुर्भिरादत्त इति वचनात् ॥ १९८ ॥

प्रास्योखायामुपतिष्ठते बोधा म इति ॥१९९ ॥

यत्तदात्तं भस्म तत्प्रास्योखायामुपतिष्ठते बोधा म इति ॥१९९॥

प्रायश्चित्तिः समिधोपहृत्याज्यं विश्वकर्मण

इति जुहोति ॥ २०० ॥

प्रायश्चित्तिरित्यस्य होमस्य संज्ञा । आज्यग्रहणं न कर्त्तव्यमुक्तत्वात्तस्य होमो नादेश इति । कर्त्तव्यं वा गुणार्थम् । समिधोपहत्येति । उपपूर्वश्च हन्तिर्ग्रहणार्थो दृष्टान्यत्रापि । अथ स्रुवेणोपहत्याज्यमिति ॥ २०० ॥

उत्थायादधाति समिधं पुनस्त्वेति ॥ २०१ ॥

अनेन मन्त्रेण । उत्थानग्रहणं च प्रतिपत्तिरर्थात् गुणार्थं चेति ॥२०१॥
नैमित्तिकान्यत्रैव प्रकरणे पठ्यन्ते तदर्थमाह—

गार्हपत्येऽनुगते निर्मथ्य ॥ २०२ ॥

आदधाति । मन्थनं प्राप्तार्थत्वादवाच्यम् । उच्यते । प्रायश्चित्तार्थम् ॥२०२॥

सत्यास्त्वाहवनीये साङ्काशिनेन हृत्वा ॥ २०३ ॥

पुत्यासु वर्तमानास्वाहवनीयेऽनुगते साङ्काशिनेन हृत्वा तमादधाति । साङ्काशिनशब्दः प्रगुणमेव हृत्वेत्यर्थः । एतच्चोच्यते पूर्ववत् प्रणयनं मा भूदिति ॥ २०३ ॥

आग्नीध्रीयमुत्तरेण सदः ॥ २०४ ॥

आग्नीध्रीयमनुगतमुत्तरेण सदो हृत्वा निदधाति । उत्तरेणां सदो हृत्वतीध्मन्युदासार्थः ॥ २०४ ॥

प्रवृञ्ज्यादावृतोख्ये ॥ २०५ ॥

उख्ये चानुगते पूर्ववत्प्रवृञ्ज्यादयं तु विशेषः आवृता । आवृद्ग्रहणं च मन्त्रनिवृत्त्यर्थम् । एतयैवावृता अनुपहरन्यजुरिति श्रुतेः ॥ २०५ ॥

अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां पूर्वाम् ॥ २०६ ॥

अध्वरप्रायश्चित्तिं च करोति सर्वेषु तां च पूर्वां पूर्वाम् । च-

शब्दादाग्निकी च । सर्वग्रहणं च भस्मापोऽभ्यवहरणार्थं तत्रापि हि विधीयेते । उभे प्रायश्चित्ती करोति ये एवाग्नावनुगते इति । यथाकालमिति चाध्वरप्रायश्चित्त्यर्थमुच्यते । आग्निकी तु विश्वकर्मण इत्येव ॥ २०६ ॥

उखाभेदने नवस्थाल्यां महामुख्यामुखाकपालमवधायावपति ॥ २०७ ॥

यद्येषोख्याभिद्येतेति प्रकृत्य सर्वमिदमाम्नातम् । एतच्चैकोखापक्षे भवति । त्रित्वपक्षे तु द्वयोरेवैकस्यामावपनम् । ना हैके तिस्रः कुर्वन्तीति हि प्रकृत्य यदीतराभ्यमेस्यतेयेतरस्यां भरिष्यामो यदीतराभ्येतरस्यामिति ॥ २०७ ॥

उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता ॥ २०८ ॥

उखाखण्डमेकमुखायां प्रक्षिप्तम् द्वितीयमुपशयया सह पिष्ट्वा मृदा सहोखां करोत्यावृता मन्त्रवर्जम् । आवृच्छब्देन क्रियामात्रमुच्यते । तथा चोक्तमेतयैवावृता अनुपहरन्यजुरिति ॥ २०८ ॥

पक्वायामावपति कपालं च ॥ २०९ ॥

पक्वायामुखायामावपत्यग्निं कपालं च ॥ २०९ ॥

उखोपशये पिष्ट्वा संसृज्य निदधाति ॥२१०॥

उख्यकपालं उपशयां च पिष्ट्वा संसृज्य स्थापयति ॥ २१० ॥

इदानीं चयनप्रकारमाह—

अभ्यात्मं चयनमुपविश्य ॥ २११ ॥

आत्मानमाभिमुख्येन चयनं कर्तव्यम् न परागिति । तथा च नैर्ऋतीषु वचनात्परत्र चयनमुक्तम् । पराचमेव निर्ऋतिं पाप्मानमपहन्ते ॥ २११ ॥

अपरो विशेषः—

सव्यबाहुमन्तरं कृत्वोत्तरलक्षणामिरिष्टकाभिः ॥२१२॥

चेतव्यः ॥ २१२ ॥

नित्ये सादनसूददोहसा उपधानादुत्तरे तया देवतया ता अस्येति ॥ २१३ ॥

सर्वास्विष्टकास्वेते नित्ये भवतः । तया देवतयेति सादनम् । ता अस्येति सूददोहसाधिवदनम् । ॥ २१३ ॥

कुत एतत् सर्वास्विष्टकास्वेते भवत इति—

अविशेषोपदेशात् ॥ २१४ ॥

अविशेषेण ह्यनारभ्य किञ्चिदिष्टकाविशेषमेते श्रूयते । तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम् ॥ २१४ ॥

किं च—

अनाम्नातप्रतिषेधाच्च ॥ २१५ ॥

यत्रापि नाम्नायेते सादनसूददोहसौ तत्रापि प्रतिषेधति । यथानैर्ऋतीषु न सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददोहसाधिवदति प्राणो वै सूददोहसा नेत्पाप्मानं प्राणेन सन्तनवानि सन्दधानीति तस्मात्सर्वत्रैते भवतः ॥ २१५ ॥

एकचोदनास्त्वेकदेशासु तन्त्रेण ॥ २१६ ॥

एकचोदना अपस्या वयस्या इत्येवमादि । एकचोदना अपि यद्येकदेशा भवन्ति । यथा तासामेवदेशभेदः । अपस्याः पञ्चपश्चात्प्राक्रान्तेष्विति । अतश्च प्रत्यनूकं नित्ये । देशभेदे त्वसति तन्त्रेणेति ॥ २१६ ॥

आत्मनि यजुष्मतीः ॥ २१७ ॥

इष्टका उपदधाति न पक्षपुच्छयोः । स या आत्मन्नेव यजुष्मतीरुपदधाति न पक्षपुच्छेष्विति ॥ २१७ ॥

लोकं पृणासु दशसु दशसु लोकं पृणेति ॥२१८॥

तस्माद्दशदशेष्टका उपधाय लोकं पृणयाभिमन्त्रयत इति श्रूयते ॥ २१८ ॥

असादनं च ॥ २१९ ॥

लोकं पृणानाम् । सूददोहसाधिवदनं तु मधस्थप्रतिषिद्धत्वात् ॥ २१९ ॥

प्रतिचिति द्वे द्वे उपधाय ॥ २२० ॥

लोकं पृणामन्त्रवचनम् । पुनर्दशसु दशसु ॥ २२० ॥

अयुग्मगणमध्यमानूके ॥ २२१ ॥

अयुग्मो य इष्टकागणो यथा वालखिल्याः सप्त तासां मध्य मानूक उपधेया ॥ २२१ ॥

एका च ॥ २२२ ॥

या चैकेष्टका साप्यनूक एव । यथा विश्वज्योतिर्द्वियजुश्रेत्येवमादि ॥ २२२ ॥

अभितो युग्माः ॥ २२३ ॥

अनूकमभितोर्धार्धिकया युग्मा उपधीयन्ते । यथा प्राणभृतो दशच्छन्दस्या द्वादश ॥ २२३ ॥

उदञ्चो वर्गाः पूर्वापरे ॥ २२४ ॥

यत्र पूर्वापर इतीदृग्व्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते ॥ २२४ ॥

प्राञ्चो दक्षिणोत्तरे ॥ २२५ ॥

यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति ॥ २२५ ॥

भिन्नकृष्णयोरचयनम् ॥ २२६ ॥

न भित्वा न कृष्णामुपदध्यादिति ॥ २२६ ॥

दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् ॥ २२७ ॥

कर्तव्यम् ॥ २२७ ॥

उल्यस्थाने ऽर्धव्यामेन गार्हपत्यस्य परिलिखति ॥ २२८ ॥

मण्डलमिति शेषः ॥ २२८ ॥

मण्डलाद्वा प्रक्रमणमन्तःपात्यस्य ॥ २२९ ॥

पूर्वार्धाद्व्यामस्य श्रीन्प्राचः प्रक्रमान्प्रक्रामतीति वचनात् । यद्येवं वाशब्दोऽवधारणार्थः । पूर्वार्धादेव व्यामस्य प्रक्रमणं न स्तम्भादिति । स्तम्भादि प्रक्रमणमग्नौ चरितार्थम् ॥ २२९ ॥

पश्चाद्यूपावट्यात्पादमात्रे चित्यस्य ॥ २३० ॥

स्थानं भवतीति शेषः ॥ २३० ॥

यजमानेनोदूर्ध्वबाहुप्रपदोच्छ्रितेन समस्थितेन वा ॥ २३१ ॥

प्रपदोच्छ्रित पादाग्रे व्यवस्थितः । समस्थितः प्रसिद्ध एव । तं वा उद्बाहुना पुरुषेण मिमीत इति ऊर्ध्वबाहुरिति सूचितम् मिमीत इति च । तत्क्रियायाश्चोदितत्वात्प्रक्रमवायदध्वर्युमां भूदिति यजमानग्रहणम् ॥ २३१ ॥

द्विपुरुषा; रज्जुं मित्वा ॥ २३२ ॥

निगदव्याख्यातम् १ ॥ २३२ ॥

---

१ चोदकात्परस्यापि ग्रन्थस्य यद्यपि कपर्दाचार्येण ग्रन्थेऽत्र न व्याख्याता केवलम् निगदव्याख्यातमित्येवोक्तम् । तथाप्युपयोगित्वादस्य व्याख्यायते । द्विपुरुषा; रज्जु मित्वा ॥ १ ॥ उभयतः पाशाम् ॥ २ ॥ मध्ये लक्षणम् ॥ ३ ॥ अभितो ऽपुरुषयोश्च ॥ ४ ॥ ट-

# सप्तदशोऽध्यायः ।

श्वोऽभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा वि-
ष्णुक्रमवात्सप्रसमासः ॥ १ ॥

दीक्षाणामुत्तमेऽहनि येषग्निमानमुक्तम् । अतः श्वःशब्देन क्रयणीयमहरभिधीयते । तत्र भस्माभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः कर्तव्यः । अप्सु एव भस्मावपनं क्रयणीयादावुक्तमपि सदवध्यर्थमुच्यते । विष्णुक्रमणं हि कृताधधिकम् । उदिते समिधमाधाय रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमण इति । ततः प्राग्भस्माभ्यवहरणं यथा स्यादिति । तथा च श्रुतिः । तदहः प्रातरुदित आदित्ये भस्मैव प्रथममुद्वपति भस्मोद्वुप्य वाचं विसृजते वाचं विसृज्य समिधमादधाति, समिधमाधाय भस्मापोऽभ्यवहरति यथैव तस्याभ्यवहरणं तथा पादाय भस्मनः प्रत्येत्योपायामोऽप्योपितश्चेतथ प्रायश्चित्तीकरोति ॥ १ ॥

वात्सप्रं कृत्वोपस्थेयं चेत् ॥ २ ॥

यदि पुनः परिपाट्या वात्सप्रोपस्थानं तस्मिन्नहन्यापतति तत उपस्थानं कृत्वा विष्णुक्रमवात्सप्रसमासः कार्यः । एवं मपि हि श्रूयते । यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रामन्वा वात्सप्रमन्तः कुर्यादिति ॥ २ ॥

पलाशशाखया गार्हपत्यं व्यूदूहत्यपेत वीतेति
पच्छः प्रतिदिशं पुरस्तात्प्रथमम् ॥ ३ ॥

पलाशशाखया गार्हपत्यस्थानं व्युदुहत्यपेत वीतेत्यस्य मन्त्रस्य पादेन पादेन प्रतिदिशम् ॥ ३ ॥

उदीचीं शाखामुदस्योखां निवपति

दमान्नीर्हविष्यशन्नहोमवद्देशे दक्षिणोत्तराः

कृत्वा दक्षिणामुखोऽनुपस्पृशन् ॥ २३ ॥

असुन्वन्तमिति प्रत्यृचं पराचीः ॥ २४ ॥

उपदधाति । ताः पराचीर्लोकभाजः कृत्योपदधातीति श्रुतेः ॥ २४ ॥

अभ्यात्ममेके ॥ २५ ॥

उपदधाति ॥ २५ ॥

निलाभावः ॥ २६ ॥

निलयशब्देन सादनसूददोहसौ उच्यते ॥ २६ ॥

शिक्यरुक्मपाशोण्ड्वासन्दीः परेणास्यति यं

त इति ॥ २७ ॥

नैर्ऋतीनां यं त इत्यनेन मन्त्रेण ॥ २७ ॥

उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति न-

मो भूत्या इति ॥ २८ ॥

आत्मनश्चेष्टकानां चान्तराले उदपात्रं निषिच्य उत्तिष्ठति नमो भूत्या इत्यनेन मन्त्रेण ॥ २८ ॥

अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेश-

न इति ॥ २९ ॥

अनेन मन्त्रेण । अनपेक्षणं च नैर्ऋतीविषयम् ॥ २९ ॥

प्रायणीयहविष्कृदन्ते महावेदेरस्याद्या सम्म-

र्शनात्करोति ॥ ३० ॥

शेषोऽष्टौ वक्राः ॥ १६ ॥

उपधीयन्ते क्षेत्रपूरणात् ॥ १६ ॥

तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयो-
र्वा दशस्वेकस्यां च ॥ १७ ॥

लोकंपृणानां मन्त्रवचनम् ॥ १७ ॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ॥१८॥

अनेन मन्त्रेण ॥ १८ ॥

समं बिलं कृत्वोख्यं निवपति ससि-
तमिति ॥ १९ ॥

गार्हपत्यचितिं पुरीषेण समं बिलं कृत्वोख्यमग्निं निवपति ससितमित्यनेन मन्त्रेण ॥ १९ ॥

रिक्तां नावेक्षेतोखाम् ॥ २० ॥

तामेव ॥ २० ॥

सिकताभिः समं बिलं कृत्वा मातेव पुत्र-
मिति शिक्याद्विमुच्याग्निं निधायासिञ्चति
पयो मध्ये तूष्णीम् ॥ २१ ॥

अग्निपद्विस्तारनिमात्रे गार्हपत्यस्योत्तरतः । तूष्णीमिति लौकिकमन्त्रोच्चारणप्रतिषेधः ॥ २१ ॥

त्रिचितमेके ॥ २२ ॥

गार्हपत्यं कुर्वन्ति । तत्र च त्रिभागोऽस्मेधा इष्टका इति सम्प्रदायः । अस्मिंश्च पक्षे प्रथमचिति लोकम्पृणानां पुरस्तां गृह्यम् ॥२२॥

नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रो लक्षणाः पा-

दमात्रीर्हविष्यशन्नहोमवद्देशे दक्षिणोत्तराः
कृत्वा दक्षिणामुखोऽनुपस्पृशन् ॥ २३ ॥

असुन्वन्तमिति प्रत्यृचं पराचीः ॥ २४ ॥

उपदधाति । ताः पराचीर्लोकभाजः कृत्वोपदधातीति श्रुतेः ॥ २४ ॥

अभ्यात्ममेके ॥ २५ ॥

उपदधाति ॥ २५ ॥

निलाभावः ॥ २६ ॥

निलयशब्देन सादनसूददोहसौ उच्यते ॥ २६ ॥

शिक्मरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं
त इति ॥ २७ ॥

नैर्ऋतीनां यं त इत्यनेन मन्त्रेण ॥ २७ ॥

उदपात्रं निषिच्यान्तरात्मेष्टकमुचिष्ठन्ति न-
मो भूत्या इति ॥ २८ ॥

आत्मनश्चेष्टकानां चान्तराले उदपात्रं निषिच्य उत्तिष्ठति नमो भूत्या इत्यनेन मन्त्रेण ॥ २८ ॥

अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेश-
न इति ॥ २९ ॥

अनेन मन्त्रेण । अनपेक्षणं च नैर्ऋतीविषयम् ॥ २९ ॥

प्रायणीयहविष्कृदन्ते महावेदेरप्याद्या सम्म-
र्शनात्करोति ॥ ३० ॥

शेषोऽष्टौ वक्राः ॥ १६ ॥

उपधीयन्ते क्षेत्रपूरणात् ॥ १६ ॥

तिसृषु लोकम्पृणासु मन्त्रो दशसु च द्वयो-
र्वा दशस्वेकस्यां च ॥ १७ ॥

लोकंपृणानां मन्त्रवचनम् ॥ १७ ॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ॥ १८ ॥

अनेन मन्त्रेण ॥ १८ ॥

समं बिलं कृत्वोख्यं निवपति समि-
तमिति ॥ १९ ॥

गार्हपत्यचितिं पुरीषेण समं बिलं कृत्वोख्यमग्निं निवपति समितमित्यनेन मन्त्रेण ॥ १९ ॥

रिक्तां नावेक्षेतोखाम् ॥ २० ॥

तामेव ॥ २० ॥

सिकताभिः समं बिलं कृत्वा मातेव पुत्र-
मिति शिक्याद्विमुच्याग्निवन्निधायासिञ्चति
पयो मध्ये तूष्णीम् ॥ २१ ॥

अग्निवदित्यग्निमात्रे गार्हपत्यस्योपरतः । तूष्णीमिति लौकिकपयागुधारणप्रतिषेध. ॥ २१ ॥

त्रिचितमेके ॥ २२ ॥

गार्हपत्यं कुर्वन्ति । तत्र च त्रिभागोऽस्मेषा इष्टका इति सम्प्रदाय । अस्मिन्न पक्षे प्रथमचितिं लोकम्पृणानां पुरस्तां मृत्यम ॥२२॥

नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रो लक्षणाः पा-

तिर्यगनूके ॥ ३९ ॥

ततः—

अक्ष्णया श्रोण्यंसयोः ॥ ४० ॥

अनूके ॥ ४१ ॥

ततः प्रागनूके ॥ ४१ ॥

श्रोण्यंसयोः ॥ ४२ ॥

दीर्घप्रयुक्तेषु वा पुरुषाः कृषन्ति ॥ ४३ ॥

दीर्घप्रयुक्तेषु वा कर्षणं भवति। अत्र च पुरुषाः कृषन्ति। तिर्यक्प्रयुक्तेष्वध्वर्युरेव ॥ ४३ ॥

अनड्वाहो विमुच्य विमुच्यध्वमिति ॥ ४४ ॥

अनेन मन्त्रेण ॥ ४४ ॥

पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥४५॥

पशुवदुत्सृज्य उत्तरपूर्वां दिशं प्रति दक्षिणाकालेऽध्वर्यवे ददातीति। अत्र च ल्यबादेश आचार्येण पदार्थनिर्देशार्थः प्रयुक्तो न समानकर्तृकार्थः। तेनाऽध्वर्योरेव विमोचनोत्सर्गौ दानं तु यजमानस्य। न हि श्रौतो ल्यबादेशः ॥ ४५ ॥

सीरमुत्करे कृत्वा कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ॥ ४६ ॥

अग्निक्षेत्रस्य। तूष्णीमिति वचनान्मन्त्राभावः ४६ ॥

पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति ॥ ४७ ॥

कुशस्तम्बे पञ्चगृहीतेनाज्येनोद्गृह्णाति सजूरब्द इत्यनेन मन्त्रेण ॥ ४७ ॥

चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्टमौदुम्बरेण चतुःस्रक्तिना ॥ ४८ ॥

चतसृषु सीतासु यदा त्रयोऽभिनिनीयन्ते तदा स त्रिभागः सीतैकैकस्य भवति । एवं हि श्रूयते । द्वादशोदचमसान्कृष्टे निनयति षोडशी च कृष्टास्सीताः । येनक्रमेणकृष्टाः सीतास्तेनैवोदचमसनिनयनं, यथा कृष्टमिति सूत्रितत्वात् ॥ ४८ ॥

त्रीन्कृष्टयोः ॥ ४९ ॥

निनयत्युदचमसान् । त्रीन्कृष्टे च निपतीति श्रुतेः । सर्वमेवाग्निक्षेत्रं कृष्टं चाकृष्टं च ॥ ४९ ॥

तत्र नियमे प्राप्त आह—

कृष्टमात्रे वा ॥ ५० ॥

निनयति । कृष्टपरिच्छिन्नं यत्कृष्टं तत्कृष्टमात्रं तदेव कृष्टं चाकृष्टं च यावत्कृष्टपरिच्छिन्नं तावत्कृष्टमकृष्टत्वाच्चाकृष्टमिति । कृष्टे पुनर्गृह्यमाणे कृतत्वाद्दोषप्रसङ्गः ॥ ५० ॥

तस्मिन्सर्वौषधमावपत्येकयवर्जमभोजनं तस्योच्छ्वासात् ॥ ५१ ॥

तस्मिन्नमसे सर्वौषधस्य वपति एकं यवं वर्जयित्वा । तस्य चाभोजनं यावज्जीवम् ॥ ५१ ॥

या ओषधीरिति तिसृभिर्वपत्युदपात्रवत् ॥ ५२ ॥

या ओषधीरिति त्रिचैः उदपात्रवदिति तिसृभिस्तिसृभिर्ऋग्भिश्चतसृषु चतसृषु सीतासु वपति । ततश्च अत्रापि प्रत्यृचं सत्रिभागा सत्रिभागा सीतेति कृष्टमात्रापि त्रिभागन्यूनानि त्रीणि त्रीणि । उदकासेकेऽप्येवमेव चमसानाम् ॥ ५२ ॥

सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वाहव-

नीयपरिश्रितोऽभिमन्त्रयते चितस्थेति ॥ ५३ ॥

प्रायणीयाया वेदयोक्तविमोकान्ते सीरयोजनादि कृतम् । धौ-षस्य ह्याज्यस्य विनियोगविधानात्तत उत्तरासु प्रतिपत्तिष्वसमाप्तास्वेवसोमनिवपनं कृतम् । इहापि तद्वदेव सोमनिवेपनाद्यातिथ्य-हविः कृतः कृत्वाहवनीयपरिश्रितोऽभिमन्त्रयते चितस्थेत्यनेन मन्त्रेण ॥ ५३ ॥

सप्तसप्त च ॥ ५४ ॥

अविशेषस्य विशेषव्यवस्थापनन्यायात्सप्तसप्तैवेत्युक्तम् ॥ ५४ ॥

लोगेष्टकास्स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषू-पदधाति तिष्ठन्मा मा हिꣳसीदिति प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् ॥ ५५ ॥

आहृत्योपदधाति ॥ ५५ ॥

उत्तरपरस्याः पश्चात् ॥ ५६ ॥

उत्तरा परस्याः दिश आहृत्य पश्चादुपदधाति सनसं । प्रति-पश्चांदाहरेदिति निषिध्य इतीत इवाहरतीत्युक्तत्वात् ॥ ५६ ॥

उत्तरस्याः सिकताः प्रमार्ष्टि जहामि सेदिमिति ॥५७॥

अनेन मन्त्रेण । तत उपदधाति ॥ ५७ ॥

उत्तरवेदिं निवपति चत्वारिꣳशत्पदां युगमात्रीं वा सर्वतः कुशस्तम्बे ॥ ५८ ॥

छादनान्तां करोति ॥ ५८ ॥

अग्ने तवेति सिकतान्युप्य च्छादयत्यात्मानम् ॥५९॥

अग्ने तवेत्यनेन मन्त्रेण सिकतान्युप्य छादयत्यात्मानम् ॥५९॥

त्रिरुक्तायां प्रथमायामृचि अश्वपूर्वां चितिं हृत्वा अग्निपुच्छाद्दक्षिणां निदधाति ॥ ६६ ॥

तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण ॥ ६७ ॥

अश्वशब्दाभिहितस्थानप्रदेशस्य तीर्थशब्दोपादानमन्यत्राप्यनेनैवारोहणं यथा स्यादिति ॥ ६७ ॥

पुरस्तात्पश्चाद्धैके ॥ ६८ ॥

अश्वमारोहयन्ति । स चायं विकल्पोऽश्वाविषय एव ॥६८॥

अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥६९॥

अश्वम् ॥ ६९ ॥

प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् ॥ ७० ॥

प्रत्यञ्चमागतमश्वं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् उत्तरपूर्वां दिशम् ॥ ७० ॥

उत्तरवेदिप्रोक्षणाद्यासम्भारनिवपनात्कृत्वोत्तरवेदिमपरेण तिष्ठन्यजमानो मयि गृह्णामीति जपति ॥ ७१ ॥

आहृत्याग्निमुत्तरवेदिकं कर्म कृत्वात्मन्यग्निं गृह्णीत इति श्रुतेः एवं च व्याधारणान्तमेव क्रियते न सम्भारनिवपनमिति । तथा वक्ष्यत्याचार्यः । पैतुदारवाद्यत्रैक इति अग्न्यर्थत्वात्सम्भाराणां तत्रैव निवपनमिति । यजमानो जपतीति चोत्तरपदार्थार्थम् । इह प्रत्यगाशीर्योगादेव प्राप्तिः ॥ ७१ ॥

सत्यसाम गायति ॥ ७२ ॥

पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ॥७३॥

कृतत्वाच्चदेव। पूर्ववदिति च मन्त्रो लभ्यते विमार्जनं च ॥७३॥

तस्मिन्रुक्ममधः पिण्डं ब्रह्म जज्ञानमिति ॥७४॥

अनेन मन्त्रेणोपदधाति हिरण्मयम्। रुक्मोपि च स एव ॥७४॥

उत्तानं प्राञ्चꣳ हिरण्यपुरुषं तस्मिन्हिरण्यगर्भ इति ॥ ७५ ॥

तस्मिन्रुक्मे प्राञ्चं उत्तानं हिरण्मयपुरुषमुपदधाति हिरण्यगर्भ इत्यनेन मन्त्रेण ॥ ७५ ॥

पुरुषे चित्रे साम गायति ॥ ७६ ॥

सप्तमीनिर्देशादालाभ्य पुरुषे चित्रलिङ्गमन्त्रे साम गायति ॥७६॥

पूर्वेणापरीत्योऽतः ॥ ७७ ॥

तमुपदधाय न पुरस्तात्परीयादिति वचनात् ॥ ७७ ॥

उपतिष्ठते यजमानो नमोऽस्त्विति ॥ ७८ ॥

पुरुषम् ॥ ७८ ॥

उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् ॥ ७९ ॥

उपवेशनग्रहणाच्च यजमानो जुहोति। द्वादशाहे चैकः कर्ता। पुरुषे जुहोति प्रत्यृचम् सृप्त्वा सृप्त्वा ॥ ७९ ॥

प्रत्येत्य दक्षिणतः ॥ ८० ॥

अपरिसृप्तो जुहोति ॥ ८० ॥

पश्चात्प्रथमान्त्ये ॥ ८१ ॥

पश्चात् प्रथमान्ते होमकर्मणी। पश्चात्प्राङ्मुखः ॥ ८१ ॥

पुरुषमवच्छाद्योरसा ऽस्पृष्टं बाह्वोः प्रापणान्ते लिखति ॥ ८२ ॥

अस्पृष्ट पुरुषमवच्छाद्योरसा बाह्वोः प्रापणान्ते लिखति । स चायं याजमानः पदार्थः प्रमाणत्वात् ॥ ८२ ॥

तत स्रुगुपधानं प्राच्योः ॥ ८३ ॥

तत्र परिलेखयोः स्रुचोरुपधानं प्राच्योः प्रागग्रयोः ॥ ८३ ॥

कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्यात् घृतपूर्णामग्ने ष्टेति ॥ ८४ ॥

तत्र परिलेखयोः स्रुचोरुपधानं प्रागग्रयोः कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुरस्करामिति । तन्मात्रं स्रुचः पुष्करमुक्तम् । बाहुमात्रीमिति परिमाणत्वाच्छ्रुचाम् । पादमात्रीं वा । कुत एतदाम्नानसामर्थ्यात् । पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यादिति । यद्येवं पादमात्रीमेव । तां च घृतपूर्णामग्ने ष्टेत्यनेन मन्त्रेणोपदधाति ॥ ८४ ॥

एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति ॥८५॥

अनेन मन्त्रेण ॥ ८५ ॥

तिरश्चयावेके ॥ ८६ ॥

प्राच्यौ वेति विकल्पः । अर्धपथे चैते भवत इति सम्प्रदायः ॥ ८६ ॥

स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति ॥८७॥

स्वयमातृण्णामिष्टकां पुरुषे उपदधाति शर्करां छिद्रां ध्रुवासीत्यनेन मन्त्रेण ॥ ८७ ॥

भूरित्येतस्यां साम गायति ॥ ८८ ॥

आलभ्य । सप्तम्युपदेशात् ॥ ८८ ॥

अन्यत्रापि व्याहृतिषु ॥ ८९ ॥

अतो ऽन्यत्रापि स्वयमातृण्णासु व्याहृतिषु सामगायति । अथ स्वयमातृण्णासु सामगायतीति प्रकृत्य स वै भूर्भुवःस्वरित्येतासु व्याहृतिषु गायतीत्याह । सूत्रे च बहुवचनं पूर्वापेक्षम् ॥ ८९ ॥

मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमिप्राप्तां काण्डात्काण्डादिति ॥ ९० ॥

तस्यां स्वयमातृण्णायां यथा भवत्यर्धमर्धं च भूमौ तथो-पधेया ॥ ९० ॥

पूर्वां पूर्वामुत्तराः ॥ ९१ ॥

इष्टका उपदधाति ॥ ९१ ॥

यास्त इति द्वियजुषं द्वितीये ॥ ९२ ॥

यास्त इत्यनेन मन्त्रेण द्वितीये लोके उपदधाति ॥ ९२ ॥

द्वितीय इति कुत एतत्—

उलूखलस्यरेतः सिग्वेलायामरत्निमात्रश्रुतेः ॥९३॥

उलूखलमुसले हि प्रकृत्याह ते रेतःसिचोर्वेलयोपदधाति अरत्निमात्रे रत्निमात्राद्धयमथ त इति श्रुतेः । रेतःसिचोर्द्विय-जुषश्चान्तर्यमुक्तम् ते अनन्तर्हितं द्वियजुष उपदधातीति । तेन द्वियजुषो द्वितीये लोके उपधानम् ॥ ९३ ॥

विराट् स्वराडिति रेतःसिचौ प्रतिमन्त्रम् ॥ ९४ ॥

उपदधाति ॥ ९४ ॥

प्रजापतिरिति विश्वज्योतिषम् ॥ ९५ ॥

उपदधाति ॥ ९५ ॥

ऋतव्ये मधुश्च माधवश्चेति ॥ ९६ ॥

उपधीयेते ॥ ९६ ॥

अषाढासीत्यषाढाम् ॥ ९७ ॥

उपदधाति ॥ ९७ ॥

स्वयमातृण्णारेतःसिग्विश्वज्योतिर्ऋतव्याषाढासु लक्षणानि कुरुत रज्ज्वा वेलार्थानि ॥९८॥

उपरिष्टाद्वेलायाः प्रयोजनमस्ति ॥ ९८ ॥

कूर्मं दधिमधुघृतैरनक्ति मधुवाता इति ॥ ९९ ॥

मन्त्रैः ॥ ९९ ॥

अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुषमभिमुखमपां गम्भन्निति तिसृभिः ॥१००॥

अषाढाद्दक्षिणतोऽरत्निमात्रे देशेऽवकासु कूर्ममुपदधाति पुरुषमभिमुखम् । उपरिष्टाच्चावकाः भवन्ति । अवका शब्देन सेवालमुच्यते । अपां गम्भन्निति तिसृभिस्तमुपदधाति ॥ १०० ॥

घट्टयति मध्यमया ॥ १०१ ॥

ऋचा ॥ १०१ ॥

उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्र औदुम्बरे प्रादेशमात्रे चतुरश्रमुलूखलं मध्यसङ्गृहीतमूर्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति ॥ १०२ ॥

अथोलूखलमुसले उपदधातीति प्रकृत्यैवमेक हि श्रूयते इति । पदे चैते भवतः यजुष्मतीत्वात् । भेदेन चोपधानं लिङ्गात् । सकृत्सा-

धयति समानं तत्करोति यदि ह युगपदुपधानं स्यान्न सकृत्व-मुच्येत ॥ १०२ ॥

उलूखल उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद्ध्रुवासीत्युखाम् ॥ १०३ ॥

अथोपशयां पिष्ट्वा लोकभाजमुखां कृत्वा पुरस्तादुखाया उप-निवपतीति । श्रुतिक्रमेणानुष्ठाने लोकभाकरणोत्तरकालं मन्त्र-वचनम् ॥ १०३ ॥

अग्ने युक्ष्वा हीति प्रत्यृचं स्रुवाहुती जुहोत्युखायाम् ॥ १०४ ॥

ऋजुम् ॥ १०४ ॥

उपस्थानं वाऽसम्वत्सरभृतिनः ॥ २०५ ॥

सम्वत्सरभृतिनो होमः । असम्वत्सरभृतिनः उपस्थानं होमो वा । विकल्पेन हि तस्य श्रवणमिति ॥ १०५ ॥

प्रतिशिरः सप्त सप्त हिरण्यशकलान्मुखे करोति सम्यक्स्रवन्तीति ॥ १०६ ॥

प्रति शिरः सप्त सप्त हिरण्यशकलान्प्रास्यति मुखे प्रथमं सम्यक्स्रवन्तीत्यनेन मन्त्रेण ॥ १०६ ॥

उत्तरां द्वौ द्वौ ॥ १०७ ॥

मन्त्रौ प्रतीयात् ॥ १०७ ॥

नासिकयोर्ऋचे त्वेति ॥ १०८ ॥

मन्त्रद्वयाभिधानादेव शकलद्वित्वमधिष्ठानभेदाच्च ॥ १०८ ॥

अक्ष्योर्भासे त्वेति ॥ १०९ ॥

प्रास्यति ॥ १०९ ॥

श्रोत्रयोरभूदिदमिति ॥ ११० ॥

प्रास्यन्ति ॥ ११० ॥

सर्वानप्येकस्मिन्नेके ॥ १११ ॥

एकस्मिन्नपि पशौ सर्वानेव शकलानेक आचार्याः प्रास्यन्ति । तथैके ऽपि यद्येक पशुर्भवति पञ्चैव कृत्वा सप्त सप्त प्रास्यन्तीति श्रुते ॥ १११ ॥

उखायां मत्याश्चि ॥ ११२ ॥

पशुशीर्षाण्युपदधातीति शेष ॥ ११२ ॥

तत्र च—

सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये ॥ ११३ ॥

सहस्रदा इत्यनेन मन्त्रेण पुरुषशिर उद्गृह्य मध्ये उपधेयम् ॥ ११३ ॥

अश्वाव्योरुत्तरतः पूर्वापरे ॥ ११४ ॥

पूर्वमश्वस्यापरमव्ये ॥ ११४ ॥

गोऽजयोश्च दक्षिणतः ॥ ११५ ॥

चशब्दात्पूर्वापरे एव । पूर्वं गोरपरमजस्य ॥ ११५ ॥

आदित्य गर्भमिति प्रतिमन्त्रं मन्त्रक्रमेण ॥ ११६ ॥

शिरांस्युपधीयन्ते ॥ ११६ ॥

चित्रं देवानामित्यर्धर्चशः स्रुवाहुती

मध्यमे ॥ ११७ ॥

चित्रन्देवानामित्येतेनार्धर्चेश स्रुवाहुती जुहोति पुरुषशिरसि । अथ पुरुषशीर्षमभिजुहोतीति वचनात् ॥ ११७ ॥

बहिर्वेद्युदङ् तिष्ठन्नुपतिष्ठति उत्सर्गैरिमं मा हिंसीरिति प्रतिमन्त्रम् ॥ ११८ ॥

बहिर्वेद्युदङ् मुखस्तिष्ठन्नुत्सर्गमन्त्रैरुपतिष्ठते पशुशीर्षाणि इमं मा हिंसीरिति प्रतिमन्त्रम् ॥ ११८ ॥

उखां परिक्राममेके ॥ ११९ ॥

एके आचार्या उखां परिक्रम्य परिक्रम्येह स्थिता एव तस्य पशोरुपस्थानं कुर्वन्ति । एवमपि हि श्रूयते । विपरिक्राममु हैक उपतिष्ठन्त इति विकल्पः ॥ ११९ ॥

उपधायोपधाय वा तस्य तस्य यथालिङ्गम् ॥ १२० ॥

तद्वैके यं यमेव पशुमुपदधाति तस्य ध्रुचमुत्सृजन्नीति श्रुतेः । अस्मिंश्च पक्षे प्रागजाशिर उपस्थानात्पुरुषाहुती इति ॥ १२० ॥

सर्वमन्त्रानप्येकस्मिन्नेके ॥ १२१ ॥

एकस्मिन्नपि पशुशिरसि सर्वमन्त्रानेके आचार्याः प्रयुञ्जते ॥ १२१ ॥
तत्र च—

उपधानमन्त्रान्विपरिहरन्नङ्गुलिं प्रथिष्ठे-
शिरसि ॥ १२२ ॥

ऐवं मन्त्रानयति । एतच्च यद्येकस्मिञ्छिरसि पञ्चकृत्वो हिरण्यशकलप्रक्षेपः कृतस्तदैव भवति ॥ १२२ ॥

एष च त्वं यविष्ठेति चित्योपस्थानम् ॥ १२३ ॥

बहिर्वेद्युत्सर्गैरुपस्थानं कृतम् । तेनैतेस्युरुच्यते । चशब्दादनेन च । उखापरिक्रमणपक्षेऽपीत्यर्थः ॥ १२३ ॥

अपरेण स्वयमातृण्णामेत्योपस्थाः पञ्च प-
ञ्चानूकान्तेष्वपां त्वेममिति प्रतिमन्त्रम् ॥ १२४ ॥

मारुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापरया उपदधातीति । अत्र च प्रत्यनूक्रान्त निल्ये भवत इत्युक्तमेवैकादशास्येकचोदनासु तन्त्रेणेति ॥ १२४ ॥

व्याघारणवत्प्राणभृतः कर्णसहिता दश दश पुरुषमुपार्ष्यैके रेतःसिग्विलायां च सर्वतो यथायोगमयम्पुर इति प्रतिमन्त्रम् ॥ १२५ ॥

प्राणभृतीष्टकानां नाम । ताश्च व्याघारणवद्दक्षिणपूर्वांसादारभ्य कर्णसहिता उपदधात्ययम्पुर इति प्रतिमन्त्रम् । तत उत्तराश्रोणेरारभ्य एवमेवोपधानम् । पुनर्दक्षिणाश्रोणेरारभ्य एवमेवोपधानम् । तत उत्तरांसादारभ्य । एवं चत्वारो दशका उपहिताः । पिण्डा दश रेत सिग्विलायां यथा योगं समविभागेनोपधीयन्ते । पुरुषमुपार्ष्य वा सर्वासामुपधानम् । ता हैके पुरुषमुपार्ष्योपदधतीति श्रुते. । ततश्च कर्णसहिता इति विकल्पः ॥ १२५ ॥

द्वितीयमयम् पश्चादिति ॥ १२६ ॥

द्वितीयं दशानामुपधान अयम पश्चादिति । अत्र चैके खण्डशो मन्त्रान्प्रयुञ्जते । पश्चात्प्रादिष्टकाः पश्चाद्यजूंष्यपीति वचनात् । तत्पुनरयुक्तम । वाक्यानामपरिसमाप्तत्वात् । कथं तर्हि यजुषां पश्चात्त्वम । अभ्यासेनेत्यदोषः । लिङ्गाच्च । कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति प्रकृत्याह यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्तीति । तस्मात्सकलमन्त्रप्रयोगो न खण्डश इति ॥ १२६ ॥

लोकम्पृणादक्षिणांसादध्यामध्यात्प्रदक्षिणमानूकान्तात्पूर्वस्मात् ॥ १२७ ॥

उपदधाति ॥ १२७ ॥

प्रत्येत्य शेषम् ॥ १२८ ॥

पूरयति ॥ १२८ ॥

पक्षपुच्छानि पराग्भिरप्ययेभ्योऽधि ॥ १२९ ॥

अथ येभ्य आरभ्य पक्षपुच्छानि पराग्भिरिष्टकाभिश्चि-नोति ॥ १२९ ॥

एवꣳ सर्वत्र ॥ १३० ॥

सर्वचितिष्वेव पराग्भिरिष्टकाभि पक्षपुच्छानां चयनम ॥१३०॥

मध्ये पुरीषं निवपति पूर्ववत् ॥ १३१ ॥

पूर्ववदिति मन्त्र उपलक्ष्यते ॥ १३१ ॥

पूर्वमर्धानूकं छादयति ॥ १३२ ॥

तत —

प्रदक्षिणमात्मानम् ॥ १३३ ॥

पुरीषेण च्छादयति ॥ १३३ ॥

पक्षपुच्छानि च ॥ १३४ ॥

चशब्दात्प्रदक्षिण पुरीषेण च्छादयति। दक्षिण पक्षमथ पुच्छ-मथोत्तरमिति ॥ १३४ ॥

चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्यायेति सप्तभिः ॥ १३५ ॥

सर्वचितिष्वित्यर्थं ॥ १३५ ॥

अष्टाभिरेके दशभिर्वा ॥ १३६ ॥

पुरीषवती ग्रहणात् यदैव पुरीषवती तदैवोपस्थान न प्रा-गिति ॥ १३६ ॥

उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चयन-पुरीषनिवपने ॥ १३७ ॥

कर्त्तव्ये । अन्तरोपसदौ चिनोतीति श्रुतेः ॥ १३७ ॥

तिरश्वं परिणीयोपास्तमयं पशुवदुत्सृज्य तावत्प्रतिपर्य्येति ॥ १३८ ॥

अस्तमयकाले त्रिकृत्वाश्वमग्निं परिणीयोत्तरपूर्वां दिशं प्रत्युत्सृज्य तावत्प्रतिपर्य्येति ॥ १३८ ॥

परिणयनमाग्निनिधानात् ॥ १३९ ॥

एतच्च परिणयनमग्निनिधानादर्वाक्कर्तव्यम् । एतच्च यद्यपि यजुभिरहोभिश्चितिः क्रियते तथापि प्रत्यस्तमयं क्रियत एव । विशिष्टकाले श्रवणात् ॥ १३९ ॥

त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायाम् ॥ १४० ॥

त्र्युपसत्के क्रतौ प्रथमायामुपसदि द्वे चिती उपधीयेते मध्यमायाञ्च तिस्रः ॥ १४० ॥

पञ्चगृहीताद्युत्तमा ॥ १४१ ॥

उत्तमोपसत्पञ्चगृहीतादि भवति । उपवसथीये ऽह्नप्रातर्यदिते वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णाति इत्येवमाद्युपक्रम्य प्रवर्ग्योपसद्भ्यां प्रचरतीति हि श्रूयते ॥ १४१ ॥

उत्तरासु च ॥ १४२ ॥

उत्तरासु च बहूपसत्सु पञ्चगृहीताद्युत्तमोपसद्भवति ॥१४२॥

सपुरीषा षट्स्वेकैका ॥ १४३ ॥

षट्सूपसत्सु सपुरीषा चितिरेकैका ॥ १४३ ॥

द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥ १४४ ॥

द्वादशोपसत्के क्रतौ व्यत्यासेन चितिपुरीषे भवतः ॥ १४४ ॥

विकर्ण्यंचैकादश्याम् ॥ १४५ ॥

तत्र चैकादश्यामुपसादि विकर्ण्यादि कर्तव्यम् ॥ १४५ ॥

चतुर्मासोपसत्के द्वादशाहशः ॥ १४६ ॥

द्वादशभिस्त्रीश्यभिरहोभिश्चिभिपुरीषे देये । अन्त्यमपुरीषमे-
कादशभिरहोभिर्विकर्ण्यादि च । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥१४६॥

षट्त्रिंशदहशः षट्त्रिंशदहशः स-
म्वत्सरे ॥ १४७ ॥

एतच्च सामर्थ्यात्रिसंवत्सरोपसत्के द्रष्टव्यम् । संवत्सरोपसत्के
हि विशेष वक्ष्यत्येव । तथा च तिसृभिस्तिसृभि- षट्त्रिंशद्भिश्चिति-
पुरीषाणि भवन्ति ॥ १४७ ॥

तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥१४८॥

चितीनां मासेन चितिपुरीषे चीयेते । मासेन चिति- मासेन
पुरीषम् । एवमष्टौ मासाः ॥ १४८ ॥

पञ्चम्यामसपत्ना विराजः प्रथमे ऽहन् ॥१४९॥

पञ्चम्यां चितौ प्रथमे ऽहन्यसपत्ना विराजश्चोपधीयन्ते ॥१४९॥

स्तोमभागा अन्वहम् ॥ १५० ॥

चीयन्ते । एवं नवमासा गता भवन्ति ॥ १५० ॥

मासं पुरीषं तूष्णीम् ॥ १५१ ॥

एवं दशमासाः ॥ १५१ ॥

नाकसत्प्रभृति मासम् ॥ १५२ ॥

एवमेकादश मासा भवन्ति ॥ १५२ ॥

पुरीषञ्च ॥ १५३ ॥

चशब्दान्मासमेव ॥ १५३ ॥

उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥ १५४ ॥

अत्रोत्तमयोरन्होर्विकर्ण्यादि पूर्वेद्युनि । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥ १५४ ॥

द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना ॥ १५५ ॥

भवन्ति ॥ १५५ ॥

उत्तराश्च ॥ १५६ ॥

तत्संख्या भवन्ति ॥ १५६ ॥

त्रिसाहस्र्युत्तमा ॥ १५७ ॥

उत्तमाचितिः त्रिसाहस्री लोकम्पृणानां भवति ॥ १५७ ॥

वक्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम् ॥ १५८ ॥

वक्रालिखितानां दक्षिणोत्तरे देशे उपधानम् । ऋजुया लिखितानां च मध्ये । अथ पञ्चमीं चितिमुपधाय त्रेधाग्निं विमिमीत इति प्रकृत्य एवमेव श्रुतत्वात् ॥ १५८ ॥

षट्त्रिंशच्छत्या वा तृतीयाष्टादशशत्या इतराः ॥ १५९ ॥

अयमपरो लोकम्पृणानां परिमाणविकल्पः ॥ १५९ ॥

गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥ १६० ॥

चितौ विभक्तव्याः ॥ १६० ॥

धिष्णीया उत्तमायाम् ॥ १६१ ॥

अपरिमितेष्टको वा ॥ १६२ ॥

अग्निर्भवति । अयं चापरिमितशब्दो ऽपरिमाणवचन इत्युक्त-मिष्टयाम् ॥ १६२ ॥

प्रथमोत्तमयोः पादमात्रीरतिरिक्ताः ॥ १६३ ॥

प्रथमोत्तमयोश्चित्योर्या अतिरिक्ता सा पादमात्री भवति ना-तोऽधिकेति ॥ १६३ ॥

दशगणाधिका भिल्वोत्करे कुर्यात् ॥ १६४ ॥

गार्हपत्याहवनीयावष्टौ च धिष्ण्या इति दशगणाः । अतो या अधिका ता भिल्वोत्करे कुर्यात् ॥ १६४ ॥

द्वितीयायामाश्विनीः प्रतिदिशम् ॥ १६५ ॥

द्वितीयाग्रहणं प्रथमायाः परिसमाप्तिज्ञापनार्थम् । आश्विनी-रिति च इष्टकानां संज्ञा ताः प्रतिदिशमुपधीयन्ते ॥ १६५ ॥

रेतःसिग्विलायामनूकमुत्तरेण पूर्वा द्वितीये ॥ १६६ ॥

श्लोके ॥ १६६ ॥

दक्षिणापूर्वेण ॥ १६७ ॥

उपधीयते ॥ १६७ ॥

दक्षिणा पूर्वेण ॥ १६८ ॥

अनूकमुपधीयते ॥ १६८ ॥

अपरा दक्षिणेन ॥ १६९ ॥

उत्तरापरेण ॥ १७० ॥

दक्षिणामुत्तरेण पञ्चमी ॥ १७१ ॥

अर्धपक्षे चैते भवतः ॥ १७१ ॥

वैश्वदेवीः ॥ १७२ ॥

वैश्वदेवीरितीष्टकानां सञ्ज्ञा ॥ १७२ ॥
तासां देशमाह—

पूर्वां दक्षिणेन ॥ १७३ ॥

दक्षिणामपरेण ॥ १७४ ॥

अपरामुत्तरेण ॥ १७५ ॥

उत्तरां पूर्वेण ॥ १७६ ॥

एवं वैश्वदेवीभ्यः प्राणभृतः ॥ १७७ ॥

उपधीयन्ते ॥ १७७ ॥

प्राणभृद्भ्योपस्याः ॥ १७८ ॥

उपधीयन्ते ॥ १७८ ॥

पूर्ववत्पञ्चम्यः सर्वासाम् ॥ १७९ ॥

एतच्चाचार्येण लाघवार्थमुपदिष्टम् ॥ १७९ ॥
इदानीमुपधानक्रममाह—

आश्विनीं ध्रुवक्षितिरिति प्रतिमन्त्रम् ॥ १८० ॥

उपदधाति ॥ १८० ॥

शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि ॥ १८१ ॥

उपधीयेते ॥ १८१ ॥

उत्तराश्च ॥ १८२ ॥

ऋतव्याः पूर्वयोरेवोपरि ॥ १८२ ॥

वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् ॥१८३॥

उपदधाति ॥ १८३ ॥

उत्तराश्च ॥ १८४ ॥

चशब्दात्प्रतिमन्त्रम् ॥ १८४ ॥

प्राणभृतः प्राणं म इति ॥ १८५ ॥

प्रतिमन्त्रं उपदधाति ॥ १८५ ॥

अपः पिन्वेत्यपस्याः ॥ १८६ ॥

उपदधाति ॥ १८६ ॥

वयस्याः पञ्च पञ्चानूकान्तेषु मूर्द्धावय

इति प्रतिमन्त्रम् ॥ १८७ ॥

चतस्रः पुरस्तात ॥ १८८ ॥

उपदधाति। तासाञ्च द्वे अक्ष्णयाभ्यां समलोकश्यासयै द्वे चा-
स्यर्धे येन अध्यर्धा एव ॥ १८८ ॥

दक्षिणत उत्तरतः पश्चात् ॥ १८९ ॥

अनेन क्रमेणोपधानम् ॥ १८९ ॥

दक्षिणाश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥१९०॥

उपधीयन्ते ॥ १९० ॥

तृतीयायाः स्वयमातृण्णामिद्रामी इति मध्ये ॥१९१॥

उपदधाति । तृतीयाग्रहणं द्वितीयान्तप्रश्नप्रत्ययार्थम् । तदन्तप्रश्नेष्ठ प्रयोजनं पुरीषदानादि न भवति । छं प्रथमायां तिस्रो मध्यमायामिति च ज्ञापनाय ॥ १९१ ॥

अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्यसीति

प्रतिमन्त्रम् ॥ १९२ ॥

पञ्चकरणं च रेतःसिग्वेलार्थम् दक्षिणामुत्तरेण पञ्चमीत्येवमर्थं च ॥ १९२ ॥

विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः ॥१९३॥

उपदधाति ॥ १९३ ॥

उत्तमायां च ऋतव्ये नभश्च नभस्यश्चेति ॥१९४॥

उपधीयेते ॥ १९४ ॥

तयोश्च—

अवकाः कूर्मवत् ॥ १९५ ॥

भवन्ति ॥ १९५ ॥

इषश्चोर्जश्चेत्यपरे ॥ १९६ ॥

ऋतव्ये पश्चोपधीयते । अर्धोत्सेधाश्चेताः चनयोगात् ॥१९६॥

पूर्वार्धे प्राणभृतो दशायुर्म इति प्रतिमन्त्रम् ॥१९७॥

उपदधाति ॥ १९७ ॥

छन्दस्या द्वादश द्वादशाप्ययेषु मा च्छन्द

इति प्रतिमन्त्रम् ॥ १९८ ॥

पक्षपुच्छाप्ययेषु छन्दस्या एका द्वादश द्वादश मा च्छन्द इति प्रति मन्त्रम् उपदधाति ॥ १९८ ॥

वालखिल्यालोकं पश्चाच्छिद्वा ॥ १९९ ॥

या पश्चादुपधीयन्ते ता वालखिल्या लोकस्य पुरस्ताद् च्छिद्वा ॥ १९९ ॥

वालखिल्याः सप्त पुरस्तात् ॥ २०० ॥

उपदधाति ॥ २०० ॥

प्राणभृद्भ्यो वापराः ॥ २०१ ॥

वा पूर्वा इति विकल्प ॥ २०१ ॥

द्वादशभ्यो ऽपरास्तु ॥ २०२ ॥

द्वादशभ्यस्त्वपरा एव ॥ २०२ ॥

मूर्धासि राडिति प्रतिमन्त्रम् ॥ २०३ ॥

उपधीयन्ते ॥ २०३ ॥

यजुष्मतीश्च जानन् ॥ २०४ ॥

उपदधाति । यां कां च यजुष्मतीमिष्टकां विद्यात्तां मध्यमायां चितौ उपदध्यादिति वचनात् ॥ २०४ ॥

उत्तराश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥ २०५ ॥

उपधीयन्ते ॥ २०५ ॥

चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे ॥ २०६ ॥

चतुर्थीग्रहणं तृतीयान्तप्रज्ञापनाय । पुरस्तात्पश्चाच्च अष्टा-भाव्यौ । दक्षिणत उत्तरश्च पद्या. ॥ २०६ ॥

पूर्वाभ्यामपराश्चतुर्दश ॥ २०७ ॥

तावार्धपद्या. ॥ २०७ ॥

ताभ्यः पट् ॥ २०८ ॥

ताभ्यो पराः षट् पद्याः ॥ २०८ ॥

[1]पूर्वदक्षिणेऽवान्तरदेश एके ॥ २०९ ॥

चतुर्दश पट्चोपदधाति ॥ २०९ ॥

[2]उत्तरा वा दक्षिणाभ्याम् ॥ २१० ॥

उपधीयन्ते । लाघविकेन सताचार्येणैवमुपदिष्टा. ॥ २१० ॥

उपधानक्रम पुनरिहोच्यते—

उत्तरां पूर्वयोराशुस्त्रिवृदिति ॥ २११ ॥

उपदधाति ॥ २११ ॥

दक्षिणामपरयोर्धरुण एकविꣳश इति ॥२१२॥

दक्षिणां दक्षिणयोर्भान्तः पञ्चदश इति ॥२१३॥

दक्षिणामुत्तरयोर्व्योमा सप्तदश इति ॥ २१४ ॥

चतुर्दश प्रतिमन्त्रं प्रतूर्तिरष्टादश इति ॥२१५॥

उपदधाति ॥ २१५ ॥

---

१ एताश्चतुर्दश षट्च पूर्वदक्षिणेऽवान्तरदेशे आत्मन आग्नेयकोणे कोणोपधीयमानजङ्घामार्गीतोऽन्तरा उपदधाति । तत्र चैवम्, दक्षिणांसोपहितजङ्घामाड्याः पश्चात्संलग्ना या अध्यर्धा तस्या उत्तरतो नवार्धपद्या. प्रागायता. प्राग्लक्षणाश्चोपधेया. । द्वितीयमध्यर्धा जङ्घामार्गी चोत्तरतः पश्चार्धपद्या. उदगायता उदग्लक्षणा उपधेया । तदनन्तरं तत्संलग्ना. षट्च पद्या उपधेयाः । ताश्च नवानामधश्चतस्र प्राग्लक्षणाः पश्चानामुत्तरतो द्वे उदग्लक्षणे इति ।

२ अथवा एताश्चतुर्दश षट्च दक्षिणोत्तराभ्यां दक्षिणानूकाभ्यां(?)तोपहिताभ्यां दक्षिणोत्तराभ्यां पद्याभ्यामुत्तरा उपदधाति अनूकमितोऽर्धाधिकया तत्संलग्ना एव । तयोरुत्तराश्चतुर्दश । तासामुत्तराः षट् उदगायता' ।

दक्षिणां पूर्वयोरग्नेर्भाग इति ॥ २१६ ॥

उत्तरामपरयोर्मित्रस्य भाग इति ॥ २१७ ॥

उत्तरां दक्षिणयोर्नृचक्षसां भाग इति ॥२१८॥

उत्तरामुत्तरयोरिन्द्रस्य भाग इति ॥ २१९ ॥

षट् प्रतिमन्त्रं वसूनां भाग इति ॥ २२० ॥

षडुपदधाति वसूनां भाग इति प्रतिमन्त्रम् ॥ २१९ ॥

ऋतव्ये सहश्च सहस्यश्चेति ॥ २२१ ॥

उपदधाति ॥ २२१ ॥

१रेतःसिग्वेलायां च सप्तदश सर्वतो नव द-
क्षिणेनानूकं सृष्टीरेकया स्तुवतेति प्रति-
मन्त्रम् ॥ २२२ ॥

सृष्टीरितीष्टकानाम। तत्र च दक्षिणतोनूकमभितोर्धपद्ये ॥२२२॥

उत्तरांसादधि लोकम्पृणाः पूर्ववत् ॥ २२३ ॥

२पञ्चम्यामन्तेष्वाश्विनीवदसपत्नाः ॥ २२४ ॥

इष्टका उपधीयन्ते । अन्तग्रहणं रेतःसिग्वेलाव्युदासार्थम् । आदिपन्नीयदिति । द्वितीये लोके उपदधाति पञ्चम्यामपि ॥ २२४ ॥

---

१ सर्वतः सर्वासु दिक्षु सृष्टिसंज्ञका उपदधाति । तासां मध्ये प्रागनूकं दक्षिणेन नव उपदधाति, सर्वा दक्षिणोत्तरेण । तेन प्रतिदिशं चतस्रश्चतस्र, अनूकमभितो द्वे द्वे । दक्षिणतः पञ्च, मध्यामनूकं पश्चा, तामभितो द्वेऽर्धपद्ये, ते अभितो द्वे पद्ये, एवं पञ्चेति ।

२ अन्तेष्वनूकान्तेषु। पूर्वासपत्ना प्रागनूकमुत्तरेण द्वितीये लोके, अपरा अनूकं दक्षिणेन द्वितीये लोके, दक्षिणा तीर्यगनूकं पूर्वेण द्वितीये लोके, उत्तरासपत्ना तीर्यगनूकमपरेण द्वितीये लोके उपदधाति।

दक्षिणयोररत्न्यन्तरम् ॥ २२५ ॥

पञ्चमी च यथा भवति प्राग्लक्षणा। आश्विनी दक्षिणस्यर्धपदे मा भूतामिति ॥ २२५ ॥

अग्ने जातानिति प्रतिमन्त्रम् ॥ २२६ ॥

समपद्योपधानम् ॥ २२६ ॥

पश्चिमा द्वितीया ॥ २२७ ॥

उपधीयते। पुरस्तादुपधाय पश्चादुपदधातीति वचनात् ॥२२७॥

विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममे-

वश्छन्द इति प्रतिमन्त्रम् ॥ २२८ ॥

उपदधाति । बहिर्विराजत्वे च सर्वाः पद्या भवन्ति ॥ २२८ ॥

गायत्र्यसपत्ना गणमध्ये ऽसम्भवात् ॥ २२९ ॥

गायत्र्य एका असपत्नाश्च विराड्गणस्य मध्ये भवन्ति । न हि विराड्गणस्य बहिः सम्भवः ॥ २२९ ॥

उष्णिग्भ्यो वा परा अर्धपद्या उपधाय ॥२३० ॥

उष्णिहामत्रानुपहितत्वात्तल्लोकस्यापरा अर्धपद्या विराजो भवन्ति ॥ २३० ॥

असपत्ना स्पृशोऽन्यतोन्तराः ॥ २३१ ॥

अन्यत्र विराजः असपत्ना संलग्ना अन्तरा उपधीयन्ते ॥२३१॥

सर्वतोऽपाढाविलायां स्तोमभागा रश्मिना स-

त्यायेति प्रतिमन्त्रम् ॥ २३२ ॥

उपधीयन्ते ॥ २३२ ॥

१पञ्चदश दक्षिणेनानूकम् ॥ २३३ ॥

तत्र चानूकमसितोर्धपद्ये ॥ २३३ ॥

वेपश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिꣳशच्च-
मीगेके ॥ २३४ ॥

उपदधाति एके नेति ॥ २३४ ॥

पुरीषमास्त्रावपति मन्त्रेण वा तापश्चितस्य
तूष्णीꣳ श्रुतेः ॥ २३५ ॥

तासु स्तोमभागासु पुरीषमावपति मन्त्रेण । कुत एतत् । तापश्चितस्य तूष्णीꣳ श्रुतेः । नन हि श्रूयते । तूष्णीं मासꣳ स्तोमभागा पुरीषमभिहरन्तीति । तेनामन्त्रवदिति गम्यते । एवं प्राप्ते वचनेन पुनर्व्यावर्त्यते । न च मन्त्रेण पुरीषावापः । न ह्यत्र मन्त्रो विहित इति । ननु तापश्चिते तूष्णीमित्युक्तत्वात् इह मन्त्रो गम्यते । नेत्युच्यते । तूष्णीमित्यनुवादोऽयम् । आसो हि अत्र विधीयते । तूष्णीं मासꣳ स्तोमभागा पुरीषमभिहरन्तीति आसोऽत्र विधीयते । यदि मन्त्रनिवृत्तिर्विधीयेत । वाक्यं भिद्यते । तस्मात्तूष्णीमेवेह पुरीषावापः ॥ २३५ ॥

नाकसदोऽनूकेषु पूर्ववर्जमृतव्यावेलायामाश्वि-
नीवद्राड्यसीति प्रतिमन्त्रम् ॥ २३६ ॥

नाकसद इष्टका अनूकेषूपधीयन्ते । पूर्ववर्जमृतव्यावेलायामाश्विनीवदिति दक्षिणानुक्रमेण पञ्चमी अर्धपद्यं चिते इति च गम्यते । सर्वाश्चैता अन्तरेव पूर्वा तु द्वितीये लोके ॥ २३६ ॥

पुरीषमाप्योरर्ध्यं पुर इति पञ्चचूडाः

---

१ अत्र विभागः पूर्वाचार्यकृतः ' अथो पुरस्तात्स्तोमभागाः पश्चाच्च दक्षिणतः सप्तोत्तरतः त्रिवृत् ' इति ।

प्रतिमन्त्रम् ॥ २३७ ॥

उपदधाति । पता अस्यधौतस्येधाः । पुरीषावापश्रोध्वे मा-फसान्तु ॥ २३७ ॥

प्रतिदिशं यथालिङ्गम् ॥ २३८ ॥

उपधानम् ॥ २३८ ॥

पश्चिमोत्तमा ॥ २३९ ॥

उपधीयते ॥ २३९ ॥

छन्दस्यास्तिस्रास्तिस्रोऽनूकान्तेषु पुरस्ताद्गा-यत्रीरग्निमूर्धेति प्रत्यृचम् ॥ २४० ॥

छन्दस्या इष्टकास्तिस्रस्तिस्रोऽनूकान्तेषु उपधीयन्ते पुरस्ताद्गा-यत्री उपदधाति प्रत्यृचम् ॥ २४० ॥

उत्तराश्च ॥ २४१ ॥

चशब्दात्प्रत्यृचम् ॥ २४१ ॥

पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्येति ॥ २४२ ॥

एभिर्मन्त्रैः प्रतिमन्त्रम् ॥ २४२ ॥

जगतीश्च पश्चादयमिहेति ॥ २४३ ॥

चशब्दाद्रेतःसिग्वेलायामेव ॥ २४३ ॥

अपरास्तास्योनुष्टुभः सत्वापः सं व इति ॥ २४४ ॥

एभिर्मन्त्रैर्जगतीभ्योऽपरा अनुष्टुभः ॥ २४४ ॥

अषाढावेलायाः पुरस्ताद्बृहतीरेना व इति ॥ २४५ ॥

भद्रो न इति ककुभस्ताभ्यो बृहत्यन्तरे श्रुतेर्मन्त्रक्रमेण ॥ २४६ ॥

भद्रो न इत्येभिर्मन्त्रैर्बृहतीनां पुरस्तान्मन्त्रेण ककुभ उपदधाति। कुत एतदिति चेत्। बृहतीनामन्तरालश्रुतेः। सान्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधातीति वचनात् ॥ २४६ ॥

उद्घृतान्यपकृष्येच्छन् ॥ २४७ ॥

एवं हि श्रूयते। अथैतासां ककुभां चत्वार्यक्षराण्यादायातिच्छन्दस्सूपदधाति सा सातिच्छन्दा एव भवति गायत्र्य इतराः सम्पद्यन्त इति। एवं च सत्यपकर्षं प्राप्नोति। तथा च गायत्र्य इतराः सम्पद्यन्त इति। एवं स्थित उच्यते। इच्छन्नपकृष्येति। ककुप्शब्दस्य छन्दोविषयत्वाच्चतुर्थ्यक्षरेषूद्धृतेषु ककुप्त्वमेव हीयते। अपूर्वा च स्वगर्थाभिधानसमर्था न भवति। तथा सत्यदृष्टार्थता स्यात्। न चासौ न्याय्या। अपि च चतुर्णामक्षराणामतिच्छन्दसि प्रक्षेपधानेनार्थवद्वाक्यं सञ्जातम्। तदूनानां ककुभां प्रयोग इति निःप्रमाणकमेव स्यात्। ननु च श्रूयते गायत्र्य इतराः सम्पद्यन्त इति। नाविधायकत्वात्। न ह्ययं विधिर्वर्तमानापदेशादितत्संस्तव इति। तस्मादनपकृष्यैवेति ॥ २४७ ॥

अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति ॥ २४८ ॥

प्रतिमन्त्रम् उपदधाति ॥ २४८ ॥

इदानीं ककुभामुपधानम्—

अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति ॥ २४९ ॥

उपदधाति ॥ २४९ ॥

उत्तरे पदपङ्क्तीरग्ने तमद्येति ॥ २५० ॥

उपदधाति ॥ २५० ॥

पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरी-

पुरीषसहिते भद्रा रातिर्बृहत्यैवस्थिरामिं होतारमिति ॥ २५१ ॥

दक्षिणपोत्तरा सपत्ना पुरीषवती तस्यां हि पुरीषं विहितं पुरीषसहिते इति । प्राच्याविति प्राग्लक्षणे चैते भवतः । भद्रारातिरित्येवमादिना मन्त्रेण पुरीषवत्याः पूर्वामतिच्छन्दसमुपदधाति । भद्रारातिरित्येतानि चत्वारि चत्वार्यक्षराणीति ॥ २५१ ॥

अग्ने त्वमित्यनूकान्ते ऽपरे द्विपदाः ॥ २५२ ॥

उपधीयन्ते । सर्वच्छन्दस्यास्त्वभितोऽर्धपद्य । उष्णिहस्तु तिरश्चिर्यगर्धपद्याः ॥ २५२ ॥

मध्येऽष्टेष्टकं गार्हपत्यम् ॥ २५३ ॥

उपदधाति । अष्टेष्टकमित्युक्तत्वात् अधिका न भवन्ति । गार्हपत्यमिति चनामधेयात् तद्वदेवोपधानमष्टानामपि । तथा चाह । तं वा एतैरेव यजुर्भिरेतया वृता चिनोतीति। इयांस्तु विशेषोऽर्धबृहतीमां स्थानेऽर्धपद्याः ॥ २५३ ॥

पुनश्चितिं चोपरि तद्वदेन ऋषय इति प्रत्यृचम् ॥ २५४ ॥

तस्यैव गार्हपत्यस्योपरि तद्वदेव पुनश्चितिमुपदधाति । इयांस्तु विशेषो यत्र ऋषय इति प्रत्यृचम् । अस्मिंश्च पक्षे अर्धोत्सेधा एवका भवन्त्युत्सेधायोगात् ॥ २५४ ॥

पुच्छसन्धावेके ॥ २५५ ॥

पुनश्चितिमुपदधाति । इयांस्तु विशेषः । तां हैके जघनार्धे उपदधातीति श्रुते । अस्मिंश्च पक्षे द्विपदा अर्धोत्सेधाः ॥२५५॥

पूर्वार्धे वा ॥ २५६ ॥

पुनश्चितिमुपदध्यात् । अत्र यथा सम्भवमर्धोत्सेधाः ॥२५६॥

गार्हपत्यं पुच्छसन्धौ कृत्वा ॥ २५७ ॥

पुनश्चिति पूर्वार्धे उपदधाति । तद्वैके जघनार्धे गार्हपत्यमुपदधति पूर्वार्धे पुनश्चितिमिति श्रुतं ॥ २५७ ॥

ऋतव्ये तपश्च तपस्यश्चेति ॥ २५८ ॥

विश्वज्योतिषं परमेष्ठी त्वेति ॥ २५९ ॥

१दक्षिणांसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत् ॥ २६० ॥

उपदधाति ॥ २५९ ॥

प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे संस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम् ॥ २६१ ॥

प्रच्छाद्य पुरीषेण चितिं विकर्णीस्वयमातृण्णा उपधीयेते संलग्ने प्रोथदश्व इत्युत्तरां विकर्णीमुपदधाति स्वयमातृण्णामायोष्ट्वेति । शर्करे छिद्रे इति च विकल्पार्थमुच्यते ॥ २६० ॥

सकृच्चित्ये ॥ २६२ ॥

सादनसूददोहसौ सकृदेव चोदना भेदाद्भवतः ॥ २६१ ॥

---

१ आत्मनो दक्षिणांसादाग्नेयकोणात्प्रत्यगपरस्यां दिशि अरत्निमात्रादधि अन्तिमपद्यालोक परित्यज्य तृतीयपद्यालोकादारभ्य पञ्चम्यां चितौ लोकम्पृणा उपदधाति । पूर्ववदिति प्रथमं चित्युक्तप्रकारेण । तेनात्रापि प्रथम द्वे ततो दश अरत्निमात्रादारभ्य आ मध्यात् ।

१पुरुषाभिहोमवत्तिष्ठन्तमग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्येति प्रतिमन्त्रं; २सहस्रस्येति प्रतिमन्त्रम् ॥२६३॥

इति कात्यायनसूत्रभाष्ये कर्कोपाध्यायकृतौ
सप्तदशोऽध्यायः समाप्तः ।

---

१ 'अथैनं; हिरण्यशकलैः प्रोक्षति' इति, 'सहस्रस्य मध्याद्द्वे द्वे शते प्रकिरति'

२ अयमभ्यासोऽध्यायसमाप्ति सूचकः । क्वचिदनभ्यस्त एव पाठः ।

# अष्टादशोऽध्यायः ।

शतरुद्रियहोम उत्तरपक्षस्यापरस्याꣳ स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्त्सन्ततं जर्त्तिलमिश्रान्गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् नमस्त इत्यध्यायेन ॥ १ ॥

शतरुद्रियमिति नाम । अथातः शतरुद्रियं जुहोतीति । सा चोत्तरपक्षस्यापरस्याꣳ स्रक्त्यां परिश्रित्सु कर्तव्यम् । परिश्रित आहवनीयकार्ये । तासां समुदितानां नैकैकस्याः परिश्रित्सु जुहोतीति वचनात् । प्रयोजनं समुदितानां धर्मसम्बन्धः । अर्कपर्णेनार्ककाष्ठेन शातयन् । अर्कपर्णे जुहोतीति काष्ठमपूर्वत्वादुपकल्पनीयम् । तेन शातयन्त्सन्ततमविच्छिन्नं जर्त्तिलमिश्रान् गवेधुकासक्तून् । जर्त्तिलैर्जुहोति तथा गवेधुकासक्तुभिर्जुहोतीति विकल्प प्राप्ते शाखान्तरात्समुच्चयः । तेन जर्त्तिलमिश्राणीत्युक्तम् । अजाक्षीरेणैके जुह्वति शाखान्तरात् । तिष्ठन्नुदङ् जुहोतीति जुहोतौ सति तिष्ठतिक्रिया वाचनिकी उदङ्ङिति च दिङ्नियमार्थम् । नमस्त इत्यध्यायेन मन्त्रद्वयं मन्त्रत जुहोति । बहूनि चैतानि कर्माणि श्रूयन्ते । दशिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिंशदथ पञ्चत्रिंशदिति । एतावन्तो द्रव्यदेवता सम्बन्धाः । एवं च सति एतावन्ति चतुर्मुखीकानि गृह्यन्ते । अजाक्षीरपक्षे चैतावन्त एव षड्वर्गाः ॥ १ ॥

ज्यानुकवाकान्ते स्वाहाकारो जानुमात्रे ॥ २ ॥

स वै जानुदघ्ने प्रथमं स्वाहाकरोतीति वचनात् ॥ २ ॥

पश्चान्ते च नाभिमात्रे ॥ ३ ॥

पश्चानुवाकान्ते नाभिमात्रे । पश्चाद्दारस्वाहाकारः ॥ ३ ॥

प्राक्च प्रत्यवरोहेभ्यो मुखमात्रे ॥ ४ ॥

स्वाहाकार. ॥ ४ ॥

प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ॥ ५ ॥

प्रातिलोम्यं च प्रथम मुखमात्रे ततो नाभिमात्रे पुनर्जानुमात्रे इति । प्रत्यवरोहाश्च नमोस्तु रुद्रेभ्यो ये दिवीति ॥ ५ ॥

हवने प्रास्यति चात्वाले ॥ ६ ॥

अर्कपर्णार्ककाष्ठे इत्यर्थ । आगन्तुत्वाच्च कर्मापवर्गान्ते ॥ ६ ॥

चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि ॥ ७ ॥

चित्यमग्निमग्नीत्परिषिञ्चेद्दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यनेन मन्त्रेणाद्रेरारभ्य ॥ ७ ॥

अश्मंस्ते क्षुदित्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादायैवं द्विपरम् ॥ ८ ॥

परिषिञ्चति ॥ ८ ॥

तावत्प्रतिपर्येति ॥ ९ ॥

निधायोद्धरणम् त्रिर्विपल्ययत इति श्रुते ॥ ९ ॥

कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणास्यति यं द्विष्म इति ॥ १० ॥

अनेन मन्त्रेण ॥ १० ॥

अभित्ते भेत्तवै ब्रूयात् ॥ ११ ॥

यदि न भिद्येत भेत्तवै ब्रूयादिति । तच्च प्रतिप्रस्थाता । भेदने तु प्रधानत्वादध्वर्युः ॥ ११ ॥

अत्रैतच्चिन्त्यते । किं कुम्भविषयमेतद्भेदनम् उताद्रिविषयमिति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

कुम्भे भेदनं सामर्थ्यात् ॥ १२ ॥

कुम्भविषयमेतद्भेदनम् नाद्रिविषयम् । कुत एतत् । एवमेतद्वचनं समर्थं भवति यदि न भिद्येत भेत्तवै ब्रूयादिति । अद्रौ त्वसमर्थमेव । न हि तस्य कठिनत्वाद्भेदनमाशङ्क्यते ॥ १२ ॥

एवं प्राप्त आह—

अश्मनि वार्थवादात् ॥ १३ ॥

वाशब्दः पक्षव्यावृत्तौ । अश्मनि वैतद्भेदनं प्रतिपत्तव्यम् । न कुम्भविषयम् । कुत एतत् । अर्थवादात् । यदाह्येव सति भिद्यतेऽथ तं शुगृच्छति यं द्वेष्मीति । सा च शुगश्मनि निहिता तदश्मनि शुचं दधातीति ॥ १३ ॥

वाच्यत्वाच्च ॥ १४ ॥

अपि चाश्मन्येव वाच्यं भेदनं न कुम्भे सद्यसमर्थः क्षिप्तो ऽयद्यमेव भिद्यत इति ॥ १४ ॥

अनवेक्षमत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म इति ॥ १५ ॥

आत्मा चात्राग्न्यात्मोच्यते ॥ १५ ॥

मण्डूकावकावेतसशाखा वेणौ बद्ध्वाकर्षति मन्तकृष्टवत्समुद्रस्य त्वेति प्रत्यृचम् ॥ १६ ॥

मण्डूकादीन्वेणौ बद्ध्वाग्नि विकर्षति मन्त्रवत्कर्मणा समुद्रस्य त्वेति प्रत्यृचम् ॥ १६ ॥

पक्षपुच्छानि चाभ्यात्ममग्ने पावकरोचिषेति ॥१७॥

अग्न्यात्मानमाभिमुख्येन पक्षपुच्छानि कर्षति अग्ने पावकरोचिषेति प्रत्यृचमेव ॥ १७ ॥

अन्त्यमुत्तरम् ॥ १८ ॥

अन्त्यमुत्तर पक्षम ॥ १८ ॥

वेणुमुत्करेण कृत्वा चित्यमालभ्य तिष्ठन् हिङ्कृत्य साम गायति ॥ १९ ॥

सामगानमुद्गातु स्यात् समाख्यानात्। अध्वर्योर्वा वचनसामर्थ्यात्। नान्याध्वर्योर्गायेदिति समाख्यानामध्वर्योरेव। विधानानुसारिणी हि समाख्या। विधानं चाध्वर्यवेदविहितम। अथैनꣲ साऽभि. परिगायतीति। एव च नान्योऽध्वर्योर्गायेदित्यनुवाद एव ॥१९॥

पुरस्ताद्गायत्रम् ॥ २० ॥

सामगायति ॥ २० ॥

दक्षिणे पक्षे रथन्तरमुत्तरे बृहदात्मनि वामदेव्यं पुच्छे यज्ञायज्ञियं दक्षिणे निकक्षे प्रजापतिहृदयमग्न्युक्थ्यꣲ शꣲसेत्याह ॥ २१ ॥

होतु प्रेषणम ॥ २१ ॥

औपवसथ्ये विसृष्टवाचि पञ्चगृहीतं हिरण्यशकलान्प्रास्यति पञ्च॥ २२ ॥

उपवसथीये ऽहन्यातरुदित आदित्ये वाच विसृजत इति प्रकृत्यैव भूतत्वात ॥ २२ ॥

दधिमधुघृतं पात्र्याꣲ समासिच्य स्थाल्यां

वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्या रोहणं नमस्त इति ॥ २३ ॥

दध्याज्यौ पाद्यां प्रास्य महामुख्य वा स्वाद्यां तदुपरि च कुशमुष्टिमुभय गृहीत्वा चित्यमारोहेत् नमस्त इत्यनेन मन्त्रेण ॥२३॥

स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्याऽदर्शनं च नृषदे वेडिति प्रतिमन्त्रम् ॥ २४ ॥

स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिव्याघारयाय नृषदे वेडिति प्रति मन्त्र हिरण्यदर्शन च न भवति ॥ २४ ॥

समासिक्तान्कुशैः प्रोक्षति सपरिश्रित्कं वाह्येन च ये देवा इति ॥ २५ ॥

अथैनाः समुक्षतीति प्रकृत्य सर्वतः समुक्षत्यपि बाह्येन परिश्रित इति श्रुते ॥ २५ ॥

प्राणदा इत्यवरोहति ॥ २६ ॥

एवमारोहणावरोहणमतः ॥ २७ ॥

अत ऊर्ध्वमेवमेवाऽवरोहणावरोहणे कार्ये ॥ २७ ॥

उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा ॥ २८ ॥

वाशब्दो विकल्पार्थः विकल्पेन हि प्रवचनमत्र । परि समन्ताद्यापः स्यन्दन्ते यत्र प्रदेशे स परिष्यन्दः ॥ २८ ॥

स्वयमातृण्णास्पृष्टं प्रथमम् ॥ २९ ॥

अग्निपक्षे स्वयमातृण्णयासंस्पृष्टं प्रवर्ग्यमुत्सादयतीति व-
चनात् ॥ २९ ॥

पञ्चगृहीतं जुहोत्यग्निरस्तिग्मेनेत्यृचा षोड-
शगृहीतार्धमनुवाकशेषेण ॥ ३० ॥

पुनः षोडशगृहीतं गृहीत्वा तदर्धमनुवाकशेषेणाष्टाभिर्ऋ-
ग्भिर्जुहोतीति । चक्षुषः पितेत्यपरमनुवाके न । अपरमर्द्धं चक्षुषः
पितेत्यनुवाकेन अष्टाभिर्ऋग्भिः । सर्वाणि चैतानि शालाग्नौ
जुहोति ॥ ३० ॥

आर्द्रौदुम्बरीर्घृतोपितास्तिस्र उदेनमित्या-
दधाति प्रत्यृचम् ॥ ३१ ॥

औदुम्बरीः समिधः घृते न्युत्ताः सर्वा राजिमुषिताः तिस्र उदे-
नमित्यादधाति प्रत्यृचम् ॥ ३१ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—

अग्निं प्रणयति ॥ ३२ ॥

तत्र विशेषमाह—

प्रेष्यत्युद्यच्छेध्ममुपयच्छोपयमनीः ॥ ३३ ॥

अयं च प्रैषः प्रतिप्रस्थातुः । तदर्थोऽध्वर्योः ॥ ३३ ॥

अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानु-
देहि ब्रह्मन्नप्रतिरथं जपेति ॥ ३४ ॥

च प्रेष्यति ॥ ३४ ॥

तिरुक्तायामुद्यम्योदु त्वेति ॥ ३५ ॥

चित्तं गच्छन्ति पञ्च दिश इति ॥ ३६ ॥

निरुक्तायां होत्रा प्रथमायामृचि उदु त्वेत्युपस्याग्नि चित्यं
प्रति गच्छन्ति पञ्च दिश इत्यनेन मन्त्रेण ॥ ३६ ॥

आग्नीध्रदेशाद्दक्षिणं पृष्ठ्या संहितं पृदन्य-
श्मानमुपदधाति विमान इति ॥ ३७ ॥

अनेन मन्त्रेण ॥ ३७ ॥

न नित्ये ॥ ३८ ॥

नित्ये सादनसूददोहसौ न भवतः । इष्टकासंख्ययाप्राप्तयोर्निषेधः ॥ ३८ ॥*

निधायैनमतिक्रामन्तीन्द्रं विश्वा इति ॥ ३९ ॥

तं निधाय यथा न नश्येदपोपातियन्तीति वचनात् ॥ ३९ ॥

क्रमध्वमग्निनेति चित्यमारोहन्ति ॥ ४० ॥

अतश्च नमस्त इत्ययं न निवर्त्तते ॥ ४० ॥

स्वयमातृण्णामध्यग्निं धारयञ्छुक्लवत्साप-
यसाभिजुहोति कृष्णाया दोहनेन स्वयमा-
तृण्णामवसिञ्चन्नक्तोपासेति ॥ ४१ ॥

स्वयमातृण्णायां उपरि धारयन्नग्निं कृष्णायाः गोः शुक्लवत्साया पयसो दोहनेनाभिजुहोति नक्तोपासेत्यनेन मन्त्रेण स्वयमातृण्णामवसिञ्चेत् । अथ जुहोतिस्ततश्च साम्नाय्यधर्माः प्रवर्त्तन्ते जुहोतित्वान्मन्त्रवर्जम् । दोहनस्य जुहूकार्यापत्तिस्ततश्च तद्धर्मा भवन्ति । महावेद्यां सम्मार्जनान्तधर्माः कृताः तत उत्तरपरिग्रहाद्यत्र कर्तव्यम् । उत्तरवेद्यां तु खननादि ॥ ४१ ॥

पैतुदारवाचतैके ॥ ४२ ॥

एके प्राङ्मयि गृह्णामीति जपात् । तत्र शुक्लमाचार्येणोत्तरवेदिप्रोक्षणाया सम्मार्जनप्रयत्नादूर्ध्वमिति । यद्ययमिह कस्मात्सम्मारनिर्वापः । अन्यपर्यत्वात् । यद्ययमिहैव सम्मारनिर्वापः ॥ ४२ ॥

तस्यामग्निं निदधाति सुपर्णोसीति व-
षट्कारेण ॥ ४३ ॥

तस्यां स्वयमातृण्णायां सुपर्णोसीत्यनेन मन्त्रेण वषट्कारान्तेनाग्निं निदधाति ॥ ४३ ॥

नित्ये च ॥ ४४ ॥

अत्र भवतः । इष्टकासस्त्वादग्ने ॥ ४४ ॥

समिदाधानं शामीलीवैकङ्कत्यौदुम्बर्यस्ताः

सवितुरिति प्रत्यृचमुत्तमा सकर्णका ॥ ४५ ॥

समिद्भवति ॥ ४५ ॥

कर्णकाऽभावे दधिद्रप्साक्ताः ॥ ४६ ॥

कर्तव्या ॥ ४६ ॥

स्रुवाहुती जुहोत्यग्ने तमद्येति च प्रत्यृचम् ॥ ४७ ॥

जुहोति ॥ ४७ ॥

पूर्णाहुतिं च सप्त त इति ॥ ४८ ॥

तिष्ठन्त्समिधः सर्वत्र मध्ये ॥ ४९ ॥

सर्वत्र ग्रहणात् समिदुद्देशेन विहितत्वात्तिष्ठति क्रिया सर्वत्र भवति । समिदाधानग्रहणादाहुत्योर्मध्ये । अन्तेष्वाहुतीरिति सूचितत्वात् ॥ ४९ ॥

अन्तेष्वाहुतीरुपविश्य ॥ ५० ॥

तिष्ठतिक्रियानन्तर्यादुपविश्येत्युच्यते ॥ ५० ॥

अत्र पञ्चम्याः सप्तर्चोपस्थानं सर्वोपधानात् ॥ ५१ ॥

अस्मिन्नवसरे पञ्चम्याश्चितेः सप्तर्चोपस्थानं कर्तव्यम् । अत्र हि सकला पञ्चमी चितिरुपहिता भवति ॥ ५१ ॥

धिष्ण्यान्वोचित्वोत्तमासंयोगात् ॥ ५२ ॥

अथ वा धिष्ण्यान्विचित्वा समस्तोपस्थानं कर्तव्यम् । कुत एतद्धिष्ण्यानां हि पञ्चम्याश्चितेः अन्तर्भावः। तस्मात्तत्रैव युक्तरूपमुपस्थानम् ॥ ५२ ॥

अभिमृशेदिच्छन्त्सम्वत्सरोसीति ॥ ५३ ॥

अग्निम् ॥ ५३ ॥

एवं यथाचिति ॥ ५४ ॥

सम्मर्शनं कर्तव्यम् । यत्रात्मा चितिस्तदभिधायकेन मन्त्रेण ॥ ५४ ॥

वैश्वानरमारुतां निर्वपति यथोक्तम् ॥ ५५ ॥

वैश्वानरमारुताश्च मारुताश्च वैश्वानरमारुताः तान्निर्वपति । यथोक्तग्रहणाच्च वैश्वानरो यजतिः मारुता जुहोतयः । तत्कथं वैश्वानरं हि प्रकृत्याह । तं वा एतं पुरोनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोतीति यजतीनां ह्येव धर्मः। पुरोनुवाक्याद्यभिधानाच्च यागदुक्तं स्यात् । तथा मारुतान्प्रकृत्याह हस्तेनैवैतानासीनः स्वाहाकारेणेति जुहोतीनां ह्ययं धर्मः । कपालसंख्यार्थं च यथोक्तग्रहणम् । वैश्वानरस्य हि द्वादशकपालता पठ्यते मारुतानां सप्तकपालता ॥ ५५ ॥

वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ ॥५६॥

अधि श्रयति । अधरोत्तरमुत्तरमित्यस्यापवादोयम् ॥ ५६ ॥

पश्चाच्च संक्लृप्ततरौ ॥ ५७ ॥

पश्चाद्दाक्षिणोत्तरावधिश्रयति ॥ ५७ ॥

एवमपरौ ॥ ५८ ॥

द्वावधिश्रयतीति शेषः । एवं शब्देन च दक्षिणोत्तरता क्लृप्ततरता च लभ्यते ॥ ५८ ॥

पश्चादरण्येऽनूच्यम् ॥ ५९ ॥

अरण्येऽनूच्यं च पुरोडाशं पश्चादधिश्रयति ॥ ५९ ॥

होमासादनयोश्च ॥ ६० ॥

चशब्दादयमेव विधिः ॥ ६० ॥

पुच्छादपरान् कुशानास्तीर्याहवनीयसहितान्वा तत्रासादनम् ॥ ६१ ॥

कुशानास्तीर्येति प्राकृतमेव परिस्तरणमनूद्यते । प्रदेशविधानाय पुच्छादपरानिति । कुत एतत् । सपुच्छोऽयमाहवनीय इति । प्रकृतौ चाहवनीयमपरेण स्तरणं वृत्तमिहापि तथैव कर्तव्यम् । आहवनीयसहितान्वेति । कुत एतत् । आहवनीयशब्दो ह्यग्न्यभिधायक उपचारवृत्त्या स्थले वर्तते । तस्मादाहवनीयसहितानेवेत्यवधार्यते । तत्रासादनं कर्तव्यम् ॥ ६१ ॥

वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरिति प्रतिमन्त्रम् ॥ ६२ ॥

मारुतान् जुहोति । विकल्पश्चायं वैश्वानरे होमोऽग्नौ चेति ॥६२॥

विमुखेनारण्येऽनूच्यम् ॥ ६३ ॥

अरण्येऽनूच्यं पुरोडाशं विमुखेन जुहोति । विमुखश्चाख्येनृणां प्रसिद्धः उग्रश्च भीमश्चेति ॥ ६३ ॥

इन्द्रं दैवीरिति जपति ॥ ६४ ॥

आगन्तुत्वादन्ते ॥ ६४ ॥

इमꣳ स्तनमिति वाचयति वा ॥ ६५ ॥

जपति वेति विकल्पः । वैश्वानरमारुतानामेकतन्त्रम् । तत्र च

यः साधारणपदार्थः स मन्त्रवान्कर्त्तव्य । मारुतानां हि पदार्थमात्रे-' प्रयोजनम् । समन्त्रकोऽपि पदार्थः पदार्थे पदेति ॥ ६५ ॥

वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतः सन्ततं यजमानोरण्येऽनूच्येऽग्निप्राप्ते वा-जश्चम इत्यष्टानुवाकेन ॥ ६६ ॥

वसोर्धारेति कर्मनामधेयम् । तच्च समुदायस्य । एवं हि श्रूयते । षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराथ षडथ पञ्चत्रिंशदिति । अत्र च यदन्तरितं तस्यावृत्तिर्भवति । औदुम्बर्या स्रुचा पञ्चगृहीतमाज्यं जुहोति अग्नौ प्राप्ते वाजश्च म इत्यष्टानुवाकेन । सन्ततमिति च द्रव्यमन्ततम् मन्त्र सन्ततं च । अत्र च श्रूयते । आष्टसु कल्पयति दशसु कल्पयतीत्येवमादिना वाक्यपरिसमाप्तिः । प्रतिवाक्यं च स्वाहाकारकरणम् । अत्र च देवतापदान्तरायं पञ्चगृहीतमेव च सकलवाक्येन होतव्यं न ह्यन्यथैतदुदृष्टमिति ॥ ६६ ॥

हुत्वा स्रुक्प्रासनम् ॥ ६७ ॥

तत्राग्नौ । एवं हि श्रूयते । अत्र ताः स्रुचमनुप्रास्यति यदाज्यलिप्तं तदेवृद्‌विद्धाग्निरसदिति ॥ ६७ ॥

अग्नये स्वाहेति षट् पार्थानि जुहोति ॥ ६८ ॥

तानि च राजसूयिकानि । तत्राम्नाद । इह च श्रूयते । स वै राजसूयस्य पूर्वाणि जुहोतीति ॥ ६८ ॥

वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसत्वरस्रुवेण वाजपेयिकानि वाजस्येममिति ॥ ६९ ॥

वाजप्रसवीयानीति नामधेयम् । विध्यर्थवादमन्त्रत्वासम्भवात् । समुदायनामधेयश्चैनतत् । सप्त ह्येतानि कर्माणि वाजपेयिकानि । प्रयोजनमन्यतमाऽपायं तस्यैवावृत्तिः । तानि च वप्रावत्सम्भृत्य चमसस्रुवेण । वप्राद्देनाग्निक्षेत्रकेदाराभिधानम् । तद्वदत्रापि सम्भृत्य चतुः स्रक्तिना स्रुवेण वाजपेयिकानि वाजस्येममिति प्रति-

मन्त्रं जुहोति । वाजपेयिकग्रहणाच्च अप्पयसी प्रक्षिप्येते । एवं ह्या- चार्येणाभिहितम् । औदुम्बरे पात्रे ऽप आसिच्य पयश्च सप्तदशान्या- न्यावपति यावत्स्मृति चेति । एवं च सति सप्तपञ्चवर्गाः सप्त चतुर्मु- ष्टिकान्युपादेयान्यापश्चेति ॥ ६९ ॥

आग्निकानि च वाजस्य त्वेति ॥ ७० ॥

आग्निकानि च वाजप्रसवीयानि वाजस्य त्वेति प्रतिमन्त्रं जु- होति । आग्निकेष्वपि सप्तैव सर्वौषधस्य च चतुर्मुष्टिकानि ॥ ७० ॥

स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य

पुच्छादुत्तरं शेषेऽपः कृत्वा ॥ ७१ ॥

अभिषिञ्चतीति सूत्रशेषः । स्रुवमग्नौ प्रास्य तदन्ते परिश्रि- त्संलग्न पुच्छादुत्तरतः कृष्णाजिनमास्तीर्य हुतशेषेऽपः कृत्वा ॥ ७१ ॥

कुत एतत्—

अभिषेकसामर्थ्यात् ॥ ७२ ॥

अन्यथा सिपेक एव न भवति । वा नैवापांमासेक. ॥ ७२ ॥

क्षीरोदके वा वाजपेयिकानीति श्रुतेः ॥ ७३ ॥

येन क्षीरोदके वाजपेयिकान्युप्यन्ते एव । अतश्चाभिषेकोऽपि सम्भवत्येव ॥ ७३ ॥

तत्राभिषिच्यते ब्रह्मवर्चसकामश्चिन्न्वारब्धो

देवस्य त्वेति ॥ ७४ ॥

तत्र कृष्णाजिनेऽभिषिच्यते यजमानश्चित्यन्वारब्धे देवस्य त्वेत्यनेन मन्त्रेण । ब्रह्मवर्चसकामस्य च कृष्णाजिने ऽभिषेकः कृष्णा- जिने ब्रह्मवर्चसकाममिति वचनात् ॥ ७४ ॥

तिष्ठन्नुभूपः ॥ ७५ ॥

भूतिमिच्छंस्तिष्ठन्नभिषिच्यते ॥ ७५ ॥

भूत उपविष्ट ॥ ७६ ॥

प्राप्तभूतिरुपविष्टो ऽभिषिच्यते ॥ ७६ ॥

वस्तचर्मणि पुष्टीच्छुः ॥ ७७ ॥

पुष्टिमिच्छन्वस्तचर्मण्यभिषिच्यते ॥ ७७ ॥

उभयेच्छुरुभयोः ॥ ७८ ॥

यो नाम पुष्टिब्रह्मवर्चसे उभे ऽपीच्छति स उभयोश्चर्मणोरुप-र्यासितो ऽभिषिच्यते ॥ ७८ ॥

एके दक्षिणतश्चित्ये वा ॥ ७९ ॥

स्थितमभिषिञ्चति । तत्र हैके दक्षिणतोऽग्नेरभिषिञ्चन्त्याहव-नीय उ हैके मिषिञ्चन्तीति च श्रुतेः ॥ ७९ ॥

प्राश्य चमसमिन्द्राय स्वाहेति षड्जुहोति प्रतिमन्त्रम् ॥ ८० ॥

अग्नौ प्राश्य चमसमिन्द्राय स्वाहेति षट्पार्थानि जुहोति । एतान्यपि राजसूयिकानि । ततश्च पूर्वपार्थाज्यसंस्कारोऽत्रापि भवति ॥ ८० ॥

द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्र-तिस्वाहाकारा; राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्रः ॥ ८१ ॥

द्वादशगृहीतमाज्यं विगृह्य जुहोति ऋताषाडिति प्रतिस्वाहा-कारं राष्ट्रभृत्संज्ञकान्होमान्। तत्र च वाट्कारान्तः पूर्वः पूर्वो भवति। उत्तरस्तु स्वाहाकारान्तः। एवं ह्यत्र श्रूयते मिथुनानि जुहोति गन्ध-र्वाप्सरोभ्यो जुहोति पुंसि पूर्वस्मै जुहोत्यथ स्त्रीभ्यः। एवमेवा इव पुंसे जुहोति वहीव इव स्त्रीभ्य उभाभ्यां वषट्कारेण च स्वाहा-कारेण च पुंसे जुहोति स्वाहाकारेणैव स्त्रीभ्य इति। एव स्वरूपेण स-

ति समाम्नायपरिपठिते मन्त्रे विभागः कर्त्तव्यः । यानि पुल्लिङ्गानि पदानि तान्येकवाक्यतामुपनेयानि । एवं स्त्रीलिङ्गान्तान्यपि । ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाडिति पूर्वो मन्त्रः । तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहेत्युत्तरः । अत्र च तस्यौषधय इति सापेक्षत्वादृताषाडृतधामाग्निर्गन्धर्व इत्यत्र वर्तते ॥ ८१ ॥

पञ्चगृहीतं च रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति ॥ ८२ ॥

पञ्चगृहीतमाज्यं च शब्दाज्जुहोति । रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येत्यनेन मन्त्रेण ॥ ८२ ॥

अत्रविशेषमाह—

प्रदक्षिणं रथनीडपरिहारः ॥ ८३ ॥

कर्तव्यः ॥ ८३ ॥

पुरुषाहुतिं वह्नां ॥ ८४ ॥

चेति विकल्पः ॥ ८४ ॥

पक्षद्वयेऽपि—

अध्वर्युरभिमुखो रथशिरः ॥ ८५ ॥

जुहोति ॥ ८५ ॥

वातहोमान् जुहोति अञ्जलिनाहृत्य पुरस्ताद्ववहिर्वेदेरधो दक्षिणस्यां धुर्युत्तरत उत्तरस्यां दाक्षिणाप्रष्टेः समुद्रोऽसीति प्रतिमन्त्रम् ॥ ८६ ॥

वातहोमान् जुहोति अञ्जलिना आहृत्य पुरस्ताद्बहिर्वेदेः अधो दक्षिणस्यां धुरि । पश्चोत्तरत आहृत्योत्तरस्यां धुरि । दक्षिणतः पश्चात् आहृत्यान्यं दक्षिणापृष्टेरेवमेव । समुद्रोऽसीति मन्त्रैः प्रतिमन्त्रम् ॥ ८६ ॥

योक्त्रपरिहरणं च सर्वत्र ॥ ८७ ॥

चशब्दाद्धोमसमनन्तरमेव ॥ ८७ ॥

प्रगृह्याध्वर्योरावसथहरणम् ॥ ८८ ॥

स्वस्य कर्तव्यम् ॥ ८८ ॥

दक्षिणाकाले ऽध्वर्यवे ददाति ॥ ८९ ॥

स्वयम् ॥ ८९ ॥

अश्वांश्च ॥ ९० ॥

ददाति ॥ ९० ॥

नव जुहोति यास्त इति प्रतिमन्त्रम् ॥ ९१ ॥

आहुतीः ॥ ९१ ॥

जानन्ब्राह्मणोक्ता जुहुयाद्वा ॥ ९२ ॥

यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयादिति श्रुतेः । तामेव प्रकृत्याह न जुहुयाद्दतिरेचयानीति । विहितप्रतिषधाद्विकल्पः ॥ ९२ ॥

हविर्धानप्रक्षालनाग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकां लोकम्पृणाभिश्चतुःस्रक्तींस्तिरश्चो न्युप्य न्युप्य ॥ ९३ ॥

वैकृतावसरे प्राकृतानुष्ठानपर्थमाह । हविर्धानप्रक्षालनाग्नीध्रालम्भनात्प्राकृतं कर्म कृत्वा धिष्ण्यांश्चिनोति । अष्टेष्टकाभिर्लोकम्पृणाभिरिति तत्संप्रसृत्यर्थम् । चतुःस्रक्तीः तिरश्च इति शीर्षप्रस्तारान्सोपरिस्थलिकया वचनम् । न्युप्य न्युप्येति । यं यमेवाध्वर्युर्धिष्ण्यं निर्वपति तं तं चिनोतीति वचनात् ॥ ९३ ॥

पृश्न्यश्मा चाग्नीध्रीये ॥ ९४ ॥

उपधेयः ॥ ९४ ॥

...

सकृन्मन्त्रवचनम् ॥ ९५ ॥

होत्रीये विरेकविंशत्या ॥ ९६ ॥

हातृधिष्ण्ये त्रिर्मन्त्रवचनम् एकविंशतिर्मिरिष्टकाभिश्च-यनम ॥ ९६ ॥

ब्राह्मणाच्छंस्ये द्विरेकादशसु पण्मार्जालीये ॥९७॥

शेषा अष्टेष्टकाः ॥ ९८ ॥

यावदिष्टकं परिश्रितः परिनिधाय ॥ ९९ ॥

तेषां वै प्रावत्य एव यजुष्यत्तावस्य परिश्रित इति वचनात् । परिनिधानम् च परिश्रित श्रूयते न निखननम् । स वै पर्येव नि दधाति ॥ ९९ ॥

पुरीषं च तूष्णीम् ॥ १०० ॥

पुरीषनिर्वापेमन्त्रो मा भूदिति तूष्णीमित्युक्तम् ॥ १०० ॥
प्राकृतानुवृत्त्यर्थमाह—

अनुपदेशाद्वा पुरोडाशस्विष्टकृतोऽभिषेच
नीयवत् ॥ १०१ ॥

धर्म भवति । एष वोऽमी राजत्वस्य वचनसामर्थ्यात् विलिङ्ग-स्यापि प्रयोगो भवति । अथैव पूर्वाभिषेकेणाभिमृशतीति प्रवृत्त्याह एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजेति ॥ १०१ ॥

अग्नियोजनम्प्रातरनुवाकमुपाकरिष्यन्प-
रिधीनालभ्य यथापूर्वमग्निं युनज्मीति
प्रत्यृचम् ॥ १०२ ॥

प्रातर्विमोचनम् । प्रातरनुवाकमुपाकरिष्यन्नग्नियोजनं करोति यथासूत्रितम् ॥ १०२ ॥

अग्निमारुतस्तोत्रपुरस्ताद्विमोचनम्

परिधिपंथ्योर्दिवो मूर्धेति प्रत्यृचम् ॥१०३॥

अग्निमारुतस्तोत्रस्य पुरस्ताद्ग्निमोचनं परिधिपंथ्यालम्भनं कृत्वा दिवो मूर्धेति प्रत्यृचम् ॥ १०३ ॥

प्रायणीयेऽतिरात्रे युक्त्वोदयनीये विमोकमेके ॥१०४॥

एके अहरहर्युञ्जन्ति च विमुञ्चन्ति च ॥ १०४ ॥

अध्वरसमिष्टयजुरन्तइष्टो यज्ञ इति प्रत्यृचमपरे ॥ १०५ ॥

समिष्टयजुषी जुहोति ॥ १०५ ॥

अनूबन्ध्यस्य देविकाहवींषि निर्वपति

यजप्रैषाणि ॥ १०६ ॥

अनुबन्ध्यपशुपुरोडाशमनु देविकाहविषां निर्वापः क्रियते । यजप्रैषाणि ॥ १०६ ॥

तानीदानीमाह—

अनुमतिराकासिनीवालीकुहूभ्यश्चरवो

धात्रो द्वादशकपालः सर्वहुतः ॥ १०७ ॥

कर्तव्य ॥ १०७ ॥

हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूता-

दिति प्रत्यृचमष्टौ ॥ १०८ ॥

अनूबन्ध्याहृदयशूलान्ते यदाकूतादिति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोति ॥ १०८ ॥

चित्रोसीति चित्रनाम कृत्वोपतिष्ठते ये अ-

मय इति ॥ १०९ ॥

तमेषचिनितम् ॥ १०९ ॥

पयस्या मैत्रावरुणी तूपरमिथुनदक्षिणोदवसानीयान्ते ॥ ११० ॥

उदवसानीयान्तग्रहणं मा भूदुपस्थानान्ते । पयस्यायाश्च तूपरौ छागौ मिथुनार्हौ दक्षिणा ॥ ११० ॥

वर्षत्यसरणमतः ॥ १११ ॥

अग्निचिद्वर्षति न धावेदिति वचनात् ॥ १११ ॥

पक्ष्यभोजनम् ॥ ११२ ॥

न पयसोग्निचिदश्नीयादिति ॥ ११२ ॥

सवर्णोपायी ॥ ११३ ॥

सवर्णाशब्देन द्विजात्यभिधानम् । ततश्च शूद्रानिवृत्तिः । एवं ह्यामनन्ति । अग्निं चित्वा प्रथमं चित्या न रामामुपेयादिति । रामा च शूद्री । सा हि रमणायोपेयते न धर्मायेति ॥ ११३ ॥

द्वितीये स्वामेव ॥ ११४ ॥

द्वितीयेऽग्निचयने विनिवृत्ते स्वामेवोपेयात् क्षत्रियां वैश्यां चेति । एवमपि हि श्रूयत इति ॥ ११४ ॥

तृतीये न कां चन ॥ ११५ ॥

तृतीये चयनेऽभिनिवृत्ते न काञ्चनोपेयात् ब्रह्मचार्येव भवति॥११५॥

यावज्जीवं व्रतान्यविशेषात् ॥ ११६ ॥

अग्निचिद्वर्षति न धावेदित्येवमादीति मन्येयुः । तत एतत् ।

अविशेषात् । न ह्यत्र कालविशेषः श्रूयते । एतावन्तं कालमेतानि व्रतानीति ॥ ११६ ॥

एवं स्थित आह—

सम्वत्सरं वा कालस्यानवस्थितत्वात् ॥ ११७ ॥

सवत्सरं वा यावदेतानि व्रतानि भवेयुः । कुत एतत् । कालस्यानवस्थितत्वात् । न हि कालो व्यवस्थितः । शास्त्रे व्यवस्थितेन च शास्त्रार्थेन भवितव्यम् ॥ ११७ ॥

तद्व्रतश्रुतेश्च ॥ ११८ ॥

अपि च तद्व्रतश्रुतिर्भवति । संवत्सरसम्मिता वा व्रतचर्येति । तदेतत्पक्षद्वयं प्रदर्शितमाचार्येण । अत्र यः श्रेयस्करतरः पक्षः स एवाभ्युपेयः । कोऽसौ । यावज्जीवव्रतान्येतानीति । कुत एतत् । अग्निचित्संयोगात् । अग्निं चितवान् यः सोऽग्निचिदुच्यते । यावज्जीवं चासावग्निचित् । अतो व्रतान्यपि तावदेवेति । आचार्यस्याप्ययमभिप्रायः । येन विश्वजिद्याजिनः संवत्सरसम्मितां व्रतचर्यामाह संवत्सरं न याचेदिति । यत्पुनरुक्तं संवत्सरसम्मिता वे व्रतचर्येति उक्तविधिविशेषत्वात्तद्विषयमेव तदिति ॥ ११८ ॥

चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्वज्योतिर्ऋतव्यानामन्यतमा ॥ ११९ ॥

उपधेयाः । यस्तु इष्ट्वा ऽग्निचित आहुतीः सोमाहुतिर्वाग्निरेके जुहोतीति प्रकृत्यैवमेव श्रुतत्वात । स स्वयमातृण्णया पयोपदधीत तथा ऋतव्या पयोपदधीतं विश्वज्योतिष पयो पदधीत ॥११९॥

पुनश्चितिम् ॥ १२० ॥

पुनश्चितिमेवोपदधीतेति च ॥ १२० ॥

• अचयनं वा ॥ १२१ ॥

कुत एतत्—

चित्यस्याहवनीयाभिसम्पत्तेः ॥ १२२ ॥

आहवनीयएव चित्याभिसम्पत्तिश्रवणात् । यो वाव चितेऽग्निर्निधीयते तामवेष्टकामेष सर्वोऽग्निरभिसम्पद्यत इति ॥ १२२ ॥

इति उपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये
अष्टादशोऽध्यायः समाप्तः ।



# एकोनविंशोऽध्यायः ।

आचार्येणाग्निरनुविहितः । इदानीमवसरप्राप्तं सौत्रामण्यनु-विधानम् क्रियते ।

ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥ १ ॥

तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणीति वचनात् । ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् । सा च ऋद्धिकामस्य भवति । शाखान्तरात् । ननु तयोरपि नियतविशेषविधानमस्ति । सञ्जित्यै विजित्यै सत्यजित्यै इति क्षत्रियस्य । सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै इति वैश्यस्य । उच्यते । क्षत्रियवैश्ययोर्विशेषश्रवणमन्यत्र-सौत्रामणीविषयम् । कुत एतत् । अग्नौ हि तयोरपि प्राप्तिरस्ति । तस्मादृद्धिकामस्य ब्राह्मणस्यैव नेतरयोर्वर्णयोरिति । सौत्रामणीति कर्म नामधेयम् । तच्चेष्टिपशुसमुदायस्य । सन्निधानात् लिङ्गाच्च । उभयं वै सौत्रामणीष्टिश्च पशुबन्धश्चेति । तथाचार्यप्रस्थानं सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदादिति । एवं प्राप्ते उच्यते । त्रिपशोर्वा नामधेयम् । कुत एतत् । लिङ्गादेव । आत्मा वै यज्ञस्य सौत्रामणी बाहू ऐन्द्रश्च वायोधसश्चैवैन्द्रवायोधसव्यतिरिक्ते वस्तुनि सौत्रामणीशब्दमाह । तथा तदप्येतत् सौत्रामणिक यूपमेतौ यूपावभिष्टुन इति सौत्रामणीशब्दं त्रिपशावेवाह । यच्चोक्तमुभयं वै सौत्रामणीष्टिश्च पशुबन्धश्चेति तदितरेषामङ्गत्वेऽपि सम्भवत्येव । यद्वा पयोग्रहसुराग्रहसम्बन्धेनोभयरूपा सौत्रामणीति । आचार्यप्रस्थानन्तु प्रकरणोपलक्षणार्थम् । अयाजत्रिपशोरेवान्तराये प्रयोक्तृत्वमिति ॥ १ ॥

अग्निचित्सोमयाजिसोमातिपूतसोमवा-मिनाम् ॥ २ ॥

अभिचारनिमित्तैः सौत्रामणी भवति । तत्राग्निचित्सोमयाजीति ग्रहणम् अग्निमतः सोमस्याङ्गं यथा स्यादिति । स हि फल-

यात् निष्फलोऽग्निरिति । एवं च सत्यग्निमत्सोमयागान्ते सौत्राम- णी भवति । ननु चाग्निं चित्वा सौत्रामण्या यजेतेति वचनसाम- र्थ्यात् चयनसमनन्तरमेव प्राप्नोति । नेत्युच्यते । अग्निं चित्वेत्यत्राग्नेः पारार्थ्येनोपादानात् । अग्निं चित्वेति चयनेन तत्कार्यमभिनिर्वर्त्येति तदुक्तं भवति । किं च तत्कार्यं तत्र स्थितेनाग्निना सोमयागाभिनि र्वृत्तिः तस्मादग्निमतः सोमस्याङ्गमिति । तदुक्तमाचार्येणाग्निचित्सो मयाजीति । ननु च भिन्ने जुहोति स्कन्ने जुहोति इति यथात्र नि मित्तकालता नैमित्तिकस्यैवमिहापि चयनाभिनिर्वृत्तिकालता किं न भवति । विषमोऽयमुपन्यासः । यत्र हि निमित्तं स्वयमेव भवति तत्र निमित्तकालता नैमित्तिकस्य युक्ता । तदुक्तमाचार्येण कालो च प्रत्ययादिति । इह पुनरग्नेः सोमाङ्गतया विधानसामर्थ्यात् अग्नि कार्याभिनिर्वृत्त्युत्तरकालतैव युक्तरूपेत्यग्निं चित्वेत्यस्यार्थः । तस्मा दग्निमता यः सोमेनेष्टवांस्तस्यैव सौत्रामणी । ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते सोमेनेष्ट्वा सौत्रामण्या यजेतेति नैतदेवम् । अग्निं चित्वेत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात्तदङ्गम् । यस्य प्रकरणं तस्यान्याभिधीयमानं तदङ्गमेव भवतीति न्याय्यम् । सोमेनेष्ट्वा सौत्रामण्या यजेतेति सौत्रामणीप्रकरणे पाठः । तेन प्रत्युत विपरिवृत्य सोमस्यैव सौत्रामण्यङ्गता भवति न सौत्रामण्याः सो- माङ्गता । यथा वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेय प्रकृत्य विधानात् वाजपेयाङ्गता बृहस्पतिसवस्य । तस्मात्तत्रानग्निमति सोमे सौत्रामणी । सोमेनेष्ट्वा सौत्रामण्या यजेतेति । किमर्थस्तर्हि पाठः । अ- ग्निमत्सोमस्यानुवादार्थ इत्यदोषः । यद्याग्निश्चित्वेत्यस्यैव प्रयोगम् । अग्निमता सोमेनेष्ट्वेत्येतदुक्तं भवति । ननु च किमर्थमेतद्वाक्यं क- स्मान्न भवति । यथा दर्शपूर्णमासाभ्यामिष्ट्वान्येन यजेत । एवं सोमे- नेष्ट्वा सौत्रामण्या यजेतेति । नैतदेवमङ्गत्वप्रतिपादनस्वरूपो ह्यर्थवा- दोऽत्र भवति । सोमेनेष्ट्वा सौत्रामण्या यजेतेत्युक्ताद् यथा धेनुर्दुग्धा पुनराप्यायेतैवं हैव पुनराप्यायत इति तस्मादग्निमत्सोमाङ्गमेवेति । सोमातिपूतयसामपामितोऽत्र सौत्रामणी भवति । शाखान्तरश्रवणा- त्सोमातिपूत. सोमवामी च ब्राह्मण एव । न हि क्षत्रियवैश्ययोरेत- द्विशेषणमिति । ननु च सोमकार्ये तयोरपि न्यग्रोधविधानम् । तेन तद्विषयत्वे वमने च किमिति न भवति । नैतदेवम् । यदि नाम

# विज्ञप्तिः ।

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एक. स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्यते ।

प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते । काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

भारतवर्षीयै, र्म्लेच्छदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देय वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

| | | |
|---|---|---|
| कालान्तरे प्रतिस्तवकं | " " १ " ८ | |

प्रापणव्यय. पृथग् नास्ति ।

| साम्प्रत मुद्यमाणा ग्रन्थाः- | | मुद्रिताः स्तवकाः |
|---|---|---|
| सस्काररत्नमाला । गोपीनाथभट्टकृता | ( सस्कारः ) | २ |
| शब्दकौस्तुभः । भट्टोजिदीक्षितकृत. | ( व्याकरणम् ) | १० |
| श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिष. ) | १ |
| भाट्टचिन्तामणि. महामहोपाध्याय-श्रीगागाभट्ट विरचित. । तर्कपादः | ( मीमांसा ) | २ |
| न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्ण. । | (वेदान्तः) | ६ |

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णम् । (जैनदर्शनम्)

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणा-परम्-श्रीभाष्यकर्तां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्णः (वेदान्तः)

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसङ्गृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः)

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसमावभाक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः (न्यायः)

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा)

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (वेदान्तः)

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । (वेदान्त)

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसङ्ग्रहः) श्रीमद्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीमद्भट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा)

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम् । (मीमांसा)

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । (वेदान्त)

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् ।

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्त)

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्त,
चौखम्बा संस्कृतपुस्तकालय
बनारस सिटी ।



No. 80.] [ Price Rupee One.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

# कात्यायनश्रौतसूत्रम् ।

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA ŜRAUTASUTRA,

WITH A COMMENTARY BY ŜRI KARKÂCHÂRYA,

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,
Professor of Mimâmsâ and Dharmashâstra,
Ranabir Sanskrit Pâthashâlâ,
*Central Hindu College, Benares.*

FASCICULUS IX.

*PUBLISHED AND SOLD BY THE SECRETARY*
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:
BENARES.
AGENTS—OTTO HARRASSOWITZ, LEIPZIG:
PANDIT JYESHTHARAMA MUKUNDJI, BOMBAY.
*Printed By Hari Das Gupta Proprietor*
AT THE VIDYA-VILASA PRESS.
BENARES.

1904.

॥ श्रीः ॥



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाङ्कितभव्याभशतपत्रैःपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—८०

कार्योपपत्त्या धर्मप्राप्तिर्भवति । न चायं सोमधर्मः । किं तर्हि तद्गतिपवने यागान्तरविधानमिति । अग्निचितस्तु वर्णत्रयस्यापि भवति । अग्निसयोगविधानात् ॥ २ ॥

राज्ञोपरुद्धस्य च ॥ ३ ॥

सौत्रामणी भवति । राज्ञः अपरुद्धस्य राज्यात्प्रच्यावितस्ये-त्यर्थः । दुष्टरीतुर्ह पौंसायनो दशपुरुषं राज्यादपरुद्ध आसेति तद्विधानात् ॥ ३ ॥

अलम्पशोरपशोश्च ॥ ४ ॥

सौत्रामणी भवति । पशुयोग्य सन्यो नाम पशून् विन्दते सो-ऽलम्पशुरपशु ॥ ४ ॥

आदित्यश्चरुः ॥ ५ ॥

भवतीति सूत्रशेषः । आदित्य चरु वक्ष्यमाणो निर्वपतीति श्रुतेः ॥५॥

अन्ते च ॥ ६ ॥

आदित्यश्चरुर्भवति । आदित्यमीजान इति । ईजानशब्द इष्ट-स्यैव भवति ॥ ६ ॥

आमिक्षाया वा पूर्वः ॥ ७ ॥

आदित्यश्चरुर्भवति । तस्य हि कक्षौ चरव इति कक्षसंस्तवः । यागोधसस्य च बाहुसस्तवात् पयस्यान्ते च विधानात् आमिक्षायाः पूर्वो भवतीति सम्प्रदाय । विकल्प इत्यपरे ॥ ७ ॥

धेनुर्दक्षिणा ॥ ८ ॥

अस्यादित्यस्य चरोर्भवति ॥ ८ ॥

तत्र विभागमाह—

वत्सः पूर्वे ॥ ९ ॥

चरौ ॥ ९ ॥

मातोत्तरे ॥ १० ॥

दीयते । वत्स पूर्वस्यां ददाति मातरमुत्तरस्यामिति । इत्यपेक्षया स्त्रीलिङ्गान्तता ॥ १० ॥

अग्न्यादधामीति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति ॥ ११ ॥

उद्धृत्याहवनीयम् ॥ ११ ॥

सत्यवादी ॥ १२ ॥

यजमानो भवतीति शेषः । अत्र चेष्टिषु केचिद्व्रतग्रहणं नेच्छन्ति । सौत्रामणिकस्य सत्यनियमस्य विद्यमानत्वात् । यथा दीक्षितसत्यनियमेन ज्योतिष्टोमे व्रतग्रहणाभावः एवमिहापीति । तदेतन्नातीव युक्तरूपम् । येन चोदकपरिप्राप्तसत्यनियमाबाधेनापि सौत्रामणिकस्य सत्यनियमस्य प्राप्तिरस्त्येव तद्वचाप्यप्रदेशादुपहि । अपि चेष्टिविधानेन स एव पूर्वसत्यनियमः प्राप्नोति । प्राकृतसत्यनियमगृहीता एव इष्टयो विधीयन्ते । तस्मादयमन्तराल धर्म इति । ज्योतिष्टोमेऽप्येवमेवास्त्विति चेत् । न । दीक्षितनिबन्धनत्वात्तस्य यावद्दीक्षितकालभावित्वाच्च सत्यनियमस्य प्राकृतस्य नावसर इति बाध्यते । प्रयोजनमिष्टिषु व्रतं गृह्णात एव ॥ १२ ॥

हुतोच्छिष्टभक्षः ॥ १३ ॥

यजमानो भवति । अग्निहोत्रहुतशेषभक्ष इत्यर्थः ॥ १३ ॥

चतूरात्रम् ॥ १४ ॥

अथ क्रतुर्भवतीति सूत्रशेषः । किं वा स्यात् पौर्णमास्यां सर्वेष्टयो मा भूवन्निति ॥ १४ ॥

अग्निहोत्रं जुहोति ॥ १५ ॥

पुनर्विधानसामर्थ्यात् स्वयमेवेति नियमः ॥ १५ ॥

ऐन्द्रः पशुः ॥ १६ ॥

कर्तव्य इति शेषः ॥ १६ ॥

चरुपश्वोर्विपर्यासमेके ॥ १७ ॥

इच्छन्ति, कक्षसंस्तवाश्वयोः बाहुसंस्तवाश्चैन्द्रस्येति । यद्येवं-पूर्वः कस्मादादित्य उक्तः वक्ष्यमाणो निर्वपतीत्यतो वचनात् । अस्तु तथेति चेत् । न । कक्षसंस्तवात् । बाहुसंस्तवाश्चेतरस्य । अन्तर्बहिर्भावमङ्गीकृत्य संस्तवोऽयमिति । कथं तर्हि वक्ष्यमाण इति भवति । आश्विनपशुकालात् वक्ष्यमाणो भवति ॥ १७ ॥

अन्तःपात्यस्थाने चर्मणि सुरासोमविक्रयि-
णः सीसेन शष्पक्रयस्तोक्मानामूर्णाभिर्ला-
जानां सूत्रैः सुरासोमविक्रयिन् क्रय्यास्ते
सुरासोमा३ इत्यामन्त्र्यामन्त्र्य सर्वेषु ॥ १८ ॥

प्रक्रमवृत्तीयेन सोमवदुत्तरां वक्ष्यति । तत्रान्तःपात्यस्थानमस्ति । तत्र सुरासोमविक्रयिणः सकाशाच्चर्मणि सीसेन शष्पक्रयः कर्तव्यः । सीसं प्रसिद्धमेव शष्पशब्देन व्रीहयो विरूढा उच्यन्त इति सम्प्रदायः । अपरे तु शष्पशब्दं तृणमात्रवाचकमाहुः । प्रसिद्धो ह्ययं तृणेष्वपीति । तोक्मशब्देन यवा विरूढा उच्यन्ते । तेषामूर्णाभिः क्रयः लाजानां च सूत्रैः । यच्च पठ्यते ऊर्णासूत्रेण क्रीणातीति । स द्वन्द्वैकवद्भावः । सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमा इत्यामन्त्र्यामन्त्र्य क्रयः कर्तव्यः । सर्वेष्विति च सर्वग्रहणं नागन्तुविषयम् । तस्यापि चामन्त्र्यानियतद्रव्येण क्रयणं कर्तव्यम् ॥ १८ ॥

क्लीबादेके ॥ १९ ॥

क्रतुमिच्छन्ति । क्लीबः प्रसिद्ध एव ॥ १९ ॥

दक्षिणेन हृत्वा नग्नहुचूर्णानि कृत्वा तांश्च
व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य
चूर्णैः संसृज्य निदधाति तन्मासरम् ॥ २० ॥

दक्षिणेन द्वारेण प्रवेश्याग्न्यगारं नग्नहुचूर्णानि कृत्वा नग्नहुः किण्व उच्यते । तांश्च शष्पादीन् चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृ-

यगाचामौ निपिष्य चूर्णैः संसृज्य निदधाति तन्मासरमुच्यते । व्रीहिद्वयामाकाभ्यां च सुरानिष्पाद्यते । सा च यागसाधनम् । तेन सा तद्धर्मैरभिसम्बध्यते । अतस्तयोश्चतुर्मुष्टिकग्रहणपूर्वकपृथगोदनौ निष्पाद्येते ॥ २० ॥

ओदनौ चूर्णमासरैः सꣳसृज्य स्वाद्वीं त्वाꣳ शुना त इति त्रिरात्रं निदधाति ॥ २१ ॥

चूर्णमासरसꣳसृष्टावोदनौ स्वाद्वीं त्वेति मन्त्राभ्यां कुम्भ्यां प्रक्षिपति । प्रक्षिप्ता च त्रिरात्रं निधेया सुरा ॥ २१ ॥

एकस्याः पयसाऽपाकृतेनाश्विनेन परिषिञ्चति परितो षिञ्चतेति ॥ २२ ॥

एकस्या गोः पयसाऽपाकृतेनाश्विनेन सुरां परिषिञ्चति परीतो षिञ्चतेत्यनेन मन्त्रेण । एकस्यै दुग्धेन प्रथमाꣳ रात्रिं परिषिञ्चतीति वचनात् । अश्विनावुद्दिश्यापाकरणं कर्तव्यम् । तच्चापूर्वत्वादप्रधानत्वाच्च पयसः अश्विभ्यामपाकरोमीति । गोस्पर्शनमात्रमेवेति सम्प्रदायः । अपरे तु धर्मवदपाकरणमिच्छन्ति ॥ २२ ॥

शष्पचूर्णानि चावपति ॥ २३ ॥

च शब्दात्सुरायाम् ॥ २३ ॥

सारस्वतेन द्वयोः प्रातः ॥ २४ ॥

प्रातः शब्देन च द्वितीयमहरभिधीयते । तत्रापि च रात्रावेवाभिषेकः । प्रथमाꣳ रात्रिं परिषिञ्चतीति प्रकृत्य द्वयोर्दुग्धेन द्वितीयामित्याह । द्वितीयां रात्रिमिति गम्यते ॥ २४ ॥

तोक्मचूर्णानि च ॥ २५ ॥

आवपति ॥ २५ ॥

ऐन्द्रेणोत्तमे तिसृणाम् ॥ २६ ॥

गवां दुग्धेनैन्द्रेण परिषिञ्चति ॥ २६ ॥

## लाजचूर्णानि च ॥ २७ ॥

आवपति । अत्र चूर्णानां पयसश्च संस्कारकत्वम् । शाखनं तु ब्रीहि इमामाकावेव । अतस्तयोरेव देवतोद्देशेन ग्रहणम् ॥ २७ ॥

## वेदी मिमीते वरुणप्रघासवत् ॥ २८ ॥

उत्तरान्या भवति दक्षिणान्येति दक्षिणस्याः प्रतिस्यात्कर्तृकता पतिना लक्ष्यते ॥ २८ ॥

## प्रक्रमतृतीयेनावृत्तेनोरा; सोमवत् ॥ २९ ॥

प्रक्रमस्य तृतीयं प्रक्रमतृतीयम् । तेनोत्तरस्यां वेद्यां मानक्रिया सोमवत्कर्तव्या । सोमवदिति च प्राची · षट्त्रिंशत् पद्यः। त्रिंशत्त्रयस्त्रिंशद्वा पुरस्ताच्चतुर्विंशतिः तृतीयेनेति कुतोऽध्यवसितं त्रितृतीये यजेत वितृतीयां वै सोमस्य सौत्रामण्यामिति वचनात् । एवं सति यदि प्रक्रमस्य तृतीयं गृह्यते ततः क्षेत्रस्य नवमभागः परिच्छिद्यते । तत्र वितृतीये यजेतेत्यसमर्थं स्यात् । तस्मात्प्रक्रमशब्देन प्रक्रमपरिच्छिन्नं क्षेत्रमभिधीयते । यथा पादवृत्त्या परिच्छिन्नं क्षेत्रं पादवर्तशब्देनाभिधीयते । एवं प्रक्रमपरिच्छिन्नम् प्रक्रमशब्देन तस्य तृतीयम् । प्रक्रमतृतीयान्तेन च मानस्याशक्यत्वात् परिच्छेदकरणं प्रमाणं लक्ष्यते । तेन प्रमाणेन सोमवत् क्रियोत्तरस्याः । यद्वा प्रक्रमपरिच्छिन्नक्षेत्रतृतीयकरणीप्रमाणेन सोमवदावृत्तेनेति । प्रक्रमतृतीयकरणीप्रकारश्च शुल्बकारेणोक्त एव ॥ २९ ॥

## तयोः पश्चात्खरौ करोति ॥ ३० ॥

तयोर्वेद्योर्निष्पन्नस्वरूपयोः पश्चाद्भागे खरौ करोति । खरकरणं च शाखान्तरे विहितमेव ॥ ३० ॥

## श्वः प्रणयनीयाधानादि करोत्याज्यासादनात् स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत् ॥ ३१ ॥

एवं चतुर्दश्यां उत्तरवेदिच्छादनान्तोत्तरावेदिर्भवति दक्षिणोत्करकरणान्ता । तस्यां च वरुणप्रघासवदिति यत्युपदेशात्प्रविप्रत्ताता कार्ता ॥ ३१ ॥

सौरमेवास्याम् ॥ ३२ ॥

दक्षिणस्यां सौरमेव भवति । एवकारकरणं च तदङ्गाभावज्ञापनार्थम् । तत्कुतः । अत्र हि श्रूयते । आश्विनोजो धूम्रः सारस्वतो मेष ऐन्द्र ऋषभ इति । तथा पयश्च सुरा च भवत इति सर्वस्यास्यैकतन्त्रयम् । तन्त्रवचनाद्दक्षिणेग्नौ सुराग्रहहोमः । दक्षिणेग्नौ सुराग्रहान् जुहुतीति । तदङ्गान्युत्तर एव । तथा चाह उत्तरेग्नौ पशुभिः पुराडाशैः पयोग्रहैरतिचरन्ति यदुचान्यदिति । अन्यग्रहणेन सौरग्रहाङ्गान्युच्यन्ते । तान्युत्तरस्यामेवैकतन्त्र्यात् । अतश्चाचार्येण ज्ञापितमेतत् सौरमेवास्यां भवति । एवकारकरणात् अङ्गान्युत्तर एव । एवं च कृत्वा तन्त्रैकत्वाच्च दक्षिणावेद्यर्थं प्रणीताः क्रियन्ते । अग्निप्रणयनमित्याहवनीयादेव दक्षिणस्याम् । सपाशुकेषु चातुर्मास्येषु तु तन्त्रभेदाद्दक्षिणावेद्यर्थं प्रणीताप्रणयनं क्रियते गार्हपत्याद्याग्निप्रणयनम् ॥ ३२ ॥

श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात्पूतामादत्ते सिञ्चन्ति परिषिञ्चतीति ॥ ३३ ॥

दक्षिणां वेदिश्रोणिमपरेण श्वभ्रं खात्वा चर्मावधाय परिस्रुतमासिच्य तत्र कारोतरमवदधाति सुरापावनाय । कारोतरं च सुरापावनं प्रसिद्धं शौण्डिकानाम् । ततः पूतां सुरामादत्ते सिञ्चन्ति परिषिञ्चन्तीत्यनेन मन्त्रेण । कारोतराद्वा पतितां चर्मणि गृह्णातीति । कुत एतत् । चर्मणि मन्त्रलिङ्गात् । कारोतरेण दधाना यथां स्पचीति मन्त्रलिङ्गमन्यर्थप्राप्तस्योपायस्य नियामकं भवति । यद्वर्थं कारोतरादेव पतितां चर्मणि गृह्णाति । सम्प्रदाये तु विकल्पः ॥ ३३ ॥

सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतमिति ॥ ३४ ॥

सतशब्दः पात्रवाची । तच्च पालाशम् । तत्र हि सुरा न पिनाशमुपयाति । तत्र गोऽश्ववालपवित्रेण सुरां पुनाति ते परिस्रुतमित्यनेन मन्त्रेण ॥ ३४ ॥

वायोः पूत इति सोमातिपूतस्य ॥ ३५ ॥

पुनाति ॥ ३५ ॥

प्राङिति तद्यामिनः ॥ ३६ ॥

पुनातीति चोपः ॥ ३६ ॥

उत्तरस्यां पयो वैतसे ऽजाविलोमपवित्रेण ब्रह्मक्षत्रमिति ॥ ३७ ॥

उत्तरस्यां वेद्यां अजाविलोमपवित्रेण वैतसे पात्रे पयः पुनाति ब्रह्मक्षत्रमित्यनेन मन्त्रेण । तच्च पयो यागार्थत्वाद्धर्मवद्भवति ॥३७॥

ब्रह्मानुमन्त्रणमध्वर्यो अद्रिभिरिति ॥ ३८ ॥

पूयमान पयो ब्रह्मानुमन्त्रयते अध्वर्यो अद्रिभिरिति ॥३८॥

पयोग्रहान् गृण्हाति कुविदङ्गेति ॥ ३९ ॥

अनेन मन्त्रेण ॥ ३९ ॥

पृथगुपयामयोनी ॥ ४० ॥

प्रतिग्रह भवत. ॥ ४० ॥

खरयोः सादनम् ॥ ४१ ॥

पयोग्रहसुराग्रहाणां च कर्तव्यम् ॥ ४१ ॥

आश्विनमाश्वत्थेन ॥ ४२ ॥

पात्रेण गृह्णाति ॥ ४२ ॥

गोधूमकुवलचूर्णानि चावपति तेजोसीति ॥४३॥

च शब्दाद्ग्रहे ॥ ४३ ॥

सारस्वतमौदुम्बरेणोपवाकबदरचूर्णानि च वीर्यमसीति ॥ ४४ ॥

च शब्दादावपति उपवाकशब्देन इन्द्रयवः ॥ ४४ ॥

ऐन्द्रं नैयग्रोधेन ॥ ४५ ॥

यवकर्कन्धुचूर्णानि च बलमसीति ॥ ४६ ॥

आवपति ॥ ४६ ॥

स्थालीभिः सौरान्नाना हि वामिति व्यत्यासम् ॥ ४७ ॥

सौरान् ग्रहान् गृह्णाति नाना हि वामित्यनेन मन्त्रेण । तांश्च गृह्णन् व्यत्यासेन गृह्णाति । पयो ग्रहं गृहीत्वा ततः सुराग्रह पुनरप्येवमेव । व्यतिषक्तान् गृह्णातीति वचनात् ॥ ४७ ॥

पयोग्रहान्वा पूर्वम् ॥ ४८ ॥

गृह्णाति । एवमपि हि श्रूयते इति ॥ ४८ ॥

सुराग्रहाञ्छ्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः ॥ ४९ ॥

ओजोऽसीत्येभिर्मन्त्रैः प्रतिमन्त्रं वृकादिलोमभिर्मिश्रैः सुराग्रहाञ्छ्रीणातीति ॥ ४९ ॥

एके यथासंख्यम् ॥ ५० ॥

लोमभिः श्रयण कुर्वन्ति ॥ ५० ॥

सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते युगपत् ॥५१॥

यौगपद्येन ॥ ५१ ॥

चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥५२॥

उपतिष्ठते ॥ ५२ ॥

दीक्षावत्पावयतोन्तःपात्ये श्येनपत्त्राभ्यां या व्याघ्रमिति ॥ ५३ ॥

अध्वर्युप्रतिप्रस्थातारावन्तःपात्ये स्थितं यजमानं श्येनपत्त्राभ्यां पावयतो या व्याघ्रमित्यनेन मन्त्रेण । दीक्षावदिति ऊर्ध्वमवाञ्चं च ॥ ५३ ॥

अग्निं प्रेक्षयति यदापिपेषेति ॥ ५४ ॥

प्रेक्षयतीति कारितस्याद्ध्वर्युणा । यदापिपेषेति यजमानः प्रेक्षते ॥ ५४ ॥

पयोग्रहसंमर्शनं सम्पृचस्थेति ॥ ५५ ॥

विपृचस्थेति सौराणाम् ॥ ५६ ॥

अभिमर्शनम् । सौरानभिमृशेदकस्पर्शनमिति सम्प्रदायः । व्यत्यासग्रहणोप्येवम् ॥ ५६ ॥

वैकृतावसरे प्राकृतानुवृत्यर्थमाह—

अभ्रयादिकरोति ॥ ५७ ॥

आश्विनोजो धूम्रः ॥ ५८ ॥

पशुर्भवति । अजग्रहणमुत्तरविवक्षया ॥ ५८ ॥

सारस्वतो मेष ऐन्द्र ऋषभो मध्ये यूपो दक्षिणोत्तरावैन्द्रवायोधसयोः ॥ ५९ ॥

एवं देशाध्यवसानं कर्तव्यमेव हि श्रूयते तद्देशं सौत्रामणिकं यूपमेतौ यूपावभितो भवत इति ॥ ५९ ॥

वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनं

सुरासोमेभ्यो ऽनुब्रूहीति ॥ ६० ॥

पूर्ववच्छब्देन च राजसूयसौत्रामणिक उच्यते । तत्र सुकमभिश्वर्यां सरस्वत्या इन्द्राय सुत्राम्ण इति, एता हि ग्रहदेवता इति । अतश्च पयोग्रहार्थं तदुद्देशेनोपाकरणम् । सुराग्रहार्थं च श्रीहिश्यामाकयोश्चतुर्मुष्टीनां ग्रहणमिति । अयं च चरकसौत्रामण्यनुवाचनातिदेशोऽपरो विशेषः ॥ ६० ॥

सप्रैषं तु ॥ ६१ ॥

तुशब्दो विशेषणार्थः ॥ ६१ ॥

प्रस्थितमिति च ॥ ६२ ॥

चशब्दादपरो विशेषः । प्रस्थित शब्दस्य प्रयोगः सुरासोमाभ्यः प्रस्थितान्प्रेष्येति ॥ ६२ ॥

त्रिपशोः सर्वम् ॥ ६३ ॥

प्रस्थितशब्दमनुवर्तयति । सर्वग्रहणं च यथार्थम् । पशुपुरोडाशार्थमित्यपरे । तच्चानुपपन्नम् । येनाय सवनीयेषु पठ्यते प्रस्थितमिति च प्रसुते नेनेह प्राप्तस्योपसंहारार्थमिदं वचनं । न च पुरोडाशे प्रस्थितशब्दस्य प्राप्तिः । तस्मात्सर्वग्रहणं यथार्थमेव । पशुशब्दस्याङ्गेषूपचरितत्वात्तत्रैव मा भूदिति सर्वग्रहणम् । इह चोपसंहारात्प्रस्थितशब्दस्य पशुगणान्तरेष्वप्रवृत्तिः ॥ ६३ ॥

सुरावन्तमिति जुहोति ॥ ६४ ॥

पयोग्रहान् ॥ ६४ ॥

पालाशैः सौरान्मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति ॥ ६५ ॥

पालाशैः सुराग्रहान् जुहोति यस्त इत्यनेन मन्त्रेण । कुत एतत् । पालाशैरिति । यस्मात् मृन्मयमाहुतिं न व्याप्नोति । कथं व्याप-

ते । यद्वानस्पत्यैर्देवेभ्यो जुह्वत्यथ कस्माद्देत मृन्मयेनैव जुहोतीति । वानस्पत्यं देवानामुचितं मृन्मयं चानुचितमिति ज्ञापयति । अपि च पालाशान्युपशयानि भवन्तीत्यत्र श्रूयते मा भूददृष्टार्थता तेषामिति ॥ ६५ ॥

अध्वर्युः प्रतिप्रस्थातामींघमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्त्तम् ॥ ६६ ॥

अध्वर्य्वादयः आश्विनग्रहशेषं द्विर्द्विरवर्त्त्यावर्त्य यमश्विनेति मन्त्रेण भक्षयन्ति ॥ ६६ ॥

होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत् ॥ ६७ ॥

भक्षन्तीति शेष ॥ ६७ ॥

शेषः शेषमासिञ्चत्युत्तरे पर्वस्य ॥ ६८ ॥

भक्षितशेषं पूर्वस्य ग्रहस्योत्तर आसिच्यते ॥ ६८ ॥

ऐन्द्रं यजमानः ॥ ६९ ॥

भक्षयतीति शेष. ॥ ६९ ॥

यदत्रेति सौरान्भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः ॥ ७० ॥

दक्षिणतो वितानस्य व्यवस्थिता प्राचीनावीतिन सन्तो यदत्रेत्यनेन मन्त्रेण सौरान्भक्षयन्ति । यथा यथो ग्रहाणां भक्षणं कृतं तथैवेति ॥ ७० ॥

प्राणभक्षणमेके ॥ ७१ ॥

कुर्वन्ति । स चायं विकल्पः । वाक्यस्य तुल्यत्वात् ॥ ७१ ॥

परिक्रीतो वा वैश्यराजन्ययोरन्यतरः ॥ ७२ ॥

भक्षयेदिति ॥ ७२ ॥

अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्या-
ग्निमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पि-
तृभ्य इति प्रतिमन्त्रम् ॥ ७३ ॥

जुहोति ॥ ७३ ॥

अक्षन्पितर इति प्रक्षालनेनोपासिञ्चति ॥ ७४ ॥

यथाहोमं पात्रे ॥ ७४ ॥

पितरः शुन्धध्वमिति जपति ॥ ७५ ॥

कुम्भीमासज्य कुम्भवत् शतवितृण्णां वाल-
पवित्रहिरण्यान्यन्तर्धाय नवर्चं वाचयति पु-
नन्तु मेति ॥ ७६ ॥

कुम्भवदिति दक्षिणस्याग्नेरुपरि सुरायतीमासञ्जति वालपवित्र-
हिरण्यान्यन्तर्धाय मध्ये नवर्चं वाचयति पुनन्तु मेति ॥ ७६ ॥

सोमवतां बर्हिषदामग्निष्वात्तानां च ॥ ७७ ॥

यथाम्नानवर्चं वाचयति ॥ ७७ ॥

पूर्ववत् सोमातिपूतश्चेव ॥ ७८ ॥

सोमातिपूतसौत्रामण्यां पूर्ववदुपस्थानं कर्तव्यम् सोमव-
दादीति ॥ ७८ ॥

ये समाना इति यजमानो जुहोति ॥ ७९ ॥

उत्तरे च यज्ञोपवीत्युत्तरया ॥ ८० ॥

ऋचा जुहोति । यथाद्यजमानः । अत्र च सूयते सर्वे यज्ञो-
पवीतानि कृत्वोत्तरमग्निमुपसमायन्तीति ॥ ८० ॥

अन्वारब्धेषु पयो जुहोति द्वे सृती इति ॥ ८१ ॥

तथैतज्जुहोति धर्मधर्मेवद्भवति ॥ ८१ ॥

शेषं यजमानो भक्षयतीदꣳ हविरिति ॥८२॥

मन्त्रेण ॥ ८२ ॥

चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय ॥८३॥

पशुपुरोडाशान्निर्वपत्यैन्द्रꣳ सावित्रं वारुणं दशकपालम् ॥ ८४ ॥

अन्यदेवत्याः पशवो भवन्ति वचनादन्यदेवत्याः पुरोडाशा इति । पशुपुरोडाशस्य च प्रकृतौ पशुदेवतासंस्कारार्थतोक्ता । सा चात्र न सम्भवति । तत्र केचिदाहुः पशुपुरोडाश ऐन्द्रः पशुदेवतासंस्कारकः सावित्रः संस्कारसामान्यात् सारस्वतस्य वारुण आश्विनस्य एवं संस्कारकत्वमेषाम् । तत्पुनः युक्तायुक्तविचारार्हमिति ॥८४॥

एककपालं चावभृथाय ॥ ८५ ॥

वारुणं चैककपालं तैरेव सहावभृथाय निर्वपति । वारुणस्य दशकपालत्वैन्द्रसावित्रयोरपि कपालसंख्योपलक्षणार्थम् । एवं हि श्रूयते एकादशकपाल ऐन्द्रो भवति द्वादशकपालः सावित्रो दशकपालो वारुण इति ॥ ८५ ॥

आसाद्यैनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥ ८६ ॥

पुरोडाशानासाद्याज्यभागौ यजति । अत्र हि कर्मे स्विष्टकृद्वनस्पत्योः प्रैषे आज्यभागदेवतयोः सङ्कीर्तनदर्शनात् ॥ ८६ ॥

यथोक्तं वा मन्त्राणामविधानात् ॥ ८७ ॥

प्रागब्दः पक्षव्यावृत्तौ । नात्र आज्यभागौ विधेते । यथाप्राप्त-

मेवाज्यभागयोरनुष्ठानम् । कथं च प्राप्तिः ग्रहयोगात्पूर्वं तेषां हि दर्शपूर्णमासचोदकेनाज्यभागयोः प्राप्तिः । यत्तु स्विष्टकृद्वनस्पत्योः प्रैषदर्शनादित्युक्तम् । तत्र । मन्त्राणामविधायकत्वात् । न हि विधायका मन्त्राः ॥ ८७ ॥

त्रयस्त्रिंशतं दक्षिणा ददात्यनुशिशुं च वडबधेनुम् ॥ ८८ ॥

ननु च धेनुग्रहणादेवानुशिशुत्वं प्राप्तं मनुशिशुग्रहणं न कर्तव्यम् । न । तत्कृतापकाराभावाच्छिशुर्न लभ्यते तस्मात्कर्तव्यमेव । धेनुग्रहणं तर्हि न कर्तव्यम् । नैतदेवम् । अक्रियमाणे हि परशिशुरपि प्राप्नुयात् । तस्मादुभयमुक्तम् । अस्मिन्नवसरे दक्षिणादानमुक्तम् पशुपुरोडाशान्ते यथा स्यादिति ॥ ८८ ॥

एकादशिनिधर्माः पशुगणेषु ॥ ८९ ॥

भवन्ति गणत्वसामान्यात् ॥ ८९ ॥

शमितनुशासनप्रभृति वचनस्पत्यन्तं कृत्वा सोमासन्दीवदासन्दीं जानुमात्रपादीं वेधोर्निदधाति क्षत्रस्य योनिरिति ॥ ९० ॥

द्वा उत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्यामिति श्रुते । शमितनुशासनं तु द्वितीयं कर्तव्यम् । प्रथमं हि सवनीयचोदकपरिप्राप्त्या पशुपुरोडाशस्योद्धृकदानान्ते तत्पात्रसम्मार्गं कृत्वा निवृत्तमिति ॥ ९० ॥

कृष्णाजिनमस्यामास्तृणाति मा त्वेति ॥ ९१ ॥

आसन्द्याम् ॥ ९१ ॥

तस्मिन्नास्ते यजमानो निषसादेति ॥ ९२ ॥

निषसादेत्यनेन मन्त्रेण यजमान उपरि विशेत् ॥ ९२ ॥

पादयोरुक्मा उपास्यति राजत्ं सव्ये मृत्योरिति ॥ ९३ ॥

अनेन मन्त्रेण ॥ ९३ ॥

सौवर्णं शिरस्येके वियोदिति ॥ ९४ ॥

सौवर्ण पुनः शिरस्येक आचार्याः उपास्यन्ति एके दक्षिणपादे वियोदित्यनेन मन्त्रेण ॥ ९४ ॥

खुरैर्वसाग्रहान् द्वात्रिंशतं जुहोति सीसेनेति प्रत्यृचम् ॥ ९५ ॥

खुराश्चर्षभाः प्रतिपत्तव्याः ॥ ९५ ॥

द्वौ द्वौ हुत्वा शेषान्त्सते करोति ॥ ९६ ॥

तांश्च द्वौ द्वौ हुत्वा तच्छेषान्त्सते करोति चैतसे ॥ ९६ ॥

सर्वसुरभ्युन्मृदितं शेषैरभिषिञ्चत्या मुखादव स्रावयन्प्रतिदिशं सर्वत्र सावित्रमाश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् ॥ ९७ ॥

सर्वसुरभिभिश्चन्दनादिभिरभ्युन्मृदितं यजमानं ग्रहशेषैरभिषिञ्चति। आमुखादन्ववस्रावयन् । आमुखादिति मर्यादेयम् । अकर्मविषयत्वात् । प्रतिदिशं व्यवस्थितः । सर्वत परिक्राममिति वचनात् सर्वत्र सावित्रं सर्वाभिषेकेषु सावित्रं मन्त्रमाह । आश्विनोः सरस्वत्या इन्द्रस्येति च प्रतिमन्त्रम् ॥ ९७ ॥

सर्वाभिश्चतुर्थम् ॥ ९८ ॥

अभिषेकम् सर्वाभिर्देवताभिः करोति । पुरस्तात्प्रत्यङ्ङभिषिञ्चति पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत इति प्रकृत्य श्रुतेः ॥ ९८ ॥

महाव्याहृतिभिरेके ॥ ९९ ॥

सा चैव स्वपदविभागा तां हैके एताभिश्च देवताभिरभिषि-ञ्चन्ति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिरिति वचनात् ॥ ९९ ॥

अत्र न ज्ञायते किं व्याहृतिपदं पूर्वं देवतापदेभ्य उतोत्तर-मित्यत आह—

उत्तमेन वा ॥ १०० ॥

उत्तमेन व्याहृतिपदेनाभिषेको न पूर्वेण न चानियमः । कुत एतत् । पाठक्रमात् । तां हैके एताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिरिति ॥ १०० ॥

उन्मर्दनमभिषेके ऽवनीयैके ॥ १०१ ॥

उन्मर्दनं चन्दनादि तदभिषेके ऽवनीयाभिषेकमेके कुर्वन्ति ॥१०१॥

यजमानमालभते कोऽसीति ॥ १०२ ॥

अनेन मन्त्रेण ॥ १०२ ॥

सुश्लोकेत्यालब्धो ह्वयति ॥ १०३ ॥

यथोक्तं भवति यजमानः ॥ १०३ ॥

अङ्गानि चालभते यथालिङ्गं शिरो मे इति प्रतिमन्त्रम् ॥ १०४ ॥

चशब्दाद्यजमान एव यथालिङ्गमङ्गान्यालभते। अत्र चाहित्य-ति क्रियापदाध्याहारः साकाङ्क्षत्वाद्यथायोगं मे इति च पद-स्यानुषङ्गः ॥ १०४ ॥

उद्यच्छन्स्येनं शतरुद्रियवरप्रमाणेषु ॥ १०५ ॥

एनं यजमानं सुश्लोकादय आहूता उत्क्षिपन्ति शतरुद्रियव-श्चानुदमादिषु प्रमाणेषु । कुत एतत् । एष इत्यर्थवादाह्वानस्य भवति । सुश्लोकादिग्रहणं च राजसूयपदेन नामोपलक्षणार्थम् ॥ १०५ ॥

कृष्णाजिने ऽवरोहति प्रतिक्षत्र इति ॥ १०६ ॥

कृष्णाजिने ऽवतरति यजमानः प्रतिक्षत्र इत्यनेन मन्त्रेण ॥१०६॥

त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति यो भूतानामिति ॥१०७॥

त्रयस्त्रिꣳशग्रहणाच्च खुरेण ग्रहणम् ॥ १०७ ॥

आज्यग्रहमाश्वत्थेनैके ॥ १०८ ॥

एक आज्यग्रहमाश्वत्थेन पात्रेण गृह्णन्ति । ततश्चाहवनीय-यजतित्वाद्धुत्वायाः सचषट्कारत्वाच्चतुर्ग्रहणमाप्यायनं च ॥१०८॥

साम प्रेष्यति ॥ १०९ ॥

साम गायेत्येव ब्रूहीति वा । ब्रह्मा गायति ॥ १०९ ॥

ऐन्द्र्यां बृहत्यां गायति ॥ ११० ॥

इन्द्रलिङ्गायां बार्हतेन छन्दसोपेतायामृचि गायति ॥ ११० ॥

सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सर्वे निधनमुपयन्ति ॥ १११ ॥

साजित्यै विजित्यै सत्यजित्यै जित्या इति क्षत्रियस्य ॥ ११२ ॥

निधनम् ॥ ११२ ॥

सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य ॥ ११३ ॥

निधनम् । अन्यङ्गतया तयोरपि प्रापितत्वात्सौत्राम-ण्याम् ॥ ११३ ॥

यथाम्नातं वा सर्वेषाम् ॥ ११४ ॥

सर्वेषगर्णानां यथाम्नातं निधनं भवति । तच्च सहश्रवस इत्येवमादि ॥ ११४ ॥

आस्ते प्रतिगरिष्यन् ॥ ११५ ॥

होतुरग्रत ॥ ११५ ॥

त्रया देवा इति शस्त्रान्ते जुहोति ॥ ११६ ॥

ग्रहम् । तच्चानुवाचनयजप्रैषपूर्वकम् । देवताश्चात्र प्रकृता एव । तथा याज्यानुवाक्ययो तदभिधानं दृश्यते । अश्विना तेजसाऽश्विना पिबतमिति ॥ ११६ ॥

शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा

म इति ॥ ११७ ॥

ग्रहशेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपा म इति अनेन मन्त्रेण ॥ ११७ ॥

प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति ॥ ११८ ॥

अनेन मन्त्रेण ॥ ११८ ॥

स्विष्टकृत्प्रभृत्या बर्हिर्होमात्कृत्वा परिस्रुत्-

क्षीरलिप्तान्यादायावभृथवद्गमनम् ॥ ११९ ॥

स्विष्टकृत्प्रभृतिबर्हिर्होमान्तं कृत्वा परिस्रुतक्षीरलिप्तान्यादायावभृथवद्गच्छति । शूलावभृथेन व्यवधानादवभृथवदित्युच्यते ॥ ११९ ॥

आ शूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्या-

वभृथेष्टेः ॥ १२० ॥ .

शूलाभिमन्त्रणान्तं कर्म कृत्वा उदकाधिष्ठानप्रभृति आ अवभृथेष्टे ॥ १२० ॥

मासरकुम्भं प्लावयति यद्देवा इति ॥ १२१ ॥

अनेन मन्त्रेण ॥ १२१ ॥

पूर्ववन्मज्जनम् ॥ १२२ ॥

मासरकुम्भस्यैवावभृथे निमज्जनम् ॥ १२२ ॥

सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिपिञ्चति द्वौ विक्रमा उदङ्गत्वा ॥ १२३ ॥

सुमित्रिया न इत्यनेन मन्त्रेणापोऽञ्जलिनादाय द्वौ विक्रमा उदङ्गत्वा दुर्मित्रिया इति द्वेष्यं प्रतिपिञ्चति । यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेदिति वचनात् ॥ १२३ ॥

अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवेति ॥ १२४ ॥

अवभृथवत्स्नानग्रहणं वासोपासनार्थम् प्राप्तत्वादेव ॥१२४॥

सोमवदुत्क्रमणं आगमनं च ॥ १२५ ॥

सोमवदेव उद्वयमित्युत्क्रयनं आमहीयजपवदागमनम् ॥१२५॥

आहवनीयमुपतिष्ठते ऽपो अद्येति ॥ १२६ ॥

अनेन मन्त्रेण ॥ १२६ ॥

एधोसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति ॥ १२७ ॥

मूलावभृथसमिदाधानं सौत्रामणिकं च तन्त्रेण कालैकत्वाज्जुहोति ॥ १२७ ॥

जुहोति च समाववर्त्तीति ॥ १२८ ॥

चशब्दाच्छेषपरिसमाप्तिं करोति ॥ १२८ ॥

उदवसाय पयस्या मैत्रावरुणी ॥ १२९ ॥

कर्तव्या। अस्याश्च पूर्वमादित्येष्टिरुक्तैव ॥ १२९ ॥

तदन्ते पशुरिन्द्राय वयोधसे ॥ १३० ॥

तच्छब्देन पयस्या परामृश्यते ॥ १३० ॥

आचार्येण सौत्रामण्यनुविहिता। इदानीमध्वर्युवेदविहितहौत्रव्याख्यानोपन्यासाय न्यायप्रदर्शनायाचार्य आह—

सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात् ॥ १३१ ॥

इह चादित्यपयस्याग्निपशूनामत्रापि सम्भवात्तद्विषयतापि मा भूदिति सौत्रामणीग्रहणम्। प्रयोगवचनैकत्वप्रदर्शनार्थं च। एको हि प्रयोगवचनोऽत्र ऋद्धिकामः सौत्रामण्या यजेतेति। अत्रेष्टिपशवो भिन्नतन्त्रा भवन्ति। कुत एतत्। कालभेदात्। भिन्नो हि कालः। आदित्यं चरुं वक्ष्यमाणो निर्वपति। आदित्यमीजान इति चैवमादि। ननु च प्रयोगवचनैकत्वे राजसूयेन स्वाराज्यकामो यजेतेत्यत्र कालभेदात्तन्त्रभेद उक्तः इष्टिपशवो भिन्नतन्त्राः कालभेदादिति किमर्थं पुनरुच्यते। सत्यमनेदंपरम्। तत्र ह्यनुमत्यादीनां कालैक्ये तन्त्रभेदोऽभिहितः इह पुनस्तथा नेति। इह यागविशेषाणां सौत्रामणीसम्बन्धितानामृद्धिकाम सौत्रामण्या यजेतेति फलसम्बन्ध तत्सन्निधानादितरथा तदङ्गेनेति पशव्यादङ्गेनोच्यते। अङ्गानां प्रधानानां च प्रयोगवचनैकत्वादेकतन्त्रता मा भूदित्युच्यते। ननु च ज्योतिष्टोमवदेकतन्त्रता कस्मान्न भवत्यङ्गानां प्रधानानां च। नेत्युच्यते। तत्र हि ऋत्विग्वरणदेवयजनजापनादीनामुत्तरकाल दीक्षणीयादि विधानम्। इह पुरोडाशादीनामङ्गत्वेपि सति कालभेदात्तन्त्रभेद इति न दुष्टम् ॥ १३१ ॥

सप्तदशसामिधेन्यः ॥ १३२ ॥

अत्र भवन्ति । अनारभ्य समधीतं साप्तदश्यं प्रकृतितः पाञ्चद-
श्येनोत्कालितम् यत्र यत्र श्रूयते तत्र तत्र भवति ॥ १३२ ॥

वार्त्रघ्नावाज्यभागौ ॥ १३३ ॥

अत्र भवत ॥ १३३ ॥

वृधन्वन्तौ वा पशुसान्नाय्यविकारात् ॥ १३४ ॥

पशुषु यस्याज्यभागौ तस्य वृधन्वन्तौ भवतः । पशुषु पयो म-
हा भवन्ति । तेषां सान्नाय्यविकारादूवृधन्वन्तौ भवतः ॥ १३४ ॥

आमिक्षायां च ॥ १३५ ॥

वृधन्वन्ताविव । सान्नाय्यविकारत्वात् । अध्वस्तनसूत्रे पशुष्वि-
ति विशेषितत्वादामिक्षायामप्राप्तिर्मा भूदिति भेदेन ग्रहणम् ॥१३५॥

उपांशुदेवतेष्टिषु ॥ १३६ ॥

भवतीति वाक्यशेषश्च ॥ १३६ ॥

विराजौ संयाज्ये अविशेषोपदेशात् ॥ १३७ ॥

संयाज्याशब्देन स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये उच्य-
ते । ते च प्रेद्धो अग्न इमो अग्न इति । अविशेषेण हि सौत्रामणीं प्र-
कृत्य विराजौ संयाज्य इति समाम्नायते ॥ १३७ ॥

वसिष्ठशुनकानां नाराशंसः ॥ १३८ ॥

वसिष्ठानां शुनकानां च नाराशंसो द्वितीयः प्रयाजो
भवति ॥ १३८ ॥

अत्रीणां चैके ॥ १३९ ॥

द्वितीयं नाराशंसमिच्छन्ति । एके तनूनपातम् ॥ १३९ ॥

प्राकृताः प्रथमोत्तमयोः प्रयाजानुयाजप्रैषाः॥१४०॥

चोदकप्राप्त्या भवन्ति ॥ १४० ॥

ऐन्द्राग्नेके प्रथमस्य वायोधसानुत्तमस्य ॥१४१॥

तत्कुतो लिङ्गात् । होता यक्षत्समिन्धेद्रमिडस्पद इत्येवमादि । तत्पुनर्यर्हिः प्रकरणात्पाठे सति लिङ्ग विनियोजकमिति पर्यालोचनीयम् ॥ १४१ ॥

समिद्ध इन्द्र इत्याप्रियः प्रथमस्य ॥१४२॥

आप्रियाः प्रयाजयाज्याः समिद्ध इन्द्र इति प्रथमस्य पशोर्भवति ॥ १४२ ॥

याज्यानुवाक्याश्च वपापुरोडाशपशूनामाया-
त्विन्द्र इति ॥ १४३ ॥

चशब्दात्प्रथमस्य भवन्ति ॥ १४३ ॥

होता यक्षत्समिधाग्निमिति प्रयाजप्रैषा-
स्त्रिपशोः ॥ १४४ ॥

भवन्ति ॥ १४४ ॥

आप्रियश्च समिद्धो अग्निरश्विनेति ॥ १४५ ॥

चशब्दात्त्रिपशोरेव ॥ १४५ ॥

आश्विनाहविरिति तिस्रो वपानां या-
ज्यानुवाक्याः ॥ १४६ ॥

भवन्ति ॥ १४६ ॥

प्रथमामनूच्य द्वितीया याज्या द्वितीयाम-
नूच्य तृतीया याज्या तृतीयामनूच्य प्रथमा
याज्या ॥ १४७ ॥

सर्वाः पुरोनुवाक्या भवन्ति सर्वा याज्या इति श्रुतेः । तथा सर्वा. प्रथमा भवन्ति सर्वा मध्यमा. सर्वा उत्तमा इति ॥ १४७ ॥

य इन्द्र इति पुरोडाशानां पूर्ववत् ॥ १४८ ॥

पूर्वच्छब्देन प्रथमामनूच्येत्येवमादि लभ्यते ॥ १४८ ॥

आश्विना गोभिरिति च हविषाम् ॥ १४९ ॥

चशब्दात्पूर्ववद्याज्यानुवाक्याः ॥ १४९ ॥

ग्रहाणां युवं सुरामं पुत्रमिवेति ॥ १५० ॥

याज्यानुवाक्ये भवत ॥ १५० ॥

पशुस्विष्टकृतो यस्मिन्नश्वास ऋषभा इति ॥ १५१ ॥

याज्यानुवाक्ये ॥ १५१ ॥

होता यक्षदश्विनाविति त्रयो वपानां प्रैषा यथालिङ्गम् ॥ १५२ ॥

प्रैषा भवन्ति ॥ १५२ ॥

ग्रहाणां चतुर्थः ॥ १५३ ॥

प्रैषो भवति ॥ १५३ ॥

हविषामुत्तरे यथालिङ्गम् ॥ १५४ ॥

प्रैषा भवन्ति ॥ १५४ ॥

उत्तमौ वनस्पतिस्विष्टकृतोः ॥ १५५ ॥

यथालिङ्गमेव भवतः ॥ १५५ ॥

प्रतिगरिष्यत्युपविष्टेऽध्वर्यो शोंसावेत्याह्वया-

श्विना तेजसेत्यनुवाकं शंसति ॥ १५६ ॥

केचिदुपविष्ट ऽध्वर्यावित्ति पठन्ति । तेषां सोऽसाविलेताश्चा-नेयाह्राव. अश्विना तेजसेत्येतमनुवाकं शंसति ॥ १५६ ॥

त्रिःप्रथमान्त्ये ॥ १५७ ॥

प्रथमान्त्ये च त्रिः शंसति ॥ १५७ ॥

त्रिचादिष्वाहूय ॥ १५८ ॥

त्रिचस्य त्रिचस्यादौ आहाव कुर्यात ॥ १५८ ॥

उत्तमां शिष्ट्वा प्राङ्नवम्या दशम्या वा त्रया देवा इति निविल्सक्तदशावसानोङ्कारः ॥ १५९ ॥

उत्तमायां ऋच. प्राक् नवम्या वा दशम्या वा निविल्सक्त-दशावसाना शस्यते । अवसाने ओङ्कारो भवन्ति ॥ १५९ ॥

ऋगन्तेऽन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ॥ १६० ॥

ऋचो यदन्त्यमक्षरं तस्य प्रणवे परमावस्थिते स्वरप्रभृति लुप्यत इत्यर्थ. । इन्द्राय दधुरिन्द्रिय इत्यत्र शमित्यस्य लोप. । एवं सर्वत्र ॥ १६० ॥

तस्मिन्प्रणवान्तं चैके ॥ १६१ ॥

तस्मिन्नेव प्रणवे चैके ऽन्त्यमपि लुम्पन्ति । तत्र मकारो लुप्यते । ओ इत्येतावानेव प्रणवो भवति ॥ १६१ ॥

अश्विना तेजसाश्विना पिबतामिति याज्यानुवाक्ये सहस्रस्य ॥ १६२ ॥

सहस्रस्य महस्य अश्विना तेजसा अश्विना पिबतामिति याज्यानुवाक्ये भवत । अनयोश्च ऋचोरपि निवृत्तस्याच्छस्य अप्रयोगो मा भूदिति अनुवाक्यमहणमभरतास्त्वतम् ॥ १६२ ॥

१अनुवाचनप्रैषौ समस्या ऽनुयाजप्रैषा देवं बर्हिरिति ॥ १६३ ॥

याज्याश्च ॥ १६४ ॥

त एव ॥ १६४ ॥

अग्निमद्येति सूक्तवाकप्रैषः ॥ १६५ ॥

भवति ॥ १६५ ॥

प्राकृतं, सूक्तवाकप्रभृति प्रागवभृथेष्टेः ॥ १६६ ॥

अनुक्तं च ॥ १६७ ॥

२यच्चान्ययेन होतुः प्राप्नोति तदप्यत्रैव भवत्येव ॥ १६७ ॥

इमं मे तत्त्वेत्येककपालस्य ॥ १६८ ॥

याज्यानुवाक्ये भवतः ॥ १६८ ॥

अग्नीवरुणयोस्त्वन्नः स त्वमिति ॥ १६९ ॥

याज्यानुवाक्ये ॥ १६९ ॥

आदित्यस्य सुत्रामाणं महीमूषु मातरमिति ॥ १७० ॥

आ नः वाह्वेति पयस्यायाः ॥ १७१ ॥

वाजिनस्य शन्नो वाजे वाज इति ॥ १७२ ॥

अथ तु विशेषः—

अनवानं याज्या ॥ १७३ ॥

---

१ अनुवाचनप्रैषौ समस्य कर्तव्यौ। अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीत्येवम्। देवं बर्हिः सरस्वती त्रिपशोः।

२ तच्च प्रयाजयाज्यानुवाचनाग्निमन्थनीयामनोतायूपाञ्जनोदूयणादि।

वायोधसाप्रियः समिद्धो अग्निः समिधेति ॥१७४॥

वायोधसस्य पशोराप्रियः प्रयाजयाज्याः समिद्धो अग्निः समिधेत्येता भवन्ति ॥ १७४ ॥

याज्यानुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुनेति ॥ १७५ ॥

वपाद्यावायोधसस्यैव ॥ १७५ ॥

इति उपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये एकोनविंशतिमो ऽध्यायः समाप्तः ।



# विंशोऽध्यायः ।

सौत्रामणीविधानसमनन्तरं श्रुतिमन्त्रपाठावसरप्राप्तो ऽश्वमेधो ऽनुविधीयते ।

राजयज्ञो ऽश्वमेधः सर्वकामस्य ॥ १ ॥

राजशब्दोऽभिषेकवति क्षत्रिये वर्तत इत्युक्तम् प्रदेशान्तरे । तथा च क्षत्रिययज्ञ उ वा एष यदश्वमेधः तस्माद्राष्ट्र्यश्वमेधेन यजेतेति । राज्ञो यज्ञः राजयज्ञः । न ब्राह्मणवैश्ययोरिति । अश्वमेध इति क्रियाभस्य यज्ञक्रतोर्नामधेयम् । स सर्वकामस्य भवति । सर्वकामावाप्तिश्च परमात्मप्राप्त्य सत्यप्राप्तिमन्तरेण न भवति यावच्छरीरकालभाविनो हि कामा इति । तेन सर्वकामस्येति मुमुक्षोरित्येतदुक्तं भवति । तथा चाह सर्वान्ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजत इति ॥ १ ॥

अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥२॥

फाल्गुनशुक्लपक्षेऽष्टम्यां नवम्यां वा प्रारम्भः । सा यासौ फाल्गुनी पौर्णमासी भवतीति प्रकृत्य तस्यै पुरस्तात्षडहे वा सप्ताहे वा ऋत्विज उपसमायन्तीति श्रुतेः ॥ २ ॥

ग्रीष्म एके ॥ ३ ॥

आरम्भं कुर्वन्ति । श्रुतेरेव ॥ ३ ॥

ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलिप्रसृतानां च ॥ ४ ॥

चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः प्रसृतानीति श्रुतेः ॥ ४ ॥

अक्तस्यैनमार्त्विग्भ्यः प्रयच्छति ॥ ५ ॥

अक्त्वैतमोदनमार्त्विग्भ्य समर्पयति ॥ ५ ॥

तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च

तावतः ॥ ६ ॥

चत्वारि गोसहस्राणि चत्वारि च सुवर्णरक्तिकाशतानि ऋत्विग्भ्यो ददाति ॥ ६ ॥

अक्त्वाज्यशेषेण रशनां द्वादशारत्निं त्रयोद-

शारत्निं वा निदधाति ॥ ७ ॥

ब्रह्मौदनाभिसिक्ताज्यशेषेण ॥ ७ ॥

आदानकाले वाञ्जनम् ॥ ८ ॥

कार्यार्थत्वात् । एव चाज्यशेष स्याद्यते । वाशब्दोऽवधारणार्थं ॥ ८ ॥

निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति ॥ ९ ॥

चतु सौवर्णिक निष्कमाभरणविशेष यजमाने प्रतिमुञ्चन्वाचयति तेजोऽसीत्यमु मन्त्रम ॥ ९ ॥

वाचं यच्छेति चाह ॥ १० ॥

चशब्दादनन्तरम ॥ १० ॥

आ वरदानाद्वाग्यमनम् ॥ ११ ॥

भवति ॥ ११ ॥

पत्न्यश्चायन्त्यलङ्कृता निष्किण्यो महिषी [1]वावाता [2]परिवृक्ता [3]पालागली सानुचर्यः शतेन शतेन ॥ १२ ॥

---

१ यत्नुमा । २ भयत्नुमा । ३ दूतपुत्री ।

चतस्रो जाया उपक्लृप्ता भवन्तीति प्रकृत्य श्रुतत्वात् । ताश्च सहानुचरीभिरायन्ति शतेन शतेन ॥ १२ ॥

ता विशेषयति—

राजदुहितरः प्रथमायाः ॥ १३ ॥

अनुचर्यः ॥ १३ ॥

राजन्यानां द्वितीयायाः ॥ १४ ॥

पत्न्याः राजन्यदुहितरोऽनुचर्यः ॥ १४ ॥

सूतग्रामण्यां तृतीयायाः ॥ १५ ॥

सूतः सङ्करजातः ग्रामणीर्महत्तरः । तयोर्दुहितरस्तृतीयाया अनुचर्यः ॥ १५ ॥

क्षत्तसंग्रहीतॄणां चतुर्थ्याः ॥ १६ ॥

पत्न्याः अनुचर्यो भवन्ति । क्षत्ता प्रतीहारो दूतो वा, सङ्ग्रहीता च सारथिः ॥ १६ ॥

अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रे परेण गार्हपत्यमुदक्शिराः संविशति ॥ १७ ॥

आग्न्याधेयवदिति पूर्वया द्वारा यजमानो दक्षिणा पत्न्य इत्युक्तं भवति । हुते ऽग्निहोत्रे गार्हपत्यमपरेणोदक्शिराः संविशति यजमानः ॥ १७ ॥

उर्वन्तरे वावातायाः ब्रह्मचारी ॥ १८ ॥

वावाताया उर्वन्तरे ब्रह्मचारी भवति ॥ १८ ॥

इतराश्चान्वक् ॥ १९ ॥

इतराश्च पत्न्यो यजमानमनुसंविशन्ति ॥ १९ ॥

प्रातराहुत्यां हुतायां पूर्णाहुत्यन्ते वरदानं

ब्रह्मणे ॥ २० ॥

प्रातराहुत्यन्ते पूर्णाहुत्यां हुतायां ब्रह्मणे यत्कन्ददाति ॥ २० ॥

अध्वर्यवे च प्रतिमुक्तं निष्कम् ॥ २१ ॥

चशब्दाद्ददाति ॥ २१ ॥

पुरोडाशोऽग्नये पथिकृते ॥ २२ ॥

कर्तव्य. । स चोपांशुर्भवति ॥ २२ ॥

शतमानं दक्षिणा सौवर्णम् ॥ २३ ॥

शतसंख्यामितं सुवर्णम् । तथावमया मात्रया मितं भवति । अवमा च मात्रा रक्तिका ॥ २३ ॥

हिरण्यपरिमाणे ऽन्यत्रापि ॥ २४ ॥

हिरण्यपरिमाणे सूत्रेऽन्यत्रापि दाक्षायणादौ शतमानमेव भवति । अपरे तु वर्णयन्ति । शतमाने श्रूयमाणे सौवर्णो भवति न राजतमिति ॥ २४ ॥

पौष्णं चरुं निर्वपति वासःशतं दक्षिणा ॥ २५ ॥

तस्य च वाससां शतं दक्षिणा । अयमप्युपांश्वेव ॥ २५ ॥

देवस्य त्वेति रशनामादाय ब्रह्मन्नश्वं मन्त्स्यामीत्याह ॥ २६ ॥

ब्रह्मोदनाउपदेशेन रशनामन्त्या दानम् । तेन रशनामभ्यन्यादत्त इति श्रुतेः ॥ २६ ॥

तं बधानेति ब्रह्मणानुज्ञातोऽभिधा असीति यज्ञाश्वं त्रिरूपम् ॥ २७ ॥

रूपशब्दो वर्णवाची । त्रिवर्णमित्यर्थः । त्रिरूप एवैषोऽश्वः स्यादिति वचनात् ॥ २७ ॥

सर्वरूपं वा ॥ २८ ॥

वा विकल्पार्थः । यस्मिन्सर्वाणि रूपाणि भवन्तीति श्रुतेः॥२८॥

शीघ्रम् ॥ २९ ॥

प्रसिद्धमेव ॥ २९ ॥

दक्षिणधुर्यंतमम् ॥ ३० ॥

दक्षिणेन धुर्येण तुल्यमित्यर्थः । अथवा यो दक्षिणस्यां धुरि असामान्येन तत उत्कृष्टतर इत्यर्थः ॥ ३० ॥

साहस्रम् ॥ ३१ ॥

गोसहस्राईम ॥ ३१ ॥

ललामम् ॥ ३२ ॥

नीलीपौण्ड्रकम ॥ ३२ ॥

कृतिकाञ्जि वा ॥ ३३ ॥

कृत्तिकाशकटमिवयस्य ललाटे पौण्ड्राणि । अत्र येषां वर्णाना-मविरोधस्ते समुच्चीयन्ते । येषां विरोधस्ते आम्नानसामर्थ्यात् विकल्प्यन्ते ॥ ३३ ॥

पूर्वकायकृष्णः शुक्लापरम् ॥ ३४ ॥

तस्य कृष्णः पूर्वार्धः शुक्लोऽपरार्ध इति श्रुतेः ॥ ३४ ॥

कृष्णसारङ्गं वा ॥ ३५ ॥

कृष्णवर्णसहितान्यवर्णम ॥ ३५ ॥

स्थावरा अपो गत्वा प्रजापतये त्वेति

प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥ ३६ ॥

या न वहन्ति ता स्थावरा आपः ता गत्वा प्राजापतये त्वेति प्रतिमन्त्रमश्वं प्रोक्षति ॥ ३६ ॥

आयोगवमाह श्वानं चतुरक्षमभिमन्यस्वेति ॥३७॥

आयोगवः सद्रुरजात. वैश्यायां शूद्रेण जातः तमाह श्वानं चतुरक्षमभिमन्यस्वेत्येवम् । चतुरक्षश्वाभावाद्यस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्षः ॥ ३७ ॥

पुँश्चलूमेके ॥ ३८ ॥

श्वानं चतुरक्षमभिमन्यस्वेत्येवमाहुः । पुंश्चलू स्त्रीलोलुप उच्यते ॥ ३८ ॥

सिध्रकमुसलेनैनं हन्ति ॥ ३९ ॥

एवं प्रेषितस्सन् सिध्रकमुसलेनैनं श्वानं हन्ति ॥ ३९ ॥

यो अर्वन्तमिति वाचयति ॥ ४० ॥

यो अर्वन्तमित्यमुं मन्त्रं वाचयति ॥ ४० ॥

वैतसकटेनाधोऽश्वं प्लावयति परो मर्त इति ॥४१॥

वैतसकटेनाश्वस्याधस्तात् प्लावयति परो मर्त इत्यनेन मन्त्रेण ॥ ४१ ॥

अग्निसमीपमानीयाऽग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥ ४२ ॥

अग्निसमीपमानीयाश्वम् । अनुवाकेन जुहोति प्रतिमन्त्रम् अग्नये स्वाहेत्येवं ॥ ४२ ॥

सहस्रं वांत्रतम् ॥ ४३ ॥

सहस्रं वा हुतीनां जुहोत्यनुवाकमावर्त्यावर्त्य । आपरर्यसहस्रं जुहोतीति वचनात् ॥ ४३ ॥

आश्वस्त्रवणविरमणाद्वा ॥ ४४ ॥

जुहोति । वाशब्दो विकल्पार्थ ॥ ४४ ॥

द्वादशकपालान्निर्वपति भिन्नतन्त्राञ्छतमानदक्षिणान्मध्यमस्य राजतः सवित्रे प्रसवित्रे सवित्र आसवित्रे सवित्रे सत्यप्रसवायेति ॥ ४५ ॥

कालैक्यात्तन्त्रैक्य मा भूदिति भिन्नतन्त्रानित्युक्तम् । मध्यमस्य राजत शतमानो दक्षिणा इतरयो सौवर्ण ॥ ४५ ॥

प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वय कृतास्तिस्रो गायत्युत्तरमन्द्रायाम् ॥ ४६ ॥

उत्तरमन्द्रा च गायनप्रसिद्धा । वीणासङ्गत च गानम् । वीणागाथीति श्रुते । प्रयाजेषु तायमानेषु दक्षिणतो व्यवस्थितो ब्राह्मण, ब्राह्मणग्रहणादृत्विग्व्यतिरिक्त, यजमानस्य गाथा गायत्युत्तरमन्द्रायाम । यज्ञदानयुक्ता स्वय कृता एव तिस्रा गाथा एव गायति उत्तरमन्द्राया वीणागाथी स्वय कृता ॥ ४६ ॥

राजन्यो धृतिषु युद्धजपयुक्ता. ॥ ४७ ॥

गाथा गायत्युत्तरमन्द्रायाम वीणागाथी स्वय कृता युद्धजयुक्ता ॥ ४७ ॥

अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति ॥ ४८ ॥

अमु मन्त्रम ॥ ४८ ॥

पशुवदुत्सर्जनं निरष्टेऽश्वशते ॥ ४९ ॥

पशुवदित्युत्तरपूर्वा दिग्लभ्यते । निरष्टे निरस्तणे वृद्धया श्वयते ॥ ४९ ॥

१देवा आशापाला इति रक्षिणो ऽस्यादिश-

त्यनुचरीजातीयांस्तावतस्तावतः कवचिनि-

षङ्गिकलापिदण्डिनो यथासंख्यम् ॥ ५० ॥

एवं हि श्रूयते राजपुत्राः कवचिनः शतमित्येवमादि ॥ ५० ॥

वडवाभ्यो वारणम् ॥ ५१ ॥

अश्वस्य ॥ ५१ ॥

२प्रस्नेयाच्चोदकात् ॥ ५२ ॥

इदानीं रक्षितॄणां वृत्तिमाह—

ब्राह्मणोऽश्वमेध ऽविद्वान्क्वृत्तिः स च ॥ ५३ ॥

अश्वमेधानभिज्ञो ब्राह्मणो यो वृत्तिः । तामेव हि प्रकृत्य श्रूयते स पात्र करपाय स्यादिव पाप्नोति ॥ ५३ ॥

पक्वान्नं च सर्वेषु ॥ ५४ ॥

अश्वमेधविदत्स्वपि ॥ ५४ ॥

रथकारगृहवासाश्च ॥ ५५ ॥

रथकारकुल एव यो वसतिरिति ॥ ५५ ॥

अभिषेक्या भविष्यत समाप्नुवन्तं इत्याह

---

१ उत्सृष्टस्याश्वस्य रक्षिणः पुत्रान् अध्वर्युर्देवा आशापाला इति मन्त्रेणादिशति शतं राजन्यपुत्रान्, सूतग्रामण्यां पुत्रान् शतं क्षात्त्रसङ्ग्रहीतॄणां पुत्रान् । सन्नाहयन्तः कवचिनः, खड्गधारिणो निषङ्गिनः, शराधानमस्यास्यन्त कलापिनः, यष्ट्यादिधारिणो दण्डिनः ।

२ प्रस्नेया स्नानार्हाः ।

राजपुत्रान् ॥ ५६ ॥

नेतरान् ॥ ५६ ॥

दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥ ५७ ॥

सम्प्रत्यभावादुभूतकालीना वेदि ॥ ५७ ॥
तेषां विशेषमाह—

अध्वर्युयजमानौ १कूर्चयोः ॥ ५८ ॥

सौवर्णयो ॥ ५८ ॥

२फलकयोर्वा ॥ ५९ ॥

होतृब्रह्मोद्गातारः कशिपुषु ॥ ६० ॥

कशिपुशब्देन मसूरक उच्यते ॥ ६० ॥

होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति ॥ ६१ ॥

पारिप्लवं प्रेष्यति ॥ ६२ ॥

पारिप्लवमृग्वन्द्वमाख्यानम् तस्मिन्वक्ष्यमाणे ॥ ६२ ॥

हवै होतरिति प्रतिगृणाति तदन्ते प्रेष्यति ३वीणागणगिनो राजर्षिभिर्यजमानं सङ्गायतेति ॥ ६३ ॥

वीणागणगिन उपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यतीति श्रुते ॥ ६३ ॥

---

१ सपादमासन कूर्चः ।

२ पादरहितमासन फलकम् ।

३ वीणानामलाबुवीणा त्रितन्त्रिः सप्ततन्त्रिः इत्यादीनां गणो वीणागण, तत्र ये गायन्ति ते वीणागणगाः, ते सन्ति शिष्या येषां गायनाचार्याणां ते वीणागणगिनः । राजर्षिभिरुपमानभूतैः सहोपमेयभूतं यजमानं सङ्गायतेति प्रैषार्थः ।

दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमात् ॥ ६४ ॥

हिङ्काराय स्वाहेत्येभिर्मन्त्रैः प्रतिमन्त्रम् प्रक्रमसंज्ञकान् होमान् दक्षिणाग्नौ जुहोति ॥ ६४ ॥

आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति ॥ ६५ ॥

जुहोतीत्यनुवर्तते । चतस्र इति ग्रहणं मन्त्रविवेकार्थम् । आहवनीयग्रहणमविकृतदक्षिणाग्निव्युदासार्थम् ॥ ६५ ॥

वाग्रातासम्वेशनसावित्र्युत्तरमन्द्रागानपारिप्लवधृतीः सम्वत्सरम् ॥ ६६ ॥

वावातासम्वेशनसवित्रीणां चान्द्रमसः सम्वत्सरः तेन हि सर्वत्र व्यवहारः । पारिप्लवधृतीनां तु सावनः । एवं हि श्रूयते पारिप्लव प्रकृत्य षड्विंशतं दशाहानाचष्ट इति । श्रुतिषु च षोडशनवतीरेता वा अश्वस्य बन्धनमिति । इयं च सख्या सावन एव संवत्सरे घटते न चान्द्रमस इति ॥ ६६ ॥

अर्धमासमासत्रैमास्यषण्मास्यानि चैके ॥ ६७ ॥

वावातासवेशनादीनि कुर्वन्ति वाचान्तरात् । अस्मिंश्च पक्षे मासाविरोधेनोपक्रमः कार्यः ॥ ६७ ॥

वीणागाथिभ्यां पृथक् शते ददाति ॥ ६८ ॥

शतं शतं ददातीत्यर्थः ॥ ६८ ॥

राजर्षिभिः सङ्गायनमा दीक्षणीयायाः ॥ ६९ ॥

कर्तव्य ॥ ६९ ॥

दीक्षान्ते देवैरीपसध्यात् ॥ ७० ॥

दीक्षणीयायां संस्थितायां सायं वाचि विसृष्टायामिति प्रकृत्याह देवैरिमं यजमानं सङ्गायेति ॥ ७० ॥

पश्चादौ प्रजापतिना सुत्यासु ॥ ७१ ॥

सुत्यासु पश्चादौ प्रजापतिनेमं यजमानं सङ्गायतेति प्रैषः ॥ ७१ ॥

अन्ते च ॥ ७२ ॥

एवमेव प्रेषणम् । अन्तग्रहणेनोदवसानीयान्त उच्यते । उदवसानीयायामन्ततः संस्थितायामिति श्रुतेः । एवमेवाहरहः परिक्रान्तास्वेव वसतीवरीष्वपि तदन्तग्रहणेन सूचितम् ॥ ७२ ॥

अश्वापदीऽष्या चरुभिः सावित्र्यन्ते ॥ ७३ ॥

तत्कालता मा भूदिति सावित्र्यन्तग्रहणम् ॥ ७३ ॥

पौष्णः स्रामे ॥ ७४ ॥

स्रामः सिंहाणक उच्यते ॥ ७४ ॥

सौर्यो ऽक्ष्यामये ॥ ७५ ॥

अक्षिरोगे ॥ ७५ ॥

वारुणोऽप्सु मृते ॥ ७६ ॥

एषमयो भवतीत्युक्तमेव ॥ ७६ ॥

भूमिकपालो वैश्वानरोऽरिष्टत्रामये ॥ ७७ ॥

अरिष्टरोगे द्रोण्यामये[1] ॥ ७७ ॥

[2]लोष्टकपालं जातुकर्ण्यो भेदात् ॥ ७८ ॥

एवं हि श्रूयते वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडा-

---

१ द्रोण्यामयो हस्तनामय उच्यते ।
२ लोष्टा एव कपालानि यस्यासौ ।

यमनुनिर्वपतीति। तत्पुनरनुपपन्नम्। येनात्र वैश्वानरो द्वादशकपालो नूद्यते। यो वैश्वानरो द्वादशकपालः स भूमिकपालः कर्तव्य इति। द्वादशकपालताया भूमिकपालतायाश्चासम्भवात्। लोष्टकपालत्वे च भूमिकपालतानुपपत्तिरेव। तस्माद्भूमिकपाल एवेति सम्प्रदायः॥ ७८॥

नाशे तन्त्रेण द्यावापृथिव्यः पयो वायव्यः सौर्यः॥ ७९॥

तन्त्रेशब्दस्तन्त्रैकयार्थ इति केचित्। तत्पुनरनुपपन्नम्। कालाद्यभेदादिना प्राप्तत्वात्। तस्माद्वैश्वदेविकमत्र तन्त्रं यथा स्यादिति। ननु च वैश्वदेविकप्रकृतित्वेन प्राप्तमेव तत्। नेत्युच्यते। वायव्यसौर्याभ्यां न हि नवप्रयाजतादिर्विधिरुच्यते। अतस्तत्प्राप्त्यर्थं तन्त्रेणेति वचनम्॥ ७९॥

अन्यत्रापि॥ ८०॥

अन्यस्मिन्नपि नष्टे द्रव्ये इयमिष्टिर्भवति। स यद्यस्याप्यन्यन्नश्येदेतयैव यजेतेति। अस्यति च प्रहृत्यात्प्रकरणादूयहिने भवति॥८०॥

प्रजापते वायव्यम्॥ ८१॥

यद्यश्वो वडवाः स्कन्देद्वायव्यं पयोऽनुनिर्वपेदिति वचनात्॥ ८१॥

मृतदर्शनयोरन्यस्य रशनादानादि करोत्यश्वयुक्तम्॥ ८२॥

मृते चाऽदर्शने च रशनादानाद्यन्यस्याश्वयुक्तं कर्तव्यम्। अश्वहननं तु न भवत्यश्वयोगाभावात्। अग्नये स्वाहेति चानुवाकेन होम। प्रक्रमपूर्तिहोमोपीति चेत्। नाश्वसम्बन्धात्। अश्वमस्बन्धो हि भवति। हिङ्काराय स्वाहेत्येवमादिप्रक्रमाणां धृतिहोमानामपि पाठवचनवतीरेता या अश्वस्य बन्धनमिति। अन्यरशनादानादि करोतीत्यर्थः। प्राप्तत्वादवाच्यमेतदिति चेत्। स्यात्प्रायश्चित्तव्युदासार्थ-

स्यात् । तत्कुतः । अथान्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिरिति वचनात् ॥ ८२ ॥

पश्चालम्भनाद्याऽऽध्वरदीक्षणीयायाः कृत्वा चत्वार्यौद्ग्रभणानि जुहोत्यध्वरिकाणि ॥८३॥

पश्चालम्भनं च पौर्णमास्यामेव । तदाद्यध्वरदीक्षणीयान्तं च । यत्कारणं द्वादशाहचोदकानुग्रहेण पञ्चामाग्निके च सप्तम्यां निर्वपतीति भवति ॥ ८३ ॥

काय स्वाहेति चाश्वमेधिकानि त्रीणि ॥ ८४ ॥

औद्ग्रभणानि जुहोतीति वर्तते ॥ ८४ ॥

कृष्णाजिनदीक्षातः ॥ ८५ ॥

अतोऽनन्तरं कृष्णाजिनदीक्षा ॥ ८५ ॥

अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि कृष्णाजिनान्तमन्वहम् ॥८६॥

अध्वरदीक्षणीयाया आग्नावैष्णवस्य चत्वार्यौद्ग्रभणानि त्रीणि आश्वमेधिकानि जुहुयात्परिपाट्या कृष्णाजिनान्तमन्वहं कर्तव्यम् ॥ ८६ ॥

प्राकृतव्रतो ऽकृतत्वात् ॥ ८७ ॥

सप्ताह दीक्षणीयाप्रचारे प्राकृतमेव व्रतं भवति । कुत एतद् कृतत्वाद्दीक्षासंस्कारस्य । दण्डान्तेन हि दीक्षितो भवति ॥ ८७ ॥

आग्निके च सप्तम्यां निर्वपति ॥ ८८ ॥

आग्निके च हविषी सप्तम्यामिष्ट्यां निर्वपति । ते च वैश्वानरो घृते चरुरादित्येभ्य इति ॥ ८८ ॥

अभ्यञ्जनप्रभृति करोति ॥ ८९ ॥

इडाभ्यञ्जनविधानात्पूर्वं न भवतीति गम्यते ॥ ८९ ॥

षडाग्निकानि चतुःस्थाने ॥ ९० ॥

चतुर्णामौद्ग्रभणानामाध्वरिकाणां स्थाने षडाग्निकानि जुहुयात् त्रीणि चाश्वमेधिकानि ॥ ९० ॥

दशमं विभ्वो देवस्येति ॥ ९१ ॥

जुहोति ॥ ९१ ॥

कृष्णाजिनाद्या समिदाधानात्कृत्वा ऽऽब्रह्मन्निति जपति ॥ ९२ ॥

उत्सर्गकाल एके ॥ ९३ ॥

आब्रह्मन्निति जपमिच्छन्ति । ततश्च विकल्पः ॥ ९३ ॥

दीक्षा द्वादशोपसदश्च ॥ ९४ ॥

किमर्थमिदमुच्यते । अत्र हि पक्षे महाधनमुत्तमं भवति । अहीनानां च व्रतवतां सर्वजिद्दीक्षात्वमुक्तम् । तन्मा भूदिति द्वादशदीक्षा ग्रहणम् । श्रूयते चात्र द्वादशदीक्षा द्वादशोपसदस्तिस्रः सुत्या इति ॥ ९४ ॥

नित्योदकं देवयजनं पुरस्तात् ॥ ९५ ॥

नित्यं सर्वदाऽऽप्युदकं यत्र तद्देवयजनमध्यवसेयम् ॥ ९५ ॥

आग्नेर्निर्द्विगुणस्त्रिगुण एकविꣳशतिविधो वा ॥ ९६ ॥

शाखान्तरादिविकल्पः ॥ ९६ ॥

एकादशिनीवदेकविꣳशतिर्यूपाः ॥ ९७ ॥

भवन्तीति शेषः । एकादशिनीवदिति किमर्थमुच्यते प्रासस्यादेव द्वे स्थेषेते एकादशिन्यामालभेतेति मा भूदक्रियाभ्यस्यासेन च मानार्थमेकादशिनीति ॥ ९७ ॥

१रज्जुदालो मध्ये ॥ ९८ ॥

भवति ॥ ९८ ॥

अभितः२ पैतुदारवौ ॥ ९९ ॥

भवत ॥ ९९ ॥

षट्षड्बैल्वखादिरपालाशाः ॥ १०० ॥

यूपा भवन्ति ॥ १०० ॥

त्रयस्त्रयोऽभितः ॥ १०१ ॥

त्रय इत्या इति वचनात् ॥ १०१ ॥

प्रतियूपमग्नीषोमीयाः ॥ १०२ ॥

पशवो नियुज्यन्ते । ते च दक्षिणयूपादारभ्य वचनसामर्थ्या-
त् । अतश्चैकादशिनीषुक्तेपि सर्वेषामेवोच्छ्रयणम् ॥ १०२ ॥

प्रातरग्निष्टोमः ॥ १०३ ॥

भवति ॥ १०३ ॥

एकादशिन्यौ सवनीयाः पशवो भवन्ति ॥ १०४ ॥

द्वे त्वेवैते एकादशिन्यावालभेतेति श्रुते ॥ १०४ ॥

तत्र च—

मध्यम आग्नेयौ ॥ १०५ ॥

नियुज्येते द्वेधा व्यत्यासेन ॥ १०५ ॥

उत्तरयोश्च ॥ १०६ ॥

अन्होरेकादशिन्यावालभेत ॥ १०६ ॥

---

१ रज्जुदाल श्लेष्मातक ।
२ पैतुदारुर्देवदारु ।

उत्तमे गावो बहुरूपाः ॥ १०७ ॥

नालभ्यन्ते ॥ १०७ ॥

विजयमध्याद्धोतुः प्राची दिक् दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची ॥ १०८ ॥

विजयमध्यात्प्राच्यान्दिशि यद्युत्पन्नं द्रव्यं तद्धोतुर्दीयते दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः ॥ १०८ ॥

तृतीयं तृतीयमन्वहं ददाति भूमिपुरुषब्राह्मणस्वत्रर्जम् ॥ १०९ ॥

आधार्त्विकमतिपुरुषाणां च तत एव चोदकानुरूपो विभागः । अथातो दक्षिणानामिति प्रकृत्य सर्वमेवैतदेवं श्रूयत इति । ब्राह्मणाद्यं यद्दण्डादुत्पन्नं तन्न देयम । तस्य हि ब्राह्मणेष्वेव विनियोगः स्मृतौ विहित इति ॥ १०९ ॥

तृतीयसवन उक्थ्यं गृहीत्वाऽऽग्निमारुतकाले त्रेधं विगृह्णाति ॥ ११० ॥

तच्चमसाननुहोमभक्षौ ॥ १११ ॥

आग्निमारुतचमसाननुहोमभक्षौ भवतः ॥ १११ ॥

वसतीवरीर्गृहीत्वा गृहीत्वा प्रतिदिशं समासिच्य परिहरति ॥ ११२ ॥

प्रतिदिशं वसतीवरीर्गृहीत्वा गृहीत्वा समासिच्य परिहरति । स चायं मध्यमस्य धर्मो वचनात् । ततश्च सर्वमेधमाश्वमेधिके मध्यमेऽहनि वर्तमानं प्रतिदिशं वसतीवरिग्रहणं प्रवर्तते ॥ ११२ ॥

आज्यसक्तुधानालाजानामेकैकं जुहोति प्रा-

णाय स्वाहेति प्रतिमन्त्रं सर्वरात्रमावर्तम् ॥११३॥

आज्यादीनामेकैकेन द्रव्येण होममभिनिर्वर्तयति प्राणाय स्वाहेत्येभिर्मन्त्रैः प्रतिमन्त्रम् । आवर्त्यावर्त्य सर्वरात्रम् । अत्र च रात्रे प्रतिद्रव्यं विभागः प्रहरमेकमाज्येन द्वितीयं सक्तुभिः तृतीयं धानाभिश्चतुर्थं लाजैः। इह च कर्मपरिमाणानवगमात्कालपरिमाणेन कर्मपरिमाणपरिच्छेदः । न ह्यत्र कर्मपरिमाणं श्रूयते । यथा शतरुद्रिये सन्ततहोमेऽपि सति षष्टिश्च द्वे च त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिंशदथ पञ्चत्रिंशदिति । नैवमिह वचनं भवति । तेन यावन्तो होमाः प्रहरेण निर्वर्त्यन्ते तावन्ति प्रति द्रव्यं चतुर्मुष्टीकानि ग्राह्याणि । दर्विहोमानां पौर्णमासधर्मत्वेन आज्यस्य तूपांशुयाजविध्यन्तत्वेन परिमाणमेव । केचित्त्वाज्यस्य पूर्णाहुतिकं विध्यन्तमिच्छन्ति । तदनुपपन्नम् । सकृत्वाद्विमध्य आम्नानात्तस्य होमस्य । ततश्च दर्विहोमोऽयमुपांशुयाजविध्यन्तग्राहक इति । अतश्च प्रोवाच्चतुरवत्तेन होमः । इह चैकस्मै स्वाहा द्वाभ्यां स्वाहेत्येवमादौ त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहेत्येवमादौ लुप्तः स्वाध्यायो द्रष्टव्यः । एवं ह्यत्र श्रूयते । अनुपूर्वं जुहोतीति एकोत्तरा जुहोतीति तथा नैकयतमस्येतीति ॥ ११३ ॥

व्युष्ट्यौ इति व्युष्टायाम् ॥ ११४ ॥

रजन्यां जुहोति । तत्र लाजैरेवेति सम्प्रदायः ॥ ११४ ॥

स्वर्गायेत्युदिते ॥ ११५ ॥

जुहोति । पूर्णाहुतिवत्संस्कारपूर्वकमाज्येन । युक्तरूपता पुनरुभयोराज्येन । अत्र च कर्म विचरता अनस्तमित आदित्ये आरम्भागान्तं कर्तव्यम् तत्र आज्यादिभिर्होमः । विरोधाच्चापररात्रिकं कर्म प्रतिप्रस्थाता करोति । अध्वर्युर्हि अन्नहोमेषु व्यावृत्त इति । ननु वैपरीत्यं कस्मान्न भवति । न । अध्वर्युकर्तृकताया अपररात्रिकेऽन्यत्र चरितार्थत्वात् । अन्नहोमेषु त्वचरितार्थतेति । तस्मादध्वर्युरेवान्नहोमेषु । तथा च लिङ्गमध्वर्युरन्नहोमाञ्जुहोतीति । विधिरेवायमित्यपरे ॥ ११५ ॥

प्रातरुक्थ्यः ॥ ११६ ॥

भवतीति सूत्रशेषः ॥ ११६ ॥

महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ इति द्वितीयं राजतेन यः प्राणत इति ॥ ११७ ॥

महिमानाविति ग्रहयोर्नाम । महिमानौ ग्रहौ गृह्णातीति सामानाधिकरण्यात् ॥ ११७ ॥

बहिष्पवमानाय सर्पणमाश्वमालभ्य ॥ ११८ ॥

बहिष्पवमानं च वाचनिकमत्र अहर्गणे सदसि विहितत्वात् ॥ ११८ ॥

वडवादर्शयत्यभिरसाति तत्स्तोत्रम् ॥ ११९ ॥

अश्वस्य वडवा दर्शयति । दर्शनेन यदिङ्करोति तदेव स्तोत्रम् ॥ ११९ ॥

स्तुवीरन्वा ॥ १२० ॥

उद्गातार इति विकल्पः । शास्त्रतुल्यत्वात् ॥ १२० ॥

शतमानं ददाति ॥ १२१ ॥

स्तोत्रदक्षिणेति उद्गातृभ्यः ॥ १२१ ॥

अश्वेनाक्रमयन्त्यास्तावम् ॥ १२२ ॥

आस्तावप्रदेशमश्वेनाक्रमयन्ति ॥ १२२ ॥

ऐकादशिनाननुपाकृत्याश्वादींश्च ॥ १२३ ॥

उपाकरोतीति शेषः ॥ १२३ ॥

होतरश्वमभिष्टुहीति प्रेष्यति ॥ १२४ ॥

प्रैषार्थश्च तमेफादयभिहोतासिद्धीति यदक्रन्दः प्रथमं जायमान इति ॥ १२४ ॥

युनक्त्येनं युञ्जन्ति ब्रध्नमिति ॥ १२५ ॥

यजमानोऽश्वं रथे युञ्जन्ति ब्रध्नमित्यनेन मन्त्रेण ॥ १२५ ॥

इतरांश्च युञ्जन्त्यस्येति ॥ १२६ ॥

त्रीनश्वान्युनक्ति ॥ १२६ ॥

अश्वाः सौवर्णालङ्काराः ॥ १२७ ॥

भवन्ति ॥ १२७ ॥

रथश्च ॥ १२८ ॥

सौवर्णालङ्कारः ॥ १२८ ॥

अपो यात्वाऽवगाढेषु वाचयति यद्वात इति ॥ १२९ ॥

अपः प्रति यात्वाऽवतीर्णेष्वश्वेषु यद्वात इत्यमुं मन्त्रं वाचयति ॥ १२९ ॥

आयाय विमुक्तमश्वं महिषीवावातापरिवृक्ताऽऽज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान्यथादेशं वसवस्त्वेति प्रतिमन्त्रम् ॥ १३० ॥

एत्य विमुक्तमश्वं महिष्याद्याऽभ्यञ्जन्ति सर्वकायमध्यापरकायान्यथादेशं इति । महिषी पूर्वकायं मध्यं वावाता ऽपरकायं परिवृक्ता । वसवस्त्वेत्येभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १३० ॥

अभ्र्युद्यमानान्मणीन्सौवर्णानेकशतमेकशतं केसरपुच्छेष्वावयन्ति भूर्भुवः स्वरिति प्रतिमाह्वाव्याहृति ॥ १३१ ॥

अभ्र्युद्यमानानिति यथा न पतन्ति सौवर्णान्मणीन्केसरयोः पुच्छे च प्रथयन्ति । भूरिति महिषी भुव इति वावाता स्वरिति परिवृक्ता ॥ १३१ ॥

अनुचर्यश्च तूष्णीमेकेषाम् ॥ १३२ ॥

आरयन्ति । एकेषां त्विति विकल्प ॥ १३२ ॥

अभ्राय रातिहुतशेषं प्रयच्छति लाजी३-
ञ्छाची३निति ॥ १३३ ॥

अनेनमन्त्रेण ॥ १३३ ॥

अप्स्ववहरणमखादति ॥ १३४ ॥

अखादत्यश्वे अप्स्ववहरण सा चेय प्रतिपत्ति ॥ १३४ ॥

ब्रह्मा पृच्छति होतारं यूपमभितः कः स्वि-
देकाकीति ॥ १३५ ॥

यूपमभितो वदन इति वचनात् ॥ १३५ ॥

सूर्य इत्याचष्टे ॥ १३६ ॥

होता ॥ १३६ ॥

होता ब्रह्माणं का स्विदासीदिति ॥ १३७ ॥

पृच्छतीत्यनुवर्तते ॥ १३७ ॥

द्यौरिति प्रत्याह ॥ १३८ ॥

ब्रह्मा ॥ १३८ ॥

पश्वुपाकरणान्तमाद्यमेधिकमभिहितमद्याभिष्टयादि इदानीं प्राकृतानुवृत्त्यर्थमाह—

अग्निमन्थनादि करोति ॥ १३९ ॥

अग्निष्ठेश्वतूपरगोमृगाान्नियुनक्ति ॥ १४० ॥

यूपे ॥ १४० ॥

यथोक्तमश्वादौ देवताः ॥ १४१ ॥

यथाश्वस्तूपरोऽध्याय उक्तास्तथैव प्रतिपत्तव्याः । प्राह्मणमेवे-दमिति ॥ १४१ ॥

पर्यङ्ग्यानते ॥ १४२ ॥

युनक्तीति वर्तते ॥ १४२ ॥

पञ्चदश पञ्चदश रोहितादीन्त्सौर्यान्तानितरेषु ॥ १४३ ॥

इतरेषु यूपेषु पञ्चदशरोहितादीन् सौर्यान्तान्नियुनक्ति । यू-पोच्छ्रयणक्रमेण प्रवृत्तेः ॥ १४३ ॥

कपिञ्जलादीन्पृषतान्तांस्त्रयोदश त्रयोदश यूपान्तरेषु ॥ १४४ ॥

त्रयोदश त्रयोदशारण्यानाकाशेष्वालभत इति वचनात् । तां-श्चाकाशोत्पत्तिक्रमेण । अपरे तु दक्षिणत आरभ्येच्छन्ति ॥ १४४ ॥

अश्वप्रोक्षणमन्त्रयस्त्वा वायुष्टेति ॥ १४५ ॥

आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यत इति समु-च्चयश्रवणात् ॥ १४५ ॥

उपगृह्णात्सपाम्पेरुरग्निः पशुरिति ॥ १४६ ॥

मन्त्रद्वयेनाश्वस्य मुखे ॥ १४६ ॥

कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतान् ॥ १४७ ॥

देवतामुद्दिश्योद्दिश्य नियोगक्रमेणोत्सर्गः ॥ १४७ ॥

हिरण्यवासोधीवासेष्वश्वसंज्ञपनम् ॥ १४८ ॥

वासोधीवासे हिरण्यमित्यश्वायोपस्तृणन्तीति वचनात् । तू-पमपि प्रवर्तेत पवाद्यर्थत्वात् ॥ १४८ ॥

परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः ॥ १४९ ॥

आहुतीर्जुहोति ॥ १४९ ॥

वाचयति पत्नीर्नयन्नमस्तेऽम्ब इति ॥ १५० ॥

मन्त्रसमुच्चयः ॥ १५० ॥

अश्वं त्रिस्त्रिपरियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति ॥ १५१ ॥

गणानान्त्वेति त्रि प्रदक्षिणम् । प्रियाणामिति त्रिरप्रदक्षिणम् । निधानान्त्वेति च प्रदक्षिणम् । वसो ममेति च सर्वत्रानुषङ्गः तुल्ययोगात् ॥ १५१ ॥

प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति ॥ १५२ ॥

प्रक्षालितेषु पशुषु महिषी अश्वमुपसंविसत्याहमजानीत्यनेन मन्त्रेण । निक्षिप्तेषु पशुषु महिषीमश्वायोपरि पातयन्तीति वचनात् ॥ १५२ ॥

अधीवासेन प्रच्छादयति स्वर्गे लोके इति ॥१५३॥

अश्वमहिष्योरुपरि वासो ददाति स्वर्गे लोके इत्यनेन मन्त्रेण ॥ १५३ ॥

अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति ॥१५४॥

निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्त इति वचनात् । महिष्युपस्थ इति वचनेन समासोयम् । कुत एतत् । पुष्टयश्रवणात् । ननु समासलक्षणेन लुप्ता षष्ठी । नैतदेवम् । अश्रुतां कल्पयित्वा लोपो व्यावर्णयितव्य । महिष्या एव पुनः कर्तृत्वे एष दोषो न भवति ॥ १५४ ॥

उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते ॥१५५॥

अध्वर्युर्मा भूदिति यजमानमहणम् ॥ १५५ ॥

अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्यां हये हये ऽसावित्यामन्त्र्यामन्त्र्य ॥१५६॥

अध्वर्य्वादयः कुमारीपत्नीभिर्यथासंख्येन सम्वदन्ते यकासका-विति दशर्चस्य द्वाभ्यां द्वाभ्यामृग्भ्यां हये हये ऽसाविति पूर्वतर-मामन्त्र्यामन्त्र्य ॥ १५६ ॥

सानुचर्यः प्रत्याहुः ॥ १५७ ॥

अनुचर्य एकेषाम् ॥ १५८ ॥

अतश्च विकल्पः ॥ १५८ ॥

महिषीमुत्थाप्य पुरुषा दधिक्राव्ण इत्याहुः ॥ १५९ ॥

उत्थापनं च पत्न्या अनुचरीकर्तृकम् । उत्थापयन्ति महिषीं ततस्ता यथेतं प्रतिपरायन्तीति श्रुतेः । अथेतरे सुरभिमतीमृचम-न्ततोन्वाहुरिति ॥ १५९ ॥

तिस्रः पत्न्यो ऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लोहराजतसौवर्णीभिर्मणिसंख्याभि-र्गायत्रीत्रिष्टुबिति द्वाभ्याम् ॥ १६० ॥

महिष्याद्यास्तिस्रः पत्न्यो ऽसिमार्गान्कल्पयन्ति अश्वस्य सू-चीभिर्मणिसंख्याभिरेकशतैकशतेन । ताश्च लोहराजतसौवर्ण्यो भवन्ति । गायत्रीत्रिष्टुबिति द्वाभ्यां द्वाभ्यामृग्भ्याम् ॥ १६० ॥

रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥१६१॥

पाण्ड्वः पक्षव्यावृत्तौ । न लोहरजतसौवर्ण्यो भवन्ति राज-तसुवर्णसीसाख्या भवन्ति । कुत एतत् । मन्त्रास्नात् । मन्त्रे हि रजता हरिणीः सीसा इति च दृश्यते । तेन लोहशब्दस्य ताम्रमात्रविषयत्वात् मन्त्रवर्णेन व्यवस्थापनं युक्तमिति सीसादिमय्यो भवन्ति ॥ १६१ ॥

सौवर्णासिरश्वः ॥ १६२ ॥

भवति ॥ १६२ ॥

लोहाः पर्यङ्ग्याणाम् ॥ १६३ ॥

असयो भवन्ति ॥ १६३ ॥

आयसा इतरेषाम् ॥ १६४ ॥

इतरेषां पशूनामायसा असयो भवन्ति ॥ १६४ ॥

अश्वं विशास्त्यनुवाकेन कृत्वा छ्यतीति ॥१६५॥

विशसनमवदानकालीनम् । विशसनशब्दस्य तत्र दृष्टार्थत्वात् । विशास्ति पशुमन्य इतिवपाकालीनं वा तत्रापि हि विशसनशब्दो भवति । शसिर्हिंसार्थः । तत्रापि हि हिंसा विद्यत इति । प्रायश्चाद्य वपाकालीनमेव ॥ १६५ ॥

मेदोऽस्योद्धरन्ति वपार्थे ॥ १६६ ॥

अस्याऽश्वस्य वपाकार्ये मेदो गृह्यते । कार्यापत्त्यौ चात्र धर्मप्रवृत्तिः ॥ १६६ ॥

लोहितं चास्य श्रपयन्ति ॥ १६७ ॥

अस्येत्यश्वस्य ॥ १६७ ॥

प्राजापत्यत्रपानामुत्तरतः श्रपणं होमो हविषश्च ॥ १६८ ॥

आहवनीयस्योत्तरतः श्रपणं होमश्च । तथा हविषः ॥१६८॥

प्राग्वपाहोमाद्धोताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् ॥ १६९ ॥

वपाहोमात्पूर्वं स्वाहाकृत्युत्तरकालं होताध्वर्यू सदसि संवदेते कः स्विदेकाकीति चतसृभिर्ऋग्भिः। पूर्ववदित्युक्तिप्रत्युक्त्या। शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि प्रक्षोध वदन्ति पूर्वया द्वारा प्रपद्य यथा धिष्ण्यं व्युपविशन्ति स होताध्वर्युं पृच्छतीति श्रुतेः। यदत्र सूत्रेणाभिहितं तच्छब्देन लक्ष्यते प्रत्यञ्च. प्रतिपरेत्येत्यमादि ॥ १६९ ॥

ब्रह्मोद्गातारौ च पृच्छामि त्वेति ॥ १७० ॥

चशब्दाच्चतसृभिर्ऋग्भिरुक्तिप्रत्युक्त्या ॥ १७० ॥

पुनः पूर्वावपरेणोत्तरवेदिं का स्विदासीदिति ॥१७१॥

संवदेते । पूर्वाविति होताध्वर्यू ॥ १७१ ॥

उत्तरौ च कत्यस्येति ॥ १७२ ॥

चशब्दात्संवदेते । चतसृभिरेव ॥ १७२ ॥

यजमानोध्वर्युं पृच्छामि त्वेति ॥ १७३ ॥

इयं वेदिरित्यध्वर्युः ॥ १७४ ॥

प्रत्याह ॥ १७४ ॥

सर्वहुतेन महिम्ना चरति यस्ते ऽहन्निति जुहोति ॥ १७५ ॥

महिम्नेति ग्रहस्य संज्ञा ॥ १७५ ॥

अत्र वा ग्रहणम् ॥ १७६ ॥

उदिते ब्रह्मोद्यं इति ग्रहस्य अध्वर्युः हिरण्मयेन पात्रेण प्रा-

जापत्यं महिमानं ग्रहं गृह्णातीति श्रुतेः। ततश्चात्रैव ग्रहणम्। पूर्वं सामान्यश्रुतेरव्यवसितम् ॥ १७६ ॥

## वपाभिश्चरति ॥ १७७ ॥

वपाप्रचारं करोतीत्यर्थः ॥ १७७ ॥

अथ कुल्वतूपररोहितादिभिर्गुणशब्दैश्चोदितानां पशूनां द्रव्यं प्रतिसन्देहः किं जातीयाः पशव इति। जातिशब्देन चोपलक्षणं प्रकृतौ कृतमिहापि तद्वदेव कर्तव्यमित्यत इदमुच्यते। अन्वयाच्छागा एत इति। ततश्च तच्छब्देनोपलक्षणमित्येवं प्राप्त आह—

## छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गम् ॥ १७८ ॥

छागोस्रमेषा एते पशवो यथालिङ्गम्। येन येन लिङ्गेन यो यः पशुर्लिङ्ग्यते अवगम्यते स स प्रत्येतव्यो न सर्वे छागा इति। तेन रोहितलिङ्गेन गौर्गृहीतव्यः तूपरत्वेन छागः कुल्वलिङ्गेन मेषः। कुत एतत्। पश्वभिधानात्। एते हि विशिष्टजात्यवच्छिन्नद्रव्यगतगुणाभिधायकाः न द्रव्यमात्रगतगुणाभिधायका इति। ततश्चोस्रादिशब्दैरुपलक्षणं कर्तव्यमिति। यदि रोहितादयः शब्दाः पश्वभिधायकाः ततस्तैरेवोपलक्षणं युक्तं नोस्रादिभिरिति। एवं च विधिशब्दस्य मन्त्रत्वे भाव इति न्यायानुग्रहो भवति। कोऽसौ न्याय इति चेत्। मन्त्रस्य ह्यभिहितार्थप्रकाशकत्वमुदितम्। अभिधानञ्च रोहितादिभिरित्येवं प्राप्त उच्यते। नैतद्युक्तम् ॥ १७८ ॥

कस्मात्—

## गुणवचनाचोदनाशब्दस्य ॥ १७९ ॥

यस्माद्गुणवचनाश्चोदनाशब्दा न च प्रकृतौ गुणशब्दैर्नोपलक्षणं कृतम्। नन्विदानीमेवोक्तं यथालिङ्गं पश्वभिधायका रोहितादयः शब्दाः इदानीं गुणवचना इति विरुद्धमुच्यते। नैतद्विरुद्धं रोहितादिशब्दा हि स्वार्थमभिधाय तद्वति द्रव्यविशेषे वर्तन्ते न शुक्लशब्दादिवद्द्रव्यमात्रे। कुत एतत्। गोद्रव्य एव प्रयोगात् प्रत्ययाच्च। तेन गुणवचनत्वेपि सति द्रव्याभिधायकत्वमविरुद्धम्। यथा कलभकिशोरवर्करादयः शब्दा वयो विशेषवचना अपि सन्तो विशिष्टजातिद्रव्य-

वश्चिन्नद्रव्यगतं यथोभिदधत्स्वेवञ्च सति छागोऽश्वमेधशब्दैरेवोपलक्षणं युक्तमिति । ननु च रोहितादिशब्दानां जात्यभिधाकत्वे गोऽव्यजशब्दैरप्युपलक्षण प्राप्नोतीति तेऽपि हि तज्जात्युपलक्षणसामर्थ्ययुक्ता इति । ततः किम् । छागोऽश्वमेधशब्दानामुपलक्षणसामर्थ्यमुपनीयते । एतैरेवोपलक्षणमिति न नियोगतः प्राप्नोति ॥ १७९ ॥

अत्रोच्यते—

प्रकृतौ वा वचनात् ॥ १८० ॥

प्राकृताग्निषोमीयं पशुमालभेति चोदनायां छागशब्देनोपलक्षणं दृष्टम् । तथा गौरनूबन्ध्य इति चोदनायामुस्रशब्देन वाक्यान्तरे । तथा चरकसौत्रामण्यामृषभेण सह विकल्परूपता पठ्यते मेषस्य तत्र च मेषशब्देनोपलक्षणं दृष्टम् । तेनेह चिन्त्यते तज्जातीयद्रव्याणि किं तैरेव शब्दैरुपलक्षणं क्रियतामुत शब्दान्तरैरिति । तैरेवेति युक्तरूपतरम् । ते ह्यन्यत्र द्रव्याणामुपलक्षणं कुर्वाणा दृष्टाः । इहापि च तज्जातीयान्येव द्रव्याणीति । तस्मात्तैरेवोपलक्षणमिति । अत आचार्येण साधूक्तं छागोऽश्वमेधाः पश्वभिधानादिति । अपि चैवं क्रियमाणे वैदिकमेवोपलक्षणं भवतीतरथा लौकिकं स्यात् । तस्माच्छागोऽश्वमेधशब्दैरेवोपलक्षणम् । अपि च निगमेष्वेवं द्रव्येषु छागोऽश्वमेधशब्दाः प्रयुक्ता दृश्यन्ते । न च निगमकारस्य कश्चित्प्रतारणविः । अतस्तत्स्मरणमपि समूलत्वादविरोधाच्च प्रमाणमेवेति ॥ १८० ॥

एकविंशतिप्रदानानेकेऽन्वक्चातुर्मास्यदेवताः

पितृत्रैयम्बकपुनरुक्तवर्जम् ॥ १८१ ॥

चातुर्मास्यदेवतानां हुत्वा हुत्वा देवतानामिति । एकविंशति चातुर्मास्यदेवता अनुद्रुत्यैकविंशतिधा हुत्वा प्रचरेयुरिति सूते ॥ १८१ ॥

ऐन्द्राग्नवैश्वदेवकायानैके ॥ १८२ ॥

कर्मण्यैन्द्राग्नस्य वपां हुत्वा एतासां होमः । एवमपि हि

श्रूयते। ऐन्द्राग्नस्य वपायां हुतायां तदन्वितरां जुहुयुरिति। तथा वैश्वदेवस्य वपायां हुतायां, तथा कायस्य वपायां हुतायां तदन्वितरा जुहुयुरिति॥ १८२॥

देवता तन्त्रेण तु॥ १८३॥

अत्र सह प्रक्षेपे याः समानदेवतास्तासां तन्त्रेणोच्चारणं सकृत्प्रयोगादेव कार्यसिद्धेः॥ १८३॥

व्यवस्थितास्वपि तन्त्रेण प्राप्त आह—

न कालभेदात्॥ १८४॥

भिन्नो हि तत्र कालः देवतान्तरव्यवधानात्॥ १८४॥

वपान्ते द्वितीयेन पूर्ववचस्ते रात्राविति जुहोति॥ १८५॥

वपाहोमान्ते द्वितीयेन महिम्ना चरति यस्ते रात्राविति जुहोति। पूर्ववच्छब्देन सर्वहोमो लभ्यते॥ १८५॥

शूलेऽश्वशेषश्रपणम्॥ १८६॥

कर्तव्यमिति शेषः। शूलस्य वापूर्वत्वात्प्रोक्षणं न भवति॥ १८६॥

सर्पणप्रभृत्या पश्चादासदनात् कृत्वा॥ १८७॥

लोहितमवद्यति गोमृगकण्ठाश्वशफयोरयस्मये चरौ॥ १८८॥

अश्वस्य लोहितमवद्यति गोमृगकण्ठेऽश्वशफे अयस्मये चरौ॥ १८८॥

वेतसशाखासु प्राजापत्यानाम्॥ १८९॥

वेतसशाखास्ववद्यति वेतसकटे प्राजापत्यानस्याग्निनौतीति वचनात्॥ १८९॥

अश्वस्य वा ॥ १९० ॥

वेतसशाखास्ववद्यति नान्येषां पशूनाम् । एवं हि श्रूयते प्लक्षशाखास्वन्येषां पशूनामवद्यन्ति वेतसशाखास्वश्वस्येति । यत्तु शाखान्तरीयं वचनं वेतसकटे प्राजापत्यान्संचिनोतीति । तदनेन विशेषे स्थाप्यते अश्वोपि हि प्राजापत्य एवेति ॥ १९० ॥

स्विष्टकृद्वनस्पत्यन्तरे शूल्यः हुत्वा देवताऽश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदेवतः शादप्रभृतित्वगन्तेभ्यः ॥ १९१ ॥

स्विष्टकृद्वनस्पत्यन्तरे शूल्यः हुत्वा, शूले अर्पितं शूल्यं, तद्धुत्वा, जुहोतित्वाच्चास्योपविष्टहोमः, प्राजापत्योऽश्व इति च प्रजापतेर्दैवतात्वम् । देवताभ्योऽश्वाङ्गेभ्यश्च जुहोति शादप्रभृतित्वगन्तेभ्य अमुष्मै स्वाहेति चतुर्गृहीतमाज्यम । आज्यमवदानात्क्रत्या प्रत्यास्यायं देवताभ्य आहुतीर्जुहोतीति वचनात् ॥ १९१ ॥

विमुखाच्च परेभ्यः ॥ १९२ ॥

विमुखोऽग्नेर्मूर्धासद्यः उग्रश्च भीमश्चेत्ययम् । ततःपरं ये देवता विशेषास्तेभ्यश्च जुहोति अग्निः हृदयेनेत्येवमादिभ्य. ॥ १९२ ॥

मानो मित इति च प्रत्यृचमनुवाकाभ्याम् ॥१९३॥

जुहोति ॥ १९३ ॥

अन्त्यां द्यावापृथिवीयाम् ॥ १९४ ॥

द्यावापृथिव्यामुत्तमामाहुतिं जुहोतीति वचनात् ॥ १९४ ॥

स्विष्टकृदन्तेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावचनम् ॥ १९५ ॥

यस्मिन् यस्मिन्नवदानेनैव जुहोति मा भूज्जुह्वा होम इति यथावचनग्रहणम् ॥ १९५ ॥

अश्वशफेन वानुयाजान्ते ॥ १९६ ॥

जुहोति ॥ १९६ ॥

अयस्मयेन पत्नीसंयाजान्ते ॥ १९७ ॥

इमानुकमिति च द्विपदाः ॥ १९८ ॥

द्विपदा उत्तमा जुहोतीति वचनात् ॥ १९८ ॥

अतिरात्र उत्तमः ॥ १९९ ॥

उत्तममहरतिरात्रसंज्ञं भवति । ननु चाहीनत्वादतिरात्रः प्राप्त एव किमर्थं पुनरुच्यते। गवादीनां नाम्ना ह्यसंज्ञा मा भूवन्निति पुनरुच्यते ॥ १९९ ॥

सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा ॥ २०० ॥

एते चाहर्विशेषा भवन्ति । अप्तोर्यामो वेति ॥ २०० ॥
अप्तोर्यामे विशेषमाह—

अप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः ॥ २०१ ॥

तिरोऽह्नीयेभ्यो वसतेभ्य उत्तमो रात्रिपर्यायश्चतुस्तोत्रो भवति ॥ २०१ ॥

अग्निष्ठे प्राजापत्यौ च ॥ २०२ ॥

प्राजापत्यौ उत्तमाहः संयोगेन । उत्तममहः प्रकृत्य हि श्रूयते। चतुर्विंशतिं वैतान् गव्यानालभेतेति वचनात् । एवं चान्यप्राप्तोर्यामस्यातिरात्रिका एव क्रतुपश्चवस्तद्विकारत्वात् ॥ २०२ ॥

अवभृथेष्ट्यन्ते ऽप्सु मग्नस्य पिङ्गलखलति-

विक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति ॥ २०३ ॥

अवभृथान्तेऽप्सु मग्नस्य विक्लिधस्य खलते, खलतिः अल्पाटः, विक्लिधो दन्तुरः, शुक्लोतिगौरस्तस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति ॥ २०३ ॥

उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरि-त्वा व्रतानि ॥ २०४ ॥

अवभृथादुत्तीर्णे यजमाने पापकृतोऽभ्यवयन्ति अचरित्वा व्रतानि । प्रक्रान्तप्रायश्चित्तस्य चैतद्भवति । अचरित्वा व्रतानीत्युक्त-त्वं । पापकृद्ग्रहणेन च ब्रह्महा उच्यते ॥ २०४ ॥

अश्वमेधपूताख्यास्ते ॥ २०५ ॥

अश्वमेधपूता इत्याख्यास्तेषां पूता भवन्तीत्यर्थः । अपि चाश्व-मेधावभृथे स्नात्वा पूता भवन्तीति स्मृते ॥ २०५ ॥

नानावभृथानि वा ॥ २०६ ॥

भवन्ति । प्रत्यङ्मवभृथेन चरन्तीति वचनात् ॥ २०६ ॥

कुम्भोपमारणान्तं पूर्वयोः ॥ २०७ ॥

अहनो भवति ॥ २०७ ॥

कुत एतत्—

शेषे दीक्षाव्रताभावात् ॥ २०८ ॥

कर्मशेषे दीक्षाव्रतस्याभावात् । अवभृथस्नानेन उन्मुक्तदीक्षो भवतीत्यभिप्राय ॥ २०८ ॥

सर्वं वा श्रुतेः ॥ २०९ ॥

सर्वं वा स्नानाद्यपि भवति । प्रत्यङ्मवभृथेन चरन्तीति

श्रुतेः। यदुक्तं स्नातेनोन्मुक्तदीक्ष इति। तत्र वचनसामर्थ्याद स- र्वावभृथात उन्मुक्तदीक्षो भवति। साभ्यासो ह्यवभृथो ऽवभृथकार्ये वर्तते। यथा सत्राहं दीक्षणीयया चरतीति साभ्यासा दीक्षणीया दीक्षणीयाकार्ये वर्तते ॥ २०९ ॥

एकवि꣡ꣳशतिरनूबन्ध्यातः ॥ २१० ॥

भवन्तीति शेषः। अभ्यस्तरूपमिदमेकं सर्वं प्रकृतावेव द- र्शनात् ॥ २१० ॥

उदवसानीयान्ते भार्या ददाति यथासंवादꣳ

सानुचरीः ॥ २११ ॥

उदवसानीयायाꣳ स꣡ꣳस्थितायां चतस्रश्च जायाः कुमारी पञ्च- मीं चत्वारि च शतान्यनुचरीणां यथा समुदितं दक्षिणां ददातीति श्रुतेः ॥ २११ ॥

कुमारीं पालागलीं चाध्वर्यवे ॥ २१२ ॥

कुमारी यजमानदुहिता। एते अध्वर्यवे ददाति ॥ २१२ ॥

अनुचरीर्वा फलाधिकारादितरासाम् ॥२१३॥

वाशब्दः पक्षव्यावृत्तौ। न भार्यां ददाति अनुचरीरेव दद्यात्। कुत एतत्। फलाधिकाराद्भार्याणां यजमानतुल्या एवैता इति। मध्य- मकं हि यजमानस्य पत्नीनां च द्रव्यं साधारण्याद्युत्सर्गः सहैव भवति नान्यथेति। तत्कथं तर्हि वेदवाक्यं नेयम्। चतस्रश्च जाया यजमानस्य चत्वारि च शतान्यनुचरीणां कुमारीं पञ्चमीं यथा संवादं दक्षिणां ददाति ॥ २१३ ॥

अनारभ्यत्वाच्च ॥ २१४ ॥

अपि च यथा पत्न्यो यजमानदाने ऽसमर्थाः एवं यजमानेऽपि पत्नीनाम्। तस्मादनारभ्योऽयमर्थः ॥ २१४ ॥

द्वादशाहमाग्नेयः पुरोडाशः ॥ २१५ ॥

गृहेषु कर्तव्यः । आग्नेय इति न्यायसूत्रम् ॥ २१५ ॥

ब्रह्मौदनो वा ॥ २१६ ॥

द्वादशब्रह्मौदनान्युत्थाय निर्वपति द्वादशभिर्वेष्टिभिर्यजत इति श्रुतेः ॥ २१६ ॥

प्रत्यृतुपशूनालभते षट् षड्वसन्ताद्याग्नेया-
नैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावै-
ष्णवानैन्द्राबार्हस्पत्यान् ॥ २१७ ॥

पक्षमपि हि श्रूयते ॥ २१७ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे
विंशतिमो ऽध्यायः समाप्तः ।

# एकविंशोऽध्यायः ।

पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य ॥ १ ॥

पुरुषमेध इति कर्मणो नामधेयम् । स च पञ्चरात्रः स्यात् । स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवतीति श्रुतेः । त्रयोविंशतिदीक्षः । तस्य त्रयोविंशतिर्दीक्षा इति वचनात् । अतिष्ठाकामस्येति । सर्वाणि भूतान्यतीत्य तिष्ठत इत्यतिष्ठेत्युच्यते तत्कामस्य ॥ १ ॥

ब्राह्मणराजन्ययोः ॥ २ ॥

भवति न वैश्यस्य ॥ २ ॥

अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥ ३ ॥

पञ्चरात्रस्याद्यन्तयोरग्निष्टोमौ मध्येऽतिरात्रः तस्मिन उक्थ्यौ । संस्थामात्रविधानाच्च सर्व एतेऽपूर्वाः । अतश्च द्वादशाहिको विध्यन्तः प्रत्येकम् ॥ ३ ॥

यूपैकादशिनी भवति ॥ ४ ॥

अत्र ॥ ४ ॥

तावन्तोऽग्नीषोमीयाः ॥ ५ ॥

एकादशाग्नीषोमीया पशव उपवसथ इति श्रुतेः । ते च मध्यमे यूपे नियुज्यन्ते । न ह्यत्राश्वमेधवदतियूपश्रवणम् ॥ ५ ॥

पशूनुपाकरिष्यन्नतिरात्रे देवसवितरिति प्रत्यृचं तिस्रो जुहोति ॥ ६ ॥

स वै पशूनुपाकरिष्यन्निति प्रकृत्य एतास्तिस्रः सावित्रीराहुतीर्जुहोतीति श्रवणात् ॥ ६ ॥

ऐकादशिनानुपाकृत्य ब्राह्मणादींश्च ॥ ७ ॥

यथास्थानमुपाकरोति । ब्रह्मणे ब्राह्मणमिति चैते ब्राह्मणादयः ॥ ७ ॥

नियोजनकालेऽष्टाचत्वारिंशतमाग्नेयानग्निष्ठे ॥८॥

नियुनक्तीति शेषः ॥ ८ ॥

इतरेष्वेकादशैकादश ॥ ९ ॥

इतरेषु एकादशैकादश नियुनक्ति ॥ ९ ॥

द्वितीयोच्छ्रिते शेषान् ॥ १० ॥

अग्ने मा भूदिति द्वितीयोच्छ्रितग्रहणम् ॥ १० ॥

नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन
सहस्रशीर्षेति ॥ ११ ॥

होतृवदिति वाक्यवदभिष्टवः ॥ ११ ॥

कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥ १२ ॥

पर्यग्निकृतानुत्सृजन्तीत्यर्थः ॥ १२ ॥

स्विष्टकृद्धनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति ॥१३॥

आज्येन ॥ १३ ॥

सपुरुषमश्वमेधवद्दक्षिणा ॥ १४ ॥

राज्ञः ॥ १४ ॥

सर्वस्वं ब्राह्मणस्य ॥ १५ ॥

अथ यदि ब्राह्मणो यजेत सर्ववेदसं दद्यादिति श्रुतेः ॥ १५ ॥

प्रतिदेवतं तिस्रस्तिस्रोऽनुबन्ध्याः पञ्चोत्त-

मायाम् ॥ १६ ॥

तिस्रो मैत्रावरुण्यः तिस्रो वैश्वदेव्यः पञ्च बार्हस्पत्यः ॥ १६ ॥

त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोरण्यं गत्वा न प्रत्येयात् ॥ १७ ॥

त्रैधातव्यन्ते आत्मन्यग्नी समारोह्य अद्भ्यः सम्भृत इत्यनुवाकेन सूर्यमुपस्थायारण्यमियात् अपुनर्गृहाय । ततश्चाश्रमान्तरप्राप्तिरियमिति । यत्र स्मृतिरुच्यते प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नी(१) समारोप्य ब्राह्मणः प्रव्रजेद्गृहादिति । स चायं पुरुषमेधाख्या सर्वस्वदक्षिणा प्रजापत्येष्टिस्तां निरूप्य पारिव्रज्यं ब्राह्मणस्य । एवं च यावज्जीवमग्निहोत्रं जुहुयादिति श्रुतिरनया श्रुत्या विकल्पते । अथ स्मार्तेष्टिः प्राजापत्या स्यात्तदानीं स्मृत्या श्रुतिर्बाधिता स्यात् । न चैतदिष्यते । पुरुषमेध कथ प्राजापत्येष्टिरिति चेत् सन्ति ह्यत्र प्राजापत्याः पशवस्तदुपलक्षिता प्रजापत्येष्टिरुक्ता ॥ १७ ॥

ग्रामे वा विवत्सन्नरण्योः ॥ १८ ॥

यद्वा ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनादित्यमुपस्थाय गृहेषु प्रत्यवतस्येदिति ॥ १८ ॥

सर्वमेधः सर्वकामस्य ॥ १९ ॥

सर्वमेध इति कर्मनामधेयम् । विध्यर्थवादमन्त्रत्वासम्भवात् । स सर्वकामस्य भवति ॥ १९ ॥

दशरात्रः ॥ २० ॥

उपक्रमात्तस्मिन्नेवं दशरात्रग्रहणं न कर्तव्यम् । क्रियते च । तत्किमर्थम् । अग्निष्टुत्त्रय उक्थ्या इति वक्ष्यति । तत्रेन्द्रस्तुदादिर्यो-धिका उक्थ्या मा भूवन्निति इन्द्रस्तुदादय एवोक्थ्याः ॥ २० ॥

---

१ आत्मन्यग्नीनिति तु मनुस्मृतौ पाठ. ।

अग्निरुत्तमः ॥ २१ ॥

एकशतविधोऽग्निरत्र ॥ २१ ॥

अग्निष्टुत्त्रय उक्थ्या इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुद्व्रतं वाजपेयो ऽप्तोर्यामः सर्वमस्मिन्नालभते ॥ २२ ॥

अस्मिन्नप्तोर्यामे सर्वमालभ्यते । तस्मिन्सर्वमेधानालभत इति श्रुते । असङ्ख्यार्थो पदेश इति चेत् । न हि निरवग्रहः सर्वालम्भः शक्यते कर्तुम् । एवं चेद्येषामेवोपलम्भो दृष्टस्तेषां सर्वतोच्यते । ते च पुरुषो ऽश्वो गौरविरज इति । अपि चान्ते सर्वशब्दो दृश्यते । पुरुषो ऽश्वो गौरविरज इति प्रकृत्य एतावन्तो वै सर्वे पशवस्तस्मात्सर्वशब्देन पञ्चपश्वालम्भ उच्यते । अतिरात्राधिकारत्वाच्चाप्तोर्यामे तत्सोमायनदेवताभ्य आलभ्यन्त एकैकस्यै देवतायै पञ्च पञ्च पशव आलभ्यन्ते विभागाभावात् । लिङ्गाच्च अवपाकानां त्वचो जुहोतीति यदि पञ्चैव पशव एते स्युस्ततोवपाकानां त्वचो जुहोतीति बहुवचनमुपपन्नम् । तस्मात्प्रतिदैवत पञ्च पञ्च पशवः । सर्वे चैते यूपे नियुज्यन्ते । सोमायनं हिततदिति सर्वत्र चात्र सोमायनम् । न ह्येकादशिनी विहृता सम्भवति । न चैन्द्राग्नः क्वचित्प्रत्यक्षविधानात् ॥ २२ ॥

अवपाकानां त्वचो जुहोति ॥ २३ ॥

पुरुषाश्वावपाका ॥ २३ ॥

अप्तोर्याम एवा यमपरो विशेषः—

ओषधिवनस्पतीनाᳫ संवश्वम् ॥ २४ ॥

मांकरवीति दोषः । संवश्वः फूट उच्यते ॥ २४ ॥

अन्नमन्नं जुहोति वपान्ते ॥ २५ ॥

तृतीयसवने च हुतेषु हविःषु ॥ २६ ॥

अयं च सर्वाभैर्दर्विहोमः पूर्वतरमोषधिवनस्पतिसेयर्थ्य प्रकार्ये कर्तव्यः । एवमपि हि श्रूयते । संप्रक्ष्मोषधिवनस्पतीनां प्रकिरन्ति शुष्काणां चार्द्राणां चाथमन्नं जुहोति ॥ २६ ॥

आश्वमेधिकं मध्यमं व्रतस्थाने ॥ २७ ॥

मध्यमपदं विकल्परूपतयोच्यते । व्रतस्थाने आश्वमेधिकं मध्यममहर्भवति ॥ २७ ॥

पौरुषमेधिकं वाजपेयस्य ॥ २८ ॥

मध्यममहर्भवति । अत्र चाश्वमेधिकार्थं यूपानामेकविंशतिर्भवति । तज्जात्यनुमहे तु बहूनामहां विरोधस्तस्मात्त्रादिरो भवति । प्रमाणं स्वविरोधाद्वयस्येव वाजपेयिकपक्षे सप्तदशारत्निता ॥ २८ ॥

त्रिणवत्रयस्त्रिंशा उक्थ्यौ ॥ २९ ॥

त्रिणवत्रयस्त्रिंशौ क्रतू उक्थ्यसंज्ञौ भवतः । तौ च पूर्वस्तोमसम्बन्धितौ । तत्र दृष्टत्वात् ॥ २९ ॥

अतिरात्रो विश्वजित् ॥ ३० ॥

विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवतीति श्रुतेः ॥ ३० ॥

पुरुषमेधवद्दक्षिणा सभूमि ॥ ३१ ॥

सर्वमेध उक्तः पितृमेध इदानीमभिधीयते—

पितृमेधः संवत्सराऽस्मृतौ ॥ ३२ ॥

पितृमेध इति कर्मणो नामधेयम् । स च संवत्सराऽस्मृतौ भवति । यदा न स्मर्यन्ते संवत्सराः मृतस्य । यत्र समा नानु च न स्मरेयुरिति श्रुतेः ॥ ३२ ॥

अयुग्मेषु वा ॥ ३३ ॥

अयुग्मेषु संवत्सरेषु कुर्यादिति श्रुतेः । अतश्च विकल्पोऽयम् ॥ ३३ ॥

एकनक्षत्रे ॥ ३४ ॥

एकनक्षत्र इति हि पितॄणामिति । एकनक्षत्रं च यत्रैका तारका चित्रास्वातिरेवतीत्यादि यथा ॥ ३४ ॥

अमावास्यायाम् ॥ ३५ ॥

वेति सामर्थ्याद्‌दृष्टव्यम् । समुच्चयः कस्मान्न भवति एकनक्षत्रेऽमावास्यायां चानैतदेवम् । अमावास्यायामेकनक्षत्रसंस्तवश्रवणात् । अमावास्या वा एकनक्षत्रमिति । तत्र समुच्चये न घटते ॥ ३५ ॥

निदाघशरन्माघेषु ॥ ३६ ॥

निदाघो ग्रीष्मः । शरच्छरदेव । माघोऽपि माघ एव । एवं हि श्रूयते । निदाघे वा निनोर्थं धीयाता इति शरदि कुर्यात्स्वधा वै शरत्स्वधा वै पितॄणामन्नं माघे मासांश्च भूरिदति च ॥ ३६ ॥

यावन्तो धुविष्यन्तः स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि ॥ ३७ ॥

धुविष्यन्तः पुत्रपौत्राः । वक्ष्यति ह्यमात्या धून्वतस्त्रिस्त्रिः परिक्रामन्ति ॥ ३७ ॥

शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाहतपक्षेण परितत्यायसेषु वाद्यमानेषु वीणायां वोद्धतायाममात्या स्त्रिस्त्रिः परिक्रामन्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥ ३८ ॥

कुम्भेन शरीराणि ग्रामसमीपमाहृत्याहतस्य वाससः पक्षेण परितत्य आयसेषु वादित्रेषु वाद्यमानेषु उद्धतायां वीणायां च वाद्यमानायां अमात्या उत्तरीयैः उपवाजनैर्वोपवाजयन्तः त्रिस्त्रिः परिक्रामन्ति ॥ ३८ ॥

स्त्रियो वा ॥ ३९ ॥

परिक्रामन्ति । वेति विकल्पः ॥ ३९ ॥

पूर्वरात्रमध्यापररात्रेषु च ॥ ४० ॥

अपद्वारपरिक्रामन्ति ॥ ४० ॥

विफलकान्नमहरेतत् ॥ ४१ ॥

फलकशब्दौ । बह्वन्नमेतदहर्भवति ॥ ४१ ॥

नृत्तगीतवादित्रवच्च ॥ ४२ ॥

भवति ॥ ४२ ॥

अस्मा अस्मा उपसंहरन्त्येके ॥ ४३ ॥

अस्मा अस्थिकुम्भाय एके ऽन्नोपहारं कुर्वन्ति ॥ ४३ ॥

उपव्युषसं सशरीरा दक्षिणा गच्छन्ति ॥ ४४ ॥

उषसि विगच्छन्त्यां सह शरीरेण दक्षिणा गच्छन्ति ॥ ४४ ॥

यथाकुर्वतो ऽभ्युदियात्सूर्यः ॥ ४५ ॥

तथा यत्न आस्थेय ॥ ४५ ॥

कक्षेऽवतापिनि ॥ ४६ ॥

श्मशानं कर्तव्यम । कक्षो गहनप्रदेशः । अवतापि यस्मिन्नु-
परि स्थितः सूर्यस्तपति न पार्श्वस्थः ॥ ४६ ॥

ऊषर उदक्प्रवणे समे वा ॥ ४७ ॥

दक्षिणाप्रवण एके ॥ ४८ ॥

अदर्शनाद्ग्रामात् ॥ ४९ ॥

आरात्पथः ॥ ५० ॥

पुरात्पथ इति ॥ ५० ॥

न्यग्रोधाश्वत्थतिल्वकहरिद्रुस्फूर्जकविभीदक-
पापनामभ्यश्च ॥ ५१ ॥

दूरात्करोति ॥ ५१ ॥

चितिवच्च ॥ ५२ ॥

देशो भवति । तद्गुणयुक्त इत्यर्थः ॥ ५२ ॥

शंवति कंवति वा ॥ ५३ ॥

शमिति सुखनीयः प्रदेशः । कमिति रमणीयः । तत्र करोति । वाशब्दो विकल्पार्थः ॥ ५३ ॥

चित्रं पश्चात् ॥ ५४ ॥

चित्रमनेकप्रकारं घनं यस्य प्रदेशस्य सोऽङ्गीकर्तव्यः ॥ ५४ ॥

तदभाव उदकम् ॥ ५५ ॥

उत्तरतो वा ॥ ५६ ॥

भवति ॥ ५६ ॥

कर्पूवीरिणवति ॥ ५७ ॥

कर्पूशब्देन कुहसार उच्यते । वीरिणानि तृणानि । तद्वति प्रदेशे करोति ॥ ५७ ॥

ग्रामतस्तेजनीमुच्छ्रित्य न न्यस्येद्गृहेपू-
च्छ्रयेत् ॥ ५८ ॥

तामन्यस्येद्धुत्वा वैनामूर्ध्वं वा गृहेपूच्छ्रयेदिति श्रुतेः ॥ ५८ ॥

दिक्स्रक्तिपुरुषमात्रं मिमीते ॥ ५९ ॥

तत्प्रमाणं दिक्स्रक्तिपुरुषमात्रं मेयम् ॥ ५९ ॥

उत्तरतः पृथु पश्चाच्च ॥ ६० ॥

कर्तव्यम् ॥ ६० ॥

विहृत्य स्रक्तिषु शङ्कूनाहन्ति ॥ ६१ ॥

विहृत्य मित्वा कोणेषु शङ्कूनाहन्ति ॥ ६१ ॥

पालाशं पुरस्ताच्छामीलवारणदेहशङ्कू-
न्न्यासु ॥ ६२ ॥

स्रक्तिषु अप्रदक्षिणम् ॥ ६२ ॥

देहशङ्कुर्वृत्रशङ्कुः ॥ ६३ ॥

वृत्र पाषाण- । वृत्रशङ्कुर्दक्षिणत इति श्रुते ॥ ६३ ॥

अपसलविसृष्टया रज्वा परितत्यापेतो य-
न्त्विति पलाशशाखया व्युदूहति ॥ ६४ ॥

अपसलविसृष्टा अप्रदक्षिणचलिता । तया परितत्य अपेतो य-
न्त्वित्यनेन मन्त्रेण पलाशशाखया व्युदूहति मितप्रदेशम् ॥ ६४ ॥

दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रय-
ति पूर्ववदपरिमिताभिः ॥ ६५ ॥

गार्हपत्य( चिति )परिश्रिदपेक्षया ह्यपरिमितत्वम् । एव हि
श्रूयते । यजुषा ता परिश्रयन्ति तूष्णीमिमा इति । यजुषा च परि-
श्रयणं गार्हपत्यपरिश्रिताम् ॥ ६५ ॥

औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमाने
युक्तेति सम्प्रेष्य सविता त इति जपति ॥ ६६॥

सम्प्रेषणजपौ याजमानौ ॥ ६६ ॥

अनुरज्जु चतस्रः सीताः कृषति वायुः पुना-
त्विति प्रतिमन्त्रम् ॥ ६७ ॥

उत्तरतः प्रतीचीं प्रथमाम् ॥ ६८ ॥

अग्रेभ्राजसा सूर्यस्य वर्चसेति चात्र कृषामीत्यध्याहारः सा-
काङ्क्षत्वात् ॥ ६८ ॥

अपरिमिता मध्ये तूष्णीम् ॥ ६९ ॥

सीताः कृषति ॥ ६९ ॥

अनडुहो विमुच्य विमुच्यन्तामिति दक्षिणा
सीरं निरस्याश्वत्थेव इति सर्वौषधं वपति ॥७०॥

सवितात इति शरीराणि निवपति मध्ये ॥ ७१॥

सविता त इत्यनेन मन्त्रेण कृष्टमध्ये शरीराणि निवपति॥७१॥

तूष्णीमन्यः कुम्भमाक्ष्णोति दक्षिणाऽनवानं
सृत्वा ॥ ७२ ॥

अन्योऽध्वर्युव्यतिरिक्तः तूष्णीमनवानं दक्षिणा गत्वा कुम्भमा-
क्ष्णोति क्षिपतीत्यर्थः । भिनत्तीत्यपरे ॥ ७२ ॥

प्रत्यागते परं मृत्यविति जपति ॥ ७३ ॥

प्रत्यागते क्षेप्तरि परं मृत्यविति जपति ॥ ७३ ॥

शं वात इति यथाङ्गं कल्पयित्वेष्टकां निद-
धाति मध्ये तूष्णीम् ॥ ७४ ॥

यथैनं यथाङ्गं कल्पयतीति श्रुतेः । तूष्णीमिति लौकिकया-
प्यप्रतिषेधः ॥ ७४ ॥

प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रो ऽलक्ष-
णाः पादमात्रीः ॥ ७५ ॥

पराचीरिति नाभ्यात्मम् ॥ ७५ ॥

प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतो
ऽपुरस्तात् ॥ ७६ ॥

पुरीषं प्रक्षिपति श्मशाने ॥ ७६ ॥

शर्करा अनभिचितः ॥ ७७ ॥

शर्करा एएका भवन्ति ॥ ७७ ॥

ऊर्ध्वप्रमाणमास्यं ब्राह्मणस्य ॥ ७८ ॥

श्मशानं भवति । ततश्च परिश्रितस्तावत्प्रमाणा भवन्ति ॥७८॥

उरः क्षत्रियस्य ॥ ७९ ॥

प्रमाणम् ॥ ७९ ॥

ऊर्ध्वबाहु वा ॥ ८० ॥

सर्वेषां विकल्पः ॥ ८० ॥

उरू वैश्यस्य ॥ ८१ ॥

उपस्थः स्त्रियाः ॥ ८२ ॥

जानु शूद्रस्य ॥ ८३ ॥

प्रमाणम् ॥ ८३ ॥

सर्वेषां वाऽधोजानु ॥ ८४ ॥

प्रमाणम् । वाशब्दो विकल्पार्थः ॥ ८४ ॥

अवकाभिः कुशैश्च प्रच्छाद्य ॥ ८५ ॥

परिकृष्टं चेद्यवान्वपेत् ॥ ८६ ॥

यदि परिकृष्टपुरीषं ततश्च तत्र यवान् वापः श्रुतिक्रमेण ॥ ८६ ॥

दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदकस्य ॥ ८७ ॥

कर्षूर्पूरयन्ति ॥ ८७ ॥

तींस्त्रीनावपत्यश्मनः ॥ ८८ ॥

अमात्याः कर्षूषु ॥ ८८ ॥

अध्यधिगच्छन्त्यश्मन्वतीरिति ॥ ८९ ॥

अनेन मन्त्रेण कर्षूषु ॥ ८९ ॥

अपाघमित्यपामार्गैरपमृजते ॥ ९० ॥

अपाघमित्यनेन मन्त्रेण अपामार्गैरात्मानममात्या अपमृजन्ति ॥ ९० ॥

सुमित्रिया न इति स्नात्वा ऽहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्ति ॥ ९१ ॥

सुमित्रिया न इति स्नात्वा अहतानि वासांसि परिधाय अनड्वाहमित्यनेन मन्त्रेणानडुत्पुच्छमन्वारभ्य उद्वयमित्यागच्छन्ति॥९१॥

ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इत्यनेन मन्त्रेण ॥ ९२ ॥

मर्यादाया एष लोष्टमाहरेति वचनात् ॥ ९२ ॥

अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति ॥ ९३॥

अञ्जनमक्ष्णो रभ्यञ्जनं च पादयोः कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय परिधानात्प्रदेशाच्चत्वारः परिधयः । वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति द्वाभ्यामृग्भ्याम् । औपासनश्चात्र कर्तृसम्बन्धी न प्रेतसम्बन्धी । तेन ह्यसौ विहितकर्मानुष्ठानसाधनभावायाहित इति । तत्परिधीनां च संस्कारो न भवत्येवापूर्वत्वात् ॥ ९३ ॥

अथैषां परिदां वदति परीमे गामनेषतेति ॥९४॥

अथशब्दो मङ्गलार्थः । पित्र्यं कर्मनिवृत्तमिति । आनन्तर्यार्थमित्यपरे । ततश्चानन्तरमर्घलक्षणमपि न कर्तव्यम् । परिदां चाद्य यजमानविषयोऽमात्यविषयश्च । तेनैषामित्युक्तम् ॥ ९४ ॥

अद्धारेणौपासननं निरस्यति क्रव्यादमिति ॥९५॥

अनेन मन्त्रेण । औपासनश्च यस्मिन्नाहुतिर्हुता स एव गृहीतव्यो न प्रेतोपासनः तस्यैकदेशं निरस्यति । स एव ह्यानन्तर्यात्सम्बध्यते । तदेकदेशं निरस्यति । तथा च मन्त्रवर्णः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्निति । जपमन्त्र एतदभिधीयते । एकदेशो निरस्तः । एकदेश इतरशब्दो वर्तत इति ॥ ९५ ॥

इहैवायमिति जपति ॥ ९६ ॥

भूयसीश्चेच्छन् ॥ ९७ ॥

भूयसीश्च इच्छन् ॥ ९७ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये एकविंशतिमोऽध्यायः समाप्तः ।

# द्वाविंशो ऽध्यायः ।

अथैकाहाः ॥ १ ॥

उक्तान्याधानादीन्यध्वर्युवेदविहितानि पितृमेधान्तानि कर्माणीतानी छान्दोग्यवेदविहितान्येकाहादीनि सत्राणि व्याचिख्यासुराचार्य इदमाह अथैकाहा इति । तत्रायमथशब्दो ऽधिकारान्तरप्रकृत्यर्थः । वेदान्तरविहितानि कर्माणि व्याख्यातुमधिक्रियन्ते । अधिकारान्तरप्रवृत्तेः किं प्रयोजनमिति चेत् । इह चोदकपरिप्राप्ताङ्गपदार्थव्यतिरेकेणोद्गातुः कर्तृत्वं यथा स्यादिति । कुत एतदिति चेत् । उद्गातृवेदसमधीतत्वात्समाख्ययोद्गातुरेव कर्तृत्वमिति । ननु च सर्व एवैते उद्भिदादय उद्गातृवेदसमधीताः ? सत्यमेवं प्रधानेषु न समाख्यया कर्तृत्वम् । उद्भिदा यजेत पशुकाम इति सर्वं प्रत्युपदेशात् । अङ्गेषु त्वपूर्वेषु समाख्यया कर्तृत्वमिष्यते । यानि पुनश्चोदकपरिप्रापितान्यपि गृहीतकर्तृकाण्येवेति । एकाहा व्याख्यास्यन्त इति सूत्रार्थः । एकाहश्चोपलक्षणमहीनसत्राणामपि ॥ १ ॥

अवचने ऽग्निष्टोमः ॥ २ ॥

संस्थान्तरस्यावचने ऽग्निष्टोमो भवति । न्यायसूत्रमेतत् । प्राथम्यादविरोधान्नित्यत्वाच्चाग्निष्टोम एव भवति ॥ २ ॥

भूर्धेनुदक्षिणः ॥ ३ ॥

भूर्नामैकाहस्स धेनुदक्षिणो भवति । दक्षिणासंयोगेन धेनुविधानात्सकलस्य दाक्षिण्यस्य निवर्तिका धेनुः । अत्र च दक्षिणाभिमन्त्रणे मन्त्रो विपरिणस्यते ॥ ३ ॥

ज्योतिः ॥ ४ ॥

ज्योतिर्नामैकाह एव तत्र कश्चिद्विशेषः ॥ ४ ॥

गो आयुषी उक्थ्यौ ॥ ५ ॥

एको गौः अपर आयुः । तावुक्थ्यसंस्थौ भवतः ॥ ५ ॥

अभिजिद्विश्वजितौ ॥ ६ ॥

अपरावेकाहौ ॥ ६ ॥

सहस्रमभिजितो दक्षिणा ॥ ७ ॥

ततश्च यत्सहस्रसंख्यासंयोगेन श्रूयते तदत्र भवति । यथा-श्वदाश्वग्रहणं विश्वोनूयन्थ्याभिधातवीति ॥ ७ ॥

शताश्वं वा सहस्रम् ॥ ८ ॥

शतमश्वानां यस्मिन्सहस्रे तच्छताश्वं सहस्रम । तद्वाभि-जिद्दक्षिणेति विकल्पः ॥ ८ ॥

सहस्रं सर्ववेदसं विश्वजितः ॥ ९ ॥

सहस्रसर्ववेदसयोर्विश्वजिति विकल्पः । सर्ववेदसपक्षे इ-दमुच्यते ॥ ९ ॥

ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगावि-शेषात्सर्वेषाम् ॥ १० ॥

ज्येष्ठपुत्रस्य विभागं दत्वा भूमिशूद्रवर्जं ददाति । कुत एतत्स-र्वमनुष्याणां हि भूम्या योगो ऽविशिष्टः । धारणं चङ्क्रमणद्वारेण शूद्रस्य च शुश्रूषोपनततेति ॥ १० ॥

शूद्रदानं वा दर्शनाविरोधाभ्याम् ॥ ११ ॥

वाशब्दः पक्षव्यावृत्तौ । शूद्रस्य दानं भवति । दृश्यते हि शूद्रस्य दानं पुरुषमेधे स पुरुषं प्राचीदिग्घोतुरिति । न च विरोधो गर्भदासस्य । तस्माच्छूद्रो दीयत एव । अनेन च न्यायेन भू-मेरप्येकदेशदाने नैव विरोधः । क्वचिच्च दृश्यते सभूमि सपु-रुषमिति ॥ ११ ॥

द्रव्याभावात्तदन्तः ॥ १२ ॥

दक्षिणादानान्तो विश्वजिद्भवति । कुत एतत् । द्रव्याभावात् । सर्वस्वदाने सति द्रव्यमेव नास्तीति तदन्तं विश्वजित् ॥ १२ ॥

समाप्तिर्वा चोदितावभृथश्रुतेः ॥ १३ ॥

वाशब्दः पक्षव्यावृत्तौ । समाप्येत वा विश्वजित् । चोदितो ह्यसौ विश्वजिता यजेतेत्यपवर्गपर्यन्त आख्यातार्थः । अपि चावभृथश्रुतिर्भवति । अवभृथादुदेत्य वत्सच्छविं परिदधातीति वत्सच्छविपरिधाविधिपरे वाक्ये अवभृथं दर्शयति ॥ १३ ॥

दीक्षासु चापदेशात् ॥ १४ ॥

दीक्षासु च क्रतवभिनिर्वृत्त्यर्थं द्रव्यमपदिष्टम् । अतस्तद्व्यतिरिक्तं सर्वस्वमिति ॥ १४ ॥

न समत्वात् ॥ १५ ॥

नैतदेवं युक्तं विश्वजित्समाप्येतेति । समं ह्येतदुभयं विश्वजिता यजेतेति । समाप्तिश्चोदिता सर्वस्वञ्च ददातीति च सर्वस्वदानम् । अतो विरोधाद्विकल्प एव युक्तरूपः । एवं स्थिते आधीतेन व्याख्यायते । सममतादिति चेत् । नैतत्समम् । विश्वजिता यजेतेति पूर्वचोदना प्रधानचोदना च । सर्वस्वं ददातीति गुणचोदना पश्चात्कालवाचिनी च । तेन विरोधे सति अप्रमेयार्थो गृह्यतां न्याय्य इति । विकल्पश्च तुल्यत्वे भवति न चेह तुल्यत्वमित्युक्तम् ॥१५॥

विश्वजिति सहस्रसर्ववेदसयोर्विकल्प उक्तः । तत्र सन्देहः किं प्रागपि सहस्रात्सर्ववेदसं भवत्युतोर्ध्वं सहस्रादिति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

परिमाणे सर्वमविशेषात् ॥ १६ ॥

सर्वस्वपरिमाणे गृह्ये यस्य यावत्स्य तावदेव गृह्यते । सर्ववेदः सर्ववेदसमिति । तेन प्रागपि सहस्रात्सर्ववेदसं भवति ॥ १६ ॥

एवं प्राप्ते आह—

अधिकं वा प्रकृत्यनुग्रहात् ॥ १७ ॥

अधिकं वा सहस्रात्सर्ववेदसं ग्रहीतव्यम्। प्रकृत्य हि सर्ववेदसं सहस्रेणानुग्रहं दर्शयति । कोऽर्हति मनुष्यः सर्ववेदसं दातुं तस्मात्सहस्रं देयमिति। एतच्च सहस्राऽधिक उपपद्यते नेतरथा ॥१७॥

एवं तावदत्र सहस्राधिकं सर्ववेदसमित्युक्तम्, अन्यत्रापि प्रतिहर्त्रपच्छेदादौ सहस्राधिकं प्राप्त आह—

नानित्यत्वात् ॥ १८ ॥

नैतदेवम् सहस्रादधिकं सर्ववेदसमिति । न हि नित्ये कस्मिंश्चित्परिमाणविशेषे सर्ववेदसशब्दः प्रसिद्धः । यद्धस्य वेदः सर्वं तत्सर्ववेदसमिति ॥ १८ ॥

कर्मशब्दाच ॥ १९ ॥

अस्तिचायं लोके व्यापारशब्दः सर्वमनेन दत्तमिति । तस्मात्त्यागेऽपि सहस्रात्सर्वस्वमिति । विश्वजति तु लिङ्गेन व्यवस्था ॥१९॥

अवभृथादुदेत्य रोहिण्यौ वत्सछव्यौ सकर्णपुच्छावछते परिदधाते ॥ २० ॥

अवभृथादुत्थाय रोहिण्यौ वत्सच्छव्यौ सकर्णपुच्छापच्छिन्ने परिदधाते ॥ २० ॥

द्वादशरात्रं परिवसत्युखावदग्निं बिभ्रत् ॥ २१ ॥

उखा यदिति वैणवीम् ॥ २१ ॥

औदुम्बरीं वा ॥ २२ ॥

उष्णीषं च ॥ २३ ॥

तिस्रस्तिस्रः ॥ २४ ॥

द्वादशरात्रस्य विभागः ॥ २४ ॥

औदुम्बरे मूलफलभक्षः ॥ २५ ॥

औदुम्बरबहुले देशे मूलफलभक्षस्तिस्रो रात्रीर्वसति ॥ २५ ॥

निषादे ॥ २६ ॥

निषादानां मध्ये अपरास्तिस्रो वसति ॥ २६ ॥

जने ॥ २७ ॥

तिस्रो रात्रीर्वसति ॥ २७ ॥

समाने जने ॥ २८ ॥

अपरास्तिस्र ॥ २८ ॥

अप्रसिद्धत्वात्स्वयमेवाह—

वैश्यो जनो राजन्यः समानजनः श्रुतेः ॥२९॥

ग्राम्यभोजनं निषादानां मृन्मयापानं च ॥३०॥

निषादनामप्येष नियम ॥ ३० ॥

संवत्सरं न याचेत ॥ ३१ ॥

किं चिदपि ॥ ३१ ॥

दीयमानं न प्रत्याचक्षीत ॥ ३२ ॥

संवत्सरमेव ॥ ३२ ॥

यमाभ्यां वा यजेत पूर्वापराभ्याम् ॥ ३३ ॥

यमाभ्यां वा ऽभिजिद्विश्वजिद्भ्यां यजने। तत्र पूर्वे कृत्वा ऽप-
र. क्रियते। पौर्वापर्यं हि यमशब्दो लोके दृष्ट ॥ ३३ ॥

एव प्राप्त आह—

युगपद्वा ॥ ३४ ॥

वाशब्द' पक्षव्यावृत्तौ। न पौर्वापर्येण किं तर्हि युगपदेव न हि
कर्मणो. पौर्वापर्ये यमशब्दो वर्तते। तस्मात्सहैव क्रिया। यत्तु लोक

पौर्वापर्येऽपि यमशब्दो दृश्यते । तस्मादन्यथोपपद्यत इति यमयागपक्षे कर्म निरूप्यते ॥ ३४ ॥

दक्षिणोत्तरे देवयजने ॥ ३५ ॥

भवतः ॥ ३५ ॥

तत्र च—

दक्षिणमभिजितः ॥ ३६ ॥

भवति ॥ ३६ ॥

पत्नीशालमुत्तरे ॥ ३७ ॥

देवयजने भवति ॥ ३७ ॥

नानर्त्विजः ॥ ३८ ॥

नाना पृथक्पृथगृत्विजो भवन्ति देशभेदात् ॥ ३८ ॥

त एव वा प्रभुत्वात् ॥ ३९ ॥

त एव वा ऋत्विजो भवन्ति न पृथक्त्वेन । प्रभवन्ति हि ते उभयोरपि देवयजनयोः । दक्षिणेऽध्वर्युराध्वर्यवं करोति । विरोधानुत्तर प्रतिप्रस्थाता । उक्तमाचार्येण वचनविरोधाऽन्यामन्य इति । इह च युगपत्प्रवृत्तौ षोडशसंख्यैव ऋत्विग्विषया भवति । क्रतुद्वयाभिनिर्वृत्त्यर्थतया ब्रह्मा भिद्यते तथोद्गात्रादयः । तस्मादेवं क्रतुद्वयमपि निर्वोढव्यमिति ॥ ३९ ॥

बहिर्वेदिकानि समानानि ॥ ४० ॥

बहिर्वेदिकानि यान्यङ्गानि दीक्षणीयादीनि तानि समानानि भवन्ति । अगृह्यमाणविशेषत्वात् ॥ ४० ॥

नानेतराणि ॥ ४१ ॥

यानि पुनरन्तर्वेदिकानि तानि पृथग्भवन्ति । यथाग्नीषोमीयादीनि गृह्यते एव हि विशेषस्तत्र ॥ ४१ ॥

कर्मसन्निपाते पूर्वं पूर्वमभिजितः ॥ ४२ ॥

कर्मभवति । यथा सयजमाना धिष्ण्यानुपतिष्ठन्त इति ॥४२॥

पृथक्सहस्रे दक्षिणा ॥ ४३ ॥

दक्षिणेऽपि देवयजने सहस्रमुत्तरेऽपीति । सहस्रयुक्तं चोभयो- र्भवति । त्रैधातवी तु बहिर्वेदिकीति तन्त्रेण ॥ ४३ ॥

सर्वजितस्समहाव्रतः संवत्सरदीक्षः सप्ताहा-

भिप्लवस्तिस्र उपसदः षड्वा ॥ ४४ ॥

सर्वजिन्नामैकाहः स समहाव्रतो भवति । संवत्सरं दीक्षा भवन्ति । संवत्सरादूर्ध्वं सप्ताहेऽतीते सुत्या भवति । तत्र च तिस्र उपसदो भवन्ति चतस्रो दीक्षाः । षड्वा उपसदो भवन्ति ॥ ४४ ॥

एका दीक्षा ४५ ॥

अभिवृद्धा दीक्षाः ॥ ४६ ॥

भवन्ति । उपसदां तु विकल्पः स्थित एव ॥ ४६ ॥

शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥ ४७ ॥

शतं गवामश्वरथं चैकमग्नौ चीयमाने अध्वर्यवे ददाति । तस्य प्राग्धिष्ण्यचयनात् । चीयमान इति श्रवणात् । तत्र चाश्वाहुते- रपकर्षः क्रियते ॥ ४७ ॥

उद्गात्रे व्रतकाले ॥ ४८ ॥

चावाश्वरथं ददाति ॥ ४८ ॥

होत्रे शस्त्रकाले ॥ ४९ ॥

व्रतसमनन्तरं यच्छस्त्रं तत्काले होत्रे ददाति ॥ ४९ ॥

ततो ब्रह्मणे ॥ ५० ॥

तत्समनन्तरमेव च ब्रह्मणे ददाति । यतादयरपमित्य-नुवर्तते ॥ ५० ॥

दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥ ५१ ॥

ददाति । प्रकृतेभ्य एव मा भूदिति सर्वग्रहणम् ॥ ५१ ॥

साहस्राश्चत्वारः सहस्रदक्षिणाः ॥ ५२ ॥

साहस्रा इति चतुर्णामपि सामान्यसंज्ञा । सहस्रदक्षिणास्ते भवन्ति ॥ ५२ ॥

तेषां च—

तृतीय उक्थ्यः ॥ ५३ ॥

संस्थो भवति । ब्राह्मणे हि सर्वज्योतिस्तृतीय उक्थसंस्थः पठ्यते ॥ ५३ ॥

संज्ञाविशेषमाह—

ज्योतिर्विश्वज्योतिः सर्वज्योतिस्त्रिरात्रसम्मितः॥५४॥

इति ॥ ५४ ॥

पट्साद्यस्काः ॥ ५५ ॥

साद्यस्कसंज्ञकाः पट्क्रतवो भवन्ति ॥ ५५ ॥

स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः ॥ ५६ ॥

साद्यस्काख्यः क्रतुर्भवति ॥ ५६ ॥

रुक्मललाटोऽश्वः श्वेतो दक्षिणा ॥ ५७ ॥

अश्वाभावेगौः ॥ ५८ ॥

दक्षिणा भवति ॥ ५८ ॥

तमुद्गात्रे ददाति ॥ ५९ ॥

समर्थं गां चोद्गात्रे ददाति ॥ ५९ ॥

प्राकृतस्यानिवृत्तिरुद्गातृयोगात् ॥ ६० ॥

प्राकृतस्य दक्षिणा जातस्य च न निवृत्तिः । कुत एतत् । उद्गातृयोगादश्वस्य ॥ ६० ॥

एवं प्राप्त आह—

निवृत्तिः क्रतुयोगात् ॥ ६१ ॥

निवृत्तिः प्राकृतस्य भवति । कुत एतत् । क्रतुना हि युज्यते च तस्याश्वः श्वेतोदक्षिणेति । तेन यद्दक्षिणायुक्तं तन्निवर्तत इति ॥६१॥

वचनादेकस्य ॥ ६२ ॥

यत्तूक्तमुद्गात्रे ददातीति । तत्क्रतुयोगेपि वचनादित्यदोषः ॥६२॥

दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥६३॥

साद्यस्को भवति । एषामत्राधिकार इत्यर्थः ॥ ६३ ॥

अश्वैकत्रिंशादक्षिणा ऽश्वो वा ॥ ६४ ॥

ततश्च विकल्पः ॥ ६४ ॥

हीनस्यानुक्रीः ॥ ६५ ॥

अनुक्रीर्नाम साद्यस्कः स हीनस्य भवति । यः कर्मणा हीन इव तस्यासौ भवति ॥ ६५ ॥

सारस्वः शतं दक्षिणाश्वो वा ॥ ६६ ॥

एेति विकल्पः ॥ ६६ ॥

विश्वजिच्छिल्पः ॥ ६७ ॥

नामसाद्यस्कः ॥ ६७ ॥

तत्र विशेषः—

यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात् ॥ ६८ ॥

दक्षिणा । यद्यद्द्रव्यं यस्मिन्यस्मिन् जनपदे प्रायोवृत्त्या तेषां यथोत्साह दानम् ॥६८॥

यथा द्रव्यमाचष्टे—

आजानेयानपरजने ॥ ६९ ॥

आजानेयानश्वानपरजने ददाति ॥ ६९ ॥

प्राच्येषु हस्तिनः ॥ ७० ॥

ददाति ॥ ७० ॥

अश्वतरीरथानुदीच्येषु ॥ ७१ ॥

वेसरीयुक्तान्रथानुदीच्येषु ददाति ॥ ७१ ॥

सर्वस्वप्रतिनिधिर्वा ॥ ७२ ॥

दीयते ॥ ७२ ॥

अप्रसिद्धत्वादुच्यते—

धेन्वडुनत्सीरधान्यपल्यदासमिथुनमहानसा-
रोहणविमितशयनानि ॥ ७३ ॥

धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि । महानसोपयोगिकं द्रव्यं ताम्रवर्धादि महानसशब्देनोच्यते । आरोहणं च युग्यम् । विमितशयने प्रसिद्ध एव विमितं गृहम् ॥ ७३ ॥

श्येनो ऽभिचरतः ॥ ७४ ॥

श्येनो नाम साधकः पश्यन्सं ऽभिचरतो भवति ॥७४॥

यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥ ७५ ॥

भवति ॥ ७५ ॥

विदाहि वा ॥ ७६ ॥

यत्र जाता ओषधयो दह्यन्ते अग्न्यादिना ॥ ७६ ॥

वृक्षस्तम्बच्छिन्नम् ॥ ७७ ॥

यत्र वृक्षास्तम्बाश्च छिन्नास्तद्वृक्षस्तम्बच्छिन्नम् ॥ ७७ ॥

वा निर्व्रस्कम् ॥ ७८ ॥

वा निर्वृश्चणमूला वृक्षा भवन्ति। वा अनिर्वृश्चणमूलाः। अपरे तु सूत्रद्वयमन्यथा वर्णयन्ति । वृक्षस्तम्बच्छिन्नं वा अच्छिन्नं वा यदा छेदनं तदा निर्वृश्चणमूला वृक्षा भवन्ति ॥ ७८ ॥

दक्षिणाप्रवणम् ॥ ७९ ॥

देवयजनं भवति ॥ ७९ ॥

अचषालो यूपः स्फ्याग्रः ॥ ८० ॥

स्फ्यस्येवाग्रं भवति ॥ ८० ॥

तैल्वको बाधको वा ॥ ८१ ॥

यूपो भवति । तिल्वकः प्रसिद्धः बाधको यः गिरिमालक इति प्रसिद्धः ॥ ८१ ॥

इध्मो वैभीदकः ॥ ८२ ॥

भवति ॥ ८२ ॥

शरमयं बर्हिः ॥ ८३ ॥

अधिषवणे शम्यम्ये ॥ ८४ ॥

शम्यं वेगानसोढं तत्सम्बन्धिनी अधिषवणे फलके ॥ ८४ ॥

रथौ हविर्धाने ॥ ८५ ॥

सामर्थ्यात् ॥ ८५ ॥

लोहिनः सवनीयोऽग्नये रुद्रवते ॥ ८६ ॥

भवति ॥ ८६ ॥

लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥ ८७ ॥

लोहिते वाससी येषां ते लोहितवाससः लोहितोष्णीषाश्च प्रचरन्त्यृत्विजः ॥ ८७ ॥

निवीताः ॥ ८८ ॥

कण्ठावसक्तयज्ञोपवीताः ॥ ८८ ॥

उज्ज्यधन्वानः ॥ ८९ ॥

उद्गता ज्या धनुषो येषां ते उज्ज्यधन्वानः । आरोपितधन्वान इत्यर्थः ॥ ८९ ॥

कलापिनः ॥ ९० ॥

कलापशब्देन भस्त्रोच्यते । तद्वन्त इत्यर्थः ॥ ९० ॥

काणखोरकूटबण्डाः क्रुतमिश्रा नव नव दक्षिणा ददाति लिङ्गानाम् ॥ ९१ ॥

काणाः प्रसिद्धाः । खोरा लङ्गाः । कूटबण्डाः छिन्नपुच्छभग्नशृङ्गाः । क्रुतामिश्राः ज्वरगृहीतमिश्रा इत्यर्थः । नव काणानयति । नव खोरानित्येवमाद्विश्रवणात् ॥ ९१ ॥

पुरुषाणां वा दानाधिकारात् ॥ ९२ ॥

पुरुषाणां वा नवसंख्या सम्बन्धः । प्रतिपुरुषम् नव नव ददातीत्यर्थः ॥ ९२ ॥

प्राकृतस्य वा नयनं भेदेन ॥ ९३ ॥

प्राकृतस्य वा दक्षिणाजातस्य एतानि लिङ्गानि भवन्ति तेषां च नयनं भेदेन । एवं प्रकृतिरनुगृहीता भवति । नव नव नयतीति च यथा श्रुतम् ॥ ९३ ॥

दक्षिणाकाले कण्टकैरेना निरुजेयुः ॥ ९४ ॥

समाप्यर्योद्गातार ॥ ९४ ॥

उपतप्तास्वनुपतप्तानामाज्यम् ॥ ९५ ॥

उपतप्तासु या अनुपतप्ता तदीयमाज्य भवति ॥ ९५ ॥

साद्यस्कधर्मा हिरण्यस्रग्वत् ॥ ९६ ॥

साद्यस्कशब्देनात्र श्येनोभिधीयते । तस्य धर्मा लोहितोष्णी-षादय हिरण्यस्रग्वद्यस्योपयुक्त तत्तस्य भवति ॥ ९६ ॥

एकत्रिके दक्षिणा पष्टिशतं षड्वा ॥ ९७ ॥

एकत्रिक एष साद्यस्क तत्र षट्पष्टिशत दक्षिणा ॥९७॥

साद्यस्कधर्माः ॥ ९८ ॥

व्याख्यास्यन्त इति सूत्रशेष ॥ ९८ ॥

दीक्षादि सद्यः सर्वं क्रियते ॥ ९९ ॥

ऋजु ॥ ९९ ॥

सह पशूनालभते ॥ १०० ॥

अग्नीषोमीयसवनीयानूबन्ध्यान् । सद्यस्त्वे च सति सौत्येऽहनि सर्वं कर्तव्यम । तत्र स्थानित्वात्सवनीयकाल एव पशूनामालम्भ तदीय एव स्थाने युक्त । स्वस्थान च सवनीयो न जहाति । अग्नी-षोमीयस्तु स्वस्थानादुत्कालित परतो गच्छति ॥ १०० ॥

पुरोडाशो वाग्नीषोमीयस्थाने ॥ १०१ ॥

अग्नीषोमीयोऽन पशुरित्यग्नीषोमीय पुरोडाशो वा भवति। वा न वेति ॥ १०१ ॥

वपान्ते सुब्रह्मण्यानिवृत्तिः ॥ १०२ ॥

वपान्ते या सुब्रह्मण्या सा न भवति ॥ १०२ ॥

प्रतिदिशं वसन्त्यृत्विजः ॥ १०३ ॥

अतश्च पूर्वस्मिन्नहनि ऋत्विग्वरणं कर्तव्यम् ॥ १०३ ॥

पुरस्ताद्योजने होता ॥ १०४ ॥

वसतीतिशेष ॥ १०४ ॥

इतरे क्रोशप्रस्रवायेन क्रोशप्रस्रवायेन ॥ १०५ ॥

इतर उद्गात्रादयः ॥ १०५ ॥

उद्गातोत्तरतः ॥ १०६ ॥

वसति त्रिभि' क्रोशै ॥ १०६ ॥

अध्वर्युः पश्चाद् ब्रह्मा दक्षिणतः ॥ १०७ ॥

वसति ॥ १०७ ॥

चतुर्भिरश्वरथैः सक्षीरदृतिभिरावहन्त्येनान् ॥ १०८ ॥

होत्रादीन् ॥ १०८ ॥

यथाक्रोशमश्वाः ॥ १०९ ॥

यस्य यावन्त. क्रोशास्तस्य तावन्तोऽश्वा भवन्ति रथे ॥ १०९ ॥

ततो नवनीतमाज्यम् ॥ ११० ॥

ततो दृतेर्यज्जातं नवनीतं तदाज्यं भवति ॥ ११० ॥

सोमक्रयणस्त्रिवत्सः साण्डः ॥ १११ ॥

त्रिवत्स. त्रिवर्ष ॥ १११ ॥

वेदिरुर्वरा ॥ ११२ ॥

सस्यमालिनी भवति ॥ ११२ ॥

व्रीहीन्यवान्वा पक्वानध्यवस्यति ॥ ११३ ॥

खल उत्तरवेदिः ॥ ११४ ॥

भवति ॥ ११४ ॥

धान्यखलः प्रत्ययात् ॥ ११५ ॥

प्रयोगप्रत्ययौ तत्रैव भवतः ॥ ११५ ॥

ये वेदिमभितस्तानुत्तरवेदिदेशे मृद्नन्ति ॥ ११६ ॥

धान्यखले सति सन्निधानात् । वेदिमभितो ये सस्य विशेषास्तानुत्तरवेदिदेशे मृद्नन्ति ॥ ११६ ॥

पांसुखलो वा प्रत्ययाविशेषात् प्रकृत्यनुग्रहाच्च ॥ ११७ ॥

वाशब्दः पक्षान्तरपरिग्रहे । पांसु खले चोत्तरवेदिर्भवति । तत्रापि हि खलशब्दप्रयोगप्रत्ययौस्त एव । अपि चैवं प्रकृतिरनुगृहीता भवति ॥ ११७ ॥

खलेवाली यूपो लाङ्गलेषा ॥ ११८ ॥

धारण यया क्रियते सा खलेवाली यूपकार्ये भवति । सा च पूर्वमेव निहिता द्रष्टव्या ॥ ११८ ॥

कलापी चषालार्थे ॥ ११९ ॥

कलापी च तृणपूलकः चषालार्थे भवति ॥ ११९ ॥

निर्वृत्तग्रहणात् प्राकृतनिवृत्तिः ॥ १२० ॥

निर्वृत्ता हि खलेवाली यूपकार्ये विधीयते । अतश्च प्राकृतानां यूपधर्माणां निर्वृत्तिर्भवति । यूपशब्दो हि संस्कारनिमित्तः । छेदनादयश्च स्वर्वग्रहनपर्यन्ताः यूपस्वरूपप्रयुक्ताः न कार्यप्रयुक्ताः । तस्मात्साधूक्तं निर्वृत्तग्रहणात्प्राकृतनिवृत्तिरिति ॥ १२० ॥

आवेशादनिवृत्तिः ॥ १२१ ॥

स्यादेतदेवं यदि कार्यं विशिष्टा धर्मा भवेयुः न चैते कार्यविशिष्टाः । स्वरूपमयुक्ता एवैत इति । न हि यूपशब्द आकृतिवचनः । अलौकिकत्वात्संस्कारनिमित्तः । सत्सु संस्कारेषु प्रयोगात् ॥१२१॥

उर्वरादि वा द्वितीयस्य सन्निधेः ॥ १२२ ॥

उर्वरादिधर्मजातं द्वितीयस्य भवति । तत्सन्निधौ हि तत्पठ्यत इति । वा सर्वेषां भवति । सामर्थ्यात् प्रकृत्य श्रवणात् । यत्तु सन्निधानाद्द्वितीयस्येति । तत्रोच्यतेऽवश्यमेव पठ्यमानं कस्य चिदेव सन्निहितं भवतीति ॥ १२२ ॥

व्रात्यस्तोमाश्चत्वारः ॥ १२३ ॥

व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति । व्रात्याः प्रसिद्धा एव । त्रिपुरुषं पतितसावित्रीकाः । प्रायश्चित्तार्थत्वाच्च लौकिकेऽग्नौ भवन्ति । न ह्येतैराधानं प्रयुज्यते । अतदङ्गत्वात् । तदुक्तमाचार्येण स्वपतीदि प्रकृत्य लौकिक इति ॥ १२३ ॥

द्वितीय उक्थ्यः ॥ १२४ ॥

भवति ॥ १२४ ॥

व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन् ॥ १२५ ॥

सम्पादनं च गायननर्तकादीनाम् । तेषां प्रथमे ऽधिकारः ॥१२५॥

द्वितीयेन निन्दिता नृशंसाः ॥ १२६ ॥

नृशंसत्वेन ये निन्दितास्तेषां द्वितीये ऽधिकारः ॥ १२६ ॥

तृतीयेन कनिष्ठाः ॥ १२७ ॥

कनिष्ठा लघवः ॥ १२७ ॥

ज्येष्ठाश्चतुर्थेन ॥ १२८ ॥

अधिक्रीयन्ते ॥ १२८ ॥

ज्येष्ठपदार्थमाह—

अपेतप्रजनना स्थविरास्तदाख्यास्तेषां यो नृशंसतमः स्यादद्रव्यवत्तमो वानूचानतमो वा तस्य गार्हपत्ये दीक्षेरन् ॥ १२९ ॥

स गृहपतिः कर्तव्य ॥ १२९ ॥

तस्य भक्षमनुभक्षयन्त आसीरन् ॥ १३० ॥

तस्य गृहपतेर्भक्षमन्वितरे भक्षयन्ति । अतश्च गम्यते उभयसंस्कारोऽयं द्रव्यस्य पुरुषस्य च ॥ १३० ॥

व्रात्यधनानि भवन्ति ॥ १३१ ॥

वक्ष्यमाणानि ॥ १३१ ॥

तिर्यङ्नद्धमुष्णीषम् ॥ १३२ ॥

प्रतोद ॥ १३२ ॥

ज्याहोडोऽयोग्यं धनुस्तदाख्यम्[१] ॥ १३३ ॥

ज्याहासेन यदयोग्यं धनुः तज्ज्याहोडाख्यम् ॥ १३३ ॥

वासः कृष्णशं कद्रु ॥ १३४ ॥

कृष्णमसितं येन तत्करणे कृष्णशमित्युच्यते । कृष्णसूत्रोतमित्यर्थः । तत्कद्वाख्यम ॥ १३४ ॥

अकृष्णं कृष्णदशं वा तदाख्यम् ॥ १३५ ॥

वा अकृष्णं कृष्णाभिर्दशाभिस्तद्युतं कद्र्वाख्यम । उभयत्र हि कद्रुशब्द प्रसिद्ध ॥ १३५ ॥

---

१ ज्यारहितः केवलो धनुर्दण्डो ज्याहोड उच्यते ।

फलकास्तीर्णो विपथः ॥ १३६ ॥

फलकैरास्तीर्णो विपियः यो वर्त्मना न गच्छति ॥ १३६ ॥

अश्वाश्वतराभ्यां कम्राभ्यां युक्तः स्यादित्येके ॥ १३७॥

एके आचार्याः कम्राभ्यामभ्वयुक्तं रथमिच्छन्ति। एकीयग्रहणं विकल्पार्थम् ॥ १३७॥

निष्को राजतः ॥ १३८ ॥

निष्क आभरणविशेषः। स राजतो भवति ॥ १३८॥

अजिने पार्श्वसहिते कृष्णवलक्षे आविके ॥ १३९ ॥

आविके चर्मणी पार्श्वसंलग्ने। कृष्णसितवती ॥ १३९ ॥

तद्गृहपतेः ॥ १४० ॥

धनम् ॥ १४० ॥

एवमेवाजिनानीतरेषाम् ॥ १४१ ॥

इतरेषां व्याख्यानामेवमेवाजिनानि भवन्ति ॥ १४१ ॥

[1]दामतूपाणि बल्कूकान्तानि द्विचूडान्याविकानि वासांसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥ १४२ ॥

दामतूपाणि द्विचूडानि लोहितान्तानि कृष्णान्तानि वा बल्कूकान्तानीत्याख्या ॥ १४२ ॥

द्वे द्वे दामनी उपानहौ च कर्णिन्यौ कृष्णे

---

१ तूपशब्देन धस्त्रदशोच्यते। दामानीव दशा येषां तानि। बल्कूकः कृष्णो लोहितो वा वर्णः, सोऽन्ते येषां तानि। द्वे चूडे येषां तानीत्यादि।

स्यातामित्येके ॥ १४३ ॥

एके अकृष्णे इति ॥ १४३ ॥

मागधदेशीयाय ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥ १४४ ॥

सर्वे एव व्रात्याः मागधदेशनिवासी यः स ब्रह्मबन्धुभिर्जायते । स मागधदेशीयब्रह्मबन्धुः तस्मै दद्युः । अपरे तु मागधं गेयमाहुः । तत्र यो देशीयः ईषदसमाप्तौ देशीय इत्युच्यते तस्मै दद्युः ॥ १४४ ॥

अविरतेभ्यो वा व्रात्यचरणात् ॥ १४५ ॥

अथवा ये व्रात्यचरणादविरतास्तेभ्यो दद्युः । एवं हि श्रूयते ॥१४५॥

तेष्वेव मृजाना यन्तीति श्रुतेः ॥ १४६ ॥

तेष्वेव व्रात्येषु मृजाना आत्मानां शोधयन्तीति ॥ १४६ ॥

त्रयस्त्रिंशतं त्रयस्त्रिंशतं दक्षिणा दद्युः ॥१४७॥

एकैकाः ॥ १४७ ॥

द्विगुणा गृहपतिरित्येके ॥ १४८ ॥

एके आचार्या गृहपतिर्द्विगुणा ददातीतीच्छन्ति ॥ १४८ ॥

व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥ १४९ ॥

विरमतिरुपरम उच्यते ॥ १४९ ॥

व्यवहार्या भवन्ति ॥ १५० ॥

अतः परम् ॥ १५० ॥

अग्निष्टुत ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूत इव मन्येत ॥ १५१ ॥

अग्निष्टुन्नामैकाहः । स वीर्यान्नाद्यब्रह्मवर्चसप्रतिष्ठाकामानां भवति । यश्चापूत इव मन्यते । यश्चात्मानं कर्मदोषादपूतमिव मन्यते ॥ १५१ ॥

यज्ञविभ्रष्टस्य च ॥ १५२ ॥

अग्निष्टुद्भवति ॥ १५२ ॥

यस्माद्वा विभ्रंशेरन् ॥ १५३ ॥

तस्य वा भवतीति विकल्पः । प्रतिष्ठाकामानामग्निष्टुतां भेद इत्युक्तमेव ॥ १५३ ॥

छान्दोग्ये विशेषो यथाकामम् ॥ १५४ ॥

भवति ॥ १५४ ॥

सुब्रह्मण्याग्नेयी ॥ १५५ ॥

अत्राग्निष्टुत्सु सुब्रह्मण्याग्नेयी भवति ॥ १५५ ॥

एवं यथास्तुत् ॥ १५६ ॥

इन्द्रस्तुतिरैन्द्री सुब्रह्मण्या सूर्यस्तुतिः सौरी । इन्द्रस्तुदादयस्तु सार्वमेधिकाः ॥ १५६ ॥

सर्वमेके ॥ १५७ ॥

अग्निष्टुत्याग्नेयमिच्छन्ति । प्रकृतौ यत्रेन्द्रपदं तत्राग्निपदप्रयोग इति । एके तन्नेच्छन्ति । उक्तविशेषात् उक्तो हि विधिरत्र । तस्याग्नेय्या महा भवन्त्याग्नेय्यः पुरोरुच इत्येवं ग्रहदेवतास्थाने अग्निष्टुत्यग्निपदमूह्यते । पुरोरुचस्तु अस्या जरासम्बन्धिनः । एवमिन्द्रस्तुदादिष्वपि उत्तरानुवाक्पुरोरुचो भवन्ति ॥ १५७ ॥

यथोत्साहं दद्यात् आग्नेयानामनडुद्भिर्-
व्याश्वाजानाम् ॥ १५८ ॥

अग्निष्टुति ॥ १५८ ॥

त्रिवृताश्चत्वारः ॥ १५९ ॥

क्रतवो भवन्ति ॥ १५९ ॥

अनिरुक्तप्रातः सवनः प्रथमः ॥ १६० ॥

ईप्सुयज्ञः ॥ १६१ ॥

तस्येप्सु यज्ञ इति विशेषसंज्ञा ॥ १६१ ॥

ग्रामकामस्य वा ॥ १६२ ॥

भवति ॥ १६२ ॥

दक्षिणाश्वरथश्चतुर्युक् श्यावो ऽन्यतमः ॥ १६३ ॥

श्यावः श्यामवर्णः ॥ १६३ ॥

तेजो ब्रह्मवर्चसपुरोधाकामस्य बृहस्पतिसवः ॥ १६४ ॥

भवति। बृहस्पतिसव इति विशेषसंज्ञास्य ॥ १६४ ॥

देवसूहवींऽपि निर्वपति ॥ १६५ ॥

अत्र ॥ १६५ ॥

अतिग्राह्यवदग्रहं गृह्णाति बृहस्पते अति यद-
र्य इति ॥ १६६ ॥

अतिग्राह्यवदिति ग्रहणहोमकालौ लभ्येते ॥ १६६ ॥

उपालम्भ्यो बार्हस्पत्यः ॥ १६७ ॥

द्वितीयः सवनीयो भवति ॥ १६७ ॥

निहितेषु नाराशंसेषु प्रातःसवनेऽनपाकु-
र्वन्नेकादश दक्षिणा व्यादिशति ॥ १६८ ॥

नाराशंसेषु चमसेषु प्रातः सवने स्थापितेषु अपृथक् कुर्वन्नेवैकादश दक्षिणा व्यादिशति ऋत्विग्भ्यः ॥ १६८ ॥

अश्वद्वादशा माध्यन्दिने ॥ १६९ ॥

एतस्मिन्नेव काले व्यादिशति ॥ १६९ ॥

अपाकरोत्युभयीः ॥ १७० ॥

गोमण्डलात् । अत्र चाश्वाहुतेरपकर्षः दास्यसियुक्तत्वात् ॥ १७० ॥

एकादशतृतीयसवने ॥ १७१ ॥

व्यादिशत्येतस्मिन्नेव काले तृतीयसवने व्यादिष्टानाम् ॥ १७१ ॥

अनूबन्ध्यवपाहोमान्ते ऽपाकरणम् ॥ १७२ ॥

कर्तव्यम् ॥ १७२ ॥

अतिक्रमणं च सर्वासाम् ॥ १७३ ॥

दक्षिणापथेन चषद्वात्तस्मिन्नेव काले ॥ १७३ ॥

एकादशैकादश वा शतानि स्युः ॥ १७४ ॥

सहस्राणि वा ॥ १७५ ॥

-चेति विकल्पः ॥ १७६ ॥

अश्वस्त्वेव माध्यन्दिनेऽधिकः ॥ १७६ ॥

भवति ॥ १७६ ॥

वाजपेयवदाज्येनाभिषिच्यते कृष्णाजिने ॥ १७७ ॥

वाजपेयवदिति माहेन्द्रात्पूर्वम् ॥ १७७ ॥

शुक्रामन्थिसंस्रवेण वा ॥ १७८ ॥

अभिषिच्यते ॥ १७८ ॥

अन्यतस्त्वभिवाद्यः ॥ १७९ ॥

अन्यत एवाभिवाद्यो भवति ॥ १७९ ॥

प्रत्यवरोही स्यात् ॥ १८० ॥

अतश्चाभ्युत्थायीत्यर्थः । अभ्युत्थेयस्यापि ॥ १८० ॥

स्थपतिरित्येनं ब्रूयुः ॥ १८१ ॥

जनाः ॥ १८१ ॥

सराजानो ब्राह्मणा यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥ १८२ ॥

बृहस्पतिसवेन ॥ १८२ ॥

इषुःश्येनवदसद्यः ॥ १८३ ॥

समानमितरच्छ्येनेनेति वचनात् । इयांस्तु विशेषः । सद्यो न भवति ॥ १८३ ॥

मरणकामस्य सर्वस्वारः कृतान्नदक्षिणः ॥१८४॥

क्रतुर्भवति । तस्य च कृतान्नं दक्षिणा ॥ १८४ ॥

दीक्षायवजिघ्रत्येव भक्षान् ॥ १८५ ॥

भक्षयति ॥ १८५ ॥

अप्स्ववहरणमसोमानाम् ॥ १८६ ॥

सोमवर्जितानामप्स्ववहरणम् ॥ १८६ ॥

आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥१८७॥

आर्भवमिति तृतीयसवनपवमानमुच्यते । तस्मिंस्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणाशिराः प्रावृतः संविशति ॥ १८७ ॥

तदेव म्रियते जीवेच्चेद्दैर्घश्रवसः स्वासु य-
ज्ञायज्ञियस्थाने कुर्युः ॥ १८८ ॥

जीवेति चेत् दैर्घश्रवसः साम स्वासु योनिषासु यज्ञायज्ञियस्य स्थाने कार्यम् ॥ १८८ ॥

मृते तदन्तमर्थाभावात् ॥ १८९ ॥

मृते यजमाने तदन्तमेव कर्म भवति । कुत एतत् । कार्याभावादित्यर्थः ॥ १८९ ॥

यजमानपात्रजीपहव्यौ प्याहवनीये प्रास्य
यथार्थं गच्छेयुः ॥ १९० ॥

अन्यत्रैवमेव हि दृष्टत्वादासदनाद्याहवनीय इति ॥ १९० ॥

समाप्तिर्वोभयचोदनात् ॥ १९१ ॥

वाशब्दः पक्षव्यावृत्तौ । समाप्तिः कर्तव्या न यजमानपात्रजीपादीनां प्रतिपत्तिः । उभयं हि चोदितम् । सर्वस्वारेण यजेतेति प्रारम्भः समाप्तिश्च । उपक्रमप्रभृत्यपवर्गपर्यन्तो ह्याख्यातार्थः ॥१९१॥

समिष्टयजुरन्ते सं त्वा हिन्वन्तीति
दार्वाहरणम् ॥ १९२ ॥

समिष्टयजुष्षु हुतेषु सं त्वा हिन्वन्तीत्यनेन मन्त्रेण आसन्द्यर्थे दार्वाहरणम् ॥ १९२ ॥

सं त्वा ततक्षुरिति तक्षणम् ॥ १९३ ॥

तस्यैव दारुणः ॥ १९३ ॥

सं त्वा रिणन्तीति प्रक्षालनम् ॥ १९४ ॥

आसन्द्याः ॥ १९४ ॥

सं त्वा शिशान्तीत्यासन्दीविवानम् ॥ १९५ ॥

कर्तव्यम् ॥ १९५ ॥

आसन्द्यैनमवभृथ॑ हृत्वाभ्युक्ष्य सोमोपनह-
नेन प्रच्छाद्यानूबन्ध्यवपाहोमान्ते दक्षिणस्यां
वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ १९६ ॥

अभ्युक्षणं च स्नानकार्यं ॥ १९६ ॥

मृताहिताग्न्यावृच्च ॥ १९७ ॥

कर्तव्यम् ॥ १९७ ॥

अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्रा-
द्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता
त्रिर्यामेन परिगायन्नाके सुपर्णमित्येतस्याम् ॥ १९८ ॥

अनूबन्ध्यान्ते वेदिमध्यमग्नीनाहृत्य आग्नीध्राद्दक्षिणतो दक्षिणाशिरसं चितावाहितमुद्गाता त्रिर्यामेन साम्ना त्रिः परिगायन्नाके सुपर्णमित्येतस्यामृचि । प्रस्तोतु. परिसामस्वधिकार इत्युद्गातृग्रहणम् ॥ १९८ ॥

धूमप्राप्ते त्वेषस्ते धूम ऋण्वतीति ॥ १९९ ॥

परिगायेत् ॥ १९९ ॥

अग्निप्राप्तमग्ने मृड महां३ असीत्य-
न्यतरेण ॥ २०० ॥

परिगायेत् ॥ २०० ॥

उदवसानीयान्ते वा सर्वस्य समाप्तेः ॥ २०१ ॥

उदवसानीयान्ते वा वेदिमध्यमग्न्याहरणादिकं कर्म कर्त-

ध्यम् । कुत एतत् । अत्र सर्वं समाप्तं भवतीति । यत्तु पूर्वमुक्तम् अनूबन्ध्यान्त इति । तद्रूपामार्जनान्ते केशश्मश्रुलोमवपनं विहितम् । ततश्चोच्यते अन्त्ये वेदिमध्यमग्नीनाहरयेति । प्रकृतत्वादनूबन्ध्यान्त एवेति गम्यते । अस्तु तथेति चेत् । नान्तग्रहणस्य निरुपचरितवृत्त्या सर्वान्तप्रतिपत्तेः । तस्मादुदवसानीयान्त एव ॥ २०१ ॥

जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत् ॥ २०२ ॥

आरब्धत्वात् ॥ २०२ ॥

जिजीविषेद्वा ॥ २०३ ॥

जीवितुमपि चेदिच्छेदिति ॥ २०३ ॥

ऋत्विगपोहनीयास्त्रयः ॥ २०४ ॥

ऋत्विगपोहनीया इति समाख्यसंज्ञा ॥ २०४ ॥

तत्रैकः —

सर्वस्तोमः ॥ २०५ ॥

अहनी चोत्तमे छान्दोमिकं पृथक् कृत्वा ॥ २०६ ॥

क्रियेते । तन्त्रेण इष्टत्वात्तयोः पृथग्ग्रहणम् ॥ २०६ ॥

वाचस्तोमाश्चत्वारः ॥ २०७ ॥

वाचस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति ॥ २०७ ॥

तत्र—

छान्दोग्ये विशेषः ॥ २०८ ॥

पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः ॥ २०९ ॥

पृष्ठ्यस्तोमसंज्ञकाः षट्क्रतवो भवन्ति, त्रिवृदादय ॥ २०९ ॥

चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु पा-
ष्ठिकानि पृष्ठ्यो विहृत इति श्रुतेः ॥ २१० ॥

चातुर्मास्या सोमा पर्वस्थानेषु त्रिषु तत्र च पाष्ठिकान्यहानि च भवन्ति । पृष्ठ्यो विहृतो भवतीति श्रुतेः ॥ २१० ॥

वैश्वदेवस्थाने प्रथमम् ॥ २११ ॥

अहर्भवति पाष्ठिकम् २११ ॥

तच्च—

अग्नुपम् ॥ २१२ ॥

भवति ॥ २१२ ॥

उत्तरवेद्यकरणं च ॥ २१३ ॥

तत्रैव ॥ २१३ ॥

परिधौ पशुनियोजनम् ॥ २१४ ॥

द्वितीये द्विदिवाख्यो द्व्यहः ॥ २१५ ॥

द्वितीये पर्वस्थाने द्व्यहो भवति । द्विदिवेत्याख्या तस्य ॥२१५॥

अग्निष्टोमं प्रथममेके ॥ २१६ ॥

यत्प्रथममहरुक्थ्यसंस्थं तदग्निष्टोमसंस्थमेके इच्छन्ति पक्षे उक्थ्यसंस्थम् । उक्थ्यस्य च संस्थामात्रान्यत्वं च घर्मास्तुरीया एव ॥ २१६ ॥

तृतीये त्र्यहोऽतिरात्र उत्तमः ॥ २१७ ॥

तृतीयपर्वस्थाने पाष्ठिकस्त्र्यहो भवति । तत्र चातिरात्र उत्तमो भवति ॥ २१७ ॥

अग्निष्टोमं प्रथममेके ॥ २१८ ॥

पक्षे षोडशिनमिच्छन्ति ॥ २१८ ॥

ज्योतिष्टोमः शुनासीरीयस्थाने ॥ २१९ ॥

भवति । पार्ष्ठिकान्यहानि द्वादशदीक्षोपसदानि भवन्त्यतिग्राह्यवन्ति । किं बहुना पृष्ठ्ये यद्दृष्टं तत्सर्वमत्र भवति ॥ २१९ ॥

पञ्चसु सवनीया वैश्वदेववारुणमारुताग्नेयैन्द्राग्नाः ॥ २२० ॥

पञ्चस्वहस्सु वैश्वदेवादयो यथासंख्येन सवनीयाः ॥ २२० ॥

षष्ठे चैकादशिनाः ॥ २२१ ॥

भवन्ति ॥ २२१ ॥

वायव्यः सप्तमे ॥ २२२ ॥

सप्तमेहनि वायव्यः सवनीयः ॥ २२२ ॥

पञ्चाशतं पञ्चाशतं प्रत्यहं ददात्युत्तमे द्वादश; शतम् ॥ २२३ ॥

भवति । हिरण्यादेश्च निवृत्तिरत्र ॥ २२३ ॥

वत्सा वा पञ्चाशतो यथर्तुजाः ॥ २२४ ॥

यथर्तुजा इति यो यो यस्मिन् यस्मिन् ऋतौ जातः स तत्र तत्र दीयते ॥ २२४ ॥

प्रतिपर्वावभृथाः ॥ २२५ ॥

भवन्ति । पार्ष्ठिकानां ह्येकोवभृथो दृष्टः । स मा भूदिति प्रतिपर्वग्रहणम् । न्यायसूत्रमेतत् ॥ २२५ ॥

पर्वान्तरेष्वहतं वस्ते ॥ २२६ ॥

वासः ॥ २२६ ॥

अरन्युपायी ॥ २२७ ॥

स्त्रियं नोपगच्छेत् ॥ २२७ ॥

अमाᳪंसाशी ॥ २२८ ॥

माᳪंसं नाश्नीयात् ॥ २२८ ॥

अनूबन्ध्या बार्हस्पत्यामैत्रावरुणीसौर्याश्विन्यो यथावभृथम् ॥ २२९ ॥

भवति ॥ २२९ ॥

प्रतिकर्म सोमाः ॥ २३० ॥

व्याख्यास्यन्त इति सूत्रशेषः ॥ २३० ॥

अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रायणाः ॥ २३१ ॥

एता एव संज्ञा एतेषाम् ॥ २३१ ॥

उक्थ्यं पशुबन्धमेके ॥ २३२ ॥

पशुबन्धमेक उक्थ्यसंस्थमिच्छन्त्येकेनिष्टोमम् ॥ २३२ ॥

प्रातः सवनीयाननु हवीᳪंषि निर्वपति ॥ २३३ ॥

प्रतिकर्म सोमेषु विशेष उच्यते । प्रातः सवने सवनीयाननु हवीᳪंषि निर्वपति ॥ २३३ ॥

तत्र च—

पयसी अग्निहोत्रयोः ॥ २३४ ॥

अग्निहोत्रसोमयोः पयसी अनुनिरूप्येते ॥ २३४ ॥

अन्त्यदेवतानूबन्ध्याद्या सवनीया ॥ २३५ ॥

तेषु कर्मसु यान्त्यदेवता सानूबन्ध्यायां भवति आद्या च सवनीया ॥ २३५ ॥

एकदेवतेपूभयम् ॥ २३६ ॥

यत्र पुनः कर्मण्येकैव देवता यथा अग्निहोत्रे पुनराधेये च तत्रोभयम्वद्देवत्यं भवति ॥ २३६ ॥

चातुर्मास्येषु चैके ॥ २३७ ॥

निर्वापमिच्छन्ति एके न । तत्र च मारुत्या न देशभेदः सोमाङ्गाभावात् । अतिप्रणीत एव यागः । पितृयज्ञे चैवमेव ॥ २३७ ॥

सप्तदशाः पञ्च ॥ २३८ ॥

सप्तदशसंज्ञकाः पञ्च क्रतवो भवन्ति ॥ २३८ ॥

तद्विशेषानाह—

उपहव्यो ऽनिरुक्तो ग्रामकामस्य ॥ २३९ ॥

उपहव्य इति विशेषसंज्ञा स ग्रामकामस्य भवति अनिरुक्तश्च ॥ २३९ ॥

अनृतं वाभिशस्यमानस्य ॥ २४० ॥

अलीकेनाभिशस्यते यस्तस्याप्युपहव्यो भवति ॥ २४० ॥

श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥ २४१ ॥

स्वर्गकामस्यर्तपेयः ॥ २४२ ॥

ऋतपेय इति विशेषसंज्ञा सप्तदशस्यैव । स स्वर्गकामस्य भवति ॥ २४२ ॥

दीक्षोपसदो द्वादश ॥ २४३ ॥

द्वादशदीक्षोपसदो भवन्तीति वचनात् ॥ २४३ ॥

तिस्र उपसदः ॥ २४४ ॥

भवन्ति । एकाहस्त्र्युपसत्क इति । शेषा नवदीक्षाः । एवं दीक्षोपसदां द्वादशसंख्या भवन्ति ॥ २४४ ॥

## षड्वा ॥ २४५ ॥

वाशब्दः पक्षव्यावृत्तौ । षडुपसदो भवन्ति षड्वा दीक्षा । दीक्षोपसदां द्वादशसङ्ख्या श्रूयते समविभागेनेति न्याय्यम् । सम स्यादश्रुतत्वादिति ॥ २४५ ॥

## उभयत्र वा द्वादशता गुणत्वात् ॥ २४६ ॥

वाशब्दः पक्षान्तरपरिग्रहे । न दीक्षोपसदः सङ्ख्यां प्रति श्रूयन्ते किं तर्हि दीक्षोपसदः प्रति सङ्ख्या श्रूयते । कुत एतत् । गुणत्वात् सङ्ख्यायाः । दीक्षोपसदो द्वादश भवन्तीत्यत्र सङ्ख्या दीक्षोपसदः प्रति विधीयते । गुणो हि सङ्ख्या । गुणस्य च प्रतिप्रधानमावृत्तिर्न्याय्या । तस्माद्दीक्षासूपसत्सु च द्वादश सङ्ख्येति ॥ २४६ ॥

## घृतं व्रतयति ॥ २४७ ॥

यद्व्रतयति तद्घृतम् । तनश्च पयसो निवृत्तिः ॥ २४७ ॥

तत्परिमाणमाह—

## चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥ २४८ ॥

अङ्गुलिपर्वणा मूल्येन सर्वतः प्रमितं चमसं घृतस्य पूर्णं व्रतयति प्रथमायामुपसदि ॥ २४८ ॥

## द्वितीयेन द्वितीयायाम् ॥ २४९ ॥

द्वितीयेन पर्वणा प्रमितं द्वितीयायामुपसदि ॥ २४९ ॥

## तृतीयेन तृतीयायाम् ॥ २५० ॥

प्रमितम् ॥ २५० ॥

## भक्षयिष्यन्तः सत्यं ब्रूयुः ॥ २५१ ॥

सोमान्भक्षयिष्यन्त सत्यं वदेयु । उष्णोभिः शीतमुदकमिक्षेयमादि ॥ २५१ ॥

सदो वा स्रप्स्यन्तः ॥ २५२ ॥

सदो वा स्रप्स्यन्तः ॥ २५२ ॥

सर्वं सृष्टुः। वाशब्दो विकल्पार्थः ॥ २५२ ॥

सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥ २५३ ॥

औदुम्बरः सोमचमसो दक्षिणा स सगोत्राय ब्रह्मणे देय ॥२५३॥

पूतभृतः सर्वार्थत्वात् ॥ २५४ ॥

पूतभृतः सोमो गृह्यते। कुत एतत्। सर्वार्थत्वादतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योत पितृभ्य इति। मनुष्यार्थमिदमेवोन्नयमित्यभिप्रायः ॥ २५४ ॥

अ॒॑शुचमसमेके तेन स यजेतेति श्रुतेः ॥२५५॥

सोमा॑शुचमसमेके इच्छन्ति। यत एवं श्रूयते तेन स यजेतेति। एवं केचिद्विकल्प इष्यते। तत्पुनर्नातीव युक्तरूपम्। अन्यार्थे यागे अन्यस्यान्ययागान्तरं विधीयत इत्येतदसमञ्जसं न। तस्मात्प्रथम एव पक्ष पूतभृतः सर्वार्थत्वादिति। ननु च तेन यजेतेति श्रुतिः अथ तेन स यजेत तेन स जुहुयादित्यर्थः। यजतिशब्देन लक्षणया होमो विधीयते ॥ २५५ ॥

अश्ववत् ॥ २५६ ॥

अधिकरणातिदेशोयम् तमुद्गात्रे ददातीत्यस्य। यद्येवं तेनैव गतार्थत्वादवाच्यमेतत्। लिङ्गोपन्यासार्थं पुनर्वचनम् ॥ २५६ ॥

तदुच्यते—

पशूपवादाच्च ॥ २५७ ॥

इतरस्य सकलस्य दाक्षिण्यस्य निवृत्तिः। येन पशूपवादो भवति। सत्यं वा ऽश्रुतपेयो ऽनृतं पशवो ऽनृतं कुर्याद्य अश्रुतपेये पशून् दद्यादिति ॥ २५७ ॥

द्विनामोत्तरो बहुहिरण्यो दूणासश्च ॥ २५८ ॥

उत्तर क्रतुर्द्विनामा बहुहिरण्यो दूणास इति च ॥ २५८ ॥

दीक्षणीयायां हिरण्यं द्वादशमानं ददाति ॥ २५९ ॥

मानं च कृष्णलम् । लोके रक्तिकेति यत्प्रसिद्धम् । इयं च दक्षिणा न क्रतुदक्षिणाधिकारे न चेष्टिदक्षिणा प्रतिप्रसवः किं त्वपूर्वत्वाद्दक्षिणान्तरमेव ततश्च दक्षिणाधर्मो नात्र भवति । अन्ते च दानमागन्तुदक्षिणेति ॥ २५९ ॥

उत्तरेषु च द्विगुणं पूर्वं पूर्वम् ॥ २६० ॥

दीयते ॥ २६० ॥

प्रायणीयातिथ्योपसत्सु ॥ २६१ ॥

पशुवपान्ते प्रतिसवनं निहितेषु सवन-
मुखीयेषु ॥ २६२ ॥

उदयनीयायामनूबन्ध्यायामुदवसानीयायां
स्रजं चोद्गात्रे ॥ २६३ ॥

हिरण्मयीम् ॥ २६३ ॥

रुक्मं होत्रेऽनडुच्छतं काले सर्वेभ्यः ॥ २६४ ॥

इयं च क्रतुदक्षिणा ततश्च तद्धर्मो भवति । सर्वग्रहणाच्च इतरेषु हिरण्यादिदानेषु तत्कर्मयुक्ता प्रतिपत्तव्या ॥ २६४ ॥

वैश्यपशुकामयोर्वैश्यस्तोमः ॥ २६५ ॥

वैश्यस्यापशुकामस्य पशुकामस्य वा वैश्यस्य ॥ २६५ ॥

सवनान्याशीर्वन्ति ॥ २६६ ॥

भवन्ति ॥ २६६ ॥

प्रातः सवने प्रतिदुहा श्रयणम् ॥ २६७ ॥

दुग्धमात्रेण ॥ २६७ ॥

शृतेन माध्यन्दिने ॥ २६८ ॥

श्रयणम् ॥ २६८ ॥

तृतीयसवने दध्ना दक्षिणावत्सतराः पञ्च-
वर्णाः पृश्नयः ॥ २६९ ॥

पृश्नयो विचित्राः ॥ २६९ ॥

वत्सतर्यश्च तिहायण्यो ऽप्रवीताः पञ्चवर्णा
राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्गयः
सारङ्गय इति ॥ २७० ॥

अप्रवीता अकामिताः । राजीवपृश्नयः पद्मपृश्नयः । नवनीतपृश्नयो नवनीतसदृशैश्चित्रैः । अरुणा. कपिलाः । पिशङ्ग्यो मांसवर्णाः सारङ्गयो वर्णान्तरापध्वस्ताः ॥ २७० ॥

उभयस्य सहस्रं द्वादशं वा शतम् ॥ २७१ ॥

सहस्रपक्षे तद्युक्तं भवति ॥ २७१ ॥

सोमातिपूतस्य तीव्रसुदुकथ्यः ॥ २७२ ॥

सोमातिपूतस्तातिरेचितः ॥ २७२ ॥

अपरुद्धराजन्यस्य ॥ २७३ ॥

भवति तीव्रसुत् ॥ २७३ ॥

दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा ॥ २७४ ॥

एषां च तीव्रसुद्भवति ॥ २७४ ॥

पूर्ववत्सोमाः ॥ २७५ ॥

अपणवन्तो भवन्तीत्यर्थः ॥ २७५ ॥

धेनुशतमाशिरे दुहन्ति ॥ २७६ ॥

अत्र विशेषः—

तदेव दक्षिणाः ॥ २७७ ॥

भवति ॥ २७७ ॥

अच्छावाकविग्रहेषु भक्षणम् ॥ २७८ ॥

अवघ्राणमितरेषु ॥ २७९ ॥

न भक्षणम् ॥ २७९ ॥

तेष्वेवोन्नयनमभ्याभि सोमानुन्नयन्तीति श्रुतेः ॥२८०॥

अध्वर्युः चमसाध्वर्यवश्च सर्वे प्रतिगृह्णन्त्यच्छावाकाय ॥२८०॥

इन्द्राग्नी प्रथमो राड्राजन्यस्य राज्यकामस्य ॥ २८१ ॥

इन्द्राग्नी यः प्रथमो राट्संज्ञकः स राजन्यस्य राज्यकामस्य भवति ॥ २८१ ॥

यथाशक्त्येकविंशतिवर्गान्दद्यात् ॥ २८२ ॥

ऋषभ ऐन्द्रः परियज्ञः ॥ २८३ ॥

परिशब्दसामर्थ्यादधस्ताच्चोपरिष्टाच्च भवति । यजतीयेषु॥२८३॥

अन्नाद्यकामस्य विराट् ॥ २८४ ॥

सोऽन्नाद्यकामस्य भवति ॥ २८४ ॥

यथाशक्तिदशवर्गान्दद्यात् ॥ २८५ ॥

पशुराग्नेयः परियज्ञः ॥ २८६ ॥

भवति ॥ २८६ ॥

प्रजातिकामस्यौपसदः ॥ २८७ ॥

औपसदो नाम द्वन्द्व स प्रजाकामस्य भवति ॥ २८७ ॥

दक्षिणाचतुर्विंशः शतम् ॥ २८८ ॥

पशुर्वैश्वदेवः परियज्ञः ॥ २८९ ॥

भवति ॥ २८९ ॥

बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥ २९० ॥

बहु प्रतिगृह्य गरगृहीतमिवात्मानं मन्यते तस्य पुनस्तोमसंज्ञक उक्थ्यसंज्ञो भवति ॥ २९० ॥

दक्षिणा द्वादशमिथुना पुनर्वर्ता च यथाशक्ति॥२९१॥

पशुकामयज्ञौ चतुष्टोमौ ॥ २९२ ॥

चतुष्टोमसंज्ञकौ द्वौ यज्ञौ तौ पशुकामस्य भवत ॥ २९२ ॥

षोडश्युत्तरः पूर्वस्मिन्यथाशक्त्येकशफा-न्दद्यादुभयानुत्तरस्मिन् ॥ २९३ ॥

एकशफान् द्विशफाश्च ॥ २९३ ॥

उद्भिद्वलभिदौ चाहरतः संयुक्तौ ॥ २९४ ॥

चशब्दात्पशुकामयज्ञौ । आहरत संयुक्तौ इति । कां स्यार्थे ॥ २९४ ॥

पूर्वेणेष्ट्वोत्तरेणावश्यम् ॥ २९५ ॥

यष्टव्यमित्ययमर्थः ॥ २९५ ॥

इषुरिष्टिरन्तरेणैनावाग्नेयः पुरोडाशः ॥ २९६ ॥

एनौ उद्भिद्बलभिदावन्तरेणेषुरिष्टिसंज्ञेष्टिर्भवति । आग्नेयः पुरोडाशः । आग्नेय इति न्यायसंसूचनम् ॥ २९६ ॥

तत्र विशेषः—

उद्वूढः प्रस्तरः ॥ २९७ ॥

बृहन्निष्कर्षे । ऊर्ध्वं निष्कृष्ट इत्यर्थः ॥ २९७ ॥

बाणवन्तः परिधयः ॥ २९८ ॥

बाणवच्छब्द एषो हि दृष्टः । द्वौ बाणवन्तौ सपत्नानिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदिति । एतच्च त्रयेषूपपद्यते । यस्माद्बाणा एव परिधय इति ॥ २९८ ॥

अर्धमासं मासꣳ संवत्सरं वा ॥ २९९ ॥

इषुरिष्टिर्भवति ॥ २९९ ॥

दक्षिणा गायत्री चतुर्विꣳशतिवर्गा यथाशक्ति ॥३००॥

इयमेव गायत्रीत्युच्यते ॥ ३०० ॥

अपचितिकामस्यापचिती ॥ ३०१ ॥

अपचिती द्वौ क्रतू तावपचितिकामस्य भवतः । अपचितिः पूज्योच्यते ॥ ३०१ ॥

राजयज्ञावित्येके ॥ ३०२ ॥

एके आचार्या मन्यन्ते राजयज्ञावेताविति एके त्रैवर्णिकस्यापि ॥ ३०२ ॥

दक्षिणाश्वरथश्चतुर्युगुभयतः ॥ ३०३ ॥

उभयतश्चत्वार इत्यर्थः ३०३ ॥

कार्ष्णस्यकवचः ॥ ३०४ ॥

रथो भवति ॥ ३०४ ॥

शताहा अश्वाः ॥ ३०५ ॥

अश्वाः शताहा भवन्ति ॥ ३०५ ॥

साग्निचित्यावग्निस्तोमौ सर्वजिद्दीक्षौ ॥ ३०६ ॥

अग्नेस्तोमसंज्ञकौ क्रतू साग्निचित्यौ भवतः ॥ ३०६ ॥

पूर्वः पद्युत्तरो ज्योतिः ॥ ३०७ ॥

पूर्वस्य पक्षीति विशेषसंज्ञा उत्तरस्य च ज्योतिरिति ॥३०७॥

धान्यचितानि चत्वारि चत्वारि दक्षिणा ॥३०८॥

अग्नेस्तोमयोर्धान्यस्य पूर्णान्यनांसि चत्वारि दक्षिणा ॥३०८॥

पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवानि ॥ ३०९ ॥

पूर्वस्य पक्षिणः षड्गवानि भवन्ति । उत्तरस्य ज्योतिषश्चतुर्गवानि ॥ ३०९ ॥

ऋषभगोसवौ ॥ ३१० ॥

ऋषभश्च गोसवश्च क्रतू भवतः ॥ ३१० ॥

पूर्वो राज्ञः ॥ ३११ ॥

पूर्वे ऋषभसंज्ञको राज्ञः ॥ ३११ ॥

दक्षिण ऋर्षभसहस्रं द्वादशं वा शतम् ॥३१२॥

विकल्पेन ॥ ३१२ ॥

उक्थ्यो गोसवो ऽयुतदक्षिणः ॥ ३१३ ॥

गोसवसंज्ञकः क्रतुरुक्थ्यसंस्थो भवति अयुतदक्षिणश्च ॥ ३१३॥

वैश्ययज्ञ इत्येके ॥ ३१४ ॥

मन्यन्ते । सर्वेषामित्यपरे ॥ ३१४ ॥

सराजानो विशो यं पुरस्कुर्वीरन्त्स

एतेन यजेत ॥ ३१५ ॥

गोसवेन ॥ ३१५ ॥

स्थण्डिले भिषिच्यते ॥ ३१६ ॥

प्रतिदुह्याहवनीयस्य दक्षिणतः ॥ ३१७ ॥

स्थितः आगन्तुत्वादन्ते ॥ ३१७ ॥

स्थपतिरित्येनं ब्रूयुः ॥ ३१८ ॥

गोसवयाजिनं जनाः ॥ ३१८ ॥

वैश्यस्तोमदक्षिणालिङ्गो मरुत्स्तोमो गणयज्ञो

भ्रातृणां सखीनां वा ॥ ३१९ ॥

वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तान्यत्रापि भवन्ति मरुत्स्तोम इति च संज्ञा । भ्रातृणां सखीनां वा सम्भवति गणयज्ञः ॥ ३१९ ॥

प्रजाकामपशुकामयोरैन्द्राग्नकुलायः कुल-

दक्षिणः ॥ ३२० ॥

ऐन्द्राग्नकुलाय इति संज्ञा । गोकुलञ्चास्य दक्षिणा ॥३२०॥

स च—

द्वियज्ञो भ्रात्रोः सख्यो वा ॥ ३२१ ॥

इन्द्रस्तोमो राजयज्ञः सहस्रं दक्षिणा ॥३२२॥

सहस्रं चास्य दक्षिणा ३२२ ॥

उक्थ्यः ॥ ३२३ ॥

उक्थ्यसंस्थश्चासौ भवति ॥ ३२३ ॥

पुरोधाकामस्यैन्द्राग्न्योस्तोमः ॥ ३२४ ॥

भवति । पौरोहित्यकामस्य ॥ ३२४ ॥

राजपुरोहितयोर्वा सह यजमानयोः ॥ ३२५ ॥

त प्रकृत्य हि श्रूयते एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति ॥ ३२५ ॥

पृथग्वा ॥ ३२६ ॥

सह वेति विकल्पः ॥ ३२६ ॥

दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य ॥ ३२७ ॥

पशुर्भवति ॥ ३२७ ॥

जगत्या राज्ञः ॥ ३२८ ॥

जगत्यासम्पन्ना राज्ञः । सह पक्षे प्राकृतदक्षिणाः ॥ ३२८ ॥

विघनौ पशुकामस्य ॥ ३२९ ॥

विघनसंज्ञकौ क्रतू पशुकामस्य भवतः ॥ ३२९ ॥

अभिचरतो वा ॥ ३३० ॥

तौ भवतः ॥ ३३० ॥

बृहतीसम्पन्नाः पशुकामस्य ॥ ३३१ ॥

दक्षिणाः ॥ ३३१ ॥

अभिचरतः प्रज्ञाताः ॥ ३३२ ॥

प्राकृताः ॥ ३३२ ॥

सन्दꣳशवज्रावभिचरतः ॥ ३३३ ॥

सन्दꣳशश्च वज्रश्च तावभिचरतो भवतः ॥ ३३३ ॥

षोडशी वज्रः ॥ ३३४ ॥

षोडशीसंस्थो भवति वज्रः ॥ ३३४ ॥

शुण्ठाली लोहाकर्णी षोडशिनः सोमक्रयणी॥३३५॥

भवति ॥ ३३५ ॥

अहर्गणेप्यविशेषात् ॥ ३३६ ॥

अहर्गणे गतेपि षोडशिनि उक्तलक्षणैव सोमक्रयणी भवति । कुत एतत् । अविशेषात् । अहर्गणगतोपि षोडशी षोडश्येव । न च संस्थान्तरैर्विरोधोस्ति ॥ ३३६ ॥

विश्वजित्परिवासाश्च ॥ ३३७ ॥

अहर्गणगतेपि विश्वजिति परिवासा भवन्ति । तुल्यन्यायत्वात् ॥ ३३७ ॥

न वा स्वसम्बन्धात् ॥ ३३८ ॥

न वाहर्गणगते विश्वजिति परिवासा भवन्ति । सर्वस्वदानसम्बन्धेन हि तेषां श्रवणमिति । अथवा स्वसम्बन्धादिति । विश्वजियाजिसम्बन्धात् । न चाहर्गणयाजी । तस्मान्न भवति ॥ ३३८ ॥

एकराजमेव पूर्वेणाभिचरेत् ॥ ३३९ ॥

पूर्वेण सन्दंशेन राजानमेवैकमभिचरेत् । न जनपदम् ॥ ३३९ ॥

जनपदं वज्रेण ॥ ३४० ॥

व्यस्यासं वैनौ प्रयुञ्जीत ॥ ३४१ ॥

वज्रेण राजानम् । तज्जनपदं च सन्दंशेन ॥ ३४१ ॥

शमित्वा स्तुत्वा वा ज्योतिष्टोमेन यजेत शान्त्यर्थेन शान्त्यर्थेन ॥ ३४२ ॥

अभिचारादुपशमं गत्वा मारयित्वा वा शत्रुं ज्योतिष्टोमेन शान्त्यर्थेन यजेत ॥ ३४२ ॥

इत्युपाध्यायकर्कर्कृतौ कात्यायनसूत्रविवरणे द्वाविंशतितमो ऽध्यायः समाप्तः ।



# त्रयोविंशोऽध्यायः ।

द्वादशोपसत्का अहीना मासापवर्गाः ॥ १ ॥

ननु च द्वादशोपसत्कमवाच्यम् । अन्वयात्तत्प्राप्तेः । अहीनात्मकस्य हि द्वादशाहस्य अहीनान्तरेषु सामान्याद्धर्मप्रवृत्तिरिष्यते । तेन द्वादशोपसत्कं प्राप्तमेवात्रेति । अत्रोच्यते । दीक्षाः सुत्योपसच्छेषेणेति वक्ष्यति जामदग्न्ये चतूरात्रे दीक्षाणां विंशतिरुक्ता । तत्र मासापवर्गत्वे सति किं जामदग्न्ये मासापवर्गता बाध्यतामुतोपसदां द्वादशत्वमिति । तेन मासापवर्गता बाधनाय द्वादशोपसत्त्वमुच्यते वचनात् मासापवर्गास्ते भवन्ति ॥ १ ॥

दीक्षाः सुत्योपसच्छेषेण ॥ २ ॥

सौत्यान्यहानि परिगणय्य औपसदानि च शेषा दीक्षा ॥ २॥

द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥ ३ ॥

द्विरात्रप्रभृतयो द्वादशरात्रपर्यन्ता अहीना ॥ ३ ॥

तन्नाम्नानादतिरात्रांश्चैके ॥ ४ ॥

तन्मध्य आम्नानात् अतिरात्रांश्च एके अहीनधर्मकानिच्छन्ति प्रयोगवचनन्यायात् । यथा चित्रमध्यस्थो ऽचित्रोऽपि चित्र इवानुमीयते साहचर्यादेव । एके तन्नेच्छन्ति । धर्मप्राप्तिरिह वचनाद्भवति । न चेह वचनमस्ति प्रत्यक्षमानुमानिकमथ च नामधेयम् । तस्मान्नाहीनधर्मका अतिरात्रा । न च सन्निधायाम्नानमात्रेण धर्माणां प्रवृत्तिर्युक्ता ॥ ४ ॥

दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोच्चयेन

तद्गुणदर्शनात् ॥ ५ ॥

द्वादशाहे यो दशरात्रस्तदीयान्यहानि भवन्ति द्विरात्रादिष्विति । कुत एतत् । तद्गुणदर्शनात् । तद्गुणा हि दृश्यन्ते द्विरात्रं प्रकृत्य अपसर्पो पे द्विरात्र इत्याहु द्वे ह्येते छन्दसी गायत्रं च त्रैष्टुभ(च)जगतीमन्तर्यन्ति जगत्यत्र न भवतीति । त्रैष्टुभमेके(इति)वैखानसविधिपरे वाक्यं भिन्नं गायत्रं प्रथममहस्त्रैष्टुभं च द्वितीयं दर्शयति । यदि च दाशरात्रिकाण्यहानि त्र्यहादिषु तदेतदुपपद्यते । यथा त्रिककुप्विधिपरे वाक्ये पृष्ठ्यमवस्थितं दर्शयति । लिङ्गमात्रमुपदिष्टम् न्यायोऽभिधीयते । द्विरात्रादिष्वहर्गणेषु गुणत्वसामान्याद्द्वादशाहिको विध्यन्त दृश्यते । तत्र च प्रायणीयोदयनीयावतिरात्रौ । सर्वत्र मध्यस्थो दशरात्र एव प्रवृत्तिधर्मः । अपि च द्विरात्रस्त्रिरात्र इति च रात्रिसामान्याद्दाशरात्रिकी विध्यन्तप्रवृत्तिर्युक्तेति । तस्मात्साधूक्तमाचार्येण दाशरात्रिकाण्यहानि त्र्यहादिष्विति ॥ ५ ॥

सहस्रदक्षिणाः ॥ ६ ॥

द्विरात्रादयो भवन्ति ॥ ६ ॥

चतूरात्रादिष्वधिकम् ॥ ७ ॥

चतूरात्रादिषु तु सहस्राधिका दक्षिणा ॥ ७ ॥

प्राकृतं वा प्रत्यहम् ॥ ८ ॥

वाशब्दो विकल्पार्थः । प्राकृतं दक्षिणा दानं द्विरात्रादिषु वा भवति ॥ ८ ॥

पौण्डरीकेऽयुतम् ॥ ९ ॥

दक्षिणा ॥ ९ ॥

समविभक्ताः प्रत्यहं ददाति ॥ १० ॥

प्रत्यहं समविभागेन दक्षिणादानम् ॥ १० ॥

अन्त्येऽहन्यधिकाः ॥ ११ ॥

विभागाधिकानामन्त्येऽहनि दानम् ॥ ११ ॥

त्रयोदशातिरात्राः ॥ १२ ॥

व्याख्यायन्त इति सूत्रशेष ॥ १२ ॥

तेषाम्—

चत्वारोषोडशिकाः प्रथमाः ॥ १३ ॥

षोडशिमद्रहिताश्चत्वार प्रथमाः ॥ १३ ॥

प्रजातिकामस्य नवसप्तदशः ॥ १४ ॥

भवति ॥ १४ ॥

ज्येष्ठस्य ज्यैष्ठिनेयस्य त्रिपुत्रान् ॥ १५ ॥

अतिरात्रो भवति ॥ १५ ॥

गौर्भ्रातृव्यवतः स्वर्गकामस्यायुरामयाविनो वा ॥ १६ ॥

भवति ॥ १६ ॥

ज्योतिष्टोमविश्वजित्त्रिवृत्पञ्चदशसप्तदशैकविं-
शा यथासंख्यमृद्धिरशुब्रह्मवर्चसवीर्यान्ना-
द्यप्रतिष्ठाकामानां भवन्ति ॥ १७ ॥

असोर्याम: प्र प्रेव यस्मात्पशवो भ्रंशेरन् ॥ १८ ॥

मात्रा इव यस्मात्पशवो स्रवन्ते तस्यासोर्यामो भवति ॥ १८ ॥

अभिजिद्भ्रातृव्यवतः ॥ १९ ॥

सर्वस्तोमो बुभूषतः ॥ २० ॥

निमित्तम् सर्वस्तोमो भवति ॥ २० ॥

यूपैकादशिनी चास्मिन् ॥ २१ ॥

भवति ॥ २१ ॥

इच्यहास्त्रयः ॥ २२ ॥

भवन्ति ॥ २२ ॥

अपोडशिकात्रतिरात्रा उत्तरयोः ॥ २३ ॥

द्विरात्रयोः ॥ २३ ॥

आङ्गिरसचैत्ररथकापिवना: ॥ २४ ॥

एतेषामेव संज्ञाः ॥ २४ ॥

द्वितीयमुक्थ्यपूर्वमेके ॥ २५ ॥

द्वितीयं द्विरात्रमेके उक्थ्यपूर्वं कुर्वन्ति । पार्ष्टिकस्याग्निष्टोमस्य स्थाने उक्थ्य कुर्वन्ति । संस्थामात्रान्यत्वं धर्मास्तु तदीया एव ॥२५॥

प्रथमेन यजेत यः पौण्यो हीन इव स्यात् ॥२६॥

पुण्याहैः सत्पुण्यैर्न युज्यत इत्यर्थः ॥ २६ ॥

द्वितीयेन प्रजाकामः ॥ २७ ॥

तृतीयेन स्वर्गकामः पशुकामो वा ॥ २८ ॥

त्र्याहाः पञ्च गर्गवैदछन्दोमान्तर्वसुपराकाः ॥ २९ ॥

द्वितीये त्रिवृतोऽतिरात्राः सर्वे राज्यकामस्य॥३०॥

त्रिवृत्स्तोमयुक्ता अतिरात्राः राज्यकामस्य भवन्ति क्रतवः । अत्रापि संस्थान्यत्वमात्रम ॥ ३० ॥

अन्तर्वसुः पशुकामस्य ॥ ३१ ॥

भवति ॥ ३१ ॥

पराकः स्वर्गकामस्य ॥ ३२ ॥

चतुरहाश्चत्वारः ॥ ३३ ॥

अत्रिचतुर्वीर जामदग्नवसिष्ठस्(त्)सर्प-

विश्वामित्राः ॥ ३४ ॥

सज्ञा एता ॥ ३४ ॥

जामदग्नो वि(ं)शतिदीक्षः पुष्टिकामस्य ॥ ३५ ॥

भवति । ॥ ३५ ॥

तत्र च—

उपसद पुरोडाशिन्यः ॥ ३६ ॥

उपसद पुरोडाशिन्यो भवन्ति वचनात् ॥ ३६ ॥

अनूपसदं जुहोति ॥ ३७ ॥

उपसदुपसदि पुरोडाशान् जुहोतीत्यर्थः ॥ ३७ ॥

यदा चानूपसद पुरोडाशहोमस्तदा चिन्त्यते । किमाज्यधर्मा भवन्त्युत औषधधर्मा इति । किं तावत्प्राप्तम् । सूत्रेणैव पक्ष —

आज्यधर्मास्थानापत्तेः ॥ ३८ ॥

कार्यापत्तो हि धर्मप्राप्तिर्युक्तेति ॥ ३८ ॥

एव प्राप्त आह—

औषधधर्मा वा द्रव्यसामानात् ॥ ३९ ॥

औषधधर्मा वा भवन्ति नाज्यधर्मा । सत्यामपि कार्यापत्तौ पुरोडाशद्रव्य तत्र पर्युदस्तापक धर्माणाम् । कार्यापत्तिरिति छाया निहितमनत्र । न चेह कार्यापत्ति ॥ ३९ ॥

अनुहोमाश्च पुरोडाशाः ४० ॥

अनुहोमा हि पुरोडाशा भूयन्त इति । अनूपसदं जुहोति । उपसदामनु जुहोतीत्यर्थ ॥ ४० ॥

प्रत्युपसदमेकोच्चयेन कपालान्येककपालप्र-
भृतीनामाग्नेयाश्विनवैष्णवसौम्यसावित्रधात्र-
मारुतबार्हस्पत्यमैत्रवरुणेन्द्रवैश्वदेवाः ॥ ४१ ॥

एतद्देवत्याः पुरोडाशाः तेषां चैकोच्चयेन कपालानि एकप्रभृतीनि भवन्ति । अनूपसदं जुहोतीति च जुहोतिसम्बन्धनाज्जुहोतय एते ॥ ४१ ॥

तेषां होमः अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देवावश्विनौ मधुकशयाद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय, देवेभ्यो जुहुता हविः स्वाहा, देव विष्ण उर्वयास्मिन्यज्ञे यजमानयाधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव सोम रेतोधा अयास्मिन्यज्ञे यजमानयैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव सवितः सुसावितमयास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय जुहुता हविः स्वाहा, देव धातः सुधातायस्मिन्यज्ञे यजमानायैधीन्द्राय जुहुता हविः स्वाहा, देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय जुहुता हवि स्वाहा, देव्यनुमते ऽन्वद्येमं यज्ञं यजमानाय मन्य-

स्वेन्द्राय जुहुता हविः स्वाहा, 'देव्यदिते
स्वादित्यमद्यास्मिन्यज्ञे यजमानयासुवस्वेन्द्रा-
य जुहुता हविः स्वाहा, देव्य आपो नन-
म्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय जुहु-
ता हविः स्वाहा, सदः सदः प्रजावान्भुजु-
पाण इन्द्राय जुहुता हविः स्वाहा, देव
त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमाना-
यैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहेति ॥४२॥

इत्येवमादि निगदव्याख्यातम् ॥ ४२ ॥

द्वादशाहं यजते प्रतिलोममेकैकेन ॥ ४३ ॥

एतद्धर्मकैः पुरोडाशैः सुत्यान्ते सुत्यासंनिधौ द्वादशाहानि यजेत प्रातिलोम्येन। यजतेति संबन्धनाथ यजतय एते न जुहोतय.॥ ४३ ॥

पश्वाहास्त्रयः ॥ ४४ ॥

भवन्ति ॥ ४४ ॥

देवानां प्रथमः ॥ ४५ ॥

प्रथमस्य देवपश्वाह इतीय संज्ञा ॥ ४५ ॥

द्वितीयस्य पञ्चशारदीयः ॥ ४६ ॥

इतीयं संज्ञा ॥ ४६ ॥

'तेन' यक्ष्यमाणः पञ्चवर्षाण्याश्वयुजीशुक्लेषु
चतुस्त्रिंशतं पशूनालभते मारुतान् ॥ ४७ ॥

तेनेति पञ्चशारदीयोपलक्षणम् ॥ ४७ ॥

वैश्यस्तोमदक्षिणालिङ्गान् ॥ ४८ ॥

वैश्यस्तोमे दक्षिणायां यानि लिङ्गानि राजीवपृश्नय इत्येवमादीनि तल्लिङ्गानालभते ॥ ४८ ॥

उक्षणो वत्सतरीर्वर्णानुपूर्वेण ॥ ४९ ॥

प्रतिवर्षेम ॥ ४९ ॥

अर्धा वत्सतर्यः ॥ ५० ॥

तेषां च पशूनामर्धा वत्सतर्यो भवन्ति ॥ ५० ॥

पर्यग्निकृतानुत्सृजन्त्युक्षणो वत्सतरीभिः संस्थापयन्ति ॥ ५१ ॥

उक्ष्णां तदङ्गरीति विधानम् । वत्सतरीभिः परिसमाप्तिः ॥ ५१ ॥

एवं पञ्च वर्षाण्युक्षणो नियुञ्जन्ति ॥ ५२ ॥

इति वचनात् तानेव । वत्सतर्यस्तु प्रतिवर्षं वर्णानुपूर्व्येणान्या-न्याश्च भवन्ति ॥ ५२ ॥

षष्ठे सवनीया भवन्ति तयस्त्रयोऽन्वहम् ॥ ५३ ॥

षष्ठे वर्षे त पयोक्षाण सवनीया भवन्त्यन्वह त्रयस्त्रय ॥ ५३ ॥

ऐन्द्रामारुतापश्चोत्तमे ॥ ५४ ॥

उत्तमेऽहनि पश्च ॥ ५४ ॥

यः कामयेत बहुः स्यामिति स एतेन यजेत ॥ ५५ ॥

पञ्चशारदीयेन ॥ ५५ ॥

पश्वापदि चरवः ॥ ५६ ॥

एतेषामेव पशूनामापत्सु चरवो भवन्ति ॥ ५६ ॥

लम्बाख्यः ॥ ७३ ॥

द्वितीये षडहे पार्ष्ठिकः पञ्चाहः । उभयपृष्ठ पृष्ठ्यावलम्बाख्यो भवति । पृष्ठ्यावलम्बाख्याया इह च प्रयोजनाभावादन्यार्थता । वक्ष्यति हि पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमा इति ॥ ७३ ॥

तृतीये त्रिम्यस्त्रिकद्रुकाः ॥ ७४ ॥

तृतीये षडहे त्रिभ्यः पार्ष्ठिकेभ्योवसितेभ्यस्त्रिकद्रुका भवन्ति ॥ ७४ ॥

सप्त सप्ताहाश्चत्वारो व्रतोत्तमाः प्रथमाः ॥७५॥

चतुर्णां महाव्रतमुत्तम भवति ॥ ७५ ॥

तृतीयः पशुकामस्य ॥ ७६ ॥

भवति ॥ ७६ ॥

इन्द्रस्य पञ्चमः ॥ ७७ ॥

पञ्चम इन्द्रसप्ताहसप्तकः ॥ ७७ ॥

द्वितीयप्रभृतिषडेकाहाः ॥ ७८ ॥

तत्र भवन्ति ॥ ७८ ॥

सर्वस्तोम उत्तमः ॥ ७९ ॥

जनकसप्तरात्रश्चतुर्भ्यो विश्वजिन्महाव्रतम् ॥८०॥

चतुर्भ्यः पार्ष्ठिकेभ्यो वसितेभ्य परो विश्वजिन्महाव्रतं च ॥८०॥

उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः ॥ ८१ ॥

उभयपृष्ठत्वस्य षडहस्य पृष्ठस्तोम इतीयमाख्या संपद्यतार्था ॥ ८१ ॥

विश्वजित्पशुकामस्य ॥ ८२ ॥

विश्वजिदतिरात्रो भवति । पशुकामस्य चायम् ॥ ८२ ॥

अष्टाहे षडहान्महाव्रतम् ॥ ८३ ॥

अष्टाहे षडहादवसितान्महाव्रतं भवति । ततोऽतिरात्रः ॥८३॥

नवरात्रे त्रिकद्रुकाः ॥ ८४ ॥

षडहादेवावसितान्द्रवन्ति ॥ ८४ ॥

द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥ ८५ ॥

ततोऽतिरात्रः ॥ ८५ ॥

दशरात्राश्चत्वारः ॥ ८६ ॥

भवन्ति ॥ ८६ ॥

प्रथमस्त्रिककुप् ॥ ८७ ॥

प्रथमस्त्रिककुप् संज्ञो भवति ॥ ८७ ॥

उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृतः ॥ ८८ ॥

सर्वे चैते ऽपूर्वाः ॥ ८८ ॥

प्रतिष्ठाकामस्य कौसुरुबिन्दः ॥ ८९ ॥

कौसुरुबिन्द इति संज्ञा ॥ ८९ ॥

तत्राहान्याह—

अग्निष्टोमास्त्रिवृतस्त्रयः ॥ ९० ॥

त्रिवृत्स्तोमयुक्ता अग्निष्टोमास्त्रयो भवन्ति ॥ ९० ॥

पञ्चदशाश्चोक्थ्याः ॥ ९१ ॥

त्रय एव ॥ ९१ ॥

सप्तदशाश्च ॥ ९२ ॥

सप्तदशास्तूप उक्थ्याः ॥ ९२ ॥

एकविंशोऽतिरात्रः ॥ ९३ ॥

योऽतिरात्रः स एकविंशस्तोमको भवति ॥ ९३ ॥

पृष्ठ्यदशरात्रोऽभिचर्यमाणस्य ॥ ९४ ॥

पृष्ठ्यदशरात्र इति सञ्ज्ञैषा सोऽभिचर्यमाणस्य भवति ॥ ९४ ॥
तथाहान्याह—

उक्थ्योऽग्निष्टोमपक्षः ॥ ९५ ॥

उक्थ्यस्योभयतोऽग्निष्टोमाविति ॥ ९५ ॥

गोपक्षोऽभिजित् ॥ ९६ ॥

अभिजिदेकाहः । तस्य गौरुभयतो भवतीत्यर्थः ॥ ९६ ॥

आयुर्विश्वजित्पक्षः ॥ ९७ ॥

आयुराख्यश्चैकाहस्तस्य विश्वजित्पक्षसंस्थानीयो भवति॥९७॥

छन्दोमदशाहः पशुकामस्य ॥ ९८ ॥

छन्दोमदशाह इति संज्ञा । स पशुकामस्य भवति ॥ ९८ ॥
तथाहान्याह—

पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमाः ॥ ९९ ॥

पौण्डरीकः सर्वर्द्धिकामस्य ॥ १०० ॥

पौण्डरीक इति संज्ञा स सर्वर्द्धिकामस्य भवति ।
द्धिं. कामयते स सर्वर्द्धिकामः तस्य पौण्डरीको भवे ... स्या संस्थय.

दशरात्रोऽसत्त्रोत्थानः ॥ १०१

दशरात्रो भवति सत्रोत्थानवर्जितः ॥ १०१ ॥

विश्वजिदतिरात्रः ॥ १०२ ॥

भवति ॥ १०२ ॥

तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥ १०३ ॥

अहीनेषु येऽतिरात्रास्तेषु समानमाध्वर्यवं भवति । विश्वजित् वर्जयित्वा । को विशेषस्तत्रेति चेत् । सर्वमेधे श्रूयते । विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवतीति सर्वपृष्ठता विशेषः । तेनोच्यते विश्वजिद्वर्जमिति ॥ १०३ ॥

यथोक्तमुत्तमो यथोक्तमुत्तमः ॥ १०४ ॥

उत्तमो द्वादशरात्रो यथोक्त एव भवति ॥ १०४ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे त्रयोविंशतितमो ऽध्यायः समाप्तः ।



# चतुर्विंशोऽध्यायः ।

उक्ता अहीना । इदानीं सत्त्राण्यभिधीयन्ते ।

द्वादशरात्रादीनि रात्रिसत्त्राणि ॥ १ ॥

रात्रिसत्त्राणीति नाम । तच्च द्वादशरात्रप्रभृतीनामापूर्वपदस्थानोऽयं बहुव्रीहिः ॥ १ ॥

एकोच्चयेन चत्वारिंशदन्तानि ॥ २ ॥

एकोच्चयेनाह्नां चत्वारिंशदन्तानि रात्रिसत्त्राणि ॥ २ ॥

यथोपदेशमहानि ॥ ३ ॥

येन क्रमेण यान्यहान्युपदिश्यन्ते तानि तथैव प्रतिपत्तव्यानि । किमर्थमिदमुच्यते । आवापिकानामन्य क्रम औपदेशिकाना तु उपदेशक्रम एव । अथवा यथोपदेशमिति वैदिकाना नाम्ना धर्मप्रतिपत्त्यर्थम् ॥ ३ ॥

आपूर्यमाणे दशरात्रः परः ॥ ४ ॥

आपूर्यमाणे सत्त्रे दशरात्रावापो भवति । स च भवन्परतो भवति न पूर्व । एव पार्ष्ठिकानि चत्वारि छान्दोमिकान्यहानि दशरात्र उच्यते ॥ ४ ॥

प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तर मेकाहार्थे ॥ ५ ॥

यानि प्रकृतिविहितानीत्याचार्येणाभिधीयन्ते तत्रैकार्थे महाव्रत भवति दशरात्रादुत्तरम् ॥ ५ ॥

पुरस्तादन्यत् ॥ ६ ॥

यदन्यदावापान्तरं व्याख्यास्यते तद्दशरात्रात्पूर्वं भवति ॥ ६ ॥

षडहार्थेऽभिप्लवः ॥ ७ ॥

यत्र षड्भिरहोभिर्न पूर्यते सत्रं तत्राभिप्लवः पूरणो भवति । अभिप्लवार्थश्चोक्तो गवामयने ॥ ७ ॥

तस्यादितः पञ्च पञ्चाहार्थे ॥ ८ ॥

तस्यैवाभिप्लवस्यादितः पञ्चाहानि गृह्यन्ते पञ्चार्थे ॥ ८ ॥

त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥ ९ ॥

त्रिकद्रुका इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था ॥ ९ ॥

व्रतं च यथोक्तं चतुरहार्थे ॥ १० ॥

चशब्दात्त्रिकद्रुकाश्च । यथोक्तग्रहणाच्च दशरात्रात्परं व्रतं भवति ॥ १० ॥

आयुषी द्व्यहार्थे ॥ ११ ॥

भवतः ॥ ११ ॥

अतिरात्रान्तरमावापस्थानम् ॥ १२ ॥

सत्रस्याद्यन्तयोरतिरात्रविधानात् ॥ १२ ॥

आवापसमवेतानामल्पमल्पं पूर्वम् ॥ १३ ॥

यत्रावापानां समवायेन सत्रं पूर्यते तत्र यद्यदल्पं तत्तत्पूर्वं भवति ॥ १३ ॥

द्वे त्रयोदशरात्रे पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः ॥ १४ ॥

पृष्ठ्यादर्वाक्ततात्सर्वस्तोमसंज्ञकोऽतिरात्रो भवति । पूर्णमिदमेकम् ॥ १४ ॥

प्रकृतिविहितं द्वितीयम् ॥ १५ ॥

भवति । प्रकृति विहितग्रहणाच्च व्रतं दशरात्रादुत्तरं भवति ॥ १५ ॥

सम्भार्यं तृतीयम् ॥ १६ ॥

तृतीयं त्र्यपोदशरात्रमहोभिः सम्भ्रियते ॥ १६ ॥

प्रायणीयाचतुर्विंशमहरभिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः ॥ १७ ॥

अत्र चतुर्विंशमहरादिषु गवामयनिकेषूत्रापालम्भसवनान्तजपा भवन्ति गवामयनिकत्वादेव ॥ १७ ॥

चतुर्दशरात्राणि त्रीणि ॥ १८ ॥

तत्रैकस्मिन्—

द्वौ पृष्ठ्यौ ॥ १९ ॥

भवतः ॥ १९ ॥

प्रतिलोमः परः ॥ २० ॥

भवति । प्रातिलोम्यं च त्र्यस्त्रियारम्भणत्वेन ॥ २० ॥

मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥ २१ ॥

मध्यमे चतुर्दशरात्रे पृष्ठ्यमभितस्त्रिकद्रुका भवन्ति ॥ २१ ॥

प्रतिलोमाः परे ॥ २२ ॥

आयुर्गोज्योतिरित्येवम् ॥ २२ ॥

विवाहोदकतल्पसंशयितानामेतत् ॥ २३ ॥

येषां विवाहे संशयो भवति किमस्माकं विवाहो भवति न

भवतीति संशयः । तथा उदकपाने द्वायने च तेषामेतत्सत्रं भवति ॥ २३ ॥

प्रकृतिविहितं तृतीयम् ॥ २४ ॥

प्रकृतिविहितग्रहणाद्गोआयुषी भवतः ॥ २४ ॥

पञ्चदशरात्राणि चत्वारि ॥ २५ ॥

भवन्ति ॥ २५ ॥

उत्तरे प्रकृतिविहिते त्रिकद्रुकैः ॥ २६ ॥

पूरणामित्येतदुक्तं भवति ॥ २६ ॥

चतुर्दशरात्राभ्यां पूर्वे व्याख्याते ॥ २७ ॥

पूर्वे पञ्चदशरात्रे चतुर्दशरात्राभ्यां व्याख्याते ॥ २७ ॥
अयंस्तु विशेषः—

पृष्ठ्ययोर्मध्ये महाव्रतम् ॥ २८ ॥

भवति ॥ २८ ॥

अतिरात्रादग्निष्टुद्द्वितीयस्य ॥ २९ ॥

अतिरात्राद्वसितादग्निष्टुद्द्वितीयस्य भवति ॥ २९ ॥

सप्रायणीयस्तृतीयस्य ॥ ३० ॥

स एवाग्निष्टुत्तृतीयस्य प्रायो भवति । नाम्ना च तदीयैव संज्ञा ॥ ३० ॥

प्रकृतिविहितानि प्राग्विंशतिरात्रात् ॥ ३१ ॥

षोडशरात्रादिषु चतुर्षु आवापेन हि पूरणम् । तत्र षोडशरात्रे प्रायणीया त्रिकद्रुकाः दशरात्रादुत्तरमतम् । सप्तदशरात्रे प्रायणीयात्पञ्चाहः अष्टादशरात्रे षडहः एकोनविंशतिरात्रे षडहो दशरात्रश्चोत्तरं मतम् ॥ ३१ ॥

विंशतिरात्रेऽभिप्लवोऽभिजिद्विश्वजितौ च ॥३२॥

यथोपदेशम् ॥ ३२ ॥

एकविंशतिरात्रयोरतिरात्रावषोडशिकौ ॥३३॥

अभिप्लवास्त्रयः प्रथमादतिरात्रः ॥ ३४ ॥

परिपूर्णमेवैतत् ॥ ३४ ॥

निदाघे द्वितीयं ब्रह्मवर्चसकामानम् ॥ ३५ ॥

निदाघो ग्रीष्म । तत्र द्वितीयमेकविंशतिरात्र ब्रह्मवर्चसकामानां भवति ॥ ३५ ॥

त्रयस्त्रयः स्वरसामानो विषुवन्तमभितः पृष्ठ्यौ च ॥ ३६ ॥

उत्तरः प्रतिलोमः ॥ ३७ ॥

पृष्ठ्यो भवति ॥ ३७ ॥

मानव्यः सामिधेन्यः ॥ ३८ ॥

विषुवति भवन्ति ॥ ३८ ॥

सौमापौष्णस्य उपालम्भ्यः ॥ ३९ ॥

विषुवत्येवम् ॥ ३९ ॥

प्रकृतिविहितान्या द्वात्रिंशद्रात्रात् ॥ ४० ॥

सह द्वात्रिंशद्रात्रेण । आडभिविधौ कर्मविषयत्वात् ॥ ४० ॥

द्वाविंशतिरात्रमन्नाद्यकामानाम् ॥ ४१ ॥

त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥ ४२ ॥

पूर्वे चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥ ४३ ॥

द्वाविंशतिरात्रे पूरणम्। प्रायणीयस्त्रिकद्रुकास्ततोऽभिप्लव। दशरात्रश्च परं व्रतम्। त्रयोविंशतिरात्रे प्रायणीयात्पश्चाद्दस्ततः षडहः। पूर्वस्मिश्चतुर्विंशतिरात्रे द्वौ षडहौ ॥ ४३ ॥

द्वितीयः संसदः ॥ ४४ ॥

द्वितीयं चतुर्विंशतिरात्रं संसदसंज्ञकम् ॥ ४४ ॥

अत्र विशेष.—

अपोडशिकावतिरात्रौ विशालः ॥ ४५ ॥

वक्ष्यमाणस्याहस्संघातस्य संज्ञा ॥ ४५ ॥

पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि ॥ ४६ ॥

पार्ष्ठिकानि त्रीण्युत्तराणि अहानि प्रतिलोमानुलोमानि ॥ ४६ ॥

तमभितोऽग्निष्टोमावनिरुक्तौ ॥ ४७ ॥

तं विशालमभितोऽग्निष्टोमावनिरुक्तौ ॥ ४७ ॥

पृष्ठ्यस्तोमौ च ॥ ४८ ॥

अभितो भवतः ॥ ४८ ॥

तयोः—

उत्तरः प्रतिलोमः ॥ ४९ ॥

तस्मादग्निष्टोमावनिरुक्तौ ॥ ५० ॥

पूर्णमेतत् ॥ ५० ॥

पञ्चविंशतिरात्रमन्नाद्यकामानां षड्विंश-

तिरात्रं प्रतिष्ठाकामानां सप्तविꣳशतिरात्रमृद्धिकामानामष्टाविꣳशतिरात्रं प्रजाकामानाम् पशुकामानां वा ॥ ५१ ॥

द्वात्रिꣳशद्रात्रं च ॥ ५२ ॥

चशब्दात्प्रजाकामानां पशुकामानां वा द्वाविंशतिरात्रमभिप्लवौ स्वस्थाने व्रतं च । षड्विंशतिरात्रे प्रायणीयाद्गोआयुषी ततोऽभिप्लवौ । सप्तविꣳशतिरात्रे प्रायणीयात्त्रिकद्रुकाः ततोऽभिप्लवौ । अष्टाविꣳशतिरात्रे प्रायणीयात्त्रिकद्रुकाः ततोऽभिप्लवौ । स्वस्थाने च व्रतम् । एकोनत्रिꣳशतिरात्रे प्रायणीयात्पञ्चाहस्ततोऽभिप्लवौ । त्रिंशद्रात्रे त्रयोऽभिप्लवाः । एकत्रिंशद्रात्रे व्रतमधिकम् । द्वात्रिंशद्रात्रे प्रायणीयाद्गोआयुषी अभिप्लवास्त्रयः ॥ ५२ ॥

त्रयस्त्रिꣳशद्रात्राणि त्रीणि ॥ ५३ ॥

तत्र प्रथमे—

पञ्चाहाश्चत्वारः ॥ ५४ ॥

तेभ्योऽतिरात्रौ विश्वजित ॥ ५५ ॥

तेभ्यः पञ्चाहेभ्योऽपसितेभ्यो विश्वजिदतिरात्रः ॥ ५५ ॥

व्रतवद्द्वितीयं त्र्यभिप्लवम् ॥ ५६ ॥

तृतीये त्रयस्त्रयः पञ्चाहा विश्वजितमभितः ॥ ५७ ॥

भवन्ति ॥ ५७ ॥

तत्र च—

प्रतिलोमाः परे ॥ ५८ ॥

प्रकृतिविहितान्या चत्वारिꣳशद्रात ॥ ५९ ॥

चतुस्त्रिंशद्रात्रमन्नाद्यकामानाम् षट्त्रिंशद्रात्रं प्रतिष्ठाकामानाम् सप्तत्रिंशद्रात्रमृद्धिकानाम् अष्टात्रिंशद्रात्रं प्रजाकानाम् पशुकामानाम् वा ॥ ६० ॥

चत्वारिंशद्रात्रं च ॥ ६१ ॥

च शब्दात्प्रजाकामानामेव । अत्र पूरणं प्रकृतिविहितावापेन यथोक्तम् ॥ ६१ ॥

व्यूतवन्त्युत्तराणि प्रथमतृतीयवर्जं सप्तैकान्नपञ्चाशद्रात्राणि ॥ ६२ ॥

प्रथमतृतीयवर्जम् व्यूतवन्ति भवन्ति ॥ ६२ ॥

प्रथमो विधृतिः ॥ ६३ ॥

पुल्लिङ्गेन सत्त्रस्याभिधानम् ॥ ६३ ॥

अपोडशिकावतिरात्रौ ॥ ६४ ॥

कौसुरुविन्दः प्रथमस्त्र्यहः ॥ ६५ ॥

उक्थ्यौ तूत्तरौ ॥ ६६ ॥

कौसुरुविन्दः प्रथमस्त्र्यहो ऽग्निष्टोमाग्निष्टुत्स्तोमयुक्तस्त्र्यहः । तत्र विशेषः । उक्थ्यावुत्तरौ भवतः ॥ ६६ ॥

षोडशिदशमा उक्थ्याः ॥ ६७ ॥

भवन्ति । यत्र संख्यामात्रमेवोद्दिश्यते तत्राऽपूर्वेष्वपदेशः । यत्र गोज्योतिरायुरादिपदुपादानम् तत्रैकाहिकाः दशरात्रे पुनर्व्यूढद्वादशाहिका इति । पेषाहिकेषु न नाम्ना धर्मप्रवृत्तिः । अपूर्वेषु तु द्वादशाहिको विध्यन्तः ॥ ६७ ॥

पृष्ठ्यं चाभितो द्वादश द्वादश ॥ ६८ ॥

उक्थ्या भवन्ति ॥ ६८ ॥

वर्गान्तरेष्वतिरात्राः ॥ ६९ ॥

यमातिरात्रम् ॥ ७० ॥

व्याख्यास्यत इति सूत्रशेषः ॥ ७० ॥

अभिप्लवौ गोआयुषी अतिरात्रौ ॥ ७१ ॥

अभिप्लवावभिजिद्विश्वजितावतिरात्रौ ॥ ७२ ॥

अभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ ॥ ७३ ॥

आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट् ॥ ७४ ॥

आञ्जनाभ्यञ्जनीयमिति संज्ञा ॥ ७४ ॥

तत्र—

चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥ ७५ ॥

चतुर्भ्योऽभिप्लवेभ्यो ऽधसितेभ्यः सर्वस्तोमोऽतिरात्रो भवति ॥ ७५ ॥

तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुल्गुलुसुगन्धितेजनपीतुदारुभिः ॥ ७६ ॥

तस्मिन्नाञ्जनाभ्यञ्जनीये उपसत्सु वर्त्तमानासु गुल्गुलुसुगन्धितेजनपीतुदारुभिः पृथक् पृथक् सर्पिर्विपचेयुः । पुरुषार्थत्वाद्गार्हपत्ये न प्राप्नोतीति वचनम् ॥ ७६ ॥

यथासवनन्तैः सवनेष्वाञ्जनाभ्यञ्जने कुर्वीरन्नाग्नीध्रेऽहरहः ॥ ७७ ॥

प्रातः सवनान्ते गुल्गुलुना माध्यन्दिने सुगन्धितेजनेन तृतीयसवने पैतुदारवेण । आञ्जनमक्ष्णोः अभ्यञ्जनं शरीरस्य । मार्गीयोऽहरहः ॥ ७७ ॥

पृष्ठ्ये वा ॥ ७८ ॥

वाशब्दो विकल्पार्थः ॥ ७८ ॥

सवनमुखीयेषु भक्षयिष्यन्तो वा ॥ ७९ ॥

वा सवनान्तेषु ॥ ७९ ॥

ये आत्मानं नैव जानीरंस्तेषामेतत् ॥ ८० ॥

य आत्मानं प्रसुप्तमिव मन्यन्ते तेषामाञ्जनाऽभ्यञ्जनीयेऽधिकारः ॥ ८० ॥

संवत्सरसंमिते चतुर्विंशमहः ॥ ८१ ॥

संवत्सरसम्मितमिति सत्रनाम । तत्र चतुर्विंशमहर्भवति ॥ ८१ ॥

अभिप्लवाश्चत्वारः ॥ ८२ ॥

गोआयुषी ॥ ८३ ॥

त्रिभ्यो विषुवन्मध्यो नवरात्रः ॥ ८४ ॥

त्रिभ्योऽभिप्लवेभ्यो विषुवन्मध्ये गवामयनिको नवरात्रो भवति ॥ ८४ ॥

एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः ॥ ८५ ॥

अप्रतिज्ञातमप्येकषष्टिरात्रं छायाविवेकेन सत्राचार्येणाभिहितम् ॥ ८५ ॥

प्रतिलोमः परः ॥ ८६ ॥

तयोः पृष्ठ्ययोः प्रतिलोमः परो भवति ॥ ८६ ॥

सवितुः ककुभः ॥ ८७ ॥

व्याख्यास्यत इति सूत्रशेषः ॥ ८७ ॥

नवरात्राश्चत्वारः ॥ ८८ ॥

तानाचष्टे—

अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणामु-
क्थ्या इतरे ॥ ८९ ॥

सर्वे चैते ऽपूर्वाः ॥ ८९ ॥

परे षडभिप्लवे ॥ ९० ॥

परे ये द्वे ते षडभिप्लवे ॥ ९० ॥

पूर्वस्य चतुर्भ्यो व्रतम् ॥ ९१ ॥

भवति ॥ ९१ ॥

प्रजातिकामानामेतत् ॥ ९२ ॥

प्रकृतिविहितः शतरात्रं चतुर्दशाभिप्लवं
चतुरहश्च ॥ ९३ ॥

ननु प्रकृतिविहितत्वेनैवैतत्प्राप्नोति । चतुर्दशाभिप्लवं चतुर-
हश्चेत्यवाच्यम् । उच्यते च । तत्किमर्थम् । शतरात्रद्वयप्रज्ञापनाय
पक्षं प्रकृतिविहितं तत्र त्रिकद्रुकाः पूर्वमभिप्लवेभ्यो भवन्ति । एव-
रात्राच्च परं मतं भवति द्वितीये यथोपदेशमहाव्रतीयाभिप्लवेभ्यः पर-
तश्चतुरहः ॥ ९३ ॥

सदो हविर्धानानि चक्रीवन्ति ॥ ९४ ॥

चक्रीवन्ति भवन्ति ॥ ९४ ॥

अभिप्रायमभिपुण्वन्ति देशानपरोधेन ॥ ९५ ॥

यात्वा यात्वाभिपवं कुर्वन्ति देशानपरोधेन प्रतिनिवर्तन्ते ॥९५॥

अहरहरभिप्लवेषु त्रिकद्रुकेषु वा ॥ ९६ ॥

वेति विकल्पः ॥ ९६ ॥

अभिप्लवाभ्यासेनाभिपूरणम् ॥ ९७ ॥

सकृत्प्रयोगी दशरात्रः ॥ ९८ ॥

भवति । प्रकृतिविहितानामेव धर्मः ॥ ९८ ॥

व्रतवन्ति सर्वजिद्दीक्षाणि ॥ ९९ ॥

व्रतवन्ति सत्त्राणि यानि तानि सर्वजिद्दीक्षाणि ॥ ९९ ॥

सप्तदशरात्रादीनि त्रिंशदन्तान्येके ॥ १०० ॥

एकान्नपञ्चाशद्रात्रे चाष्टादशदीक्षाणि पौर्ण-

मासीप्रक्रमाणि ॥ १०१ ॥

सप्तदशरात्रादीनि रात्रिसत्त्राणि त्रिंशदन्तानि । एकान्नपञ्चाशद्रात्रे च यानि व्रतवन्ति तान्यष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि चैक इच्छन्ति । एके यथाप्राप्तम् व्रतवत्त्वमात्रं सर्वजिद्दीक्षता च ॥ १०१ ॥

शतातिरात्रं सत्त्रमुपेयुरिति श्रूयते । तत्र सन्देहः । किं शतरात्रिकाणामह्नां संख्यात्वमात्रमुच्यते उत द्वादशाहस्य यदाद्यमहरतिरात्रसंस्थं तच्छतकृत्वोऽभ्यसितव्यमुत दशरात्रस्यातिरात्रसंस्थस्यैषोऽभ्यास आहोस्विच्छतसंख्यासंयुक्तानामतिरात्राणां विधिरिति । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥१०२॥

शतातिरात्रे शतमह्नां श्रूयते । तच्छतरात्रिकाण्यहानि प्रयन्ते । एतसंख्यावच्छिन्नस्य हि धर्मापेक्षायां सत्यां शतरात्रस्य पर्यु-

पत्स्यापकरणमिति ॥ १०२ ॥

एवं प्राप्त आह—

द्वादशाहाद्यं वा तत्प्रकृतेः ॥ १०३ ॥

अत्र वृद्धयाज्ञिको यशोगोप्याचष्टे द्वादशाहस्य यदाद्यं प्रायणीयमहरतिरात्रसंस्थं तस्यैतच्छतसंख्याविधानमिति । एवं चातिरात्रप्राप्तौ शतसंख्याविधानमिति । यत्पुनरुक्तं शतरात्रं प्रवर्तत इति तदयुक्तम् । न हि शतातिरात्रस्य शतरात्रिकधर्मप्रवृत्तौ प्रमाणमस्ति । उभयत्र ह्यानुमानिकेन वचनेन द्वादशाहविध्यन्तप्रवृत्तिरिष्यते । तस्माच्च शतरात्रिको विध्यन्तः । यदप्युक्तं द्वादशाहाद्यस्यान्ह इयं संख्या विधीयत इति तदप्ययुक्तम् । पृथक्त्वनिवेशिनी हि संख्या भवति । न च प्रायणीयेऽहन्यस्य भाग पृथक्त्वनिवेशित्वसम्भवः । तस्मादेतदप्यनुपपन्नमेव । पितृभूतिराचार्यः सूत्रमन्यथा व्याचष्टे । द्वादशाहाद्यं वा तत्प्रकृतेरिति । द्वादशाहाद्यं प्रवृत्तिधर्माणां विजानीमः यः सत्त्रेषु प्रवर्तेत इति कथमसौ दशरात्रः स हि सर्वसत्त्रेषु प्रवृत्तिधर्मेति । एतदपि नोपपद्यते न हि दाशरात्रिकेष्वन्यवमासेष्वहःसु संस्थान्यत्वं शतसंख्याविधानं चोपपद्यते वाक्यभेदप्रसङ्गात् । अत्रापि च पृथक्त्वनिवेशिन्येव संख्या भवति दशरात्राभ्यासात् । तस्मादेतदप्यसदेव । अत्र वदामः । द्वादशाह आद्यो मूलभूतो यस्य शतातिरात्रस्य तद्द्वादशाहाद्यं शतातिरात्रम् । द्वादशाहमूलमित्यर्थः । कुत एतत् । तत्प्रकृतेः । द्वादशाहो हि प्रकृतिः सर्वसत्त्राणामित्युक्तमेव । अपि च यत्राहर्विशेषो नाम्नायते तत्र दशरात्रप्रवृत्तिर्भवति । इह संख्याविशिष्टानामतिरात्रसंस्थानामहर्विशेषाणामाम्नानाद्दशरात्रप्रवृत्तिर्न युक्ता इति । तस्मादियमेव व्याख्या द्वादशाह आद्यः प्रकृतिभूतो यस्य शतातिरात्रस्य तद्द्वादशाहाद्यं शतातिरात्रमिति यजुर्मोहि ॥ १०३ ॥

शताग्निष्टोमे शतोक्थ्ये च ॥ १०४ ॥

एष एव न्यायः ॥ १०४ ॥

शतातिरात्र एव कर्म विचारयति—

आश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्राम-

तादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपा-

कृत्यान्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रोण-

कलशे निदधाति ॥ १०५ ॥

आश्विनस्य सवनस्य आग्नेयसूक्तान्ते प्रतिप्रस्थाता ध्रुवक्ता-
मतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकरोति अन्तर्यामं हुत्वा
प्रपीड्य पवित्रं द्रोणकलशे स्थापयति ॥ १०५ ॥

सदोष होतृचमसम् ॥ १०६ ॥

स्थापयति ॥ १०६ ॥

ततः —

तिरोन्ह्यादि करोति पूर्वस्यान्हः १०७ ॥

ग्रहग्रहणाद्या विप्रुड्ढोमात्कृत्वा सवनसन्तानिं-

जुहोत्यग्निः प्रातः सवन इति ॥ १०८ ॥

पैन्द्रवायवग्रहणादिविप्रुड्ढोमात्कृत्वा सवनसन्तनिसञ्ज्ञकं हो-
मं करोत्यग्निः प्रात सवन इत्यनेन मन्त्रेण ॥ १०८ ॥

संवत्सरप्रभृतीनि गवामयनप्रकृतीनि

तद्गुणदर्शनात् ॥ १०९ ॥

सवत्सरप्रभृतीनि यानि सत्राणि तानि गवामयनप्रकृतीनि भव-
न्ति सवत्सरसामान्यात् । तद्गुणदर्शनात् । दृश्यन्ते हि तेषु गवाम-
यनिका गुणा । अथ यत्पृष्ठ्यं षडहमुपयन्ति अथ यदभिप्लवं
षडहमुपयन्तीति ॥ १०९ ॥

आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदश-

स्तोमाः ॥ ११० ॥

आदित्यानामयनमिति सञ्ज्ञा सत्रस्य । तत्राभिप्लवास्त्रिवृत्पञ्च-
दशस्तोमा भवन्ति ॥ ११० ॥

मासाः पृष्ठ्यमध्याः ॥ १११ ॥

गवामयने हि पृष्ठ्यान्ता मासाः इह पृष्ठ्यमध्या भवन्ति॥१११॥

बृहस्पतिसवोऽभिजित्स्थाने ॥ ११२ ॥

भवति ॥ ११२ ॥

इन्द्रस्तोमो विश्वजितः ॥ ११३ ॥

स्थाने भवति ॥ ११३ ॥

विश्वजितः परे ऽये त्रयोभिप्लवास्तेषामुत्तर-
यो स्थाने त्रिवृतोऽग्निष्टोमा दश ॥ ११४ ॥

भवन्ति ॥ ११४ ॥

उद्भिद्वलभिदौ च ॥ ११५ ॥

षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः ॥ ११६ ॥

षष्ठस्य मासस्य आदौ मध्यमस्याभिप्लवस्य स्थाने पृष्ठ्यो भवति ॥ ११६ ॥

दशरात्रस्य छन्दोमदशाहः ॥ ११७ ॥

भवति ॥ ११७ ॥

अङ्गिरसामयनमादित्यानामयनवत् ॥ ११८ ॥

अङ्गिरसामयनमिति सप्तसत्त्रात्तदादित्यानामयनवद्भवति॥११८॥
विशेषमाह—

अभिप्लवास्त्रिवृतः ॥ ११९ ॥

त्रिवृत्स्तोमका अभिप्लवा भवन्ति ॥ ११९ ॥

मासाः पृष्ठ्यादयः पूर्वपक्षे प्रतिलोमाः परे ॥ १२० ॥

भवन्ति ॥ १२० ॥

योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः ॥ १२१ ॥

भवति ॥ १२१ ॥

गोआयुषी प्रतिलोमे ॥ १२२ ॥

भवतः ॥ १२२ ॥

छन्दोमदशाहश्च ॥ १२३ ॥

प्रतिलोम एव ॥ १२३ ॥

इतिवातवतोरयनमेकैकेन पृष्ठ्यस्तो-
मेन मासं मासम् ॥ १२४ ॥

इतिवातवतोरयनमिति सत्रस्य संज्ञा । तत्रैकैकेन पृष्ठ्यस्तोमेन मासं नयेत् । पृष्ठ्यस्तोमाश्च त्रिवृदादयः । एवं ह्यत्र श्रूयते । त्रिवृता मास पञ्चदशेन मासं सप्तदशेन मासं एकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासमिति । अतस्त्रिवृदादिभिरेकाहैर्मासं मास नयेदिति ॥ १२४ ॥

तदुक्तमाचार्येण—

एकाहास्तच्छन्दात् १२५ ॥

इति । तेषां शब्दस्तच्छब्द. सत्राभिधायके उपलभ्यते । पृष्ठ्यस्तोमशब्दोऽपि च एकाहानामेव वाचक उपलभ्यते । पृष्ठ्यस्तोमशब्दास्त्रिवृदादयः । ननु च स्तोमेष्वपि दृश्यते पृष्ठ्यस्य षडहस्य स्तोमाः पृष्ठ्यस्तोमा इति स्तोमेष्वपि भवति । नैतदेवम् । पृष्ठ्यस्तोमशब्दः प्रस्यस्तमितावयवार्थवृत्तितयाऽश्वकर्णादिवदेकाहानां वाचक इति । स्तोमेषु पुन. षष्ठीं कल्पयित्वा समासलक्षणेन तल्लोपेन च स्तोमेन प्रवृत्तिः । न च तन्न्याय्यम् । तस्मात्पृष्ठ्यस्तोमशब्द एकाहानां वाचक इति ॥ १२५ ॥

एवं प्राप्त आह—

नानाहानि वा संघातशब्दात् ॥ १२६ ॥

वाशब्दः पक्षव्यावृत्तौ । नानाहानि वा यान्यन्यत्राम्नातानि

तेषु स्तोमविधानं त्रिवृता स्तोमेन मासं पञ्चदशस्तोमेन मासमित्येवमादि । कुत एतत् । सङ्घातशब्दो यत्र भवति तत्रैकाहवचने त्रिवृद्वर्धते स च मासमिति वाक्यं भिद्यते । अथ पुनर्यो मासः स त्रिवृता स्तोमेनेति नैष दोषो भवति ॥ १२६ ॥

मध्येव्रतम् ॥ १२७ ॥

विषुवत्स्तोमे व्रत भवति ॥ १२७ ॥

उत्तरपक्षं प्रतिलोमम् ॥ १२८ ॥

उत्तरपक्ष पूर्वपक्षप्रातिलोम्येन ॥ १२८ ॥

कुण्डपायिनामयनं पौर्णमासीदीक्षम् ॥ १२९ ॥

कुण्डपायिनामयनमिति सत्रस्य संज्ञा । तस्य पौर्णमास्यां दीक्षा भवति ॥ १२९ ॥

चतुर्थ्यां वा परपक्षस्य ॥ १३० ॥

इति विकल्पः ॥ १३० ॥

मासदीक्षाः ॥ १३१ ॥

तस्य भवन्ति ॥ १३१ ॥

सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति ॥ १३२ ॥

सोमोपनहन कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः । अग्निहोत्रं च सायारम्भं प्रातरपवर्गम् । तत्र द्वावपि होमौ फलैक्यात्तन्त्रेणोपक्रमितव्यौ । प्रधानस्य तु भेदः । चतुर्गृहीतेनाग्नेयीं सायमाहुतिं हुत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति । तन्त्रेणोत्तरां जुहोति । गार्हपत्यकार्यं तत्र प्राजहित एव न शालाद्वार्ये । ज्योतिष्टोमे हि तच्छ्रुतं न चाग्निहोत्रं ज्योतिष्टोमो न च तदङ्गमिति । आहवनीयस्त्वप्रणीत एव ॥ १३२ ॥

दर्शपूर्णमासाभ्यां मासम् ॥ १३३ ॥

नयेयु ॥ १३३ ॥

पक्षादौ यद्यत्राविस्तत्सर्वमस्मिन् ॥ १३४ ॥

पक्षे कर्तव्यस्य अभिप्रवृत्तत्वात् ॥ १३४ ॥

सारस्वते च प्रथमे ॥ १३५ ॥

एवमेव ॥ १३५ ॥

तन्त्रेण वा समस्तचोदितत्वात् ॥ १३६ ॥

वाशब्दः पक्षव्यावृत्तौ । तन्त्रेणैव दर्शपूर्णमासौ कर्तव्यौ । समस्तयोर्हि चोदना दर्शपूर्णमासाभ्यां मासमिति । न ह्यत्र कालो भेदकः । तस्मादग्निहोत्रवदत्रापि तन्त्रमेव ॥ १३६ ॥

अग्निहोत्रं च ॥ १३७ ॥

अस्य सूत्रस्य पूर्वमेवाभिहितो न्यायः ॥ १३७ ॥

पृथङ्मासाश्चातुर्मास्यपर्वभिः ॥ १३८ ॥

नीयन्ते । वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधैर्मासं शुनासीरीयेन मासमिति श्रुते ॥ १३८ ॥

साकमेधा दर्शपूर्णमासवत् ॥ १३९ ॥

तन्त्रेणेत्युक्तो न्यायः ॥ १३९ ॥

सोमा वा सामान्यात् ॥ १४० ॥

सोमा वा एते भवन्त्यग्निहोत्रादयः । कुत एतत् । सामान्यात् । सत्त्रं हि सोमयागे पूर्यते । अथ वा सामान्यादिति समानशब्दः । अग्निहोत्रादिषु प्रतिकर्म सोमेषु ॥ १४० ॥

न जुहोति शब्दात् ॥ १४१ ॥

नैतदेव सोमा एत इति । कुत एतत् । जुहोतिशब्दात् । मासम-

ग्निहोत्र जुहोतीति जुहोति शब्दोऽत्र भवति। न चासौ सोमयागेषु प्रसिद्ध । तस्मान्न सोमा इति॥ १४१॥

कामभितरे॥ १४२॥

इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमा । न हि तत्र जुहोति शब्द इति। नेत्युच्यते। दर्शपूर्णमासादय शब्दा निरुपपदा एव। दर्शपूर्णमासादीन् प्रत्याययन्ति सोमोपपदा सोमा निरूपपदाश्चैते मास्त दर्शपूर्णमासाऽभ्यामितितस्माद्दर्शपूर्णमासादयोपि न सोमा एवे॥ १४२॥

इतिदातवतोरयनं पूर्वपक्षेण पण्मासात्॥ १४३॥

इतिवातवतोरयनस्य पूर्वपक्षेण पण्मासान्नयेयु॥ १४३॥

उत्तमे त्रयोऽभिप्लवा दशरात्रो महाव्रतम्॥ १४४॥

उत्तमे मासे त्रयोऽभिप्लवा दशरात्रो महाव्रत भवति॥ १४४॥

उपरिष्टादतिरात्रं भवति॥ १४५॥

अनुग्रहश्रुते । यदन्यतरतोऽतिरात्रस्तेनाहीन इति॥ १४५॥

उभयतो वा॥ १४६॥

अतिरात्रो भवति सत्रत्वात्। अनुग्रहश्रुतिस्तु अहीनत्वेन संस्तौति तत्कथम् द्विविधैव्यवहितत्वात॥ १४६॥

पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः ॥ १४९ ॥

तान्याह—

होताध्वर्य्वग्रपोत्रीये च ॥ १५० ॥

चशब्दाद्धोत्रं च ॥ १५० ॥

उद्गाता नेष्टृच्छावाकीये ॥ १५१ ॥

मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ॥ १५२ ॥

प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये ॥ १५३ ॥

प्रतिप्रस्थाताग्नीध्रोन्नेत्रे ॥ १५४ ॥

होतोऽध्वर्य्वग्रपोत्रीये चेति चकारः सर्वत्रानुवर्त्तते ॥ १५४ ॥

मुख्यासनेभ्योऽनुसंसर्पमितराणि ॥ १५५ ॥

आसनशब्दः स्थानवाची मुख्यस्थानेभ्यः अनुसृत्य परकीयाणि कर्माणि कुर्युः । स्वकर्मकर्त्तृत्वस्य चरितार्थत्वात् ॥ १५५ ॥

सर्पसत्त्रं व्यत्यासं त्रिरात्रं कौसुरुबिन्द द्वितीयं च ॥ १५६ ॥

सर्पसत्त्रमिति नाम । तत्राहान्याह । विराडेकाहः । कौसुरुबिन्दस्य द्वितीयमहः वचनसामर्थ्यात् ॥ १५६ ॥

गवामयनं वाभिगरश्रुतेः ॥ १५७ ॥

गवामयनमेव वा भवति । कुत एतत् । अभिगरश्रवणात् । चण्डकुचण्डावभिगरापगराविति श्रवणात् । अभिगरापगरौ च गवामयने दृष्टौ । तेन गवामयनं भवति । अत्र वाशब्दं विकल्पार्थमेके इच्छन्ति । नचैतद्युक्तम् । अभिगरापगरौ हि लिङ्गमात्रम् । विराट्कौसुरुबिन्दद्वितीयमिति वचनात् । तस्मात्तदेवयुक्तरूप इति । लिङ्गं तु संस्तवार्थं भविष्यति ॥ १५७ ॥

तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥ १५८ ॥

तापश्चितमिति सत्रनाम । तत्र दीक्षाः संवत्सरं भवन्ति । उपसदः सुत्याश्च ॥ १५८ ॥

इदानीमहान्याह—

गवामयने नेयुः ॥ १५९ ॥

गवामयनेन गच्छेयुः । गवामयनमेव कर्तव्यमित्यर्थः ॥१५९॥

अग्निष्टोमेन वा ॥ १६० ॥

ईयु । अपूर्वश्चायमग्निष्टोमो नैकाहिको न द्वादशाहिक संस्थानमात्रोपदेशात् ॥ १६० ॥

सर्वजिद्विश्वजितां वैकैकेन ॥ १६१ ॥

सर्वजिदादय एकाहाः ॥ १६१ ॥

त्रिकद्रुकैर्वा ॥ १६२ ॥

एतेप्येकाहा एव ॥ १६२ ॥

महातापश्चितं त्रिसंवत्सरोपसत्कम् ॥ १६३ ॥

भवति ॥ १६३ ॥

तुल्यमन्यत् ॥ १६४ ॥

तापश्चितेनैव १६४ ॥

क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि भवन्ति ॥ १६५ ॥

विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ मासौ त्यजेत् ॥ १६५ ॥

सहस्रसाव्यमग्नेः ॥ १६६ ॥

सहस्रसाव्यं नामाग्नेः सत्रम् ॥ १६६ ॥

अभिप्लवानां चतुःषष्टिः शतं चतुरहश्च ॥१६७॥

त्रिषंवत्सरः षष्टिदीक्षम् ॥ १६८ ॥

त्रिसंवत्सरं सत्रम् तच्च षष्टिदीक्षं भवति ॥ १६८ ॥

यथा शक्ति वा ॥ १६९ ॥

दीक्षा भवन्ति ॥ १६९ ॥

आदितस्त्रयः संवत्सराः सौत्याः ॥ १७० ॥

गवामयनादयो भवन्ति ॥ १७० ॥

महासत्राण्यतः ॥ १७१ ॥

अतः परं महासत्राणि व्याख्यायन्ते। महासत्रग्रहणं तुल्यधर्मग्रहणार्थम् ॥ १७१ ॥

चतुर्भागं चतुर्भागमेकैकस्य ज्योतिष्टोमिकैस्तोमैः ॥ १७२ ॥

नयेयुः ॥ १७२ ॥

तेष्वतिरात्रविषुवन्तः स्युर्वा न वा ॥ १७३ ॥

तेषु महासत्रेषु अतिरात्रविषुवन्तो भवेयुर्वा न वा भवेयुः। भवेयुरिति कुत एतत्। प्रतिसंवत्सरमादिमध्यावसानेष्वतिरात्रविषुवतां दृष्टत्वाद्भवेयुरिति गम्यते। यद्येवं न भवेयुः कथम्। सत्रसंयोगेन ह्यतिरात्रश्रवणात्। उभयतोऽतिरात्रं सत्रमिति न संवत्सरसंयोगेन। अतो न प्रतिसंवत्सरमतिरात्रौ ॥ १७३ ॥

एवं सत्युपसंहरत्याचार्यः—

पक्षादौ यद्यद्विसतसर्वस्मिन्सारस्वते च प्रथमे इत्युक्तम् तेन साक्षाय्यमत्र प्राप्नोति । अत उच्यते साक्षाय्यं च तस्मिन्निति ॥ १९० ॥

स्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाप्यध्व्
शम्यां प्रास्यति तद्गार्हपत्यस्य स्थानम् ॥१९१॥

यथोक्तमाहवनीयस्य ॥ १९२ ॥

यथास्थितं यज्ञाङ्गानि हरन्ति ॥ १९३ ॥

येषु स्थानेषु स्थितानि तत्समवेतान्येव हरन्ति ॥ १९३ ॥

पांसूनादाय भौमानां यथादेशं निवपन्ति ॥ १९४ ॥

भौमानामङ्गानां पांसून्गृहीत्वा यथा देशं न्युप्यम् ॥ १९४ ॥

यजनीययोरन्होगौआयुषी ॥ १९५ ॥

भवतः ॥ १९५ ॥

पर्वान्तरेषु दर्शपूर्णमासौ ॥ १९६ ॥

प्रथमे पर्वान्तरे दर्शः । द्वितीये पौर्णमासम् । एवं व्यत्यासेन ॥ १९६ ॥

शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च
यन्ति दक्षिणेन तीरेण ॥ १९७ ॥

शम्याप्रासे उषित्वा यागं कृत्वा ततो यन्ति दक्षिणेन तीरेण सरस्वत्याः ॥ १९७ ॥

दृषद्वत्यप्ययेऽपोनप्त्रीयश्चरुः ॥ १९८ ॥

दृषद्वत्यप्यये प्रदेशे चरुर्भवति ॥ १९८ ॥

अग्नये कामायेष्टिः प्लक्षे प्रास्रवणे ॥ १९९ ॥

प्लक्षे प्रास्रवणप्रदेशे अग्नये कामायेष्टिर्भवति ॥ १९९ ॥

तस्यामश्वपुरुष्यौ धेनुके दद्युः ॥ २०० ॥

इष्यते अश्वपुरीष्योर्दानं धेनुत्वे सति तदुपकाराभावत्त्वप्रसूतेश्च दानम् । दान च प्रासर्पकेभ्य. ॥ २०० ॥

अवशिष्टं चैके यज्ञोपकरणमुदयनीयान्ते ॥ २०१ ॥

यदवशिष्टं यज्ञोपकरण तदुदयनीयान्ते ददाति । तत्र समाप्ताविलर्थ ॥ २०१ ॥

अवभृथमभ्यवयन्ति यमुनां कारपचवं प्रति ॥२०२॥

कारपचवप्रदेशं प्रति यमुनामवभृथमभ्यवयन्ति । अनेन चावभृथग्रहणेन सत्रसमाप्तिर्लक्ष्यत ॥ २०२ ॥

पुरस्तादावभृथादग्नये कामाय ॥ २०३ ॥

इष्टिर्भवति ॥ २०३ ॥

उदवसानीयान्ते वा ॥ २०४ ॥

चेति विकल्प ॥ २०४ ॥

यथार्थं विप्रव्रजेयुः ॥ २०५ ॥

अपृष्ठशमनानि सारस्वतानि ॥ २०६ ॥

अपृष्ठशमनानि हि सारस्वतसत्राणि श्रूयन्ते ॥ २०६ ॥

त्रीण्येषां साम्युत्थानान्यतिरात्रैः ॥ २०७ ॥

एषां सारस्वतसत्राणां मध्ये साम्युत्थानानि त्रीणि भवन्ति ॥ २०७ ॥

सहस्रपूरणगृहपतिमरणसर्वज्यान्यः ॥ २०८ ॥

प्रथमं साम्युत्थानं गवां सहस्रपूरणे । द्वितीयं गृहपतिमरणे । तृतीय सर्वज्यान्याम् । सर्वज्यानिश्च सर्वहानिरुच्यते ॥ २०८ ॥

सहस्रपूरणेगौः ॥ २०९ ॥

अतिरात्रो भवति ॥ २०९ ॥

तदेव दत्वा ॥ २१० ॥

सम्युत्तिष्ठेरन् ॥ २१० ॥

आयुर्गृहपतिमरणे ॥ २११ ॥

अतिरात्रो भवतिः ॥ २११ ॥

सर्वज्यानां विश्वजित् ॥ २१२ ॥

अतिरात्रः कर्तव्यः ॥ २१२ ॥

ज्योतिष्टोमो वा सर्वेषाम् ॥ २१३ ॥

भवति ॥ २१३ ॥

नावभृथः सरस्वत्याम् ॥ २१४ ॥

सरस्वत्यामवभृथं न भवति ॥ २१४ ॥

परिपार्श्वेपूदकेषु ॥ २१५ ॥

कर्तव्यः ॥ २१५ ॥

असत्सूद्धृत्य ततः ॥ २१६ ॥

यदि नाम न सन्ति ततः सरस्वत्याः पयोदकमुद्धृत्यावभृथः कार्यः ॥ २१६ ॥

द्वितीये दतिवातोरयनस्याहनी त्रिवृत्पञ्चदशस्तोमे पर्वान्तरेषु व्यत्यासम् ॥ २१७ ॥

द्वितीये सारस्वते सत्रे दतिवातवतोरयनस्य ये त्रिवृत्पञ्चदशस्तोमे अहनी ते पर्वान्तरेषु व्यत्यासेन क्रियेते ॥ २१७ ॥

तयोश्चेदसमाप्तयोरागच्छेद्यजनीयकालस्तमु-
पेत्य शेषमनुसमापयेयुः ॥ २१८ ॥

तयोस्त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यद्यागच्छेद्यजनीयकाल स्त यजनीयकालीन परिसमाप्य शेष परिसमापयेयु ॥ २१८ ॥

शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्येके ॥ २१९ ॥

एके शेषपरिसमाप्तिमिच्छन्ति ॥ २१९ ॥

पञ्चदशउक्थ्यः कृष्णे ॥ २२० ॥

भवतीत्येके ॥ २२० ॥

तृतीये यजनीययोरन्होरभिजिद्विश्वजितौ ॥२२१॥

भवत ॥ २२१ ॥

पर्वान्तरेषु त्रिकद्रुकाः ॥ २२२ ॥

भवन्ति ॥ २२२ ॥

पूर्ववदनुसमापनम् ॥ २२३ ॥

भवति ॥ २२३ ॥

दार्षद्वतृविगाचार्ययोरन्यतरस्य गा रक्षे-
त्संवत्सरम् ॥ २२४ ॥

दार्षद्वतमिति सत्त्र नामधेयम । तत्र कर्म व्याख्यायते । ऋत्विगाचार्ययोरन्यतरस्य गारक्षेत्संवत्सर गवा रक्षणम् ॥ २२४ ॥

अपरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ॥ २२५ ॥

अपरं संवत्सरं नैतन्धवप्रदेशे गत्वोदकेऽग्नीन्धन कुर्यात् ॥२२५॥

कुरुक्षेत्रे परेणाहि स्थलेऽग्न्याधेयमन्वारम्भणी-

यान्तं भवति ॥ २२६ ॥

अन्वारम्भणीयान्तमिति कुत एतत् इष्टयङ्गत्वादन्वारम्भणीयायाः ॥ २२६ ॥

दर्शपूर्णमासान्तं वा ॥ २२७ ॥

वाशब्दः पक्षव्यावृत्तौ । दर्शपूर्णमासान्तमेव भवति नारम्भणीयान्तम् । दर्शपूर्णमासस्य हीष्टयन्तरे प्रवृत्तिर्वाच्येति ॥ २२७ ॥

आहिताग्निश्चेद्व्यर्णेऽग्निहोत्रमेव जुहुयात् ॥ २२८ ॥

संवत्सरम् ॥ २२८ ॥

पुरोडाशोऽग्नये तेन यजमानः पूर्ववत् ॥ २२९ ॥

तेन यागं कुर्वन् पूर्ववच्छम्याप्रासे दृषद्वतीतीरेण दक्षिणेन गच्छेत् ॥ २२९ ॥

एत्य च दृषद्वतीतीरेण ॥ २३० ॥

तद्वदेव ॥ २३० ॥

अवभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति ॥ २३१ ॥

त्रिप्लक्षावहरणस्यार्जव्येन यमुनामवभृथमभ्युपैति ॥ २३१ ॥

तत्र च—

स्वयमेव सामगानम् ॥ २३२ ॥

भवति ॥ २३२ ॥

आप्लवनमात्रं वा ॥ २३३ ॥

भवति नावभृथ । वाशब्दो विकल्पार्थः ॥ २३३ ॥

उदेत्यैतयैवेष्ट्या यजेत ॥ २३४ ॥

परिसमाप्य सत्रमेतयैवेष्ट्या यजेत ॥ २३४ ॥

पशुना वा तद्देवतेन ॥ २३५ ॥

यजेत ॥ २३५ ॥

अग्निष्टोमेन वा ॥ २३६ ॥

यजेतेति ॥ २३६ ॥

तुरायणं वैशाखीशुक्लस्य पञ्चम्याम् ॥ २३७ ॥

तुरायणमिति सत्रनाम ॥ २३७ ॥

चैत्रस्य वा २३८ ॥

शुक्लपञ्चम्यां भवति ॥ २३८ ॥

प्रातराहुत्यन्ते ऽदीक्षितो दीक्षारूपाण्यास-
जते तूष्णीं कृष्णा जिनादीनि ॥ २३९ ॥

स्वयमेव ॥ २३९ ॥

हवींषि निर्वपत्याग्नेयमैन्द्रम् वैश्वदेवं चरुः
सवनकालेष्वेकैकम् ॥ २४० ॥

कुत एतत् । आग्नेयं प्रातस्सवनम् ऐन्द्रं माध्यन्दिनम् वै-
श्वदेवं तृतीयसवनमित्यर्थवादात् ॥ २४० ॥

तन्त्रेण वा ॥ २४१ ॥

वाशब्दः पक्षव्यावृत्तौ । तन्त्रेण वा करोति न सवनकालेषु ।
कुत एतत् । कालैक्यात् । तस्मात् तन्त्रेणैव ॥ २४१ ॥

अन्वहम् ॥ २४२ ॥

हवींषि निर्वपति ॥ २४२ ॥

वा हविःशेषभक्षः ॥ २४३ ॥

वा प्रकृतापनः ॥ २४३ ॥

संवत्सरं यजते ॥ २४४ ॥

अत्राधस्तनसूत्रे वाशब्दमन्यथा वर्णयन्ति । संवत्सरं यजनीयेषु यागपरिसमाप्तौ सत्यामन्वहं वेत्युच्यते । ततश्चावधारणेषा । संवत्सरशब्देन हि सर्वाण्यहानि गृह्यन्ते न यजनीयान्येव । तत्रैव प्रयोगदर्शनात् ॥ २४४ ॥

अनियतोदकं दार्षद्वतवदवभृथादि ॥ २४५ ॥

अनियतोदकोऽवभृथः कार्यः । आदिग्रहणाच्च उदेत्यैतयेवेष्ट्या यजेतेत्येवमादि लभ्यते ॥ २४५ ॥

द्वादशाहविकल्पाः ॥ २४६ ॥

व्याख्यायन्त इति सूत्रशेषः ॥ २४६ ॥

सर्वाग्निष्टोमो भरतद्वादशाहः ॥ २४७ ॥

भरतद्वादशाहे सर्व एवाग्निष्टोमा भवन्ति प्रायणीयोदयनीयवर्जम् ॥ २४७॥

संक्रमद्वादशाहे दशरात्रस्य त्र्यहप्रथमानि प्रथमस्त्र्यहस्त्र्यहद्वितीयानि द्वितीयस्त्र्यहस्त्र्यहस्तृतीयानि तृतीयस्त्र्यहः ॥ २४८ ॥

भवति ॥ २४८ ॥

प्रकृत्या दशमम् ॥ २४९ ॥

अविकृतरूपमेव दशमं भवति ॥ २४९ ॥

अग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां

वैकैकेन ॥ २५० ॥

दशरात्रस्य पूरणम् ॥ २५० ॥

त्रिककुकैर्वाऽहीनैकाहानाप्तोर्यामराजसूयवर्ज-

म् गोआयुर्भ्यां वा ॥ २५१ ॥

सर्वे एवैते विकल्पाः ॥ २५१ ॥

अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः ॥ २५२ ॥

भवति । तच्चैतत्त्र्यपक्ष एव सम्भवति नैकाहपक्षे ॥ २५२ ॥

यथोक्तस्य स्तोत्रं स्तोत्रियं वर्चं वा साम

वा यजुर्वा हवींन्यत्कृत्वा यजेत ॥ २५३ ॥

सर्वे चैते शास्त्रार्थप्रकाराः ॥ २५३ ॥

व्यत्यासमन्ततः ॥ २५४ ॥

स्तोत्रियादीनां व्यत्यासेनाप्यन्ततो भवति ॥ २५४ ॥

नास्त्येषामन्तः ॥ २५५ ॥

एषां विकल्पानामन्त एव नास्ति दिङ्मात्रं प्रदर्शितमाचार्येण ॥ २५५ ॥

अयनमुत्सर्गिणां गवामयनविकल्पाः ॥ २५६ ॥

विकल्पकल्पमुत्सर्गिणामयनमुच्यते ॥ २५६ ॥

पञ्चोक्थ्यांस्त्रीनभिप्लवानुपेत्य चतुर्थं

चतुरुक्थ्यमुपयन्ति ॥ २५७ ॥

इत्येको विकल्पः ॥ २५७ ॥

स्तोमोत्सर्गो वैकस्यान्हः ॥ २५८ ॥

एकस्मिन्नहनि स्तोम एव वा न भवति ॥ २५८ ॥

पशोर्वा सवनविधिक्रिया ॥ २५९ ॥

ततश्च प्रातः सवन एव परिसमाप्यते पशुः ॥ २५९ ॥

अनारम्भो वा ॥ २६० ॥

पशोः ॥ २६० ॥

तापश्चितविकल्पः ॥ २६१ ॥

व्याख्यायत इति सूत्रशेषः ॥ २६१ ॥

अयमेव प्रायणीयोऽतिरात्रः सर्व॑

सत्त्र॑ स्यात् ॥ २६२ ॥

यथोक्तपृष्ठः ॥ २६३ ॥

अथापरम् ॥ २६४ ॥

विकल्परूपम् ॥ २६४ ॥

ज्योतिष्टोमाश्चत्वारोऽभिजिच्चैः षण्मासान् ॥ २६५ ॥

नयेयुः ॥ २६५ ॥

व्रतम् विषुवत्स्थाने ॥ २६६ ॥

भवति ॥ २६६ ॥

विश्वजिज्ज्योतिष्टोमाश्चत्वारस्तैरुत्तरान् ॥२६७॥

षण्मासानयेत ॥ २६७ ॥

एतत्पुरुषस्य नारायणस्योत्तममेतत्पुरुषस्य
नारायणस्योत्तमम् ॥ २६८ ॥

नारायणसत्रमित्यस्य संज्ञा ॥ २६८ ॥



इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये
चतुर्विंशोऽध्यायःसमाप्तः ।



# पञ्चविंशो ऽध्यायः ।

अथ प्रायश्चित्तानि अध्वर्युवेदविहितान्युक्तानि साङ्गानि कर्माणि तत्समनन्तरं उद्गातृवेदविहितानि चोक्तानि । इदानीं तेषामेव नैमित्तिकाङ्गव्याचिख्यासयेदमाह—

## कर्मोपपाते प्रायश्चित्तं तत्कालम् ॥ १ ॥

कर्मण उपपातः कर्मोपपातः उपपातो विनाशो भ्रेष इत्यनर्थान्तरम् । स च चतुः प्रकारो भवति । अकरणम् । न्यूनकरणम् । अतिरिक्तकरणम् । अयथाकरणं चेति । यद्वा एक एव प्रकारः सर्वमेवेदमयथाकरणम् यथैतद्विहितं तथा न भवतीति । प्रायश्चित्तमिति नैमित्तिकस्य संज्ञा । तच्च तत्काले एव भवति यस्मिन्काल उपपातः । कुत एतत् । भिन्ने जुहोति स्कन्ने जुहोतीति निमित्तसप्तमीयं नाधिकरणसप्तम्येषा । अधिकरणसप्तम्यां आहवनीयापवादप्रसङ्गात् । नैमित्तिकस्य च निमित्तकालता न्याय्येति ॥ १ ॥

एवं प्राप्त आह—

## चोदना वा कालशब्दात् ॥ २ ॥

वाशब्दःपक्षव्यावृत्तौ । नैमित्तिकस्य चोदनामात्रमेवैतत् न तत्कालता । कुत एतत् । अकालशब्दात् । न ह्यत्र कालप्रतिपादकः शब्दोऽस्ति । तेनागन्तुत्वात् अन्ते निवेशः प्राप्नोति ॥ २ ॥

एवं प्राप्त उच्यते—

## कालो वा प्रत्ययात् ॥ ३ ॥

तत्कालतैव नैमित्तकस्य स्यात् । प्रतीयते हि निमित्तकालता नैमित्तकस्य । प्राकृताचन्निमित्तान्नैमित्तिकं न भवति । निमित्त उपजाते नैमित्तिकं भवति । तेन तत्कालतास्य । तस्मात्साधूक्तं कर्मोपपाते प्रायश्चित्तं तत्कालमिति । कर्मग्रहणाच्च पुरुषसम्बन्धिन्युपपाते तत्कालता न भवति । यथा गेहदाहे ऽग्नये क्षामवत इति ॥ ३ ॥

## महाव्याहृतिहोमोऽनादेशे ॥ ४ ॥

भूर्भुवः स्वरित्येता महाव्याहृतयः प्रसिद्धाः । ताभिर्होमः कर्तव्यः । यत्र निमित्तमुपदिश्य नैमित्तिकस्यानादेशः तत्र भवति । यत्र पुनर्निमित्तोद्देशेन नैमित्तिकादेशस्तत्र तदेव । यथा प्रणीतास्फन्ना अभिमृशेदिति । तत्र महाव्याहृतिहोमो न भवति । अनादेश इत्युक्तत्वात् ॥ ४ ॥

व्याहृतिहोमे विशेषार्थमिदमाह—

## हौतिके भूरिति गार्हपत्ये ॥ ५ ॥

हौत्रिक उपपाते भूरिति गार्हपत्ये जुहोति । हौत्रिकं चाग्वेदिकमुच्यते ॥ ५ ॥

## दक्षिणाग्नावाध्वर्यवे भुव इति ॥ ६ ॥

अध्वर्युवेदविहितोपपाते दक्षिणाग्नौ भुव इति जुहोति ॥ ६ ॥

## आग्नीध्रीये सोमे ॥ ७ ॥

सोमे वर्तमाने आध्वर्यवोपपाते आग्निध्रीये जुहोति । प्रागाग्नीध्रीयोत्पत्ते दक्षिणाग्नावेव हूयते । यतो न हीयमाहुतिराग्नीध्रीयं प्रयोजयति स्वकालत्वात् । अस्याश्च नैमित्तिकत्वात् ॥ ७ ॥

## स्वरित्यौद्गात्र आहवनीये ॥ ८ ॥

उद्गातृवेदविहिते भ्रेषे स्वरित्याहवनीये जुहोति । यदुक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथेति उपक्रमेऽपि श्रूयत इति । अत्र च ऋगादिग्रहणं वेदोपलक्षणार्थम् । उपक्रमोपसंहारयोर्हि वेदा श्रूयन्ते । उपक्रमे तावत्त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः स इमांस्त्रीन्वेदानभितताप तेऽयस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येवमादीनि । तथोपसंहारे तत ऋग्वेदेनैवार्वेदं भिषज्यति यजुर्वेदेन यजुर्वेदमित्येवमादि । तस्मादृगादिग्रहणं वेदोपलक्षणार्थम् । एवं ह्येकवाक्यता भवति ॥ ८ ॥

चतुर्गृहीतान्येतानि सर्वत्र ॥ ९ ॥

सर्वत्र ग्रहणमविज्ञाते प्रतिमहाव्याहृतीत्येवमर्थम् ॥ ९ ॥

सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम् ॥ १० ॥

सर्वप्रायश्चित्तमिति संज्ञा संव्यवहारार्था ॥ १० ॥

तदाह—

त्वन्नो अग्न इति द्वाभ्यामयाश्चाग्नेऽस्यन-
भिशस्तिश्च सत्त्वमित्त्वमया असि अयानो
यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा, येते
शतं वरुण ये सहस्रं यज्ञियाः पाशावितता
महान्तः तेभिर्नो अद्य सवितोत विष्णुर्विश्वे
मुञ्चन्तु मरुतः स्वर्का स्वाहोदुत्तममिति च ॥ ११ ॥

अत्र द्वयोर्मन्त्रयोः पश्चात्पाठः । एतत् सर्वप्रायश्चित्तं चशब्दात्सर्वत्र भवति । द्वयांस्तु विशेषः । सकृद्गृहीतेनेति ॥ ११ ॥

अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थम् ॥ १२ ॥

अविज्ञातं स्मार्तमभिधीयते । न हि तज्ज्ञायते किमाग्नेन्द्रियं याजुर्वैदिकं सामपैदिकमिति । अय च दृष्टं स्मरणं शुचिना कर्म कर्तव्यम् यज्ञोपवीतिना कर्तव्यम् यद्दक्षिणेनेत्येवमादि च । तदुपपत्ते तदपचारे प्रतिमहाव्याहृति हुत्वा सर्वाभिश्चतुर्थं होमं करोति ॥ १२ ॥

सर्वप्रायश्चित्तं च ॥ १३ ॥

मन्त्र गपति ॥ १३ ॥

अग्निहोत्री चेद्दुहानोपविशेयजुपोत्थापनमे-

क उदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १४ ॥

अग्निहोत्रशब्देन तत्साधनभूतं द्रव्यमुच्यते । तद्‌द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी मत्वर्थीयलोपेन अग्निहोत्रीत्युक्तं सा चेद्दुह्यमानोपविशेत् तामेके यजुषोत्थापयन्त्युदस्थादिति ॥ १४ ॥

दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्त्स्यात् ॥ १५ ॥

यं प्रत्यनभ्यागमिष्यन्यजमान इति ॥ १५ ॥

दण्डेन वानुपिष्योत्थाप्य दोहनम् ॥ १६ ॥

वाशब्दो विकल्पार्थः ॥ १६ ॥

अदानं च ॥ १७ ॥

तस्मिन्पक्षे ॥ १७ ॥

अदुह्यमानायामन्याम् ॥ १८ ॥

ग्रासमेवेदमुच्यते प्रायश्चित्तव्युदासार्थम् ॥ १८ ॥

वाश्येत चेत्तृणान्यालुप्य ग्रासयेत्सूयवसाभगवति हि भूया अथो वयं भगवन्तः स्याम अद्धि तृणमघ्न्ये विश्वदानी पिब शुद्धमुदकमाचरन्तीति ॥ १९ ॥

अनेन मन्त्रेण यस्याग्निहोत्री दोह्यमाना वाश्येतास्यास्तृण्यमाच्छिद्य ग्रासयेदिति श्रुतेः ॥ १९ ॥

तस्यै पयसा जुहोति ॥ २० ॥

यथा कालोपपाते तद्देवते तद्देवतः हुत्वा तद्व्यातिदिश्यान्येन जुहुयात् ॥ २३ ॥

यस्मिन्यस्मिन्काले उपपातस्तद्देवत्यं होमं कृत्वा तदुद्देशेन पातिदिश्यान्येन जुहुयात् ॥ २३ ॥

स्कन्देच्चेदस्कन्नधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् ॥ २४ ॥

अथ यत्र स्कन्नः स्याच्चदभिमृशेदस्कन्नधित प्राजनीति श्रुतेः ॥ २४ ॥

भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् ॥ २५ ॥

यद्यु नीची स्थाली स्याद्यदि वा भिद्यते स्कन्नप्रायश्चित्तेनैवाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे करोति। यदि भिन्ना स्थाली अन्येन च द्रव्येण होमाभिनिर्वृत्तिः ॥ २५ ॥

भुवपतय इति हाविर्यज्ञियम् ॥ २६ ॥

स्कन्नमभिमृशेत् ॥ २६ ॥

देवान्दिवमगन्निति सोमे ॥ २७ ॥

सोमे हाविर्यज्ञियं स्कन्नम् देवान्दिवमगन्नित्यनेन मन्त्रेण अभिमृशेत् ॥ २७ ॥

पयोरोजसेति वोदकेनोपसिञ्चेत् ॥ २८ ॥

सोम यद्य हाविर्यज्ञियं स्कन्नम् । याज्यं, विकल्पार्थः ॥ २८ ॥

उन्नीतसर्वसत्रस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् ॥ २९ ॥

पशमय्य पूर्ववद्धोम इति । होमग्रहणादग्निहोत्रविषयता गम्यते । अपरे तु सर्वविषयं मन्यन्ते ॥ ३४ ॥

आहवनीयजागरणे वा तत एवोद्धरणम् ॥ ३५ ॥

आहवनीयजागरणे गार्हपत्यानुपशमने तत एवाहवनीयोद्धरणम् शेषश्च गार्हपत्यकार्ये ॥ ३५ ॥

आहृत्य वा ॥ ३६ ॥

गार्हपत्यस्थानमाहवनीयम् । पुनरुद्धरणम् । शेषश्च गार्हपत्यः ॥ ३६ ॥

उलपराज्यागताद्वा ॥ ३७ ॥

उलपराजी तृणपङ्क्तिरुच्यते । तया वा ज्वलन्त्या गार्हपत्यस्थानमागतात् पुनरुद्धरणं भवति ॥ ३७ ॥

निर्मथ्य वा ॥ ३८ ॥

अथ हैकेऽन्यं गार्हपत्यं मन्यन्तीति श्रुतेः । अस्मिंश्च पक्षे स्यात्प्राप्तमेवैतदिति नैमित्तिकं भवति । प्राप्तस्य चोपादानमितरैः सह विकल्पार्थम् ॥ ३८ ॥

समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः ॥ ३९ ॥

समारोह्य पूर्ववदुद्धरणस्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते सायंप्रातर्होमः । असमारोह्य पूर्वस्योपशमनं कृत्वा निर्मथ्योद्धृत्य पात्रैव होमः । एवं हि श्रूयते । अथ हैकेऽनुगमय्यान्यं मन्थन्ति । अथ हैके अरण्योरग्नी समारोहेति च ॥ ३९ ॥

त्रिराहृतो दक्षिणाग्निरनुगच्छेच्चेत् अनाहरणमस्य तदहरेके ॥ ४० ॥

एके तावत्तत्रोऽप्युद्धरन्ति । अनाहरणपक्षे च तद्दर्शनात्तस्मात्स्वकर्मलोपः ॥ ४० ॥

जाग्रतमाहवनीयमत्युद्धरेच्चेत्तदुक्तम् ॥ ४१ ॥

तदुक्तमिति ग्रहणमुत्तरविवक्षार्थम् ॥ ४१ ॥

पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके ॥ ४२ ॥

पश्चादाहवनीयस्य स्थापयित्वा पुनरस्ताद्वा तमग्निं उभयत्र होममेके कुर्वन्ति । एके तदुक्तं गार्हपत्योऽसाविति । उभयत्र च होमपक्षे चतुर्गृहीतेन हुत्वैकस्मिन्नग्नौ पुनश्चतुर्गृहीतेन द्वितीये जुहोति । एके शेषभक्षादि तन्त्रेण । अन्ये त्वेवमन्वेच्छन्ति । साध्यो होमः साधनमग्निः न च साधनभेदात्साध्यभेदो युक्तः तेनान्यथा वर्णयन्ति । एकैव समित् खातवती अग्निद्वयेऽप्युपधीयते । तत्र प्रक्षिप्तं होमद्रव्यमग्निद्वयेऽप्युपार्च्छति । एवमुभयत्र होमः कृतो भवतीति सम्प्रदायः । युक्तरूपमिव चैतत् । न हि साधनापेक्षया साध्यावृत्तिर्युक्तेति ॥ ४२ ॥

अभिनिधाने ऽग्नये ऽग्निमते पुरोडाशः ॥ ४३ ॥

यदि पुनरुद्धृतोऽग्निरगत्यामिनिहित एव भवति तदाग्नये ऽग्निमते पुरोडाशः कार्यः ॥ ४३ ॥

समितमिति वोपस्थानम् द्वाभ्याम् ॥ ४४ ॥

वाशब्दो विकल्पार्थः ॥ ४४ ॥

गृहीतानुगमने चान्वग्निरित्याहृत्य ॥ ४५ ॥

ममाग्ने वर्चो ग्रहीतेति गृहीतस्यानुगमने एतदेव प्राय-श्चित्तद्वयं विकल्पेन भवति । अन्वग्निरित्यनेन मन्त्रेण आहृत्य पूर्ववत् ॥ ४५ ॥

अनादेशे पुरोडाशः सर्वत्र ॥ ४६ ॥

यस्यागुपरिष्टादग्नये सुरभिमते च सूर्याय ज्योतिष्मते इति तत्र पुरोडाशो भवति । एतच्चोक्तमाचार्येण यत्र वेद्याचक्ये द्रव्यस्य न विधानम् तत्रैवमिति । इत्यत्राग्नये ऽग्निमते पुरोडाश इत्यवा-च्यं स्यात् ॥ ४६ ॥

अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये पश्चाद्-
ध्रियमाण इध्मेनोद्धरेदार्षेयो ब्राह्मणः ॥ ४७ ॥

यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियादिति प्रकृत्य सर्वमेतच्छ्रूयते । प्रैषवचनं तु नोपनिबद्धमाचार्येण ॥ ४७ ॥

वैष्णव्याहुतिः ॥ ४८ ॥

तत्र देवेति ॥ ४८ ॥

अग्नये च सूर्यवते ॥ ४९ ॥

पुरोडाशः ॥ ४९ ॥

अभ्युदये रजतधारणं पुरस्तात् वै-
श्वदेव्याहुतिः ॥ ५० ॥

सूर्याय च ज्योतिष्मते ॥ ५१ ॥

पुरोडाशः ॥ ५१ ॥

समानमुद्धरणम् ॥ ५२ ॥

इध्मेनोद्धरेदार्षेयो ब्राह्मण इति ॥ ५२ ॥

वैश्वदेवी वोभयतापुरोडाशा ॥ ५३ ॥

उभयत्र या वैश्वदेव्याहुतिर्भवत्यपुरोडाशा चतुर्गृहीतेन ॥५३॥

उभयानुगमने पुनराधेयं वा ॥ ५४ ॥

उभयोरनुगतयोः गार्हपत्याहवनीययोः यद्यभ्यस्तमयो भवत्यभ्युदयो वा तदा पुनराधेयं वा भवति । न्यायप्राप्तमग्न्याधेयं वा । कस्माद् इति चेत् । उभावग्नी युगपदुत्पाद्यौ । युगपदुत्पत्तिश्चाग्न्याधेयेन भवति । यद्येवं पुनराधेयं वेति कुत एतत् । वाक्यात् । यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा सूर्यः पुनराधेयमेव तत्र प्रायश्चित्तिः । एवं चेत् पुनराधेयमेव भवति नाग्न्याधेयमिति । न हि न्या-

यो वाक्येन विकल्प्यते । एतच्चानुगतपरिज्ञानोत्तरकालं यद्यभिनिम्लोचनं भवति न त्वभिनिम्लोचनोत्तरकालमनुगमनपरिज्ञाने ॥ ५४ ॥

भेदेनाप्युपपातात् ॥ ५५ ॥

भेदेनाप्यनुगमाभिनिम्लोचने भवत्येव पुनराधेयम् । कुत एतत् । उपपातात् । उपपातो हि भवति अग्न्यनुगमने ऽभिनिम्लोचनम् । तच्चोभयशब्देन विशिष्यते ततो वाक्यं भिद्यते । तस्माद्भेदेनाप्यनुगतयोः पुनराधेयं इति ॥ ५५ ॥

एवं प्राप्त आह—

न सह प्रक्लृप्तेः ॥ ५६ ॥

नैतदेवमन्यतरानुगमने पुनराधेयम् । सहैव हि प्रकल्पिता गार्हपत्याहवनीययोरुत्पत्तिः । तत्रैकैको न शक्यत उत्पादयितुम् । तस्मात्सविशेषणमेवात्र निमित्तम् ॥ ५६ ॥

मथ्यमानश्चेन्न जायेत यमदूरात्पश्येत्तमाहृत्याभिजुहुयात् ॥ ५७ ॥

मथ्यमानग्रहणं कालासम्भवप्रदर्शनार्थम् । न हि कश्चिन्मथ्यमानो न जायते । यमेवाग्निं कंऽग्निपरिगृहीतं पश्येत्तमाहृत्याभिजुहुयात् । स चायमस्यैवैकस्य प्रयोगस्य साधनीभूतः । तावन्मात्रे श्रवणात् । पुनः स्वयोनेराहरणम् ॥ ५७ ॥

ब्राह्मणहस्ते वा ॥ ५८ ॥

जुहोति । वाशब्दो विकल्पार्थः । अयं चाहवनीयविकारत्वेन विधीयते । ततश्चोत्तरमभिदाधानमन्त्रे विपरिणामः । सा ह्यस्यार्थस्य ब्राह्मणहस्तेऽपि दीयते । पूर्वं तु स्वार्थत्वादेव न भवति ॥ ५८ ॥

तस्मिन्पक्षे व्रतमाह तस्य—

वासानपनोदश्च ॥ ५९ ॥

यस्याग्नेर्धार्यमाणो ब्राह्मणो नापनोद्यः ॥ ५९ ॥

अजकर्णे वा दक्षिणे ॥ ६० ॥

जुहोति ॥ ६० ॥

तस्मिंश्च पक्षे व्रतमाह—

अभोजनं तस्य ॥ ६१ ॥

अजमांसस्य ॥ ६१ ॥

कुशस्तम्बे वा ॥ ६२ ॥

जुहोति । तत्र व्रतम् ॥ ६२ ॥

अनासनं तस्मिन् ॥ ६३ ॥

अप्सु वा ॥ ६४ ॥

जुहोति । तत्र व्रतम् ॥ ६४ ॥

नाद्भ्यो बीभत्सेतेति श्रुतेः ॥ ६५ ॥

बीभत्सा परिवाद उच्यते । एवं श्रूयते । नापः परिचक्षीतेति । अपन्याय्यत्वाच्च श्रुतिग्रहणमत्र क्रियते ॥ ६५ ॥

अहुताभ्युदितउन्नीया तमितोरासीत ॥ ६६ ॥

अहुत एव यद्यभ्युदयो भवति तदोन्नीया तमनादासीत ॥६६॥

हुत्वा भूरित्यनुमन्त्रणम् ॥ ६७ ॥

हुत्वा च भूरित्यनुमन्त्रणं कार्यम् ॥ ६७ ॥

वरदानं च ॥ ६८ ॥

सर्वनाशे हविषां दोषे वा तदुक्तम् ॥ ६९ ॥

तदुक्तग्रहणं पक्षान्तरेण सह विकल्पार्थम् ॥ ६९ ॥

आग्नेयेन वा प्रतिसंख्याय देवतेज्या ॥ ७० ॥

प्रतिसंख्यानविधिग्रहणाच्च तासामेव देवतानामिज्या । किं वा स्यात् । मा भूदुपांशुयाजविध्यन्तेन विष्णोरग्नीषोमयोर्वेज्येति । देवताग्रहणाच्चाङ्गाभावः ॥ ७० ॥

पुनः क्रिया च ॥ ७१ ॥

एवं हि श्रूयते । यस्य सर्वाणि हवीꣳषि नश्येयुर्वा दुष्येयुर्वाप हरेयुर्वाज्येन ता देवताः सꣳस्थाप्य पुनर्हविर्निर्वपेदिति ॥ ७१ ॥

भेदे विप्रक्लृप्त्युपपाताभ्याम् ॥ ७२ ॥

सर्वविषयत्वेन श्रवणात्सर्वहविर्नाशे एवं प्राप्त इदमुच्यते भेदेऽपि भवतीति । कुत एतत् । विप्रक्लृप्तेः पृथक् पृथक् प्रक्लृप्तानि ह्येतानि हवींषि नाग्न्युत्पत्तिवत्सहत्वप्रक्लृप्तिः । अपि चोपपातो भवति यस्य हवीꣳषि नश्येयुरिति । तत्र सर्वशब्देन विशिष्यमाणे वाक्यभेदप्रसङ्गः । हवींषि नश्येयुः सर्वाणि च नश्येयुरिति । स चान्याय्यः । तस्मान्नाशमात्रं निमित्तम् । तत्र भेदेऽपि भवति चेत् भवेदिदं नैमित्तिकमिति ॥ ७२ ॥

अन्तरा गमनेऽनाद्रियते ॥ ७३ ॥

गार्हपत्याग्नीनामन्तरा गमने अनादरस्तच्चैतदग्निहोत्रविषयम् । तदेव प्रकृत्य श्रूयते । कामं वा एषु लोकेषु वयाꣳसि युक्तं च सञ्चरन्तीति ॥ ७३ ॥

श्वेडवराहेषूदधारा प्राचीदं विष्णुरिति ॥ ७४ ॥

देया ॥ ७४ ॥

भस्मनो वा ॥ ७५ ॥

धाराया विकल्पार्थः । विकल्पेन हि श्रूयते । गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्तीति ॥ ७५ ॥

चरुरित्यग्नये पथिकृते ॥ ७६ ॥

पुरोडाशं निर्वपेत् । वर्त्मान्तरागमन उच्यते । तस्मिन्नन्तरा गच्छतीत्यर्थः । एतच्च सर्वविषयमसंयुक्तविधानात् ॥ ७६ ॥

प्रज्ञातेऽप्यतिपत्तौ च ॥ ७७ ॥

पथिकृद्भवति ॥ ७७ ॥

प्रज्ञातग्रहणमाचष्टे—

नियतास्वतिपत्तिश्रुतेः ॥ ७८ ॥

अतिपत्तिर्हि नियतास्वेव भवति नानियतासु । इष्टिग्रहणाद्य यथ्यातिपत्तौ न भवति ॥ ७८ ॥

स्तोत्रमोहे शस्त्रस्य च ॥ ७९ ॥

पथिकृद्भवति ॥ ७९ ॥

जनमरणे च ॥ ८० ॥

पथिकृत् भवति ॥ ८० ॥

उपघातसामर्थ्यात्स्वजने ॥ ८१ ॥

सा च स्वकीयजनमरणे न सार्वत्रिके । कुत एतत् । उपघात-तसामर्थ्यात् । उपघातो हि कादाचित्को भवति ॥ ८१ ॥

नित्यत्वाच्च ॥ ८२ ॥

अपि च नित्यं जनमरणमिति ॥ ८२ ॥

अग्नये व्रतपतये वृत्येऽहनि मैथुनमांस-
भोजनं चेत् ॥ ८३ ॥

व्रतमर्हतीति व्रत्यं तस्मिन्मैथुनमांसभोजनं चेद्भवति अग्नये व्रतपतय इष्टिर्भवति ॥ ८३ ॥

आहिताग्नेरार्त्यश्रुकरणे ऽग्नये व्रतभृते ॥ ८४ ॥

आहिताग्निग्रहणं विद्वाग्निग्रहणप्रत्यर्थम् आर्तिग्रहणाद्य गान-न्द्राश्रुकरणे ॥ ८४ ॥

संसर्गे नाद्रियेत ॥ ८५ ॥

अभ्यन्तरसंसर्गे ऽनादरः ॥ ८५ ॥

अनुक्रोशेऽग्नये संसर्गायाहुतिर्वा ग्रामा-
ग्निना चेत् ॥ ८६ ॥

अथ यद्यनुक्रोशो भवति तदाग्नये संसर्गाय इष्टिर्भवति ।
आहुतिर्वेति विकल्पः । एतच्चग्रामाग्निना संसर्गे भवति ॥ ८६ ॥

अग्नये विविचये मिथश्चेत् ॥ ८७ ॥

मिथः परस्परतः । परस्परतो यदि संसर्गो भवति तदाग्नये
विविचयेऽग्निर्भवति आहुतिरनादरो वेति । सर्वं ह्येतदत्र पठ्यते ।
हृदयविलेखे इष्ट्याहुत्योर्विकल्पः ॥ ८७ ॥

अग्नये संवर्गाय प्रदव्याचेत् ॥ ८८ ॥

प्रदव्यो दावाग्निः दावाग्निना चेद् संसर्गस्तदाप्यनादरः ।
हृदयविलेखे अग्नये संवर्गायेष्टिराहुतिर्वा ॥ ८८ ॥

अग्नयेऽप्सुमते वैद्युताच्चेत् ॥ ८९ ॥

वैद्युतेन चेदग्निसंसर्गः तदाप्यनादरः हृदयविलेखे ऽग्नये
प्सुमत इष्टिराहुतिर्वा ॥ ८९ ॥

अग्नये शुचये ऽशुच्यायतनाचेत् ॥ ९० ॥

अशुच्यायतनाग्निना चेत् संसर्गः अग्नये शुचये इष्टिराहु-
तिर्वा भवति । न ह्यत्रानादरः पठ्यते ॥ ९० ॥

भार्यागोषु यमजनने मारुतं त्रयोदशकपालं
निर्वपेत् ॥ ९१ ॥

यजमानस्य भार्यागोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत् ॥ ९१ ॥

गेहदाहेऽग्नये क्षामवते पुरोडाशः ॥ ९२ ॥

पुरोडाशो भवति ॥ ९२ ॥

चन्द्रमसाभ्युदित आमावास्ये पुरस्ता-
द्व्रतः स्यात् ॥ ९३ ॥

आमावास्ये प्रक्रान्ते यदि चन्द्रमा अभ्युदेति तदा तत् व्रत एव भवति । नान्यद्व्रतयति ॥ ९३ ॥

दधि हविरातञ्चनं निदध्यात् ॥ ९४ ॥

उत्पाद्यमानस्य हविषः ॥ ९४ ॥

संसृज्य वत्सान्पुनरपाकरणम् ॥ ९५ ॥

कर्त्तव्यम् । एवं हि श्रूयते । स यद्यगृहीतः हविरभ्युदियात्प्रज्ञातमेव तद्देवैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति प्रतिप्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्तीति ॥ ९५ ॥

निरुप्ते व्रताशक्तौ वा त्रैधं तण्डुलान्विभज्य
मध्यमानग्नये दात्रे स्थविष्ठानिन्द्राय प्रदा-
त्रे दधनि चरुमणिष्ठान्विष्णवे शिपिविष्टाय
शृते चरुम् ॥ ९६ ॥

निरुप्ते चेत् हविष्यभ्युदयपरिज्ञाने भवति व्रतस्य वा अशक्तिरनिरुप्तेऽपि तदा त्रैधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे पुरोडाशं कुर्यात् स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुं कुर्यात् अणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् । यदु व्रतचर्या वा नोदाराऽभिमत गृहीतं वा हविरभ्युदियादिति प्रकृत्य सर्वमेतच्छ्रूयते इति ॥९६॥

इदानीमिदं विचार्यते । किं तदेवेदं कर्म उतान्यत्कर्मान्तरमिति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

संस्कारात्सान्नायम् ॥ ९७ ॥

तदेवेदं कर्मेति । कुत एतत् । संस्कारात्पूर्वं यागायोपकल्पितं संस्कृतं द्रव्यं तदेवेदमिति । तत्साध्यत्वाच्च तदेव कर्मेति ॥ ९७ ॥

एवं प्राप्त आह—

अन्यद्वेज्या योगात् ॥ ९८ ॥

अन्यदेव वा कर्मान्तरमिदम् न तदेव । कुत एतत् । इज्यायोगात् । इज्यान्तरयोगो ह्यत्रोपलक्ष्यते । अग्निर्दाता इन्द्रः प्रदाता विष्णुः शिपिविष्ट इति । तथा दधनि चरुः श्रूते चरुमिति । अन्यदेवयागान्तरन्ततोऽन्यदिति । एवं पक्षद्वयो पन्यासे किं कर्मान्तरता युक्ता उत तस्यैव विकार इति । तस्यैव विकार इति युक्तरूपता । तदेव हि प्रक्रान्तं कर्म प्रत्यभिज्ञायते । न चान्यत् कर्मान्तरमप्रारब्धम् । तस्मात्तस्यैव कर्मणो विकार इति ॥ ९८ ॥

तण्डुलापनये वचनात् ॥ ९९ ॥

तण्डुलैरुपलक्षणं दध्न पयसश्च । पूर्वं देवताभ्योपनीय देवतान्तरसम्बन्धो नैमित्तिक इति प्रयोजनाभावे सति कर्मणो गुणकामानां प्रवृत्तिः पुनरपि च तत्कर्मविहितमेव । अथ यद्येव नोद्वियाद्दधो-पवसेदिति ॥ ९९ ॥

प्रकृत्या पूर्वम् ॥ १०० ॥

असान्नाय्यगुणक प्रकृत्या स्वरूपेणैव भवति । दधिपयसोरभावात् ॥ १०० ॥

सर्वं वा निमित्तात् ॥ १०१ ॥

वाशब्दः पक्षव्यावृत्तौ । सर्वं वा क्रियते पूर्वमपि हि निमित्तं भवति प्रकान्तेऽभ्युदय इति ॥ १०१ ॥

पश्चादभ्युदृष्ट आवामारयेनेष्ट्वा तदहरेव श्वो वा ऽमये पथिकृत इन्द्राय वृत्रघ्न एका-

दशकपालो वैश्वानरश्च ॥ १०२ ॥

सोमामावास्येति मन्यमान उपवसत्यथैव पश्चाद्दर्श इति प्रज्ञायैतच्छ्रूयते । तद्दर्शनं च शास्त्रतः प्रतिपद्येव भवति । भ्रान्त्या प्रतिपद्युपवासोपक्रमे एतत् ॥ १०२ ॥

त्रीपुकं धनुर्दक्षिणा ॥ १०३ ॥

त्रिभिरिषुभिरुपेतं धनुर्दक्षिणा ॥ १०३ ॥

दण्डो वा ॥ १०४ ॥

वेति विकल्पः ॥ १०४ ॥

प्राकृताश्चेच्छन् ॥ १०५ ॥

एतानेव हविर्विशेषान्प्रकृत्य याः श्रूयन्ते ताश्चेच्छया ददाति । यथाश्वमेधे याधिकृतः शतमानं वैश्वानराय कृष्णं वासः इन्द्राय वृत्रघ्ने चोदकेनान्वाहार्यः ॥ १०५ ॥

अनभ्युद्दृष्टस्यापि पशुकामस्य ॥ १०६ ॥

इयमिष्टिर्भवति ॥ १०६ ॥

उद्वास्यमानं चेत्कपालं नश्येदाश्विनः ॥ १०७ ॥

उद्वास्यमानकपालनाशे आश्विनो द्विकपालः पुरोडाशः कर्तव्यः । स च परतन्त्रमध्यपाती तदङ्गत्वेन भवति । अत्र पशुपुरोडाशन्यायः । यान्यङ्गिनोऽङ्गानि प्रयुक्तानि तानीहापि प्रसज्यन्ते । पात्राणि च यान्यनपवृत्तानि चरुादीनि तान्यप्यत्र प्रयुज्यन्ते । यानि पुनः कृष्णाजिनोलूखलमुसलादीनि निवृत्तप्रयोजनानि तेषां पुनः प्रोक्षणादि संस्कारः कर्तव्यः । अपवृत्तत्वात् । स्रुताधस्तानं प्राशित्रहरणं इडापात्री च संस्कृतान्येव विद्यन्ते । अनसि प्रदानपक्षे मतोऽप्यासाद्यते । धर्माश्चास्य धूरीपालम्भनादयः क्रियन्ते पूर्वधर्माणामपवृत्तत्वात् । तदपवर्गश्च तत्कार्याभिनिर्वृत्तेः । अग्नीन्धनं त्वङ्गप्रधानार्थत्वादपकृष्यते । अङ्गप्रधानार्थता चास्याहवनीयसंस्कारत्वात् । य-

दाहवनीये जुहोतीत्यनेनाहवनीयस्याङ्गप्रधानार्थता। एवं च छत्वोपघज्ञानसम्मार्गावपि कर्त्तव्यौ। अनेन प्रकारेणेडान्त आश्विन. सान्निपातिभिरङ्गैः कार्यः। यानि पुनरारादुपकारकाण्याघारप्रयाजाज्यभागादीनि तेषां च सकृदेव क्रिया। अन्ते ह्यवयवे तेषां प्रधानाभिसम्बन्ध इष्यते। न हि यद्यदङ्गं क्रियते तत्तदेव प्रधानेनाभिसम्बन्धमुपयाति। यदाङ्गं न तदा प्रधानम् यदा प्रधानं न तदाङ्गमिति तस्मादन्त्येऽवयवेऽङ्गापूर्वसम्बन्धः। अम्नानसामर्थ्यात्। अतः सकृत्क्रिया आघारादीनाम् तेन मुख्यसन्निधिन्यायादङ्गिसन्निधावेवानुष्ठानमिति। अनेन न्यायेन कर्ममध्ये या इष्टयः यूतपतीयाद्याश्च आपतन्ति ता अनुष्ठेया इति॥ १०७॥

सायं प्रातर्दोहार्त्तावैन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा॥ १०८॥

एवं हि श्रूयते। यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्। सान्नाय्यं हि प्रकृत्यैतच्छ्रूयते। तेन न हविर्मात्रार्त्तौ पञ्चशराव ओदनः पुरोडाशो वेति विकल्पः॥ १०८॥

इदानीमिदं विचार्यते। किमुभयार्त्तौ पञ्चशराव उतान्यतरार्त्तावपीति। किं तावद्युक्तं उभयार्त्तावेति। उभयोर्हि श्रूयते। यस्योभयं हविरार्त्तिमार्च्छेदित्येवं प्राप्त आह—

भेदेनाप्युपपातात्॥ १०९॥

अन्यतरार्त्तावपि भवति पञ्चशरावः। हविर्विशिष्टार्त्तिर्निमित्तं तत्रोभयशब्देन विशेष्यमाणे वाक्यं भिद्येत। तस्मादन्यतरार्त्तावपि भवति॥ १०९॥

इदानीमिदं विचार्यते। पञ्चशराव. किं प्रतिनिधिः उत निमित्ते नैमित्तिकप्रायश्चित्तमिति। किं तावत्प्राप्तम् सूत्रेणैव पक्षः—

तत्प्रतिनिधिः॥ ११०॥

तस्य सान्नाय्यस्य विनष्टस्य सतः प्रतिनिधिरयम्। द्रव्ये नष्टे द्रव्यान्तरं विधीयमानं तत्कार्यं एव भवति। तस्मात्प्रतिनिधिरिति॥ ११०॥

प्रायश्चित्तं वा देवताश्रुतेः ॥ १११ ॥

वाशब्दः पक्षान्तरपरिग्रहे प्रायश्चित्तमेतन्न प्रतिनिधिः । कुत एतत् । देवताश्रुतेः । देवताह्यत्र श्रूयते । ऐन्द्रं पञ्चशरावमिति । देवतासम्बन्धाद्यागविधानम् । नन्वैन्द्रमित्यनुवादः ततश्च द्रव्यमात्रविधानम् । नेत्युच्यते । अनुवादमात्र ह्यनर्थकं भवति । अपि चानुवादोऽसमञ्जस एव । पक्षे माहेन्द्रस्यापि सान्नाय्यदेवतात्वात् । तस्मात्प्रायश्चित्तमिति ॥ १११ ॥

चरू सान्नाय्यालाभे ॥ ११२ ॥

आर्त्यां सत्यां सान्नाय्यालाभे सति चरू भवति ॥ ११२ ॥

सायं दोहस्थाने वा पुरोडाशः ॥ ११३ ॥

चरुर्वेति विकल्पः ॥ ११३ ॥

असान्नाय्यवद्वा ॥ ११४ ॥

अथ वा यावदमसान्नाय्ययद्दामावास्यं तादृगेव कुर्यात् । वाशब्दो विकल्पार्थः ॥ ११४ ॥

दुष्टस्य हविषोऽप्स्ववहरणम् ॥ ११५ ॥

दुष्टं हविरप्स्ववहरेत् इति श्रुतिः ॥ ११५ ॥

उक्तो वा भस्मनि ॥ ११६ ॥

अवहरणम् ॥ ११६ ॥

शिष्टभक्षप्रतिषिद्धं दुष्टम् ॥ ११७ ॥

मन्वादिभिर्यदभक्ष्यमुक्तं तद्दुष्टम् ॥ ११७ ॥

एकस्यांनिष्टे तदुक्तम् ॥ ११८ ॥

हविर्गणे मानसादपचारात् यद्येकेन यागो न कृतः स्यात् तदा कर्तव्य इति तदुक्तम् ॥ ११८ ॥

सान्निपातिकानि वा तस्य ॥ ११९ ॥

सान्निपातिकान्यङ्गानि कर्त्तव्यानि संसृष्टीनि ॥ ११९ ॥

इष्टं चेदाज्येन शेषम् ॥ १२० ॥

इष्टं चेदविर्दुष्येत स्विष्टकृदाज्येन कर्त्तव्यम् ॥ १२० ॥

हविरन्तरणे प्राक्प्राधानेज्यायाः स्मृत्वा-
न्वाहरेत् ॥ १२१ ॥

यदि नाम हविरन्तरितं न गृहीतमेव तदा प्राक्प्रधानेज्यायाः
स्मृत्वान्वाहरेत् । यागक्रमानुग्रहात् ॥ १२१ ॥

स्रुच्ये दुष्टे पुनर्ग्रहणम् ॥ १२६ ॥

उत्तरार्थमिदमुच्यते ॥ १२६ ॥

ध्रुवाया वा ततो यज्ञः प्रभवतीति श्रुतेः ॥ १२७॥

ध्रुवाया वा ग्रहीतव्यम् । वाशब्दो विकल्पार्थः । ततो यज्ञः प्रभवतीति वाक्यैकदेशोपन्यासः ॥ १२७ ॥

अदुष्टाद्वा नयनमेके ॥ १२८ ॥

एक आचार्याः स्रुच्यादेवादुष्टादानयनमिच्छन्ति ॥ १२८ ॥
तस्मिश्च पक्षे—

नोपभृतो ध्रुवायाम् ॥ १२९ ॥

ग्रहीतव्यम् ॥ १२९ ॥

ऐतु राजावरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु मोदमानः अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इति प्रणीता स्कन्ना अभिमृशेत् ॥ १३४ ॥

भूमिर्भूमिमवागान्माता मातरमप्यगात् भूयाम पुत्रः पशुर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं भिन्नमभिमृशेत् ॥ १३५ ॥

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनरिति च घर्म्यम् ॥ १३६ ॥

घर्मे मृन्मयं घर्म्यं भिन्नमभिमृशेत् चशब्दादधस्तनेन मन्त्रेण। घर्मभेद प्रायश्चित्तमपरो विधिः ॥ १३६ ॥

परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति ॥ १३७ ॥

परमेष्ठ्यभिधीयत इत्येवमादि व्याहृतीनां चतुस्त्रिंशतं जुहोति। तस्यादर्युरादिष्टत्वात्। अनादेशे हि ब्रह्मणो विधानम् ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानीत्यनेन। अतश्च वक्ष्यमाणकालाहुतिरप्यत्र भवति कर्मभेदादिति ॥ १३७ ॥

धर्मधुग्चाले चादोहे च ॥ १३८ ॥

धर्मधुग्चाले हलनं चलनम् आत्यन्तिके चलने मरणं इत्यर्थः। तस्याः पयोदोहे च ॥ १३८ ॥

उदीच्या दोहस्थाने ऽन्यस्याः ॥ १३९ ॥

अन्यस्या दोहस्थाने उदीच्या गोर्व्यवस्थितायाः ॥ १३९ ॥

शालाया वा पुरस्तात्प्राच्याः ॥ १४० ॥

अवस्थितायाः ॥ १४० ॥

पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् ॥ १४१ ॥

तामेवगां दोहयति । सा यदि घर्मदुघाह्वलेदित्युपक्रम्य सर्वमेतच्छ्रूयते ॥ १४१ ॥

पृषदाज्यस्कन्दने चैके ॥ १४२ ॥

चतुस्त्रिंशद्धोममिच्छन्ति । एकीयग्रहणाद्विकल्पः ॥ १४२ ॥

सोमेज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति ॥ १४३ ॥

सोमेज्यायामुपातः सोमेज्योपपातः । न सोमयागोपपातः । एवं यदि किं चिद्दापद्येतेति श्रूयते । तत्र यथाकालमेकैकामाहुतिं हुत्वा यज्ञस्य दोह इति वाचयति । यथाकालग्रहणेन च अथ यदि पण्यमानः अथ यदि क्रयायोपोत्थित इत्येवमादि गृह्यते । एवमेव हि श्रूयत इति । अत्र च ब्रह्मणः कर्तृत्वम् । ता ब्रह्मैव जुहुयादिति । ननु च सूत्रकारेण नैवैतदभिहितम् । यथा कालमेकैकां ब्रह्मा जुहोतीति । नैवैतन्नोक्तम् उक्तमेव ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानीति । कथमयमनादेश इति चेत् । यत्र नाम निमित्तादेशपूर्वकं नैमित्तिकमादिश्यते यथा पृषदाज्यस्कन्दने जुहुयादया विष्ठा जनयन्निति पृषदाज्यस्कन्देनेभिमृशेदिति च स आदेशः । इह पुनर्नैवं निमित्तादेशपूर्वको नैमित्तिकादेशः । इह हि पण्यमान. किं चिद्दापद्येतेति अभिपूयमाण. किं चिद्दापद्येतेति च अनिमित्तादेश पूर्वको नैमित्तिकादेशस्तस्मादनादिष्टसूत्रेण एतान्यपि गृह्यन्ते । तथा चैकैकहोममेवाङ्गीकृत्य ता ब्रह्मैव जुहुयादित्युक्तम् । चतुस्त्रिंशद्धोमस्तु आदेश पक्षेस्यध्वर्युकर्तृकः ॥ १४३ ॥

आग्नीध्रीये सुत्यासु ॥ १४४ ॥

सुत्यासु वर्तमानासु कालाहुतिः आग्नीध्रीये । आहवनीयाप-

धादोऽयम् । एवं हि श्रूयते यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे ॥ १४४ ॥

आ पवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्य ॥ १४५ ॥

आ पवस्वेति काकारोहणे यूपस्य जुहुयादाहवनीये ॥ १४५ ॥

पृषदाज्यस्कन्दने जुहुयादया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः स प्रत्युदैद्धरुणो मध्वोऽग्रꣳ स्वायां यत्तन्वां तनूमैरयत स्वाहेति ॥ १४६ ॥

धर्मधुक् शार्दूलहना चेत् स्पृतीर्जुहुयात् चन्द्रात्ते मन स्पृणोमि स्वाहा सूर्यात्ते चक्षु स्पृणोमि स्वाहा वातात्ते प्राणान् स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहा ऽद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेति ॥ १४७ ॥

शार्दूलो व्याघ्रस्तन्निपातने स्पृतीराहुतीर्जुहोति चान्द्रात्त इति प्रतिमन्त्रम् ॥ १४७ ॥

हुत्वान्यामाजतेति ब्रूयात् ॥ १४८ ॥

अध्वर्युरेव मन्त्राप्रत्ययोपदेशात् ॥ १४८ ॥

स्वयꣳ होम्यशक्ता उपासीत ॥ १४९ ॥

स्वयं होमी यजमानः तदशक्तौ समीप आसीत ॥ १४९ ॥

उपसर्पणाशक्तावासनमधः ॥ १५० ॥

यदि चंक्रमणेऽप्यशक्तस्तदासीताथः ॥ १५० ॥

सायमाहुत्यां हुतायां चेद्दुर्बलः स्यात्त-
दैव प्रातराहुतिस्तत्संस्थाश्रुतेरग्निहोत्रस्य ॥ १५१ ॥

यदि सायमाहुत्यां हुतायां यजमानो दुर्बलो भवति प्रातराहुतिकाल यावन्न जीवतीत्याशङ्क्यते तदास्मिन्नेव काले प्रातराहुतिर्देया। कुत एतत्। तत्संस्थाश्रुतेरग्निहोत्रस्य। प्रातराहुत्यां हि सन्तिष्ठतेऽग्निहोत्रम्। तद्धि प्रकृत्य सायं जुहोति प्रातर्जुहोतीत्युच्यते। आग्नेयीं सायमाहुतिमाहु: सौरीं प्रातराहुतिमिति। उभयोरप्यग्निहोत्रसंज्ञा। नैते द्वे कर्मणी अग्निहोत्रं जुहोतीत्येकवचननिर्देशात्। न चैकमेव कर्म शरद्वसन्तावयवायत्पुनः प्रातरभ्यस्यते देवतान्यत्वात्। अन्या चान्या च देवतोभयत्रातः सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति। एतदेव चावयवमग्निहोत्रं प्रकृत्याग्निहोत्रं जुहुयात् स्वर्गकाम इति श्रूयते यावज्जीवमग्निहोत्रं जुहुयादिति च। तस्माद्वयवद्वयस्याप्येक कार्यमित्येककर्मत्वम्। यद्येकमेव कर्म तन्त्र किमिति न भवति। कालभेदादित्यदोषः। यथा दर्शपूर्णमासयोः कार्यैकत्वेपि कालाभेदात् नाना तन्त्रतैवं अत्रापीति। तदुक्तमाचार्येणावृत्तिर्वा प्रधानकालत्वादिति। तथा चाह स यत्सायमस्तमिते जुहोति गर्भमेवैनत्सन्तमभि जुहोति गर्भं सन्तमभि करोतीति। पुनश्च अथ यत्प्रातरुदिते जुहोति मनयत्येवैनमेतत्सोयं तेजो भूत्वा विभ्राजमान उदेतीति कार्यैकत्वमिव दर्शयति। तस्मात्साधूक्तं तत्संस्थाश्रुतेरग्निहोत्रस्येति ॥ १५१ ॥

जीवेच्चेत्पुनः काले ॥ १५२ ॥

यदि पुनर्जीवति यजमानः काले प्रातराहुतिर्देया। नित्यानां हि निमित्तं काला निमित्तमन्तरेण च नैमित्तिकं कृतमप्यकृतसममित्यभिप्रायः ॥ १५२ ॥

एवं प्राप्त आह—

न वा कृतत्वात् ॥ १५३ ॥

नैव प्रातराहुतिर्देया कृता हि परिसमाप्तिस्तस्येति। ननु चोक्तं

कालो निमित्त भूत इति । न च निमित्तमन्तरेण नैमित्तिकं कृतमकृतमिव भवति । तस्मात्पुनः क्रियेति । अत्रोच्यते । न प्रातर्होमस्य निमित्तं काल. । अन्यदेव हि तत्र निमित्त सायारम्भः । अतः प्रातर्होमस्य श्रूयमाणोऽपि कालो वलादङ्गी भवति । न हि निमित्तस्यानेकत्वमिष्यते । तस्मात्कृतत्वान्न पुनः प्रातराहुतिर्देयेति ॥१५३॥

पौर्णमासान्ते चामावास्यमग्निहोत्रवत् ॥ १५४ ॥

तुल्यन्यायत्वात् । अधिकरणातिदेशश्चातुर्मास्यराजसूयादिष्वपि प्रदर्शनार्थः ॥ १५४ ॥

हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्निनान्तसन्दहेत् ॥ १५५ ॥

हविष्येषु चेद्व्रीहियवादिषु आह्रियमाणे पौर्णमासादौ यजमानस्य मरण भवति दक्षिणाग्निनान्तसन्दहेत हविष्यान् । एव हि श्रूयते । यदधिश्रितेऽग्निहोत्रे यजमानो म्रियेतेति प्रकृत्य नदेवैनदग्निपर्यांधाय विष्यन्दयेदिति । पुनश्चाह एतावतीति वै सर्वस्य हविर्यज्ञस्य प्रायश्चित्तिरिति ॥ १५५ ॥

न वाऽयुक्तत्वात् ॥ १५६ ॥

न वा दक्षिणाग्नौ सन्देहन अनुक्तो ह्याहरणकाले हविष्यग्रहणेन तेषां योगः ॥ १५६ ॥

गार्हपत्ये ग्रहणादि प्रागासादनात् ॥ १५७ ॥

अयुक्तान्तसन्देहेतसन्निधानात् ॥ १५७ ॥

आसादनाद्याहवनीये ॥ १५८ ॥

सन्देहसन्निधानादेव ॥ १५८ ॥

मरणान्तं भवति ॥ १५९ ॥

कर्म, कर्तुरभावात् ॥ १५९ ॥

सं(?)स्थाप्यं वा प्रक्लृप्तत्वात् ॥ १६० ॥

प्रवृत्ते हि तत्तस्यापरिसमाप्तौ दोषश्रवणात् । तदुक्तमाचार्येणापि दोषश्चासमाप्तौ स्यादिति । एवं पक्ष द्वयोपप्रदर्शने सति य एव युक्ततरः पक्षः स एवाश्रयणीयः । कश्चासौ मरणान्तमेव भवतीति । न हि मृते यजमाने मिथ्यासङ्कल्पदोष आशङ्क्यत इति ॥१६०॥

हविष्यवद्धौम्यम् ॥ १६१ ॥

अग्निहोत्रहोमार्थमपि द्रव्यं हविष्यवद्धौम्यम् । एतदुक्तं गार्हपत्ये ग्रहणादि प्राणासादनादित्येवमादि ॥ १६१ ॥

सन्दीपनवतीः प्रत्यगन्यधिश्रयत्युखाः ॥ १६२ ॥

मृते यजमाने सन्दीपनवतीनामुखानां प्रत्यगन्यधिश्रयणं सन्दीपनं च गोमयशुष्ककार्पासादिना । यदुच्चनं मन्त्रोच्चारणार्थम्॥१६॥

सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति ॥ १६३ ॥

सपिण्डाः ॥ १६३ ॥

अनसा ॥ १६४ ॥

शरीरमुद्वहन्ति । शाखान्तरात् ॥ १६४ ॥

वितानं साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति ॥ १६५ ॥

वितानसाधनमग्नीनां यथादेशस्थापनं कृत्वा समे तृणबहुले देशेऽन्तराग्नी काष्ठैश्चितिं चिनोति ॥ १६५ ॥

पूर्वतरम्-

उद्धृत्याक्षिरिणीः पुरुषाहुतीः ॥ १६६ ॥

पुरुषमाहात्म्यं यासामोषधीनान्ता उद्धृत्य ॥ १६६ ॥

विशाखदारादर्भगन्धाप्रृश्निपर्ण्यश्वाण्डाश्च ॥ १६७ ॥

उद्धृत्येति वर्तते । विशाखा दूर्वा शरो मुञ्जः पृश्निपर्णी माषपर्णी अश्वाण्डा दण्डायिका ॥ १६७ ॥

केशश्मश्रुनखलोमनिकृन्तनानि कृत्वा त्रि-
पुरीषं चेच्छन् ॥ १६८ ॥

केशादि निखाय सर्पिषान्तरक्त्वा चितावेन-
मादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् ॥ १६९ ॥

यजमानम् । सर्पिषा अभ्यञ्जनं प्रक्षालनं च त्रिपुरीषपक्ष एव ॥ १६९ ॥

सप्तसु प्राणायतनेषु सप्तहिरण्यशकलान्प्रा-
स्यति मुखे प्रथमम् ॥ १७० ॥

प्रक्षिपति ॥ १७० ॥

दक्षिणहस्ते जुहूं सादयति घृतपूर्णाम् ॥ १७१ ॥

अधिकारसुपजीवन्नाह—

स्फ्यं च ॥ १७२ ॥

दक्षिणहस्त एव पाठक्रमेण सर्वपात्रप्रयच्छनान्ते ॥ १७२ ॥

उपभृतं सव्ये ॥ १७३ ॥

सादयतीति वर्त्तते ॥ १७३ ॥

उरसि ध्रुवाम् ॥ १७४ ॥

मुखेऽग्निहोत्रहवणीम् ॥ १७५ ॥

नासिकयोः स्रुचौ ॥ १७६ ॥

कपालानि चैके ॥ १७८ ॥

एके सञ्छन्नेच्छन्ति । प्रतिपत्त्यन्तरविधानात् । अप्स्ववहरणं हि तेषामुक्तम् ॥ १७८ ॥

पार्श्वयोः सूर्पे ॥ १७९ ॥

द्वितीय प्रतिप्रस्थातृसत्कम् । अकृतवरणप्रयासस्य तु द्वितीयैकं द्विधोपधीयते तैत्तिरीयपाठाच्छिरस्येवैकमिति ॥ १७९ ॥

उदरे पात्रीः समवत्तधानीं पृषदाज्यवतीः

शिश्ने शम्यामरणी वृषणयोः ॥ १८० ॥

अन्तरोरू ज्ञापात्राण्यन्यानि ॥ १८१ ॥

उपधीयन्ते ॥ १८१ ॥

अप्स्ववहरणं मृन्मयाश्ममयानाम् ॥ १८२ ॥

अयस्मयानि वा ब्राह्मणाय दद्यात् ॥ १८३ ॥

वा एवमस्यप्स्ववहरणम् । विकल्पेन हि श्रुतौ पाठः ॥ १८३॥

अनुस्तरणीचेत्पश्चात्कर्णमाहृत्य हस्तयोर्वृक्की ॥१८४॥

अङ्गेष्वङ्गानीति जातूकर्ण्यः ॥ १८५ ॥

आह । उपधीयन्ते ॥ १८५ ॥

न वास्थिसन्देहात् ॥ १८६ ॥

न यथाङ्गान्यङ्गेषूपधीयन्ते । अस्थ्नां हि सन्देहो मा भूदिति । अत उद्धृत्य मांसान्युपधेयानि ॥ १८६ ॥

वपया मुखमवच्छाद्याग्निभिरादीपयन्ति ॥ १८७ ॥

वपया च मुखाच्छादनमनुस्तरणीपक्ष एव । अनुस्तरणी गौः ॥ १८७ ॥

आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणो
ऽस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः
असौ स्वर्गाय लोकाय स्वाहेति ॥ १८८ ॥

सकलपाठः पत्न्या अप्यनूहप्रसक्त्यर्थः । ब्राह्मणग्रहणं च पुत्रभ्रात्रोः क्षत्रियवैश्ययोर्व्युदासार्थम् ॥ १८८ ॥

अनपेक्षमेत्योपस्पृशन्त्यपः ॥ १८९ ॥

चितिमनपेक्षमाणा एत्योपस्पृशन्त्यपः । अपामुपस्पर्शनम् पूर्वोक्तम् ॥ १८९ ॥

सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति ॥ १९० ॥

सञ्चयनमिति कर्मणो नामधेयम् । तत् चतुर्थेऽहनि कर्तव्यम् । अयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रक्षिपति ॥ १९० ॥

शम्याचकाः कर्दमं च श्मशाने ॥ १९१ ॥

च शब्दात्प्रास्यति । श्मशानशब्देन अस्थिसञ्चय उच्यत इति भर्तृयज्ञः । अस्मकूट इत्यपरे । ते च शमीशब्देन शमीशाखामिच्छन्ति । इतरे तु शम्याकानि ॥ १९१ ॥

अक्त्वास्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्राच्छन्नं च हारिद्रं वागिति निवपत्यस्मिन् ॥ १९२ ॥

घृतेनाक्त्वास्थीनि सर्वसुरभिणा मिश्रीकृत्य दक्षिणपूर्वा-

तां कर्षूं खात्वा तत्र कुशानास्तीर्य हारिद्रं च यज्ञापरकृतं चाग्निरसनेन मन्त्रेण निवपत्यस्थिनि ॥ १९२ ॥

एतद्वाजसनेयकम् ॥ १९३ ॥

बध्यमाणं तु शाखान्तरात् ॥ १९३ ॥

अनेन वा ॥ १९४ ॥

मन्त्रेण निर्वपति ॥ १९४ ॥

त्वा मनसानार्तेन वाचा ब्रह्मणा त्रय्या वि-
धया पृथिव्यामक्षिकायामपा॑रसेन निवपा-
म्यसाविति ॥ १९५ ॥

श्मशान चिकीर्षतः कुम्भे सञ्चयनम् ॥१९६॥

पितृमेधं कर्तुमिच्छतः कुम्भे सञ्चयनं कर्तव्यम् । तस्मिंश्च पक्षे कुशहारिद्रास्तरणमस्थिसंस्काराद्धर्ममात्रत्वाच्च कुम्भ एव कर्तव्यम् ॥ १९६ ॥

निधानं च तूष्णीम् ॥ १९७ ॥

निधानं च कुम्भस्य तूष्णीं कर्तव्यम् ॥ १९७ ॥

प्रोपितश्चेत्प्रेयात्प्राचीनावीती निधान्यां
दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने ॥ १९८ ॥

कुर्यात् ॥ १९८ ॥

तत एव हरणम् ॥ १९९ ॥

दक्षिणत एवस्याधरस्य कर्तव्यम् ॥ १९९ ॥

अधस्तात्समिधे धारयन् ॥ २०० ॥

हरणं हरतीति शेषः ॥ २०० ॥

उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा ॥२०१॥

शांश्च स्वावसर एव ॥ २०१ ॥

सकृद्वा पितृवत्पर्यस्य ॥ २०२ ॥

सकृदेव पितृवदपसव्य पर्यस्येत् । तस्य वा एतस्याग्निहोत्रस्योपचार इति प्रकृत्य सर्वं ह्येतदेव श्रूयत इति ॥ २०२ ॥

अत. पर कर्माचष्टे—

शरीण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य पूर्ववद्दाहः ॥२०३॥

कर्त्तव्यम् ॥ २०३ ॥

शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्ववत् ॥ २०४ ॥

पुरुषविध्यादि पूर्ववद्दाहान्तम् । तेषामेव सञ्चयन पितृमेधश्च तैरेवेति ॥ २०४ ॥

अनिष्ट्वाग्रयणेन नवस्याशीयापतितस्य भुक्त्वा प्रतिगृह्य विद्विषाणयोर्वाज्य याजयित्वार्त्तिं प्रतिगृह्योभयादद्वा यस्याग्निभिरन्य याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत् ॥२०५॥

निगदव्याख्यात वैश्वानरो यजतीयेऽद्दति अन्वारम्भणीयापूर्वम ॥ २०५ ॥

कृष्णं वासो दक्षिणा ॥ २०६ ॥

पुरोडाशे क्षामे वशिष्टः समाप्य तदेव पुनर्निर्वपेत् ॥ २०७ ॥

क्षामे दग्धे पुरोडाशे ऽवशिष्टं कर्म समाप्य तस्यैव हविषो निर्वापः कार्यः ॥ २०७ ॥

अत्रेदं विचार्यते । किमशेषदाहे पुनर्निर्वापः उतैकदेशदाहेपीति । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

## एकदेशदग्धेऽपि संयोगात् ॥ २०८ ॥

एकदेशदग्धेऽपि नैमित्तिकं प्रवर्त्तते । कुत एतत् । दाहसंयोगात् । दाहसंयोगोऽत्र निमित्तं एकदेशदाहोपि दाह एवेति ॥ २०८ ॥

## दर्शनाच्च ॥ २०९ ॥

दृश्यते चायमर्थो यथैकदेशदाहेऽपि भवति । यदा तद्धविः सन्तिष्ठतेऽथ पुनर्निर्वपेदिति तेनैव हविषा समाप्तिं दर्शयति । तस्मैकदेशदाह उपपद्यत इति ॥ २०९ ॥

एवं प्राप्त आह—

## न नित्यत्वात् ॥ २१० ॥

नैकदेशदग्धे नैमित्तिकं नित्यो ह्यग्निसंयोगात् पुरोडाशस्य दाहो भवति । यत्र यस्य पुरोडाशो क्षायत इति निमित्तशब्दोपरोधः स्यात् । सर्वस्यैवाग्निसंयोगात् पुरोडाशक्षायत्वमापद्यत इति । तस्मान्नैकदेशदाहे नैमित्तकम् ॥ २१० ॥

यत्तु दर्शनमुक्तं तत्परिहियते—

## कर्मार्थं दर्शनम् ॥ २११ ॥

तद्धवि' सन्तिष्ठत इत्यत्र हविःशब्देन कर्म लक्ष्यते तदा तद्धविष्कं कर्म सन्तिष्ठत इति । अशेषस्य दग्धौ सत्यां द्रव्यान्तरेण परिसमाप्तिः ॥ २११ ॥

## पशुश्चेदुपाकृतः पलायते वायवे तमनुदिश्यान्यं तद्वर्णं तद्वयसमालभेत ॥ २१२ ॥

यदि पशुरुपाकृतो नश्येत् वायवे त पशुमयं वायव इत्येवमनुदेशं कृत्वा अन्यस्तद्वर्णस्तद्वया आलब्धव्यः ॥ २१२ ॥

उपलभ्य वायवे तम् ॥ २१३ ॥

पशुमुपलभ्य वायवे आलभेत मिथ्यासङ्कल्पदोषपरिजि-
हीर्षया ॥ २१३ ॥

अनादरणं वा ॥ २१४ ॥

न वा पुनरालम्भ आदर्त्तव्य । न ह्यत्र चोदनेति ॥ २१४ ॥

प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्य
मालभेत ॥ २१५ ॥

पशुर्नियुक्त सन् यदि प्राक्प्रयाजेभ्यो म्रियेतान्य मा-
लभ्य ॥ २१५ ॥

पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ॥ २१६ ॥

यदा च पूर्वस्य वपा दक्षिणाग्नौ होतव्या ॥ २१६ ॥

सोमश्चेन्मार्जालीये ईजानाः पितरो ये पिता-
महा ये ऽनीजाना यज्ञियाः सोमपास्तेषामे-
षपशुरालब्धो ऽग्नौ स्वाहा देवेभ्यः सुहुतो
यमायेति ॥ २१७ ॥

सोमश्चेन्मार्जालीये वपाहोतव्या य ईजाना पितर इत्यनेन
मन्त्रेण ॥ २१७ ॥

पशवश्चावदानहानावनादरः । एव हि श्रूयते । तस्माद्यदि कि-ञ्चिद्यवदानं हीयेत न तदाद्रियेतेति ॥ २१९ ॥

हृदय नाशे त्वन्यमालभेतेत्येके हृदयं पशु-

रिति श्रुतेः ॥ २२० ॥

एके आचार्या हृदयनाशेऽन्य पशुमालभन्ते । तस्मादेव श्रूयते । हृदयमु हि वै पशुरिति । तस्मात्त्र च सर्व एव पशुर्नष्ट स्यादिति ॥ २२० ॥

सर्वेषां वाज्यस्य यजेत् ॥ २२१ ॥

वाशब्द सूत्रद्वयोपात्तपक्षव्यावर्त्तक । यावदानहानावनादरो न च हृदयनाशेऽन्य आलब्धव्य यत्कारण यत्किञ्चिदवदान हीयते न तदाद्रियेतेत्यर्थवाद । परिशेषोयम् किमर्थ इति चेत् । स हृदयस्ये-वाभेवचनीत्यप्रताविधानार्थं । हृदय वै पशुरित्ययमप्यर्थवादोप्रता-विधानार्थ एव । तस्मात्सर्वेषामवदानाना प्रत्येक नाशे आज्यस्य यजेत ॥ २२१ ॥

उक्तं ह्याचार्येण—

अर्थवादमात्रं पशुवचनम् ॥ २२२ ॥

इति ॥ २२२ ॥

संज्ञप्यमानश्चेद्वाशयेताहुतिं जुहुयाद्यत्प

शुर्मायुमकृतोरो वा पद्भिराहते अग्निर्मा त-

स्मादेनसो विश्वान्मुञ्चत्वंहस इति ॥ २२३ ॥

अनेन मन्त्रेण ॥ २२३ ॥

इमं मे वरुणेति प्रत्यृचं द्वाभ्याम् ॥ २२४ ॥

मन्त्राभ्यां जुहोति ॥ २२४ ॥

पशूखाचेत्स्रवेत्सान्नाय्योखा वा तामभिमन्त्रये-

तोखां स्रवन्तीमगदामन्न त्वष्टा वायुः पृ-

थिव्यन्तरिक्षम् यतश्चुतद्धुतमग्नौ तदस्तु न तत्प्राप्नोति निर्ऋतिः परस्तादिति ॥ २२५ ॥

अनेन मन्त्रेण। ननु च सान्नाय्योपाभिमन्त्रणं यथावन्वयप्राप्तत्वादवाच्यम्। नैष दोषः। सान्नाय्योपायां हि प्रधानद्रव्यच्युतिः पशूपायां तूपसर्जनोदकस्य न प्राप्नोति तेनाप्राप्तत्वादुच्यते ॥ २२५ ॥

यूपविरोहणेऽन्तरस्तन्त्रे संस्थितेऽहनि ॥ २२६ ॥

त्वाष्ट्रं बहुरूपमालभेत ॥ २२७ ॥

यद्यहर्गणे तन्त्रमध्ये यूपविरोहणं भवति। तदा संस्थितेऽहनि त्वष्टृदेवत्यं पशुं बहुरूपं पाटलमालभेत। सर्वाहः शेषभूतो यूपस्तन्निमित्तत्वाच्च पशुरपि सर्वाहः शेषभूत एवेति संस्थितेऽहनीत्युक्तम्। तत्कालता मा भूदिति। अत्र च केचित्सान्निपातिकैरेवाङ्गैरुपेतं त्वाष्ट्रं कुर्वन्ति। आरादुपकारकाणि तु सवनीयसत्कान्येव सन्तीति तानि प्रसज्यन्ते। अपरे त्वन्यथा वर्णयन्ति न ह्यत्र प्रसङ्गो विद्यते। प्रत्येकमहरहः सवनीयाद्यङ्गतन्त्रमेव विहितम्। ततश्च यद्यपि पत्नीसंयाजान्तता पदार्थपर्यवसान तथाप्यहरहः पत्नीसंयाजान्तैरेवाङ्गैः सम्बन्धमेव द्रष्टव्यम्। अन्यथा हि सवनीयपुरोडाशादिविधानानुपपत्तिः स्यादिति। अप्रसङ्गश्चेत्सर्वाङ्गोपेत एव त्वाष्ट्रः कर्तव्य अयमेव च पक्षो वरतर इवाभाति ॥ २२७ ॥

अनूबन्ध्यायै वपामुत्खिद्यानुमर्शी गर्भमेष्टवै ब्रूयात् ॥ २२८ ॥

अनेन च शमिता प्रेष्यते। ततश्चाध्वर्युः प्रैषदाने ॥ २२८ ॥

दर्शने स्थालीं चेत्रोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ २२९ ॥

अयं च शमितुः प्रतिप्रैषः। तद्दर्शनेऽध्वर्योरेव ॥ २२९ ॥

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमम् , मूल्यम् मुद्रा. ७ आणकाः ८

६ कालान्तरे प्रतिस्तवकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः — मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । (मीमांसा) १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाश सहितम् । सम्पूर्णः । (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णा । (मीमांसा) २

(८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । (वेदान्तः) ६

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 92.

# कात्यायनश्रौतसूत्रम् ।

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

KÂTYÂYANA SRAUTASUTRA,

WITH A COMMENTARY BY SRI KARKÂCHÂRYA,

EDITED BY

VYÂKARNÂCHÂRYA PANDIT MADANMOHAN PÂTHAK,
Professor of Mimâmsâ and Dharmashâstra,
Ranabir Sanskrit Pâthashâlâ,
*Central Hindu College, Benares.*

FASCICULUS XI.

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT,
BENARES.
AGENTS — OTTO HARRASSOWITZ, LEIPZIG
PANDIT JYESHTHARAMA MUKUNDJI, BOMBAY.
*Printed by Hari Dâs Gupta Proprietor*
AT THE VIDYA-VILASA PRESS.
BENARES.

*Price Rupees One.*

तथा च मन्त्रलिङ्गं विच्छिन्नं यज्ञं समिमं दधात्विति । तथा या इदा उपसो या अनिष्टास्ताः सन्तनोमीति ॥ २४८ ॥

सत्त्रायागूर्याशक्तौ विश्वजितातिरात्रेण यजेत ॥ २४९ ॥

गूरी उद्यमे । सत्त्रायागूर्य सत्त्रायोद्यमं कृत्वा सत्त्राय सङ्कल्पे सतीत्यर्थः । एव हि श्रूयते । सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यस्तोमेभ्य आत्मानमागुरते यः सत्त्रायागुरते विश्वजितातिरात्रेण यजेतेति ॥ २४९ ॥

सत्त्राङ्गं वागूर्णमात्रश्रुतेः ॥ २५० ॥

वाशब्दः पक्षान्तरप्रतिपत्तौ । सत्त्राङ्गं वा विश्वजिद्भवति । ततश्च कृतेऽपि सत्त्रे प्रवर्त्तते । कुत एतत् । आगूरणमात्रश्रवणात् । न हि कश्चिदनागूर्य करोति । आगूरणं च निमित्तं विश्वजितः । तस्मात्कृतेऽपि सत्त्रे प्रवर्त्तेत इति । एवं पक्षद्वयोपप्रदर्शने सत्युच्यते । न कृते सत्त्रे प्रवर्त्तते अकृत एव प्रवर्त्तते । कुत एतत् । आगूरणनिमित्तस्य तावत्कालभावित्वात् । यावन्न क्रियते सत्त्रं तावदेव सङ्कल्पमिति । अपि च निष्क्रयकार्यं भवति । विश्वजिद्यागं हि प्रकृत्योच्यते सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यः स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्य आत्मानं निष्क्रीणीत इति । निष्क्रयश्चाकृत एव भवति ॥ २५० ॥

दीक्षितानां चेत्साम्युत्थानं जायेत सोमं विभज्य तेनैव सर्ववेदसेन यजेरन् ॥ २५१ ॥

अथ यदि सन्दीक्षिताः साम्युत्तिष्ठेरन्निति प्रकृत्यैवमेवं हि श्रूयत इति । साम्युत्थानं चार्द्धसमाप्ते सत्त्रे उत्थानम् ॥ २५१ ॥

क्रीते त्रिभागः श्रुतेः ॥ २५२ ॥

स च विश्वजित् क्रीते सोमे भवति नाक्रीते । कुत एतद्विभागश्रवणात् । सोममपभजन्तेति । न चाक्रीतस्य विभागः सम्भवति । तस्मात्क्रीते विश्वजित् ॥ २५२ ॥

उपपाताद्वोभयतः ॥ २५३ ॥

वाशब्दः पक्षव्यावृत्तौ । उभयत्र क्रीते चाक्रीते च साम्युत्थाने विश्वजिद्भवति । कुत एतत् । उपपातात् साम्युत्थानं हि निमित्त तद्धि विभागेन विधीयते वाक्यं भिद्येत । तस्मात् उभयतो विश्वजित् ॥ २५३ ॥

तर्हि कथमुच्यते सोममपभज्येति विभागश्रवणात्—

विभागः क्रियागुणत्वात् ॥ २५४ ॥

क्रियागुणभूतानां द्रव्याणां सामर्थ्यपरिप्राप्तो विभागः सोऽनूद्यते सोमशब्देन लक्षणया सोममपभज्येति ॥ २५४ ॥

अनीतासु चेद्दक्षिणासूद्गात्रपच्छेदोऽदक्षिणः

सं स्थाप्य पुनराहारः ॥ २५५ ॥

यद्यनीतासु दक्षिणासूद्गातापच्छिद्यते तं क्रतुमदक्षिणं सं स्थाप्य पुनराहरणम् ॥ २५५ ॥

प्रस्तोता चेद्ब्रह्मणे वरं दत्वा पुनर्वरणम् ॥२५६॥

प्रस्तोता चेदपच्छिद्यते ब्रह्मणे वरं दत्वा पुनर्वरणं प्रस्तोतु ॥२५६॥

प्रतिहर्त्ता चेत्सर्ववेदसं देयम् ॥ २५७ ॥

युगपच्चेद्विरोधाद्विकल्पः ॥ २५८ ॥

उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे विरोधाद्विकल्पो नैमित्तिकस्य ॥ २५८ ॥

पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् ॥ २५९ ॥

अनयोरेवानुपूर्व्यापच्छेदे पूर्वनिमित्तं दुर्बलमुत्तरं च बलवत् । पूर्वविज्ञानानुपमर्देनोत्तरस्यानुत्पत्ते । तद्यथा प्राकृतं कौशं विज्ञानं विकृतौ चोदकप्राप्तं प्रत्यक्षेण शरविज्ञानेन बाध्यत एवम् ॥ २५९ ॥

यस्मिन्नहन्युद्गात्रपच्छेदोऽहर्गणे तस्यावृत्तिः ॥२६०॥

भवति ॥ २६० ॥

पत्न्युदक्या दीक्षारूपाणि निधाय सिकता-
स्वासीतोपस्रवणात् ॥ २६१ ॥

पत्नी रजस्वला दीक्षारूपाणि शङ्ग्कादीनि निधाय सिकतास्वा-
सीतारक्तविरमात् ॥ २६१ ॥

तिष्ठेत्सन्धिवेलयोः ॥ २६२ ॥

निष्ठुनिक्रिया नियम्यते ॥ २६२ ॥

वेदिसमीपे सुत्यासु ॥ २६३ ॥

सुत्यासु वर्त्तमानासु वेदिसमीपे तिष्ठेत् ॥ २६३ ॥

त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा
परिधानादि करोति सान्निपातिकम् ॥ २६४ ॥

पदार्थजातम् ॥ २६४ ॥

प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि ॥२६५॥

कर्म गच्छति ॥ २६५ ॥

न गर्भिणी दीक्षयेदित्येके ऽयज्ञिया गर्भा
इति श्रुतेः ॥ २६६ ॥

नानूबन्ध्या प्रकरणात् ॥ २६७ ॥

अनूबन्ध्यां हि प्रकृत्य श्रूयते अयज्ञिया वै गर्भा इति न
सार्वत्रिकम् । तत्रापि वायमर्थवादो मन्त्रस्तुत्यर्थः ॥ २६७ ॥

दीक्षितोऽमनोज्ञं स्वप्नं दृष्ट्वा जपेत्पर्यावर्त्ते
दुःस्वप्न्यात्पापः स्वप्नादभूत्यै ब्रह्माहमन्तरं
करवे परः स्वप्नमुखा कृधीति ॥ २६८ ॥

अमुं मन्त्रम् ॥ २६८ ॥

इन्द्रिय; स्कन्नमद्भिरुपसिञ्चेद्योमेद्य पयसो
रसः परि दोपादुदर्पिथः अग्निहोत्रमिव सो-
मेन तमहं पुनरादद इति ॥ २६९ ॥

अनेन मन्त्रेण ॥ २६९ ॥

उदकं चेत्तरेत्तदभिमन्त्रयेतोन्दतीर्बलं
धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो
निर्वधिष्टेति ॥ २७० ॥

अनेन मन्त्रेण ॥ २७० ॥

अवदृष्टश्च ॥ २७१ ॥

चशब्दादनेनैव मन्त्रेणाभिमन्त्रयेत् ॥ २७१ ॥

अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेतावद्धं मनो दरिद्रं
चक्षुः सूर्यो ज्योतिषा; श्रेष्ठो दीक्षे मा मा
हासीदिति ॥ २७२ ॥

अनेन मन्त्रेण ॥ २७२ ॥

शोणितं चेत्कुर्यादुद्रियाभ्योऽद्भ्यः स्वाहेति
जुहुयात् ॥ २७३ ॥

निष्ठीवेचेत् बीभत्साभ्योऽद्भ्यः स्वाहेति ॥२७४॥

धावेचेद्वायवे स्वाहेति ॥ २७५ ॥

स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति ॥ २७६ ॥

स्वप्याच्चेत्प्रजापतये स्वाहेति ॥ २७७ ॥

तद्धैताद्विया स्वाप भवति ॥ २७७ ॥

आर्त्यश्रुकरणे तृप्राम्योऽन्नृचः स्वाहेति ॥२७८॥

छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत नि-
ष्ठ्युतवद्धोमः ॥ २७९ ॥

वयसाऽवप्रस्रुते चमसेऽन्तरिक्षेण पतति या-
तुधानप्रबोधितश्चमसं यमभ्यचुश्च्युतदग्निष्ट-
च्छुन्धतादिह पुनः स्वाहेति ॥ २८० ॥

अभ्युपाकृतचमसमुपस्थे कृत्वाग्न आ याही-
तये गृणानो हव्यदातयेनि होता सत्सि बर्हि-
षि स्वाहेति ॥ २८१ ॥

जुहोति अभक्षितमनुपाकृते द्रष्टव्यम् ॥ २८१ ॥

आग्नीध्रीये वा हिरण्यगर्भ इत्यृचा ॥ २८२ ॥

आहवनीये वेति विकल्पः ॥ २८२ ॥

हुताहुतसंसर्गेऽङ्गारमन्तः परिधि निर्वर्त्य ॥२८३॥

कुशतरुणेन जुहोति हुतस्य चाहुतस्य चा-
हुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्राग्नी
पिबतं सुतमिति ॥ २८४ ॥

अनेन मन्त्रेण ॥ २८४ ॥

वषट्कृते ॥ २८५ ॥

हुता हुतसंसर्गेऽप्रभक्षिते चमस उन्नयनम् । एवं हि शाखा-
न्तरे श्रूयते । यस्याभक्षितं चमसमभ्युन्नयन्ति ॥ २८५ ॥

चुक्रते स्वाहेत्यनुवषट्कृते ॥ २८६ ॥

जुहोति ॥ २८६ ॥

सꣳसर्गकाले वोपपातसामर्थ्यात् ॥ २८७ ॥

वाशब्दः पक्षान्तरपरिग्रहे । न वा वषट्कारानुवषट्कारयोर्होमः । उपपातो ह्ययं श्रूयते । नैमित्तिकस्य चोपपातकालता न्याय्येत्युक्तम् । यत्पुनरुक्तं वषट्कृतेऽनुवषट्कृते वेति । तद्धोमद्वयविषयत्वनाशङ्क्यते ॥ २८७ ॥

तस्य भक्षणं मा यजमानं तमो विदन्मर्त्विजो मा यः सोममिमं पिबा सꣳसृष्टमभयं क्रतुमिति ॥ २८८ ॥

अनेन मन्त्रेण ॥ २८८ ॥

अवभृष्टभक्षणमिन्दुरिन्दुमवागात्तस्य त इन्द्रविन्द्रपीतस्येन्द्रियावतो गायत्रच्छन्दसः सर्वगणस्य सर्वगण उपहूतस्योपहूतो भक्षयामीति ॥ २८९ ॥

अनेन मन्त्रेण ॥ २८९ ॥

स्वकाल एव—

त्रिष्टुपच्छन्दसो जगच्छन्दस इति यथा सवनम् ॥ २९० ॥

विशेषः ॥ २९० ॥

अच्छन्दसमेके ॥ २९१ ॥

छन्दः शब्दमेके न कुर्वन्ति ॥ २९१ ॥

पतितं चमसमालभतेऽस्कन्पर्जन्यः पृथिवी-
मस्कन् गामृषभो युवा अस्कन्नेमा विश्वाभू-
तानि प्रस्कन्नाज्जायता॒ँ हविरिति ॥ २९२ ॥

अनेन मन्त्रेण । चमसशब्देन च द्रव्यं लक्ष्यते त-
त्संस्कारात् ॥ २९२ ॥

उत्तरपूर्वे जुहोत्युपरवे चमसे दुष्टे प्रजापतये
स्वाहेत्यथ येऽन्येऽनादिष्टास्तान्स्वरे जुहुयाद-
ग्नये वैश्वानराय स्वाहेति नाराश॒ँसश्चेदुप-
वायात्तदुक्तम् ॥ २९३ ॥

नाराश॒ँसश्चेच्छुष्येत तदुक्तं पूतभृतश्चमसानिति । उत्तरेण
सह विकल्पार्थमिदमुच्यते ॥ २९३ ॥

अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ॥२९४॥

आग्रयणोऽन्त्यो ग्रह उच्यते अन्तसम्बन्धात् ॥ २९४ ॥

कलशश्चेदुपवायात्क्षीरासेचनमेके ॥ २९५ ॥

द्रोणकलशश्चेच्छुष्येत क्षीरासेचनमेके कुर्वन्ति ॥ २९५ ॥

एके—

हिरण्यवद्धोदकम् ॥ २९६ ॥

उन्नयने च ॥ २९७ ॥

एतदेव भवति। उन्नयन्त्यस्मादित्युन्नयनं पूतभृदुच्यते ॥२९७॥

अद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् ॥२९८॥

अद्रौ भिन्ने मरुच्छिद्रास्वृक्षु ब्रह्मसाम क्रियते । ब्रह्मसाम च
माध्यन्दिने ब्राह्मणाच्छ॒ँसिविभक्तस्तोत्रम् ॥ २९८ ॥

चतुस्त्रिंशद्धोमश्च ॥ २९९ ॥

अद्रिभेदने भवति ॥ २९९ ॥

सोमापहरणे त्रिधावतेच्छतेति ब्रूयात् ॥ ३०० ॥

अध्वर्युर्यद्गुविषयस्यात्मेषणस्य ॥ ३०० ॥

अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् ॥ ३०१ ॥

अर्जुनशब्दश्चात्र तृणविषयः । अभिषवशब्देन च यागस्याधारघोपलक्षणम् । श्रुतप्रतिनिधिरयम् । ततश्च सोमशब्देनोपलक्षणम् ॥ ३०१ ॥

श्येनहृतं पूतीकानादारानरुणदूर्वा हारितकुशान्पूर्वालाभे पूर्वालाभ उत्तरान् ॥ ३०२ ॥

अभिषुणुयात् एवं ह्यत्र श्रूयत इति ॥ ३०२ ॥

एकां गां दत्वा समाप्य पुनर्यज्ञः ॥ ३०३ ॥

अत्र च गोः सङ्ख्यासम्बन्धो यज्ञाः तदेकामिति ततश्च हिरण्यादीनां अनिवृत्तिः ॥ ३०३ ॥

अवभृथान्ते वा श्रुतिसामर्थ्यात् ॥ ३०४ ॥

अवभृथान्त एव वा पुनर्यज्ञो भवति । तथा अथावभृथादेत्य पुनर्दीक्षेतेति श्रुतं ॥ ३०४ ॥

कलशभेदने वषट्कार निधनम् ब्रह्मसाम ॥ ३०५ ॥

कर्तव्यम् ॥ ३०५ ॥

अनुलिप्सध्वमिति प्रेष्यति ॥ ३०६ ॥

अध्वर्युः । अन्ये चानुलिप्सन्ते ॥ ३०६ ॥

यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयन्तः प्रचरेयुः ॥ ३०७ ॥

आग्रायणाद्वाऽनुपलभमानेषु पूर्ववत् ॥ ३०८ ॥

अनुपलभमाने सोमे आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत्प्रभावयन्तः प्रचरेयुः ॥ ३०८ ॥

अनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्वा तथैव यज्ञः ॥ ३०९ ॥

स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्याद्यथावभृथादेवोदेत्य पुनर्दीक्षेनेति हि श्रुतेः ॥ ३०९ ॥

प्रातः सवनाचेत्सोमोतिरिच्येत तमुन्नीयोपाकरणमस्ति सोमो अयमिति ॥ ३१० ॥

मन्त्रान्तरविधानादितरो निवर्त्यते ॥ ३१० ॥

मरुत्वतीषु गायत्रेण स्तुवीरन् ॥ ३११ ॥

मरुल्लिङ्गासु ऋक्षु गायत्रेण साम्ना स्तुवीरन् ॥ ३११ ॥

ऐन्द्राविष्णवꣳ होता शꣳसति ॥ ३१२ ॥

ऐन्द्राविष्णवं शस्त्रं होता शꣳसति ॥ ३१२ ॥

यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र ॥ ३१३ ॥

यत्स्तोमसमनन्तरं सोमातिरेको भवति स एव कार्यः सर्वत्र। सर्वत्र ग्रहणात्सवनान्तरेपि ॥ ३१३ ॥

माध्यन्दिनाचेत्पूर्ववदुपाकरणम् ॥ ३१४ ॥

कर्तव्यम् ॥ ३१४ ॥

षण्महां असीति बृहतीष्वादित्यवतीषु गौ-
रीवितेन स्तुवीरन् ॥ ३१५ ॥

गौरीवितं साम तेन स्तुवीरन् ॥ ३१५ ॥

एतत्क्रत्वोक्थ्यं पूर्ववद्धोता ॥ ३१६ ॥

ऐन्द्रावैष्णवं शंसती त्येतदुक्तं भवति ॥ ३१६ ॥

तृतीयसवनाच्चेद्विष्णोः शिपिविष्टवतीषु
गौरीवितेन ॥ ३१७ ॥

तृतीयसवनाच्चेदतिरिच्येत शिपिविष्टविष्णुलिङ्गासु ऋक्षु गौरीवितेन स्तुवीरन् ॥ ३१७ ॥

वा गृहीत्वा निगृह्णीयात् ॥ ३१८ ॥

धाशब्दाद्यदि पूर्वेषां न नि येवितः सोमस्तन उक्थ्यं गृहीत्वा विगृह्णीयात् ॥ ३१८ ॥

उक्थाच्चेत्पोडशी कार्यः ॥ ३१९ ॥

उक्थ्यसंस्थाचेत्तृतीयसवने सोमोतिरिच्येत षोडशी कर्तव्यम् ॥ ३१९ ॥

षोडशिनश्चेदतिरात्रः ॥ ३२० ॥

कर्तव्य इति वर्त्तते ॥ ३२० ॥

अतिरात्रच्चेद्बृहत् ॥ ३२१ ॥

स्तोम० कर्तव्य० ॥ ३२१ ॥

महाव्रतमेके यथोक्तम् ॥ ३२२ ॥

प्रदेशान्तरे ॥ ३२२ ॥

अप्तोर्यामो वा अन्त्याच्चेत्तस्यैवावृत्तिः ॥ ३२३ ॥

अन्यशब्देनासोर्यामोऽभिधीयते । ततश्चेदतिरिच्येत तस्यैवा-वृत्तिः कार्या ॥ ३२३ ॥

नातीरेकोऽस्तीति श्रुतेः ॥ ३२४ ॥

॥ ह्यतोऽप्यधिकोऽतिरेकोऽस्तीति श्रुतेः ॥ ३२४ ॥

पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पादनमेके ॥ ३२५ ॥

एके आचार्याः पूर्वसवनातिरिक्तसोममुत्तरे सोमे सम्पादय-न्ति । अस्य विधेरर्थवादोयम् ॥ ३२५ ॥

तं निकामयमानोऽभ्यरितिच्यत इति श्रुतेः ॥ ३२६ ॥

तमुत्तरसवनसोमं निकामयमानः पूर्वसोमोऽप्यतिरिच्यते य-द्यहमुत्तरं सवनसोमं प्राप्स्यामीति ॥ ३२६ ॥

तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः ॥ ३२७ ॥

असमृताऋजीषमिश्रस्याप्स्ववहरणम् ॥ ३२८ ॥

यदि हारियोजनकाले न स्मर्यते तदा ऋजीषमिश्रमप्सु अ-वहरेत् ॥ ३२८ ॥

दीक्षितश्चेदुपतप्येतोप्यानां येनेच्छेत्तेन चिकित्सेत् ॥ ३२९ ॥

उप्यानि च सर्वसुरभीणि तेषां येनेच्छेत्तेन चिकित्सेत् ॥ ३२९ ॥

आग्नीध्रमेनं नयतेति ब्रूयात् कृतं चेत् ॥ ३३० ॥

अध्वर्युर्यद्युपचनाग्नतत्वादन्येनेतारस्तथाग्नीध्रं यदि कृतं भवति तदैव ब्रूयादिति ॥ ३३० ॥

एवं प्राप्त आह—

अकृतेप्यविशेषात् ॥ ३३१ ॥

अकर्तव्याग्निष्वे आग्नीध्रमेव नयतेति वक्तव्यमेव । अविशेषेण हि श्रूयते । तस्माद् दीक्षितानामवल्य विन्ददाग्नीध्रमेव नयतानि ब्रूयादिति ॥ ३३१ ॥

तदा च—

तद्देशे वासः ॥ ३३२ ॥

दीक्षितस्य भवति ॥ ३३२ ॥

वासतीवरमुदकमाचामेदित्येके चात्वाल-
गताभ्यः ॥ ३३३ ॥

वसतीवरीश्च ॥ ३३३ ॥

तत्र मन्त्रमाह—

आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति ॥ ३३४ ॥

अनुसव एनमालभेरन्वसव एतद्वः प्रातः सवनं तद्रक्षध्वं तद्गोपायध्व तद्वोमा व्यव-च्छैत्सीदिति ॥ ३३५ ॥

रुद्रा आदित्या इत्युत्तरयो सवनयोः ॥ ३३६ ॥

विशाय ॥ ३३६ ॥

म्रियते चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वास्थी-न्युपनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन् ॥ ३३७ ॥

मृत यजमान निर्मन्थ्यन शामित्रेण वा दग्ध्वास्थीन्युपनह्य तस्य यो नेदिष्ठी स्यो भ्राता स्यात् त दीक्षयित्वा तेन सह यजेरन् ॥ ३३७ ॥

सत्त्रगणयज्ञे सहत्वशब्दात् ॥ ३३८ ॥

एतच्च सत्रे भवति गणयते च तेन सहयजेरन्निति सह-श्रवणात् ॥ ३३८ ॥

एकयज्ञे दर्शपूर्णमासवत् ॥ ३३९ ॥

मरणान्तं भवतीत्येवदुक्तं भवति ॥ ३३९ ॥

एतत्कृत्वा राजानमभिषुत्याऽगृहीत्वा ग्रहान्-दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ॥३४०॥

यथोपदेशमेतत्कृत्वा राजानमभिषुत्य ग्रहानगृहीत्वैव दक्षिणा पूर्वस्यां वेदिस्रक्त्यां यामेन साम्ना स्तुवीरन् ॥ ३४० ॥

तिसृषु पराक्षु सार्पराज्ञीषु ॥ ३४१ ॥

तिसृषु पराचीषु अनभ्यावृत्तासु सार्पराज्ञीषु स्तुवीरन्निति बहुवचनादुद्गातारः ॥ ३४१ ॥

मार्जालीये वा ॥ ३४२ ॥

स्तुवीरन्निति विकल्पः ॥ ३४२ ॥

स्तुते मार्जालीयं त्रिः परियन्त्यपसव्यᳪ स-व्योरूनाघ्नाना स्तोत्रिया जपन्तः ॥ ३४३ ॥

स्तुते स्तोत्रे उद्गातारो मार्जालीयमपसव्यं त्रिः परियन्ति सव्योरूनाघ्नाना स्तोत्रियाश्च जपन्तः ॥ ३४३ ॥

अग्न आयूᳪषि पवस इति प्रतिपन्नयति ॥३४४॥

पवमानस्य प्रथमा ऋक्प्रतिपदुच्यते ॥ ३४४ ॥

संवत्सरेऽस्थीनि याजयेयुः ॥ ३४५ ॥

प्रयोजकव्यापारेण प्रयोज्यव्यापारो लक्ष्यते अस्थीनि याज-येरन्निति । यथा निषादस्थपतिं याजयेदिति ॥ ३४५ ॥

इदं विचार्यते किं मरणात्संवत्सरेऽस्थियज्ञः उत कर्मोपक्रमादिति । नियमकारिशास्त्राभावात् अनियमे प्राप्त आह—

कर्मापवर्गादसम्भवान्मरणस्य ॥ ३४६ ॥

कर्मापवर्गात्संवत्सरेऽस्थियज्ञः । न हि मरणं संवत्सरविशेषणत्वेन सम्भवति कदाचित्संवत्सरमध्येऽपि संवत्सर इति । तस्मात्कर्मापवर्गादेव संवत्सरेऽस्थियज्ञः ॥ ३४६ ॥

अपरिमितस्तोमेन यजेरन् ॥ ३४७ ॥

ज्योतिष्टोमे हि स्तोमपरिमाणमुक्तम् इहापरिमितस्तोमोऽभिधीयते वचनात् ॥ ३४७ ॥

त्रिवृद्बहिष्पवमानेन वा ॥ ३४८ ॥

अस्थीनि यजेरन् ॥ ३४८ ॥

तदा च—

सप्तदशमन्यत् ॥ ३४९ ॥

सप्तदशस्तोमकमन्यद्भवति ॥ ३४९ ॥

मैत्रावरुणाग्रान् ग्रहान् गृह्णीयात् ॥ ३५० ॥

ऐन्द्रवायवात्पूर्वं मैत्रावरुणो गृह्यत इत्युक्तमेतत् व्यूढछन्दसि द्वादशाहे ॥ ३५० ॥

प्रातिनिधिको यजमानं कुर्यात् ॥ ३५१ ॥

नह्यस्थ्नां कर्तृत्वं सम्भवति ॥ ३५१ ॥

दीक्षणीयापुरुषसंस्काराशीर्वर्जम् ॥ ३५२ ॥

क्रियते ॥ ३५२ ॥

समासेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ॥३५३॥

प्रतिपत्त्यन्तराविधानात् ॥ ३५३ ॥

पुनर्दाहो वा युक्तत्वात्पात्राणाम् ॥ ३५४ ॥

वाशब्दः पक्षान्तरपरिग्रहे । पुनर्दाहो भवति नारण्ये निवापः । कुत एतत् । युक्तत्वात् पात्राणाम् । तानि हि प्रतिपत्त्या युज्यन्ते । द्वितीया

न्तनिर्देशात् दक्षिणहस्ते जुहूं सादयतीत्येवमादि । अतस्तत्संस्कारात् पुनर्दाहः । यद्यपि चाहिताग्निमिर्दहन्ति यज्ञपात्रैश्चेति करणता पात्राणां तथापि सादने प्रतिपत्तिस्तेषाम् द्वितीयान्तनिर्देशात् । तस्मात्साधूक्तं पुनर्दाहो वा युक्तत्वात्पात्राणामिति ॥ ३५४ ॥

ततः सञ्चयनादि ॥ ३५५ ॥

तत ऊर्ध्वं सञ्चयनादि कर्त्तव्यम् ॥ ३५५ ॥

उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृतादग्ध्वा नेदिष्ठयाग्निं चित्वा तमस्मा अनुदिशेदित्येके ॥ ३५६ ॥

उखाभरणेन साग्निको ऽग्निचयी लक्ष्यते । तत्र चेन्म्रियेत कश्चियजमानः सोपकरणमाहिताग्न्यावृता दहेत् । एवं ह्यत्र श्रूयते । यद्यु म्रियेत स्वैरेव तमग्निभिर्दहत्यशवाग्निरिताट यजमाना आसत इति तत्र च नेदिष्ठयग्निं चित्वा तस्मा अनुदिशेदित्येके । नेदिष्ठी हि तत्कार्यं करोति एवं च तत्कार्यं कृतं भवति यदि तत्फलमनुदिशतीत्यभिप्राय ॥ ३५६ ॥

न कर्म फलासम्भवात् ॥ ३५७ ॥

नैतदेवं फलानुदेशः कर्त्तव्य इति । न हि कर्म फलप्रदानं सम्भवति । अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । तस्मान्नैवानुदेशः कर्त्तव्यः ॥ ३५७ ॥

उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकम् ॥ ३५८ ॥

उपदीक्षी नेदिष्ठी स्वानग्नीन्विहृत्य नखनिकृन्तनाद्युद्वातनान्तं सान्निपातिकं कर्म करोति ॥ ३५८ ॥

तेपूपहवमिष्ट्वाग्नी सꣳसृजेत ॥ ३५९ ॥

दीक्षिता उपहवपर्वमित्येवमुपहवमिष्ट्वाग्निसंसर्गं कुर्यात् ॥ ३५९ ॥

अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेत् यस्याग्निभिरन्यं याजयेयुरिति वचनात् ॥३६०॥

यद्यनाहिताग्निर्निर्दिष्टो भवति तदा तेष्वेवाग्निषु नक्षत्रेष्ट्यादि करोति। ततश्च वैश्वानरनिर्वापः कार्यः। एवं हि श्रूयते। यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेदिति। तस्य अयमेव विषय इत्यभिप्रायः ॥ ३६० ॥

एवं प्राप्त आह—

नाश्रुतेः ॥ ३६१ ॥

नैतदेवं तेष्वेवाग्निषु नेदिष्ट्यपि करोतीति। न ह्येवं श्रूयत इति। वैश्वानरस्य तर्हि को विषयः ॥ ३६१ ॥

स उच्यते—

आपदि वैश्वानरः ॥ ३६२ ॥

सत्रसम्मोहे सति परकीयैरग्निभिर्यागे कृते वैश्वानर इति ॥ ३६२ ॥

समानजनपदस्तु सवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः पूर्वः कर्म प्रवर्त्तयेत् ॥३६३॥

राजन्य समानजन इत्युक्तम्। तेषां यदि ससवो भवति। समित्यैकीभावे अनवन्तरे ऽगिर्यन्तरे वा ससवो भवति तत्र कर्मसु महारात्रे प्रातरनुवाकमुपाकृत्य इतरेऽपि इतरापेक्षया पूर्वः पूर्वः कर्म प्रवर्त्तयेत् ॥ ३६३ ॥

सुसमिद्धहोमः ॥ ३६४ ॥

कर्त्तव्यम् ॥ ३६४ ॥

सन्तरथोत्तरं च कुर्यात् ॥ ३६५ ॥

इतरापेक्षयैव सत्रोत्तरं कर्त्तव्यम् ॥ ३६५ ॥

इच्छन्वृषण्वती प्रतिपत् ॥ ३६६ ॥

पवमानस्य प्रथमा स्तोत्रिया प्रतिपदुच्यते । सेच्छन्वृषण्वतीति इच्छयान्वयप्रातेव ॥ ३६६ ॥

अनुसवनं वा ॥ ३६७ ॥

अनुशब्दः प्रतिशब्दस्यार्थे प्रति सवनं वा वृषण्वती भवति न बहिष्पवमान एवेति विकल्पः ॥ ३६७ ॥

बृहद्रथन्तरपृष्ठः ॥ ३६८ ॥

संसवस्तोमः कार्यः । एवं हि श्रूयते सᳪंसव उभे कुर्याद् गोसव उभे कुर्याद् अभिजितावप्येका द्वे उभे बृहद्रथन्तरे कुर्यादिति ॥ ३६८ ॥

तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः ॥ ३६९ ॥

तौरश्रवसे सामनी माध्यन्दिने पवमाने प्रक्षेप्तव्ये । कुत एतत् । तदावपनश्रुतेः । तत्र ह्यावापः श्रूयते । तदेव प्रकृत्य अत्र ह्यावपन्ति अत्रोद्वपन्तीति ॥ ३६९ ॥

आभीकमभिनिधनमाभीपवानि चैके ॥ ३७० ॥

एके आचार्या आभीकादीन्यपि सामान्यावपन्ति ॥ ३७० ॥

प्रातः सवने जुहोति संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहेति ॥ ३७१ ॥

अनेन मन्त्रेण आगन्तुत्वादन्ते ॥ ३७१ ॥

त्रिष्टुभे जगत्या इत्युत्तरयोः ॥ ३७२ ॥

सवनयोर्विशेषः ॥ ३७२ ॥

त्रिहत्रीयजनीयकयाशुभीयानि होताशᳪंसति ॥ ३७३ ॥

सूक्तनामधेयान्येतानि बहिष्पवमानस्तोत्रसमनन्तरं पञ्चस्तं तत्रैतानि होता शᳪंसति ॥ ३७३ ॥

साख्यमरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥३७४॥

सखिसम्बन्धि साख्यं तन्मरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥ ३७४ ॥

प्रातः सवने ऽध्वर्युर्माध्यन्दिने होतोद्गाता तृतीयसवने ॥ ३७५ ॥

जुहोति ॥ ३७५ ॥

अनुसवनं ब्रह्मा गृहपतिश्च जुहुतः ॥ ३७६ ॥

सर्वमरणमिच्छन्तः सर्वेऽनुसवनम् ॥ ३७७ ॥

सर्वेषां प्रतिपक्षनिक्षिप्तानां मरणमिच्छन्तः सर्व एवैतेऽनुसवनं जुह्वति ॥ ३७७ ॥

नद्यन्तरे ऽसःसवो गिरिभिच्चेत् ॥ ३७८ ॥

गिरिं भित्वा या नद्यागता तदन्तरे संसवो न भवति सघसोमनिमित्तं न भवतीत्यर्थः ॥ ३७८ ॥

गिरौ ॥ ३७९ ॥

गिर्यन्तरेऽप्यसंसवः ॥ ३७९ ॥

रथाह्ने च ॥ ३८० ॥

असंसवः । यावन्तं प्रदेशमह्ना रथो गच्छति तदन्तेऽप्यसंसवः ॥ ३८० ॥

सर्वत्राऽविद्विषाणाम् ॥ ३८१ ॥

अविद्विषाणां तु सर्वत्रैवासःसवः ॥ ३८१ ॥

विद्वेषेऽप्ययं वायुर्महान्त्समुद्र इति श्रुतेः ॥३८२॥

अन्यतरविद्विषेऽप्यससवो भवति । एवं हि श्रूयते वायुः समुद्रस्य विद्विष्ठतमपहरन्तीति ॥ ३८२ ॥

सोमदाहे यथास्वं वृत्तान्धारयेयुः ॥३८३॥

भारण स्वपदार्थानामनुस्मरणम् ॥ ३८३ ॥

प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः ॥ ३८४ ॥

प्रतिनिधाय सोमद्रव्य स्वपदार्थेभ्य. यथापूर्वं यज्ञेन चरेयु ॥ ३८४ ॥

पञ्च गा दत्वा प्राग्द्वादश्या: पुनर्यज्ञः ॥३८५ ॥

अत्र गोसख्यासम्बन्धो या गास्ता पञ्च । ततश्च हिरण्यादीनामनिवृत्ति द्वादशाह. प्राक्पुनर्यज्ञ ॥ ३८५ ॥

तत्र तद्द्याद्यत्पूर्वस्मिन्दास्यन्त्स्यात्सत्त्रेऽप्यविशेषात् ॥ ३८६ ॥

सत्त्रेऽपि सोमदाहे भवत्येवैतत् । कुत एतदविशेषात् ॥३८६॥

दानं प्रायश्चित्तसंयोगात् ॥ ३८७ ॥

न वा दक्षिणात्वात् ॥ ३८८ ॥

न वा दान प्रवर्त्तते ऽदक्षिणानि हि सत्त्राणीति ॥ ३८८ ॥

तस्य त्वन्हः पुनराहारः ॥ ३८९ ॥

भवतीति सूत्रशेष ॥ ३८९ ॥

ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ॥ ३९० ॥

यान्यनादिष्टनिमित्तानि यथा यदि दीक्षासु किं चिदापद्येतेति तन्निमित्तविशेषे आदिष्टानि तानि ब्रह्मा जुहोति । एव हि श्रूयते ता ब्रह्मैव जुहुयादिति व्याहृत्यङ्गीकरणेन स्त्रीलिङ्गबहुवचनान्तता । तथा यद्यृक्तो भूरिति चतुर्गृहीतमाज्य गृहीत्वेत्येवमादि महाव्याहृतय एव प्रकृत्य श्रूयते यदेव ब्रह्मणे विधायै शुक्र तन ब्र ह्मत्वमिति ॥ ३९० ॥

ब्रह्मा विलिष्टं सन्दधातीति श्रुतेः ॥ ३९१ ॥

विलिष्टं दुरिष्टं यत्तद्ब्रह्मा सन्दधाति यद्वै यज्ञस्य दुरिष्टं तद्ब्रह्मा सन्दधातीति श्रुतेः ॥ ३९१ ॥

त्रिवेदसंयोगाच्च ॥ ३९२ ॥

अपिच वेदत्रयविहितकर्मसंयोगो ब्रह्मण एवेति ॥ ३९२ ॥

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये
पञ्चविंशो ऽध्यायः ।



# षड्विंशोऽध्यायः ।

आधानादीनि पितृमेधान्तानि कर्माण्यभिधाय वेदान्तरविहितान्येकाहादीन्युक्त्वा तेषामेव यानि नैमित्तिकान्यङ्गानि भिन्ने जुहोतीत्येवमादीनि यानि च नैमित्तिकान्येव पुरुषार्थरूपाणि क्षामवत्यादीनि तान्यप्यभिहितानि । इदानीमवसरप्राप्तः प्रवर्ग्योऽनुविधेयस्तदर्थं सूत्रमारभ्यते—

दीक्षासु महावीरान्त्सम्भरति ॥ १ ॥

दीक्षाशब्दवाच्यः पदार्थो निरूपितः । तासु वर्त्तमानासु महावीरान्सम्भरति महावीरान्करोतीत्यर्थः । महावीरैश्चोपलक्षितमन्यदप्यत्र पिन्वनादि सम्भ्रियत एवेति । प्रयोजनं तेषामप्यन्तराये प्रयोक्तृत्वम् ॥ १ ॥

अन्तःपात्यदेशे सम्भरान्निदधाति ॥ २ ॥

तानाह—

मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः॥२॥

देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति ॥ ३ ॥

सव्यहस्तस्थिताया एवालभ्य जपो यथा स्यादिति दक्षिणग्रहणम् ॥ ३ ॥

मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति ॥ ४ ॥

दक्षिणोत्तराभ्यां पाणिभ्याम् । दक्षिणः सान्निरिति यतिना निर्दिश्यते ॥ ५ ॥

कृष्णाजिने निदधात्युत्तरतः ॥ ६ ॥

मृदम् ॥ ६ ॥

देव्यो वम्रय इति वल्मीकवपाम् ॥ ७ ॥

आदत्त इति वर्तते ॥ ७ ॥

इयत्यग्र इति वराहविहतम् ॥ ८ ॥

आदत्ते ॥ ८ ॥

इन्द्रस्यौजस्थेति पूतीकान् ॥ ९ ॥

मखायेति पयः ॥ १० ॥

तूर्णीं गवेधुकाः ॥ ११ ॥

आदत्त इति सर्वत्रानुषङ्गः ॥ ११ ॥

सम्भृतानभिमृशति मखायेति ॥ १२ ॥

तान्सम्भृतानभिमृशतीत्युपदेशाद्युगपदभिमर्शनम् ॥ १२ ॥

कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति ॥ १३ ॥

बहुवचनोपदेशात्सर्वेषां मन्त्र । परिवृतं च पूर्वं कृतमेव द्रष्टव्यम् । तद्भूतोपदेशात्करणस्याचोदितत्वात् ॥ १३ ॥

परिवृते निदधाति सम्भारान् ॥ १४ ॥

उद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति ॥ १५ ॥

अनेन मन्त्रेण ॥ १५ ॥

सम्भारैः सꣳसृजति मखायेति ॥ १६ ॥

मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्द्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्द्ध्वं मेखलायास्त्र्यङ्गुलम् ॥१७॥

मृदादानं तूष्णीम् । मन्त्रेण महावीरकरणम् ॥ १७ ॥

निष्ठितमभिमृशति मखस्य शिर ॥ १८ ॥

अनेन मन्त्रेण ॥ १८ ॥

आदानमेके ॥ १९ ॥

कुर्वन्ति ॥ १९ ॥

एवमितरौ प्रतिमन्त्रम् ॥ २० ॥

एवमितरौ महावीरौ प्रतिमन्त्रं करोति ॥ २० ॥

स्रुक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले मृदमुपशयाꣳनिदधाति ॥ २१ ॥

यथार्थतया ॥ २१ ॥

गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् ॥ २२ ॥

श्लक्ष्णनं च मृन्मार्द्दीकरणम् । एतदेव तासां सम्भरणप्रयोजनम् ॥ २२ ॥

अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् ॥२३॥

उखावदग्निः प्रदहनं च मखायेति प्रतिमन्त्रम् ॥२४॥

उखावदिति निर्मन्थ्यो दक्षिणाग्निर्वा ॥ २४ ॥

पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम् ॥ २५ ॥

उद्वपामीति चाध्याहारः साकाङ्क्षत्वात् ॥ २५ ॥

अजापयस्त्ववसिञ्चति मखायेति प्रतिमन्त्रम् ॥२६॥

साकाङ्क्ष एवाऽतो यथार्थमध्याहारो युक्तरूप इति ॥ २६ ॥

तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णन-

धूपनप्रदहनोद्धरणावसेचनानि ॥ २७ ॥

उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति

सप्रवर्ग्ये ॥ २८ ॥

ननु चैतदुक्तमेव प्रवर्ग्योपसदावत इत्यत्राप्यनत्र। सत्यमे-
वम्। तत्र समासनिर्देशात् इह क्रमार्थोऽयमारम्भः ॥ २८ ॥

अपिहितद्वारे प्रवर्ग्यचरणम् ॥ २९ ॥

पिमिते ॥ २९ ॥

पत्न्यदर्शनम् ॥ ३० ॥

सन्निधानेपि सति दर्शनमात्रप्रतिषेधः ॥ ३० ॥

अननूक्तिभिश्च ॥ ३१ ॥

पत्न्यादादर्शनम्। नानूक्तिर्येषान्ते ऽननूक्तयः ॥ ३१ ॥

यावदुक्तम् ॥ ३२ ॥

कर्मप्रत्यक्षविधानाद्धर्माणाम्। अतोऽपूर्वः प्रवर्ग्यः। यथा पिण्ड-
पितृयज्ञ. सत्यपि द्रव्यसामान्ये तद्वदयमपि ॥ ३२ ॥

परिघर्म्यमौदुम्बरम् ॥ ३३ ॥

भवति ॥ ३३ ॥

मौञ्जं त्रिवृद्रज्जव्यम् ॥ ३४ ॥

रज्जुजातं मौञ्जं त्रिवृद्भवति ॥ ३४ ॥

वाल्वजं विवानमासन्द्यौदुम्बर्यरत्निकन्धमाञ्च्याः ॥३५॥

परिधयमौदुम्बरमित्युक्तेपि पुनरुच्यते अरत्निमात्राङ्गोप-लक्षणार्थम् । तथा शाखान्तरात् । इदा ह्यौदुम्बरी ज्योतिष्टोमे ऽर-त्निमात्राङ्गी ॥ ३५ ॥

पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य्य पात्रासादनं द्वन्द्वम् ॥ ३६ ॥

गार्हपत्यस्य पुरस्तात्प्रागग्रेषु कुशेषु द्वन्द्वं पात्राण्यासा-दयति ॥ ३६ ॥

तान्याह—

उपयमनीं महावीरं परीशासौ पिन्वने रौहि-णकपालौ रौहिणहवन्यौ च स्रुचावनुत्कीर्णे स्थूणामयूखं धृष्टी शतमाने मुञ्जप्रलवान्त्रि-ꣳशति प्रादेशमात्रान् स्रुवं मुञ्जवेदं धवि-त्राणि परिधींश्च रज्जुसन्दानमासन्दीं कृष्णा-जिनमभ्रिꣳ सिकताः खरार्था अर्थवच्च ॥ ३७ ॥

अर्थवच्च यत्तदासादयति । पृथक्पाठकरणं कार्यक्रमो यथा स्या-दिति । इतरेषां तु पाठक्रम एव ॥ ३७ ॥

प्रोक्षणीः संस्कृत्योद्यम्योत्थायाह ब्रह्मन्प्रच-चरिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि गायेति ॥ ३८ ॥

प्रोक्षणी संस्कारो यथा दृष्ट. प्रदेशान्तरे ॥ ३८ ॥

ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति ॥३९॥

ब्रह्मानुज्ञातग्रहणं प्रागनुज्ञाया: सर्वप्रैषोच्चारणप्रज्ञप्त्यर्थम् ॥३९॥

प्रतिमन्त्रं वा वाक्यभेदात् ॥ ४० ॥

प्रतिमन्त्रमेव वा प्रोक्षणम् । कुत एतत् । वाक्यभेदात् । भिन्नानि हि वाक्यानि यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपस इति । न च समुच्चयो न्याय्यः न च विकल्पो दृष्टार्थत्वात्तस्मात्प्रतिवाक्यमेव प्रोक्षणम् ॥ ४० ॥

परिघर्म्यं च तूष्णीम् ॥ ४१ ॥

परिघर्म्यं च यदासादितं तच्च तूष्णीं प्रोक्षति ॥ ४१ ॥

पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनति होतुः सन्दर्शने ॥ ४२ ॥

स्थूणामयूखं पूर्वया द्वारा निर्हृत्य दक्षिणतो निखनति सन्दर्शने होतुः ॥ ४२ ॥

गार्हपत्याहवनीया उत्तरेण खरौ निवपति दक्षिणतोऽनुभिरयुच्छिष्टखरम् ॥ ४३ ॥

परे उद्धतावोक्षिते सिकतो पर्कीर्णे । संस्कारनिमित्तो हि खरशब्दः ॥ ४३ ॥

पूर्वेणाहवनीयं सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः कृष्णाजिनमस्यामास्तृणाति तस्मिन्नभ्युपशये निदधाति महावीरौ चावच्छादयेद्वा ॥४४॥

इति विकल्पः ॥ ४४ ॥

अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसम्पत्तेः ॥ ४५ ॥

अन्यो वा स्थूणामयूखनिर्हरणादि करोति । कुत एतत् । अध्वर्योः कालसम्पत्तिर्हि भवति । स यत्रैतां होतान्वाहाञ्जन्ति य प्रयन्तो न विप्रा इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्तीति । यदि हि परिघर्म्ययोजनमध्वर्युः कुर्यात् कालो न सम्भाव्येत । तस्मादूबहिरङ्गत्वात्प्रतिप्रस्थाता परिघर्म्ययोजनं करोति ॥ ४५ ॥

अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यꣳ संस्कृत्य ॥ ४६ ॥

संस्कारश्च पूर्णाहुतिकः ॥ ४६ ॥

रजतशतमानं खर उपगूहति पृथिव्याः सꣳस्पृश इति ॥ ४७ ॥

अनेन मन्त्रेण । शतमानं च रक्तिकाशतेन ॥ ४७॥

शुक्रं गायेति प्रेष्यति ॥ ४८ ॥

पत्नीरशिरः प्रोर्णुते॥ ४९ ॥

स्वयमेव प्रथमान्तनिर्देशात् ॥ ४९ ॥

साꣳसीदस्वेत्युच्यमाने मुञ्जप्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति ॥ ५० ॥

साꣳसीदस्वेति यदा होता पठति तदा मुञ्जप्रलवान् खरे करोति ॥ ५० ॥

तेषु महावीरमाज्यवन्तमर्चिरसीति ॥५१ ॥

तेष्विति मुञ्जप्रलवेषु ॥ ५१ ॥

अनाधृष्टेति वाचयति प्रादेशमध्यधिधा-

रयन्तम् ॥ ५२ ॥

वाचनं च शाखान्तरात् ॥ ५२ ॥

प्रतिदिशमेके ॥ ५३ ॥

मन्त्रलिङ्गात् । अनाधृष्टा पुरस्तात्पुत्रवती दक्षिणत इत्येवमादि । यद्येव तदा वचने सति लिङ्गाद्विभागो नावगम्यते । अथ तु वचनमिदं तदा विकल्प इति ॥५३ ॥

विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं

निदधाति ॥ ५४ ॥

तथाधिकाराद्यजमान एव । अथास्यामाशिष आशास्त इति प्रकृत्य शेषमुच्यते अथ दक्षिण उत्तानेन पाणिना निह्नुत इति ॥५४॥

मनोरश्वेति प्रादेशमुत्तरतः ॥ ५५ ॥

निदधातीति वर्तते ॥ ५५ ॥

धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्क-

तशकलैः परिश्रयति त्रयोदशभिः प्रागुद-

ग्भिः स्वाहा मरुद्भिरिति ॥ ५६ ॥

धृष्टिभ्यामुपवेषाभ्यां महावीरं भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरित्येतेन मन्त्रेण । द्वौ प्राञ्चावुपदधाति शेषांस्तूष्णीम् ॥ ५६ ॥

अधिकं दक्षिणतो द्वौ मन्त्रेण सुवर्णशतमा-

नेनापिदधाति दिवः स्पृश इति ॥ ५७ ॥

महावीरम् ॥ ५७ ॥

चन्द्रङ्गायेति च प्रेष्यति ॥ ५८ ॥

चशब्दादपिदधाति ॥ ५८ ॥

कृष्णाजिनावकृत्तैर्द्वैविन्नैरुपवाजयति त्रिभि-
र्दण्डवद्भिर्मधुमध्वितिति ॥ ५९ ॥

अनेन मन्त्रेण ॥ ५९ ॥

एकं प्रयच्छति प्रतिप्रस्थात्रेऽपरमग्नीधे धून्व-
न्तस्त्रिः परिक्रामन्ति पितृवद्देववच्च ॥ ६० ॥

पितृवत् अपसव्यम् । देववच्च धून्वन्त प्रदक्षिणम् ॥ ६० ॥

रुचिते वोत्तरम् ॥ ६१ ॥

उत्तर परिक्रमण रुचिते वा घर्मे भवति विकल्प ॥ ६१ ॥

अर्चिषि प्राप्ते सुवर्णशतमानं निधायाज्येन
महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ॥ ६२ ॥

अर्चिषि प्राप्ते महावीरं सुवर्णशतमानमपनीय महावीरमाज्येन स्रुवेण परिषिञ्चति प्रणवे प्रणवे होतु ॥ ६२ ॥

रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम् ॥ ६३ ॥

रौहिणौ पुरोडाशावधिश्रयति । तूष्णीमिति लौकिकवागुच्चारणप्रतिषेध । ग्रामपिष्टानामिति च न पेषणक्रिया ॥ ६३ ॥

आज्यधर्मा स्थानापत्तेः ॥ ६४ ॥

रौहिणयोर्ये नाम मासिपातिका धर्मास्ते आज्यसम्बन्धिनो भवन्ति । कुत एतत् । स्थानापत्तेः । आज्यभागस्थानापन्नौ हि ताविति । यदाज्यभागावन्यत्र जुहुयात् तस्मादत्र न जुहोतीति प्रकृत्य चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ । तेषां चक्षुषा चक्षुरवरोधयतीति स्थानापत्तिरेतावता आज्यधर्मा स्थानापत्तेरिति ॥ ६४ ॥

औषधधर्मा वा संस्कारशब्दात् ॥ ६५ ॥

वाशब्दः पक्षान्तरपरिग्रहे । औषधधर्मा वा भवन्ति नाज्यधर्माः । कुत एतत् । संस्कारशब्दात् । संस्कारो ह्ययं कपालयोः श्रपणम् । तेन पुरोडाशायेतावितिति पौरोडाशिका धर्माः । यत्तु स्थानापत्तिरुक्ता सोऽर्थवादः ॥ ६५ ॥

इडे द्यावापृथिवी इत्युच्यमाने परिधीन्परिधाय रौहिणौ उद्वास्य स्रुचोरासादयत्याहवनीयाद्दक्षिणोंचरौ ॥ ६६ ॥

अप्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याहोपोत्तिष्ठन्घर्मस्य तन्वौ गायेति प्रेष्यति ॥६७॥

अत्र च छान्दोग्ये कालश्रवणम् । अभीन्धने तु घर्मस्य तन्वौ गायेदिति । तथा च प्रागभीन्धनात्प्रैषदानम् ॥ ६७ ॥

परिक्रम्योपोत्तिष्ठन्ते ऽकृतं चेद्रभौं देवानामिति॥६८॥

बहुवचनोपदेशाच सर्वेषामुपस्थानम् । तथा च पशुपतिष्ठन्त इति श्रुतिः ॥ ६८ ॥

अपोर्णोति पत्नीशिरः ॥ ६९ ॥

समासश्चाय न वाक्यं । तथा च श्रुति. अथ पत्न्यै शिरोपवृत्य महावीरमीक्षमाणां वाचयति ॥ ६९ ॥

त्वष्टृमन्त इत्येनां वाचयति महावीरमीक्षमाणाम् ॥ ७० ॥

अहः केतुनेति दक्षिण; रौहिणं जुहोति मन्त्रक्रमेणोत्तर; रात्रिरिति सायम् ॥ ७१ ॥

विशेषः ॥ ७१ ॥

देवस्य त्वेति रज्जुसन्दानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् ॥ ७२ ॥

देवस्य त्वेत्यनेन मन्त्रेण रज्जुसन्दानमादाय घर्मधुग्बन्धनार्थाय पाशवती रज्जुः तस्या एव पश्चात्पादनियोजनार्थं सन्दानं तदादाय जघनेन गार्हपत्यं गच्छति । इड एहीति गामाह्वयति नाम्ना त्रिरुच्चैराह्वानम् ॥ ७२ ॥

धेनुं गायेति प्रेष्यति ॥ ७३ ॥

प्रस्तोतारम् ॥ ७३ ॥

अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बध्वा पूषासीति वत्समुत्सृजति ॥ ७४ ॥

तदीयमेव ॥ ७४ ॥

सन्दाय घर्माय दीष्वेति वत्समुन्नयति ॥७५॥

सन्दाय पश्चात्पादयोर्नियुज्य घर्माय दीष्वेत्यनेन मन्त्रेण वत्समुन्नयति ॥ ७५ ॥

अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि ॥ ७६ ॥

एतानाम ॥ ७६ ॥

स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते ॥ ७७ ॥

ये पिन्वने पतिताः स्तास्तु ॥ ७७ ॥

यस्ते स्तन इति स्तनमालभते ॥ ७८ ॥

क्रमपाठे स्तनानालभत इति । तथा च सर्वेषामालम्भो युगपच्चक्ष्यत्वघात ॥ ७८ ॥

एवं प्रतिप्रस्थाताजां मयूखे तूष्णीम् ॥ ७९ ॥

दोग्धि ॥ ७९ ॥

पयो गायेति प्रेष्यति ॥ ८० ॥

प्रस्तोतारम् ॥ ८० ॥

उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमाने उपोत्तिष्ठति ॥ ८१ ॥

उत्तिष्ठ ब्रह्मणस्पत इत्यस्मिन्मन्त्रवाक्ये होत्रोच्यमाने उत्तिष्ठत्यध्वर्युः ॥ ८१ ॥

उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति ॥ ८२ ॥

होत्रोपद्रव पयसेत्युच्यमाने विमित प्रति गच्छत्युर्वन्तरिक्षमिति ॥ ८२ ॥

परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम् ॥ ८३ ॥

ऋजु ॥ ८३ ॥

वसिष्ठशफौ गायेति प्रेष्यति ॥ ८४ ॥

प्रस्तोतारम् ॥ ८४ ॥

ताभ्यां महावीरं प्रतिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति ॥ ८५ ॥

ताभ्यामिति परीशासावुच्येते ॥ ८५ ॥

उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति ॥ ८६ ॥

उद्यम्योत्क्षिप्य परीशासाभ्यां महावीरम् मुञ्जवेदेनोपमृज्य उपयमन्या स्रुचोपगृह्णात्यन्तरिक्षेणोपयच्छामीति ॥ ८६ ॥

अजापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति ॥ ८७ ॥

अजापयसावसिच्य महावीरं शान्ते गो पयोऽवनयति इन्द्राश्विनेत्यनेन मन्त्रेण ॥ ८७ ॥

प्रैतु ब्रह्मणस्पतिरिष्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् ॥ ८८ ॥

होता प्रैतु ब्रह्मणस्पतिरित्यस्मिन्मन्त्रवाक्ये उच्यमाने समुद्राय त्वेति जपति गच्छन्नाहवनीयम् ॥ ८८ ॥

स्वाहा घर्मायेत्युपयमन्यासिञ्चति घर्मे ॥ ८९ ॥

यदुपयमन्यां पतितं पयो घृतं वा घर्मे तदासिञ्चति ॥ ८९ ॥

स्वाहा घर्मः पित्र इति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति ॥ ९० ॥

प्रेष्यति ॥ ९० ॥

वषट्कृते जुहोति विश्वा आशा इति ॥ ९१ ॥

दिविधा इति निरुत्कम्पयति ॥ ९२ ॥

महावीरम् ॥ ९२ ॥

स्वाहाग्नय इत्यनुवषट्कृते ॥ ९३ ॥

जुहोति ॥ ९३ ॥

अश्विना घर्ममिति ब्रह्मानुमन्त्रयते ॥ ९४ ॥

हुतं द्रव्यम् ॥ ९४ ॥

अपातामिति यजमानः ॥ ९५ ॥

तदेवानुमन्त्रयते ॥ ९५ ॥

इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते ॥ ९६ ॥

तदेव द्रव्यम् ॥ ९६ ॥

घर्मासीत्युरुक्रामत्युत्तरपूर्वार्धम् ॥ ९७ ॥

धर्मासीत्यनेन मन्त्रेण उत्तरपूर्वार्धमुत्क्रामति ॥ ९७ ॥

अमेन्यस्मे इति खरे करोति ॥ ९८ ॥

महावीरम् ॥ ९८ ॥

विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ॥ ९९ ॥

विकङ्कतशकलैर्घर्मद्रव्ये न्यक्त्वा न्यक्त्वा तदेव जुहोति स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ॥ ९९ ॥

हुत्वा हुत्वा प्रथमपरिधा उपश्रयति ॥१००॥

विकङ्कतशकलान् ॥ १०० ॥

चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति ॥ १०१ ॥

शकलम् ॥ १०१ ॥

सप्तमं च सर्वेलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति ॥ १०२ ॥

सर्वलेपाक्तमिति सर्वमभ्युक्तम् । चशब्दादहुतम् ॥ १०२ ॥

तं स उत्तरतः शालाया उदञ्चं निरस्यति ॥१०३॥

तमेव शकलम् ॥ १०३ ॥

स्वाहा सं ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम्॥१०४॥

घर्म्यशब्देन द्रव्यमुच्यते ॥ १०४ ॥

रौहिणं जुहोति ॥ १०५ ॥

द्वितीयम् ॥ १०५ ॥

उपश्रितानि च प्रहरति ॥ १०६ ॥

उपश्रितानि यानि शकलानि तानि प्रहरति । चशब्दादनन्तरमेव ॥ १०६ ॥

अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति ॥ १०७ ॥

घर्मर्त्विजो बहुवचनोपदेशात् । आवृच्छब्देन च होममात्रापदेशो-च्यते । द्रव्यप्रधानत्वादुपदेशस्य । तत्रापि केचिदेकामेवाहुतिमिच्छन्ति । आहुतिद्वयमित्यपरे । वाजिनवदिति च समुपहवार्थं भक्षणम् ॥१०७॥

उच्छिष्टखरे प्रक्षाल्योपयमनीं निदधाति अत्र वोपश्रितप्रहरणꣳ सꣳसाधमानायानुवाचयति ॥ १०८ ॥

सꣳसाधमानायानुब्रूहीत्येवम् ॥ १०८ ॥

सꣳसाधमानेभ्य इत्येके ॥ १०९ ॥

अनुवाचनं कारयन्ति । स चायं विकल्पः । शास्त्रस्य तुल्यत्वात् ॥ १०९ ॥

सूयवसाद्भगवतीत्युच्यमाने यत्रसोदके धेनवे प्रयच्छन्त्येके ॥ ११० ॥

पक्षे न प्रयच्छन्ति ॥ ११० ॥

सर्वमासन्द्यां करोति ॥ १११ ॥

पात्रजातम् अनावाय ॥ १११ ॥

अर्मीममिति महावीरम् ॥ ११२ ॥

आसन्द्यां करोति ॥ ११२ ॥

सकृदासादनप्रोक्षणे खरस्थूणामयूखकृष्णाजिनाभ्युपशयासन्दीनाम् ॥ ११३ ॥

आरादुपकारकत्वात् ॥ ११३ ॥

आवृत्तिर्वा प्रधानकालत्वात् ॥ ११४ ॥

अथवा आवृत्तिर्भवति न सकृदासादनादि । कुत एतत् । प्रधानकालीनमासादनं प्रोक्षणं च । प्रधानावृत्त्या च तदावृत्तिर्भविष्यति ॥ ११४ ॥

उपसदन्ते प्रवर्ग्योत्सादनम् ॥ ११५ ॥

कर्तव्यमिति सूत्रशेषः ॥ ११५ ॥

अन्तःपात्ये परिघर्म्यं निधाय दक्षिणेन निहृत्योच्छिष्टखरम् ॥ ११६ ॥

निदधाति ॥ ११६ ॥

आहवनीये त्रीञ्छालाकान् प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम् ॥ ११७ ॥

अध्वर्युः । यत्तु धारयमाणो जुहोतीति । तद्धार्यमाणे द्रष्टव्यम् ॥ ११७ ॥

प्रास्य तृतीयमुपविश्य ॥ ११८ ॥

जुहोति ॥ ११८ ॥

क्षत्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय ॥ ११९ ॥

क्षत्रस्य त्वेत्यनेन मन्त्रेण निष्क्रमणम् पत्नीमग्रतः कृत्वा ॥ ११९ ॥

सामप्रेष्यत्यवभृथवद्देशात् ॥ १२० ॥

प्रतिपत्तव्याः ॥ १२० ॥

निधनं च ॥ १२१ ॥

अवभृथवदेव ॥ १२१ ॥

उत्सादनदेशं गच्छन्त्यनग्ना उत्तरवेदिम् ॥ १२२ ॥

अग्नौ सूक्तमेव ॥ १२२ ॥

त्रिः परिषिच्याचिक्रददिति ॥ १२३ ॥

तामेवोत्तरवेदिम् ॥ १२३ ॥

मन्त्रक्रमेण वा ॥ १२४ ॥

परिषेचनम् भवति । वाशब्दो विकल्पार्थः ॥ १२४ ॥

नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःसू-
क्तिरिति ॥ १२५ ॥

अनेन मन्त्रेण ॥ १२५ ॥

प्राञ्चावितरौ ॥ १२६ ॥

मन्त्रावृत्त्या महावीरौ ॥ १२६ ॥

उपशयां च तूष्णीम् ॥ १२७ ॥

चशब्दान्निदधाति ॥ १२७ ॥

परीशासावभितः ॥ १२८ ॥

स्थापयति ॥ १२८ ॥

रौहिणहवन्यौ चावकृष्टे वाह्ये ॥ १२९ ॥

चशब्दान्निदधाति ॥ १२९ ॥

अग्निमुत्तरत आसन्दी दक्षिणतः कृष्णाजि-

नमुत्तरतः सर्वतो धवित्राणि परिधींश्च र-
ज्जुसन्दानं वेदमुपयमन्यामाधाय पश्चात् ॥१३०॥

प्राचीं निदधाति ॥ १३० ॥

पश्चात्पिन्वने चाभितो दण्डम् ॥ १३१ ॥

दण्डमभितः पश्चाद्भागे पिन्वने निदधाति ॥ १३१ ॥

स्थूणामयूखम् ॥ १३२ ॥

पश्चात् । ऊरु संस्तवात् ॥ १३२ ॥

पश्चाद्रौहिणकपाले ॥ १३३ ॥

जानुसंस्तवात् ॥ १३३ ॥

तयोरेव—

धृष्टी च ॥ १३४ ॥

चशब्दात्तयोरेव पश्चात् पादसंस्तुतेः ॥ १३४ ॥

मध्येऽन्यत् ॥ १३५ ॥

घर्मोपयुक्तम् ॥ १३५ ॥

खरा उत्तरतो दक्षिणतो मार्जालीयदेशं ब-
हिर्वेद्युच्छिष्टखरम् ॥ १३६ ॥

निदधातीत्यनुवर्तते ॥ १३६ ॥

आसेचनवन्ति पयसः पूरयति घर्मतत्त्व इति ॥१३७॥

अनेन मन्त्रेण आसेचनवन्ति भवन्ति ॥ १३७ ॥

दोपव्रतमिश्रं दीक्षिताय प्रयच्छति ॥ १३८ ॥

पयः ॥ १३८ ॥

प्रत्तं चेत्केवलम् ॥ १३९ ॥

प्रत्तं चेद्भवनं केवलमेव प्रयच्छति ॥ १३९ ॥

अत्र वा परिषेचनम् ॥ १४० ॥

उत्तरवेदेः कार्यम् ॥ १४० ॥

वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति ॥१४१

चात्वाले मार्जयन्ते सपत्नीका सुमित्रिया न इति, उद्वयमित्युक्त्वामत्युत्तरपूर्वार्धमनपेक्षमेत्यै-धोऽसीति, समिधमादायाहवनीयेऽभ्यादधाति-समिदसीति, पत्नी च गार्हपत्ये तूष्णीम्, प्रच्छ-न्नीयौ शतमानौ ब्रह्मणे ददाति ॥ १४२ ॥

घर्मदुघामध्वर्यवे यजमानव्रतदुघां होत्रे प-त्नया उद्गात्रेऽग्नीधेऽजाम् ॥ १४३ ॥

ददातीति सर्वत्रानुवर्तते ॥ १४३ ॥

घर्मभेदे यथोक्तम् ॥ १४४ ॥

किं तदुक्तम् । पुनरिति च घर्म्यमिति । एतच्चाभिधीयते विशे-षणार्थम् तथाह ॥ १४४ ॥

उखावचान्यं कुर्यात् ॥ १४५ ॥

उखावचेति मन्त्ररहिताक्रिया । तत्रापि हि श्रूयते । आवृता करोत्यावृता पचसीति । पुनः करणे प्राप्ते च अन्यत्पुनराष्ट्रद्वयं म-न्त्रनिवृत्त्यर्थम् । अयं घोरसादनाय क्रियते ॥ १४५ ॥

अभिक्षेन चरेत् ॥ १४६ ॥

तथा च श्रुतिः । अथ य उपशयपोर्दंढः स्यात्तेन प्रच-रेदिति ॥ १४६ ॥

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहु-
तिमाधायुत्तमां च मनसः काममाकूतिमिति ॥ १४७॥

चशब्दात्पूर्णाहुतिमेव मध्ये सकृद्गृह्णीयादिति ॥ १४७ ॥

प्रजापतिः संभ्रियमाण इति च यथाकालम् ॥ १४८ ॥

होमः कर्त्तव्यः यस्मिन्काले विनाशः ॥ १४८ ॥

सविता प्रथमेऽहन्निति च प्रत्यहम् ॥ १४९ ॥

विनाशे होमः कर्त्तव्यः ॥ १४९ ॥

अवकाश्यस्य प्रवृञ्ज्यात् ॥ १५० ॥

ज्ञातप्रियानूचानानवकाशयेदिति सूचितम् । तुल्यं हि ब्राह्मणमुभयत्र ॥ १५० ॥

न प्रथमयज्ञे ॥ १५१ ॥

अवकाश्यस्यापि प्रथमप्रयोगे न प्रवृञ्ज्यात् । तथा च श्रुतिः । तत्र प्रथमयज्ञे प्रवृञ्ज्यादिति ॥ १५१ ॥

यावती द्यावापृथिवी इति दधिघर्मग्रहणं म-
यि त्यदिति भक्षणम् ॥ १५२ ॥

तद्वृत्तुनरेपस्य । अथ प्रयुते दधिघर्मेण चरन्तीति । तत्रैतदुक्तम् ॥ १५२ ॥

त्विषः संवृगिति महाव्रतीये ॥ १५३ ॥

त्विषः संवृगित्येव भक्षणम् ॥ १५३ ॥

चात्वाले मार्जनम् ॥ १५४ ॥

कर्त्तव्यमिति सूत्रशेषः । तत्र पाणिनैव कर्त्तव्यम् । द्रव्यान्तरानुपदेशात् ॥ १५४ ॥

शान्तिकरणमाद्यन्तयोः ॥ १५५ ॥

कर्त्तव्यमिति शेषः । स्मरन्ति हि । आदावन्ते च कर्मणः शान्तिकरणम् । तत्प्रवर्ग्याऽपराङ्गभूते कथमिव भवति ॥ १५५ ॥

तदुच्यते—

स्वाध्यायदर्शनात् ॥ १५६ ॥

अत्र भवति । इदं हि शान्तिकरणम् । ऋचं वाचं प्रपद्य इत्येवमादि तस्मादत्र भवति । एतच्च द्वारापिधानोत्तरकालात्पूर्वम् । पूर्वमासन्द्यां करोतीत्यतः प्रागन्त्यात्समाप्ते हि प्रवर्ग्ये पुनः क्रियते । तत्र क्रियमाणमुत्तरार्थं भवति । स्वाध्यायदर्शनादिति ॥ १५६ ॥

इति कात्यायनसूत्रभाष्ये उपाध्यायकर्कक्रृतौ षड्विंशतिमोऽध्यायः समाप्तः ।

श्रीगणेशाय नमः ।

# सभाष्यं कात्यायनसुल्बसूत्रम् ।

स जयत्युदयेनैषां चतसृष्वपि दिक्षु निवसतां नृणाम् ।
मेरोः प्रतिदिनमन्यामाशां विदधाति यः प्राचीम् ॥

रज्जुसमासं वक्ष्यामः ॥ १ ॥

किमर्थमिदमुच्यते । यदाचार्येण प्राग्वंशसदो हविर्धानाग्निमानादीनि परामर्शमात्रेणैवोक्तानि तेषां तत्त्वनिर्णयार्थमिदमुच्यते । ननु चाचार्येणैव नेत्स्पष्टमभिहितं यदि पुरस्कृत्य व्याममात्रीं पश्चात्त्यरत्निं प्राचीमिति । तथा महावेद्यां षट्त्रिंशत्प्रक्रमां प्राचीं त्रिंशतं पश्चाच्चतुर्विंशतं पुरस्तादिति । सदसोप्यायामतिर्यङ्माने अभिहिते आग्नावप्युत्तरेषु पुरुषोच्चयनैकशतविधादिति । तत्रोच्यते । सत्यमेतदुक्तम् । किं तु रज्जुसमासमन्तरेण दिग्विभागज्ञानमेतदिति न संभावितुं शक्यते । सत्स्वप्येतेषु प्रमाणेषु पुरुषापराधात्प्राचीतो वेदिः प्रच्यवते । न च सेप्यते रज्जुसमासमन्तरेण । रज्जुसमासेन तु दिशः प्रच्युताः सर्वत्र समा भवन्तीति । आग्नावपि रज्जुसमासमन्तरेण पुरुषोच्चयेन कथं वृद्धिः क्रियत इत्यत्रैवैतदुच्यते । अतश्चाचार्येण सूत्रशेषमेवैतदुच्यते रज्जुसमासं वक्ष्याम इति । प्रतिज्ञासूत्रमेतत् । रज्ज्या यत्समस्यते साद्ध्यते स रज्जुसमासः । समासग्रहणं च व्यासोपलक्षणार्थमपि । यथात्र समास उच्यते समचतुरस्राणां उक्तः समासः यथा मानाप्रमाणसमास इति । एवं व्यासोऽपि चतुरस्राच्चतुरस्रं निर्जिहीर्षेदिति । समचतुरस्रं दीर्घचतुरस्रमिति च । अतः समासग्रहणेन व्यासोऽपि लक्ष्यते । इह प्राग्मागेनमुद्धरतीति श्रूयते। तथा प्राग्वंशमितरयेयमादि दिगायत्तम् । अतो हि दिग्निरूपणायेदमाह ॥ १ ॥

समे शङ्कुं निखाय शङ्कुसम्मितया रज्ज्वा म-

ण्डलं परिलिख्य यत्र लेखयोः शङ्क्वग्रच्छाया निपतति तत्र शङ्कुं निहन्ति सा प्राची ॥ २ ॥

समग्रहणं निम्नोन्नतताऽग्रहणार्थम् । विषमे हि छायावैषम्यं तत्र दिगस्पष्टा भवति । तत्र शङ्कुं निखाय तत्संमितया रज्ज्वा मण्डलं परिलिखेत् । तत्र पूर्वापरयोर्लेखयोः शङ्क्वग्रच्छायानिपाते इतरौ शङ्कू निखनेत् सा दिक् प्राची । दण्डसमासार्धलक्षणम् । इतरा प्रतीची इति । आदित्योदयो हि प्राच्युपलक्षणम् । न च तामन्तरेणोदयः शक्यते साधयितुमतस्तच्छायोपन्यस्ता दिग्ग्रहणार्थम् । ननु चादित्यश्चित्रास्वात्यन्तराले ऽन्यत्र चान्यत्रोदेति । तत्रानेकाहः साध्ये कर्मणि प्राची न लभ्यते । दक्षिणायने तु चित्रां यावदादित्य उपसर्पति उदगयने स्वातीमिति । विषुवतीये त्वहनि चित्रास्वात्योर्मध्य एवोदयः । अतस्तन्मध्ये शङ्कुगतैव च्छाया भवति । एवं च सति अहरन्तरेषु सैव प्राची न भवतीत्यत्रोच्यते । तं प्राञ्चमुद्धरतीत्यनेन प्राच्युद्धरणे कृते ऽनेकाहः साध्येपि कर्मणि तदेवोद्धरणमित्यहरन्तरे दोषो न भवति । अपि चाभियुक्तोपदेशश्चित्रास्वात्योरन्तरालं प्राचीति न तदन्तरालमादित्यो जहाति । तस्मादेवोद्धरणकाले प्राची सैव सर्वदेति ॥ २ ॥

इदानीमुदीच्यादिदिशो ग्रहणायेदमाह—

तदन्तरं रज्ज्वाभ्यस्य पाशौ कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य दक्षिणायम्य मध्ये शङ्कुरेवमुत्तरतः सोदीची ॥ ३ ॥

तयो शङ्क्वोः प्राच्यमपरयोरन्तरालं रज्ज्वाभ्यस्य । अन्तरालाभ्यासो न सम्भवतीति रज्जुरभ्यस्यते द्विगुणी क्रियत इत्यर्थः । ततः शङ्क्वोः पाशौ प्रतिमुच्यते प्रथमायामर्धादण्डरज्जुर्द्विगुणी क्रियते । द्विगुणीकृतायाश्चान्तयोः पाशौ कर्तव्यौ या रज्जुस्तस्या अन्ते पाशः समामार्धन लक्षणेन दक्षिणायम्याकृष्य मध्यमे शङ्कुं निहनेत्सा दक्षिणा एवमुत्तरतः सोदीची दिगिति ॥ ३ ॥

रज्ज्वन्तयोः पाशौ करोति ॥ ४ ॥

रज्ज्वन्तयोः पाशौ करोति । न ह्यन्यथा मानं सम्भवति ॥ ४ ॥

श्रोण्यंसनिरञ्छनसंख्यासमासभङ्गेषु लक्षणानि ॥ ५ ॥

श्रोण्यंसशब्देन तत्परिच्छेदिका रज्जुरभिधीयते। निरञ्छनमभ्यासचतुर्थं गृह्यते । वक्ष्यते हि चोपरिष्टादभ्यासचतुर्थे लक्षणं करोतीति । संख्यासमासभङ्गौ दण्डरज्ज्वाभ्यासरज्जुसंख्ययोः समासभङ्ग इत्यर्थः । तत्रापि च लक्षणम् ॥ ५ ॥

प्राच्यन्तयोः शङ्कू निहन्ति ॥ ६ ॥

न ह्यन्यथा मितिर्भवति ॥ ६ ॥

श्रोण्यंसयोश्च ॥ ७ ॥

मानोत्तरकालमिष्टक्षेत्रपरिच्छेदाय ॥ ७ ॥

शङ्कोः पाशौ प्रतिमुच्य निरञ्छनेन गृहीत्वा दक्षिणपूर्वां दिशं हरन्ति ॥ ८ ॥

पूर्वापरान्तशङ्कोः पाशौ प्रतिमुच्य निरञ्छनेन गृहीत्वा दक्षिणपूर्वां दिशं हरन्ति । तत्रांसलक्षणे शङ्कुः ॥ ८ ॥

एवमुत्तरतः ॥ ९ ॥

अनेनैव प्रकारेण निरञ्छनेन गृहीत्वोत्तरपूर्वां दिशं हरति । तत्राप्यंसलक्षणशङ्कुरेव स्यात् । एवं दण्डरज्ज्वा अंसपाशाच्छ्रोणिमानार्थं लक्षणम् । पुरस्तात्तिर्यङ्मानमंसशब्देनोक्तम् । पश्चात्तिर्यङ्मानं श्रोणिशब्देनोच्यते ॥ ९ ॥

विपर्यस्येतरतः ॥ १० ॥

इतरशब्देन पश्चाद्भाग उच्यते । तत्रापि निरञ्छनेन पश्चाद्दक्षिणापरां दिशं हरेत् । पुनरेवमुत्तरतः श्रोणिलक्षणयोः शङ्कू निखनेत् ॥ १० ॥

स समाधिः सर्वत्र ॥ ११ ॥

सर्वक्षेत्रेष्वयं प्रकारः ॥ ११ ॥

प्रमाणमभ्यस्याभ्यासचतुर्थे लक्षणं करोति

तन्निरञ्छनम् ॥ १२ ॥

रज्जुप्रमाणमभ्यस्य । अभ्यासो हि द्विगुणीकरणम् । तत्रैव दण्डरज्जुरभ्यासरज्जुः । तत्राभ्यासचतुर्थे लक्षणं क्रियते । संख्यासमासभङ्गाच्चतुर्थे लक्षणं गृह्यते नाभ्यासरज्ज्वन्ते । श्रोण्यंसपरिच्छेदो हि ततो भवतीति । तस्य चतुर्थलक्षणस्य निरञ्छनसंज्ञा संव्यवहारार्था ॥ १२ ॥

अक्ष्णया तिर्यङ्मानी शेषः ॥ १३ ॥

निरञ्छनेन गृहीत्वा या आकृष्यते साऽक्ष्णया रज्जुरुच्यते। एवं युक्तं प्रदेशान्तरे । करणी तत्करणी तिर्यङ्मानी पार्श्वमान्यक्ष्णयेति रज्जवः।सा चाक्ष्णया रज्जुस्तिर्यङ्मान्याः शेषो भवति । तिर्यङ्मानी च श्रोण्यंसपरिच्छेदिका । सा हि पूर्वापरायामापेक्षया तिर्यग्भवति । अक्ष्णया रज्जुश्च तच्छेषः । न हि तया विनातिर्यङ्मानी भवति । अपरा व्याख्या । प्रागायामश्रोण्यंसमानव्यतिरिक्ताया रज्ज्वाः शेषव्यपदेशः परिच्छेदस्तस्या विनियोग उच्यते अक्ष्णया भवति तिर्यङ्मानी भवति । न हि तामन्तरेण श्रोण्यंसपरिच्छेदो भवति ॥ १३ ॥

प्रमाणार्धे वाभ्यासषष्ठे लक्षणं करोति

तन्निरञ्छनम् ॥ १४ ॥

अयमपरो विशेषः । महावेदेरेव मानप्रकारः . प्रमाणार्धमभ्यस्येति । अष्टादशप्रक्रमोऽभ्यासः । तत्र मूलात्षष्ठे भागे लक्षणं क्रियते तन्निरञ्छनं भवति । अर्धांसपरिच्छेद एतदेव । तदर्धं तु श्रोणेस्तिर्यक्परिच्छेदकनिरञ्छनार्थं निरञ्छनं भवति । श्रोणिपरिच्छेदकं च तद्भवति । पश्चात्तिर्यक् त्रिंशत्प्रक्रमपक्षे चैतद्भवति ॥ १४ ॥

अक्ष्णया तिर्यङ्मानी शेषः ॥ १५ ॥

इत्युक्तार्थः ॥ १५ ॥

प्रमाणार्धे समचतुरस्रस्य शङ्कुः ॥ १६ ॥

ततश्च श्रोण्यंसनिष्पत्तिः ॥ १६ ॥

शास्त्रवदर्धे दीर्घचतुरस्रस्य ॥ १७ ॥

दीर्घचतुरस्रस्य यच्छास्त्रेण तिर्यङ्मानमुक्तं तस्य मध्यमेन शङ्कुः । यथा सदसि नवतिर्यगिति । महावेदेश्चतुर्विंशतिं पुरस्तादित्येतदुक्तम् ॥ १७ ॥

शकटमुखस्य चैवम् ॥ १८ ॥

एवमेव रज्जुः ॥ १८ ॥

एतेन प्राग्वंशवेदिमानानि व्याख्यातानि ॥ १९ ॥

एतेन अनेन प्रकारेण समचतुरस्रे प्रागुक्तं शकटमुखस्य चैवम् ॥ १९ ॥

शालामानं च ॥ २० ॥

व्याख्यातम् ॥ २० ॥

ततोदीची प्राचीवत् ॥ २१ ॥

ततोदगायामत्वादुदीची प्राचीवद्भवति । तदन्वे रज्जुन्यासं कृत्वा मानं कर्तव्यमित्यर्थः ॥ २१ ॥

सदसश्चैवम् ॥ २२ ॥

मानं भवतीति शेषः । सदोऽपि ह्युदगायाममेव ॥ २२ ॥

अपरिमितं प्रमाणाद्भूयः ॥ २३ ॥

यत्रापरिमितशब्दः श्रूयते तत्रोक्तप्रमाणादधिकं गृहीतव्यम् ।

बहुत्वे हि रूढो ऽपरिमितशब्दः । बहुत्वं चापेक्षिकमिति । यद्वा द्वादशादीक्षा अपरिमिता वेति ॥ २३ ॥

प्रमाणे शास्त्रं प्रमाणं निर्ह्रासविवृद्ध्योः ॥ २४ ॥

यत्र च प्रमाणं ह्रासविवृद्ध्योस्तत्र च प्रमाणविवृद्धौ शास्त्रतः प्रमाणवशेन विवृद्धिः । यथा यूपैरत्निभिरिति। ह्रासोऽपि प्रमाणवशेनैव । तदेव हि श्रुतह्रासविवृध्योरिति ॥ २४ ॥

योगश्च ॥ २५ ॥

यथा युज्यते घटते तथा ह्रासवृद्धी कर्तव्ये नातिरिक्तन्यूने॥२५॥

इतरस्य वितृतीये दक्षिणत इत्येतद्वक्ष्यामः ॥२६॥

तदुक्तमाचार्येण इतरस्य वितृतीय इति । दक्षिणाग्निं प्रकृत्य तच्छेषत्वेनेदमुच्यते ॥ २६॥

गार्हपत्याहवनीययोरन्तरालं, षड्ढा सप्तधा वा गन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणायम्य तस्मिन्नग्निः ॥ २७ ॥

गार्हपत्याहवनीययोरन्तरालरज्जुं षड्विभागां सप्तविभागां वा कृत्वा आगन्तुविभागसहिता त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणायम्य तस्मिन्नग्निः कार्य ॥ २७ ॥

विपर्यस्योत्तरत उत्करः ॥ २८ ॥

तत्र येदिप्रमाणं षड्ढा सप्तधा वा गन्तुसमं कृत्वा त्रेधा विभज्य विपर्यस्य च पूर्ववितृतीयलक्षणेनोदगायम्य पूर्ववितृतीये उत्करः । षड्ढा सप्तधा वेत्युपपदर्शनमात्रम् । यथा येद्यन्तः सम्भाव्यते तथा करणीयम् । येद्यन्तं ह्युत्करो भवति । चत्वालेन सहोच्चारणात् । चात्वालोत्करावन्तरेण सञ्चर इति ॥ २८ ॥

अथिवान्तरतिभागोऽनया रज्ज्वा पूर्वार्धे सम-

चतुरस्रं कृत्वा श्रोण्यामग्निः ॥ २९ ॥

अपि चेति पक्षान्तरार्थमुक्तम् । उक्तान्तरविभागेनोनात्तदन्तररज्जुस्तया करण्या पूर्वार्धं पूर्वाग्निं पूर्वावधीकृत्य समचतुरस्रं कार्यम् । तस्य दक्षिणश्रोण्यामग्निः ॥ २९ ॥

विपर्यस्योत्तरतः स उत्करः ॥ ३० ॥

भवतीति वाक्यशेषः । विपर्यासाच्चापरार्धे चतुरस्रं कार्यम् । क्वचिच्छ्रूयते रथमात्र्युत्तरावेदिर्भवतीति ॥ ३० ॥

तदर्थमिदमाह—

अङ्गुलैरथसमितायाः प्रमाणम् ॥ ३१ ॥

रथकल्पशास्त्रे चैतद्दृष्टम् ॥ ३१ ॥

ललाटाशीतिशतमीषा ॥ ३२ ॥

ईषाशब्देन पूर्वापरायामो लक्ष्यते ॥ ३२ ॥

चतुः शतमक्षः ॥ ३३ ॥

अङ्गुलानां चतुः शतमक्षो भवति । अक्षशब्देन पश्चाद्दक्षिणोत्तरायामो लक्ष्यते ॥ ३३ ॥

षडशीतिर्युगम् ॥ ३४ ॥

युक्तिः पुरस्तात् ॥ ३४ ॥

चत्वारोष्टकाः शम्या ॥ ३५ ॥

द्वात्रिंशदङ्गुला शम्या भवतीति यावत् ॥ ३५ ॥

पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्ये शङ्कवः स समाधिः ॥ ३६ ॥

दिक्षु त्रिपुरुषमात्रं स्मिन्निति पितृमेधे श्रूयते तदर्थमिदमुक्तम् ॥ ३६ ॥

करणी तत्करणी तीर्यङ्मानी पार्श्वमान्य-
क्ष्णया चेति रज्जवः ॥ ३७ ॥

रज्जूनामेता संज्ञा । तत्र करणी नाम यया क्षेत्रं परिच्छिद्यते । यया तच्चान्यच्च क्षेत्रं परिच्छिद्यते सा तत्करणी । तिर्यङ्मानी या दीर्घचतुरस्रस्य ह्रस्वा पार्श्वमानी तस्यैव दीर्घा । अक्ष्णया संज्ञा कर्णजरज्जुः कोणा तिर्यक्कोणमुपगता साक्ष्णया संज्ञा ॥ ३७ ॥

एवं तिर्यङ्मानी त्रिपदा पार्श्वमानी तस्याक्ष्ण-
या रज्जुर्दशकरणी ॥ ३८ ॥

तिर्यक्क्षेत्रं तिर्यक्पदप्रमाणम् । पार्श्वतश्च त्रिपदप्रमाणम् । तस्याक्ष्णया रज्जुर्दशकरणी । दशपदोत्तरा वेदिर्भवतीत्येतदुक्तम् ॥३८॥

एवं द्विपदा तिर्यङ्मानी षट्पदा पार्श्वमानी
तस्याक्ष्णया रज्जुश्चत्वारिंशत्करणी ॥ ३९ ॥

चत्वारिंशोत्तरा वेदिर्भवतीत्येतदुक्तम् । शम्याप्रमाणं च दर्शनात् ॥ ३९ ॥

उपदिष्टं युगप्रमाणम् शम्याप्रमाणं
च दर्शनात् ॥ ४० ॥

युगप्रमाणशम्याप्रमाणे उत्तरवेदिप्रमाणदर्शनात् उपदिष्टे एव ॥ ४० ॥

चतुरस्रस्याक्ष्णया रज्जुस्तिर्यङ्मानी पार्श्व-
मानी च यत्पृथग्भूते कुरुतस्तदुभयं करो-
तीति क्षेत्रज्ञानम् ॥ ४१ ॥

प्रमाणद्वयायामदीर्घचतुरस्रं यत्क्षेत्रं तस्याक्ष्णया रज्जुस्तिर्यङ्मानी पार्श्वमानी च यत्पृथक्कुर्वीत तदुभयमपि साद्धयति उभय क्षेत्रद्वय क्षेत्रज्ञान भूप्रदेशपरिच्छेदकम् ॥ ४१ ॥

समचतुरस्रस्याक्ष्णया रज्जुर्द्विकरणी ॥ ४२ ॥

द्वे क्षेत्रे करोतीत्यर्थः ॥ ४२ ॥

करणीं तृतीयेन वर्धयेत्तच्च स्वचतुर्थेनात्म-
चतुस्त्रिंशोनेन स विशेषः ॥ ४३ ॥

तृतीयविभागाधिकां करणीं कुर्यात् । तच्च स्वतृतीयस्वचतुर्थेन सह । तच्चतुर्थं स्वतस्त्रिंशोनेन आत्मचतुस्त्रिंशविभागोनेन वर्धयेदय-मपरो विशेषो द्विकरणी प्रमाणे सा तु द्विकरणी ॥ ४३ ॥

प्रमाणं तिर्यक् द्विकरण्यायामस्तस्याक्ष्णया
रज्जुस्त्रिकरणी ॥ ४४ ॥

द्विकरण्युक्ता त्रिकरणी वक्तव्या सोच्यते । यत्प्रमाणं द्विगुणं कर्तुमिच्छति तदेव प्रमाणं तिर्यग्भवत्यायामस्तु द्विकरण्याः । अस्य क्षेत्रस्य साक्ष्णरज्जुस्त्रिकरणी । त्रीणि क्षेत्राणि सङ्क्षिपतीत्यर्थः ॥४४॥

अस्याः प्रयोजनमाह—

तृतीयकरण्येतेन व्याख्याता ॥ ४५ ॥

सौत्रामण्यामुक्तम् प्रक्रमतृतीयेनावृत्तेनेति । प्रक्रमतृतीयं च न प्रक्रमविभागः किं तर्हि प्रक्रमतृतीयकरणी रज्जुरुच्यते सेयं तृतीय-करणी यया वेदेस्तृतीयो विभागः सङ्क्षिप्यते । एवं हि श्रूयते । वि-तृतीये यजेत वितृतीयो यज्ञस्य सौत्रामणीति । कथं वेयं वितृतीयकर-णी भवतीति ॥ ४५ ॥

तदाह—

प्रमाणविभागस्तु नवधा ॥ ४६ ॥

प्रक्रमप्रमाणभागो नवधा ॥ ४६ ॥

करणी तृतीयं नवभागः ॥ ४७ ॥

करणीतृतीयेन नवमो भागः सङ्क्षिप्यते ॥ ४७ ॥

नवभागास्त्रयस्तृतीयकरणी ॥ ४८ ॥

प्रक्रमक्षेत्रस्य त्रिभिर्नवभागैस्तृतीयो विभागः सङ्क्षिप्यते । अतश्च तृतीयकरणी ॥ ४८ ॥

सौत्रामण्यां प्रक्रमार्थी तृतीयकरणी समासार्था॥४९॥

त्रिकरणी पुनर्नवविभागास्त्रयः समासार्था । तैर्हि समासैः प्रक्रमपरिच्छिन्ने क्षेत्रस्य तृतीयो विभागो लभ्यते । अतश्चात्र प्रक्रमनवभागत्रयकरण्येव प्रक्रमः ॥ ४९ ॥

तुल्यप्रमाणानां समचतुरस्राणामुक्तः समासः॥५०॥

कश्चित्तुल्यद्विकरणीप्रमाणेन समचतुरस्राणां तुल्यप्रमाणानां समासो विहितः । इदानीं अतुल्यप्रमाणानां समचतुरस्राणां समासोऽभिधीयते ॥ ५० ॥

नाना प्रमाणसमासे ह्रसीयसः करण्या वर्षीयसोपच्छिन्द्याद्वृध्रस्याक्ष्णया रज्जुरुभे समस्यतीति समासः ॥ ५१ ॥

नानाप्रमाणसमासे कर्त्तव्ये यद्ध्रसीयसो लघुतरं प्रमाणं तदीयया करण्या वर्षीयसो महतः प्रमाणस्य परिच्छेदे कृते ततो महतः पार्श्वमान्यन्तं नीता तयाक्ष्णया रज्जुः सोभे प्रमाणे समस्यतीति समासोऽयम् ॥ ५१ ॥

इदानीं ह्रासकरणायोपन्यासः—

चतुरस्राच्चतुरस्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तावदुभयतोपच्छिद्य शङ्कुं निखाय पार्श्वमानीं कृत्वा पार्श्वमानीसम्मितामक्ष्णया ततोपसंहरति स समासेऽपच्छेदः सा करण्येव

निर्ह्रासः ॥ ५२ ॥

महत्प्रमाणाच्चतुरस्रात्क्षेत्राल्लघुप्रमाणं निर्जिहीर्षन्निर्हर्तुमिच्छन्निपतनं कर्तुमिच्छन्नित्यर्थः । यावन्निर्जिहीर्षेन्निर्हर्तुमिच्छेत्तावन्महतः क्षेत्रस्योभयतोऽपच्छिद्य शङ्कू निखनेच्छङ्कुसम्मितां च पार्श्वमानीं कर्णोत्तरपार्श्वे पार्श्वमानीता प्रत्यक्ष्णया यथा भवति तथोपसंहरेत् संपातयेत् तत्रापच्छेदः कर्तव्यः । सा करणी यावत्क्षेत्रं परिच्छिद्यते तवेतरं निर्हृतं भवति एष निर्ह्रासः ॥ ५२ ॥

दीर्घचतुरस्रं समचतुरस्रं चिकीर्षन्मध्ये तिर्यगपच्छिद्यान्यतरद्विभज्येतरत्पुरस्ताद्दक्षिणतश्चोपदध्याच्छेषमागन्तुना पूरयेत्तस्योक्तो निर्ह्रासः ॥ ५३ ॥

दीर्घचतुरस्रं प्रमाणद्वयपरिमाणं समचतुरस्रं कर्तुमिच्छन्मध्ये तिर्यगपच्छिद्यान्यतरद्विभज्य पुरस्ताद्दक्षिणतश्चोपदध्यात् । शेषमागन्तुना पूरयेत्तस्य च निर्ह्रास उक्तः । समचतुरस्रात्समचतुरस्रं निर्जिहीर्षेदित्यत्रार्थः ॥ ५३ ॥

अतिदीर्घं चेत्तिर्यङ्मान्यापच्छिद्यापच्छिद्यैकसमासेन समस्य शेषं यथायोगमुपसंहरेदित्येकः समासः ॥ ५४ ॥

अथ यद्यतिदीर्घं भवति ततस्तिर्यङ्मान्यापच्छिद्यापच्छिद्य नाना प्रमाणसमासेन समस्य शेषस्य च यथा योगमुपसंहारः कार्यः ॥ ५४ ॥

समचतुरस्रं चिकीर्षन् मध्येऽक्ष्णयापच्छिद्य तच्च विभज्यान्यतरत्पुरस्तादुत्तरतश्चोपदध्याद्विषमं चेद्यथायोगमुपसंहरेदिति व्यासः ॥ ५५ ॥

समचतुरस्रं दीर्घचतुरस्रं कर्तुमिच्छन्मध्ये चापरं भागमक्ष्णया विभक्तमपच्छिद्यान्यभागस्य विभज्य पुरस्तादुत्तरतश्चोपदध्यात् । यदा

तु विषमं क्षेत्रं तदा ऽवशिष्टं यथायोगस्य विभज्य पुरस्तादुत्तरतश्चोप-दध्यात्। यदा तु विषमं क्षेत्रं तदा ऽवशिष्टं यथायोगमुपसंहरेत्॥५५॥

प्रमाणं चतुरस्रमा देशादन्यत् ॥ ५६ ॥

अनादेशे प्रमाणं चतुरस्रं भवति आदेशादन्यत्॥ ५६॥

द्विः प्रमाणा चतुःकरणी त्रिः प्रमाणा न-वकरणी चतुःप्रमाणा षोडशकरणी ॥ ५७ ॥

अरत्निप्रमाणया रज्ज्वा मितं क्षेत्रं चतुरस्रं चतुररत्निर्भवति। एवं त्र्यरत्निप्रमाणया नवारत्निक्षेत्रं भवति। चतुरस्रं चतुररत्निश्चेत्षोड-शारत्निर्भवति ॥५७॥

किं चात्र बहुनोक्तेन—

यावत्प्रमाणा रज्जुर्भवति तावन्तस्तावन्तो वर्गा भवन्ति तान्समस्येत् ॥ ५८ ॥

यावत्प्रमाणा रज्जुस्तावतामेव वर्गाणां समासं करोति। वर्गश-ब्देन च सा सा सङ्ख्या तद्गुणैवोच्यते। यथा पञ्चाना पञ्चविंश-तिरित्येवमादि॥५८॥

अर्धप्रमाणेन पादप्रमाणं विधीयते ॥ ५९ ॥

अर्धप्रमाणया रज्ज्वा चतुर्भागः सङ्क्षिप्यते विधीयते इति स-ङ्क्षेपार्थः॥५९॥

तृतीयेन नवमोंशः ॥ ६० ॥

करणीतृतीयविभागेन नवमो भागः सङ्क्षिप्यते॥६०॥

चतुर्थेन षोडशी कला ॥ ६१ ॥

चतुर्थविभागेन च षोडशो भागः॥६१॥

एष निर्ह्रासस्तस्य पुरस्तादुक्तं शास्त्रम् ॥ ६२ ॥

तस्य ह्रासस्य शास्त्रं पुरस्तादुक्तम्। चतुरस्राच्चतुरस्रं निर्जिहीर्षन्नित्यत्र ॥ ६२ ॥

यावत्प्रमाणा रज्जुर्भवतीति विवृद्धेर्ह्रासो भवति॥६३॥

अनेन क्षेत्रविवृद्धिरुक्ता। अर्धप्रमाणेन च पादप्रमाणमित्यनेन ह्रासः॥ ६३ ॥

चतुरस्रं मण्डलं चिकीर्षन्मध्याद॑से निपात्य पार्श्वतः परिलिख्य तत्र यदतिरिक्तं भवति तस्य तृतीयेन सह मण्डलं परिलिखेत्स समाधिः ॥ ६४ ॥

चतुरस्रं क्षेत्रपरिमाणं मण्डलं वृत्ताकारं कर्तुमिच्छन्मध्यादंशे रज्जुनिपातं कृत्वा पार्श्वतस्तेन मानेन परिलिखेत्। तत्र च यदतिरिक्तं भवति तस्य तृतीयविभागेन सह मण्डलपरिलेखं कुर्यात्॥ ६४ ॥

मण्डलं चतुरस्रं चिकीर्षन् विष्कम्भं पञ्चदशभागान्कृत्वा द्वावुद्धरेच्छेषः करणी ॥ ६५ ॥

मण्डलमेव चतुरस्रं कर्तुमिच्छन् विष्कम्भमायामे पञ्चदशधा कुर्यात् तत्र च द्वावुद्धरेत् अपनयेत शेषं चतुरस्रकरणी॥ ६५ ॥

द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः प्रउगः समुह्य पुरीष इत्यग्नयः ॥ ६६ ॥

स्पष्टम्। एतेऽग्नयः ६६ ॥

द्रोणे यावानग्निः सपक्षपुच्छविशेषस्तावच्चतुरस्रं कृत्वा द्रोणदशमविभागो वृत्तमित्येके तद्दशमेनापच्छिद्यारत्निर्येकसमासेन समस्य

निर्हृत्य सर्वमग्निं तथाकृतिं कृत्वा पुरस्तात्प-
श्चाद्वोपदध्यात् ॥ ६७ ॥

द्रोणः समचतुरस्रः । स्वहस्तार्थोऽयमारम्भः । यावानग्निः सपक्षपुच्छविशेषो नाना प्रमाणेन समस्य तावच्चतुरस्रं कृत्वा द्रोणदशभागो वृत्तमित्येक इच्छन्ति । तस्मिन्पक्षे तस्यैव दशमेनापच्छिद्यापच्छिद्यैकसमासेन समस्य शेषं सर्वमग्निं तथाकृतिं कृत्वा निर्हृतं वृत्तमग्नेः पुरस्तात्पश्चाद्वोपदध्यात् ॥ ६७ ॥

मण्डलेऽप्येवम् ॥ ६८ ॥

इयांस्तु विशेषः । चतुरस्रीकृत्य मण्डलविधानेन मण्डलं कुर्यात् वृत्तमग्निं च ॥ ६८ ॥

प्रउगे यावानग्निः सपक्षपुच्छविशेषस्तावद्-
द्विगुणं चतुरस्रं कृत्वा यः पुरस्तात्करणीमध्ये
शङ्कुर्यौ च श्रोण्योः सोऽग्निः ॥ ६९ ॥

इति निगदव्याख्यातम् ॥ ६९ ॥

उभयतः प्रउगे तावदेव दीर्घचतुरस्रं कृत्वा
करणीमध्ये शङ्कवः स समाधिः ॥ ७० ॥

एतदपि निगदव्याख्यातम् ॥ ७० ॥

प्रउगं चतुरस्रं चिकीर्षन्मध्ये प्राञ्चमपच्छि-
द्य विपर्यस्योत्तरत उपधाय दीर्घचतुरस्रसमा-
सेन समस्येत्स समाधिः ॥ ७१ ॥

पुनरपि दीर्घचतुरस्रसमासेन समस्येत्स समाधिः ॥ ७१ ॥

उभयतः प्रउगं चेन्मध्ये तिर्यगपच्छिद्य पू-

वैवत्समस्येत् ॥ ७२ ॥

ऋजुम् ॥ ७२ ॥

एतेनैव त्रिकर्णसमासो व्याख्यातः ॥ ७३ ॥

प्रकारेणेति शेषः ॥ ७३ ॥

पञ्चकर्णानां च प्रउगेऽपच्छिद्य ॥ ७४ ॥

पञ्चकर्णानां क्षेत्राणामेतेनैव प्रकारेण समासः । पञ्चकर्णानां द्विकर्णानां क्षेत्राणामप्युक्तप्रकारेण समचतुरस्रं कुर्यात् ॥ ७४ ॥

उत्तरेषु पुरुषोच्चयेनैकशतविधादित्येतद्वक्ष्यामः ॥ ७५ ॥

उत्तरेषु पुरुषोच्चयेनेति यदुक्तमाचार्येण तत्रोच्यते—

आद्योऽग्निर्द्विगुणस्त्रिगुणो भवतीति सर्वसमासः ॥ ७६ ॥

आद्यमग्निं चतुरस्रीकृत्य द्विकरणीसमासेन समस्येत् । त्रिपुरुषेऽप्येवं त्रिकरणीसमासेनेति शेषः । उभयत्राग्निमानाय द्विपुरुषा रज्जुरुत्पादयितव्या ॥ ७६ ॥

एकविंशतिविधो भवतीति पुरुषोऽभ्यासः ॥ ७७ ॥

पूर्वाग्निक्षेत्रप्रमाण एव पुरुषप्रमाणे क्षेत्राभ्यासः कार्यः ॥ ७७ ॥
तत्र प्रमाणमाह—

पुरुषाभ्यासे यावानग्निः सपक्षपुच्छविशेष-
स्तावच्चतुरस्रं कृत्वा तस्मिन्पुरुषप्रमाणमु-
पदध्यात् ॥ ७८ ॥

सपक्षपुच्छेऽग्नौ चतुरस्रीकृते पुरुषप्रमाणं क्षेत्रमुपदध्यात् ॥ ७८ ॥
तत्राग्निप्रमाणाय पुरुषप्रमाणमाह—

समस्तं पञ्चदशभागान्कृत्वा द्वावेकसमा-

सेन समस्येत्स पुरुषः ॥ ७९ ॥

आद्योग्निरर्धाष्टमपुरुषप्रमाणः। पञ्चदशभागद्वयेन चार्धाष्टमविभागो भवति । आद्येपि चाग्नौ अर्धाष्टमविभाग एव पुरुषोर्धाष्टमाविभाग एव भवति । इहापि पुरुषप्रमाण एव क्षेत्रे प्रक्षिप्ते अर्धाष्टमविभागेन पुरुषविवृद्धिर्भवति । एवमेकशतविधात्पुरुषाभ्यासः कार्यः । तस्य दशमविभागेन पादमात्री भवति॥ ७९॥

पञ्चविभागेन बृहती पुरुषं वा पञ्चमेनोभयतोऽपच्छिद्य पञ्चविभागान्समस्य तृतीयं निर्हृत्य तस्मिन्पुरुषप्रमाणेऽवदध्यादित्यपरम् ॥८०॥

पुरुषस्य पञ्चविंशतिधा विभक्तस्य पञ्चसु भागेषु समसितेषु तृतीये च निर्हृते षोडशाङ्गुलो भवति । तत्पुरुषप्रमाणे ऽवदध्यादिति । अपरमग्निक्षेत्रे सममितं पुरुषप्रमाणे च तत्रावहिते प्रतिपुरुषमष्टाङ्गुलान्यधिकानि भवन्ति ॥ ८० ॥

पञ्चदशविभागोऽष्टाङ्गुलम् ॥ ८१ ॥

अष्टाङ्गुलं भवति । उक्तार्थमेतत् ॥ ८१ ॥

पञ्चारत्निर्दशवितस्तिर्विंशतिशताङ्गुलः पुरुषो द्वादशाङ्गुलं पदं पुरुषमित्येतस्मात्पुरुषाद्विज्ञेयम् ॥ ८२ ॥

एतदुक्तं भवति । अस्य विंशतितमो भागोऽङ्गुलम् । पञ्चमो भागश्चारत्निः । स च चतुर्विंशत्यङ्गुलो भवति । दशभागश्च वितस्तिः।स च द्वादशाङ्गुलो भवति। एवं नवविधादिष्वपि ज्ञेयम् ॥८२॥

पुरुषं वा पञ्चमेनोभयतोपच्छिद्य सप्तभागान्समस्य सप्तसप्तमभागमङ्गुलं निर्हृत्य पु-

रुषप्रमाणेऽवदध्यादित्यपरम् ॥ ८३ ॥

एवं द्विविधादिष्वपि ज्ञेयम् ॥ ८३ ॥

नारत्निवितरतीनां समासो विद्यते संख्या-
योगादिति श्रुतेः ॥ ८४ ॥

तस्य दशमेन पादमात्री भवतीत्येवमादि समातम्। सङ्ख्यायोगो ह्यत्र भवति पञ्चारत्निरित्येवमादि । तच्च प्रतिपुरुषं प्रतिपुरुषमङ्गुलविवृद्ध्यैव सिद्धम् ॥ ८४ ॥

यथाग्निर्वेदीष्टकाप्रमाणं वर्द्धत इत्येतद्वक्ष्यामः ॥८५॥

यथा पुरुषोच्चयादग्निमानं वर्द्धते एवं वेदीष्टकाप्रमाणमपि वर्द्धते । न हि वेदिविवृद्धिमन्तरेण पुरुषोच्चयादग्निमानं भवति । न चेष्टकाविवृद्ध्या विना पुरुषोच्चयक्षेत्रं पूर्यत इति । तेन यथा पुरुषोच्चयस्तथा वृद्धिः। प्रतिपुरुषं प्रक्रमसप्तमभागविवृद्धिस्तादिदं ग्रन्थकारेणोच्यते ॥ ८५ ॥

या करणी चतुर्दशप्रक्रमान्सङ्क्षिपति त्रींश्च
प्रक्रमसप्तमभागान्त्स एकशतविधे प्रक्रमः ॥८६॥

एवं प्रति पुरुषं प्रक्रमसप्तभागविवृद्ध्या वृद्धिर्भवति तथा च सूत्रम् एकशतं प्रक्रमसप्तमभागाः प्रक्रमाः ॥ ८६ ॥

द्वितीये वा सप्तसु प्रक्रमेषु प्रक्रममवधाय
तस्य सप्तमभागेन प्रक्रमार्थः ॥ ८७ ॥

द्वितीयादिषु वा सप्तसु प्रक्रमेषु प्रक्रममवदधाति तस्य सप्तमभागेन प्रक्रमार्थः ॥ ८७ ॥

प्रक्रमेण वा सप्तमभागेन ॥ ८८ ॥

प्रक्रमार्थः ॥ ८८ ॥

सुवर्णार्धं च माषाणां सुवर्णाश्च त्रिसप्तति ।
त्रीणि चैव सहस्राणि दद्याद्वह्निसुवर्णके ॥ २८ ॥
भूयः स्थपतितो ज्ञात्वा संज्ञास्त्वन्यासु मानवित् ।
स्वर्णकारो यथा न्यासात्तथा भूयो विवर्धते ॥ २९ ॥
ह्रसते शोषपाकाभ्यां द्वात्रिंशद्भागमिष्टका ।
तस्मादार्द्रप्रमाणं तु कुर्यान्मानाधिकं बुधः ॥ ३० ॥
अज्ञात्वा शुल्वसद्भावं यज्ञे सौत्रामणीसुते ।
वेदिं ये कर्तुमिच्छन्ति गिरिं भिन्दन्ति ते नखैः ॥ ३१ ॥
दण्डरज्ज्वर्धमभ्यस्य षष्ठे त्वर्धस्य लक्षणम् ।
तथैव चेतरत्रापि तिर्यङ्मानं यदृच्छया ॥ ३२ ॥
यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत् ।
आगमार्धे भवेच्छङ्कुस्तदर्धे च निरञ्छनम् ॥ ३३ ॥
आधाने पदिकं कुर्यात् द्विपदः सौमिको भवेत् ।
अग्नौ च त्रिपदं कुर्यात्प्रक्रमं याज्ञिको बुधः ॥ ३४ ॥
कृत्तिका श्रवणः पुष्यश्चित्रास्वात्योर्यदन्तरम् ।
एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरः ॥ ३५ ॥
पञ्चाशच्छर्कराः पश्चात्पूर्वे देयास्त्रिसप्ततिः ।
दक्षिणे तु प्रदातव्या दशपञ्च च सप्त च ॥ ३६ ॥
अंसस्यश्चतुर्विंशतिपार्श्वभागश्चतुर्दशाभिः परिलेख्यस्तु नयं ।
स्तथैव चाष्टद्विगुणैरथर्यस्त्रिंशद्भिरायस्य हरेत्तृतीयम् ॥३७॥
अग्रेरुदक्साधनवाङ्कुले मध्यं ततो लिखेत् ।
वृत्तमेकोनविंशत्या प्राचीज्या मध्यगा भवेत् ॥ ३८ ॥
उदगर्धं विहायार्वाक् खरोग्नेर्दक्षिणस्य तु ।
सूक्तदोपदरिद्रस्य गूढमन्त्रस्य धीमतः ॥ ३९ ॥
समाप्तयं क्रिया शौल्वी कात्यायनमहात्मनः ॥ ४० ॥

एतच्च रथाक्षान्तरालपक्षे भवति । तेन वेदिद्वादशाङ्गुलं पुरस्तादपच्छिद्येत्येवमादिर्भवति । न हि वेदियूपयोरङ्गाङ्गिलक्षणः संयोग इति सिद्धम् ॥ ९२ ॥

इति श्रीउपाध्यायकर्ककृतौ कात्यायनशुल्वभाष्यं सम्पूर्णम् ।

## द्वितीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

## षष्ठो ऽध्यायः।

## सप्तमोऽध्यायः ।

## अष्टमो ऽध्यायः ।

## दशमोऽध्यायः ।

## एकादशोऽध्यायः ।

## त्रयोदशोऽध्यायः ।

## पञ्चदशोऽध्यायः।

## षोडशोऽध्यायः ।

## सप्तदशोऽध्यायः।

## द्वाविंशोऽध्यायः।

## त्रयोत्रिंशो ऽध्यायः ।

## चतुर्विंशो ऽध्यायः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैः देयं वार्षिकमग्रिम मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रत मुद्यमाणा ग्रन्था - मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता । (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृत. (व्याकरणम्) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । (मीमांसा) १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । (वेदान्त.) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । (मीमांसा) २

(८) ब्रह्मसूत्र भाष्यम-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । (वेदान्तः) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा । (जैनदर्शनम्) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकर्तां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्णम् (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः । (वेदान्तः) ३

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १३

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्त) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसंग्रहः) श्रीमद्पद्वाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम्। श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च। सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम्। ११

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्तः) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। (वेदान्त.) १

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया ऽर्थतरणिकया च सहितम्। ४

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता श्रीमदाचार्य श्रीवल्लभाधीश्वरशुद्धाद्वैतसम्प्रदायविदुषा रत्नगोपालभट्टेन संशोधिता। (वेदान्त) २

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्याः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि। (न्यायः) १

हरिदासगुप्त.,

No 72 ] [ Price Rupees One

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

# कात्यायनश्रौतसूत्रम्

महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् ।

## KÂTYÂYANA SRAUTASUTRA,

WITH A COMMENTARY BY SRI KARKACHARYA

EDITED BY

VYAKARNACHARYA PANDIT MADANMOHAN PATHAK,
Professor of Mimâmsâ and Dharmashâstra,
Ranabir Sanskrit Pathshâlâ,
*Central Hindu College, Benares*

FASCICULUS III

*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT BOOK DEPOT,
BENARES
AGENT—OTTO HARRASSOWITZ LEIPZIG
*Printed By Hari Das Gupta Proprietor*
AT THE VIDYA VILASA PRESS.
BENARES

1903

*Registered According to Act XXV of 1867.*

॥ श्रीः ॥

—*—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।

सुवर्णाङ्कितभव्याभसातपत्त्रपरिष्कृता ॥ १ ॥

चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।

रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—७२

प्रत्याश्रावितेध्वर्युराहोतृप्रैषात् ॥ ५८ ॥

यजेति होतृप्रैष, आ ततो नापव्याहरेदिति ॥ ५८ ॥

होता वषट्कारात् ॥ ५९ ॥

नापव्याहरेदिति वर्त्तते । सोनुवृहीत्येवोक्त्वाध्वर्युर्नोपव्याहरेदिति प्रकरणेतच्छ्रूयते ॥ ५९ ॥

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ ६० ॥

सोमे चाध्वर्युर्ग्रहं गृहीत्वा नापव्याहरेदास्तोत्रोपाकरणात्॥६०॥

उपाकृत उद्गातार आ होतृप्रैषात् ॥ ६१ ॥

उपाकृते स्तोत्रे उद्गातारो नापव्याहरेयुराहोतृप्रैषात् । होतृप्रैष उत्तमस्तोत्रीयाया प्रस्तावसमनन्तरं पयोत्तमेति येन होता सम्बोध्यते ॥ ६१ ॥

१होता वषट्कारात् ॥ ६२ ॥

नापव्याहरेदिति वर्त्तते । कियन्तं कालम् । आ प्रदसम्बद्धहोमवषट्कारात् । अथ सौम्येध्वरे स वै ग्रहं गृहीत्वाध्वर्युर्नोपव्याहरेदिति प्रकृत्यैतदपि हि श्रूयते ॥ ६२ ॥

आग्नेयमुत्तरापूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्यम् ॥६३॥

आग्नेयमाज्यभागमुत्तरपूर्वार्द्धे जुहोति।दक्षिणपूर्वार्द्धे सौम्य ॥६३॥

समिद्धतमे वा ॥ ६४ ॥

उत्तरार्द्धपूर्वार्द्धे हैक आग्नेयमाज्यभाग जुहतीति प्रकृत्यैतच्छ्रूयते ॥ ६४ ॥

हविर्भ्यां च ६५ ॥

---

१ सूत्रे होतृग्रहणं सकलयज्ञकर्तॄणामुपलक्षकम्, तेन प्रशास्त्रादयोपि पयोत्तमेति प्रैषोत्तर यज्ञव्यतिरिक्तं किमपि न ब्रूयु. ।

चरतीति वाक्यशेषः । समिद्धतम इति च । समिद्धहोमेन होय सम्मृद्धा आहुतय इति श्रूयते ॥ ६५ ॥

**पुरोडाशावन्तरेणाग्नीषोमा उपा̐श्वाज्यस्य ॥ ६६ ॥**

पुरोडाशयागयोर्मध्ये उपा̐श्वाज्यस्याग्नीषोमौ यजति । अत्र पुरोडाशाविति द्वितीयोपपदविभक्तिः[१] ॥ ६६ ॥

**विष्णुर्वामावास्यायाꣳ हौत्राम्नानात् ॥ ६७ ॥**

अमावास्यायां विष्णुर्वेज्यते अग्नीषोमौ वा । एवं हि हौत्रे आम्नायते । वैष्णवमेवेदं विष्णुरितिर[२] ॥ ६७ ॥

**यावद्धविरुत्तरार्द्धात्स्विष्टकृत् ॥ ६८ ॥**

यावन्ति हवींषि सर्वेषामुत्तरार्द्धात्स्विष्टकृदिज्यते । सम्प्रतिपन्नदेवतैकत्वाच्च सकृत्प्रक्षेपः । प्रतिपत्त्यर्थकर्म चैतदुत्तरार्द्धात् प्रतिपाद्यते । यागश्च निर्दिश्यते । अत एव च यावदुक्तेपि प्रवर्त्तते॥६८॥

**तत एव होमः ॥ ६९ ॥**

---

१ अयं क्रमः, आग्नेय आज्यभागो ध्रुवातश्चतुर्गृहीतेन, सौम्य आज्यभागोऽपि, आग्नेयेन पुरोडाशेन याग. तत्राग्नये ऽनुब्रूहीत्यनुवाचनम् जुह्वां ध्रुवाया स्रुवेणाज्यं गृहीत्वोपस्तारः, आज्यस्थाल्या सकाशाद्ध्रुवाया अभिघारणम् पुरोडाशमध्यादङ्गुष्ठपर्वमात्रं तिरश्चीनमवद्यान प्राक्षम्, द्वितीयं पूर्वार्धात् पञ्चावत्तिनस्तृतीयं पश्चार्धात् ध्रौवेणोपर्यभिघार. पुनर्ध्रुवाया आप्यायनम् आज्यस्थाल्याज्येनावत्तस्य हविषोऽवदानयो. प्रत्यभिघारः अतिक्रम्याश्राव्याग्निं यजेत्सुकृत्वा वषट्कृते सह वा स्रुक्पार्श्वेनहोम., आज्यभागवत् ध्रुवातश्चतुः पञ्चकृत्वो यावदार्थोपांशुयाग., आग्नेययागवत् द्वितीयेन पुरोडाशेनाग्नीषोमीययागः स्विष्टकृदिति देवभाष्ये ।

२ व्यवस्थितोऽयं विकल्पः सनयतोऽग्नीषोमौ असंनयतो विष्णुरिति, शाङ्खायनः ' ऐन्द्रं सान्नाय सनयतो माहेन्द्रं वा ; वैष्णवं त्वसंनयन्नुपांशुयाजम्, इति ।

उत्तरत एव होमो भवति । शेषात्स्विष्टकृते समवद्यतीत्येवमुक्तम् ॥ ६९ ॥

उपांशुयाजशेषादपि ध्रौवात्स्विष्टकृदवदाने प्राप्त आह—

नाज्यादशेषात् ॥ ७० ॥

न स्विष्टकृदर्थमवदानं ध्रौवादाज्यादुपस्तीर्णम् । कुत एतत् ? अशेषत्वात् । न ह्येतच्छेषभूतम् । ननूपांशुयाजनिर्वृत्त्युत्तरकालं शेषव्यपदेशोऽस्तीति । नेति ब्रूमः । न ह्येतदुपांशुयाजायैव गृह्यते । सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति । न च सर्वार्थस्यैकदेशे निवृत्ते शेषव्यपदेशोऽस्ति[1] ॥ ७० ॥

असंसृष्टामाहुतिभिः ॥ ७१ ॥

स्विष्टकृदाहुतिं जुहोतीति वाक्यशेषः । स वा अध्यर्द्धं इवेतराभ्य आहुतिभ्यो जुहोतीति प्रक्रम्याह रुद्रियः स्विष्टकृद्रुद्रियेण ह पशून्प्रसज्येद्यदितराभिराहुतिभिः सं सृजेदिति ॥ ७१ ॥

निधाय सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वाऽन्यतरत आज्यमुभयतो वाभ्येयात् ॥ ७२ ॥

स्रुक्सन्निधानं वाचनिकम् । ते एतास्विष्टकृति विमोचनमागच्छत इति । सञ्चरश्च परिधीनपरेण सञ्चरोऽभिप्रेतः । तस्य चाभ्युक्षण-

---

१ अपरा व्याख्या । न ह्याज्यं शेषरूपमस्ति शेषस्य हि कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य प्रतिपत्त्यर्थानि शेषकार्याणि । न चाज्यमेवंविधमस्ति । न ह्युपांशुयाजार्थं पूर्वं पृथक् प्रकल्पितमास्ते यस्य शेषो भवति । अतः साधारणादेव ध्रौवाद्वचनेनोपांशुयाजार्थं गृह्यते । यत्तावद्ध्रुवायामुपांशुयाजार्थं गृहीतेऽवशिष्टमाज्यम् तदप्याज्याद्युपस्तरणाभिघारणाद्युपयोगित्वात्कृतार्थं न प्रतिपत्त्यर्हम् । सर्वार्थत्वे च तेन स्विष्टेन समिष्टयजुर्हूयत इति न तत् शेषकार्यम् । यज्जुह्वां चतुर्गृहीतं तन्निःशेषं हुतमिति यथाभागादेव तत्सम्बन्धि स्वार्थं ह्यामाय इत्यनन्तदेवाः ।

मनुयाजार्थम् । स्विष्टकृत ऊर्ध्वमनुयाजार्थे ह्यनेन सञ्चरेण सञ्चरणम् । ननु प्राशित्रसमर्पणार्थं कस्मान्न भवति । न, तस्य पाक्षिकमनेन समर्पणम् । अपाक्षिकं चाभ्युक्षणम् । तेन करिष्यमाणप्रयोजनत्वादनुयाजार्थतैव न्याय्या । प्रयोजनं तदभावेऽभाव इति । पशौ च त्र्यङ्गस्विष्टकृदुत्तरकालमभ्युक्षणं न पुरोडाशस्विष्टकृतीति । ज्योतिष्टोमे च तृतीयसवने सौम्ययागसमनन्तरमभ्युक्षणम् । नेतरयो सवनयोरनुयाजाभावात् । केचित्तु तृतीयसवनेऽपि स्विष्टकृद्यागसमनन्तरमेवाभ्युक्षणमिच्छन्ति न सौम्यसमनन्तरम् । तदनन्तरमेव दृष्टत्वात् । युक्तरूपतरमिवचैतदिति । प्राशित्रमिति ब्रह्मणो भागस्तदवद्यति । अवद्यति शब्दोपादानसामर्थ्याद्विरिति प्रतिपत्तव्यम् । अवद्यतेर्हिद्विरवदानसम्बन्धो दृष्टः । त्रित्वसम्बन्धोपीति चेत् । न, विशेषसंयोगात् । त्रिर्जमदग्नीनामिति । तथा च प्राशित्रं प्रकृत्य पठ्यते । द्विर्हविषोवदायेति । तेन यदवद्यति तद्यवमात्र पिप्पलमात्रं वेति । शाखिनां तु पठ्यते । द्वे शकलेवद्यति यवमात्रे पिप्पलमात्रे चेति । पिप्पलमात्रमिति च पिप्पलफलमभिप्रेतम् । न पिप्पलमात्रेण सहोच्चारणात् । क्वचिच्च दर्शनादधात्रं यौदुम्बरया पिप्पलं वा बन्धनात्प्रमुच्येतेति फलविषय एव पिप्पलशब्दः । आज्यं चान्यतरतो भवत्युभयतो वा अन्यतरत आज्यं कुर्यादधस्ताद्वोपरिष्टाद्वेति वचनात् । तथा स आज्यस्योपस्तीर्य द्विर्हविषोवदायाथोपरिष्टादाज्यस्याभिघारयति । तद्यथैव यज्ञस्यावदानमेवमेवतदिति । आग्नेयान्मस्तकं विरुज्य द्वे शकलेवद्यति यवमात्रे पिप्पलमात्रे चेति । वचनमङ्गीकृत्याग्नेयादित्युक्तम् ॥ ७२ ॥

भागांश्च ॥ ७३ ॥

गृह्णातीति सूत्रशेषः । तांश्चाग्नेयादेव प्राशित्रसह चरतया । स चायमुपदेशः । क्रमस्तूपरिष्टादक्ष्यते । स्थित तावत्पर्यवसितमन्तरान्यत्प्रक्रियते । तत्किमर्थं चतुर्द्धाकरणसिद्धान्तसमानन्यायतयेति निरवद्यम् ॥ ७३ ॥

अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय पूर्वेणके ऽप उपस्पृश्येडां पञ्चावत्तां दक्षिणतो म-

ध्याच यावद्धविस्स्विष्टकृद्वदाज्यम् ॥ ७४ ॥

प्रक्रान्तं प्राशित्रमध्वर्युसञ्चरेण समर्प्य पूर्वेण याहवनीयं त-तोप उपस्पृशति । हविःप्राशित्रमिति । ततश्च तदभावे न भवति । तत इडां पञ्चावत्तां गृह्णाति । यावद्धविरिति । प्रतिपत्तित्वात् । ननु च दक्षिणतो मध्याच्च स्विष्टकृद्वदाज्यमिति चोक्ते पञ्चावत्तग्रहणमवा-च्यम् । सर्वेषां तुल्यत्वप्रज्ञापनायेति केचित् । तदेतदसत् । न हि पुरोडा-शस्याज्यस्य च तुल्यता शक्याभ्युपगन्तुम् । प्रतिपाद्यते ह्यत्र पुरोडा-शो नाज्यमसंयुक्तविधानात् । तेन पत्नीसंयाजेडायामपि पञ्चावत्तता यथा स्यादिति पञ्चावत्तग्रहणम् । ननु चानुक्तेपि पञ्चावत्तमेवेदम् । ततश्च तत्रापि भविष्यत्येव । नेह पुरोडाशप्राधान्यात्तत्कार्ये च पत्नी-संयाजेष्वाज्यप्रसङ्गाद्वृद्धिरेवाज्यं प्राप्नोति । नोपस्तरणाभिघारणप्राप्ति-रिति । तेन सुष्ठूच्यते पञ्चावत्तामिति ॥ ७४ ॥

यजमानभागं पूर्वार्द्धादीर्घं प्रशीर्य पुरस्ता-द्ध्रुवायाः करोति ॥ ७५ ॥

पूर्वार्द्धे पुरोडाशस्य प्रशीर्य पुरस्ताद्ध्रुवायै निदधातीति श्रुत-त्वात् । अयं च भागानामवसरः । ततश्च विनियोगक्रमेण पूर्वमग्नीध-स्ततो ब्रह्मणस्ततो यजमानस्येति । ध्रुवायाः पुरस्तादिति व्यतिरिक्ते दे-शे करोति ॥ ७५ ॥

इडां होत्रे प्रदायाविसृजन् दक्षिणाति-क्रामति ॥ ७६ ॥

मार्गैश्वर्यघटितत्वादिडाग्रहणं क्रियते । तां होत्रे प्रदायाविसृ-जं दक्षिणातिक्रामति ॥ ७६ ॥

इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति ॥७७॥

प्रकृतत्वादिडाग्रहणमकार्यं क्रियते च पर्यासं यथा ततः क्रि-येतेत्येवमर्थम् । तथा च दर्शयति । स होतुरिह निलिम्पति तद्धोतो-ष्ठयोर्निलिम्पत इति मन्त्रत्वाद् एतदर्थे मनुर्यमयाधकारेदं ये मे तनिष्टं

यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै म इह रक्षाꣳसि यज्ञं न हिꣳस्यु-रिति तमेतत्पुरा रक्षोभ्य पुरा रक्षोभ्य इत्येव प्रापयत तथो एवैनाम-प एतत्पुरा रक्षोभ्य. पुरा रक्षोभ्य इत्येव प्रापयते ऽथ यत्प्रत्यक्षम प्रा-श्नाति तिनेदनुपहूतां प्राश्नानीत्येतदेवैनां प्रापयते यदोष्ठयोर्निलिम्पत इति इडाया अङ्गुलिपर्वाञ्जन दर्शयति । नेन प्रकृतायामपीडायां पु-नरिडाग्रहणम । पर्वशब्द सन्धिवचनो लिङ्गात् । काण्डात्काण्डात्प्ररोह-न्ती परष परुषस्परीति । तथा काण्डात्काण्डाद्धया पर्वणः पर्वणः प्ररोहतीति दूर्वोच्यते । तत्र पर्वशब्द सन्धिवचन दर्शयति ॥ ७७ ॥

## अवान्तरेडामादधाति पूर्ववत् ॥ ७८ ॥

अवान्तरेडामिडाया एव होतुः पाणौ समवद्यति । अथ होतु' पाणौ समवद्यति समवत्तामेव सतीं तदेनां प्रत्यक्षꣳ होतारि श्रयती-ति श्रूयते । पूर्ववद्ग्रहणाच्च पञ्चावत्तामिति । पुरोडाशावदानादेव प-ञ्चावत्तता । न ह्याज्य सकृद्रूपत्वाद्द्विर्नेकेन गृहीतु शक्यते इति॥७८॥

## इडाञ्च ॥ ७९ ॥

१आदधातीति वर्त्तते ॥ ७९ ॥

## सर्वे ऽन्वारभन्ते ॥ ८० ॥

प्रकृतत्वादिडामिति केचित् । अपरे तु वाक्यसामर्थ्याद्धोतुर-न्वारम्भमिच्छन्ति स्वर्गस्य लोकस्यैतद्द्वार यद्धाता तस्माद्धोतारम-न्वारभेतेति ॥ ८० ॥

इडोपहूतेत्येवमुच्यमाने आग्नेयं बर्हिषदं करोति ब्रह्मापिन्वस्वेत्यनेन मन्त्रेण । विपरिणम्यते चासावनेकयजमानके कर्मणि ॥ ८१ ॥

## तं चतुर्द्धा कृत्वा ॥ ८२ ॥

तन्निर्देशाच्चतुर्द्धा कृतं बर्हिषदं करोति । आग्नेयं चतुर्द्धाकरोतीति वचनादाग्नेयमित्युक्तम् । चतुर्द्धाकरणस्य च व्यादेशार्थत्वात्तस्य च यजमानकर्तृकत्वात् क्त्वाप्रत्ययसामर्थ्याच्च यजमानश्चतुर्द्धा करोति । सत्त्रेषु च व्यादेशाभावादभावश्चतुर्द्धा करणस्य ॥ ८२ ॥

## बर्हिषि ऋत्विग्भ्य आदिशति ॥ ८३ ॥

बर्हिषीति नियमार्थमुच्यते । आदेशश्च वाचनिको न समर्पणं यावत् । तेनेदं ब्रह्मण, इदं होतुरित्येवमादिरादेशः ॥ ८३ ॥

## उभौ वाविशेषात् ॥ ८४ ॥

उभौ वा चतुर्द्धा क्रियेते नाग्नेय एव । कुतो ऽविशेषात् । अथ यत्र प्रतिपद्यते तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोतीत्यविशेषश्रवणात् । किं च चरितार्थत्वाविशेषात्संस्कार्यत्वाविशेषाच्च । तथा प्रतिपत्तिसव्यपेक्षत्वादिति याज्ञिकाः । अत्रोच्यते । स्यादेतदेवं यद्यविशेषः स्यात् । अस्ति तु विशेषः । आग्नेयं चतुर्द्धाकरोतीति । यद्यपि च माध्यन्दिनीयायां पुरोडाशमात्रश्रवणम् । तथापि स्वाग्नेयमिति वचनाद्विशेषनिष्ठतैव न्याय्या । न चाग्नीषोमीय आग्नेयः । यत्र हि निरपेक्षादग्निपदात्तद्धित उत्पद्यते स आग्नेयः । न च सोमसव्यपेक्षस्याग्निपदस्य सामर्थ्यमस्ति । सापेक्षं चासमर्थं भवतीति समर्थानां प्रथमाद्वेति ह्यधिकृत्य तद्धिताम्नानम् । तेनाग्नीषोमीयस्यानाग्नेयत्वाच्चतुर्द्धा करणाभाव इष्यते । यद्येवमुभौ वाविशेषादिति सूत्रं किमर्थम् । आशङ्कानिवृत्त्यर्थम् । अपि च प्राशित्रभागानां आग्नेयादिति सूत्रितम् । आग्नेयाद्भागांश्चेति । तन्निरासार्थं वक्तव्यमुभौ वाविशेषादिति । तत्कुतो वचनात् । हविर्मात्रस्य हि प्राशित्रं श्रूयते । हविर्विषोश्चरतीति । भागानां च । पूर्वार्द्धं पुरोडाशस्य प्राशित्रेति पुरोडाशसंयोगः । यद्येवं किमर्थं सूत्रमाग्नेयादिति । आग्नेयान्मन्तर्क विकल्पेस्यतोवचनादस्तु तदर्थतेति चेत् ।

न, प्रदेशविधिपरत्वाद्वाक्यस्य । तस्मात्सर्वत्र प्राशित्रग्रहणं न्याय्यम् । भागास्तु पुरोडाशसंयोगात्सान्नाय्ये न प्रवर्त्तन्ते । दाक्षिकसिद्धान्तेपि न चतुर्द्धा करणं सान्नाय्यस्यापुरोडाशत्वात् । तस्य च पुरोडाशसंयोगात् । प्रकृतौ ह्यौपदेशिका धर्माः । सान्नाय्यविकारे च पशौ चतुर्द्धाकरणाभावात् । अथ पशुं सम्मृशन्तीति हि प्रकृत्याहैतर्हि सम्मर्शनस्य कालोथ यत्पुरा सम्मृशति य इम उपतिष्ठन्ते ते विमथिष्यन्त इति शङ्कमानो यद्यु विमथनान्न शङ्केतात्रैव सम्मृशेदिति चतुर्द्धा करणाभावो विमथनाशङ्कायां सम्मर्शनविधिसंस्तव इति ॥ ८४ ॥

## अत्र पितर इति यजमानो जपति ॥ ८५ ॥

चतुर्द्धाकृतं पुरोडाशमालभ्य उत्तरस्य विसर्गोपदेशात् । अत्र पितर इति जयमानो जपेत् ॥ ८५ ॥

## विसृज्यामी मदन्तेति ॥ ८६ ॥

जपतीति वर्त्तते । अयं च कैश्चित्प्रोषितस्यापि यजमानस्येष्यतेऽनाश्रितत्वात् । तत्पुनरनुपपन्नम् । आलम्भपूर्वकत्वाद्विसर्गस्य । तेन यथापूर्वेऽध्वर्युरेवमुत्तरेपीति । चतुर्द्धा करणे च सत्यनयोः प्रवृत्तिस्तत्र पितॄणां भोजनेनेति वाक्यशेषात् ॥ ८६ ॥

## एकैकमाहरति ॥ ८७ ॥

भागिने भागमिति वाक्यशेषः । तच्च पक्षाश्रोपहारत्वादर्थ्याद्भक्षणार्थं हरणम् । द्रव्यसंस्कारत्वाच्च । अन्वाहार्येपि तथेति चेत् । न, परिक्रयार्थत्वादद्रव्यसंस्कारत्वाच्चेति ॥ ८७ ॥

## द्यावापृथिव्योरुपह्वानेग्नीधे षडवत्तम् ॥ ८८ ॥

अथ यत्राहोपहूते द्यावापृथिवी इति तदग्नीध आदधातीति हि श्रूयते । तत्र कैश्चिद्भागद्वयं उपस्तरणाभिघारणोपेतं षडवत्तमिष्यते । अन्यथा षडवत्ताभावात्तत्पुनर्नोपपद्येत । न ह्यत्रोपस्तरणाभिघारणौ विहिते । कथं तर्हि षडवत्तमुच्यते । प्रत्यस्तमितावयवार्थवृत्तितया षडवत्तशब्दोऽग्नीद्भाग उपचरित उपलभ्यते । अश्वकर्णादिशब्दवत् ॥ ८८ ॥

प्राश्नात्युपहूता पृथिवी इति ॥ ८९ ॥

तच्चेडावत्तमग्नीत्प्राश्नात्युपहूता पृथिवीत्यनेन मन्त्रेण । अथ द्वितीयमुपहूतो द्यौरिति श्रुतमपि सूत्रकृता नोपनिबद्धम् । वाक्यभेदादेव तदर्थोपलब्धेः ॥ ८९ ॥

आशासाने मयीदमिति यजमानो जपति ॥ ९० ॥

भूयसि हविष्करण उपहूत इत्येवमाद्याशीः प्रार्थनमाशासनम् । एषा वा आशीरिति वचनात् । अत्र मयीदमिति यजमानो जपति । अत्र यजमानग्रहणं शक्यमकर्तुम् । पुरुषयोगिमन्त्रसंस्कार्ययोस्त्यागे सामर्थ्यादिति परिभाषितत्वात् । एवं तर्हि पत्नीसंयाजेडायामपि यजमानो वा जपेदिति । तत्र हि पत्न्युपह्वयः कश्चिदाम्नातः । उपहूतेयं पत्नीति । आशीर्वचनेनैकवाक्यत्वात्तस्या एव जपो मा भूदिति यजमानग्रहणम् ॥ ९० ॥

उपहूतां प्राश्नन्ति युक्ताः ॥ ९१ ॥

उपहूतामिडामृत्विजः प्राश्नन्तीत्यर्थः । यजमानश्च । सा चैषा इडा प्राशित्रभागाश्च वायवुक्तोपि वर्तते । द्रव्यसंस्कारत्वात् ॥ ९१ ॥

[1]पवित्रयोर्मार्जयन्ते परेण वेदिं सुमित्रिया न इति ॥ ९२ ॥

तृतीयार्थे सप्तमी । न ह्यत्र सप्तम्यर्थसम्भवः । करणता तु सम्भवति मार्जनं प्रति । सुपां हि स्थाने सुपः छन्दसि भवन्तीति । छन्दोवत्सूत्राणि चेति स्मर्यते । तेनात्र सप्तमी तृतीयार्थे । लिङ्गाच्च । पवित्रपूता वदत ऊर्ध्वमिति । केचिच्चापोदकेन मार्जनमिच्छन्ति । मन्त्रलिङ्गात् । सुमित्रिया न आप इति । तत्पुनरविधावपवस्थानमन्त्राणामनुपपन्नम् । उदकानुपदेशाच्च । न चान्यदत्र मृज्यर्थे करणं नास्ति । यथा पशुप्रधाने । न च पवित्राभ्यां मृज्यर्थो न सम्भवति । लि-

१ वेदिमपरेणोपविष्टाः पवित्राभ्यामात्मानं मार्जयन्ते शोधयन्त इत्यर्थः ।

ङ्काच । पवित्रेण पूताः पवित्रपूता इति । यदि चोदकमपि साधनं स्यात् । पवित्रपूता इति समासो न स्यादसामर्थ्यात् । यच्च श्रूयते पवित्रवति मार्जयन्त इति । तत्रापि पवित्रवद्वस्तुनिर्देशादनध्यवसाय एवेत्यन्यथानियमिति । मन्त्रश्च सुमित्रिया न आप आपधय. सन्त्वित्येवमन्तः स्यात्परिसमाप्तत्वाद्वाक्यस्य । न च दुर्मित्रिया इति प्रदेशान्तरे न विनियुक्तः । न च परादिना पूर्वान्तन्यायोत्र सम्भवात्यप्रकरणसमधीतत्वात्तस्य । प्रकरणान्तरसमधीते तु यत्नाद्वाक्यसमुच्चयो भवति । यथा ज्योतिरसीति समिदन्तेन ॥ ९२ ॥

यजमानस्य प्राणापानौ पातमिति प्रस्तरे ते करोति ॥ ९३ ॥

प्रकृतत्वात्पवित्रप्राप्तौ त इत्यवाच्यम् । उच्यते च । तेन शाखापवित्रव्युदासार्थमिति । तस्यापि समस्य मार्जनात्प्राप्तिरतस्ते इति यत्न. क्रियते । अनेकयजमानके च विपरिणामो मन्त्रस्य । मार्जनं चेडाभक्षनिमित्तत्वात्तदभावे न भवति । पवित्रप्रतिपत्तिस्तु भवति प्रतिपत्तेरेव ॥ ९३ ॥

तूष्णीं वा ॥ ९४ ॥

पवित्रयोः प्रस्तरे करणम् ॥ ९४ ॥

अत्र वा ब्रह्मा प्राश्नाति ॥ ९५ ॥

तुल्यश्रुतित्वादत्र वा प्राशित्रभक्षणम् ॥ ९५ ॥

१भागमस्मै परिन्तिहरति ॥ ९६ ॥

अस्मै ब्रह्मणे पूर्वेणाहवनीयं भागं समर्पयतीत्यर्थः ॥ ९६ ॥

यजमानभागं चाप्रोषिते ॥ ९७ ॥

---

१ अयं च चतुर्धाकरणभागव्यतिरिक्तः, तेषां दानस्य पूर्वमेव विहितत्वात् ।

प्रोषिते यजमानभागं च परिहरति[1] ॥ ९७ ॥

[2]अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मे धेह्यक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिन् लोक इह चेति ॥ ९८ ॥

सर्वांशैरेवात्स्थालेपेनाभिघारणम् । आलम्भो यजमानस्य स्यात् । मन्त्रलिङ्गात् । दाने च तस्याधिकारात् । अध्वर्योर्वा करणत्वात् । करणमन्त्रविषयाशिषां च यजमानयोगित्वं न्यायात् । तत्कथं आध्वर्यवः पदार्थः मन्त्रोपि । लिङ्गेन यजमान आशङ्कित । प्रधानभूतश्च पदार्थः । गुणभूतश्च मन्त्रः । तेनाध्वर्योरालम्भेऽधिकारो युज्यते । तन्मन्त्रेपि लक्षणया यजमानाभिधानमित्यदोषः । तथा च लिङ्गं यां वै कांश्च यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सेति । ऊर्गसीत्यस्याप्यविषयत्वाद्ध्यादौ विपरिणामः । ऊर्जं मयि धेहीत्यत्रापि केचिदिच्छन्ति । तत्पुनर्विचारयितव्यम् । न हि प्रकृतोर्थोऽपरोपदिश्यते । तेनान्यदेवोर्जोऽन्तरं प्रार्थ्यते । ततश्चाविपरिणाम इष्यते । मयि धेहीति गमयद्धि विपरिणम्यते । अभिघारणं तु गवादेरनुपकारकत्वाच्च प्रय-

---

1 यदि तु यजमानः प्रोषितो भवति तदाऽध्वर्युणा दत्तं यजमानभागं ब्रह्मा गृहीत्वा प्राशित्रे निदधाति, प्रस्तरहोमोत्तरं तु स हूयत इत्यर्थः ।

2 भागपरिहरणानन्तरमध्वर्युरन्वाहार्यमभिघार्य स्थालीमेनाजेयोपरि निकृष्य उत्तरत उद्वास्य दक्षिणाग्निमपरिष्टाद्दुपायं गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ् नीत्वा दक्षिणाग्नेर्दक्षिणेन अन्तरा ब्रह्मयजमानौ हृत्वा ब्रह्मयजमानयोरन्तरालेन नीत्वा तथापि यजमानं दक्षिणेन ब्रह्माणमुत्तरेण पूर्वेणाहवनीयं प्रणीतोत्करावन्तरा हृत्वा वेदिमध्ये आसाद्यालभतेऽध्वर्युरित्यर्थः ।

र्त्यते । स्वादिम्ने ह्योदनोऽभिधार्यते । न च गोः स्वादिम्ना प्रयोजनम् । ब्रह्मयजमानयोस्तु अन्तराहरणे गोर्न भवति । वाससस्तु प्रवर्त्तते ऽविरोधादिति ॥ ९८ ॥

१सा दक्षिणा ॥ ९९ ॥

स दक्षिणेति वक्तव्ये दक्षिणागतलिङ्गान्तर्भावेन सेत्युक्तम् । अयं च परिक्रयार्थः । ततश्च पक्वान्नोपहारतादर्थ्येऽपि दानसमनन्तरं भक्षणं न भवति । चतुर्द्धाकरणे तु द्रव्यसंस्कारात्पक्वान्नोपहारतादर्थ्याद्यानन्तरमेव भक्षणम् ॥ ९९ ॥

उदगुद्वासयति हविश्च ॥ १०० ॥

उदगुद्वासनमन्वाहार्यस्य हविषश्च पुरोडाशादेः ॥ १०० ॥

२समस्योल्मुके समिधमादायाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ १०१ ॥

समास आहवनीय एव प्रतिक्षेपः । ते पुनरनुसंस्पर्शयन्तीति हि श्रूयते । समिध या सावनुयाजार्थं परिशेषिता तामादायाह ब्रह्मन्प्रस्थास्यामीत्येवमादि । प्रैषद्वयं चैतत् । तत्रैकोऽनुयाजार्थस्ततश्च तदभावे आतिथ्यादौ न भवति । सम्मार्गप्रैषस्तु सम्मृजिद्वारेण सर्वार्थत्वात्प्रतिपत्त्यर्थकर्ममाधनभूताहवनीयसंस्कारोपजनकत्वेनानुयाजाभावेऽपि प्रवर्त्तत एव । तथा च सम्मार्गे प्रकृत्याह युक्तो वहत ऊर्ध्वमसंस्थितं यज्ञस्य तद्वहादिति । अत्र केचित्पूर्वं समिदादानमिच्छन्ति । तत उल्मुकसमास. । कुत एतत् । एवं विकृतौ ह्यनुप्रवृत्तिर्दृश्यते । पात्रप्रक्षालनान्तेऽनुयाजाः समिदादीनि । तदेतदनुपपन्नमिव । न ह्यत्र सूत्रभङ्गे किञ्चित्कारणमस्ति । तदभावे च यथाव्यवस्थितसूत्रव्याख्यैव युज्यते । यत्तु समिदादीत्युक्तम् । तन्न्यायपूर्वकत्वादेक-

१ य एषोऽन्वाहार्य उक्तः सा दर्शपूर्णमासयोर्दक्षिणा भवति ।

२ अध्वर्युरुल्मुक आहवनीये प्रक्षिप्य प्राक् परिशेषितां समिधमादाय 'ब्रह्मन् प्रस्थास्यामि' इति ब्रह्माणं प्रति ब्रवीति; अग्नीधं चाग्निमग्नीत्सम्मृड्ढीति ब्रवीतीत्यर्थः ।

स्यादिशब्दस्य लोपेन समिध आहो यसदादीति द्रष्टव्यम् । समिदादानं च प्रैषाङ्ग केचिदिच्छन्ति । तदुत्तरकालीनप्रैषविधानात् । न चाध्वर्योः समिदाधानं येन दृष्टार्थता स्यात् । अत आदानस्य प्रैषार्थतेति । तस्यानुपपन्नमदृष्टार्थप्रसङ्गात् । दृष्टार्थश्चात्र आधानं तत्तश्च तादर्थ्ये नादृष्टपरिकल्पनं भवति । नन्वाधानमग्नीधो नाध्वर्योरिति कथं दृष्टार्थता स्यात् । उच्यते । अर्थादग्नीधः समर्पयिष्यत्येव दृष्टार्थता सम्भवति । तस्मादाधानार्थमेव । एवं च सत्यवभृथेनुयाजसद्भावादाधानाभावादनादानमिति । उल्मुकसमासश्चानुयाजार्थे आहवनीयसंस्कारः । तथाचाऽस्त्वनुयाजनिर्वृत्युत्तरकाल पुनरसमासः । स्वावयवेनोपचयस्य संस्कारत्वादवभृथेष्वामपि प्रवर्त्तते । अग्निमग्नीत्सम्मृड्ढीति वाक्यस्य विपरिणामश्चोदितार्थाभिधानात् ॥ १०१ ॥

एधात इति होतानुमन्त्रयते ॥ १०२ ॥

अनुमन्त्रणं च समिधः स्यात् । तां होतानुमन्त्रयत इति वचनात् । मन्त्रलिङ्गाच्च । ततश्च वरुणप्रघासेषु विपरिणामः । एते ते समिधौ ताभ्यामिति ॥ १०२ ॥

[1]अजानति यजमानः ॥ १०३ ॥

स यदि मन्येत न होता वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रयेतेति वचनात् ॥ १०३ ॥

संमार्ष्टि पर्यूवदपरिक्रामं, सकृत्सकृत्ससृत्रा, समिति ॥ १०४ ॥

पूर्ववदग्निं सम्मार्ष्टि अपरिक्रम्य सकृत्सकृत् । त्रिस्त्रिः परिक्रम्येति मा भूत् । सदृत्राःसमिति च विशेषमन्त्रस्य चावभृथे परिणामः ॥ १०४ ॥

---

[1] अनुमन्त्रण कर्तुं होतरि अजानति यजमान. एधात इति सःमिधमनुमन्त्रयते इत्यर्थः ।

ब्रह्मानुज्ञातोनुयाजैस्त्रिभिश्चरत्यौपभृतꣳ समानीय ॥ १०५ ॥

ब्रह्मानुज्ञात इत्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः । उक्तं च ॥ एतं त इति समिदामन्त्रितः प्रसौतीति । वाच्यं वा तदनुज्ञोत्तरकालं प्रवृत्तिर्यथा स्यादिति । अथवा प्रैषसमनन्तरं तदर्थप्रवृत्तिर्गाभूत् न्यायतो हि प्रैषसमनन्तरं प्रैषार्थः प्राप्नोति तन्माभूदित्यत इदमुच्यते । ब्रह्मानुज्ञात इति । तत्रयानुज्ञात उत्तरेणाहवनीयꣳ मम्प्रति निदधातीति । त्रिभिरिति चानुयाजत्रित्वप्रज्ञापनायोच्यते । अथवा चतुर्थस्यानुयाजाभावप्रज्ञापनार्थम् । यद्येवमनुयाजान्ते स्वरु जुहोतीति प्राक् ततः स्वरुहोमः प्राप्नोति । नैतदेवम् । अनुयाजाङ्गं ह्यसौ तदन्त एव निरुपचरितान्तस्तस्माददोषः । औपभृतꣳ समानीय जुह्वाम् ॥ १०५ ॥

अतिक्रम्याश्राव्याह देवान्यजेति ॥ १०६ ॥

अतिक्रम्याश्रावणवचनमनुवाक्यानिरासार्थम् । याज्यापुरोनुवाक्यावन्तो यजतय इत्यनेन प्राप्तत्वात् । अथ यदपुरोनुवाक्यका अनुयाजा भवन्तीति विशेषवचनात् तन्निरासः । तस्मात्साध्वभिहितमतिक्रम्याश्राव्याह देवान्यजेति ॥ १०६ ॥

यज यजेत्युत्तरौ ॥ १०७ ॥

उत्तरौ द्वावनुयाजौ प्रति यज यजेत्येवं वक्तव्यम् । एवं हि श्रूयते ॥ १०७ ॥

देवान् देवानिति वा सर्वत्र नियमशब्दात् ॥१०८॥

सर्वत्र देवान्यजेत्येवं प्रयोगः । कुत एतत् नियमशब्दात् । देवान्यजेत्येवाध्वर्युराह, देवं देवमिति सर्वेषु होतेति । अथ यज यजेत्युत्तरयोरभिधीयते तत्रैवकारो न समर्थितः स्याद्देवान्यजेत्येवाध्वर्युराहेति ॥ १०८ ॥

किञ्च—

विकृतिदर्शनाच्च ॥ १०९ ॥

विकृतौ हि दर्शनं भवति । अतिक्रम्याश्राव्याह देवान्यजेति । सोऽप्ययर्हिषी ह्यावनुयाजौ यजतीति । तेन नियमशब्दाद्देवान् देवानिति वा सर्वत्र । यजेति चोत्तरयोरिति तु शास्त्रान्तरात् । एवं च सति प्रकरणप्रयासाद्वौ यत्र यज यजेति पुनर्वचनम् तत्र नियम एवेष्यत इति सम्प्रदायः ॥ १०९ ॥

१प्रतीचो जुहोति ॥ ११० ॥

प्रत्यञ्चोऽनुयाजास्तद्दपानमिति वचनात् ॥ ११० ॥

उपसत्सु च ॥ १११ ॥

अधिकारमुपजीवन्नाह । उपसत्सु च प्रत्यञ्चो होमाः । तुल्यं हि शास्त्रमन्नावि ॥ १११ ॥

प्रतीचां जुहोतीति वचनात्कर्तुरपि प्रत्यगपसरणे प्राप्ते ऽनियमे वा नियमार्थमाह—

२ध्रुवः ॥ ११२ ॥

चतुर्थे समानीय प्राचीम् ॥ ११३ ॥

चतुर्थे होमं प्रति औपभृतं समानीय प्राचीमाहुतिं जुहोति । तत्र यजति स्थानादेत्य । यजतीनां हि स्थानं परिभाषितम् । तिष्ठन्नुदङ् प्राङ्किति । तथाचोक्तं परिधीनपरेण सञ्चरो होष्यत इति । ननु च होममात्राभिसम्बन्धात्सर्वत्रैवं प्राप्नोति । नाश्रावणाभिसम्बन्धात् आश्रावयिष्यन् स्रुच्येनातिक्रामति दक्षिणेनाश्राव्येति । नन्वाश्रावणातिक्रमणविशेषे इदं वचनं अनाश्रावणहोमे त्वनियम इति । उच्यते । एतन्मूलमेवैतत्सूत्रं वचनान्तराभावात् । तस्मादाश्रवणसम्बन्धेऽप्येवातिक्रमणं नेतरत्रेति । इतरहोमस्तूत्तरत एव व्यवस्थितेन कर्तव्यः । तथोक्तमुत्तरत उपचारो यज्ञ इति । चतुर्थग्रहणं चानुयाजाङ्गत्वप्रज्ञापनार्थम् । इतरथा ह्यनुयाजत्रयव्यतिरेके-

---

१ एतस्मिन्ननुयाजप्रभृतिं प्रत्यक् संस्थाय जुहोतीत्यर्थः ।

२ अध्वर्युरेकत्र स्थित एव त्रीननुयाजान् प्रत्यक् संस्थान् जुहोति न प्रत्यनुयाजं प्रत्यगपसरतीत्यर्थः ।

ण दक्षिणेन हस्तेन जुहूं प्राचीं व्यूहतीति । अग्नीषोमौ तमितीतरेण सव्येन इतरामुपभृतं नीचा प्रतीचीं व्यूहति । अत्र प्रतीचीमिति प्रत्यङ्मुखीमुपभृतं कृत्वा प्रतीचीमेव केचित्प्रेरयन्ति । तदेतन्नोपपद्यते। यत्कारणं प्रतीचीमित्येक शब्द स यदि वा प्रेरणेन सम्बध्यते स्रुचा वेति । तत्र प्रेरणाभिसम्बन्धो युज्यते । यत उपभृतं प्रतीचीं सव्येने त्येव मुक्त्वाह अपाञ्च तमपोहति योऽस्मा अरातीयतीति । अथ कस्मात्प्रतीचीमित्यस्य प्रेरणसम्बन्ध स्रुक् सम्बन्धश्च नेष्यते । अस्ति किल शाखिना वचनं नानाविषूची नौ व्यूहतीति । नैतदेव वचनमस्ति नास्तीति सन्दिग्धम् । अथाप्यस्ति तथापि माध्यन्दिनपाठार्थ एव तस्यापि वचनस्य नानाविषूची नौ व्यूहतीति । विष्वञ्च्यासी । उच्चीसमघापे । नानाभ्यतिसमचापिनी व्यूहतीत्यर्थ । तेन प्राचीं प्रतीचीमित्येतदेवोक्तं भवति । ततश्च प्राच्येव प्रतीची प्रयते ॥ ११७ ॥

यथा देवतमन्यत् ॥ ११८ ॥

प्रकृत्यर्थ एवायमारम्भ । विकृतौ सूत्रारम्भसामर्थ्यात् । यथार्थमूहश्चादित इति । तेन प्रकृतावेवाग्नीन्द्रमित्रावरुणाद्यर्थ वचनम् । ननु एवं सति इन्द्राग्न्योरिति व्यूहनमवाच्यम् । समाम्नायप्रदर्शनार्थत्वाददोष । तत्पुनर्वचनं पयादिना पूर्वान्तं इत्यनेन इन्द्राग्न्योरुज्जितिमित्यस्यापि प्राप्तिर्मा भूदिति प्रकृत्यर्थम् । उपांशुयाजपुरोडाशाग्नीषोमयोस्तु तन्त्रेणोच्चारणं गुणभेदाभावात् ॥ ११८ ॥

अध्वर्युर्वामनूज्जयत्वयं यजमानो वाजस्यैनमिति पूर्वे, यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे ॥ ११९ ॥

अध्वर्युर्वा स्रुचौ व्यूहति । तुल्यशाखत्वात् । यदि स्वय यजमानो यद्यु अध्वर्युरिति । तदा मन्त्रे विशेषमाह । अनूज्जयत्वय यजमानो वाजस्यैनमिति पूर्वे । यमय यजमानो द्वेष्टि यश्चैन द्वेष्टीत्युत्तर इति । यजमानपदस्य चात्र समवायादनेकयजमानके सविशेषणस्य विपरिणाम । व्यूहनस्य चेष्टदेवतासङ्कीर्तनार्थतया कृतप्रयोजनस्यास्य संस्कारद्वारेण चान्वापच्छिन्नेऽपि प्रयोग ।यपडान्तातिप्यास-

न्तिष्ठत इति । तत्रापि हि देवतासङ्कीर्त्तनमिष्यते । इष्टत्वाद्देवतायाः कृतप्रयोजनकत्वात्स्रुचाम् । तथाच सूत्रप्रस्थानं व्यूहनपरिध्यञ्जने कुर्वैक इति ॥ ११९ ॥

अभ्युक्ष्य जुह्वा परिधीननक्ति यथापूर्वं वसु-
भ्य इति प्रति मन्त्रम् ॥ १२० ॥

अभ्युक्षणं च जौहवः स्यात् । कार्याभिसम्बन्धात् । जुह्वेति जौहवेनेत्यर्थः । यथापूर्वमिति न्यायात् । अथ वा प्रदक्षिणोपचारोदक्संस्थतासम्पत्त्या दाक्षिणस्य प्रथमं मा भूदिति । अस्तु तथेति चेत् । न, तस्य स्मार्त्तत्वात् । एतत्तु वाचनिकमिति । वसुभ्य इत्यनेन मन्त्रेण प्रति मन्त्रम् । अत्र रुद्रेभ्यस्त्वेति चतुर्थ्यन्तनिर्देशाद्रौद्रोयमिति केचित् । ततश्च तदन्त उदकोपस्पर्शनमिति । तदयुक्तम् । परार्थत्वाद्रुद्रपदस्य । नात्र रुद्रस्य देवतात्वम् । हविर्भाग्वा देवतास्यात्सूक्तभाग्वा । न चात्र रुद्रो हविर्भजते, न च सूक्तम् । परिधिपरत्वान्मन्त्रस्य । रुद्रेभ्यस्त्वा अनज्मीत्यज्यमानपरिध्यभिधानम् । अतस्तत्प्रशंसार्थं वस्वाद्युच्चारणम् । एवं प्रशस्तमिदमञ्जनं यत्क्रियमाणं वसुभ्यो रुद्रेभ्यश्च क्रियत इति । तस्मादरौद्रत्वान्नोदकोस्पर्शनमत्रेति ॥ १२० ॥

प्रथमं परिधिं गृहीत्वाश्राव्याहेपिता दैव्या
होतारो भद्रवाच्याय प्रेषितो मानुषः सू-
क्तवाकाय सूक्ता ब्रूहीति ॥ १२१ ॥

प्रथमग्रहणमनियमव्युदासार्थम् । अन्यथा हि यः कश्चिद्गृह्णीत । परिधिग्रहणं च परिधिसंस्कारार्थम्, ग्रहणक्रियाकर्मभावनिर्देशात् । परिधिमभिपद्याश्रावयतीति । तथा परिधिभ्यो ह्येनदाश्रावयतीति आश्रावणस्य तादर्थ्यं दर्शयति । तथा आश्राव्याहेपिता दैव्या होतार इति प्रकृत्याह । दैव्या वा एते होतारो यत्परिधय इति परिध्यर्थतां मन्त्रस्य दर्शयति । सूक्तवाकप्रेषणक्रियोपग्रहार्थं वा । तदागमे विधानाल्लिङ्गाच्च । इषिता दैव्या होतार इति दैव्या वा एते होतारो यत्परिधयोग्नयो ह्यष्टा दैव्या होतार इति । दैव्या होतारः

प्रेषिता इदानीं भद्रवाच्याय भद्रवदनाय मानुषं होतारं सूक्तवाका- य प्रसौतीत्येकवाक्यतासामर्थ्यात्तादर्थ्यमवगम्यते । अन्यथा ह्येकवा- क्यता समधिगता भिन्नवाक्यता अन्याय्यापद्यते । तत्रैतदुक्तं भवति । एते परिधय प्रेषिता इदानीं मानुषो होता प्रेष्यत इति । प्रहरणक्रि- याकर्मभाव प्रैषार्थत्वेप्यविरुद्ध । प्रयोजनं प्रैषाभावे परिध्यनाल- म्भो यथा दर्विहोमेषु ॥ १२१ ॥

पशौ प्रैष्येति ॥ १२२ ॥

प्रहीत्यस्य स्थाने पशौ प्रैष्येति वक्तव्यम् । तत्र हि मैत्रावरुणस्य प्रैषाम्नानम् ॥ १२२ ॥

सञ्जानाथामिति प्रस्तरादानम् ॥ १२३ ॥

कर्तव्यमिति सूत्रशेष ॥ १२३ ॥

विधृती स्थाने कृत्वानक्त्येनं व्यन्तु वय इति ॥ १२४ ॥

विधृत्योःस्थानमाहवनीय । सर्वहविषां तदधिकरणत्वात् । अन- क्त्येन प्रस्तरं व्यन्तु वय इत्यनेन मन्त्रेण ॥ १२४ ॥

कथम्—

अग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ॥ १२५ ॥

ध्रुवायाम् । प्रस्तरसंस्कारश्चायम् । तथा चोपभृदाद्यभावेपि प्रस्तरोऽज्यत एवेति ॥ १२५ ॥

मरुतामिति नीचैर्हृत्वा तृणमादायानु- प्रहरति ॥ १२६ ॥

मरुतामित्यनेन मन्त्रेण प्रस्तरम् नीचैर्हृत्वा ततस्तृणमा- दायानुप्रहरति ॥ १२६ ॥

हस्तेनाचरति ॥ १२७ ॥

आचरणमुपसमूहनम् । तच्च सामर्थ्यात्काष्ठादिना प्राप्त च-

चनसामर्थ्याद्धस्तेनैवोच्यते। तमङ्गुलिभिरेव योयुप्येरन् काष्ठैरिति॥ १२७॥

हस्ताचरणाधिकारमुपजीवन्नाह—

यजमानभागं च प्रोषिते॥ १२८॥

प्रोषिते यजमाने तद्भागं च हस्तेनैवाचरति। तच्च स्वावसर एव, गुणपरत्वाद्वचनस्य॥ १२८॥

क्षत्रियवैश्ययोश्च नित्यम्॥ १२९॥

क्षत्रियवैश्ययोः पुनर्नित्यमेव हस्तेन भागो होतव्यः॥ १२९॥

अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि ममैव सन्दिवि देवेष्वाधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहेति॥ १३०॥

अनेन मन्त्रेण॥ १३०॥

सूक्तवाकान्ते॥ १३१॥

इत्यस्य तृणमादायानुप्रहरतीत्यनेन सम्बन्धः। एवं ह्यामनन्ति सूक्तवाकेन प्रस्तरं प्रहरतीति। तत्रैतत्सन्दिह्यते। किं सूक्तवाकप्रस्तरद्रव्ययोरङ्गाङ्गिलक्षणः संयोग. । उत कालार्थ इति?। किं तावत्प्रतिभाति। अङ्गाङ्गिलक्षण इति। कुत एतत्। सूक्तवाकेनेति करणविभक्त्या निर्देशात्। प्रस्तरमिति च कर्मविभक्त्या। सूक्तवाके एव याज्या प्रस्तरमाहुतिरिति चामनन्ति। तत्राय यागः प्रस्तरद्रव्यकः। अग्न्यादिदेवताकश्च। अग्न्यादयो ह्यत्र सूक्तवाके सङ्कीर्त्यन्ते। मन्त्रस्य च क्रियासाधनप्रकाशकत्वमुचितम्। तेनात्र प्रस्तरद्रव्यस्याग्न्यादयो देवता इति गम्यते। स्पष्टतरं चैतदभिधीयते। अग्निरिदं हविरजुषतावीवृधतेति। इदमिति सन्निहितं प्रस्तरद्रव्यं निर्दिशति। अपि च। फलसङ्कीर्तनं भवति। आयुराशास्त इत्येवमादि। तेन प्रस्तरद्रव्यकः सूक्तवाकमन्त्रकश्चाग्न्यादिदेवताकश्चायुरादिफलको होम इति। तदेतदपरे नेच्छन्ति। उभयोः परार्थत्वात्। प्रस्तरस्य हि स्रुग्धारणार्थता ज्ञाता। प्रस्तरे जुहूः

सादयतीति । सूक्तवाकस्य चेष्टदेवतासङ्कीर्त्तने दृष्टार्थे इति तदर्थोऽध्यवसानं युक्तम् । अतो निर्ज्ञातार्थयोः संयोगः स कालार्थ एव भवति । यथेध्मप्रक्षेपसामिधेन्यनुवचनयोरिति । तदन्ते प्रक्षिप्यमाणः प्रस्तरः सूक्तवाकेनैव प्रहृतो भवतीति वचनं सूक्तवाकेन प्रस्तरं प्रहरतीति । सूक्तवाक एव याज्या प्रस्तरं आहुतिरिति चैवमेव द्रष्टव्यम् । यथाग्न्यादिसङ्कीर्त्तनं तत्प्रधानयागेष्टदेवताभिधानपरम् । कर्मनिर्वृत्त्युत्तरकालमपि हि कृताकृतप्रज्ञप्त्या देवतास्मरणं दृष्टार्थमेव भवति । अतो न प्रस्तरदेवतात्वेनाग्न्यादिसङ्कीर्त्तनमिति । न हि प्रस्तरस्य चाग्न्यादीनां च सम्बन्धो ज्ञातः । येन प्रस्तरदेवतासङ्कीर्त्तनं भवेदिति । यथाग्निरिदꣳ हविरिति सन्निहितप्रस्तराभिनिर्देशक इति । तदपि प्रस्तरस्य प्रतिपाद्यस्य हविष्ट्वानुपपत्तेः तत्प्रतिनिर्देशाभावात्पुरोडाशादिविषयमेव । यथायुरादिफलसङ्कीर्त्तनं तदपि स्तुतिमात्रपरम् । न ह्यायुरादिफलता प्रस्तरप्रहरणस्य वाक्यादवगता । न च मन्त्रे सङ्कीर्त्तनमात्रादेव निर्ज्ञातप्रधानसम्बन्धस्य फलवत्ता शक्याभ्युपगन्तुम् । न चाफलवत् फलवत्वोक्तं भवति वचनमन्तरेण । तस्मान्नाङ्गिलक्षणः संयोग इति । प्रयोजनं प्रस्तरप्रहरणाभावेप्यातिथ्यादौ सूक्तवाकः प्रयुज्यत एव ॥ १३१ ॥

## अग्नीदाहानुप्रहरेति ॥ १३२ ॥

अग्नीद्वचनं न कर्त्तव्यम् । प्रैषार्थेध्वर्युः प्रैषेचाग्नीदित्युक्त्वा स्वयं चाविरोधादित्यत्र । तेन वरुणप्रघासादिष्वविपरिणामार्थमिति केचित् । तत्कथम् । वचनात् । वचनं हि तत्र भवति । अथाग्नीदाहानुप्रहरेति ता उभावेवानुप्रहरत इति । तदेतदसत् । न हि वरुणप्रघासेष्वनुप्रहरेत्यस्य विपरिणामो न युज्यते । प्रकृतौ प्रहरणक्रियाकर्तुरेकस्य प्रैषणम् । विकृतौ द्वयोः कर्त्रोरिति । न च भेदेन प्रैषदानं प्रयोगवचनेन मा बाधीति । तस्माद्युक्तरूप ऊहः । न च तत्राग्नीदाहानुप्रहरेति विधानम् । प्रकृतितः प्रासरत्वात् । अतो यथाप्राप्तस्यानुवादोयम् । अतः श्रुत्यनुकरणमेतत् । अथवा ऽध्वर्योः प्रैषार्थकर्तृत्वे सति य. कश्चिदप्रेषणायां स्याच्चाध्वर्युप्रयासक्तेरग्नीद्यथा स्यादित्येवमर्थमग्नीद्ग्रहणम् । न्यायतः प्राप्त एव चाग्नीदभिधीयते अन्यथापि स एव यथा स्यादिति । यथा हन्त्यग्नौ दृषदुपले इति । यथा

चातः पत्न्यवद्दन्यन्यो चेति । एवं च सत्यनेनैव न्यायेन ज्योतिष्टोमे प्रतिप्रस्थातुः प्रैषे ऽधिकारः । अपि चाह—

उक्तत्वात्प्रेषणेन्यस्य तद्विशेषो वसीयते ।
तेन सुवक्तृना प्रोक्तमग्नीद्ग्रहणमत्र तु ॥ १३२ ॥

प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभते ॥ १३३ ॥

प्रस्तरसम्बद्धं तृणमाहवनीये प्रास्य चक्षुष्पा इत्यात्मानमालभते । स चायं तृणप्रहरणे सति भवति । तेनो अप्यात्मानं नानुप्रहरणकीति लिङ्गात् । करिष्यमाणप्रयोजनात्मसंस्कार इत्यपरे । तथा च सर्वत्र प्रवृत्तिः ॥ १३३ ॥

संवदस्वागानग्नीदगन्श्रावय श्रौषट् स्वगा-
दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रू-
हीत्येतेषां, संवदस्वागन्श्रौषडित्यग्नीच्छेष-
मितरो व्यत्यासं ब्रूतः ॥ १३४ ॥

सम्वदस्वेत्येवमादीनां सम्वदस्वागन्श्रौषडित्यग्नीदाह शेषं चाध्वर्युर्व्यत्यासेन । तत्र चास्य शंयोर्वाकार्थत्वात्तदभावे निवृत्तिः । शंयोर्वाकश्चार्थकर्मत्वाद्यावदुक्ते निवर्त्तते ॥ १३४ ॥

परिधीननुप्रहरति यं परिधिमिति प्रथममितरौ
च युगपदग्नेः प्रियमिति ॥ १३५ ॥

प्रतिपत्तिश्चरितार्थत्वात् । ततश्च यावदुक्तान्तापच्छिन्नयोरपि प्रवृत्तिः । प्रहरणमन्त्रयोश्चाग्न्यभिधायकत्वादवभृथे विपरिणामः ॥ १३५ ॥

स्रुचौ प्रगृह्णाति सं, स्रवभागा इति सं,
स्रवां जुहोति ॥ १३६ ॥

प्रग्रहणे मन्त्रः स्यात् । स सम्प्रगृह्णाति सं, स्रवभागास्थेति वचनात् । होमे वा स्वाहाकारवषट्कारयोस्तदर्थत्वात् । तयोश्च तत्र भा-

वाल्लिङ्गाच्च । तद्यथावपदृतं हुतमेवमस्यैतद्भवतीति । यत्पुनर्वचनं तद्धोमोपलक्षणार्थम् । प्रतिपत्त्यर्थकर्म चैतत् । ततश्चान्तापच्छिन्नेऽपि प्रवर्त्तते । अविशेषितत्वाच्च संस्रवाणां नाज्यसाधनयागशेषभूतता । अतश्च सर्वत्र प्रवृत्तिः । विश्वे देवाश्चात्र देवता । इमां वाचमभिविश्वे गृणन्त इति मन्त्रलिङ्गात् । वाक्यशेषाच्च । स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णातीति । एवं च सति दर्विहोमेषु विश्वेभ्यो देवेभ्यः स्वाहेति होमः । अथ जुहूं चौपभृतं च सम्प्रगृह्णातीति द्वयोः प्रग्रहणविधानसामर्थ्यात् उभाभ्यामपि होमः ॥ १३६ ॥

घृताची इति धुरि निदधात्यनसि-

वदग्रहणम् ॥ १३७ ॥

घृताची इत्यनेन मन्त्रेण धुरि स्रुचौ निदधाति । चरितार्थत्वाद्द्रव्यसंस्कारः । अतश्चान्तापच्छिन्नेऽपि प्रवृत्तिः । अयं धुर्यशब्दः कैश्चित् पत्नीयजमानविषयतया वर्ण्यते । धुर्याविव धुर्यौ । यथा धुर्यावनड्वाहावनसः प्रणेतारौ एवं दम्पती अपि यज्ञस्येति । एवं च सति पितृयज्ञे धुर्ये पाहीति विपरिणामः । पत्न्यभावात् । सम्प्रदाये तु नेष्यते । धुर्यशब्दस्यानडुद्विषयत्वात् । यद्यपि च तावत्र नस्त एव तथापि त्वनसानडुत्सम्बन्धोऽस्तीति । तत्र निधीयमानाभ्यां स्रुग्भ्यां तद्धिंसा मा भूदिति धुर्यौ पातमिति स्रुगभिधानं युक्तरूपम् ॥ १३७ ॥

स्फ्ये पात्र्यां चेत् ॥ १३८ ॥

पात्र्यां चेद्ग्रहणं स्फ्ये सादयति ॥ १३८ ॥

यज्ञ नमश्च त इति वेदिमालभते ॥ १३९ ॥

स चायं वेदिसंस्कारः समिष्टयजुः साधनभूतद्रव्यप्रयुक्तः । ततश्च तदभावे ऽभाव इति ॥ १३९ ॥

वेदं होता स्रुक्स्रुवमध्वर्युराज्यस्थाली-

मग्नीदादाय पत्नीसंयाजेभ्यो गार्हपत्यं

गच्छन्ति ॥ १४० ॥

तेधै पत्नीः सयाजयिष्यन्त' प्रतिपरायन्तीति प्रकृत्य जुहूं च स्रुवं चाध्वर्युरादत्ते वेदꣳ होताज्यविलापनीमग्नीदिति ह्यामनन्ति । प्रतिपरायन्तीति वचनाद्गार्हपत्यो गम्यते । विकृत्यनुप्रवृत्तिदर्शनाच्च । गृहपतेरेव गार्हपत्यं जाघन्या पत्नीः सयाजयन्तीति । स्रुवग्रहणं च उपभृद्व्युदासार्थम् । उपभरणार्थे न हि तत्प्राप्तिरिति ॥ १४० ॥

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणापरेणान्तरेण पत्नीमेकेषाम् ॥ १४१ ॥

पूर्वेणाहवनीयम् । अपरेण वा गार्हपत्यम् । तत्राप्येकेषामन्तरेण वाहवतो वा पत्नीमिति ॥ १४१ ॥

[1]उपविश्य दक्षिणं जान्वाच्य ॥ १४२ ॥

सोमादीन्यजति ॥ १४२ ॥

अधिकारमुपजीवन्नाह—

एवꣳ सर्वत्रोपविष्टहोमेषु ॥ १४३ ॥

उपविश्य दक्षिणं जान्वाच्य । यजतित्वात्तिष्ठति क्रियायां प्राप्तायां उपविश्येत्युच्यते । जान्वञ्चनं च भूमौ पातनं समाचाराद्विज्ञेयम् । ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्निति ॥ १४३ ॥

उपाꣳशु चरन्ति ॥ १४४ ॥

पत्नीः सयाजैरिति ॥ १४४ ॥

अधिकारमुपजीवन्नाह—

चरणशब्दे सर्वं देवतान्यत्र ॥ १४५ ॥

यत्र चरणशब्दस्तत्र सर्वमुपांशु भवति । तथा पितृयज्ञ उपांशु चरन्तीति । देवतान्यत्र, चरणशब्दादन्यत्रोपांशुत्ववचनं देवतामात्रमुपांशु ॥ १४५ ॥

---

१ यजतित्वात्तिष्ठद्धोमे प्राप्ते आह उपविश्येति ।

यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति ॥ १४६ ॥

स्वाद्येनाज्येन सोमादीन्यजति । चतस्रो देवता यजतीति प्रकृत्याह ता वा आज्यहविषा भवन्तीति॥ १४६ ॥

तृतीयेऽन्तर्द्धानं पुरस्तात् ॥ १४७ ॥

तृतीये पत्नीसंयाजे पुरस्तात्कटादिनान्तर्द्धानं, स यत्र देवानां पत्नीर्यजति तत्पुरस्तात्तिरः करोतीति श्रुतेः ॥ १४७ ॥

पत्न्यन्वारभतेध्वर्युम् ॥ १४८ ॥

अधिकारात्तृतीय एव पत्नीसंयाजेन्वारम्भः । अध्वर्युग्रहणाच्च न द्रव्यान्वारम्भः । स चायमध्वर्युसंस्कारो द्वितीयानिर्देशात् । ततश्च पत्न्यभावेपि यैः कश्चित्करोति ॥ १४८ ॥

शंय्वन्तं भवतीडान्तं वा ॥ १४९ ॥

यदेतत्पत्नीसंयाजकर्म तच्छंय्वन्तमिडान्तं भवति । न चात्र विकल्पः । शंयुरिडा वान्ते भवति, किं तर्हि इडामवस्येत । शंयोर्धिकल्पः । कुत एतद्यत इदमामनन्ति । तदिडान्तं भवतीति कृत्य उतो प्रस्तरस्यैव रूपं क्रियते न यदि प्रस्तरस्य रूपं कुर्यात् वेदस्यैकं तृणमाच्छिद्येत्येवमादि यावच्छंयोर्ब्रूहीति१ ॥ १४९ ॥

शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ॥ १५० ॥

---

१ गृहपतियागानन्तरं पूर्ववदिडां पश्चाच्चामादायेडां होत्रे प्रदायावियज्जन्दक्षिणातिक्रामतीडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनञ्चयान्तरिडामाश्रयाति पूर्ववदिडां च सर्वेन्वारमन्ते मर्यादमिति यजमानो जपत्युपहूतां प्राश्नन्ति युक्ता यजमानश्च पवित्रयोर्मार्जयन्ते इपरेण वेदिं सुमित्रियाव इत्येतादिडान्तं भवतीत्यभिप्रायः ।

शंय्वन्ते कर्मणि वेदतृणं गृहीत्वा प्रस्तरवदनक्ति अग्रं जुह्वां मध्यं स्रुवे बुध्नं[1] स्थाल्यां व्यन्तु वय इत्यनेन मन्त्रेण अनक्ति । प्रस्तरवदित्युपदेशात् ॥ १५० ॥

अग्नीदाहानुप्रहरेति ॥ १५१ ॥

कृतं व्याख्यानम् ॥ १५१ ॥

प्रास्य तृणादि पूर्ववत् ॥ १५२ ॥

प्रास्यतृण तदादि पूर्ववत्कर्म भवति ॥ १५२ ॥

शंय्वन्ते स्रुक् स्रुवं प्रगृह्यात्यग्ने दब्धायविति ॥ १५३ ॥

शंयोर्वाकान्ते स्रुक् स्रुवं प्रगृह्णाति अग्नेदब्धायविति जुहोति । अधिकाराद्गार्हपत्ये । प्रतिपत्त्यर्थकर्म चैतत् । पत्नीसंयाजशेषत्वाच्च तदभावे निवृत्तिः । न च पत्नी भवति । प्रतिपाद्यद्रव्याभावात् । पत्नीसंयाजानां चार्थकर्मत्वाद्यायदुक्ते निवृत्ति । ॥ १५३ ॥

सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च ॥ १५४ ॥

सव्यावर्तनविधानप्राप्त्यभावादतोऽस्य निष्क्रमणप्रज्ञापनार्थम् । ततश्च यदि पूर्वदक्षिणेन गार्हपत्यं प्रविष्टस्तदेतद्भवति नेतरत्र । तत्रापि केचित्सव्येनावृत्य इडां करोतीति सूत्रमभिसम्बन्धयन्ति । होमार्थत्वात्प्रवेशनस्य । तदयुक्तम् । अव्यवहितमम्बन्धेऽपि तदर्थोपपत्तेः । न च होमायैव प्रवेशनम् । विशेषानवगतेः । अतः साङ्गपत्नीसंयाजनिवृत्युत्तरकालमनीत्य निष्क्रमणम् । तेन सव्येनावृत्य दक्षिणाग्नौ जुहोतीति एवमभिसम्बन्धः । तथैतदर्थकर्म तनश्च यावदुक्तात्तापच्छिन्नादौ निवृत्तिः ॥ १५४ ॥

उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले उत्प्रुषो विप्रुषः सत्याः सन्तु

---

१ 'बुध्नम' मूलमित्यर्थः ।

यजमानस्य कामाः स्वाहेति पिष्टलेपां जुहोति ॥ १५५ ॥

अधिकाराद्दक्षिणाग्नावेव । पिष्टलेपसाधनत्वाच्च तच्छब्देनाहुत्यभिधानम् । अथवा पिष्टसम्बन्धिनो लेपास्तैराहुतिरिति । एवं च सति प्रतिपत्तिरेषा ततश्चेडान्तेपि कर्मणि प्रवर्त्तते । यच्च केश्चिदभिधीयते । आज्याहुतिरेषेति । तदपि पिष्टलेपग्रहणादवसन्नम् । प्रतिपाद्यमानेपि हि द्रव्ये जुहोति संशब्दनादत्र देवतया भवितव्यम् । देवतोद्देशेन हि परित्यक्तस्य द्रव्यस्य प्रक्षेपे जुहोति शब्दो वर्त्तते । न चात्र देवता गम्यते । तद्धितेन चतुर्थ्या वा । मन्त्रोपि चानिर्दिष्टदेवता लिङ्ग एव । उलूखलादीनां चात्रोपादानमाक्षिप्तविशेषणत्वेन न देवतात्वेन । यदुलूखलादिष्वाश्लिष्टं तज्जुहोतीति सम्बन्धो न तेभ्य इति । कामानामपि चात्र सत्यता प्रार्थ्यते । ततश्च तेषामपि न देवतात्वम् । एवञ्चानवगतदेवताको होम इत्यनुपपन्नम् । अत्रोच्यते । अनादिष्टदेवतालिङ्गेष्वपि मन्त्रेषु देवतापेक्षायां सत्यां किं यत्किञ्चिद्देवतान्तरं परिकल्प्यतामुत प्रकृतैव गृह्यतामिति । तत्र प्रकृतपरिग्रहोन्याय्यः । सन्निधानात् । अप्रकृतोपादाने पुनरसन्निधानात्सन्देह इति । तथा च नैरुक्ताः । तद्येनादिष्टदेवतामन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवतीति । तत्राप्याग्नेयोपांशुयाजाग्नीषोमीयसन्निधाने पुरोडाशसम्बन्धिनः पिष्टलेपा इति सन्निधानविशेषादाग्नेयाग्नीषोमीयदेवतापरिकल्पनं न्याय्यतरम् । तदुद्देशेन हि तद्द्रव्यं गृहीतं यच्छेषोयमिति । उपांशु याजस्याप्यदेवतानामसम्बन्धादतद्देवतात्वम् । केचित्तु सम्बन्धाविशेषे सत्यप्येकयैव देवतया कार्याभिनिर्वृत्तेर्मुख्यत्वादग्निमेव प्रकल्पयन्ति । विकारेतर्हि कथम् । तत्रापि वैकृतदेवताभिसम्बन्धात् तद्देवत्यत्वपरिकल्पने प्राप्त उच्यते । प्रकृतदेवताभिस्तद्धानेन मन्त्रो विकृतिमुपाछैतीति न वैकृत्यदेवता घटते । न ह्यस्य विकृतौ पाठ इति । तस्माद्विकृतावपि प्रकृतदेवताकत्वमेवेति ॥ १५५ ॥

पत्नी वेदं प्रमुञ्चति वेदोसीति योक्त्रं च प्रमामुञ्चामि वरुणस्य पाशायेन मा बध्ना-

रसविता सुशेवः ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधात्विति ॥१५६॥

च शब्दात्पत्न्येव, कृतप्रयोजनत्वात्प्रतिपत्तिरूपता । ततश्चान्तापच्छिन्नेऽपि प्रवृत्तिः ॥ १५६ ॥

स्तृणात्यावेदेः ॥ १५७ ॥

त्तृ होता आवेदेस्तृणातीत्येतच्छ्रूयते । द्रव्यविपर्ययमाङ्शब्दप्रयोग इति मर्यादा प्रतिपत्तव्या । कर्मविषये त्वभिविधिरिति परिभाषितम् । आमुष्मादिति कर्मसु तथेति । अथ हौत्रे स्पष्टतरं वचनं ततोऽत्राप्यभिविधिरस्तु ॥ १५७ ॥

ध्रौवृ; समिष्टयजुर्जुहोति देवागातु विद इति ॥१५८॥

समिष्टयजुरिति कर्मणः संज्ञा । समिष्टयजुरन्तं भवतीत्येवमादर्शः । जुव्हा वचन इति जुह्वैव होमः । जुहोतिस्त्वार्थोपदिष्टस्य । तिष्ठन् ध्रुवया समिष्टयजुर्जुहोतीति तु नोपनिबद्धम् । अर्थकर्मचैतत् । ततश्चान्तापच्छिन्ने निवृत्तिः । वातश्चात्र देवता । स्वाहा वातेधा इति लिङ्गात् । ननु च देवागातु विद इति सम्बुद्धिनिर्दिष्टानां देवानां देवतात्वमस्तु । नेत्युच्यते । न हि ते हविः सम्बन्धितया सम्बोध्यन्ते । किं तर्हि विसर्गाय देवागातु विदोगातुं यज्ञं वित्त्वा गातुं गन्तव्यमितो गच्छतेति । तथा च लिङ्गम् । तदेतेन यथायथं व्यवसृजन्तीति । तेन विसर्गाय सम्बोधनम् । मनसस्पतेस्तर्हि देवतात्वमस्तु । तस्य हि सम्बोधनं मनसस्पत इमं देवयज्ञमिति देवयज्ञसम्बन्धस्तस्यावगम्यत इति । नैतदेवम् । तस्यापि ह्यत्र पारार्थ्येनैव श्रवणम् । मनसस्पतिरुच्यते इमं यज्ञ वाते धेहीति । न यज्ञसम्बन्धो मनसस्पतेः । गतेषु देवेषु मनसस्पतिरिमं यज्ञं वाते स्थापयत्वित्याशास्यते । एवं सप्तमीनिर्दिष्टस्यापि तस्यैव देवतात्वमनुरूपतरम् । यज्ञशब्देन चात्र लक्षणया द्रव्यं वोच्यते, कर्म वा । द्रव्यवचनत्वे द्रव्यस्य वाते स्थापनं तदुद्देशादेनैवोपपद्यते, नान्यथा । कर्मवचनेऽपि च कर्मणोऽपि तत्साधनभावाभ्युपगमने वाते स्थापनमुपपद्यते । तस्माद्वात एवात्र देवतेति । प्रयोजनं जुहोतौ वाताय स्वाहेति प्रयोगः ॥ १५८ ॥

बर्हिः सम्बर्हिरिति ॥ १५९ ॥

जुहोतीति वर्त्तते । सम्बर्हिरित्यनेन मन्त्रेण बर्हिर्जुहोति । प्रतिपत्तिश्चरितार्थत्वात् । तश्चान्तापच्छिन्नैष्यनिवृत्तिः ॥ १५९ ॥

वेद्यां प्रणीतानिनयति परीत्य कस्त्वेति ॥ १६० ॥

परिगमनं कर्तुरेव न प्रणीतानाम् । तत्परिगमने हि प्रणीये-त्येवमवक्ष्यत् । प्रतिपत्तिश्चरितार्थत्वादिति । प्रणीतासम्बन्धादाह-वनीयं परीत्येति ॥ १६० ॥

पुरोडाशकपालेन कणानपास्यत्यधः कृष्णा-जिनं रक्षसामिति ॥ १६१ ॥

पुरोडाशकपालयोर्भूतपूर्वगत्या सम्बन्धविवक्षेयम् । न हि वर्त्तमानः कपालस्य पुरोडाशेन सम्बन्धोऽस्ति । तस्य कारणत्वेन निर्दिश्यमानेऽपि पुरोडाशो नास्ति यथा चर्विष्या तत्रापि कपालमात्रमुपादेयम् । तच्चैतद्देवताभिसम्बन्धात्प्रतिपत्त्यर्थकर्म केश्चिदिष्यते । देवताभिसम्बन्धश्च मन्त्रवर्णाद्रक्षसां भागोऽसीति । वाक्यशेषाच्च । ततो देवा सर्वं यज्ञं समुज्जयेति प्रकृत्य । अथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनानिरभजन्नस्तापशो फलीकरणैर्हविर्यज्ञादिति रक्षांसि फलीकरणैर्निर्भक्तानित्याह । ततश्च तेषां देवतात्वमिति । नैतदेवमित्यपरे । न ह्यत्र देवता चोद्यते । नात्र चतुर्थीतद्धितो वा । येन देवतागम्यते । मन्त्रवर्णादपि देवताकल्प्यते यत्र जुहोति चोदना । तत्र हि देवतोद्देशेन परित्यक्तस्य द्रव्यस्य प्रक्षेपो युज्यते । तत्रावश्यम्भाविन्या देवतायां मन्त्रवर्णस्य च क्रियासाधनाभिधायित्वसामर्थ्यात्ततो देवतापरिकल्प्यते । न चेह होमश्चोद्यते । तस्मान्न देवता परिकल्प्यते । मन्त्रवर्णवाक्यशेषो त्वर्थवादप्रायः प्रयोजनं न देवताभिधानमत्र । न चायं रक्षोभिधायकः । द्रव्यपरत्वान्निर्देशस्य । ततश्च नोदकोपस्पर्शनमत्र ॥ १६१ ॥

पूर्णपात्रं निनयति परीत्य सन्ततं यजमानो-

अञ्जलिना प्रति गृह्णाति संवर्च्चे सेति ॥ १६२ ॥

आहवनीयं परीत्य पूर्णपात्रं निनयति । संस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयतीति वचनात् । सन्ततमित्यव्यवच्छिन्नम् । यजमानश्च तदञ्जलिना प्रतिगृह्णाति सवर्चसमित्यनेन मन्त्रेण । पदार्थश्चायं ततश्चान्तापच्छिन्ने निवर्त्तते । तत्रैतद्विचार्यते । किं नयनं प्रधानमुत ग्रहणमिति? । किं चातः । यदि निनयनस्य प्राधान्यम् । प्राप्तितोऽपि यजमान इहैव कर्त्तव्यम् । अथ ग्रहणस्य प्राधान्यम् । यत्र यजमानस्तत्र पूर्णपात्रो निनेयः । पूर्णपात्रं निनयतीति वचनात् निनयनस्य प्रधानताग्रहणस्य तु तादर्थ्यम्।तदञ्जलिना प्रतिगृह्णातीति ग्रहणार्थता वा निनयनस्य । चोदितत्वाविशेषात् । दृष्टोपकाराभिनिर्वृत्तेश्च । सन्नयति हि निनयनं ग्रहणस्य दृष्टमुपकारम् । अन्यथा ग्रहणानभिनिर्वृत्तेः । न तु ग्रहणं निनयनस्य दृष्टोपकारोपजनकम् । तदभावेऽपि निनयनोपपत्तेः । तस्माद्ग्रहणार्थं निनयनमिति द्वादशाहे सर्वग्राह्यः ॥ १६२ ॥

मुखं विमृष्टे ॥ १६३ ॥

अधिकाराद्यजमान एव ॥ १६३ ॥

विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रति मन्त्रं पृथिव्यामितीत ऊर्ध्वो वा ॥ ६४ ॥

पृथिव्यामिति इतो मन्त्रपदादूर्ध्वो वा । क्रमणं तु प्रागुदग्वाऽपमपि पदार्थ एव ॥ १६४ ॥

अस्मादन्नादिति भागमवेक्षते ॥ १६५ ॥

साकाङ्क्षत्वाद्विभक्त इत्यनुषङ्गः । भागसंस्काराच्चान्तलुप्तेऽपि प्रवृत्तिः । एतस्मादेव यद्युयजमानकेऽप्येकः करोति । स्वांशावेक्षणमित्यपरे । एककर्तृकत्वं चान्वारम्भः ॥ १६५ ॥

अस्यै प्रतिष्ठाया इति भूमिम् ॥ १६६ ॥

अवेक्षत इति क्रियापदानुषङ्गः । मन्त्रे च ततोनिर्भक्त इत्येवमादि । स चायं पदार्थोऽर्थकर्मत्वादन्तलुप्ते निवर्त्तते ॥ १६६ ॥

अगन्मस्वरिति प्राङ् ॥ १६७ ॥

ईक्षत इति वर्त्तते । एतदप्यर्थकर्मैव । नात्र प्रतिपत्तिरूपतेति ॥ १६७ ॥

संज्योतिषेत्याहवनीयम् ॥ १६८ ॥

ईक्षत इति च वर्त्तते । अप्रतिपत्तिरूपत्वादेतदप्यर्थकर्म । ज्योतिषा हि सम्भवनमत्रप्रार्थ्यते । तेन यागसाधनभूताहवनीय इत्यसंम्बन्धेपि सति न तत्संस्कारपरिकल्पनम् । एवं चासलोपे निवृत्तिः ॥ १६८ ॥

स्वयम्भूरिति सूर्यम् ॥ १६९ ॥

स्वयम्भूरित्यनेन मन्त्रेण सूर्यमवेक्षते ॥ १६९ ॥

वर्च्चोदा इति यं वा कामं कामयते ॥ १७० ॥

वर्च्चोदा असीत्यत्र मन्त्रप्रयोगः । यं वा कामं कामयते तद्वाचि पदप्रयोगो वा । सूर्यावेक्षणमपि अर्थकर्म एव ॥ १७० ॥

सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ १७१ ॥

प्रदक्षिणग्रहणादितरथावृत्तिव्युदासः । अथवा श्रौतमेतदिति । आश्वलिसामन्येषु प्रदक्षिणमिति तस्मात्तम । श्रौते सति कोविशेष इति चेत् । श्रौत प्रायश्चित्त तदपचारे यथा स्यादिति ॥ १७१ ॥

प्रदक्षिणाधिकारमुपजीवन्नाह—

ग्रहग्रहणप्रतिगरहोमेषु च तूष्णीम् ॥ १७२ ॥

ग्रहग्रहणादिषु तूष्णीं प्रदक्षिणावर्त्तनम्१ ॥ १७२ ॥

---

१ कर्त्तव्यमिति शेषः । इदमत्रानुसन्धेयम्, सशस्त्रमहेष्वेषायं धर्मः न शस्त्रमात्रे प्रतीगीयं न ग्रहग्रहणमात्रे न होममात्रे इति । प्रदक्षिणक्रियाशेषत्वान्मन्त्रोपि प्राप्तस्तूष्णीमित्यनेन व्यावर्त्यत इति ।

गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति शतं हिमा इति ब्रूयाद्वा ॥ १७३ ॥

नयेति मन्त्रे विशेष । पत्नत्र्यर्थकर्म ॥ १७३ ॥

सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ १७४ ॥

गच्छति प्राङुरु विष्णविति ॥ १७५ ॥

ततोसि तन्तुरस्यनुमा तनुह्यस्मिन्यज्ञे ऽस्याः साधुकृत्यायामस्मिन्नन्ने ऽस्मिल्लोक इदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोत्विति पुत्रस्य नाम गृह्णाति ॥ १७६ ॥

पुत्रस्याशी प्रार्थनार्थत्वादूद्धादशाहे प्रतिपद्यमाने पुत्रनाम ग्रहणम् ॥ १७४ ॥ १७५ ॥ १७६ ॥

आत्मनो ऽविद्यमाने तन्तवे त्वा ज्योतिषे त्वेति वा ॥ १७७ ॥

अविद्यमाने पुत्रे आत्मनो नाम गृह्णीयात् । तत्स्थाने तन्तवे त्वा ज्योतिषत्वेति वा प्रयोग ॥ १७७ ॥

आहवनीयमुपतिष्ठते तूष्णीम् ॥ १७८ ॥

मन्त्राभावाल्लौकिकवागुच्चारणप्रतिषेध ॥ १७८ ॥

वृतं विसृजते येनोपेयात् ॥ १७९ ॥

येन मन्त्रेणोपेयात्तेनैवोत्सर्ग ॥ १७९ ॥

संयज्ञपतिराशिषेति भागं प्राश्नाति ॥ १८० ॥

साकाङ्क्षत्वात् युज्यतामित्यध्याहार । व्रतविसर्गभागप्राशन-

तयोरन्तापच्छिन्नेऽपि प्रवृत्तिः प्रतिपत्तिरूपत्वात् ॥ १८० ॥

ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयतीति श्रुतेः ॥ १८१ ॥

श्रुत्युपादानसामर्थ्यात्तदनुष्ठानं यथा स्यात् प्रैषवचनमात्रमेव मा भूदिति ॥ १८१ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे तृतीयोऽध्यायः समाप्तः ।



# चतुर्थोऽध्यायः ।

अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् ॥ १ ॥

श्रुत्यर्थमनुविधित्सुनाचार्येण पौर्णमासमनुविहितमिदानीमवसरप्राप्तं दर्शस्यानुविधानं कर्त्तव्यम्, तत्र च प्राक्कालीनः पिण्डपितृयज्ञः सोऽनुविधेय इत्यत आह । अपराह्णे पिण्डपितृयज्ञः । अह्नोऽपरो भाग अपराह्णः । तृतीयो भाग इत्यपरं वाक्यशेषात् । पूर्वाह्णो वै देवानामित्युपक्रम्य अपराह्णः पितृणामिति । पिण्डपितृयज्ञ इति पिण्डदानकर्मनाम । अर्थानुगमात्संज्ञेयम् यौगिकी पिण्डैः पितृणां यज्ञः पिण्डपितृयज्ञ इति । होमस्य च तादर्थ्यदर्शनात् । स दर्भैः प्रसूतोऽथैतत्पितृभ्यो ददातीति । मासि मासि वोऽशनमिति च प्रकृत्य यदैवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददातीत्याह पिण्डदानमेवाभिधीयते । न जपहोमादि । प्रयोजनं तत्करणेऽप्यावृत्तिः । चन्द्रादर्शनमभ्रादिनापि भवति, तन्माभूदित्यमावास्यया विशेष्यते । तदेवोच्यतामिति चेत्, न अमावास्या शब्दस्य कर्मविषयतापि दृश्यते । चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामितितत्र को दोषः । चतुर्दश्युपवासपक्षेऽपि प्राप्नोति । अस्तु तथेति चेत् । न श्रुतिविरोधात् । यदैवैष न पुरस्तान्न पश्चाद्ददृश इति । अनेन च क्षयो लक्ष्यते तस्मिन् क्षीणे ददातीति श्रूयते । स च परमः क्षयः । इतरस्तु प्रत्यहमेव भवति । एवं च सति परमक्षयविशिष्ट एव काले पिण्डपितृयज्ञो नान्यत्रेति । यथा राजसूये पक्षमध्य अमावास्ये दाक्षायणे च । दर्विकामावास्यायां दृष्टेऽपि चन्द्रमस्यपराह्णे परमक्षय इति क्रियत एव काले पिण्डपितृयज्ञः । यदैवैष न पुरस्तान्न पश्चाद्ददृश इति क्षयोपलक्षणार्थत्वात् । तस्मिन्क्षीणे ददातीत्यथ यद्दर्शे दद्यात्समदं ह कुर्याद्देवेऽपश्च पितृऽयज्ञेति ॥ १ ॥

दक्षिणाग्नौ श्रपण्ँ होमश्च ॥ २ ॥

गार्हपत्याहवनीयापवादोयं वचनात् ॥ २ ॥

परिस्तीर्य तं पूर्ववत्पात्रासादनमेकशः ॥ ३ ॥

तमित्यवाच्यमाने न ज्ञायते कस्य परिस्तरणमिति तद्विद्देशः। पूर्ववदिति श्रपणस्य पश्चादुत्तरतश्चार्थवच्चेति । द्वन्द्वता मा भूदेकश इति ॥ ३ ॥

अपरेण गार्हपत्यं चरुमपूर्ण्ँ स्रुवं वा तूर्ष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥ ४ ॥

स जघनेन गार्हपत्यमिति वचनात् । अपूर्णता चरोः स्रुचश्च । अपूर्णं पितॄणामिति । तूष्णीमिति च लौकिकवागुच्चारणप्रतिषेधो, न ह्यत्र मन्त्रप्राप्तिरस्त्यपूर्वत्वात्। उत्तरेण दक्षिणाग्निं तिष्ठन्नवहन्तीति वचनात् ॥ ४ ॥

सकृत्फलीकरोति ॥ ५ ॥

फलीकरणं पुन पुनर्लोके प्राप्तं सकृदुच्यते ॥ ५ ॥

सारतण्डुलमपूर्ण्ँ श्रपयित्वाभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नये इति सोमायेति च ॥ ६ ॥

सारशब्द. सकलतण्डुलवाची । प्रसिद्धे. । ईषत्स्विन्नता वा वाक्यशेषात् । शृतामृत पितृणामिति । प्रसिद्धिरनैकान्तिकी । गुरुष्वपि सारशब्दप्रयोगात् । पूर्णं वै देवानामर्द्धपूर्णं मनुष्याणामुपर्यर्द्धं पितृणामित्यपूर्णग्रहणम् । श्रपयित्वाभिघार्यस्याज्येन । तत्कुतोन्यत्रापि दर्शनात् । आज्येनाभिघार्येति । तत्र यथाकथ चिदभिघारणमात्र नियमाभावात् । उद्वासनं दक्षिणत पित्र्यत्वात्। पूर्वेणानीय मेक्षणेन जुहोत्यग्नय इति सोमायेति च । तत्र वैकङ्कतमाहुतिसम्बन्धात् । होमश्च यज्ञोपवीतिना प्राङ्मुखेनैव दैवत्वात् । स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्य इति । न वा पित्र्यकर्मा-

इत्वात् । प्रधानोपचारन्यायाच्चाङ्गानाम् । महापितृयज्ञे च देवाज्यग्रहणे; यज्ञोपवीतित्वविधानात् । स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति । प्राप्तानुवाद इति चेत् । नानन्यपरत्वाद्वाक्यस्य । मन्त्रलिङ्गाच्च । कव्यवहनाय,पितृमत इति कव्यवाहनः पितृणामिति पितृसम्बन्धात् । तस्मात्पित्र्यवदेव,होमः ॥ ७ ॥

प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ॥ ७ ॥

अग्नौ मेक्षणमभ्यादधातीति । दक्षिणेनापरेण वाग्नेरेव स्फ्येनेति शाखान्तरात् ॥ ८ ॥

उल्मुकं परस्तात्करोति ये रूपाणीति ॥ ८ ॥

लेखाया ॥ ८ ॥

उदपात्रेणावनेजयत्यपसव्य;सव्येन वोद्धरणसामर्थ्यात् ॥ ९ ॥

अवामिनये श्रुतिरुद्धादितोद्धरणसामर्थ्यादिति । इतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योथैव पितृणामिति । पाणौ हि तीर्थचतुष्टयम् । अग्रे देवतीर्थम् । मूले मनुष्याणामिति । अथैवमित्यङ्गुष्ठमूल वा कनिष्ठिकाप्रदेशो वा । तत्राङ्गुष्ठमूलः पितृतीर्थं स्मर्येत इत्यपसव्यमिति । कनिष्ठिकोद्देशे हि सव्यता भवति । सा च पित्र्यनुचितेति ॥ ९ ॥

असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतित्रीन् ॥ १० ॥

असाविति नामादेशपूर्वकं यजमानस्य पितृप्रभृतित्रीनवनेजयति ॥ १० ॥

उपमूल; सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति ॥ ११ ॥

अग्रमिति चाध्याहार । उपरयमूलमित्यन्यपदविग्रहो नित्य समास । मूलसमीपे यानि सकृदाच्छिन्नानि तान्युपमूल दितानि बर्हिस्तृणानि अन्यत्रापि तृणार्थ इत्युक्तत्वात् लेखाया कृत्वा य थावनिक्तं यत्र यत्रावनेजन कृत तत्र तत्र पिण्डान् दद्यात्सावत्त त इति पितृप्रभृति ॥ ११ ॥

१ये चत्वामन्विति चैके ॥ १२ ॥

मन्त्रशेषं कुर्वन्ति ॥ १२ ॥

अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनात् ॥ १३ ॥

पिण्डानामाभिमुख्येनोक्त्वाऽप्रदक्षिणं गत्वादङ्ङास्ते २तमना-दर्वाक् ॥ १३ ॥

आवृत्यामीमदन्तेति जपति ॥ १४ ॥

आवर्तनं तेनैव मार्गेण । अथोपपत्यय्य जपतीत्युपदे-शात् ॥ १४ ॥

अवनेज्य पूर्ववन्नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति ॥ १५ ॥

विस्रंसनोपदेशात्पूर्वमेव नीविमत्परिधानम । प्रति नस्मस्कार साञ्जलिकरणम । षट्कृत्वो नमस्करोतीति वचनात् । षट्कृत्वा नम-स्करोतीति सूत्रकारानुपदेशान्नेति चेत् । स्यान्महापितृयज्ञे उक्त-त्वात् । षड्वा नमस्कारमिति श्रुतेश्च । तुल्यत्वात् षट् कृत्वा नम-स्करोतीति ॥ १५ ॥

---

१ यदि द्विपितृक स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति विशेष । शौनक 'नामान्यविद्वान् पित पितामह प्रपितामह' इति । व्याघ्रपात् ' गोत्राशान काश्यप ' इति ।

२ तमनं ग्लानि , आ ग्लानिपर्यन्तमित्यर्थ । विष्णु ' यथाशक्ति प्राणनिरोध कृत्वासीत ' इति ।

एतद्द इत्युपास्यति सूत्राणि प्रति पिण्डम् ॥१६॥

बहुवचनोपदेशात् त्रिणि त्रीणि ॥ १६ ॥

ऊर्णा दशा वा ॥ १७ ॥

वेति विकल्पः ॥ १७ ॥

वयस्युत्तरे यजमानलोमानि वा ॥ १८ ॥

उत्तरग्रहणादेव वयसी अभिप्रेते । ततश्चोर्ध्वं पञ्चाशतः ॥१८॥

ऊर्जमित्यपो निषिञ्चति ॥ १९ ॥

पिण्डमूलेषु । तर्पयत मेपितॄनिति लिङ्गात् ॥ १९ ॥

अवधायावजिघ्रति यजमानः ॥ २० ॥

स चायं यजमानसंस्कारः । स यजमान भाग इति वचनात् । ततश्च नाध्वर्युरवजिघ्रति । अथावजिघ्रति प्रत्यवधाय पिण्डानिति । प्रतिप्रयोगसामर्थ्यादध्वर्युरेव । प्रत्यवधाने ल्यप् प्रयोगाच्चेति चेत् । स्यात्कायार्थत्वात् । निरुप्याज्यं प्रातर्दोहनमिति यथा ॥ २० ॥

उल्मुकसकृदाच्छिन्नान्यग्नौ ॥ २१ ॥

अभ्याद्धातीति वाक्य शेषः । तत्र च पूर्वं सकृदाच्छिन्नानि तत उल्मुकम् । अग्नौ सकृदाच्छिन्नान्यग्नावभ्यादधाति पुनरुल्मुकमपि सृजतीति वचनात् । अजादित्वादल्पाक्षरत्वाच्च पूर्वनिपातः ॥ २१ ॥

[1] आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥ २२ ॥

---

१ पुत्र कामा यजमानपत्नि 'आधत्तगर्भम्' इत्यनेन मन्त्रेण मध्यमपिण्डं प्राश्नाति, भुनक्तीति यावत् ।

प्रसवसमर्थेति वाक्यशेषः ॥ २२ ॥
पिण्डपितृयज्ञस्याधिकारनिरूपणायाह—

प्रेतेभ्यो ददाति जीवपितृकोपि जीवान्तर्हितेपि ॥ २३ ॥

दानं प्रवर्त्तत एव । पितृशब्दस्याविशेषविषयत्वात् ॥ २३ ॥

जीवत्पितृकस्य होमान्तम् ॥ २४ ॥

कर्म स्यात् ॥ २४ ॥

व्यवेते जातूकर्ण्यः ॥ २५ ॥

कुतः । यस्मात्र जीवेन व्यवेते दान मेने जातूकर्ण्य. ॥ २५ ॥
किमिति न व्यवेते—

न जीवन्तमतीत्य ददातीति ॥ २६ ॥

शाखान्तरेषु श्रवणात् । अतो होमान्तं कर्म स्यात् । यद्येवमनारम्भ एव श्रेयान् । कुतः । दानस्य प्रधानभूतत्वात् । न च प्रधानाभावेङ्गानां प्रवृत्तिरस्ति । अतोनारम्भ एवेत्यवधार्यते । चतुर्दश्युपवासपक्षे ऽमावास्यायां पूर्वाह्णे दर्शयाग । तत्र चापराह्णे पश्चात्पिण्डपितृयज्ञः । अमावास्योपवासे पूर्वः प्राप्नोति ॥ २६ ॥

तत्रानियमे प्राप्त आह—

पूर्वो वाङ्गत्वात् पिण्डपितृयज्ञः ॥२७ ॥

पूर्व एव दर्शात्पिण्डपितृयज्ञो न पश्चात्। कुतः। एतदङ्गत्वप्रतिपादकवाक्यात्। पूर्वेद्युः पितृभ्यो यज्ञ निपृणीय प्रातर्देवेभ्यः प्रतनुत इति । अमावास्यायामेव पूर्वो भवति ॥ २७ ॥

इदमेव विचार्यते। किं पिण्डपितृयज्ञो दर्शाङ्गमुतानङ्गमिति? । किं तावत्प्राप्तम् । अनङ्गमिति ब्रूम.—

प्रकरणकाललिङ्गानुग्रहवचनाहिताग्नि-
श्रुतिभ्यो नाङ्गम् ॥ २८ ॥

प्रकरणभेदात् । प्रकरणपठितमङ्गं भवति, न चायं तत्प्रकरणे पठ्यते । किं च कालभेदात् । पूर्वाह्णे पराह्ण इत्यङ्गानां चैककालता भवति । अपि च लिङ्ग भवति । यक्ष्मणा गृहीतः पौर्णमासेन यजेत । पिण्डपितृयज्ञेनैवामावास्यामवरुन्धे आमावास्यमन्तरेणापि पिण्डपितृयज्ञं दर्शयति । तच्चानङ्ग उपपद्यते । अनुग्रहवचनं च पृथग्दर्शाद्भवति । कथमेषां पितृयज्ञोऽनन्तरितो भवतीति । अथाङ्गं स्यात् । कथमेषामामावास्यं हविरनन्तरितं भवतीत्युक्ते दध्ना चेत्यमावास्यानुग्रहेणैवानुगृहीतः पितृयज्ञोऽनुग्रहवचनं पृथक् नोपपद्यत । अपि चानाहिताग्निश्रुतिर्भवति । अथ नाहिताग्निना कार्य इति अङ्गत्वे हि दर्शे असति न क्रियेत । ततोऽप्यनङ्गमिति ॥ २८ ॥

अङ्गं वा समभिव्याहारात् ॥ २९ ॥

अथवाङ्ग पिण्डपितृयज्ञः । कुत एतत् । समभिव्याहारात् । समित्येकीभावेनाभिव्याहारो वाक्यं वाक्यादित्यर्थः । पूर्वेद्युः पितृभ्यो निक्रयं कृत्वा प्रातर्देवेभ्यः प्रतननम् । यच्च येन विना न भवति तत्तदर्थं, तादर्थ्यलक्षणं तु शेषत्वं, तस्मादङ्गमिति । यत्तु प्रकरणभेदादनङ्गमिति । प्रकरणान्तरसमधीतमप्यङ्गं भवत्येव । यथा प्रवर्ग्यः सौत्रामणी चेति । भिन्नकालमप्यङ्ग भवति । यथाग्निहोत्रार्थमुद्धरणलिङ्गं वचनं द्रष्टव्यम् । अनुग्रहवचनमर्थवादोऽङ्गत्वेऽप्युपपद्यते । अप्यनाहिताग्निना कार्य इति वचनम् । तस्मादङ्गं पिण्डपितृयज्ञ इति ॥२९॥

पिण्डपितृयज्ञः प्राक्कालत्वादनुविहित इदानीमावास्यमनुविधीयते—

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति
शाल्मलीं वेषेत्वेत्यूर्जेत्वेति ॥ ३० ॥

श्वः न उदेता चन्द्रमा इति ज्ञात्वा पर्णशाखां छिनत्ति । कुत एतत् । तद्धैके दृष्ट उपवसन्तीति वचनात् । अदृष्टे वा । तत्कुतः । अमावास्यायां अमावास्यया यजेतेति श्रुतत्वात् । पर्णः पलाशः । शा- .

मीलीं[१] वा। शमीमयम् चेत्यर्थं। इषेत्वोर्जेत्वेति वा तामाच्छिनत्ती-षेत्वोर्जेत्वेति हि श्रूयते। न चानयोर्मन्त्रयोः करणत्वात्समुच्चयः ॥३०॥

छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥ ३१ ॥

छिनद्मीति उभाभ्यां सम्बध्यते। कुतः साकाङ्क्षत्वात्। उभयोश्छेद-ने विनियुक्तत्वात्। तामाच्छिनत्तीषेत्वोर्जेत्वेति ॥ ३१ ॥

सन्नमयामीति वोत्तरे ॥ ३२ ॥

तत्कुतः। ऊर्जे त्वेत्यनुमार्ष्टीति वचनात्। अनुमार्ष्टीति च प्र-गुणीकरणमातश्च मन्त्रलिङ्गादेव प्राप्तमाचार्येण नाभिहितम्। एवं च सति द्वावपि मन्त्रौ माध्यन्दिने पाठाच्छेदने विनियुज्येते विकल्पेन। उत्तरस्त्वनुमार्जने एव काण्वपाठात्[२] ॥ ३२ ॥

बहुलपलाशामशुष्काग्रां प्रागुदीची-

मन्यतमां वा ॥ ३३ ॥

अन्यतमामिति वचनं न सर्वदिग्विषयम्। प्राचीमाहरति उ-दीचीमाहरति प्रागुदीचीमाहरतीति वचनात् ॥ ३३ ॥

व्रतमुपैति ॥ ३४ ॥

अनिर्ज्ञातकालस्य शाखाच्छेदनस्यावसरविवक्षयेदमुक्तम्। ततश्च व्रतोपायनीयाशनोत्तरकाले छेदनमिति। तत्प्राप्तिश्च प्रकर-णाविभागात्। सूत्रकारोपदेशाच्च। पौर्णमासवदन्यादिति ॥ ३४ ॥

व्रतग्रहणे नियमो माभूदित्याह—

[३]यथोक्तं वा ॥ ३५ ॥

---

१ शम्या अवयवः शमीली ताम्, 'शम्या ष्लञ्, टिड्ढाणञ्' इति पाणिनिसूत्राभ्यां ष्लञ्ङीप्प्रत्ययाभ्यां रूपम्।

२ तथाचापस्तम्बः 'ऊर्जे त्वेति सन्नमयत्यनुमार्ष्टि वा' इति। स-न्नमनमृजूकरणम्।

३ यस्मिन् काले चैकल्पिकमुक्तम् तत्र काले वा भवति इह चेति सूत्रार्थः।

मातृभिर्वत्सान्संसृज्य वत्सं शाखयो-
पस्पृशति वायव स्थेति ॥ ३६ ॥

संसर्गश्च मेलापकः । वत्सस्य चोद्दिश्यमानत्वात्प्रतिवत्समुपस्पर्शनम् । लिङ्गं चाविवक्षितमुद्दिश्यमानत्वादेव । कश्चिदुपदेशात्पुंवत्सामिति । यदि वत्सशब्दः स्त्रीविषयोऽपि तदैतदुपपद्यते । तथा च पाणिनिः । ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री इति । स्त्री शब्दः साधुर्भवति तरुणेषु पुंशब्द इति । एवं च सति स्त्रीवत्सा अपि गावो गृह्यन्ते ॥ ३६ ॥

उपायव स्थेति चैके ॥ ३७ ॥

मन्त्रशेषं कुर्वन्तिोउपस्पर्शनं च पृथक्करणार्थं उत्तरसूत्रात् ॥ ३७ ॥

देवो व इति मातृणामेकां व्याकृत्य ॥ ३८ ॥

वत्सयोपस्पृशति । वत्सेन व्याकृत्येति वचनात् । एकस्याश्चोपस्पर्शने सर्वासां संस्कार इति । कुत एतन्मन्त्रे बहुवचनोपदेशात् । आप्यायध्वमघ्न्या इति । ततश्च यावद्देवी दध्येन्द्रमित्यत्र मन्त्रो विपरिणम्यत इति सम्प्रदायः । अपरे तु न्यायनिगदत्वाद्विपरीणाममिच्छन्ति । यैवोपस्पृश्यते तस्या एव संस्कार इति । बहुवचनं पूजार्थम् । एता उत्स्रा उपसः केतुमक्रतेति वत् ॥ ३८ ॥

ऐन्द्रं भवति माहेन्द्रं वा ॥ ३९ ॥

मन्त्रे हीन्द्रशब्द एव दृश्यते स एव मा भूदित्यत आह माहेन्द्रं वेति । अतश्च विकल्पः । तथ वचनात् । तदेके महेन्द्रायेति कुर्वन्ति ॥ ३९ ॥

यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य
पुरस्ताच्छाखामुपगूहति ॥ ४० ॥

द्वे ह्यग्न्यगारे तयोरन्यतरस्य पुरस्तादुपगूहनम् । यजमानग्रहणं च पशुविशेषणत्वाद्यजमानकेऽपि नोह्यते । पशूनां तु रक्ष-

ङ्गभूतानां पालनमिहेष्यते । ततश्च वह्निर्दधाति विपरिणाम ॥ ४० ॥

मूलादुपवेषं करोति ॥ ४१ ॥

वेषोऽस्युपवेष इति । मूलत. शाखां परिवास्योपवेषं करोतीति वचनात् । उपवेषनिष्पत्तौ च मन्त्र । शाखायाश्च परिवासन सं स्कार. । ततश्च केवलायामामिक्षायां तूष्णीमेव शाखापरिवासनम । परिवासितया हि पयसोपाकरणमिति ॥ ४१ ॥

सान्नाय्ये शाखासंयोगात् ॥ ४२ ॥

सान्नाय्ये एवोपवेष । कुत । शाखासंयोगात् । शाखां परिवास्योपवेष करोतीति ॥ ४२ ॥

उपधानाद्वोभयोः ॥ ४३ ॥

वाशब्दः पक्षव्यावृत्तौ । उपधानार्थत्वादुपवेषस्योभयत्र प्रवृत्ति । ततश्च शाखाभावे धारणो भवति ॥ ४३ ॥

वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ ॥४४॥

वसो' पवित्रमित्यनेन मन्त्रेण कुशावेवपवित्र बध्नाति शाखायाम । ते चैते परिवासनपवित्रबन्धने शाखोपगूहनात्पूर्वे कर्त्तव्य । अर्थाद्धि पाठो बाध्यत इत्युक्त विरोधेऽर्थस्तत्परत्वादिति । पश्चाच्च परिवासनादौ क्रियमाणे सति उपगूहनमदृष्टार्थं स्यात् । दृष्टार्थता चास्या शाखाया अनाश इति । दृष्टे च सति नादृष्टपरिकल्पना साध्वी । अत पश्चादुपगूहनमिति ॥ ४४ ॥

त्रिवृद्वा ॥ ४५ ॥

१त्रिवृत् वेण्यभिधीयते । तां बध्नाति । वाशब्दो विकल्पार्थ ॥४५॥

यवाग्वाग्निहोत्रहोमः सन्नयतस्तां रात्रिम् ॥४६॥

तां रात्रिमिति वचनात् पक्षमध्ये आमावास्ये न यवागू नियम ॥ ४६ ॥

---

आपस्तम्ब, 'त्रिवृद्दर्भमयं पवित्रं शाखायां शिथिलमवसजति' इति ।

हुत उपसृष्टां प्रब्रूतादित्याह ॥ ४७ ॥

हुतेऽग्निहोत्रे दोग्धारमाहोपसृष्टां प्रब्रूतादिति ॥ ४७ ॥

प्रोक्ते द्यौरसीति स्थाल्यादानम् ॥ ४८ ॥

उपसृष्टेति प्रोक्ते दोग्धा प्रति प्रश्ने द्यौरसीति स्थाल्यादानम् । तथाधिश्रयणार्थमतश्च घायव्ये पर्यासे अधिश्रयणाभावादनादानम् । एवं कार्यापत्त्या च वपाश्रपण्योरादाने विपरिणामः । द्यौ स्वः पृथिवी स्व इति ॥ ४८ ॥

मातरिश्वन इत्यधिश्रयति ॥ ४९ ॥

स्पष्टम् ॥ ४९ ॥

वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्वा ॥ ५० ॥

प्राग्वेति विकल्पः । तथैतच्छ्रौतं प्रागुदग्ग्रहणम् । स्मार्त्ते हि वचनमन्तरेणापि प्राप्नोत्येव । प्रयोजनं तदपचारे श्रौतं प्रायश्चित्तम् ॥ ५० ॥

वाग्यतो दोहयत्यशूद्रेण ॥ ५१ ॥

दोहयतीति कारितत्वादध्येषणा गां धुक्ष्वेति । शूद्रपर्युदासाच्च क्षत्रियवैश्ययोरभ्यनुज्ञा ॥ ५१ ॥

स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने जपति ॥ ५२ ॥

स्थाल्यन्वारब्धे यजमाने देवस्त्वेत्यासिच्यमाने जपत्यध्वर्युः ॥ ५२ ॥

कामधुक्ष इति प्रश्नः ॥ ५३ ॥

कां दुग्धवानसीति दोग्धारं पृच्छति ॥ ५३ ॥

प्रोक्ते सा विश्वायुरित्याह ॥ ५४ ॥

अमूमिति प्रोक्ते गोनाम्नि सा विश्वायुरिति आह ॥ ५४ ॥

एवमितरे उत्तराभ्यां प्रतिमन्त्रम् ॥ ५५ ॥

एवमितरे द्वे दोहयति । एवं शब्दाच्च समस्तः क्रियोपदेशः । अयं तु विशेषः । उत्तराभ्यां प्रतिमन्त्रमभिदधाति ॥ ५५ ॥

विसृष्टवागुत्तरा अनन्वारब्धे ॥ ५६ ॥

दोहयतीति वाक्यशेषः । अन्वारम्भवाग्यमयोश्च प्रतिषेधाद्योर्भवत्येव । उत्तरा दोहयतीत्येनाप्यनुक्ते न ज्ञायते ॥ ५६ ॥

कियत्यो दुह्यन्त इत्यत आह—

यावत्स्वमधिकारात् ॥ ५७ ॥

यावत्यश्चास्य गावस्तावत्य इति । कुत एतत् । अधिकारात् । अपरिज्ञाने सत्यधिकारो व्यवच्छेदकः ॥ ५७ ॥

तिस्रो वा नित्यत्वात् ॥ ५८ ॥

तिस्रो वा दुह्यन्ते । त्रित्वे हि नित्यं बहुवचनं व्यवस्थितम् । ननु चतुर्थादावपि भवत्येव । सत्यमेव ॥ ५८ ॥

आदिसामर्थ्यात् ॥ ५९ ॥

त्रित्वगतमेव बहुत्वमाद्रियते । उक्ते हि बहुत्वे कृतः शास्त्रार्थ इति किमित्युत्तर गम्यते ॥ ५९ ॥

दर्शनाच्च ॥ ६० ॥

दृश्यते चायमर्थो यथा बहुवचनश्रवणे त्रित्वगतमेवो-पादीयते । कृष्णा भौमा धूम्रा आन्तरिक्षा बृहन्तो दिव्याः शबला वैद्युताः सिध्मास्तारका इति । पञ्चबहुवचनान्यनुक्रम्य पञ्चदशाद र्शयति । अर्द्धमासानां वा एतद्रूपं यत्पञ्चदशिनो यत्पञ्चदशिन आलभत इति ॥ ६० ॥

परिक्षालनमानयति सम्पृच्यध्वमिति ॥ ६१ ॥

तथाध्वर्युरानयति दोहमाले ऽन्यस्य श्रुतत्वात् ॥ ६१ ॥

उद्वास्यातनक्ति प्राग्घुतशेषेणेन्द्रस्य त्वेति ॥६२॥

प्रातर्हुतशेषेणेति सम्प्रदायः । नेत्यपरे । तदा प्रातर्हुतशेषेणेत्येवावक्ष्यत् । अतः प्राक्शब्दस्य पूर्वकालवाचित्वात्पूर्वं यद्घुतशेषं प्रायं होमशेषमित्यर्थः । आतनक्तीति आतञ्चनतत्पर्वसङ्कोचनार्थः । सङ्कोचः काठिन्यं तत्सायं होमशेषेण सुकरमिति । इन्द्रस्यस्वेति चोपलक्षणम् । महेन्द्रस्यापि भावात् । तदैकेन्द्रायेति कुर्वन्तीति ॥ ६२ ॥

सोदकेनापिदधात्यमृन्मयेन [1]विष्णो

हव्यमिति ॥ ६३ ॥

अथोदकवतोत्तानेन पात्रेणापिदधातीति वचनात् ॥ ६३ ॥

निधाय वत्सापाकरणं पूर्ववत् ॥ ६४ ॥

निधाय तत्पयो वत्सापाकरणं पूर्ववत् । तच्च पयस ऐन्द्रं पयोऽभ्यासयामिति ॥ ६४ ॥

प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालो

ऽसन्नयतः ॥ ६५ ॥

स एव उभयत्राच्युत आग्नेयोऽष्टाकपाल इत्याग्नेयग्रहणम् । अमा वै नोव वसुर्वसतीत्युपक्रम्य तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीत्याह । तच्चैतदसन्नयतः ॥ ६५ ॥

निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥ ६६ ॥

आज्यनिर्वापे कृते प्रातर्दोहनमन्यस्मिन्पात्रे कर्तव्यम् । अन्यस्मिन्निति ग्रहणात्सायं दोहस्य तत्रैवान्तर्धानम् ॥ ६६ ॥

परिक्षालनान्तं कृत्वा सायं दोहमाहृत्य प्रातर्दोहः श्रपयित्वाभिघार्योद्वास्योभावनक्ति ॥ ६७ ॥

---

१ यदि मृन्मयं स्यात्तृणं दारु वान्तर्धाति ।

प्रातर्दोहं श्रपयित्वा सायं दोहाहरणम् । यथासूत्रे दृष्टार्थता भवति । अभिघारणं च पयसः । उभावनक्तीति प्राणदानं तदुभयोः ॥ ६७ ॥

शृतस्याग्रेऽवद्यतीति श्रुतेः ॥ ६८ ॥

अपन्यायत्वाच्छ्रुतिग्रहणम् । दध्नो हि पूर्वं क्रम इति । यदवद्यति तच्छृतस्य प्रथमम् ॥ ६८ ॥

समस्य मार्जनम् ॥ ६९ ॥

शाखापवित्रेण सह मार्जनम् । तच्च पुनः शाखायामेव कर्तव्यम् । मार्जनमात्र एव श्रवणात् ॥ ६९ ॥

इन्द्राग्न्योरिति व्यूहनम् ॥ ७० ॥

ननु च यथा देवतमन्यदित्युक्तत्वादवाच्यमेतत् । न समाम्नायज्ञापनार्थत्वात् । अज्ञाप्यमाने हि समाम्नाये पदादिना पूर्वान्तन्यायेन इन्द्राग्न्योरित्यस्य पूर्वंव्यूहनशंसतैव प्राप्नोति । तस्मात्साधूक्तमिन्द्राग्न्योरिति व्यूहनमिति ॥ ७० ॥

सह शाखाया प्रस्तरानुप्रहरणम् ॥ ७१ ॥

प्रस्तरप्रहरणस्य निर्ज्ञातकालत्वात् शाखाप्रहरणस्य चानिर्ज्ञातकालत्वात् प्रस्तरेण सह शाखां प्रहरतीति वाक्यार्थः ॥ ७१ ॥

परिधिभिः सहोपवेषं जुहोति जोहोमि त्वा सुभगसौभगाय पुरुत्तमं पुरुहूतश्रवस्यन्निति ॥ ७२ ॥

मन्त्रभेदाच्च कर्तृभेदस्ततश्चाग्नीदुपवेषं जुहोति१ ॥ ७२ ॥

पौर्णमासवदन्यदसद्यः ॥ ७३ ॥

---

१ प्रतिपत्तिरियम्, चरितार्थत्वात् । अतो नाग्नीदापादौ सकृद्गृहीतेनाज्येन होमः ।

न चायमतिदेशः । प्रकरणसाधारण्यात् । साधारणत्वाद्धर्माणाम् । एवं चोभयत्र गुणकामप्रवृत्तिरविरुद्धा । १ इयांस्तु विशेषः । समय. ॥ ७३ ॥

## सोमयाजी सन्नयेत् ॥ ७४ ॥

सोमयाजिनो नियमः ॥ ७४ ॥

## कामादितरः ॥ ७५ ॥

तस्मादप्यसोमयाजी समवनयेदिति ॥ ७५ ॥

## त्रिं॰ शतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥७६॥

तस्मात् त्रिं॰ शतमेव वर्षाणि यजेतेति श्रुतत्वात् । दर्शपौर्णमासग्रहणं न कर्त्तव्यम् । उपक्रमादेतत्सिद्धेः । कर्त्तव्यं वा । आनन्तर्यात्सान्नाय्यस्य तद्गुणकविषयतैव मा भूदिति ॥ ७६ ॥

## पञ्चदशदाक्षायणयज्ञी ॥ ७७ ॥

*यद्युदाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेतेति* ॥ ७७ ॥

## अग्निहोत्रमेव वा जुहुयात् ॥ ७८ ॥

एव शब्द इवार्थे । यथाग्निहोत्रं यावज्जीवं एवं दर्शपूर्णमासायपीति । उभयोस्तुल्यशास्त्रत्वात्२ । यावज्जीवमग्निहोत्रं जुहोति । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । दर्शपूर्णमासयोः सान्नाय्यवतोश्चानुविधानं कृतम् । इदानीं दाक्षायणगुणकयोः कर्त्तव्यम् । तत्र च पयस्या विद्यते । सा च दधिपयोभ्यां साध्यते । विकारत्वाच्च धर्मातिदेशं प्रत्यपेक्ष्य किमत्र दध्नो धर्मा उत पयस इति । अनेनाति-

१ अत्र ' उच्चादन्यत् सर्वं दर्शपूर्णमासवद्भवति ' इति शेषः ।

२ अतश्च विकल्पः, तथाचापस्तम्बः स्वर्गकामो दर्शपूर्णमासाभ्यां यावत्कामः सर्वकामो वा युगपत् कामयेताहारपृथक्त्वे वा यावज्जीवं यजेत त्रिं॰शतं वर्षाणि वा जीर्णो वा विरमेद् ' इति ।

देशप्रसङ्गेन याग्यानतिदेशः स सर्वोऽभिधीयते । तत्पूर्वकत्वाच्च वि-शेषातिदेश ऊहो बाधश्चेति ॥ ७८ ॥

तत्र तावदतिदेशविचारः क्रियते । यावद्विकृतीषु चोदनासु या-गत्वं नच प्रतिपाद्यते सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः ऐन्द्रा-ग्नमेकादशकपालं निर्वपेत् प्रजाकामः अग्नीषोमीयमजमालभेतेति चैवमाद्यासु किं यावदुक्तं निर्वापमात्रं आलम्भमात्रं च उत यागा एव इति? । शब्दलक्षणत्वात्कर्मणो यावदुक्तान्येतानीति प्राप्त उच्यते—

## कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः ॥७९॥

कर्मशब्द आख्यातशब्दो व्यापारशब्दो यो द्रव्यदेवतायुक्तः स यजतिः प्रत्येतव्यः । यागः प्रत्येतव्य इत्यर्थः । यद्यपि यज-तिर्देवपूजायामिति च धातोर्निर्देशकस्तथापि तस्य द्रव्यदेवतासंयोगाभा-वात् तदर्थ एव गृह्यते । द्रव्यदेवतायुक्तः कर्मशब्दो याग इति । कुत एतत् । द्रव्यदेवतासंयोगात् । यश्च द्रव्यस्य देवतोद्देशेन त्यागः स याग इति । द्रव्यदेवतायुक्तं च कर्मशब्दे याग दर्श-यति । मैत्राबार्हस्पत्यं चरुं निर्वपतीत्यभिधाय तयोरुभयोरथ-यत्राह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट् कृते जुहोतीति सहानुवाचनविधिपरे वाक्ये याग दर्शय-ति । तथा पशावग्नीषोमाभ्यां छागस्य हविः प्रेष्येति वषट् कृते जुहोतीति प्रैषविशेषविधिपरे वाक्ये याग दर्शयति । एकदेशस्थितमपि च लिङ्गं स्थालीपुलाकवत् सर्वत्रगमकम्भवति न्यायस्य तुल्य-त्वात् । तस्माद्यागा एव इति ॥ ७९ ॥

यागेषु सत्सु किं यागमात्रं भवत्युत धर्मा अपि सन्ती-ति? । यदा च सन्ति तदा किं पूर्णाहुतिका, उताग्निहोत्रिका, उतद-र्शपौर्णमासिका, उत ज्योतिष्टोमिका इति, अथ दर्शपूर्णमासि-का एवेति । किं तावत्प्राप्तं धर्माणामनाम्नानादधर्मका इति, एवं प्राप्तेऽभिधीयते—

## दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् ॥ ८० ॥

सामर्थ्यादित्ययं हेतुर्धर्मसत्तायां तद्विशेषे च । साधारणधर्म

सत्त्वायां तावत् एवमेताश्चोदनाः समर्था भवन्त्यर्थवन्त्यो भवन्ती-त्यर्थः । इतरथा सापेक्षाः सत्योनर्थिका स्युः । तत्कथम् । सौर्ययागेन ब्रह्मवर्चसभावयोरित्यपरिपूर्णं वाक्य१, यच्च नामापरिपूर्णं तदध्याहारेण वानुषङ्गेण वा पूरयितव्यम् । न हि वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते । तेनात्र विध्यन्तोऽनुषक्तव्यो वाक्यपूरणायानर्थक्यं मा भूदिति । स च दार्शपौर्णमासिकः सामर्थ्यादेव । स एवात्र द्वेषी-भवितुं समर्थः । व्यक्तचोदनाचोदितत्वेन निर्वपति संपदनेन च प्रतीयमानत्वात् । नान्य इति । विध्यन्तानुषङ्गेण च धर्माणामनुषङ्ग इति दर्शपौर्णमास धर्मा इति सूत्रितम् । इष्टिपशुष्विति च इष्टिषु पशौ चेति द्रष्टव्यम् । पदवन्तरेषु ह्यग्नीषोमीयधर्मप्राप्तिं पशवस्य-ग्नीषोमीयदर्शनादिति ॥ ८० ॥

## दर्शनाच्च ॥ ८१ ॥

दृश्यते चायमर्थो यथा दर्शपूर्णमासधर्मा इष्टिपशुषु प्रवर्त-न्त इति । सावित्रीमिष्टिं निर्वपतीति प्रकृत्याह । तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नन् त्रिष्टुः स्वयं संभृता गाथा गायतीति गाथागानविधिपरे वाक्ये प्रया-जान्दर्शयति । तथा पशौ स उत्तरमाघारमाघार्याभिस्पर्शयन् स्रुचौ पर्येत्य जुह्वा पशुं समनक्तीति पशुसमञ्जनविधिपरे वाक्ये उत्तराघारं दर्शयति ॥ ८१ ॥

एवं सर्वेष्विष्ट्यनुमानिकवचनेन धर्मप्राप्तिरभिमिता । इदानीं तदपवादत्वेन प्रत्यक्षविधेन धर्मप्राप्तिरभिधीयते—

## वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ॥ ८२ ॥

वैश्वदेवमिति चातुर्मास्यानां प्रथमं पर्व, तस्य धर्मा उत्तरेषु-पर्वसु प्रवर्तन्ते, कुतो, वचनात् । वचनादिति हेतुव्यायमुपदेशश्च । तत्रश्च यत्रैव वचनं तत्रैव प्राप्तिः । प्रतिपर्व वचनं भवति, एतान्येव

१ किम, केन, कथम, इत्येतत्त्रयेषु कथमंशाभावादपरिपूर्णता वाक्यस्य ।

पञ्च हवींऽपि भवन्तीति। तानि चाग्नेयादीनि वैश्वदेविकानि पञ्च चोद्यन्ते। तेषां चोपक्षीणत्वात्तद्धर्मकाणीति गम्यते। धर्मप्राप्तिं च दर्शयति शुनासीरीये। आग्नेयैनान्येव पञ्च हवींऽपि भवन्तीत्यभिधाय तस्यावृश्चोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्य न मथन्त्यग्निमिति प्रतिषेधति। प्रतिषेधश्च प्राप्तिपूर्वको भवति। अप्राप्तत्वाच्चोत्तरवेदिप्रतिषेधोऽनुवादकः ॥ ८२ ॥

## सोमाच्चावभृथे सामप्रतिषेधात् ॥ ८३ ॥

सोमिकादवभृथाद्वारुणप्रघासिके धर्मप्राप्तिः। कुतो वचनात्। च शब्देन वचनमनुकृष्यते। उच्यते ऽनेनशब्देनेति वचनं नामधेयमवभृथ इति। सामप्रतिषेधाच्च। सोमिकादवभृथात्साम सामान्येन सामगान प्राप्तम्। तत्प्रतिषेधो विधीयते। नाप्राप्तं प्रतिषेधति। तत्र न सामगीयत इति ॥ ८३ ॥

## कणवत्पशौ न मन्त्रोपदेशात् ॥ ८४ ॥

कणापासनक्रियावद्रुधिरापासनक्रिया तथो यवासृक्पशोरिति वचनेन प्राप्नोति। सा च प्रतिषिध्यते। न मन्त्रोपदेशादिति। यद्यशेषक्रियाप्राप्तिः स्यात् न मन्त्रे उपदिश्येत उपदिश्यते च रक्षसां भागोऽसीति तस्मात्तावन्मात्रमेव भवति। अशेषक्रियाविषयं वचनमित्याशङ्कानिवृत्त्यर्थमिदमुक्तम् ॥ ८४ ॥

## विशये लौकिकमयुक्तत्वात् ॥ ८५ ॥

विशयः संशय उच्यते। यथा आज्यदोहेषु सामसु अग्निमुपधाय स्तुवन्तीति, किं लौकिकं अग्निद्रव्यं उत वैदिकमिति। अत्र लौकिकं ग्रहीतव्यम्। अयुक्तत्वात्। इतरस्य च विशिष्टकार्यसंयोगादिति। ननु अन्ये वायुक्तत्वादित्यभिहितं एवायं न्यायः। न प्रकरणसमधीतविषयता तस्येति। अस्य पुनरप्रकरणसमधीतविषयतेति योगान्तरारम्भः ॥ ८५ ॥

दर्शपौर्णमासधर्मा: सौर्यादिष्वपि भवन्तीत्येतदुक्तम्। दर्शपौर्णमासयोश्च षट् प्रधानानि। तत्रैतच्चिन्त्यते किं यस्मिन्कस्मिंश्चिद्धैकृते प्रधाने यतः कुतश्चिद्धर्मपरिप्राप्तिरुत नि-

पौरोडाशिको देवतासामान्येनोपांशुयाजविध्यन्त इति । तत्र नियम-कारिकारणाभावादनियमे प्राप्त आह—

नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात् ॥ ८७ ॥

अत्र नानियमो द्रव्यस्य सामान्येन पौरोडाशिको विध्यन्तो नोपांशुयाजकस्य । द्रव्यदेवतयोरुभयोरपि विध्यन्तपर्युपस्थापकत्वे द्रव्यमेव बलीयः । कुत एतत् । समवायात् । द्रव्यं हि यागं समवैति । तद्धि त्यज्यमानं यागमभिनिर्वर्तयति । देवतातूद्देशेनोपकरोति । तेनासौ विप्रकृष्टेति संनिकृष्टे सम्प्रत्ययः । अथवा समवायादिति द्रव्यमेव विशेष्यत्वेन हृदि समवैति । देवता विशेषणत्वेन । विशेषणविशेष्ययोश्च विशेष्ये सम्प्रत्ययः ॥ ८७ ॥

१आमिक्षायामुभयोस्तन्निवृत्तेः ॥ ८८ ॥

आमिक्षायामुभयोर्दधिपयसोर्धर्मप्राप्तिस्ताभ्यां हानौ निवर्तते ॥ ८८ ॥

नैकचोदनात् ॥ ८९ ॥

नैतदस्ति यदुक्तमुभयोर्धर्मप्राप्तिरिति । किं कारणम् । एकचोदनात् । एका ह्येव चोदना मैत्रावरुण्यामिक्षेति । सा चैकासती नोभे विकर्तुमर्हति । अतोऽन्यतरस्य विध्यन्त इति ॥ ८९ ॥

२दध्नः संघातात् ॥ ९० ॥

दध्नो हि विध्यन्तः प्रवर्तते । सङ्घातस्य सामान्यात् ॥ ९० ॥

---

१ 'ब्राह्मणे श्रूयते' 'मैत्रावरुणी पयस्या' इति, चातुर्मास्येषु 'वैश्वदेवी पयस्या' इति, पयस्या वारुणी मारुती च । सा च पयस्या दधिपयोभ्यां निष्पाद्यते । तत्र सन्देहः, किमस्यामुभयोर्धर्माः, उत दध्नः, उत पयस इति ? । तत्राद्य पक्षमुद्भावयति ' इति देव भाष्ये ।

२ द्वितीयं पक्षमनुवदति ।

१पयसस्तद्भावात् ॥ ९१ ॥

पयसो वा तत्र विध्यन्तः प्रवर्त्तते । कुतस्तद्भावात् । अतो ह्यामिक्षा भवति घनीभावयितुं दध्यानीयते । अथवा तद्भावादिति तद्रसस्य भावादामिक्षायां मधुरं पयो मधुरा चामिक्षा ॥ ९१ ॥

पशौ देवतासामान्यादग्नीषोमीयविध्यन्ते प्राप्त आह—

पशोः सान्नाय्यस्य तदुक्तम् ॥ ९२ ॥

पशौ सान्नाय्यस्य विध्यन्तः । तदुक्तम् । द्रव्यदेवताविरोधे द्रव्यस्य समवायादिति । ननु नैवात्र द्रव्यदेवतयोर्विरोधो विद्यते । पशुद्रव्यस्य चोदितत्वात् । इतरेतरप्रभवत्वेन पशुद्रव्ये प्रतीते सान्नाय्ये प्रतीतिर्भवति । प्रतीत्या च धर्मसम्बन्ध इष्यते । सान्नाय्यधर्माणां पशुद्रव्यं पर्युपस्थापकम् । देवतापौरोडाशिकानाम् । अतो द्रव्यदेवताविरोध एवायम् । ननु तेनैव गतार्थत्वादवाच्यमेतत् । न, तत्राव्यवहितं द्रव्य, इह पशुद्रव्येण व्यवधानादारम्भः ॥ ९२ ॥

प्रायश्चित्तश्रुतेश्च ॥ ९३ ॥

पशूखा चरुर्वा सान्नाय्योखा वा तामभिमन्त्रयतेति पशावप्युखां दर्शयति । सा च सान्नाय्यस्य विध्यन्ते घटते । ननु विपरीतमेतल्लिङ्गम् । सान्नाय्यस्य विध्यन्ते हि सति तदुखा श्रुत्यभिमन्त्रणं पशूखायां प्राप्नोत्येव । विधाने तु सुतरामप्राप्तिर्गम्यते । सत्यम् । सान्नाय्ये च प्रधानस्य श्रुतिः पयआद्युपसर्जनभूतस्योदकस्येति । तेन द्रव्यान्यत्वात्पुनरुच्यते ॥ ९३ ॥

सद्यानत्वसामान्यात्पशौ दध्नो विध्यन्ते प्राप्त आह—

पयसः कालानन्तर्यधर्मानुग्रहेभ्यः ॥ ९४ ॥

पयसो वा विध्यन्तः प्रवर्त्तते । एककालता पयसः पशोश्च । यदा वै योषा रेतो धत्तेऽथ पयो धत्त इति । तथा यदा पशुर्जायते ऽथ

१ सिद्धान्तमाह ।

पयो जायत इति। अथवा सद्यः कालः पशुः, पयोऽपि सद्यः कालमेव। अनन्तरं च पशोः पयः। दधि तु पयोवस्थया व्यवहितम्। अत आनन्तर्यात्पयो विधयन्त इत्यनुग्रहश्च भवति। पयः पात्र्यां प्राक्षणादयो धर्माः प्रवर्त्तन्ते न दध्नः। तेषां चानुग्रहः कृतो भवति ॥ ९४ ॥

प्राकृतं धर्मजातं विकृतिषु चोदकेन प्राप्नोतीत्युक्तम्। ततो द्व्यहकालतायामपि प्राप्तायामिदमाह—

## सद्यस्त्वं काशकृत्स्निः ॥ ९५ ॥

काशकृत्स्निः सद्यस्त्वम् मेने विकृतीनाम्। य इष्ट्या सोमेन पशुनाग्रयणेन वा यक्ष्यमाणः स पौर्णमास्याममावस्यायां वा यजेतेति वचनात् ॥ ९५ ॥

## अनुवादः पूर्वस्येति वात्स्यबादरी ॥ ९६ ॥

वात्स्यश्च बादरिश्च वात्स्यबादरी तावाहतुः। विकृतिविषयत्वेन पौर्णमासी चामावास्या चोच्यते। तत्र प्रकृतितोऽपि चोदकेन प्राप्तं द्व्याहेऽनुवादोऽयमिति ॥ ९६ ॥

स्थित तावदयमर्थस्ततमन्यदन्तरा चिन्त्यते। यत्राम प्राकृतस्य द्रव्यस्य कार्ये वैकृतमन्यद्द्रव्यान्तरं विधीयते। यथा मौद्गं चरुं निर्वपेच्छ्रियं श्रीकाम इति। किं तत्प्राकृतद्रव्यधर्मान् लभते उत न लभते इति। किं तावत्प्राप्तम्। व्रीहीनवहन्तीति व्रीहिसंयोगेन श्रुता धर्माः कथमिव मुद्गेषु भविष्यन्तीत्यत आह—

## स्थानापत्तेर्द्रव्येषु धर्मलाभो विप्रतिषिद्धः ॥ ९७ ॥

यद्वैकृतं द्रव्यं प्राकृतस्य कार्यापन्नं भवति। तद्धर्मान् लभते। कुतः। कार्यापत्तेः। प्राकृतस्य हि द्रव्यस्य धर्मसम्बन्धो ऽपूर्वप्रयुक्तो न स्वरूपप्रयुक्तः। आनर्थक्यात्। अपूर्वसाधनविशेषकारित्वे ह्यसौ एवं च वैकृतेऽपि सोऽस्तीति प्रवर्त्तत एव ॥ ९७ ॥

वैकृतद्रव्यं प्राकृतकार्यापन्नं तद्धर्मैर्युज्यत इत्युक्तम्। तेन तन्नामाभिधानमपि लभते। इद तु सन्दिह्यते, किमूहितनामाभिधानं क-

केऽप्यमुतानूहितेनेति । किं तावत्प्राप्तं अर्थबाधो मा भूदित्यनूहितेनेति प्राप्त आह—

## यथार्थमूहश्चोदिते ॥ ९८ ॥

चोदिते वैकृते प्रधाने द्रव्ये यथार्थमूहः कर्त्तव्यः । १यथा तमर्थं प्रकाशयति तथा तथोह्यते । यत्कारणम् । प्रकृतौ तेन मन्त्रेण यागसाधन द्रव्यमभिहितं विकारेऽपि हि तेन तथैव कर्त्तव्यम् । न चाविपरिणतरूपः शक्नोति कर्तुमित्यर्थाद्विपरिणस्यते ॥ ९८ ॥

प्रकृतावनेकपत्नीके यागे पत्नीशब्दस्य विपरिणामे प्राप्त आह—

## न प्रकृतावपूर्वत्वादिति ॥ ९९ ॥

न प्रकृतौ विपरिणामोऽस्ति, अपूर्वत्वात्प्रकृतेः । न हि प्रकृतेरन्या प्रकृतिरस्ति यद्विक्रियते । विकृतौ तु प्रकृतिवद्भावाद्विपरिणामः ॥ ९९ ॥

प्रकृतिवद्विकृतिः कर्त्तव्येत्यनेनातोपधर्मपरिप्राप्ताविदमाह—

## विकृतौ वचनार्थलोपविरोधेभ्योऽप्रवृत्तिः ॥ १०० ॥

विकृतौ वचनादप्रवृत्तिर्भवति । यथा पितृयज्ञे न होतारं वृणीते नार्षेयमिति । अर्थलोपादप्रवृत्तिर्भवति । यथा मुद्गेष्ववघातस्य । विरोधादपि निवर्त्तते । यथा चरावुपेपणमिति ॥ १०० ॥

किमेतावदेव विकृतौ न प्रवर्त्तते नेत्याह—

## परार्थोत्पत्तेरतदभावेऽभावः ॥ १०१ ॥

परस्यार्थे निष्पद्यमाने यदुत्पन्नं तस्य परस्याभावे तस्याऽप्यभावो भवति । यथा साद्यस्केष्वपां कणापासनस्य ॥ १०१ ॥

---

१ यथा प्रकृतौ ' अग्नीषोमाभ्यां छागस्य वपायै मेदस ' इति मन्त्रघटकछागपदस्थाने ' मेषस्य ' इति भवत्यैन्द्रमेषादौ । तदुक्तम् ' शब्दे स्यविप्रतिपत्तिः ' इति ।

परार्थोत्पन्नस्य पराभावे ऽभावे प्राप्त आह—

चोदितत्वाद्वा भावः ॥ १०२ ॥

परार्थोनुत्पन्नावपि भवत्येव । यत्र यथा चोदना भवति । यथा यूपशकलेन ग्रहं सम्मार्ष्टीति, यूपाभावेपि शकलमात्रं गृह्यते ग्रहसम्मृज्यर्थम्१ ॥ १०२ ॥

इतनादुत्तरमुच्यते । पौर्णमास्याममावास्यायां वा यजेतेत्यनुवादोयमित्युक्तम् । तत्र प्राप्ति विधीयते—

न विपक्षे क्रियाः स्युः समभिव्याहारात् ॥१०३॥

किं चिद्विगतं पक्षं स्येति विपक्षः प्रतिपदुच्यते । तत्र च सैन्द्र्यः क्रिया न स्युः । क तर्हि । पक्षान्त एव स्युः । कुतः । पौर्णमास्याममावास्यायां वा यजेतेति वचनात् । ननूक्तमयमनुवाद इति । नानुवादः । अनुवादे हि पौर्णमासीशब्देन गौण्या वृत्त्या प्रतिपल्लक्ष्यते । तत्र श्रुतिः परित्यक्ता भवति । न चैतद्युक्तं यल्लक्षणानुरोधेन श्रुतिर्बाध्यते । अपि चानुवादो ऽप्रवृत्तिविशेषकरत्वादनर्थक एव भवति । सोमस्य चैतदेव कालविधानं य इष्ट्वा सोमेन पशुना ऽऽग्रयणेन यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेतेति । न ह्यत्र सोमस्य पौर्णमास्यमावास्ये विहिते अतोपि नानुवाद २ ॥ १०३ ॥

दर्शपौर्णमासयोः सान्नाय्यवतोरसान्नाय्यवतोश्चानुविधानं कृतमिदानीं दाक्षायणयज्ञोनुविधीयते—

दाक्षायणयज्ञः प्रजापशुयशस्कामस्य ॥१०४॥

---

१ यत्र तु क्रिया द्रव्यार्था तत्र साधनभूतद्रव्याभावे तदभावः, यथा पौष्णचरौ करम्भस्य ।

२ ' यद्दृष्ट्वेत्यर्थेष्टिग्रहणेनैवाग्रयणग्रहणे प्राप्ते पुनस्तदुपादानं पौर्णमास्यमावास्याकालग्रहणार्थम् । अतः । ' दर्शे पूर्णमासानीजान इत्यादावनिष्टापत्त्यपं कालः सिद्धो भवतीति भावः ।

दाक्षायणयज्ञ इति कर्मणो नामधेयम् । द्रव्यगुणसंस्कारेष्वप्रसिद्धत्वात् । तस्माद्दाक्षायणयज्ञो नामेति वचनात् । स च प्रजापशुबलयशस्कामस्य भवति । पर्यायेण च योगासक्तिः । न हि कामानां युगपदुत्पत्तिसम्भवः ॥ १०४ ॥

## नामफलगुणयोगात्कर्मान्तरम् ॥ १०५ ॥

तद्धि न कर्मान्तरं न दर्शपौर्णमासाविति । कुतः । नामान्यत्वात् । अन्यद्धि नाम दाक्षायणयज्ञ इति । नामान्यत्वे चान्या प्रतीतिर्भवति । यथा देवदत्तादन्यो यज्ञदत्त इति । फलान्यत्वाच्च । अन्यद्धि फलं श्रूयते । प्रजादिफलान्यत्वे च फलिनोऽन्यत्वं भवति । *गुणान्यत्वाच्च । गुणान्यत्वं च दृश्यते । मैत्रावरुण्यामिक्षेत्येवमादि ।* गुणान्यत्वे च गुणिनोऽन्यत्वं गम्यते । अतः कर्मान्तरमिति ॥ १०५ ॥

## गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम् ॥ १०६ ॥

अथवा न कर्मान्तरम् । तावेव गुणविकृतौ दर्शपौर्णमासाविति । कुत एतत् । सन्निधेः । दर्शपौर्णमासौ हि प्रकृत्याह तस्मात् त्रिंशतमेव वर्षाणि यजेतेत्यभिधाय यद्युदाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेतेति । सन्निहिते च तत्प्रतीतिर्भवति । तथा च सम्पद्वचनं अत्र ह्येव सा सम्पत्सम्पद्यत इति । यदि तत्र कर्म तदा साभ्यासैर्यागैस्त्रिंशत्सम्पत्पञ्चदशभिर्वर्षैः सम्पाद्यते । यत्तु नामान्तरत्वादिति । भवत्येकस्यापि नामान्तरं हस्तः करः पाणिरिति । धर्मान्तरत्वाच्च नामान्यत्वं ब्राह्मणपरिव्राजकवत् । *फलं गुणाश्रयम् । गुणान्यत्वेऽपि च न गुणिनोऽन्यता । न हि देव*दत्तस्योन्मादादिनान्यत्वं भवति । तस्मात्तदेवेदं कर्म गुणविकृतमिति । १प्रयोजनं दर्शपूर्णमासयोरक्रिया ॥ १०६ ॥

---

१ अस्यायं 'दाक्षायणयज्ञानुष्ठानपक्षे' इति शेषः । अत एव 'य-क्षसा ह वा अस्य दर्शपूर्णमासाभ्यामिष्टं भवति' इति श्रुत्यापि दाक्षायणानुष्ठानोत्तरं दर्शपूर्णमाससमाप्तिरुक्ता ।

अग्नीषोमीयः पौर्णमास्यामैन्द्राग्नोमावास्या-
याम् ॥ १०७ ॥

क्रियते इति वाक्यशेषः । एवं हि श्रूयते पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्याम् । तथैन्द्राग्नेन यजते ऽमावास्यायामिति ॥१०७ ॥

सान्नाय्यवत्प्रातः ॥ १०८ ॥

सान्नाय्यशब्दो यागार्थे दधनि पयसि च वर्त्तते । तच्च नोभ-यमुभयत्र भवति । अमावास्यायां हि पयस्योच्यते । पौर्णमास्यां पुनराग्नेयः पुरोडाशो भवत्यैन्द्रं सान्नाय्यमित्येतावदेव । उभयरूपे ह्युभयत्र प्रवर्त्तमाने सत्यथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरु-णीपयस्यानैवशावयामीति सैवाग्नेय. पुरोडाशोपैतयैव मित्रावरु-णौ द्वे देवते इति देवताद्वित्वं नोपपद्यते । उभयरूपे हीन्द्रोपि प्राप्नु-यात् । तस्माद्विभागेन सान्नाय्यवत्प्रातरेव चोपांशुयाजो न भवति१ ॥ १०८ ॥

अमावास्यायां पयस्या मैत्रावरुणी२ ॥ १०९ ॥

---

१ अत्र मुख्यायां पौर्णमास्यामुद्धरणादिकर्मापवर्गान्तमग्नीषोमी-यं सद्य एव प्रातः परिसमाप्य पुनरुद्धृत्याग्न्यन्वाधानमुख्याशनशा-खाच्छेददध्यर्थवत्सापाकरणोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा सायं होमानन्तरं दोहयित्वा निधानान्तं कृत्वा प्रातर्दोहार्थं व-त्सापाकरणं शाखोपगूहनं च कुर्यादिति देवभाष्ये ।

२ अत्र मुख्यायाममावास्यायां प्रातः काले सद्य पयोद्धरणादि कर्मापवर्गान्तं कृत्वा तदानीमेव पुनरुद्धृत्याग्न्यन्वाधानपिण्डपितृ-यज्ञमत्याशनशाखाच्छेदनसम्मनोपवेषकरणपवित्रबन्धनानि यथा-कालं कृत्वा सायं होमानन्तरं मैत्रावरुणपयस्यार्थं वत्सापाकरणं कु-र्यात् । अत्र 'मित्रावरुणाभ्यां भागमिति ' गोदपस्पर्शने विशेषः शाखोपगूहनं चेति देवभाष्ये ।

१तत्रैव दोहनः शृते वा दध्यानयति ॥ ११० ॥

दधनि वा दोहनम् ॥ ११० ॥

वाजिनं निषिच्योत्करे करोति ॥ १११ ॥

वाजिनमवसेचनमुच्यते । तस्य च यागसम्बन्धाद्यागधर्माः प्रवर्तन्ते । वेधामासाद्दने प्राप्ते उत्कर इत्युच्यते । न चात्र वेदिधर्माः प्रवर्तन्ते । स्वरूपप्रयुक्तत्वात् ॥ १११ ॥

अनाज्यलिप्तं वा ॥ ११२ ॥

तत्रस्याभिघारस्य विकल्पः । अनाज्यलिप्तं निषिच्येति वचनात् । ततश्च प्राणदानं भवत्यवरं ॥ ११२ ॥

प्रहृत्य तृणं तेन चरति विमुच्य वा स्रुचौ ॥ ११३ ॥

---

१ तत्रैव तस्मिन् लौकिकदध्न्येवाज्यनिर्वापानन्तरं पयस्यार्थं दोहनं कर्तव्यम्, प्रथममुपायां लौकिकं घनीभूतं दध्यासिञ्चेदित्यर्थः । अथवा पयसि शृते तप्ते सति पश्चाद्दध्यानयति न प्रथमम् । अत्र देवयाज्ञिकभाष्ये व्याख्याद्वयं दृश्यते, तत्र ' तत्रैव दोहनम् ' इत्यत्र 'सांनाय्यवत् ' इत्यनेन सायम्प्रातश्च दोहे प्राप्ते प्रातरेवेति नियमः, एवं ' शृते वा दध्यानयति ' इत्यत्र वाशब्दो पादानादशृते पयसि लौकिकदध्यानयनमित्याद्या । द्वितीया तु उभयत्र दधिपयसोर्विधमानत्वेन तत्रैव दोहने प्राप्ते पयो विकारत्वात्पयस्याया प्रातर्दोहनं कर्तव्यम्, अथवा शृते प्रा[illegible]यदोहदधि आनयनीति । वस्तुतस्तु स्वशा[illegible]ायां [illegible]नुपदेशात् शाखान्तरोक्त प्रकारस्य ग्राह्यत्वा[illegible]ादिदमेव [illegible]ति । अत्रार्थे ' तते प्रातर्दोहे सायन्दोहमा[illegible]ति ' [illegible]नं मूलम् ।

२ [illegible]यलेपो न कार्य इत्यर्थः । अत्र वाजिनस्य [illegible] न भवन्ति ।

नैतदेवम् । तन्त्रभेदस्तु तत्र । एकतन्त्रे चोपांशुत्वमित्याचार्याभिप्राय. येनेन्द्रवायोश्चसयोरुपांशुत्वं विदधातीष्टिषु च । एवं च राजसूयेऽप्यनुमत्यादिषु नैवोपांशुत्वं तन्त्रभेदात् । प्रजाकामवैश्वदेवे तर्हि्स्तु उपांशुत्वं व्यक्तत्वादेकतन्त्रत्वाच्चोदनैकत्वात् काम्यत्वाच्च । तथा पञ्चबिले । नैतदेवम् । न हि तत्र काम्यतयैवोत्पत्ति स्तेन यत्र व्यक्तत्वं चोदनैकत्वं चैकतन्त्र्यं च कामार्थं चोत्पत्तिस्तत्रैवोपांशुत्वम् । यथा मित्रविन्दायाम् । आह च ।

> व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना ।
> तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुता ॥ १३१ ॥

## आग्रयणे वैश्वदेवः ॥ १३२ ॥

उपांशुर्भवति ॥ १३२ ॥

## एककपालाश्चावरुणाः ॥ १३३ ॥

चाप्यवर्जम् ॥ १३३ ॥

## प्राजापत्यः ॥ १३४ ॥

उपांशुर्भवति । तस्माद्यत्किञ्च प्राजापत्यं यज्ञे क्रियत उपांश्वेव तत्क्रियत इति वचनात् ॥ १३४ ॥

## सावित्रश्चातुर्मास्येषु ॥ १३५ ॥

उपांशु ॥ १३५ ॥

तत्रैव—

## वैश्वदेवी ॥ १३६ ॥

पयस्या ॥ १३६ ॥

## वायव्यं ॥ १३७ ॥

पय, नपुंसकलिङ्गोपदेशात् । यवाग्वां तर्हि न प्राप्नोति । प्राप्स्यति यागधर्मत्वात् । न हि द्रव्यधर्मोऽयं अपूर्वप्रयुक्तत्वात् । दर्शयति च पर्वाणि प्रकृत्य तेषां वै चतुर्णां प्रयोक्षीणि त्रीणि हवींष्यनिरुक्तानि

भवन्ति हे ह्रे द्वयोरिति वैश्वदेवशुनासीरीययोस्त्रयाणामनिरुक्ततां दर्शयति । तस्माचयाण्यामप्युपांशुत्वम ॥ १३७ ॥

१तनूहवींषि ॥ १३८ ॥

दीक्षणीयाप्रायणीयातिथ्यादेवताः ॥ १३९ ॥

देवसूदेविकाहवींषि ॥ १४० ॥

उपांशुभवन्ति । दीक्षणीयादिषु देवताग्रहणं यागन्तपक्षार्थं म । सहप्रधानेन दीक्षणीयादौ यागन्तेन मा भूदिति ॥ १४० ॥

वायव्योग्नौ ॥ १४१ ॥

मैत्रावरुणी च ॥ १४२ ॥

अग्नावेव ॥ १४२ ॥

ऐन्द्रः सौत्रामण्यां प्रथमः ॥ १४३ ॥

वायोधसश्च ॥ १४४ ॥

उपांशु ॥ १४४ ॥

आग्नेयं प्रतिकाममाहरेत् ॥ १४५ ॥

आग्नेयं प्रकृत्य श्रूयते । सोस्मै काम. समृध्यते यस्मै कामायेध्रि निर्वपतीति ॥ १४५ ॥

वर्षार्थे पुनः प्रकृतौ वा ब्रूयाद्वृष्टिकामो-स्मीति ॥ १४६ ॥

अध्वर्यु ब्रूयात्पुरोवातं च विद्युतं च मन-साध्यायेति ॥ १४७ ॥

---

१ तानिचाग्नये पवमानायग्नये पावकायाग्नयेशुचय इत्ये-वमादीनि ।

प्रथमादि निगदव्याख्यातम् । सर्वाण्येतानीति चार्थनिर्देशो न शब्दनिर्देशः । यत्कारणम् । न ह्येतानीत्येतावता नैरपेक्ष्यं भवति । अतः प्रतिपदमुच्चारणमिति ॥ १४७ ॥

इदानीं दर्शपूर्णमासयोरेवारम्भनिमित्तमङ्गमाह—

अभ्राण्यभीधम् ॥ १४८ ॥

स्तनयित्नुं च वर्षं चेति होतारम् ॥ १४९ ॥

सर्वाण्येतानीति ब्रह्माणम् ॥ १५० ॥

अन्वारम्भणीयाग्नावैष्णव एकादशकपालः

सरस्वत्यै [1]चरुः सरस्वते द्वादशकपालो

दर्शपूर्णमासारम्भे ॥ १५१ ॥

एकादशकपालग्रहणं न कर्तव्यम् । आग्नेयाग्नीषोमीयविकारत्वादेव तत्प्राप्तेः । कर्तव्यं वा, कपालानां मध्यक्षविधानं यथा स्यादिति । ततश्च तद्गतगुणकामप्रवृत्तिरिति केचित् । दर्शपूर्णमासारम्भ इति श्रुतत्वात्प्रथमप्रयोग एव भवति । एवं हि श्रूयते । दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयया यजेतेति । आरम्भस्य च विद्यमानत्वा-द्विकारेऽपि प्रवृत्तिः । यथाग्रयणेष्ट्यां, चातुर्मास्येषु आरम्भस्य ए-कत्वादेकदैव भवति । क्षामवत्यादिषु त्वारम्भभेदात्पुनः पुनः प्रयोगः ॥ १५१ ॥

पष्ठौही दक्षिणा मिथुनौ वा ॥ १५२ ॥

पृष्ठेन या वोढुं समर्था वृषभे सा पष्ठौही । मिथुनौ चेति । मिथुनौ गावौ दद्यादिति ॥ १५२ ॥

इन्द्राय विमृध एकादशकपालः

पौर्णमासमनु ॥ १५३ ॥

---

१ चरुलक्षणं छन्दोगपरिशिष्टे 'यदा गोष्ठात् सुस्विन्नो ह्यदग्धो-ऽकठिनः शुभः न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा' इति ।

पौर्णमासेनेष्ट्वेन्द्राय विमृधेऽनुनिर्वपतीति वचनात् ॥ १५३ ॥ सद्यायम—

## १आदिविकल्पः ॥ १५४ ॥

शाखान्तरादादित्य एवारभ्यान्ताद्विकल्पः ॥ १५४ ॥

## आदित्येभ्यश्चरुमात्रास्यम् ॥ १५५ ॥

अनुभवतीति सूत्रशेषः ॥ १५५ ॥

## आग्रयणमैन्द्राग्नमग्रपाकस्य ॥ १५६ ॥

आग्रयणमिति कर्मणो नामधेयं चरुमात्रास्य । तत्र च प्रथमं हविरैन्द्राग्नम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवतीति । अग्रपाकग्रहणेन च शरद्वसन्तौ लक्ष्येते । तत्कथमग्रं पाकोऽग्रपाकः प्रथमपाक इत्यर्थः । स च शरद्वसन्तयोर्भवति । शरद्वसन्तयो-राग्रयणमिति शाखान्तरात् ॥ १५६ ॥

## व्रीहीणां यवानां च ॥ १५७ ॥

चरुरपि यावो यथा स्यादिति यवग्रहणम् । तेषामेव नियमो माभूदिति व्रीहिग्रहणम् । व्रीहिकाले व्रीहीणां यवकाले यवानाम् । अत एव च यावश्चरुर्भवति ॥ १५७ ॥

## वैश्वदेवश्चरुः ॥ १५८ ॥

तस्मादेव वैश्वदेवश्चरुर्भवतीति ॥ १५८ ॥

## पयसि वा ॥ १५९ ॥

स च वा पयसि भवति । पय:पक्षे तत्र प्रणीता धर्माः कार्याः ॥ १५९ ॥

---

१ आद्यावारम्भ एव विकल्पो यस्य सः । आरभ्यते न वेति, यद्यारभ्यते तदा यावज्जीवं क्रियत एव । तदुक्तम् 'रूपं कालोऽनु-निर्वापो देवता श्रपणं हविः, आद्ये ये विधृताः पश्चात्त इमे सर्वदा मताः,' इति ।

## द्यावापृथिवीय एककपालः ॥ १६० ॥

अस्य च वैश्वदेविकद्यावापृथिवीयप्रकृतिरवम् लिङ्गदर्शनात् । तस्य हि सर्वहुतं करोति अपर्यावर्तं जुहोतीति चाम्नायते । तेचैतं सर्वहोमापरिवृत्ती आज्ययागविधिपरे वाक्ये अनुवदति । तस्य परिचक्षा यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तोऽथैतां सर्वमेव जुहोति न स्विष्टकृते यजति सा च परिचक्षोतो हुतः पर्यावर्तेत इति सा द्वितीया परिचक्षा । तस्यैतदुभयमप्यनिर्दिष्टमस्याज्यस्यैव यागः कर्तव्य इति । तस्माद्वैश्वदेविकैककपालप्रकृतिरयमिति । एवं च सति त्रेधा बर्हिरहतवास परिधान चेहापि भवति । नवप्रयाजाद्यपीति चेत् । नैन्द्राग्नवैश्वदेवविरोधात् । आज्ययागेऽपि वासः परिधानादि भवत्विति चेत् । नैतदेवम् । पुरोडाशेन हि तत्पशुं पप्याप्यते । न चाज्यस्यासौ धर्मः । तस्मादप्रवृत्तिरिति । यत्तु वायव्ये पयसि द्रव्यान्तरत्वेऽप्युपांशुत्वं भवति । युक्तं तत्र प्रत्यक्षो ह्यसौ धर्मः । इह पुनश्चोदकत इति ॥ १६० ॥

## १उद्वास्यान्तारछादयेदाज्येन ॥ १६१ ॥

तस्यैतदाज्यं लौकिकमपूर्वत्वात् ॥ १६१ ॥

## आज्यस्य वा यजेत ॥ १६२ ॥

तस्मादाज्यस्यैव यजेदिति वचनात् ॥ १६२ ॥

## पुराणानां वा चरुः ॥ १६३ ॥

वैश्वदेवप्रकर्षो पुराणानां कर्तव्य । न वै पुराणानां कुर्याद्रि-क्ष्यापुरिति वचनात् । वा नवानाम् । तौ वा उभावपि नवानां स्यातामिति ॥ १६३ ॥

## प्रथमजो गौर्दक्षिणा ॥ १६४ ॥

---

१ द्यावापृथिवीयमुद्वास्य प्राणदानानन्तरमस्यान्तानाज्येन लौकिकघृतेनाच्छादयेदित्यर्थः ।

प्रथमजश्च गौर्न गोकुलस्याप्रतीतत्वात्। गोश्च जन्मना सामान्योतः प्रतीतत्वात्प्राथम्यं तदपेक्षम् ॥ १६४ ॥
प्रसङ्गमुपजीवन्नाह—

वैश्वदेवस्य च ॥ १६५ ॥

प्रथमाजा गौर्दक्षिणा ॥ १६५ ॥

दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चानुप्राश्यं ब्राह्मणान् भोजयेत्किञ्चिद्दद्यात् ॥ १६६ ॥

आहिताग्निः सन्यावद्दर्शपूर्णमासौ न करोति अथ चाग्रयणकालातिपत्तिर्भवति तत्राग्रयणे विशेषः कथ्यते । नवानां दक्षिणाग्निपक्वं चानुप्राश्यं ब्राह्मणान् भोजयित्वा किञ्चिद्दद्यात् । ततो यच्छक्नुयात्तद्दद्यादिति वचनात् । अस्य चाग्रयणस्यात पौर्णमास्यमावास्या वा काल इति ॥ १६६ ॥

अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः ॥ १६७ ॥

अग्निहोत्रेणैव यो नामायनं गमनं कर्तुमिच्छति अग्निहोत्रेणैवाग्रयणं गमयतीत्यर्थः । स न वैः सायं प्रातरग्निहोत्रहोमं कुर्यात् । यः सायं प्रातरग्निहोत्रहोमः स न वै कर्तव्यः । न ह्येतदाग्रयणं सायं प्रातर्ग्रहणादेवात्राग्रयणा स्यादिति । तथा च दर्शपूर्णमासानीजानस्य चातुष्प्राश्यविधिपरे वाक्ये अग्निहोमं प्रतिषेधति । नाग्निहोत्रे जुहुयादन्यत्र आग्रयणमन्यदग्निहोत्रमिति । अतश्चात्र न यजनीयकालनियम इति ॥ १६७ ॥

[1]तदाशिताया वा पयसा ॥ १६८ ॥

नवाशिताया वा गोः पयसा जुहोति ॥ १६८ ॥

---

१ तण्डयाशमाशिता तदाशिता तस्याः, नवान्नं खादिताया वा गोः पयसा सायं प्रातरग्निहोत्रहोम इत्यर्थः ।

दीक्षितव्रतं च ॥ १६९ ॥

तत्कालातिपाते यवाशिवापा गो पयसा कर्तव्यम् ॥१६९॥

उपसत्सु रौहिणौ कुर्वीत ॥ १७० ॥

उपसत्सु वर्तमानासु नवद्वयेण रौहिणौ कर्तव्यौ ॥ १७० ॥

सुत्यासु सवनीयाः ॥ १७१ ॥

कर्तव्या ॥ १७१ ॥

सौम्यः श्यामाकचरुरारण्यस्य ॥ १७२ ॥

आरण्याग्रयणं श्यामाकनीवारादि। आरण्यग्रहणाच्च सौम्ये कृते तत्र भक्षयत इति ॥ १७२ ॥

[1]वैणवो ग्रीष्मे ॥ १७३ ॥

सौम्य कर्तव्य। श्यामाकचरोश्च कालाभिद्देशात् ग्रीष्मेव भवति ॥ १७३ ॥

पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ॥ १७४ ॥

क्षौममात्रस्य मुच्यते। वर्षासु यत्परिहित उतमित्यके। तत्र धृतशब्दो नाञ्जसो भवति। तस्माद्वर्षासु यद्धृत परिहित तदेव भर्तव्यमिति ॥ १७४ ॥

अमावास्यायामग्न्याधेयम् ॥ १७५ ॥

अग्न्याधेयमिति कर्मणो नामधेयम्। तस्य समुदायस्य तेन ह्यसावग्निराधीयते उत्पाद्यते निष्पाद्यते। न मन्थनमात्र स्थापनमात्र

---

१ वैणव वेणुयवचरुरित्यर्थं। तथाचापस्तम्ब —'वेणुयवानामिष्टिमेके समामनन्ति' इति।

वा। आहवनीयशब्दो हि संस्कारनिमित्तः न जातिनिमित्तो योगनिमित्तो वा। तेषु सत्सु शब्दप्रयोगदर्शनात्। अतश्च यावान्कश्चिद्दृष्टार्थो अदृष्टार्थो वा तत्संस्कारायाम्नायते स सर्वोऽग्न्याधेयशब्दवाच्यः। एवं च सति संस्कारैकदेशाभावेऽपि अनाहवनीयता। अतश्च सकलकर्मसमुदायाश्रयावृत्तिरिति सम्प्रदायः। अत्र वदामः। कश्चित्संस्काराङ्गवान्भवति। यथा पूर्णाहुत्यामाज्याधिश्रयणाद्यङ्गं तूष्णीम्। अग्निहोत्रे च परिस्तरणादि। इष्टिषु चान्वाधानादि। यस्यैवाङ्गिनोऽङ्गापचारस्तस्यैवावृत्तिर्युक्तरूपा न सकलस्याधानस्येति। न चेहाङ्गापचारेऽपि प्रायश्चित्तं भवत्याहवनीयाद्यधिष्ठानाभावात्। ननु च विधन्त एवाहवनीयादयस्त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयमादधातीति प्रयोगदर्शनात्। नेत्युच्यते। यद्येतैवाहवनीयाद्युत्पत्तिः स्यात् शेषं व्यर्थमेव स्यात्। तस्मात्पञ्चभिराहवनीयमादधातीति भाविनीवृत्तिः। अतो नैमित्तिकहोमस्याभावः। यद्येवं पूर्णाहुत्यादि होमोऽप्यत्र न भवति। उच्यते। आहुत्याहवनीयसंस्कारायैव विधानादित्यदोषः। तस्मादिह विहितानां भाविनीवृत्तिर्युक्ता न तु नैमित्तिकहोमानाम्। ते हि सत्याहवनीये विधीयन्ते। पूर्णाहुत्यादयस्तु तदुत्पत्त्यर्थतयेति विशेषः। अमावास्याशब्दश्चात्र गौण्या वृत्त्या प्रतिपद्विषयः। एवम् हि श्रूयते आधानं प्रकृत्य यदहरेवैव न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेदिति। उपवासशब्दश्च यमनियमापेक्षः। यदहरत्राग्न्याधेयं स्याद्दिवैवादनीयादित्येवमादिविधानात्। तस्मादमावास्यायामुपक्रम्य प्रतिपद्याधानम्। कृत्तिकादिषु तु नैवं, न हि तत्रैवं वचनमस्तीति॥ १७५॥

## कृत्तिकारोहिणीमृगशिरःफल्गुनीषु ॥ १७६॥

स चायं विकल्पः। कृत्तिकास्वग्नी आदधीतेति निरपेक्षविधानात्। ननु चामावास्यायां कृत्तिकास्विति च किमिति न भवति। नैतदेवम्। एवं हि समामनन्ति स योऽमावास्यायामग्नीनाधत्ते यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत एव स्वर्गं लोकमियादेवं तदित्यमावास्यायां विधाय नक्षत्रनिषेधेन संस्तौति। अथ यो नक्षत्र आधत्ते यथा पिहितायां द्वार्यद्वारा पुरं प्रतिपि-

रसेऽस जिह्म पुर. स्यादेधन्तविति । तस्मादत्रापि नक्षत्राधिकारः ॥१७६॥

हस्तो लाभकामस्य ॥ १७७ ॥

स चायं विशिष्टो लाभ उच्यते न लाभमात्रं य इच्छेत्प्रमे दीयतेति वचनात् । तस्मात्प्रतिग्रहलाभः । अतश्च ब्राह्मणविषय ए-वायम् ॥ १७७ ॥

चित्रा च क्षत्रियस्य ॥ १७८ ॥

च शब्दाल्लाभकामस्य ॥ १७८ ॥

वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ॥ १७९ ॥

तस्माद्ब्राह्मणो वसन्त आदधीतेति वचनात् । ब्रह्मवर्चस-कामो वसन्त आदधीतेति । ब्रह्मवर्चसं च ब्राह्मणस्यैवोचितम् । त-स्मात्सकामनिष्कामयोर्ब्राह्मणयोरिति ॥ १७९ ॥

ग्रीष्मः क्षत्रियश्रीकामयोः ॥ १८० ॥

ग्रीष्मः क्षत्रियस्याधानकालो भवति । तस्मात् क्षत्रियो ग्रीष्म आदधीतेति वचनात् । श्रीकामो ग्रीष्मआदधीतेति हि श्रूयते । सर्वविषयं चैतत् । विशेषानवगमात् ॥ १८० ॥

वर्षाः प्रजापशुकामवैश्यरथकृताम् ॥ १८१ ॥

आधानस्य कालो भवति प्रजाकामपशुकामवैश्यर-थकृताम् । कामश्रवणश्च सर्वविषय. न वैश्य विषय एव । वैश्यो व-र्षास्वादधीतेति च निष्कामस्यापि वैश्यस्य । वर्षासु रथकार आदधीतेति च रथकारस्य वर्षाः ॥ १८१ ॥

इदानीं पूर्वेषु रूपकाममाह—

अग्न्यगारे कुर्वन्ति ॥ १८२ ॥

बहुवचनोपदेशाद्वप्रकृता ॥ १८२ ॥

उदग्वृंशं वा परम् ॥ १८३ ॥

वा प्राग्वंशपूर्वं तु प्राग्वंशमेव ॥ १८३ ॥

दक्षिणपूर्वे द्वारे ॥ १८४ ॥

अपरस्य दक्षिणम् पूर्वस्य पूर्वम् । न ह्येकैकस्य द्वारद्वय विधानमुपपद्यते । यस्मादपरस्य पूर्वं सामर्थ्यपरिप्राप्तम् ॥ १८४ ॥

पौर्णमासवद्वपनम् ॥ १८५ ॥

भवति । पतिना च अविशेषमतिदिश्यते । विकल्पस्य तु सूत्रान्तराभिहितत्वात् । ऋतुनक्षत्रसम्भारसामवपनादीन् वा कुर्यादिति ॥ १८५ ॥

क्षौमे वस्ते ऽहते पत्नी च ॥ १८६ ॥

क्षौमे वाससे अहते अधीते पत्नी च । क्षौमे वसानावग्नी आदधीयातामिति वचनात् ॥ १८६ ॥

सᳫंस्थिते ऽध्वर्यवे देये ॥ १८७ ॥

ते च परिसमाप्ते ऽध्वर्यवे देये ॥ १८७ ॥

गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥ १८८ ॥

मन्थनसन्निधाना प्रकृताभ्यामेवारणिभ्याम्, अनयोर्हि सन्निधानात् ॥ १८८ ॥

वैश्यकुलाम्बरीषमहानसाद्वा ॥ १८९ ॥

वैश्यकुलादपरिगृहीतो हुतोच्छिष्टो वा परिगृह्यते । अम्बरीषो भ्राष्ट्र कन्दुरिति च प्रसिद्ध । महानसो यत्राक्षीयाग्निर्यथा लौकिकेषु सत्त्रेषु ॥ १८९ ॥

दिवाश्नाति रात्रौ वा ॥ १९० ॥

पत्रहरस्य भोग्न्याधेयऽइत्यादिष्वेवाश्नीयादिति । न चाय नियमनियम । किं तर्हि रात्र्यशनविकल्पार्थमिदमुक्तम् । तद्वाविकाममय सकामभोयादिति ॥ १९० ॥

उपास्तमयं देवाः पितरः पितरो देवा योऽह-
मस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि
स्वं म इष्टं् स्वं् श्रान्तं् स्वं् हुतमास्त्विति ॥ १९१॥

इत्याहपति। तत्कुतः। स यो हैवं विद्वान् देवाः पितर इति ह्वयतीत्याह्वाने विनियोगात् ॥ १९१॥

पूर्वेण प्रविशति दक्षिणेन पत्नी ॥ १९२ ॥

पूर्वेण द्वारेण यजमानो दक्षिणेन पत्नी ॥ १९२ ॥

पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥ १९३ ॥

गार्हपत्यागारनिहितस्याग्नेः पश्चाद्दक्षिणतः पत्नीमनुवचनात् ॥ १९३ ॥

अश्वत्थशमीगर्भारणी प्रयच्छति ॥ १९४ ॥

अश्वत्थश्चासौ शमीगर्भश्च अश्वत्थशमीगर्भस्तत्सम्बन्धिन्यौ अरणी प्रयच्छति यजमानाय। ते चाग्न्युत्पत्त्यर्थे परिगृह्येते। एवं च सति ते एव व्यक्ती सर्वदा भवतः। अन्ते च प्रतिपत्तिदर्शनात्। अरणी प्रणयोरिति। तथा च सत्यनयोरभावे नारण्यन्तरानुपादानं प्रक्षयं कर्तुं व्यक्तिनियमात् ॥ १९४ ॥

अभावेऽगर्भस्य ॥ १९५ ॥

शमीगर्भाभावे ऽश्वत्थमात्रादगृह्येते ॥ १९५ ॥

वाचं यच्छत्यापूर्णा हुतेरित्याहास्तमिते निशायां
पर्युदयं वा प्रधान कालत्वात् ॥ १९६ ॥

अस्तमित आदित्ये रात्रौ यजमानमाहेति शाखान्तरश्रवणात्। अस्तमित इति श्रुतत्वादस्तमितमहणम्। रात्रावपि च श्रुतत्वाद्विशामहणम्। पर्युदयमिति च यवमस्य पदार्थप्रमेयात्।



तेषां च पर्युदयकालता दृष्टा यतवाक्त्वेन हि पदार्थाः सुखेनानुष्ठीयन्त इति दृष्टार्थता भवति । इतरथा ऽदृष्टार्थता स्यात् । तस्मात्पर्युदयमेवेति । यत्तु अस्तमिते आदित्ये रात्राविति च श्रूयते तदुदयसमीपेपि भवत्येव । प्रागुदयाद्धि रात्रिरेव भवतीति । अपरे तु विकल्पमेवेच्छन्ति ॥ १९६ ॥

गार्हपत्यागारे ऽजं बध्नाति न वा विद्यमानं प्रातरग्नीधे दद्यात् ॥ १९७ ॥

तत्रैके ऽजमुपबध्नन्तीति प्रकृत्याह । तत्तु तथा न कुर्याद्यद्यजः स्यादग्नीधएवैनं प्रातर्दद्यात्तेनैव तं काममाप्नोतीति । तेन यद्यजो नास्ति ततो नियोगतो बध्यते । अविद्यमाने प्रातरग्नीधे संस्थिते कर्मणि दानं संस्थित इति काण्वपाठात् । पर्वा रात्रिमजं बध्नातीति चास्तमितग्रहणम् ॥ १९७ ॥

१अस्तमिते रोहिते चर्मण्यानडुहे चत्वारि हविष्यपात्राणि मिमीते तं चातुष्प्राश्यं पचति ॥ १९८ ॥

हविष्याश्च व्रीहयो न यवाः । ओदननिर्देशात् । अथ चातुष्प्राश्यमोदनं पचन्तीति । तं चातुष्प्राश्यं पचतीति नामनिर्देशात्तण्डुला एव मीयन्ते न व्रीहयः । कण्डनस्याश्रुतत्वात् । पात्राणि च प्रसृतिपरिमाणानि भोक्तृतृप्तिपरिमाणं छत्रव्यवच्छेदकम् ॥ १९८ ॥

उद्वास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम् ॥ १९९ ॥

---

१ सूर्ये ऽस्तमुपगते रक्तवृषभचर्मणि व्रीहिपूर्णानि चत्वारि पात्राणि स्थापयति । चतुर्णां ऋत्विजां तृप्तिपर्याप्तं तं चातुष्प्राश्यं गार्हपत्येऽग्नौ पचति इत्यर्थः ।

चातुष्प्राश्यस्यासेचनं मध्ये कृत्वा सर्पिरासिच्य तेनाक्तास्ति-स्रः समिध आदधाति समिधाग्निमिति प्रत्यृचमिति ॥ १९९ ॥

उपत्वेति जपति ॥ २०० ॥

तिसृभिराद्धास्येकं जपतीति हि श्रूयते ॥ २०० ॥

१ द्वितीयां वाध्वर्युः ॥ २०१ ॥

द्वितीयां वा जपति । येनैवं श्रूयते । समिद्वतीभिर्घृतवती-भिर्ऋग्भिरभ्यादधातीति समिच्छब्दवतीभिर्घृतशब्दवतीभिश्चेति । द्वितीया च न समिच्छब्दवती अतो द्वितीयामेव जपतीति । पा-ठक्रमस्तु लिङ्गेन बाध्यते । अध्वर्युग्रहणं च पाठक्रमव्युदासार्थम् । अतश्च समिदाधानान्ते जपः । अपरे तु जपं याजमानमिच्छ-न्ति । मन्त्राद्याकर्मकरणा इति सूत्रितत्वात्तेनाध्वर्युरित्युच्यते ॥२०१॥

चत्वार ऋत्विजः प्राश्नन्ति ॥ २०२ ॥

तमोदनम् ॥ २०२ ॥

राद्धस्ते ब्रह्मौदन इत्याह ॥ २०३ ॥

अध्वर्युः ॥ २०३ ॥

वरं ददाति ॥ २०४ ॥

ऋत्विग्भ्यो यजमानः । चातुष्प्राश्येन चाग्नेर्निर्वर्तितत्वादृ-त्विग्भ्य ब्रह्मौदन न भवति । भवति चातुष्प्राश्य भवतीति चेत् । प्रा-श्यपदार्थस्यास्प्रकृतत्वात् । अन्याधेय ब्रह्मा सामानि गायतीति प्रकृ-तार्थाय दद्यादिति ॥ २०४ ॥

संवत्सरं चातुरस्तात्कुर्यात्ततः सर्वानादधीत ॥ २०५ ॥

---

१ अथवा न उपत्वेति ऋचं जपत्यपि तु सुसमिद्धायेतीमां ज-पतीत्यर्थः ।



इदमन्यत्पक्षान्तरम् । पुरस्तादाधानस्य संवत्सरं यावत् मानादिवरदानान्तमादनं कुर्यादिति । अस्मिंश्च पक्षे उत्तमरात्रिसंयोगेन चत्वारः पदार्था भवन्ति । अशननियमः । अजवन्धनम् । जागरणम् । धारणमग्नेश्चेति । उत्तमसंयोगेन ह्येते श्रूयन्ते । पदहरस्य श्वोऽग्न्याधेयः स्यादित्येवा इनीयादिति अशननियमः । तथा एनाः रात्रिमजे बध्नन्तीति अजवन्धनम् । तथा जाग्रति देवा इति प्रकृत्याह । स स देवतरः श्रान्ततरस्तपस्वितरोऽग्नी आधत्त इत्याधानकालस्य भवति । धारणस्य प्रधानकालत्वादित्युक्तमवेति । ततः सर्वानादधीत । तत एवाग्नेः सकाशात सर्वमग्न्य आधीयन्ते । सभ्योऽपि तत एव सर्वग्रहणात् । तस्य हि मन्थनं विहितम् । सभ्य च निर्मथ्येति ॥ २०५ ॥

अत्राधानोत्तरकाल कर्मविरच्यते—

गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् ॥ २०६ ॥

विहरणोपदेशादग्निहोत्रकाले गार्हपत्यानुगमने लौकिकमग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्भ्यो दत्वा तमेव विहृत्याग्निहोत्रहोमं कुर्यात् । पुनः स्वयोनेराहरणम् । गुणविधित्वाच्च नात्र मानादि भवति ॥ २०६ ॥

रात्रिं जागरणधारणे ॥ २०७ ॥

जागरणं यजमानस्य धारणमग्नेः ॥ २०७ ॥

शकलैर्वा ॥ २०८ ॥

प्रसिद्धेः । गोमयादिभिर्वा । ननु चैतदवाच्यम् । सामर्थ्यसिद्धत्वात् । वाच्यं वान्यतरनियमो यथा स्यादिति ॥ २०८ ॥

व्युष्टायामुपशमय्य दक्षिणा वा संहरेदन्वाहार्यपचनश्चेत् ॥ २०९ ॥

व्युष्टायां रात्रावुपशमय्यतमग्निं दक्षिणा वा संहरेत् । पश्च-

न्वाहार्यपचनो नित्योऽभिप्रेतः स एवं भवति ॥ २०९ ॥

स्थानमुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः ॥ २१० ॥

उपशमितस्याग्नेः स्थानमुल्लिख्यान्वारब्धेऽभ्युक्ष्य हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः । अन्तग्रहणाच्च उपाखूत्करैर्वृत्ताकारः कर्त्तव्यः । ततोऽन्तेषु शर्करा इति । यत्र चोल्लेखनोपलक्षिताः स्मार्त्ताऽपि पदार्थाः परिसमूहनादयः पूर्वं कर्त्तव्याः । अभ्युक्षणं तु तन्त्रेणैव भवति ॥ २१० ॥

हिरण्यमुपर्येके ॥ २११ ॥

उपरिष्टादेके हिरण्यमिच्छन्ति । एवमपि हि श्रुतत्वात् ॥२११॥

एवमितरयोः ॥ २१२ ॥

आहवनीयदक्षिणाग्न्योः स्थाने कर्त्तव्ये ॥ २१२ ॥
अयं तु विशेषः—

पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशासु मत्या वा ॥ २१३ ॥

त्वा अष्टासु विक्रमेष्वाद्धीतेत्येवमादि वचनात् ॥ २१३ ॥

इतरस्य वितृतीये दक्षिणतः ॥ २१४ ॥

इतरस्य दक्षिणाग्नेः वितृतीये देशे दक्षिणतः स्थानं कर्त्तव्यम् ॥ २१४ ॥

उद्धृतेऽग्निमथनमनुद्धृत एके ॥ २१५ ॥

उदितेऽनुदिते वाग्निमन्थनं भवति ॥ २१५ ॥

उदिते तूद्धरणम् ॥ २१६ ॥

उद्धरणं तूदित एव कर्त्तव्यम् ॥ २१६ ॥



अपरेण गार्हपत्यायतनम् ॥ २१७ ॥

मन्थनं भवतीति वाक्यशेषः ॥ २१७ ॥

तत्र च—

अश्वमानयेति ब्रूयात् ॥ २१८ ॥

तस्माद्यत्राग्निं मन्थिष्यन्स्यात्तदश्वमानेतवै ब्रूयादिति । अतश्च यो मन्थिष्यन् स प्रैषं ददाति । स चाध्वर्युः शाखान्तरे विहितः । तस्मादध्वर्युः प्रत्यङ्मुखोमन्थतीति । अग्नीमनुप्रैषार्थं करोति ॥२१८॥

१स्थितेऽश्वे पुरस्तात् ॥ २१९ ॥

मन्थनं भवति ॥ २१९ ॥

जाते वरदानम् ॥ २२० ॥

जातेऽग्नौ वरदानं कर्तव्यम् ॥ २२० ॥

मनसैके ॥ २२१ ॥

मनसा वा सङ्कल्पमात्रं कृत्वा पश्चाद्ददाति ॥ २२१ ॥

तस्याभिश्वासः प्राणममृते दध इति ॥ २२२॥

---

१ तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ईशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्याः मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पूर्वेऽरण्यन्ते मन्थनस्थानं कृत्वा चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्रकीलकस्योपर्युदगग्रामोविलीं निधाय यन्त्रं धारयित्वा चात्रं नेत्रेण प्रदक्षिणं त्रिर्वेष्टयित्वा तथा मन्थनं कुर्याद्यथा जातोऽग्निः प्राच्यां पतति । तत्र यजमानः प्राङ्मुखो यन्त्रधारणं करोति, पत्नी चात्रं नेत्रेण त्रिर्वेष्टयित्वा मन्थनं करोति । ततः शाखान्तरादध्वर्युश्च । 'तस्मादध्वर्युः प्रत्यङ्मुखोऽभिमन्थति' इति । चात्रादीनां लक्षणमन्यत्र स्पष्टम् ।

अभिश्वासेन च प्राण्यते अग्निः समर्थः क्रियते । ततश्च मुखेनाभिश्वासः क्रियते ॥ २२२ ॥

उच्छ्वासोमृतं प्राण आदध इति ॥ २२३ ॥

वायूपादानं उच्छ्वासः । सैव चापाननक्रिया । स पुनरपानिति तदेनमन्तरात्मन्नाधत्त इति । तदेनमग्निमन्तरात्मन्नाधत्त इति । यजमानसंस्कारोयमिति तत्कर्तृकः । अतश्च पुनराधेये न भवत्यग्निसंस्कारत्वात् । अभिश्वासस्तु भवत्येव । द्वावपि चैतावेककर्तृकौ । सपुनरपानितीति वचनात् । अभिश्वासः पुनर्जातसंयोगार्थः । संयोगाद्धीतेत्यत्र न भवति । उच्छ्वासस्त्वात्मसंस्काराद्भवत्येवेति ॥२२३॥

१दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्वमुष्य त्वा व्रतपते व्रतेनादध इति यथर्षि ॥ २२४ ॥

यथर्षि ग्रहणेन शाखान्तरपरिपठितमार्षेयं गृह्यते । यथाङ्गिरा अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादध इति । यदि भृगवः भृगूणां त्वा देवानां व्रतपते व्रतेनादध इति । भार्गवाङ्गिरसव्यतिरिक्तानां आदित्यानां त्वा देवानामिति । यथं हि शाखान्तरे पठ्यते२ ॥ २२४ ॥

---

१ तं जातमग्निं दारुभिर्यज्ञीयवृक्षकाष्ठैर्ज्वलन्तं दीप्यमानं सम्भारेषु सम्भाराणां हिरण्यादीनामुपरि भूर्भुव इति मन्त्रेण अमुष्य त्वेति मन्त्रेण च स्थापयति, यथर्षि यस्य य ऋषिर्भवति तदथामुष्यति स्थाने तद्विशेषचि पद प्रयुञ्ज्यत प्रयोज्यमित्यर्थः ।

२ तथा चापस्तम्ब 'भृगूणां त्वा देवानामिति यो भार्गव स्यादङ्गिरसां त्वा देवानामिति यो ब्राह्मण आङ्गिरसः स्यादादित्यानां त्वा देवानामित्यन्यासां प्रजानां, वरुणस्य त्वा राज्ञो व्रतपत इति राज्ञ इन्द्रस्य त्वेन्द्रियेण व्रतपत इति राजन्यस्य मनोर्ग्रामण्यो व्रतपत इति वैश्यानां आदित्यानां त्वेति रथकारस्येति यथर्ष्याधानमिति ।

वरुणस्य त्वेति क्षत्रियस्येन्द्रस्य त्वेति राजन्यस्य ॥ २२५ ॥

यजपते यजेनादध इत्युभयत्र सम्बध्यते । राजन्यग्रहणेन च केश्चिदनभिषिक्तो गृह्यते । अनभिषिक्त क्षत्रिय इति । एतच्चायुक्तम् यत्कारण क्षत्रियायां ब्राह्मणाज्जातो राजन्य इति स्मर्यते । तस्मात्स एव गृहीतव्य. ॥ २२५ ॥

मनोष्ठा ग्रामण्य इति वैश्यस्य ॥ २२६ ॥

ऋभूणां त्वेति रथकृतः ॥ २२७ ॥

आदधाति । देवानामित्यत्रापि हि पठ्यते । रथकारशब्द. स्वजातिनिमित्त इत्युक्तम् ॥ २२७ ॥

रथन्तरं गायेति प्रेष्यति ॥ २२८ ॥

प्रैषप्रैषार्थयोः कर्तृभेदाच्च ज्ञायते क प्रैषे को वा प्रैषार्थ इत्यत आह—

गानमध्वर्योः ॥ २२९ ॥

समाख्यानात् । अध्वर्युवेदविहित हि सामगानम । उत्पत्तिमात्र हि सामवेदे । प्रैषार्थस्य च प्रधानभूतत्वात् ॥ २२९ ॥ एव प्राप्त आह—

ब्रह्मा वा वेदयोगात् ॥ २३० ॥

ब्रह्मा वा सामगायति । कुत एतत । ब्रह्मणोऽपि ह्यध्वर्युवेदविहितकर्मयोगोऽस्ति । वेदत्रयविहित हि ब्रह्मत्वमत. समाख्यातस्तत्रापि घटते ॥ २३० ॥

युक्तत्वाच्चाध्वर्योः ॥ २३१ ॥

अपि च युक्तोऽध्वर्यु. पदार्थान्तरेषु । तथा च सूत्रान्तरम् ।

प्रस्तोता परिसामानि गायति अग्न्याधेये सौत्रामण्यां च ब्रह्मेति। तस्माद् ब्रह्मैव सामगाने ॥ २३१ ॥

इध्मेनोद्धरणमुपयम्य ॥ २३२ ॥

परिधिवृक्षसम्बन्धिनेध्मेनाहवनीयोद्धरणम्। उपयमनीभि-र्मृद्भिर्गृहीत्वा विस्रस्तत्वाच्च मृद्भिर्महद्यानुपपत्तिरतस्तत्रारोपणमात्रे-णैवोपयमनम्। तत्र चेध्मामारोप्यते। शुभ्रा. पुनरग्राधीति ॥२३२॥

यथैनं धूम उपेयात् ॥ २३३ ॥

तथा चोद्धरणं कर्त्तव्यम्। यथा यजमानं धूम उपगच्छेत्। अनेन च प्रकारेण यजमानस्य धूमानुगमनं विधीयते ॥ २३३ ॥

वामदेव्यमिति प्रेष्यत्यश्वः पुरस्ताद्युवा तदभावे ऽयुवाश्वाभावे ऽनड्वान् ॥ २३४ ॥

तं पश्च प्राञ्चं हरन्ति तत्पुरस्तादश्वं नयन्तीति वचनात्। मन्थनकालाद्धृत एवायमश्वो नाश्वान्तरं तदभावे चानड्वान्भवति। अस्मिंश्च पक्षे अनभिधायकत्वादश्वमानयेति प्रैषाभावः ॥ २३४ ॥

१सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं-नीत्वावर्त्य स्थापयति ॥ २३५ ॥

दक्षिणपूर्वपादेनेति सन्निधानात्सम्भारानुसारेण प्राञ्चं नीत्वा-वर्त्य स्थापने क्रियमाणे सन्निहितो दक्षिणपूर्वपादः। एष च सव्य-प्रो सव्येनाक्रमणम् ॥ २३५ ॥

---

१ एवं प्राङ् मुखे ऽश्वे अग्नौ नीयमाने आहवनीयगृहसमीपे प्राप्य प्राङ् मुखस्यैवाश्वस्य दक्षिणपूर्वपादेनाग्नेर्दक्षिणचरणेनाहव-नीयगृहस्थान् हिरण्यादिसम्भारानधिष्ठाप्य अश्वपादेनाक्रम्य तमश्वं प्राञ्चं नीत्वा ततः आवर्त्य प्रदक्षिणावर्त्तनेन प्रत्यङ् मुखं कृत्वा सम्मुखे स्थापयतीत्यर्थः।

बृहदिति प्रेष्यन्नग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत् ॥ २३६ ॥

अग्निना पदं द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेनादधाति द्वितीयेन वा भूर्भुवः स्वरित्यनेन मन्त्रेण । पूर्ववच्छब्देन च यथर्त्वीति लभ्यते ॥ २३६ ॥

पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह ॥ २३७ ॥

पुरस्तात्परिक्रम्याग्नेः इध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेति मन्त्रं जपति । तच्चैतद्यजमानः करोति । इध्मपूर्वार्द्धान्वारम्भण इति अन्वारम्भोपदेशात् । तस्य च याजमानत्वात् । मन्त्रलिङ्गाच्च । अन्यमितमन्त्राद्यमप्याम्नायादश्च इति ॥ २३७ ॥

आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः ॥२३८॥

चशब्दाद्यजमानोऽन्युपस्थाने । सार्पराज्ञी ग्रहणं च सव्यवहारार्थम् । सार्पराज्ञीर्न वा कुर्यादिति ॥ २३८ ॥

दक्षिणाग्निमादधाति ॥ २३९ ॥

गार्हपत्यात् । नित्यपक्षे योऽसौ दक्षिणाह्वनस्तमादधाति ॥२३९॥

सभ्यं च निर्मथ्य ॥ २४० ॥

चशब्दादादधातीति । तं च सभास्थाने । अथ य एष सभायामग्निरिति वचनात् । सभा च यत्र स्थितोऽध्यापयति व्याचष्टे वा ॥ २४० ॥

गां दीव्यध्वमित्याह ॥ २४१ ॥

दीव्यति' क्रीडार्थः । गां पणं कृत्वा द्यूतं रमध्वमित्यर्थः । बहुवचनापदेशाद्यप्रकृतत्वाच्च ऋत्विजोऽभिधीयन्ते द्यूतस्य कर्तृत्वेन ।

तथैतधूतं सभ्याङ्गम् । सभ्यस्य प्रकृतत्वात् । उपरितनसूत्रे च तद्धर्मोपदेशात् ॥ २४१ ॥

धारणोपस्थानमत इति ॥ २४२ ॥

सभ्याङ्गत्वे च पुनराधेये न भवत्येव विद्यमानत्वादेव सभ्यस्य । यद्यपि च तनूहर्वीपि कालान्तरे क्रियन्ते तथापि तु सभासनमत एवारभ्य कर्त्तव्यमिति ॥ २४२ ॥

श्यैतवारवन्तीययज्ञायज्ञियानीति च

प्रेष्यति ॥ २४३ ॥

च शब्दः सभ्यानन्तर्यप्रज्ञसचर्यः । श्यैतादीनां चैककालं प्रैषोच्चारणमिति सम्प्रदाय । प्रैषप्रैषार्थयोरानन्तर्यद्वन्द्वे नेत्यपरे । तत्र श्यैतगानोत्तरकालीनो वारवन्तीयप्रैषः । वारवन्तीयोत्तरकालीनश्च यज्ञायज्ञियस्य ॥ २४३ ॥

दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥ २४४ ॥

प्रदक्षिणमग्निपरिगमनं कृत्वा उदगुत्सृजत्यश्वम् । दक्षिणप्रहणाच्च नेतरथावृत्तिर्भवति ॥ २४४ ॥

ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्य-

जागरणेध्मपूर्वाग्न्यारम्भणसार्पराज्ञीर्न

वा कुर्यात् ॥ २४५ ॥

ऋत्वादिविकल्पार्थमिदमुक्तम् । ऋतौ तावत् । ते वा एत ऋतव उभये पराप्तहतपाप्मान इति प्रकृत्याह तस्माद्यदैवैनं कदाच यज्ञ उपनमेदथाग्नीआदधीतेति । तथा यदेवैनं श्रद्धोपनमेदथादधीतेति ऋत्वनादरः । तस्माच्च नक्षत्र आदधीतेति नक्षत्रविषयोनादर । नक्षत्रानादरं चामावास्यायां नियम इति सम्प्रदायः । तत्पुनर्नातीव युक्तरूपम् । यत्कारणं अमावास्या नक्षत्रं च भेदेन विहिते । कृत्तिकादिष्वादधीतेति नक्षत्रविधानम् । तद-

नादरे चाग्नीत्रिकादिष्वपीति गम्यते । तथा चाह यद्यु नक्षत्रका म स्यादितद्वा अन्यराद्धं नक्षत्र यत्सूर्यं स एतेनैव पुण्याहेन यजे-तैवां नक्षत्राणां कामयेत तदुपेतैरिति । एवं सत्यमावास्यायाम-कृत्तिकादिष्वाधानं भवत्येव । सम्भारेषु विहितप्रतिषेधाद्विक-ल्प । न वै कश्चन सम्भारः सम्भरेदिति वचनात् । सामस्वपि चालेऽग्निसेजोऽपन्ति सामानि तस्मान्न गेयानीति । वचनेऽपि शाखा-न्तराद्विकल्प । चातुष्प्राश्येऽपि चातुष्प्राश्यमोदनं पचन्तीति विधा याह यद्वा अस्य ब्राह्मणा कुले वसत्यृत्विजश्चाग्निजश्च तेनैव तत कामममाप्नोतीति विकल्प । जागरणमपि विधायोच्यते । तदपि का ममेव स्वप्यादिति । इध्मपूर्वार्द्धान्वारम्भणं च पूर्वार्द्धमुल्मुकानामभि पद्य उपतीत्युक्त्वाह स यदि कामयेत जपेत्तद्यद्युकामयेतापि नाद्रियेतेति । सार्पराज्ञ्युपस्थानमपि सर्पराज्ञ्या ऋग्भिरुपति-ष्ठतेति विधायाह तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति ॥ २४५ ॥

विकल्पप्रसङ्गेनेदमपरमुच्यते—

अग्निहोत्रं च तूष्णीं श्रुतेः पूर्णाहुत्यन्ते ॥ २४६ ॥

अग्निहोत्रशब्दोऽत्र धर्मवचैयमिकाग्निहोत्रधर्मातिदेशार्थं । ना जुहुयाद्वा न जुहुयादिति । कुत एतद् । एवं हि शाखान्तरे पठ्यते । होतव्यमग्निहोत्रं न होतव्यमग्निहोत्रं विधिप्रतिषेधाच्चाशङ्काग्निहोत्र चेत्युक्तम् । तत्पुनरयुक्तम् । न ह्यतौ विधिप्रतिषेधौ । तूष्णीं हो-मप्रशंसैषा । यदि जुहोत्ययथाकुर्यादथ न जुहोत्यग्नि परापतत्त स्मात्तूष्णीं जुहुयादिति । अतो न विकल्प । तच्चैतदग्निहोत्रं सायारम्भ प्रातरपवर्गं प्रयोगद्वयपरिसमापनम् । आग्नेयी सायमाहुतिः सौरी प्रातराहुतिः प्रधानभूते । अत्र चैककालत्वादङ्गानि तन्त्रेण । प्रधानाहुती तु चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तरे तदुन्नीय चतुर्गृहीतान्तरेण सौरीम् शेषमेकीकृत्योत्तराहुतिरिति । तच्चैतत्पूर्णाहुत्यन्ते भवति ॥ २४६ ॥

पूर्णाहुतिविधानायाह—

निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक् स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वान्वार-

स्रुच एव सर्वत्र स्वाहेति ॥ २४७ ॥

पूर्णाहुतिरिति कर्मणो नामधेयम् । अन्वर्थसंज्ञा चैषा । तेन पूर्णैव होतव्या । तां वै पूर्णां जुहोतीति वचनात् । निरूप्याज्यं गार्हपत्येऽधिश्रयेत् । गार्हपत्यग्रहणं च आहवनीयव्युदासार्थम् । तत्रापि हि श्रपणं विहितं श्रपणमाहवनीय इति । अपरे तु मन्यन्ते । अधिश्रयणं संस्कारमात्रमेवैतत् । न हीनच्छ्रपणं श्रपयेदिति श्रारार्थः पाकेनैव स्वाज्यं संसृष्टं तस्मादाहवनीयव्युदासार्थं न गार्हपत्यग्रहणम् । कस्तर्हि समाधिः । गार्हपत्यशब्दस्य संस्कारनिमित्तत्वात्तदभावाच्च भाविन्या वृत्त्या गार्हपत्यशब्दस्यारोपणार्थं गार्हपत्यग्रहणम् । एवं च सत्याहवनीयेऽप्ययमेव न्यायः । स्रुक् स्रुवं सम्मृज्यते । होमसम्बन्धाद्धैकवृत्ता स्रुक् । स्रुवश्च विशेषितत्वादाघारादिष्वेव । तथा च अग्निहोत्रे विधानसामर्थ्यात् । वैकल्प्यः स्रुचो भवति । उद्वास्योत्पूयाज्यस्य स्रुवेण ग्रहणम् । स्रुवस्य सम्मार्जनविधानात् । ग्रहणार्थेन सम्मार्जनात्यये च दर्भैर्येन काचित्पाणिना सम्मार्ष्टीत्याह । अन्वारब्धे जुहोति स्वाहेति । एवं सर्वत्र । यत्राव्यक्ता जुहोति चोदना तत्राधिश्रयणादि प्रवर्तते । कुत एतत् । जुहोति शब्दात् । अव्यक्तता सामान्याच्च ॥ २४७ ॥

वरं ददामीति वाग्विसर्जनम् ॥ २४८ ॥

वरदानं च पूर्णाहुत्यङ्गम् । तस्यां वरं ददातीति वचनात् । पूर्णाहुतिधर्माश्चानुद्धूताऽप्यन्यस्यामाहुतौ विहिता गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्येत्येवमादि । इयं त्वविहितधर्मका तेन चोदनासाकल्येन ततो धर्मान् गृह्णाति । अत आचार्येण तदीया धर्मा इहापदिष्टाः । तत्रान्वारम्भणवरदाने न विहिते । अतस्तयोरत्रातिदेशः । वाग्यमोऽपि चेहैवेति नातिदिश्यते ॥ २४८ ॥

द्वादशाहान्ते तनूहवींषि निर्वपति मासे
द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा
न वेति ॥ २४९ ॥

निगदव्याख्यातम् ॥ २४९ ॥

तनूहवींष्युच्यन्ते—

अग्नये पवमानाय प्रथमा ॥ २५० ॥

इष्टिर्भवति ॥ २५० ॥

अग्नये पावकायाग्नये शुचये ॥ २५१ ॥

द्वितीया ॥ २५१ ॥

अदित्यै चरुस्तृतीया ॥ २५२ ॥

न चेयं तनूहविषां मध्ये पठ्यते । तेनास्या उपांशुत्वं न भवतीति सम्प्रदायः । शाङ्खायनशाखायां तूपांशुत्वमस्याः पठ्यते ॥२५२॥

आग्नेय एव वा पुरस्तादादित्यस्य ॥ २५३ ॥

आग्नेयो वा प्रागादित्यात् अथादित्यै चरुरुपांशु ॥ २५३ ॥

षड्दक्षिणाः प्रतिविभज्य ददाति द्वादशचतुर्विंशतिं वा ॥ २५४ ॥

प्रतीष्टिविभागेन दक्षिणादानम् ॥ २५४ ॥

भूयसीश्च यथा श्रद्धम् ॥ २५५ ॥

उत्कर्षस्याव्यतिरेकेण यथा श्रद्धं भूयसीश्च ददाति ॥ २५५ ॥

धेनुरादित्यस्य ॥ २५६ ॥

ताश्चैता दक्षिणा इष्टिसम्बन्धादिष्टयङ्गं न सकलस्याधानस्य । यथाचोक्तम् । उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं प्रत्तीति श्रुत्य स एष यज्ञो हतो न ददृशे तं देवा दक्षिणाभिरदक्षयन्निति तस्माद्दिष्टानामेव दक्षिणा इति । प्रयोजनं दृष्टयागे तद्भावः ॥ २५६ ॥

अनृतातिव्यपनोदपूतिदार्वाधानर्वीसपकना-

न्युदकानि वर्जयेत् ॥ २५७ ॥

अनृतानिध्यपतीदः स्मृतिमास एवानूद्यते । नानृतं वदेदिति स्मृतिः । अप्रणोधीतिधिरिति च । तदनुवादोयम् । न वा आहिताग्निनानृतं वदितव्यमिति । तत्रैतन्नातीव युक्तरूपम् । यतोनुवादमात्रमनर्थकम् । विधौ च प्रवृत्तिविशेषकरत्वम् । तस्माच्छ्रौते एवायं सत्यवदननियमः । एवं च तदपचारे श्रौतं स्मार्तं च मायश्चित्तम् । पूतिशब्दो दुर्गन्धिद्रव्यवाची प्रसिद्धेः । ऋचीसपके यत्पृथिव्या गर्ते तिन्दुकादि पाचितम् । ऋचीसशब्दश्च पृथिवीवचनो, नैरुक्ताभिप्रायात् । योदमृचीसे पृथिव्यामग्निरिति । नान्युदकं च । अग्निहोत्रार्थमुद्धृते अन्नाद्युदकदानप्रतिषेधः । स यदुद्धृतेप्राव्यागताय नोदकं याचन्त इति । नौदन्यश्चाग्निहोत्रविषयो नौदैवा एवा स्वार्थो यदग्निहोत्रमिति ॥ २५७ ॥

१ब्रह्मचार्यग्निनित्यधारीक्षीरहोम्यग्निमुपशायी-

द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥ २५८ ॥

नियतव्याख्यातम् । पुरुषधर्मश्चायम् । ततश्च सोमाधाने समारोपस्य क्रतुधर्मत्वात् पुरुषधर्मोऽग्निनित्यधारित्वं बाध्यते ॥२५८॥

आन्याधेयमनुविहितमवसरप्राप्तमिदानीं पुनराधेयमुच्यते—

२पुनराधेयमाधानाप्रतिज्ञातस्य ॥ २५९ ॥

---

१ यजमान आधानानन्तरं द्वादशरात्रम् अथवा षड्रात्रम्, अथवा अन्ततः अन्तिमपक्षे त्रिरात्रं ब्रह्मचारी भवेत् । अग्निनित्यधारी गार्हपत्याहवनीयदक्षिणाग्निसभ्याग्नित्यं धारयेत् । क्षीरहोमी दुग्धेनैवाग्निहोत्रं जुहुयात् । अग्निमुपशायी अग्निसमीप एव भूमौ शयीतेत्यर्थः ।

२ सुधीस्तु योधनवृत्ताध्ययनादिभिरत्यतिप्रसिद्धः पुरुषः स प्रतिज्ञात इत्युच्यते, न प्रतिज्ञातो ऽप्रतिज्ञातः, आधानलक्षणेन निमित्तेनाप्रतिज्ञातः आधानाप्रतिज्ञातः यः प्रागाधानाल्लब्धप्रतिष्ठो ऽपि अन्याधानसमनन्तरं संवत्सरादर्वागेव वित्तमानादिहानेर्लाभाभावाद्प्रतिष्ठितो ऽप्रसिद्ध इव स्यात्, अप्रतिष्ठ इव भवेत्, तस्येदं पुनराग्न्यु-

पुनराधेयमिति कर्मणो नामधेयम् । तच्चाधानाप्रतिज्ञात-स्य भवति । यस्याधानसमनन्तरमेव प्रतिज्ञातमपगतं स आधानाप्रतिज्ञातः । एवं हि श्रूयते । यस्याधानमनर्थकं स्यात् स पुनरादधीत । तथा योऽग्नी आधाय सर्वज्यानिं जायते स पुनरादधीत ॥ २५९ ॥

राज्ययशस्कामस्य वा ॥ २६० ॥

त्रिरात्रावरमग्नीनुत्सृज्य ॥ २६१ ॥

त्रिरात्रमवरं यस्य कालस्य स त्रिरात्रावरः । अतश्च त्रिरात्रादपि भवति । अग्नीनिति बहुवचनोपदेशात् त्रय एवोत्सृज्यन्ते । अतश्च सभ्यस्यानुत्सर्गः ॥ २६१ ॥

सद्यो वा ॥ २६२ ॥

तत्र विशेषं दर्शयति । सद्यश्चेदिति ॥ २६२ ॥

पुनर्वस्वोः ॥ २६३ ॥

पुनराधेयमादधीतेति वचनात् ॥ २६३ ॥

वर्षासु मध्यन्दिने वा ॥ २६४ ॥

स वै वर्षास्वादधीतेति वचनात् । तस्मादु मध्यन्दिन एवादधीतेति वा । स चायं विकल्पः । मध्यन्दिनं वर्षाकालसम्पत्तेः । यो वदा मध्यन्दिनोच वर्षा इति प्रकृत्य तस्मादु मध्यन्दिन एवादधीतेत्याह ॥ २६४ ॥

---

त्सर्गपूर्वकमनुष्ठाग्न्युत्पादकं पुनराधेयसंज्ञकं कर्म भवतीत्यर्थः । तथापर्थणे पठ्यते 'आधानाद् वृद्धिहानिश्चेदर्वाक् संवत्सराद्रोहिण्यामग्निहोत्रमुत्सृज्य पुनर्वस्वोः पुनरादधीत' इति । शाङ्खायनोऽपि 'काम्यं पुनराधेयमज्ञानानस्य' इति पठितवान् । अथवा प्रतिज्ञातं प्रियं न प्रतिज्ञातमप्रतिज्ञातमप्रियम् आधानसमनन्तरमेव सर्वस्वहानिपुत्रमरणादिहानिदर्शनादाधानमेव यस्याप्रियमभवति तस्य पुनराधेयमिति । 'एतदस्य प्रियतमं धाम' इत्यादि दर्शनात्प्रतिज्ञातशब्दस्य प्रीतौ वर्तनं ।

## कुशैराधानम् ॥ २६५ ॥

उभयोरग्न्योः। तं वै दर्भैरुद्धरन्तीति हि श्रूयते ॥ २६५ ॥

## व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यावत् सद्यश्चेत् ॥२६६॥

स चायमपूपः प्राक् सम्भारेभ्यः स्थाप्यते। सम्भारेषु ह्यग्निनिधानं विहितं भूर्भुव इति सम्भारेष्विति। न चापूपस्य सम्भारैः सह विकल्पो धर्ममात्रत्वात्। अतः परिसमूहनादीन्पञ्च पदार्थान् कृत्वा अपूपस्थापनम्। सद्यः पक्षे चापूपौ भवतः। न रात्र्यन्तरपक्षे। अपूपं प्रकृत्याह पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दधम इति। पुनस्त न्निराकरणायाह रात्रिभिर्हैवान्तर्हितौ भवत इति ॥ २६६ ॥

## आग्नेयः पञ्च कपाल उपांशु प्रागुत्तमादनुयाजात् ॥ २६७ ॥

तेनोपांशुचरन्तीति प्रकृत्याह उच्चैरुत्तममनुयाजं यजतीति। अतः प्रागित्युक्तम् ॥ २६७ ॥

## तद्वर्जं वा ॥ २६८ ॥

उत्तमानुयाजवर्जं चोपांशु भवति। उच्चैरुत्तममनुयाजं यजतीति। एतावानेव हि विधिः। आग्नेयं प्रकृत्याह तेनोपांशु चरन्तीति। चरणशब्दे च सर्वस्योपांशुताचार्येणोक्ता चरणशब्दे सर्वमिति। पञ्च कपाल एवैको भवति। नान्या इष्टयः। एवकारकरणात्। आग्नेयमेव पञ्च कपालं पुरोडाशं निर्वपतीति ॥ २६८ ॥

## अग्नीनिति वा प्रथमे प्रयाजे ऽनुयाजे च ॥२६९॥

वा समिधो यजेति देवान् यजेति वा। एवं श्रूयते प्रयाजान्प्रकृत्य स आभाव्याह समिधो यजेति अग्नीन्यजेति इत्येव ब्रूयात्तेन विकल्पाद्बहुधा अग्नीनिति चेत्युक्तम्। यद्येवमग्नीनित्येवैतस्यधारयित-



व्यम् समिधो यजेति हि तस्यैव संस्तवायोच्यते । अतोऽग्नीनिवेसनवन्नार्थते ॥ २६९ ॥

आज्यभागो द्वितीयो ऽग्नये पवमानायेन्दुमते वा ॥ २७० ॥

सचायं वाचनिको देवता विकल्पः ॥ २७० ॥

हिरण्यं दक्षिणानड्वान्वाग्न्याधेयिकीश्रेच्छञ्छ्रुतेः ॥ २७१ ॥

श्रुतिग्रहणं समुच्चयविधानार्थमिति केचित् । तदयुक्तम् । अग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददात्ययमनुवाद एव । अग्न्याधेयिक्यो हि पूर्वं दत्तास्ततः पुनराधेयिक्य. । श्रुतिग्रहणं च विध्याशङ्कानिवृत्त्यर्थम् ॥ २७१ ॥

अग्न्याधेयवदन्यत्सर्वः ॥ २७२ ॥

उक्तव्यतिरेकेणान्यदग्न्याधेयवद्भवति । इयांस्तु विशेषः । सद्यः । अग्न्यगारकरणं अरणिप्रदानं उपवासश्च न भवति । अनग्निसंस्कारात् ॥ २७२ ॥

अपराह्णे मैत्रावरुणी वशानस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिशृतया प्रातश्चरन्ति तत आधानम् ॥ २७३ ॥

इदमन्यत्पक्षान्तरम् । पूर्वेद्युरपराह्णे मैत्रावरुणीं वशामालभ्य रात्रौ श्रपयित्वा प्रातः प्रचारस्ततः आदधीत । पुनर्वस्वोरेव नान्यत्र । न त्रिरात्रापरमुत्सर्गौ नापूपाविति ॥ २७३ ॥

पुनराधेयमनुविहितमिदानीमग्निहोत्रस्यायसरस्तं प्रोत्सार्य यायान्तरायगतकर्मण तदङ्गभूतमुपस्थानमनुविधीयते—

सायमाहुत्या हुतायां यजमानोऽग्नी उपतिष्ठ-

ते वात्सप्रेण ॥ २७४ ॥

सायमुपतिष्ठेत सायः ( हि देवा उपातिष्ठन्तेति वचनात् । वात्सप्रमिति चोपस्थानक्रियानाम । यद्यपि च हुतायामित्युक्तम् तथापि तु समिदाधानमन्त्रकर्मानन्तर्यात्तदनन्तरमेव कर्त्तव्यम् । हुतशब्दश्च हुतप्रायविषयः यथा हुते च धारावर्जमिति ॥ २७४ ॥

न वा ॥ २७५ ॥

न चोपतिष्ठेत । अथ यस्मादुपैवतिष्ठेताथ यस्मान्नोपतिष्ठेतेति । विहितप्रतिषिद्धत्वाद्विकल्पः ॥ २७५ ॥

[1]तिस्तस्त्रिरुपप्रयन्तोस्य प्रत्नां परितो चित्रा-

वसविति च ॥ २७६ ॥

प्रकमादेव त्रित्वसिद्धेस्त्रिरिति महणात् स्वस्थानस्थितानामेव त्रिरावृत्तिः । चित्रावसविति च त्रिरेव ॥ २७६ ॥

सन्त्वमित्युपविश्य ॥ २७७ ॥

जपतीति वाक्यशेषः । एतावन्तुतिष्ठन् जपत्यथासीनः सन्त्वमिति वचनात् ॥ २७७ ॥

गां गच्छत्यन्धस्थेति ॥ २७८ ॥

एतच्च सन्निधानात् कर्माङ्गभूतां गां प्रति गमनं सन्निहितप्रत्ययन्यायात् । एवं च सति गोपक्ष एवैतदुपस्थानं नान्यत्रेति ॥ २७८॥

स॒ंहितेत्यालभते ॥ २७९ ॥

गामेव ॥ २७९ ॥

गार्हपत्यं गत्वोपतिष्ठत उपत्वेति ॥ २८० ॥

---

१ अत्रोपप्रयन्तोऽध्वरमित्यारभ्य परिते दूडम इत्यन्तं वात्सप्रोपस्थानं समाम्नायक्रमेणैव कर्त्तव्यम् । तत्र विशेषमाह—



अग्नी उपतिष्ठत इति द्विवचनोपदेशात् अधस्तनमाहवनीयस्य ॥ २८० ॥

गां गच्छतीड एहीति ॥ २८१ ॥

तामेव ॥ २८१ ॥

काम्या एतेत्यालभते ॥ २८२ ॥

सोमानमित्यनुदकं व्रतोपायनवत् ॥ २८३ ॥

अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नग्निमीक्षमाणो जपति सोमानमिति वचनात् । उदकसंस्पर्शनाविधानाच्चानुदकमिति ॥ २८३ ॥

पौर्णमासवत्पुत्रनाम ग्रहणम् ॥ २८४ ॥

वत्युपदेशाच्च तन्तवे त्वेत्यादिसर्वं प्रवर्तते । नाम ग्रहणान्त वात्सप्रमिति ॥ २८४ ॥

भूर्भुवः स्वरिति वोभौः ॥ २८५ ॥

भूर्भुवः स्वरित्यनेन वा मन्त्रेणोभावप्यग्नी उपतिष्ठते । क्रमस्तु स एव । क्रमान्तराविधानात् । अस्य च वात्सप्रेण सह विकल्पः । यथा वा अह्नो दीर्घमग्न्युपस्थानमिति प्रकृत्य यत आह तस्माद्वेतेनैवोपतिष्ठेतेति । एतच्चागोपक्षेऽपि भवति । न ह्यत्र गां प्रतिगमनं स्पर्शनं वास्तीति ॥ २८५ ॥

प्रवत्स्यन्सर्वान्नयेति प्रति मन्त्रम् ॥ २८६ ॥

अधस्तनोपस्थानसमनन्तरमस्य पाठ इति प्रवसतो यजमानस्याग्न्युपस्थानमभिधीयते । प्रवसन्यजमानः सर्वानग्नीनुपतिष्ठते । नयेति प्रति मन्त्रम् । नर्यं प्रजां मे पाहीति च । गार्हपत्यं प्रथममुपस्थितक्रमात्त आहवनीयं पुनर्दक्षिणाग्निम् । मन्त्राणां तु लैङ्गिको विनियोगः । नृभ्यो हितो नर्यो गार्हपत्यः ॥ २८६ ॥

गच्छति मत्या वाग्विसर्जनम् ॥ २८७ ॥

गमन सामर्थ्यपरिप्राप्तमेव वाग्विसर्गावसरविधित्सयो-च्यते । वाग्यमस्तूपस्थानसमनन्तरमेव भवत्यवसरान्तराविधानात् ॥ २८७ ॥

प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्का-
राद्धर्ममात्रत्वाच्छ्रुतेश्च ॥ २८८ ॥

प्रोषितोपि याजमानं करोति यथा कालमिति । अग्निहोत्रकाले अग्निहोत्र याजमानं पौर्णमासकाले पौर्णमास्य एव सर्वत्र । कुत एतत् । आत्मसंस्काराद्धर्ममात्रत्वादित्युपदेशाच्च । यदात्मसंस्कारकं तत्कर्तव्यम् । यथा व्रतग्रहणपावनमुण्डनादि । यजमानस्य ह्यसौ संस्कारः । प्रोषितोपि च यजमानो यजमान एव । धर्म-धर्ममात्रं तत्कर्तव्यम् । यथा विष्णुक्रमादि । कुत एतत् । धर्ममात्रत्वादेव । न ह्येतत्कर्मणि सन्निपतितम् । श्रुतेश्च । श्रुतिरप्यमुमर्थं ज्ञापयति । यथा प्रोषितेनापि याजमानं कर्तव्यम् । यत्सदूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्नस्य हुताहुतिगृहे याजमस्य जुह्वतीति प्रकृत्याह यो जघिष्ठो भुवनेष्विति स्वयमाद्यभिधाय मन एवैतदाह मनसैवाप्यानपप्रोषित भवतीति मनसैवानुचिन्तनेन प्रत्यक्ष इव भवतीत्यमुमर्थं ज्ञापयति ॥ २८८ ॥

एत्य च मत्या वाग्यमनम् ॥ २८९ ॥

पुनरेत्य मत्या वाग्यमनं करोति ॥ २८९ ॥

समित्पाणिरनुपेत्य कश्चिदुपतिष्ठतं आहवनीयगा-
र्हपत्यदक्षिणाग्नीनागन्मेति प्रति मन्त्रम् ॥२९०॥

समिद्भिर्गृहीताभिरागच्छति । गुर्वादिकमप्यनुपेत्य कं चिदाहवनीयादीनुपतिष्ठते अगन्मेति प्रति मन्त्रम् । समासे च सत्ययमेव क्रम । स आहवनीयमेवाग्र उपतिष्ठतेति श्रुतत्वात् ॥ २९० ॥

समित्परिसमूहनानि चोपविश्य ॥ २९१ ॥

च शब्दादनन्तरमेव । तिष्ठत्समिधः सर्वत्रेत्युक्ते यत्नं धावनिकम् । परिसमूहनानामपलुंपनमपनयः । न्यपधिनोतीति शाखान्तरात् । तृणप्रक्षेप इत्यपरे ॥ २९१ ॥

## तूष्णीं वोपस्थानं पूर्ववत् ॥ २९२ ॥

येन क्रमेण गच्छता कृतं तेनैव क्रमेण । स वै खलु तूष्णीमेवोपतिष्ठतेति प्रकृत्य यत आह स वेद गार्हपत्यः परिदग्मे सुपागादिति स वेदाहवनीय इति च ॥ २९२ ॥

## गृहा माबिभीतेति एत्य च ॥ २९३ ॥

## गृहानुपैति ॥ २९४ ॥

## क्षेमाय व इति प्रविशति ॥ २९५॥

पूर्ववदेव । येन क्रमेणागच्छता कृतम् ॥ २९५ ॥

## नहि॒स्याद् गृहान्काम॒ श्वः ॥ २९६ ॥

एतानेव । अत ऊर्ध्वं स्मार्तं पुत्रदर्शनजपादि प्रवर्तते ॥२९६।

शाखान्तरपाठक्रमात् प्रातरुपस्थानमुक्तमिदानीमवसरप्राप्तमग्निहोत्रमनुविधीयते—

## उद्धरेति यजमानो ब्रूयात्सायं प्रातरग्निहोत्रे ॥२९७॥

एतच्चाध्वर्युहोमपक्षे । स्वयं होमपक्षे तु स्वयमेवोद्धरणमिति प्रैषाभावः । अग्निहोत्रग्रहणाच्च सत्यप्युद्धरणे पौर्णमासादिषु न भवति । सायारम्भं प्रातरपवर्गमग्निहोत्रमिति सायमभिहितत्वात् भूयोऽतः प्रैषाभाव इति प्रातर्ग्रहणम् । तद्युतः । आचार्याभिप्रायादावृत्तियां प्रधानकालाविति ॥ २९७ ॥

भुनत्वात् । अनस्तमितानुदितयोरिति शास्त्रात् । उदितहोमिनामपि अनुदित एवोद्धरणम् तस्मिन्प्रत्यङ्मुखविहिते पक्षे सायं प्रातर्होमं कुर्वन्ति । पक्षे विकल्पेन श्रुतत्वात् ॥ २९८ ॥

## नित्यो दक्षिणाग्निः ॥ २९९ ॥

स च दक्षिणा वा सऽहरेदित्यस्मिन्पक्षे ॥ २९९ ॥
नित्याधिकारोपजिजीविषयेदमाह—

## सर्वे गतश्रियः ॥ ३०० ॥

नित्याभवन्ति । धार्या गतश्रिय इति वचनात् । गतश्रीश्च ग्रामश्रीः । य प्रति गता श्रीःएवं हि श्रूयते त्रयोह वै गतश्रियः ब्राह्मणः शुश्रुवान् क्षत्रियो विजयी राजा वैश्यो ग्रामणीरिति ॥३००॥

## सदा वा हरणम् ॥ ३०१ ॥

दक्षिणाग्नेरधिकारात् । दक्षिणाग्निं कृत्वाह अहरहरेवैनमाहरेयुरिति ॥ ३०१ ॥

## एकेषामुपवसथे ॥ ३०२ ॥

उपवसथ एवैनमाहरेयुरिति वचनात् ॥ ३०२ ॥

## १नवावसिते वा ॥ ३०३ ॥

नवावसिते वैनमाहरेयुरिति वचनाच्च यावसिते वेरयुक्तम् ॥ ३०३ ॥

## तस्मिन्पचेयुरमांऽसम् ॥ ३०४ ॥

तस्मिन्नवावसिताद्दते पचेयुरमांऽसम् । तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नीयुरिति वचनात् ॥ ३०४ ॥

---

१ नवासिते नवगृहे इत्यर्थः ।

नात । तस्मादस्य पुत्रत्साग्निहोत्री स्यादिति । अशूद्रेणेति वचना त । दोहयतीति कारित । तेन गां धुक्षेति प्रैषदानम् । स्थाल्यामा यकृत्याम् । आर्यशब्देन त्रैवर्णिक उच्यते । स्थाल्यामिति लिङ्गात् । यद्युनीची स्थाली स्याचदि वा भिद्येतेति । ऊर्ध्वकपालायाम् । न तिर्यक्कपाल्यां दक्षिणतो व्यवस्थितां प्राचीं दोहयति उदीचीं वेति तुल्यशास्त्रत्वात् । ननु परिभाषितत्वादवाच्यमेतत्प्राचीमुदीचीं वेति । कर्तृधर्मः स इत्यदोषः । एवं च सान्नाय्ये गवां न दिङ्नियमः ॥ ३१५ ॥

पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तर-
तो निरुह्याङ्गारान् ॥ ३१६ ॥

पूर्वेणाहवनीयमिति वचनात् । गार्हपत्यग्रहणं च नियमार्थम् । उत्तरतो निरुह्याङ्गारानित्यङ्गारनिरूहणमत्रैवावसरे स्यात् । अत्युपदेशात् । आहृत्यानिरुह्याह्यधिश्रयतीति । न वा श्रुतिविरोधात् । य एवैनङ्गारान्निरूढा यथाधिश्रयिष्यन् भवतीति । अत पूर्वं तर निरूहणं तत आहरणमिति । अधिश्रयणं च श्रपणार्थम् । सुश्रृतेन जुहोतीति वचनात् । लिङ्गाच्च उदन्तपौष्ण निष्पन्दमानं मा-ततमित्येवमादि । एनश्चाचार्येण प्रायश्चित्तेषूपनिबद्धं इह पुनरधिश्रित्यैव जुहुयादिति । अतश्च विकल्पः ॥ ३१६ ॥

एवमन्यत्रापि होमार्थस्याहरणम् ॥ ३१७ ॥

एवमेव पूर्वेणाहवनीयं पश्वादीयादौ होमार्थस्याहरणं कर्त्तव्यम् ॥ ३१७ ॥

दक्षिणेन नौपधम् ॥ ३१८ ॥

औपधं व्रीह्यादि । तदाहवनीयं दक्षिणेन वा नीयते । तमतिर्यगानुत्तरेण वा । अतश्च प्रागुद्धारनियमो गम्यते । तस्मिन्हि सति दक्षिणेनाहवनीयमुत्तरेण वा नयनं सम्भवति । तत्र दक्षिणेन नयनं प्रदक्षिणोपचारात् स्मृत्यनुग्रहः । उत्तरत उपचारो वै यज्ञ इत्युत्तरेणाहरणे श्रुत्यनुग्रहः । बलीयस्त्वाच्छ्रुतेरेवेत्ययमभिप्रायः ॥ ३१८ ॥

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकैः सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

३ प्राचीना दुर्लभा अमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैः देयं वार्षिकमग्रिमं — मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं — " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- — मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | (संस्कारः) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | (मीमांसा) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्त.) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचित सम्पूर्णः. | (ज्योतिष.) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचित । तर्कपादः | (मीमांसा) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णा । | (मीमांसा) | १ |
| (८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | (वेदान्तः) | ६ |

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णम् । ( जैनदर्शनम् )

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणा- परम्–श्रीभाष्यकृता परमगुरुभि श्री ६ यामुनमुनिभिर्विरचितम् । सम्पूर्ण. ( वेदान्त. )

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसङ्गृहीत. आचार्यचित्सुखमुनिविरचितव्याख्योपेते ( वेदान्त ) १

(१२) विभक्त्यर्थनिर्णय न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूप. म० म० श्रीगिरिधरोपाध्यायरचित । सम्पूर्ण ( न्याय ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( वेदान्त ) १२

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्त ) २

(१६) मीमांसाबालप्रकाश ( जैमिनीयद्वादशाध्यायार्थसङ्ग्रह ) श्रीमद्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैत साम्राज्यधुरन्धरश्रीमद्नारायणात्मजभट्टशङ्करविरचित । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम् । ( मीमांसा ) २

(१८) अद्वैतसिद्धिसिद्धान्तसार । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम् । ३

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्त ) १

पत्रादिप्रेषणस्थानम् }

हरिदासगुप्त,
चौखम्बा-संस्कृतपुस्तकालय
बनारस सिटी